।।श्रीः।।

# समर्पणम्

श्रीहयग्रीवभूवराहपदद्वन्द्वसमर्हणचणानां,
श्रीमन्मध्वाचार्यमूलमहासंस्थानपालकानां,
श्रीब्रह्मवायुलातव्यगव्यभव्यविभवानां,
श्रीविष्णुतीर्थसद्वंशमितद्रुपार्वणविधूनां,
द्वैतसिद्धान्तप्रतिष्ठापकाचार्याणां,
समस्तदुर्वादनिराकरणचणानां,
श्रीमध्वागमसिद्धभव्यविभवानां,कारुण्यामृतसिन्धूनां,
पदवाक्यप्रमाणपारावारपारीणानां,
श्रीविष्णुतत्वोपदेशकानां,सदाचारधर्मसंरक्षणसक्षणानां,
प्रणवोपासकानां,विदितनिखिलनिगमतत्त्वविदग्रेसराणां,
सर्वलोकंपृणानां, तत्रभवतां, त्रिजगद्गुरूणां, स्वर्णवर्णानां,
श्री १००८ श्रीश्रीविश्वोत्तमतीर्थकरकमलसञ्जातानां
श्री १००८ श्रीश्रीविश्ववल्लभतीर्थयोगीन्द्राणां
श्रीकरकमलयोः
सभक्ति,विनयादरमेदुरमनसा
समर्पितम्

* * * * *

।। श्रीः ।।

।। श्रीमद्वादिराजबन्धवे हयवदनाय नमः ।।

अस्य **व्याख्यासहितवृन्दावनाख्यान**स्य प्रकाशने कैमर्थिकी प्रवृत्तिः? इति चेत्, बहोः कालात् एष ग्रन्थराजः सर्वेषु सात्त्विकजनगृहेषु हस्तलिखितप्रतीकतया व्यराजत । 'देवगुह्यस्यास्य ग्रन्थस्य मुद्रापणे महान् विलम्बः समजनि' इति तत्रभवन्तः **श्रीविश्वोत्तमतीर्थश्रीमच्चरणाः** आभीक्ष्णेन तेषां प्रवचनेषु प्रस्तापितवन्तः । ते च स्वयं श्रीमुष्णाचार्यव्याख्यासहितं वृन्दा-वनाख्यानं स्वीयैः बहुभिः शिष्यैः लेखयामासुः । एष पाठ एव अत्यन्तं परिशुद्ध इति सर्वैः पण्डितैः समुररीकृतम् ।

एनामेव सरणीमनुसृत्य **वाळ्वेकर् वेङ्कण्णाचार्याः, परमप्रियसुब्बरायदासाः, श्रीगुरु-गोविन्दविट्ठलदासाः, श्रीइन्दुमतीगोपालकृष्णपुराणिकदम्पती** सभक्ति शतशः व्यालिख्य सर्वेभ्यो भक्तेभ्यः विश्राणनं कृतवन्तः । प्रकरणविभागैः सनाथितां श्रीमुष्णाचार्यकृतां व्याख्यां मुहुर्मुहुः परिशील्य, एषा व्याख्या न्यायसुधासमेति हर्षोत्फुल्लमानसाः श्रीविश्वोत्तमतीर्थाः वर्णया- मासुः ।

एषा हि व्याख्या आख्यानगतश्लोकानां दण्डान्वयपद्धतिमाश्रित्य, निःशङ्कं राराजते । **श्रीमुष्णाचार्याणां** व्याख्या सप्तदशाध्यायपर्यन्तं प्रथमप्राणावधि विद्योतते । पुनः **श्रीबुक्केबाग् श्रीनिवासाचार्याः** समुर्वरिताध्यायपञ्चकव्याख्यां श्रीहरिगुरुप्रेरणया पूरयामासुः । पुनः चतुस्तन्त्रा-परतन्त्राः श्रीमध्वागमसिद्धभव्यविभवाः **श्रीसङ्केतिसुब्बरायसूरीन्द्राः** सूक्ष्मेक्षिकतया व्याख्यानं परिशील्य, स्वविवरणनिर्देशपूर्वकेन जामिताकरणं चक्रुः । एषा व्याख्या श्रीविश्वपति-तीर्थविरचितमध्वविजयव्याख्याशैल्यनुसारिणी विद्योतते । श्रीहरिगुरुसङ्कल्पानुसारेण इदानीं प्रप्रथमतया मुद्रितं भवति ।

बहोः कालात् प्रागेव परमपूज्याः प्रातर्वन्द्यचरणनलिनयुगलाः **श्रीविश्वोत्तमतीर्थश्रीमच्चरणाः** श्रीमुष्णाचार्यादिव्याख्यासनाथितं वृन्दावनाख्यानम् अवश्यं मुद्रापणीयमिति शिष्येषु सूचयामासुः । तदर्थं तेषामाज्ञानुसारेण श्रीसुब्बरायसूरीन्द्राः श्रीव्यासाचार्यादयश्च प्रयत्नं कृतवन्तः । तत्समये तौळवलिपौ मूलवृन्दावनाख्यानमेकं हस्तलिखितं रजतपीठपुरे श्रीसोदामठे समुपलब्धम् । तौळवलिपिमयी वृन्दावनाख्यानकृतिरेषा विनैव प्रकरणविभागं व्यराजत । तत्परिशीलनाय तत्र भवन्तः श्रीकृष्णापुरमठाधीशाः **श्रीविद्यासागरश्रीमच्चरणाः** श्रीविश्वोत्तमतीर्थश्रीमच्चरणैः सन्नियुक्त-वन्तः । ततः तौळवलिपिमयीं सम्पूर्णां वृन्दावनाख्यानकृतिं शिलासु स्वर्णवर्णैः चीर्णेन व्यालेखयितुं;

पुनः वृन्दावनाख्यानभवनं श्रीसोदाक्षेत्रे श्रीभाविसमीराणां पञ्चवृन्दावनसमक्षे निर्मापयितुं च श्रीभाविसमीराणामाज्ञया सङ्कल्पयामासुः । महाकार्येणानेन सत्रा स्वाप्नवृन्दावनाख्यानगत-श्रीवादिराजऋजुत्वप्रतिपादकश्रुतीनामपि शिलासु स्वर्णवर्णैः तत्रैव भवने व्यालेख्य स्थापयामासुः ।

प्रकृते पर्यायश्रीविश्ववल्लभतीर्थश्रीमच्चरणानां फलमन्त्राक्षतसमनुग्रहपूर्वकं तेषां परमाज्ञां प्राप्य, व्याख्यासहितां वृन्दावनाख्यानकृतिं देववाण्यां, कर्णाटकभाषायां विस्तृतानुवादसहितां च मुद्रापयितुं समुद्युक्ताः । तत्र प्रथमतः गीर्वाणवाण्यां स्थितस्य श्रीमुष्णाचार्यादिकृतव्याख्यासनाथितां सच्छास्त्र-संवादिसमुद्धरणसहितां दिव्यां कृतिं ग्रन्थरूपेण प्रकाशयितुं सन्नधाः सन्तः, तत्रादौ अन्तर्जालमुखेन **श्रीविश्ववल्लभतीर्थहृदयान्तर्गत- श्रीमध्ववादिराजहृदयान्तर्गत- श्रीभूवरहात्मक- रूप्यपीठपुराधीशाय श्रीकृष्णाय** सभक्ति समर्पयामः ।

अस्मिन् परमपवित्रप्रकाशनयज्ञे बहवो **श्रीवादिराजऋजुत्वोपासकभक्ताः** स्वशक्तिमतीत्य तनुना मनसा धनेन च सेवां कृतवन्तः । तेषु सर्वेषु **श्रीमध्ववादिराजहृदयान्तर्गतः श्रीलक्ष्मीनरसिंहः शुभाशीराशीभिः अभियुनक्तु** इति सप्रश्रयं श्रीहरिगुरून् प्रार्थयामहे ।

**इति प्रकाशनसमितिः**
**बेङ्गळूरु**

।।श्रीः।।

श्रीहनुमद्भीममध्वान्तर्गतनरहरिरामकृष्णवेदव्यासाय नमः

## ‘पञ्चास्यवाक्यसन्दिष्टं पुराणं पञ्चलक्षणम्’

इति वृन्दावनाख्यानम् (७/११४)

श्रीस्वाप्नवृन्दावनाख्यानकृतिर्हि पुरुषसूक्ततुल्या श्रीहयग्रीवविद्या । भाविमध्वेभ्यो नित्येभ्यो वैदिकाचार्येभ्यो गुरुसार्वभौमेभ्यः स्वप्नशब्दवाच्येन श्रीनृसिंहेन समुपदिष्टा । तथाहि वृन्दावनाख्यानं (७/११४) –

‘पञ्चवृन्दावने पुण्ये पुराणं पञ्चलक्षणम् ।
पञ्चास्यवाक्यसन्दिष्टं त्वं च कारय भूरिशः ।। ’ इति ।

‘‘**पञ्चास्यवाक्यः** = पञ्चास्यवाक्यं = ‘सिंहं नसन्त’श्रुतिः, ‘सिंहं नसन्त’श्रुतिः प्रतिपाद्यत्वेनास्यास्तीति पञ्चास्यवाक्यः, ‘मत्वर्थीयोऽकारः’, श्रीनृसिंहः, तेन श्रीनृसिंहेनैव, **सन्दिष्टम्** = समुपदिष्टम्; **पञ्चलक्षणं पुराणं** = पञ्चवृन्दावनाख्यानम् इत्यर्थः । एषा वृन्दावनाख्यानकृतिः श्रीमदनुव्याख्यानयुक्तिमल्लिकादिवत् स्वतःप्रमाणभूता श्रीमध्वसिद्धान्तप्रमेयज्ञानसमुद्दीपिका मणिमदादिसकलदुर्मतनिराकरणचणा पठनश्रवणमात्रेण कलिकल्मषापहा सौभाग्यभाग्यप्रदा मोक्षप्रदा च । एषा स्वाप्नकृतिर्हि विना गुरूणामनुग्रहं नावगम्यते । **‘समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम्’** इति वृन्दावनाख्यानवचनात् पुरुषसूक्तसममेवेति विज्ञेयम् । ‘तत्तुल्यं वेदशब्देन’ इति नैव विस्मरणीयम् । स्वप्नसत्यत्वं च – **‘स्वप्नेऽपि वासनारूपं सत्यमेव जगत् मनसि स्थितं बहिःष्ठत्वेन दृश्यते’ इति श्रीविष्णुतत्त्वविनिर्णयवचनेन सिद्धम्’’** इति तत्रभवन्तः **श्रीविश्वोत्तमतीर्थश्रीमच्चरणाः** ।

‘सिंहं नसन्त’ श्रुतिस्तु –

सिंहं नसन्त मध्वो अयासं हरिमरुषं दिवो अस्य पतिम् ।
शूरो युत्सु प्रथमः पृच्छते गा अस्य चक्षसा परि पात्युक्षा ।। इति ऋक् (९.८९.३)

* अत्र ‘सिंहं नसंत’ श्रुत्यर्थस्तु –

**युत्सु** = वाग्युद्धप्रवीणेषु, **शूरः** = अत्यन्तशौर्यसम्पन्नः, **प्रथमः** = श्रीनृसिंहशिष्याग्रणीः, **मध्वः** = भाविमध्वो लातव्यः श्रीवादिराजः, (‘भाविमध्वः प्रकीर्तितः’ इति ऋक्संहितायां भावि-

मध्वत्वं श्रीवादिराजस्य प्रतिपादितम्) **अस्य** = सज्जनवर्गस्य, **दिवः** = हयग्रीवविद्यात्मकश्रीपञ्च-वृन्दावनाख्यानाख्यश्रेष्ठज्ञानस्य, **पतिम्** = स्वामिनं दातारं वा, **अरुषम्** = सज्जनेषु सदा कोपरहितम्, **अयासम्** = प्रह्लादार्थं सभामध्ये स्तम्भात् प्राप्तं प्रादुर्भूतम्, **हरिम्** = दुर्जनसंहारकत्वाद् हरिनामकम्, **नसन्त** = नसन्तम् सुलोपः, दुर्जनसंहाराय विवृतनासापुटम् (तादृशे), **सिंहम्** = 'नामैकदेशे नामग्रहणम्' तादृशे सर्वोत्तमे श्रीनृसिंहे (सप्तम्यर्थे द्वितीयाविभक्तिः), **गाः** = पञ्च-वृन्दावनाख्यानसकलवेदशास्त्रादिश्रीहयग्रीवविद्याः ('**हयग्रीवमुखोद्गीर्णा सा वाणी धर्मशासनम् । अतस्तदुदितो धर्मो ह्यधर्मस्तद्विपर्ययः ।।**' इति युक्तिमल्लिका १.१३९), **पृच्छते** = प्रियशिष्यत्वेन पुनः पुनः सम्यग्विचार्य, सम्यगुपदेशञ्च प्राप्य, सच्छास्त्रनिर्णयं च कृत्वा,

**('श्रीलक्ष्मवक्षसे रूक्षनखशिक्षितरक्षसे ।**
**स्वपक्षरक्षादीक्षाय नृहर्यक्षाय ते नमः ।।'** इति श्रीभाविसमीराणां साक्षीभूतः श्लोकः ।)

पुनः, **अस्य** = 'हयग्रीवं चिदानन्दविग्रहं सदनुग्रहम्' इत्यादिश्रीहयग्रीवविद्यात्मकश्रीपञ्च-वृन्दावनाख्यानोपदेष्टुः श्रीनृसिंहस्य, **चक्षसा** = चक्षुषा, ज्ञानचक्षुषा, श्रीनृसिंहोपदिष्टश्रीहयग्रीव-विद्यात्मकश्रीपञ्चवृन्दावनाख्यानज्ञानेन सर्वेषु सात्विकेषु ब्राह्मणादिषु च स्वप्नमुखेन, ('नित्यं ब्राह्मणसम्बन्धि सत्यं वाक्यं मयोदितम्'; 'करोमि ब्राह्मणमुखादाख्यानं शोकनाशनम्' 'वक्ष्ये स्वप्नेऽथवा स्वप्नोऽप्यहं तव दिवाप्यहो' – इति वृन्दावनाख्यानम्), **उक्षा** = श्रीनृसिंहादधिगत-श्रीपञ्चवृन्दावनाख्यानज्ञानेन साधकेषु पुनः पुनः करुणया प्रोक्षणं विधाय, **परि पाति** = ळातव्यो जगद्गुरुः श्रीवादिराजतीर्थश्रीमच्चरणो भाविमध्वो नित्यो वैदिकाचार्यः परितः सर्वत्र सर्वदा प्रत्यक्षतः स्वप्नमुखेन च यथायोग्यं पाति रक्षति' – इति श्रुत्यर्थः ।

* * * * * *

# श्रीहरिगुरुवन्दनम्

श्रीशः सर्वोत्तमः कृष्णो दण्डदामधरो हरिः ।
श्रीमध्वहृदयावासो रूप्यपीठगतोऽवतात् ।।

श्रीमदानन्दतीर्थश्रीवादिराजहृदब्जगः ।
इन्दिराराध्यपादाब्जः प्रीयतां श्रीहयाननः ।।

सर्वोत्तमाय हरये श्रुतिविश्रुताय दारिद्र्यदावदहनाय हयाननाय ।
जीवत्तमप्रविनुताय दुरासदाय कुर्मो नमः सततरक्षणदीक्षिताय ।।

श्रीरामं हनुमत्सेव्यं श्रीकृष्णं भीमसेवितम् ।
श्रीव्यासं मध्वसंसेव्यं प्रणमामि निरन्तरम् ।।

अम्भृणीसूक्तवेद्या या विष्णुपत्नी सुरोत्तमा ।
समना सा जगन्माता लक्ष्मीः पातु निरन्तरम् ।।

श्रीब्रह्मवायुलातव्यगव्यप्रभृतिकान् ऋजून् ।
सपत्नीकान् सदा वन्दे विष्णोतत्वोपदेशकान् ।।

श्रीभारतप्रवरयुद्धरथोद्धतश्रीः पार्थैककेतनकरालविशालमूर्तिः ।
उच्चैर्घनाघनघटाविकटाट्टहासः श्रीकृष्णपक्षभरणो हनुमान् पुनातु ।।

श्रीमध्वस्मरणं दिव्यं वाङ्मनकर्मभिः कृतम् ।
सर्वथा विदहेत् पापं पावकः समिधो यथा ।।

पार्श्वतो मूर्ध्नि हृदये बाहुभ्यां मम चक्षुषोः ।
श्रोत्रादिषु च सर्वेषु स्थित्वा मध्वः पुनातु माम् ।।

''सिंहं नसन्त''श्रुत्या यः प्राणः प्रस्तूयते स्फुटम् ।
स एव वैदिकाचार्यो मध्वाचार्यः पुनातु माम् ।।

''सिंहं नसन्त''श्रुत्या यो भाविमध्वः प्रकीर्तितः ।
स एव वैदिकाचार्यो वादिराजः पुनातु माम् ।।

श्रीस्वाप्नवृन्दावनशब्दपूर्वं स्वाख्यानरूपं हरिगीतिवच्छुभम् ।
अवाक्श्रुतिं भूसुरमेष्यदिन्द्रं सुप्तावुवक्थ प्रणमामि वादीट् ।।

भूतराजो यमाराध्य परमं स्थानमागतः ।
स गव्यो भाविलातव्यो वेदवेद्यः पुनातु माम् ।।

याऽतीतत्वाद् देवताभ्यो नेतृत्वाच्चान्नमुच्यते ।
श्रद्धेति वायोः पत्नी सा पातु सौभाग्यदायिनी ।।

राकाशशाङ्कशतकोटिविजित्वरास्या भासाम्पतिं नखरुचैव तिरोदधाना ।
वीणागुणक्वणनचञ्चलपादपद्मा सा भारती सपदि मङ्गळमातनोतु ।।

शीतांशुशुभ्रकलया कलितोत्तमाङ्गं ध्यानस्थितं धरणिभृत्तनयार्चितं तम् ।
कालानलोपमहलाहलकृष्णकण्ठं श्रीरुद्रकोटिगतरुद्रमहं नमामि ।। १० ।।

गायन्ति यस्य चरितानि महाद्भुतानि पद्मोद्भवोद्भवमुखाः सततं मुनीन्द्राः ।
श्रीपत्रतापमनघं महतां मनोज्ञं तं भूतराजमनिशं मनसा स्मरामि ।।

श्रीरुद्रपत्नी गौरी या सर्वसौभाग्यदायिनी ।
सा देवी त्रिजगद्वन्द्या पातु मङ्गळदेवता ।। ११ ।।

कुम्भीन्द्रोद्भटकुम्भकूटकठिनप्रारम्भसम्भाविते
प्रालेयाचलनन्दिनीस्तनतटे बिम्बात्तनोरात्मनः ।
कः स्तन्यं धयति स्तनन्धय इति क्रोधान्धभावोद्धता
हेरम्बस्य गभीरहुङ्कृतिगणा विघ्नान् विनिघ्नन्तु नः ।।

गौश्च सद्गतिहेतुत्वाद् गौस्थो यः पुरुषोत्तमः ।
तद्वासुदेवसेवोत्को जयतीर्थः पुनातु माम् ।।

गुरुः श्रीब्रह्मणोर्विष्णुः सुराणां यो गुरोर्गुरुः ।
तद्वासुदेवसेवोत्को व्यासराजः पुनातु माम् ।।

मध्वदेवैकशरणो वाग्मी सन्देहवर्जितः ।
गुरुलक्षणसम्पूर्णो राघवेन्द्रः पुनातु माम् ।।

मन्त्रालयपुरावासं मध्वतन्त्रदिवाकरम् ।
मन्त्रार्थमञ्जरीकारं राघवेन्द्रं स्मराम्यहम् ।।

पञ्चवृन्दावनोद्भूतं सच्छास्त्रं योऽशृणोद् बुधः ।
तं श्रीवृन्दावनाचार्यं भावीन्द्रं प्रणमाम्यहम् ।।

यः श्रीवृन्दावनाख्यानं स्वर्णवर्णैर्व्यलेखयत् ।
नव्यो वृन्दावनाचार्यः स श्रीविश्वोत्तमोऽवतात् ।।

अखर्वसर्वदुर्वादिगर्वनिर्वापणे क्षमः ।
श्रीविश्वोत्तमयोगीन्द्रो वैष्णवाग्रेसरोऽवतात् ।।

आख्यानगतमन्त्रान् यः स्वर्णवर्णैर्व्यलेखयत् ।
वेदवेदाङ्गतत्त्वज्ञः स श्रीविश्वोत्तमोऽवतात् ।।

विश्वस्मिन् राजते नित्यं मुनीनामुत्तमः प्रधीः ।
ज्ञानचक्षुः स्वर्णवर्णो पातु विश्वोत्तमो महान् ।।

प्राणेशवादिराजेन्द्रसमपूजारतो महान् ।
श्रीविश्ववल्लभः पातु सम्प्रदायार्थकोविदः ।।

श्रद्धाभक्तिसमायुक्तः सुतेजाः शास्त्रपारगः ।
श्रीविश्ववल्लभो योगी पातु श्रीमध्वकिङ्करः ।।

श्रीमध्वदेवसिद्धान्तवियद्विष्णुपदीधरान् ।
सर्वान् माध्वयतीन् वन्दे सौजन्यक्षीरसागरान् ।।

स्वाप्नवृन्दावनाख्यानव्याख्याकारं निरन्तरम् ।
श्रीमुष्णाचार्यवर्यं तं वन्दे श्रीभूतराट्प्रियम् ।।

दुष्टवादीभपञ्चास्यं जम्बुखण्डीकुलोद्भवम् ।
श्रीवादिराजमाचार्यं वन्दे वादीशकिङ्करम् ।।

प्रणौमि षट्पुराचार्यं मध्वशास्त्रविशारदम् ।
यश्चक्रे श्रीवादिराजगुणरत्नमालिकां शुभाम् ।।

स्वाप्नवृन्दावनाख्यानरहस्यज्ञं गुणोज्ज्वलम् ।
वाळवेकरवंश्यं श्रीवेङ्कण्णाचार्यमाश्रये ।।

दुष्टमोहविषद्रोहापोहगारुडमुज्ज्वलम् ।
सेवेतं दासवर्यं श्रीगुरुगोविन्दविट्ठलम् ।।

सदा ''ऋजुत्वसिद्धान्तस्थापने'' निरतो महान् ।
श्रीसुब्बरायसूरीन्द्रः कीर्त्यते सूरिभिः सदा ।।

स्वाप्नवृन्दावनाख्यानधर्मवाक्क्रतुदीक्षितम् ।
धन्यं श्रीगोपालकृष्णपुराणिकमहं श्रये ।।

जयन्ति सन्ततं सन्तो विष्णुभक्ता महोज्ज्वलाः ।
श्रीमध्वशास्त्रसम्पन्नाः संसारायासहारिणः ।।

* * * *

 

## ऋजुत्वं वादिराजस्य श्रुतिमूलं न संशयः

श्रीहयग्रीव समग्राङ्ग शुभाग्र्याक्षवलोकन ।
जगद्ग्रासावसाने तु जगद्विग्रह ते नमः ॥

श्रीलक्ष्म्याऽम्भृणिरूपया स्मितमुखो लीलाविनोदो हरिः
ज्ञानानन्दमयोऽखिलश्रुतिनुतो लोकान् ससर्जाश्रमम् ।
तं ध्यायन्ति भवन्मुखा ऋजुगणाः सर्वेऽपि शुद्धाः सदा
वन्दे भाविसमीर! कल्पपदप! श्रीवादिराजप्रभो!

ताक्ष्र्यो वर्त्स्यति वेदशेवधियती, नारायणो भूतराड्
रुद्रो भाविनि, वेदवेद्यमुनिपो लातव्यभव्यो महान् ।
योगेशा अपरोक्षिणश्च त इमे जाताः सदुद्धारका
एवं त्वत्कृपया जयन्ति सुजनाः श्रीवादिराजप्रभो

शुभकथ शुभाश्रय शुभधी वादिराजार्य ।
भवेत् भवत्प्रसादाच्च शुभं शुभं महाशुभम् ॥

श्रीरमाब्रह्मवायुलातव्यादिदेवतानामतींद्रियत्वात् प्रत्यक्षानुमानयोरगमकत्वाच्च, वेदा एव ता अवगमयन्ति, तारतम्यतः सम्प्रधारयन्ति, लोकहिताय धर्माधर्मादिकं च ज्ञापयंत्याप्रलयम् । महा-प्रलये तु नित्यमुक्तां() रमां विहाय ब्रह्मादेः कार्यजगतोभावाद् रमानारायणप्रतिपादका भवन्तीति विवेचनम् । स्वरवर्णवाक्यसमन्वयेन महातात्पर्येण परममुख्यवृत्त्या, महायोगविद्वद्रूढिऽभ्यां निरुपचरितसकलस्वामित्वेन सर्ववस्तुगतप्रवृत्तिनिमित्तानां तदनत्वेन नारायणपर एव समग्रोऽपि वेदराशिः ।

''मन्त्राः मननात्, छन्दांसि छादनात्, स्तोमः सवनात्, यजुर्यजते, सामसम्मितमृचा'' इति यास्कः(७/१२) । मुख्यवृत्त्या चावान्तरतात्पर्येणाभिधानाद्यवगतरूढ्या रमाब्रह्मवायुलातव्यादिपर इति निश्चप्रचम् । ईशकोटिकयोः पद्मापद्मापत्योर्वाचका मन्त्रा जीवकोटिकान् विरिञ्चादीन् नैव वर्णयन्त्यतो यथायथं तयोरेव महिमानमावेदयन्तीति फलितम् । सकलवेदानां मुख्यतो भगवत्प्रतिपत्तिहेतुत्वात् ।

तथा हि श्रीमाध्वम् ऋग्भाष्यम् (१/१/१) –

स पूर्णत्वात् पुमान् नाम पौरुषे सूक्त ईरितः ।
स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च ।
स एव सर्वशब्दार्थ इत्याहोपनिषत् परा ।। – इति ।।

'गुणाधिक्यं येन भवेद् वेदस्यार्थः स एव हि' – इति च श्रीमाध्वम् ऋग्भाष्यम् ।

'महाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते ।
एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति' इति यास्कः(७/४) ।

वस्तुतस्तु, निर्दोषपूर्णागण्यगुणार्णवे विष्णौ रुद्रादिशब्दा अपि विद्वद्रूढिमहायोगाभ्यां मुख्यार्था एवेति समन्वयाध्याये प्रपञ्चितम् ।

निम्नकोटिकानां रुद्रादीनां गुणाः सर्वेऽपि तत्तदुत्तमेषु नियतमुसंह्रियते तेषु तद्गुणित्वात् । तथा च श्रीमाध्वम् ऋग्भाष्यम् (१/१/९) –

देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।
ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथात्र च ।।
ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।
पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ।।
ब्रह्मवायू गिरौ वीन्द्रशेषरुद्राश्च तत्स्त्रियः ।
शक्रकामौ कामपुत्रमनुदक्षाङ्गिरःसुताः ।।
तद्वच्छची रतिः सूर्यसोमधर्मादि तत्स्त्रियः ।
प्रधानमरुतो वारिपतिरग्निश्च मारुताः ।।
निर्ऋतिः स्त्रियश्च सूर्यादेरश्विनावितरे तथा ।
अनन्तकोटिशतकदशार्द्धाद्यंशतः क्रमात् ।। इति ।।

न केवलमेतावता किं नाम सर्वशब्दाभिधेयत्वम्, सर्ववेदाद्यभिधेयत्वं च वायोरप्यस्तीत्यशासि श्रीमदाचार्यचरणैः ऐतरेयभाष्ये (२/२/२) । महैतरेयभाष्यं च –

''प्राणशब्दश्च मुख्यतो विष्णौ प्रवर्तमानोऽपि वायावपि वर्तते । अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति ।'' इति हि श्रीमदाचार्याः ।

तत्पुनः, इन्द्रतोवराणां च देवतानां हि विज्ञानं श्रुतिलिङ्गसापेक्षमेव । इति श्रीमाध्वम् ऋग्भाष्यम् (१/१/९) ।

तथा च बर्कुश्रुतिः –

**''वायुरस्मा उपामन्थत्'' विश्वदेवाय वायवे ।**
**विश्वैर्देवैः स इत्याद्याः प्रमा अत्रापरा अपि ।। ६४ ।।**
**नारायणोदितिर्वायुर्वाणी रुद्र उमा विभुः ।**
**इतरे च क्रमाद्धीनाः शतांशाद्वायुतोवराः ।। ६५ ।। – ऋग्भाष्ये ।**

'मन्त्रविनियोगो विष्णुप्रीतिद्वारा मोक्षे । अवान्तरविनियोगः कर्मणि' इति मन्त्रार्थमञ्जर्यां श्रीराघवेन्द्रतीर्थपादाः. 'यस्मै हविर्दियते सा देवता' इति शतपथम् ।

यथा च पुनः 'यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यानि' इत्यादिकैः स्वस्वरूपं सदागमानुगृहीतसाक्षिसिद्धत्वेन बळित्थामन्युसूक्तादिश्रुतिप्रत्यभिज्ञातमाहात्म्याः श्रीमदानन्दतीर्थ-भगवत्पादाचार्याः स्फुटतरं विनिर्णयाश्चक्रुः; तथैव 'बह्वी समाः' 'अस्तु श्रौषड्' 'उप ते गा इवाकरम्' 'मन्म मन्म' 'सितासितेमनुबळित्थे'त्यादिश्रुतिभिः स्वयं प्रत्यभिज्ञातमाहात्म्या इति विना वाणीपतित्वं मुख्यप्राणसमा ळातव्या इति च स्पष्टं सदागमानुगृहीतसाक्षिसिद्धत्वेन स्वस्वरूपं स्वभक्तापराधनिपीड्यमानमानसाः श्रीवादिराजतीर्थभगवत्पादाः सौवे ''ब्राह्मणस्वाप्नवृन्दावना-ख्याने'' सम्यग् विनिर्णयाश्चक्रुः ।

तथाहि प्रामाणिका वेदार्थविदः –

'यां सूक्ष्मामतीन्द्रियां वाचम् ऋषयः साक्षात्कृतधर्माणो मन्त्रदृशः पश्यन्ति तामस-साक्षात्कृतधर्मेभ्यः परेभ्यः प्रतिवेदिष्यमाणाः बिल्मं समामनन्ति, स्वप्ने वृत्तमेव दृष्टश्रुतानुभूतमाचिख्यासन्ते' इति निरुक्तसम्प्रदायविदः **श्रीबलदेवसूरयः (पृष्ठम् २६)** । तथा च पुनर्भगवान् यास्कः – (१.१०) ''साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृत-धर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तेऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नसिषुर्वेदं वेदाङ्गानि च । बिल्मं भिल्मं भासनमिति वा'' इति । यदेतत् 'बिल्मम्' इत्युक्तम्, एतत् 'भिल्मम्' वेदानां भेदनम् । भेदो व्यास इत्यर्थः । 'भासनमिति वा' अथवा भासनमेव बिल्मशब्देनोच्यते । वेदाङ्गविज्ञानेन भासते प्रकाशते वेदार्थ इति ।'' इति च तत्रैव दुर्गः । 'यज्ञेन

वाचः पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम्' इति च ऋक् (१०.७१.३) । पूर्वं भगवता जगदुपकारार्थमेकीभूय स्थिता वेदा व्यस्ताः शाखाश्च परिच्छिन्नाः । ''ऋषिषूत्क्रामत्सु मनुष्या देवान् अब्रुवन्, को न ऋषिर्भविष्यति । तेभ्य एतं तर्कमृषिं प्रायच्छन् मन्त्रार्थ चिन्ताभ्यूढम् ।'' इति यास्कः (१३.१३) । 'न प्रत्यक्षमनृषेरस्ति मन्त्रम्' इति बृहद्देवता (८.१२९) । न ह्येषु प्रत्यक्षमनृषेरतपसो वा । (मन्त्रशब्दस्य पुंस्त्वं प्रायिकम्, नपुंसकेऽपि प्रयोगदर्शनात्) 'यत्कामाय ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' इति यास्कः (७.१) ।

यज्ञादौ कर्मण्यनेन मन्त्रेणेदं कर्म कर्तव्यमित्येवंरूपेण यो मन्त्रान् करोति, यो व्यवस्थापयति स मन्त्रकृत् । ऋषिर्मन्त्रार्थज्ञः । मन्त्रकृतो मन्त्रदृश उच्यते । न हि मन्त्राणां करणं भवति, अनित्यत्वप्रसङ्गात् तेन दर्शनार्थं कृञित्यध्यवसीयते । दृश्यते चानेकार्थता धातूनां 'गन्धना-वक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इत्यात्मनेपदप्रतिपादने गन्धनादीनर्थान् कृञो दर्शयति । शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीद्' इत्यत्र मन्त्रकृच्छब्दः प्रयोक्तरि प्रयुक्तः । ऋषिर्दर्शनात् । 'यस्य वाक्यं स ऋषिः' इति सर्वानुक्रमणीकारः । यद् यस्य द्रष्टृत्वसम्बन्धेन स तस्य ऋषिरित्यर्थः । मन्त्रार्थदृष्टेत्यर्थः ।

अत्र मन्त्रकृतो निरन्तरगोविन्दचरणारविन्दसेवासमाकुलकलितफलितमहापुण्यफलवन्तो भगवद्विशिष्टप्रतिमाभूता मन्त्रार्थद्रष्टारो देवोत्तमा ऋजवः श्रीमुख्यप्राणलातव्यादयः साक्षात्कृतधर्माणो जीवोत्तमा ऋषयः । 'प्राणो वा अङ्गिराः' इति शतपथम् (६.३.७.३) । 'प्राणा ऋषयः' इति च शतपथम् (१७.२.२.२६) । यद् यस्य वाक्यं द्रष्टृत्वसम्बन्धेन स तस्य ऋषिरित्यर्थः । उक्तश्च 'ऋषिर्दर्शनात्' इति । ते हि मन्त्रान् प्रयोगविधिनेष्टलाभाय प्रयुञ्जते । तस्मान्मन्त्रकृतः ।

''ऋजुः, पवित्ररथः, भाविवायुः, भोजः, ऋजुयोगी ऋजुक्रतुः, ऋजुगाथः, अनुत्साहः, ('ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्' इति ऋक् १.९०.१), विष्णुस्तुतिकर्ता, अप्यः, इन्द्रः, कविः, ('विप्रस्य धारया कविः' इति ऋक् ९.४४.२), कोविदेश्वरः, मन्युः,वरुणः, अग्निद्योतनः, द्विजवरश्रेष्ठः, पवमानः, श्रीवादिराजः, सोमः, गोत्रः, लातव्यः, राजा (विश्वस्य भुवनस्य राजा' इति ऋक् ५.५.५), अधिराजः, राजाधिराजः, स्वराट्, सम्राट्, वादीभमृगराजः, भाविमध्वः, महामतिः, वादिराजेन्द्रः, यतिः, महान्, यतीश्वरः, पृक्षः, वाजिवक्त्रधारी, (श्रीहयग्रीवाख्यस्य विष्णोः विशिष्टप्रतिमा), विराट् इत्यादिशब्दाः प्रतिपदविधानेन, रूढ्या, योगेन, प्रवृत्तिनिमित्तभेदेन, वचनवृत्त्या, शब्दस्फूर्तिकतया, स्वार्थे शक्तिमत्तया, अभिधया च

लातव्यतदवतारविशेषानेवोत्सर्गतयाऽभिदधति निर्विशङ्कम् । अमी एव शब्दाः बळित्थामन्युसिता-सितेसश्रर्भुराणपवमानादिश्रुतिषु श्रीनारायणोदितपञ्चरात्रतन्त्रभागवततत्वसङ्ख्यानवामनस्कान्दपाद्म-नारदब्रह्माण्डब्रह्मवैवर्तादिपुराण - प्रकाशसंहितालक्ष्मीसंहिताव्योमसंहितातत्वसंहितानारायणसंहिता-ऋक्संहिताधर्मसंहिताबृहत्संहितावृन्दावनाख्यानादिसच्छास्त्रेषु च समविकलं पठिताः समानार्था इत्यवधेयम् – इति तत्रभवन्तः श्रीजम्बुखण्डीवादिराजाचार्याः । स एव परमात्मविषयस्य ज्ञानस्य नेता ऋजुयोगीत्यर्थः । गुणाधिक्यसमर्थं सम्यगवच्छेत् तत्प्रीतिद्वाराऽदृष्टभाक् च भवेदुपासक इति श्रीस्वाप्नवृन्दावनाख्याने ऋजुशब्दस्याभ्यासोक्तिरसकृदुपदेशश्च न पुनरुक्तिः । ‘ॐ आवृत्तिरसकृ-दुपदेशात् ॐ’ इति ब्रह्मसूत्रम् (४.१.१), विषयप्रतिपादने तत्वनिर्णये च पौनरुक्त्यं नेति प्रामाणिकाः । आदरातिशयश्रद्धाप्रकाशनायैव पौनरुक्त्यं न व्यर्थम् ।

> **‘यत्राधिकं तत्परता बहुवारमपि ध्रुवम् ।**
> **तद्वदन्ति महाप्राज्ञा लोकवेदानुसारतः ।।’ इति ।**

‘अभ्यासादुत्तमं फलम्’ इति च भागवततात्पर्यम् । ‘अभ्यासे भूयांसमर्थं मन्यन्ते’ इति च यास्कः । ‘संस्कारोज्ज्वलनार्थं हितं च पथ्यं च पुनः पुनरुपदिश्यमानं न दोषाय भवति’ इति तत्र भगवान् उव्वटः (शुक्लयजुर्वेदभाष्यम् १.२१) । पर्यायशब्दो हि यत्रानेकार्थः सन्दिग्धार्थो वा तत्र तदर्थस्य व्यक्तीकरणार्थस्तात्पर्यायान्तरस्यानुप्रयोगो न विरुद्ध्यते ।

चतुर्मुखस्य वेदाभिमानित्वादभिमान्यभिमन्यमानयोर्नामैक्याच्च, विष्णुमात्रनिष्ठानां श्रौतपदानां विरिञ्चसमस्य स्वत ईशसमस्य मुख्यप्राणस्यापि प्रतिपादकत्वं विद्यतेऽवश्यम् । ‘वायुर्हि ब्रह्मतामेति तस्माद् ब्रह्मैव स स्मृतः’; ‘ईशसाम्यस्यापि भावाद्’ इति निर्णयन्यायविवरणाभ्यां सिद्धं समत्वं वायुश्चतुर्मुखेनेशेन च । एवमेव सर्वेषां लातव्यादीनां श्रीहरिविशिष्टप्रतिमाभूतानां ब्रह्मत्वयोग्य-जीवानां जीवोत्तमानाम् । ऋजूनां भूमाववतारे तु देवशिक्षणार्थत्वेनात्मीयधर्मप्राकट्यस्य स्वधर्मत्वात् ।

मन्त्राणामृषिदेवताछन्दःपरिज्ञानं तावदपरिहार्यम् । देवतान्तरसद्भावे तदपरिज्ञानाच्च महते प्रत्यवायायेति ‘यो ह वा’ इति श्रुतिमुदाहरन्ति सर्वेऽपि शिष्टा वेव्याख्यातारः । ऋषिविशेषण-देवताविशेषणवाचकतया दृष्टस्यापि मन्त्रस्य ऋष्यन्तरेण देवतान्तरवाचकतया दर्शनस्य सम्भवेन अविरोधोपपत्तेः । वाचकशब्दसाम्येऽपि द्रष्टृभेदेन देवता नूनं भिद्यते । तथा तापसस्य मन्योरार्षत्वे हरिरमावायुदेवत्यं मन्युसूक्तस्य भीमसेनस्य चार्षत्वे नृसिंहदेवत्यमिति विवेको द्रष्टव्यः ।

श्रीमुख्यप्राणलातव्यात्मकश्रीवादिराजादयः साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृत-धर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । ''बह्वीः समाः, सञ्जर्भुराणः, अस्तु श्रौषट्, सितासिते सरिते यत्र सङ्गथे, अन्नकामाय चरते कृशाय, नित्यं ब्राह्मणसम्बन्धि, लातव्यो गोत्रः, उप ते गा इवाकरम्, ब्रह्मा लातव्यः कःस्विदद्य शिंशुमारी यज्ञपथेऽप्यस्तारिष्यति'' इत्यादिस्वाप्नवृन्दावना-ख्यानबृहत्संहितादिग्रन्थगतमन्त्रजातं रमानारायणौ नामग्राहं न गृह्णातीति विनिगमनविरहान्न तदेकनिष्ठम् । 'न ते विष्णो, उरुगायः, उरुक्रमः, विष्णोर्नु कम्' इत्यादाविह साक्षाद् विष्णु-निर्देशकशब्दानामभावाद्, 'मम योनिरप्स्वन्तः समुद्रे, अजस्य नाभौ' इत्यादौ श्रुतस्य समुद्रशायित्वपद्मनाभत्वादेः प्रसिद्धलिङ्गस्येव केवलनिर्दोषजीवोत्तमस्य विशेषणमन्तरा सर्वज्ञत्वादि-तद्धर्मिसाधारणस्य विष्णोर्लिङ्गत्वेन न कापि समाम्नाततत्वाच्चेदं वृन्दावनाख्यानबृहत्संहिताद्युक्तं मन्त्रजातं मुख्यवृत्त्या लातव्यात्मकश्रीवादिराजदेवताकमेव । परममुख्यवृत्त्या तु विष्णुः सर्ववेद-प्रतिपाद्यः । वर्गद्वयस्य मन्युसूक्तस्य श्रीमुख्यप्राणस्य मध्वस्य श्रीवादिराजस्य च समपूजाङ्गाभिषेक-कर्मणि विनियोगो विहितो ज्ञानिचक्रवर्तिभिरनूचानैः शिष्टैः । पूजाशब्दश्च श्रीहरिगुर्वादिकर्तृक-प्रीतिजननहेतुभूतक्रियात्वलक्षणेन रूढ एव । तत्र पुनर्निजोद्देशेनानुष्ठीयमाणेन कर्मणा प्रीयमाणाया देवताया गुणप्रतिपादकमन्त्राणां तदनुष्ठातव्यकर्मसमकालमुच्चारणं भवेदिति विधिरेव विनियोग-शब्दार्थः । अनेन 'इदं तु कर्तव्यं विनियोगः प्रकीर्तितः' इति क्रियासु प्रवर्तनमनुष्ठानक्रमविधानं वा मन्त्रप्रतिपाद्योऽर्थः । स च 'सर्वसम्प्रतिपन्नशिष्टसम्प्रदायक्रमानुगतः' इति, 'सर्वोऽप्ययं श्रीहरि-प्रेरणया श्रीहरिप्रीत्यर्थमेव च' इति वैदिकनिकाये प्रसिद्धम् । तस्माद् यद्यप्यपौरुषेये वेदे कर्तारो न सन्ति, तथापि कल्पादौ श्रीहर्यनुग्रहेण मन्त्राणां लब्धारो मन्त्रकृत इत्युच्यते ।

नन्वेवं निगमनिरुक्तव्याकरणादिबलेन वेदस्यार्थकल्पने देवदत्तादिपरतयाऽपि व्याख्यानस्य कर्तुं शक्यत्वेनातिप्रसङ्गः स्यादिति चेन्न । ऋषिविशेषेण देवताविशेषवाचकतया दृष्टस्यापि मन्त्रस्य ऋष्यन्तरेण देवतान्तरवाचकतया दर्शनस्य सम्भवेनाविरोधोपपत्तेश्च । आगमानुगृहीतसाक्षी ह्यत्र प्रमाणम् ।

इतिहासपुराणनिगमनिघण्टुशब्दशासनान्यनुसृत्य ''अप्यक्षरसाम्यान्निर्ब्रूयात्, त्रयोऽर्थाः सर्ववेदेषु (अवराश्च ते त्रयो वस्तुनोऽनन्ता इत्यर्थः), अनन्ता वै वेदाः, समाकर्षात्, व्याख्यानतो विशेष-प्रतिपत्तिर्न हि सन्देहादलक्षणम्, तदधीनत्वादर्थवत्, उभयवचनादविरोधः, लिङ्गतो निरुक्तेन वा देवतातत्वावधारणम्, यद्वाक्यगतं लिङ्गं बलवत्, यो यच्छब्दाभिन्नः स तत्पदवाच्यः, तत्रापि

यौगिको मुख्यः, सिद्धे सिद्धार्थसम्बन्धे, य एव लौकिकास्त एव वैदिकाः, प्रकरणसामर्थ्याच्छब्दो-ऽप्यर्थान्तरं भजते, न लक्षणेन पदकारा अनुवर्तव्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्, बह्वर्था अपि धातवो भवन्ति, ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता, अनिषिद्धास्तदन्येषु यथायोग्यतया मताः, यत्र विनियोगः स एव मन्त्रार्थः, यदक्षरपरिमाणं तच्छब्दः, अन्यार्थकमन्त्रस्यान्यत्र विनियोगः, अर्थप्रधानं निरुक्तम्, अप्रतिषिद्धमनुमतं भवति, यत्परः शब्दः स एव शब्दार्थः, अर्थनित्यः परीक्षेत, यथार्थं विभक्तीः सन्नमयेत्, आर्थिकाच्छाब्दं वरम्, अर्थाद्विभक्तिविपरिणामो भविष्यति, अर्थगत्यर्थः शब्दप्रयोगः, अर्थं प्रत्याययिष्यामीति शब्दः प्रयुज्यते, नापाततः प्रतीत एव श्रुत्यर्थः अपि तु मीमांसित एव, आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्, बहुलं तणि, यस्य वाक्यं स ऋषिः, या तेनोच्यते सा देवता, सुपां सुलुक्, धातूनामनेकार्थत्वात्, व्यत्ययो बहुलम्, बहुलं छन्दसि, पृषोदरादीनि यथोपदिष्टम्'' इत्यादिन्यायांश्चावलम्ब्य मन्त्रार्थ उन्नेय इति साध्वी माध्वी पद्धतिः ।

**स्वरो वर्णोऽक्षरं मात्रा विनियोगार्थमेव च ।**
**मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ।।**

इति बृहद्देवतायां शौनकः (पृष्ठम् २४) । मन्त्रार्थपरिज्ञानादेव ह्याग्न्यादिशब्दानामध्यात्माधि-दैवाधिभूताधियज्ञेष्ववस्थानं याथात्म्यतो दृश्यते ।

**''रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत् ।**
**तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके ।**
**अनवस्थानिवृत्त्यर्थं यौगिके रूढकल्पना ।**
**ज्ञाते विशेषविज्ञानं व्यवहारोऽपि रूढितः' इति ब्रह्मतर्के ।।**

इति कर्मनिर्णयः । ''ऋगर्थश्च त्रिविधो भवति । एकस्तावत् प्रसिद्धाग्न्यादिरूपः, अपरस्तदन्त-र्गतेश्वरलक्षणः, अन्योऽध्यात्मरूपः'' इति ऋग्भाष्यटीका ।

**एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धम् ।**
**यत्कर्म क्रियमाणमृग्यजुर्वाऽभिवदति ।।'** इत्यैतरेयब्राह्मणम् (१.४.९) ।

'मन्त्रविनियोगो विष्णुप्रीतिद्वारा मोक्षे । तस्मादेतेषु मन्त्रेषु यावन्तोऽर्थाः उपपद्येरन् आधि-दैवाध्यात्माधियज्ञाश्रयाः सर्व एव ते योज्याः' इति दुर्गः । 'सकलवेदानां मुख्यतो भगवत्प्रति-पत्तिहेतुत्वात्' इति ऋग्भाष्यटीका (पृष्ठम् ३) । अपि च –

**'मुख्यार्थानां च सर्वेषां तारतम्यं तु विद्यते ।**
**तत्रापि परमो मुख्यो वाच्योऽशेषरवैर्हरिः ।**
**तत्तन्मुख्याविरोधेन तदन्यार्थस्य सङ्ग्रहः ।**
**स्वतो मुख्यविरोधे तु त्याज्योऽन्योऽर्थोऽखिलेष्वपि ।**
**इति सर्वत्र नियमः शब्दार्थज्ञानभूमिषु' इति च ।** – इति कर्मनिर्णयः ।

'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति । तस्मादाहुर्वेदाः' इति पिप्पलादश्रुतिः । 'वेदेन देवा असुराणां वित्तं वेद्यमविन्दन् तद्वेदस्य वेदत्वम्' इति तैत्तिरीयसंहिता (१.४.२०) ।

**ऋक्संहितायां स्वाध्याये निरुक्ते व्यासनिर्मिते ।**
**प्रवृत्ते चैतदखिलमुक्तं हि प्रभुणा स्वयम् ॥**
**सर्वे वेदाश्च नामानि ता वा एता ऋचस्तथा ।**
**इन्द्रं मित्रं च वरुणमित्याद्यत्र प्रमा परा ॥**
**देवतातारतम्यं च सर्वोत्कृष्टं च केशवम् ।**
**ज्ञात्वैव मुच्यते ह्यस्मान्नान्यथा तु कथञ्चन ।** इति ऋग्भाष्यम् (१-९६)

'सर्वो वेदो विष्णुपरः । अग्न्यादिदेवतापरत्वेन तदन्तर्गतविष्णुपरत्वेन, अध्यात्मपरत्वेन चेत्येवं त्र्यर्थपरतया व्याख्यातानि' इति मन्त्रार्थमञ्जरी (पृष्ठम् १०४) । विष्णुः सर्ववेदप्रतिपाद्यः, सर्ववेदानां विष्ण्वर्थत्वसिद्धेः । श्रुतितात्पर्यनिर्णायकपरविद्याख्यब्रह्ममीमांसैव सर्वत्र प्रयोजिका इति न विस्मर्तव्यम् ।

''शास्त्रैकसमधिगम्यपुरुषज्ञानस्य च वैदैरेवोत्पाद्यत्वाद् वेदानां विष्ण्वर्थत्वसिद्धिः । मन्त्रविनि-योगो विष्णुप्रीतिद्वारा मोक्षे । अवान्तरविनियोगः कर्मणि'' इति मन्त्रार्थमञ्जरी । निरवकाशश्रुतेः सावकाशश्रुत्यपेक्षया प्रबलत्वमिति वैदिकः सिद्धान्तः । ''न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः, प्रकरणश एव तु निर्वक्तव्याः'' इति यास्कः (१३.१२) । (नह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा पारोवर्यवित्सु खलु वेदितृषु भूयो विद्यः प्रशस्यो भवतीत्युक्तम् । पुरस्तान्मनुष्या वा ऋषि-षूत्क्रामत्सु देवानब्रुवन् को ऋषिर्भविष्यतीति । तेभ्य एतं तर्कमृषिं प्रायच्छन्मन्त्रार्थचिन्ताभ्यूह- मभ्यूढं तस्मादेवं किञ्चानूचानोऽभ्यूहत्यार्षं तद्भवति,) निर्वचनं नामार्थस्यान्वाख्यानम् । 'यः कश्चिदाध्यात्मिकाधिदैविकाधिभौतिको वाऽर्थ आख्यायते दिष्ट्युदितार्थावभासनार्थं स इतिहास इत्युच्यते' इति दुर्गः (१०.३६) ।

**'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।**

**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥'** इति काशिका (६.२.१०९)

किञ्च –

**धर्मेणानुगतो येषां वेदः सपरिबृंहणः ।**

**शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ॥'** इति बौधायनः (१.१.६)।

**'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।**

**बिभेदल्पश्रुताद्वेदो मामयं प्रचलिष्यति ॥'**

इति महाभारतवचनात् (आदिपर्वणि १.१६८) सच्छास्त्रपुराणप्रमितार्थानुसारेण श्रुतयो योजयितुं शक्याः । उपबृंहणं नाम श्रुतिप्रतिपन्नार्थविशदीकरणम् । 'पारोवर्यवित्सु खलु भूयो विद्यः प्रशस्यो भवति' इति च यास्कः (१.१६)।

वेदार्थसमुपबृंहणं हि स्वाप्नवृन्दावनाख्यानम् । यज्ञकर्मणि विनियुक्तानामपि मन्त्राणां यूपाद्यभिमानिदेवतानुसन्धानपूर्वकं पठनस्यावश्यकतया तत्र तात्पर्यस्यावश्यम्भावेनोक्तार्थस्यैवोचितत्वात् । अन्यथा अभिमान्यधिकरणानारम्भापत्तेः । यथा – 'इदं विष्णुर्विचक्रमे' इत्यत्र एक एव विष्णुशब्दोऽनेकशक्तिः सन्नधिदैवतमध्यात्मधियज्ञं चात्मनि नारायणे चषाले च तथा शक्त्या प्रवर्तते । परममुख्यया वृत्त्या विष्णौ ।

**'तस्मात् समन्वयो विष्णौ स्वरवर्णपदात्मनः ।**

**अपि वेदस्य किमुत वाक्यरूपेण सङ्गतिः ॥**

**घोषाः सर्वेऽपि वेदाश्च सर्वे वेदाश्च यत्पदम् ।**

**इन्द्रं मित्रं यमिन्द्रं च प्रथमः सङ्गतिस्तथा ।**

**नामधाः सर्वदेवानामेकः इत्यादिका श्रुतिः ॥'** इत्यनुव्याख्यानम् (१.४.२९) ।

'यो देवानां नामधा एक एव' इति ऋक् (१०.८२.३) ।

श्रीरमात्रिविक्रमानुग्रहसमासादितसच्छास्त्रसरसकवितासाम्राज्यधुरन्धरस्य समाश्रितजनरक्षणपरायणस्य निखिलसात्विकजनसद्विद्यावैदुष्याभिवर्णनैकपरायणस्य सन्ततश्रीहयग्रीवस्तवनैकतानमानसस्य श्रीहयग्रीवाख्यस्य विष्णोर्विशिष्टप्रतिमाभूतस्य महामतेः श्रीहरिपरिवारस्य श्रुतिप्रत्यभिज्ञात-माहात्म्यस्य जीवोत्तमस्यासमसमस्य लातव्यस्य मृदुमधुरातिसुन्दरपदसन्दर्भसौभाग्यस्य सर्वज्ञस्य

बळित्थासितासितेऽसञ्जर्भुराणमन्युसूक्तादिमन्त्रप्रतिपाद्यस्य श्रीवादिराजतीर्थभगवत्पादस्य व्याहरणं स्तवनं प्रार्थनं च तदीशितुः श्रीरमात्रिविक्रमाभिन्नश्रीहयग्रीवस्य तुष्टिदं यच्च तत्प्रेरणाफलमेव इति निश्चप्रचम् इति निश्चेतव्यम् ।

श्रीमद्भाविसमीराणां लातव्यावताराणां श्रीवादिराजमुनीन्द्राणाम् ऋजुदेवत्वं तावत् सच्छास्त्रे सुदृढं निश्चितमेव प्रमाणपुञ्जैः प्रत्यक्षादिभिरागमसहकृतैः । सत्सिद्धान्तधोरण्या विचारिते ''विरोध्याकारसमर्पणेन हि विरोध्याकारान्तरं व्यावर्तनीयम्'' इति जन्माधिकरणसुधोदितन्याया-नुसारेण ऋजुत्वाभावप्रतिपादकवाक्यानुदाहरणात् परेषां वादः सुतरां न प्रमाणकोटिमाटीकते । करणप्रमाणस्वतस्त्वं तु राजमार्गो येन गच्छन् श्रीवादिराजऋजुत्ववादो हि रराजीति यथा श्रीमध्वगुरूणामृजुत्वम् । नित्यातीन्द्रियस्य ऋजुत्ववादिकस्य प्रमा(प)णे प्रत्यक्षस्य जघन्यत्वं चार्वाकवर्जं सकलदार्शनिकाङ्गीकृतमेव । सममनुमानस्य चेति विदः सौगतवर्जं तत्वविदः । तन्निषेधायापि नालं केवलं प्रत्यक्षानुमानयुगलमागमसहकृतिविरहि ।

तथा हि बृहद्भाष्यम् (३/५/४)।

**''अनुमाया विरोधश्चेत् प्रत्यक्षेणागमेन वा ।**
**सैवाप्रमाणतां गच्छेदागमद्विट् तथाक्षजम् ।**
**तस्मादागम एवैको मानानामुत्तमोत्तमः ।**
**धर्मार्थकाममोक्षाणां साक्षादेव प्रदायकः ।।** – इति वायुप्रोक्तवचनम् ।

तथा हि न्यरूपि द्वितीयतत्वप्रकाशिकायाम् (२/२/६) । ''नापि धर्मादिभ्रान्तिनिरासाय तदभावः । तदुपायाभावात् । न हि प्रत्यक्षं धर्माद्यभावं गृह्णाति'' इति । 'पुरुषोपसर्जनप्रधानस्य जगत्कारणत्वे आगमप्रमाणाभावात् । न चोक्तमनुमानं प्रमाणम् ।' 'न ऋते त्वत्क्रियते किञ्चनारे' इति श्रुतेः शरीरप्रवृत्तावपि परमात्माधीनत्वे सिद्धे सति, पुरुषोपसर्जनप्रधानाधीनत्व- साधने दृष्टान्ताभावादिति भावः' इति च ।

एवं चायातमागम एव श्रीवादिराजऋजुत्वाद्यतीन्द्रियवस्तुतत्वावगमे मानमिति । तथा हि वाणीपतिं ब्रह्माणमुद्दिश्य श्रीनारायणवचनम् –

**''श्रीमन्मध्वमतं दिव्यं मद्भक्तेनोद्धृतं सुत ।**
**मत्सर्वोत्तमतामुक्त्वा युक्तिमालाभिरञ्जसा ।।५४।।**

**व्यासात्मना मया पूर्वं यदुक्तं सर्वमेव तत् ।**
**जगत्सत्यत्वादिकं च तात्पर्यविषयं ऋते ।।५५।।**
**तत्समर्थितमेवादौ समर्थेन महात्मना ।**
**प्राप्य तत्र कृतार्थत्वं व्यर्थीकृत्य सुदुर्मतम् ।।५६।।**
**मत्समीपमिहागन्ता वृन्ताद्यस्थीनि तस्य च ।**
**चक्रशंखाद्यायुधैश्चाथांकितानि महात्मनः ।।५७।।**
**तस्मात् तन्मतमेवाग्र्यं ग्राह्यं सर्वबुधैरपि ।**
**प्राग्र्यं लोकमवाप्नोति तन्मते चाग्रहान्वितः ।।५८।।''**
– इति वृन्दावनाख्यानम् (१० अध्याये)

(इदं श्लोकपञ्चकं श्रीनारायणोदितपञ्चरात्रगतमिति श्रीजम्बुखण्डिवादिराजाचार्याः)

तथा बृहद्भाष्यम् – (३/५/४) ।

**''तस्मादागम एवैको मानानामुत्तमोत्तमः ।**
**निर्णयस्त्वागमेनैव नानुमागमवर्जिता ।**
**क्वचिन्निर्णीति हेतुः स्यादतः शास्त्राद् विनिर्णयः ।''** इति ।

न च वेदात्मकेतिहासपुराणोक्तन्यायं परित्यज्य केनचित् क्लृप्तन्यायो विद्यते ।

**''पृष्टेन प्रथमं मानं वक्तव्यं वादिनां शुभम् ।**
**वेदाः सर्वे शुभं मानं सेतिहासपुराणकाः ।**
**स पञ्चरात्रमीमांसाः स्मृतयश्चाप्यनन्तरम् ।**
**तदन्यदशुभं प्रोक्तं न प्रयोज्यं कथासु च ।''** इति श्रीमदाचार्याः ।

''पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये'' **इति कथालक्षणम्** ।

**अनुव्याख्यानेऽपि** ''सद्भिरागम एवादौ प्रयोज्योभीष्टदायकः'' (२/१/५) इति श्रीभगवत्पादाचार्याः ।

**''यानीहागमशास्त्राणि याश्च काश्चित् प्रवृत्तयः ।**
**तानि वेदं पुरस्कृत्य प्रवृत्तानि यथा क्रमम् ।''** – इति महाभारतम् (अनु १२२/४)

**''अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।**

**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ।।''** इति महाभारतम् (शान्ति २४/२३२)

**अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति ।**

**देवस्य पश्य काव्यं न ममार जीर्यति ।।** – (इत्यथर्वश्रुतिः १०।८।३२)

''सर्वज्ञानमयो हि सः'' इति **मनुः**(२/७४); ''प्रमाणं परमं श्रुतिः'' इति च **मन्वनुशासनम्** । ''वेदस्यापौरुषेयत्वात् स्वतः प्रामाण्ये सिद्धे तद्धेतुत्वात् तच्छाखानामपि प्रामाण्यं प्रतिपादितं बादरायणादिभिः'' इति **शतपथभाष्ये श्रीहरिस्वामि** ।

''ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्'' **इत्यैतरेयब्राह्मणम्** (३५/७)

''स्वरोनियत आम्नाये अस्यवामस्य शब्दस्य । वर्णानुपूर्वी खल्वाम्नाये नियता अस्य वामशब्दस्य ...'' इति **महाभाष्यम्** (५/२/५).

**बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः ।**

**यदेषां श्रेष्ठ यदरिप्रमासीत् प्रेम्णा तदेषां निहितं गुहाविः ।।**

– इति ऋक् (१०।०७१।०१)

**'ऋचो यजूंषि सामानि छन्दां स्याथर्वाणि च ।**

**चत्वारस्त्वखिला वेदाः सरहस्याः सविस्तराः ।''** इति हरिवंशेषु (२/१०९/७)

''एवं वा अरेस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरसः'' इति च **बृहदारण्यकश्रुतिः**; इति **शतपथम्** (१४/५/४/१०); ''अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, सूर्यात् सामवेदः'' इति **शतपथम्** (११/५/८/३);

**''अग्निवायुरविभ्यस्तु त्रयं ब्रह्मसनातनम् ।**

**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम् ''** इति च मनुः (१/२३)

**''तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।**

**छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ।।''** इति यजुर्वेदश्रुतिः (३१/७)

'पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे । नियतवाचो युक्तयो नियतपूर्व्या भवन्ति ।' इति **यास्कः (१/१६);**

**''युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।**

**लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ।''** – इति महाभारतम् (शान्ति २१०/१९)

''तत्रापरो ऋग्वेदो यजुर्वेदः सामवेदोथर्ववेदः ।
शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम् ।।'' इति मुण्डकोपनिषत् (१/१/५)

''त्रयी वै विद्या ऋचो यजूंषि सामानि इति'' – इति शतपथम् (४/६/८/१)

अपि च –

ऋगादयश्च चत्वारः पञ्चरात्रं च भारतम् ।
मूलरामायणं ब्रह्मसूत्रं मानं स्वतः स्मृतम् ।।
अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा ।
एतद्विरुद्धं यत्तु स्यान्न तन्मानं कथञ्चन ।।
वैष्णवानि पुराणानि पञ्चरात्रात्मकत्वतः ।
प्रमाणान्येव मन्वाद्याः स्मृतयोप्यनुकूलतः ।।
एतेषु विष्णोराक्यमुच्यतेन्यस्य न क्वचित् ।
अतस्तदेव मन्तव्यं नान्यथा तु कथञ्चन ।।''

– इति स्पष्टम् । महाभारततात्पर्यनिर्णये (१/३०-३३)

''श्रुत्या सह विरोधे तु बाध्यते विषयं विना'' इति भविष्यत्पुराणम् ।

''न वेदशास्त्रादन्यत् तु किञ्चिच्छास्त्रं हि विद्यते ।
निःसृतं सर्वशास्त्रं तु वेदशास्त्रात् सनातनात् ।
दुर्बोधं तु भवेद्यस्मादध्येतुं नैव शक्यते ।
तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम् ।''

– इति बृहद्योगियाज्ञवल्क्यस्मृतिः (१३/१,२)

''श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी'' इति जाबालस्मृतिः ।

''पुराणोपजीव्यश्च वेद एव न चापरः ।
तद्विरोधे कथं मानं तत्तत्र च भविष्यति ।'' इत्याचार्याः ।

'हयग्रीवमुखोद्गीर्णा सा वाणी धर्मशासनम् ।
अतस्तदुदितो धर्मो ह्यधर्मस्तद्विपर्ययः ।।

– इति युक्तिमल्लिकायां भाविसमीराः (१/१३१)

ननु कोयमागमो नाम येनातीन्द्रियं वस्त्ववगम्यते? इति महत्यारभट्या जोघुष्यत इत्यत्र ब्रूमः । सदागमाश्च ये चावगमयन्ति ज्ञापयन्ति बोधयन्ति गोचरयन्ति नित्यमतीन्द्रियादिकं धर्माधर्मपुण्यपापऋजुत्वादिरूपम् । प्रकृतमागमा हि भगवन्तः श्रीमन्तो नित्या अपौरुषेया वेदाः श्रुत्यपरपर्याया वेदाः । वेदस्यापौरुषेयत्वेन स्वतः प्रामाण्ये सिद्धे तच्छाखानामपि ब्राह्मणाख्यान-ग्रन्थादीनां प्रामाण्यं सिद्धम् । तथैव प्रकृते स्वाप्नवृन्दावनाख्यानादीनामपि प्रामाण्यं सिद्धम् ।

प्रसङ्गतः प्राप्ते निरन्तरविष्णुस्तुतिकर्तृणां कवीनां श्रीमद्वादिराजगुरुसार्वभौमानाम् ऋजुत्वविषये श्रुतिप्रमाणतां निरूपयामः ।

अविशेषेण सर्वेषां वेदानां त्र्यर्थता विद्यत इति न परोक्षं प्रेक्षावताम् । तथा च ''त्रयोर्थाः सर्ववेदेषु'' इति ऋग्भाष्योदाहृतस्कान्दसमाख्यावचनं मानम् । ''त्र्यर्थतां श्रुतिषु वित्त'' इति भगवत्पादीयं वचोन्ववादि पण्डिताचार्यैः । (अर्थेषु त्रित्वं च अवान्तरार्थप्रकारताविशिष्टप्रधानार्थ-त्रयवत्वम् । अनेन प्रधानभूतास्त्रिविधा अर्थाः । प्रत्येकं तेष्वपि भिन्नतावान्तरार्थानामिति निर्गलितो भावः ।) आहत्य वेदानां त्रिभ्योधिकमर्थचतुष्टयं पञ्चकं वा लभ्यते यथायोगं भगवद्रूपपरतया बहुदेवतापरतया बहुकर्मपरतया च व्याख्येयत्वात् निगमनिघण्टुसच्छास्त्रानुशासन- बलेन ।

''अनुपक्षीणशक्तयो हि विभवा वेदशब्दा यथाप्रज्ञं पुरुषाणामर्थाभिधानेषु विपरिणममानाः सर्वतोमुखा अनेकार्थान् प्रब्रुवन्तीत्येतदनेन प्रदर्शितं भवति'' इति **दुर्गः** (१/२०)

''आधिदैविकम् आधिभौतिकम् अध्यात्मम् इति प्रधानमर्थत्रयमिति वेदार्थप्रक्रियाविद आमनन्ति । अर्थं वाचः पुष्पफलमाह – यज्ञदैवते पुष्पफले देवताध्यात्मे वा'' इति **यास्कः** (१/२०/१)

मन्त्रा अयज्ञिका, ''इषे त्वा'' आदयः त एव देवतापरत्वेनाधिदैविकाः, आधिदैविकास्त एवात्मानमकृता आध्यात्मिकाः ईशावास्यादयः आध्यात्मिका एव ।

एवं चावान्तरार्थतया पवमानसोममण्डलं, मन्युसूक्तं, बळित्थासूक्तम्, ऋचः काश्चन, यजूंषि च वायोस्तृतीयांशस्य श्रीमदानन्दतीर्थभगवत्पादाचार्यस्यावतारपावनकथामुपवर्णयन्ति प्राक्तनेन तस्यावतारद्वयवर्णनेन सह । 'पवमानः पूयमानः सोमश्चोक्तः पदे पदे' इति श्रीयुक्तिमल्लिकायां फलसौरभे मुख्यप्राणावताराणां श्रीमध्वगुरूणां वैदिकाचार्यत्वं निपुणतरं न्यरूपि भाविसमीरैः श्रीवादिराजपूज्यचरणैः (श्लोकाः ४९९ आरभ्य ७२० इत्यन्ताः) । श्री**युक्तिमल्लिकाविवृतौ**

''**पुरन्दरः** तत्स्थानीयो जयतीर्थार्यः, पूर्वदेवान् कुसमयिनः निरस्य, न्यायसुधाप्रदानेन देवर्षिहर्षकृत्, भूसुराणां सन्तोषकृत्'' (१/३०७) इति **श्रीसत्यप्रमोदतीर्थश्रीमच्चरणाः** । श्रीवैश्वनाथीनारायणा-चार्य विरचित मन्त्रार्थमञ्जर्यामपि श्रीमध्वस्य वैदिकाचार्यत्वं प्रदर्शितमस्ति ।

''सच्छास्त्रानुसारेण निगमनिरुक्तव्याकरणवशेन धातुतोर्थः कल्पयितव्यः । त एते वक्तुरभि-प्रायवशात् अन्यार्थत्वमपि भजन्ते मन्त्राः । न ह्येतेष्वर्थस्येयत्ताधारणमस्ति । महार्था ह्येते दुष्परिज्ञानाश्च । यथाश्वारोहवैशिष्ट्यादश्वः साधुः साधुतरश्च वहति, एवमेते वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रवन्ति ।'' इति **दुर्गः** । तत्रैव सति लक्षणोद्देशमात्रमेवैतस्मिंशास्त्रे निर्वचनमेकैकस्य क्रियते, क्वचिच्च अध्यात्माधिदैवायज्ञोपदर्शनार्थम् । तस्मादेतेषु यावन्तोर्था उपपद्येरन् अदैवाध्यात्मायज्ञाश्रयाः सर्व एते योज्याः नात्रापराधोस्ति'' इति **दुर्गः** (२/८/१)

''लोके व्युत्पन्नस्य वेदार्थप्रतीतिः'' इति कपिलः (५/४०);

''यः कश्चिदाध्यात्मिकआधिदैविकआधिभौतिको वार्थ आख्यायते दिष्ट्युदितार्थावभासनार्थं स इतिहास इत्युच्यते'' इति **दुर्गः** (१०/१०/२) ।

एवमेव ते ऋङ्मन्त्राद्याः ऋजुगणवर्तिनो मुख्यप्राणलातव्यादीन् श्रीवादिराजभगवत्पादादीन् वायुपदयोग्यान् तत्समानज्ञानान् शुद्धान् निर्दोषानपि यथायथं बोधयन्तीति सेत्स्यतीतीह न काचिद् विप्रपत्तिः ।

परैर्वेदव्याख्यातृभिर्मन्त्राणामन्यथा योजिते व्याख्यानेऽपि विहिते निरुक्तादिषु विपरीता-व(त)भासया वर्तमानेपि वेदादिसकलसच्छास्त्रबलेन व्यासनिरुक्त्याधारेण शब्दतन्त्रमर्यादया पूर्वप्रसिद्धवर्जं सर्वाण्यपि सूक्तान्यवतारत्रयपरतया व्याख्यातानीति निर्विशङ्कं सर्वैरङ्गीक्रियते सिद्धान्तिभिर्वैयाकरणैः श्रुत्यर्थवेदिभिः ।

तथा च ऋक्संहिता –

**''सहोरूपस्य देवस्य लातव्यस्य बलात्मकम् ।**
**मूलरूपं ज्ञानततं जगद्धरणगं यतः ॥१॥**
**जातं तेनात्मना सर्वचेष्टकेन महात्मना ।**
**रूपत्रयावताराय निहितं हरिणा स्वयम् ॥२॥**
**अण्डाद् बहिः स्थितं मूलं सत्यलोकस्थितं महत् ।**

गृहीत्वा रुग्मिणीपत्रं कृष्णान्तिकमुपागतम् ।।३।।

वादिराजाभिधं चेति मूलभेदविवर्जितम् ।
तत्र प्रथमकं रूपं विश्वरूपान्तिकस्थितम् ।।४।।

साधकं विष्णुकार्याणां शिष्यसन्मतिदायकम् ।
अमृतस्राविणीर्वाचः पञ्चरात्रादिनामिकाः ।।५।।

ऋतरूपस्य विष्णोर्हि औत्कर्षप्रतिपादकाः ।
अनयन्त स्वशिष्येषु द्वितीयं पृक्षनामकम् ।।६।।

मागधादिमहासेनादुर्मानक्षयकारकम् ।
कृष्णदत्तविचित्रान्नभोक्तृतत्प्रियमुत्तमम् ।।७।।

ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।
प्रोक्ताः सप्तशिवास्ताश्च मातरस्तत्र संस्थितम् ।।८।।

तद्विचारपरं प्रोक्तं ज्ञानदोग्धृ तृतीयकम् ।
लातव्यस्य ऋजोस्तस्य दशप्रमतिनामकम् ।।९।।

वादिनां ज्ञानदानैकशीलानां राजनं यतः ।
वेति ज्ञानं समुद्दिष्टं। देति दानमुदाहृतम् ।।१०।।

प्रोक्तः शील इकारेण राजनं राजशब्दितम् ।
वादिराजाभिधं रूपं दशप्रमतिशब्दितम् ।।११।।

पूर्णज्ञानं विना प्रोक्तराजनं तु कथं भवेत् ।
दशेति पूर्णमुद्दिष्टं ज्ञानं प्रमतिरीरितम् ।।१२।।

योषणोजनयन्तैतद् वादिराजाभिधं वपुः ।
तस्मादेव ज्ञानरूपान्महिषस्य हरेर्गुणान् ।।१३।।

पालनाद् वरणीयत्वाद् वर्प इत्यभिशब्दितान् ।
रुद्राद्याः सूरयश्चान्ये ज्ञातवन्तः सुखेन तु ।।१४।।

प्रकृष्टज्ञानरूपो यो भाविमध्वः प्रकर्तितः ।
मधुशास्त्रं मध्वशास्त्रं सम्यग्वेत्ता गुरुः सदा ।।१५।।

प्रमाणरूपवेदादौ गतिमान् गूहितं हरिम् ।
आ समन्तात् पतित्वे तु मथ्नात्याम्नायशास्त्रतः ।।१६।।
रूपत्रयं प्रेर्यते यत् पित्रा स्वस्य परात्मना ।
प्रश्नरूपांस्तृणादीन् स दन्तेष्वारोप्य जक्षति ।।१७।।
'पृश्निर्वेदः प्रश्नयोग्यः पृश्निमाता हरिस्ततः ।
ज्ञेयस्तस्यापि विज्ञाता मरुतश्चेत् सुतागिरः ।'

'पृश्निर्भारति' इति वाङ्नामसु पाठात् इति ऋग्भाष्यम् ।

लातव्याचार्यवर्यस्य यस्य रूपत्रिकं ह्युभौ ।
रमानारायणौ साक्षादिन्वतस्तत्कृपाशुचिः ।।१८।।
आभ्यामेवावरः प्रोक्तस्तयोराज्ञानुसारतः ।
उदरं प्राविशन्मातुस्तन्निमित्तविकर्म नो ।।१९।।
श्रीमन्मध्वाचार्यदेहं गर्भस्थश्च विशत्यसौ ।
तदागमनपर्यन्तं तत्र स्थित्वा तु गच्छति ।।२०।।
मातृप्रविष्टोपि शुचिर्गर्भपीडाविवर्जितः ।
विशेषेणाभिवृभूद् ऋगाद्या स्वारुहत् क्रमात् ।।२१।।
सनातनासु वाच्यासु नूतनास्ववरासु च ।
पञ्चरात्रपुराणेतिहासाख्यासु निधावते ।।२२।।
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।
यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः ।।२३।।

इति ।

''लिङ्गाल्लातव्यतः पूर्वम् ऋजोर्ब्रह्मत्वतः शतात्'' इति श्रीमदनुव्याख्यानम् (४.१.२) । 'लिङ्गाल्लातव्यनामर्जुः' इति सन्न्यायरत्नावलिः । तथा च तत्रैव श्रीमन्न्यायसुधा – ''लातव्यः आदातव्यः शिष्यैरुपासितव्यः तस्माद् ब्रह्मत्वत इति षष्ठीबहुवचनान्तत्तसिः । ब्रह्मत्वानां शतात् पूर्वम्' इति ऋजोर्विशेषणम् । यस्यैतस्माद् ब्रह्मकल्पादारभ्य ब्रह्मकल्पानां शते गते ब्रह्मत्वं भविष्यति तस्मादिति यावत्'' इति ।

तथा च **गोपथब्राह्मणम्** – ''तस्माद् ब्राह्मणवचनमादर्तव्यम् । लातव्यो गोत्रो ब्रह्मणः पुत्रः'' इति ।

तथा च ऐतरेयब्राह्मणम् – 'तस्माद्यो राजा विजितो स्याद् अप्ययजमान आख्यापयेतैवे-च्छौनश्शेपमाख्यानं नह्यस्मिन्नल्पश्च नैनः परिशिष्यते' इति । 'अग्रेगो राजाऽप्यस्तविष्यते' इति ऋक् । अप्यः = श्वासनियामकः श्रीवादिराज इत्यर्थः । अप्यः = अप्सु अण्डोदके स्तिथः संस्कृतश्च ।

## ।। [१]श्रीवादिराजतीर्थानामृजुत्वे पुराणवचनानि ।।

**तथाहि ब्रह्मवैवर्ते चतुर्मुखवचनम् –**

**'व्याससेवारतो नित्यं वादिराजो ऋजुर्यतिः ।**
**दुर्वादान् परिमथ्याशु मत्पदं यातुमर्हति ।**
**स्थापयिष्यति मच्छास्त्रं तेन क्षेमो भवेद्धि वः ।।' इति ।**

ಭಾವಾರ್ಥ - ''ನಿರಂತರ ಶ್ರೀವೇದವ್ಯಾಸದೇವರ ಸೇವಾನಿರತರಾದ, ಋಜುಗಣಸ್ಥರಾದ ಶ್ರೀವಾದಿರಾಜಯತಿಗಳು ಸಕಲದುರ್ಮತಗಳನ್ನು ನಿರಾಕರಣೆ ಮಾಡಿ ನನ್ನ ಪದವಿಯನ್ನು ಹೊಂದುತ್ತಾರೆ. (ಲಾತವ್ಯಾಚಾರ್ಯರಾದ) ಶ್ರೀವಾದಿರಾಜರು ಶ್ರೀಮಧ್ವದೇವಕೃತಸಚ್ಛಾಸ್ತ್ರವನ್ನು ಸಂಸ್ಥಾಪಿಸುತ್ತಾರೆ. ಆದರಿಂದ ಸಕಲಸಾತ್ವಿಕಲೋಕಕ್ಕೆ ಕ್ಷೇಮವುಂಟಾಗುತ್ತದೆ.'' ಎಂದು ಚತುರ್ಮುಖಬ್ರಹ್ಮದೇವರು ಬ್ರಹ್ಮವೈವರ್ತಪುರಾಣ-ದಲ್ಲಿ ಅಪ್ಪಣೆ ಕೊಟ್ಟಿರುತ್ತಾರೆ.

**तथा हि पाद्मपुराणम् –**

**'ज्ञानी मध्वो मातरिश्वा गुहासन्तं जगत्पतिम् ।**
**हनुमद्भीममध्वाख्यास्त्रयो वायुसुता इमे ।।**

**तं मध्वं मारुतं सर्वे परिवारतया सदा ।**
**संसेवितुं सुरा भूमाववतीर्णा इति श्रुतम् ।।**

**ते तु तच्छिष्यतामाप्य तन्मतं तु व्यघोषयन् ।**
**येषु मुख्यौ विष्णुतीर्थपद्मनाभाख्ययोगिनौ ।।**

**अत्यक्तदेहस्तत्राद्यस्तन्मतं वर्तयिष्यति ।**
**तत्पूर्वमस्य वंशे तु ऋजुस्थो हि सुरेश्वरः ।**

---

(1). These outstanding Authorities have been quoted and published by उडुपि अष्टमठाधिपतिगळु nearly two-hundred years ago.

वादिराजो यतिर्भूत्वा चैतद्विस्तारयिष्यति ।।' इति ।

ಭಾವಾರ್ಥ - ಮಾತರಿಶ್ವರೂ ಜ್ಞಾನಿಶ್ರೇಷ್ಠರೂ ಆದ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು ವೇದಗಳಲ್ಲಿ ಪ್ರತಿಪಾದಿಸಲ್ಪಡುತ್ತಾರೆ. ಅವರು ಜಗತ್ಪತಿಯಾದ (ಜೀವರ ಹೃದಯ- ಗುಹೆಗಳಲ್ಲಿರುವ) ಶ್ರೀವಿಷ್ಣುವನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತಾರೆ. ಹನುಮಭೀಮಮಧ್ವರೆಂದು ಶ್ರೀವಾಯುದೇವರ ಮೂರು ಅವತಾರಗಳು. ಅಂತಹ ಶ್ರೀಮಧ್ವದೇವರನ್ನು ಸಂಸೇವಿಸಲು (ಪರಿವಾರತ್ವೇನ ಸೇವಿಸಲು) ದೇವತೆಗಳು ಅವತರಿಸಿದರೆಂದು ಪ್ರಸಿದ್ಧವಾಗಿದೆ. ಅವರಾದರೋ ಶ್ರೀಮಧ್ವಶಿಷ್ಯರಾಗಿ ಶ್ರೀಮಧ್ವಮತವನ್ನು ಪ್ರಸಾರ ಮಾಡಿದರು. ಅವರಲ್ಲಿ ಮುಖ್ಯರು ಶ್ರೀವಿಷ್ಣುತೀರ್ಥರು ಮತ್ತು ಶ್ರೀಪದ್ಮನಾಭ- ತೀರ್ಥರು. ಇವರಲ್ಲಿ ಮೊದಲಿಗರಾದ ಶ್ರೀವಿಷ್ಣುತೀರ್ಥರು ಅತ್ಯಕ್ತದೇಹವುಳ್ಳವರಾಗಿ (ಶರೀರವನ್ನು ತ್ಯಾಗಮಾಡದೆ) ಶ್ರೀಮಧ್ವಮತವನ್ನು ಪುನರುದ್ಧರಿಸುತ್ತಾರೆ. ಅಂತಹ ಋಜುಪುಂಗವರಾದ ಶ್ರೀವಿಷ್ಣುತೀರ್ಥರ ಸದ್ವಂಶದಲ್ಲಿ ಋಜುಗಣಸ್ಥರೂ, ಸುರೇಶ್ವರರೂ ಆದ ಶ್ರೀವಾದಿರಾಜತೀರ್ಥರು ಅವತರಿಸಿ ಶ್ರೀಮಧ್ವಮತವನ್ನು ವಿಸ್ತಾರಗೊಳಿಸುತ್ತಾರೆ.'' ಎಂದು ಪಾದ್ಮಪುರಾಣದಲ್ಲಿ ಶ್ರೀವೇದವ್ಯಾಸದೇವರ ಅಪ್ಪಣೆ ಇದೆ.

**तथा हि स्कान्दपुराणम् –**

'विशुद्धपाजकक्षेत्रे ह्यनन्तेश्वरपूजकः ।
भविष्यति विशुद्धात्मा ब्राह्मणो व्रतनिष्ठितः ।।

वेदवत्याख्यभार्यायां तस्माज्जातो जगत्पतिः ।
यदुपुत्र्यां यथा भीमः सञ्जातः स्पर्शमात्रतः ।।

अज्ञदृष्ट्या शरीरं तु जातवद् दृश्यते बहिः ।
द्विषोडशीलक्षणकं शरीरं च तदेव हि ।।

लातव्यस्य ऋजोस्तस्य क्लृप्तं प्रतियुगेयुगे ।
वायोः प्रवेशपर्यन्तमत्र स्थित्वाऽथ गच्छति ।।

इदं शरीरं सम्प्राप्य लातव्यो वायुतामियात् ।
ततः कालान्तरे सोऽपि वादिराजो भविष्यति ।।

रजोऽधिकेन सत्त्वेन निर्मितं तच्छरीरकम् ।
शुक्लादिभिः प्रजातं तु कदाऽपि न भविष्यति ।।' इति ।

ಭಾವಾರ್ಥ - ಸ್ಕಾಂದಪುರಾಣದಲ್ಲಿ ಶ್ರೀವೇದವ್ಯಾಸದೇವರು ಶ್ರೀವಾದಿರಾಜರ ಅವತಾರದ ಬಗ್ಗೆ ಹೀಗೆ ಅಪ್ಪಣೆ ಕೊಟ್ಟಿದ್ದಾರೆ -

''ಪರಮಪವಿತ್ರವಾದ ಪಾಜಕಕ್ಷೇತ್ರದಲ್ಲಿ ಅನಂತೇಶ್ವರಪೂಜಕನಾಗಿ ಒಬ್ಬ ಪರಮಪೂತಾಂತರಂಗನೂ, ವ್ರತನಿಷ್ಠನೂ ಆದ ಬ್ರಾಹ್ಮಣೋತ್ತಮನೊಬ್ಬನು ಹುಟ್ಟುತ್ತಾನೆ. ಅಂತಹ ಭೂಸುರನ ಪತ್ನಿಯಾದ ವೇದವತಿದೇವಿಯ ಗರ್ಭದಲ್ಲಿ ಶ್ರೀಮಧ್ವದೇವರು ಹೇಗೆ ಯದುಪುತ್ರಿಯಲ್ಲಿ ಸ್ಪರ್ಶಮಾತ್ರದಿಂದ ಭೀಮಸೇನದೇವರು ಪ್ರಾದುರ್ಭೂತರಾದರೋ ಹಾಗೆ ಪ್ರಾದುರ್ಭೂತನಾಗುವರು. ಗರ್ಭವಾಸದುಃಖರಹಿತರು ಶ್ರೀಮುಖ್ಯಪ್ರಾಣ

ದೇವರು. ಅಜ್ಞದೃಷ್ಟಿಯಿಂದ (ಸಾಮಾನ್ಯರಿಗೆ) ಗರ್ಭದಿಂದ ಹುಟ್ಟಿದಂತೆ ಕಾಣುವರು. ಮೂವತ್ತೆರಡು ಸಲ್ಲಕ್ಷಣಗಳುಳ್ಳ ದೇಹವನ್ನು ಹೊಂದಿದವರು. ಲಾತವ್ಯನಾಮಕ ಋಜುದೇವತೆಗಳ ಅವತಾರವೂ ಸಮರ್ಥವಾಗಿ ಪ್ರತಿಯುಗದಲ್ಲಿ ವಾಯುದೇವರಂತೆ ಆಗುವುದು. ವಾಯುಪ್ರವೇಶಾತ್ಪೂರ್ವದವರೆಗೆ ಈ ಶರೀರದಲ್ಲಿದ್ದು ಹೋಗುವರು. ಲಾತವ್ಯಾಚಾರ್ಯರಾದರೋ ಮೂವತ್ತೆರಡು ಲಕ್ಷಣವುಳ್ಳ ದಿವ್ಯದೇಹವುಳ್ಳವರಾಗಿ ಸಾಧನೆ ಮಾಡಿ ವಾಯುಪದವಿಯನ್ನು ಹೊಂದುವರು. ಕಾಲಾಂತರದಲ್ಲಿ ಅವರು ವಾದಿರಾಜತೀರ್ಥನಾಮಕರಾಗಿ ಅವತರಿಸುವರು. ಅವರ ದೇಹವು ಸುತರಾಂ ಶುಕ್ಲಶೋಣಿತರಹಿತವಾಗಿದ್ದು ರಜೋಧಿಕವಾದ ಸತ್ತ್ವಗುಣದಿಂದ ನಿರ್ಮಿತವಾದುದು''.

**तथा हि वामनपुराणम् –**

**'अपरोक्षविशेषेण संयुता ब्रह्मपूर्वकाः ।**
**कल्क्यन्ता ऋजवः प्रोक्ता प्रारब्धफलभोगिनः ।।**

**ब्रह्मणो नावतारोऽस्ति शतमध्ये पराज्ञया ।**
**वायुमारभ्य कल्क्यन्ता जनिमन्तोऽत्र भारते ।।**

**हनुमद्भीममध्वाख्यरूपो वायुर्भविष्यति ।**
**स्वयंवरसमुद्योगे रुग्मिणीपत्रमादरात् ।।**

**कृष्णायादाद् गृहीत्वा यो ह्यन्तः पुरगतो द्विजः ।**
**सर्वादृष्टस्तदैवायम् ऋजुर्लातव्यनामकः ।।**

**वायुस्थानसमारोहयोग्योऽयं यतिरूपवान् ।**
**आकल्पं ब्रह्मणः कृष्णप्रसादस्यैकभाजनम् ।।**

**कृष्णार्चको यतिर्भूत्वा वादिराजो वदिष्यति ।**
**श्रीरुग्मिणीशविजयं कलौ कृष्णप्रसादभाक् ।।' इति ।**

ಭಾವಾರ್ಥ - ''ಅಪರೋಕ್ಷವಿಶೇಷದಿಂದ ಯುಕ್ತರಾದ ಬ್ರಹ್ಮಮೊದಲಾದ ಕಲ್ಕಿಪರ್ಯಂತರಾದ ಋಜುಗಳು ಪ್ರಾರಬ್ಧಕರ್ಮಭೋಗಿಗಳಾಗಿರುತ್ತಾರೆ. ಈ ನೂರುಜನ ಋಜುಗಳಲ್ಲಿ ಬ್ರಹ್ಮದೇವರೊಬ್ಬರಿಗೆ ಮಾತ್ರ ಶ್ರೀಹರಿಯ ಆಜ್ಞೆಯಿಂದ ಅವತಾರವಿಲ್ಲ. ಮಿಕ್ಕ ವಾಯುದೇವರಿಂದಾರಂಭಿಸಿ ಕಲ್ಕಿಪರ್ಯಂತರಾದ ಋಜುಗಳು ಸಾಧನಾಭೂಮಿಯಾದ ಭರತಖಂಡದಲ್ಲಿ ಅವತರಿಸುತ್ತಾರೆ. ಶ್ರೀಮುಖ್ಯಪ್ರಾಣ- ರಾದರೋ ಹನುಮದ್ಭೀಮಮಧ್ವಾಖ್ಯ ಮೂರು ಅವತಾರರೂಪವುಳ್ಳವರು. ಶ್ರೀಲಾತವ್ಯನಾಮಕರು ಶ್ರೀವಾದಿರಾಜನಾಮಕ ದ್ವಿಜರಾಗಿ ಅಂತಃಪುರಗತರಾಗಿ, ಶ್ರೀರುಕ್ಮಿಣೀದೇವಿಯ ಸ್ವಯಂವರಕಾಲದಲ್ಲಿ ಅವರಿಂದ ಪತ್ರವನ್ನು ತೆಗೆದುಕೊಂಡು ಶ್ರೀಕೃಷ್ಣದೇವರಿಗೆ ಅರ್ಪಿಸಿ ಕೃತಕೃತ್ಯರಾದರು. ಈ ಮಹಾಕಾರ್ಯವನ್ನು ಸಕಲರ ಕಣ್ಣಿಗೆ ಕಾಣದೆ ಮಾಡಿದರು. ವಾಯುದೇವರ ಪದವಿಯನ್ನು ಹೊಂದುವ ಅವರು ಬ್ರಹ್ಮಕಲ್ಪದವರೆಗೆ ಕೃಷ್ಣಪ್ರಸಾದೈಕಭಾಜನರಾಗಿ, ಶ್ರೀಕೃಷ್ಣನನ್ನು ಪೂಜೆಮಾಡುವವರಾಗಿ ವಾದಿರಾಜನಾಮಕ ಯತಿಗಳಾಗಿ ಅವತರಿಸುವರು. ಕಲಿಯುಗದಲ್ಲಿ ಶ್ರೀರುಕ್ಮಿಣೀಶ-ವಿಜಯವೆಂಬ ಕಾವ್ಯವನ್ನು ನಿರ್ಮಿಸಿ ಶ್ರೀಕೃಷ್ಣಾನುಗ್ರಹಕ್ಕೆ ಪಾತ್ರರಾಗಿ ಸಕಲಭಕ್ತರನ್ನು ಸಮುದ್ಧರಿಸುವರು'' ಎಂದು ವಾದಿರಾಜರ ಅವತಾರ ಕಾರ್ಯಗಳ ಬಗ್ಗೆ ಶ್ರೀವೇದವ್ಯಾಸದೇವರು ವಾಮನಪುರಾಣದಲ್ಲಿ ಅಪ್ಪಣೆ ಕೊಟ್ಟಿರುವರು.

**तथा हि सत्तत्त्ववचनम् –**

**'मन्युरिन्द्रो मनुः सोमो भाविमध्वः सुरेश्वरः ।**
**लातव्यो वादिराजोऽसौ कुविदङ्गश्रुतौ श्रुतः ।।' इति ।**

ಭಾವಾರ್ಥ - ಸತ್ತತ್ವವೆಂಬ ಗ್ರಂಥದಲ್ಲಿ ''ಭಾವಿಮಧ್ವರಾದ, ಸುರೇಶ್ವರರಾದ ಲಾತವ್ಯಾತ್ಮಕರಾದ ಈ ವಾದಿರಾಜತೀರ್ಥರು ಮನ್ಯುನಾಮಕರು, ರೋಚನನಾಮಕ ಇಂದ್ರಪದವಿಯನ್ನು ಹೊಂದುವವರು, ಸೋಮಶಬ್ದವಾಚ್ಯರಾಗಿ ಪವಮಾನಸೂಕ್ತ ಪ್ರತಿಪಾದ್ಯರು, ಕುವಿದಂಗಶ್ರುತಿಯಿಂದ ಪ್ರತಿಪಾದ್ಯರು'' ಎಂದು ಸ್ಫು ಟವಾಗಿ ಪ್ರಕಟ- ಮಾಡಲ್ಪಟ್ಟಿದೆ.

**तथा हि ऋक् (७/९१/१) –**

**'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।**
**ते वायवे मनवे बाधितायाऽवासयन्नुषसं सूर्येण ।।' इति ।**

ಋಗ್ವೇದದಲ್ಲಿ ''ಕುವಿದಂಗ ನಮಸಾ'' ಎಂಬ ಮಂತ್ರದಲ್ಲಿ ಸರ್ವದೇವ ಉಪಾಸ್ಯತ್ವವು ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಅಂಗ=ಓ ಪುರುಷ! ಯಾವ ದೇವಾ=ದೇವತೆಗಳು ಶ್ರುತಿಪ್ರತಿಪಾದ್ಯರಾದ ಶ್ರೀವಾದಿರಾಜರಿಗೆ ನಮಸ್ಕಾರಾದಿಗಳನ್ನು ಮಾಡುವುದರಿಂದ ಹಿಂದೆ ಜ್ಞಾನಾದಿಗಳಿಂದ ಪೂರ್ಣರಾಗಿ ಅಜ್ಞಾನಾದಿದೋಷರಹಿತರಾಗಿ ಆಗಿದ್ದರೋ; ಅವರು ಯಾವುದೋ ಒಂದು ರಹಸ್ಯಸ್ಥಾನದಲ್ಲಿ ಸೂರ್ಯನಿಂದ ಸಹಿತರಾಗಿ, ಸಂಸಾರಪೀಡೆ- ಉಳ್ಳವರಿಂದ ರಕ್ಷಣೆಗಾಗಿ ಆಶ್ರಿತರಾದ, ಜ್ಞಾನಿಗಳಾದ ಶ್ರೀವಾದಿರಾಜರಿಗೆ ತಮ್ಮ ಬುದ್ಧಿಯನ್ನು ಅರ್ಪಿಸಿದರು. ಅವರ ಬಗ್ಗೆ ಧ್ಯಾನಮಾಡಿದರೆಂದು ಅಭಿಪ್ರಾಯ. (ಈ ಶ್ರುತಿಯು ವಾಯುದೇವರ ಪ್ರತಿಪಾದ್ಯವೂ ಆಗಿದೆ).

**तथा हि प्रकाशसंहितावचनम् –**

**'यथा देवौ ब्रह्मवायू अन्नप्राणाभिमानिनौ ।**
**लातव्यस्तु तथा नित्यं वर्तते जीवसाधकः ।।' इति ।**

ಭಾವಾರ್ಥ - ''ದೇವತೋತ್ತಮರಾದ ಬ್ರಹ್ಮವಾಯುಗಳು ಹೇಗೆ ಅನ್ನ ಮತ್ತು ಪ್ರಾಣಾಭಿಮಾನಿಗಳಾಗಿದ್ದಾರೋ ಹಾಗೆಯೇ ಲಾತವ್ಯರಾದ ಶ್ರೀವಾದಿರಾಜರೂ ನಿತ್ಯವೂ ಅಂದರೆ ಸದಾಕಾಲದಲ್ಲೂ ಜೀವಸಾಧಕರಾಗಿ ಸಕಲರನ್ನೂ ಸದಾ ಸಮನುಗ್ರಹಿಸುವವರು'' ಎಂದು ಪ್ರಕಾಶಸಂಹಿತಾ ಎಂಬ ಗ್ರಂಥದಲ್ಲಿ ಇದೆ.

तथा हि बृहत्संहितावचनम् -

"पञ्चास्यवाक्यो यः "सिंहं नसन्त"श्रुतिविश्रुतः ।

स एव स्वाप्नकृत् स्वप्नो वादिराजो महामतिः ॥" इति ।

ಈ ಬೃಹತ್ಸಂಹಿತಾವಚನವು ಶ್ರೀವೃಂದಾವನಾಚಾರ್ಯರಿಂದಲೂ ಹಾಗೂ ಶ್ರೀಕಾಶೀರಾಘವೇಂದ್ರಾಚಾರ್ಯರ ಪೂರ್ವಜರಿಂದಲೂ ಸಮುದ್ಧೃತವಾಗಿದೆ ಎಂದು ಶಿಷ್ಟಶ್ರೇಷ್ಠರಾದ ಶ್ರೀ1008 ಶ್ರೀವಿಶ್ವೋತ್ತಮತೀರ್ಥರ ಪರಮಾಜ್ಞೆ.

ಅರ್ಥ – ''ಸಿಂಹಂ ನಸಂತ ಮಧ್ವೋ ಅಯಾಸಮ್' (ಋ. 9/79/3) ಎಂಬ ಸಿಂಹಶ್ರುತಿಯಲ್ಲಿ ಪ್ರಸಿದ್ಧರಾದವರು ಭಾವಿಮಧ್ವರು, ಅವರೇ ಸ್ವಾಪ್ನಕೃತ್ ಅಂದರೆ ಸ್ವಾಪ್ನವೃಂದಾವನಾಖ್ಯಾನದ ರಚಯಿತೃಗಳು, ಸ್ವಪ್ನಶಬ್ದವಾಚ್ಯರು ಮಹಾಮತಿಗಳೂ ಆದ ಶ್ರೀವಾದಿರಾಜರು''.

## ।। [१]श्रीवादिराजतीर्थानामृजुत्वे श्रीऋक्संहितावचनानि ।।

'सहोरूपस्य देवस्य लातव्यस्य बलात्मकम् ।
मूलरूपं ज्ञानततं जगद्धरणगं यतः ।।१।।

जातं तेनात्मना सर्वचेष्टकेन महात्मना ।
रूपत्रयावताराय निहितं हरिणा स्वयम् ।।२।।

अण्डाद् बहिः स्थितं मूलं सत्यलोकस्थितं महत् ।
गृहीत्वा रुग्मिणीपत्रं कृष्णान्तिकमुपागतम् ।।३।।

वादिराजाभिधं चेति मूलभेदविवर्जितम् ।
तत्र प्रथमकं रूपं विश्वरूपान्तिकस्थितम् ।।४।।

साधकं विष्णुकार्याणां शिष्यसन्मतिदायकम् ।
अमृतस्राविणीर्वाचः पञ्चरात्रादिनामिकाः ।।५।।

ऋतरूपस्य विष्णोर्हि औत्कर्षप्रतिपादकाः ।
अनयन्त स्वशिष्येषु द्वितीयं पृक्षनामकम् ।।६।।

मागधादिमहासेनादुर्मानक्षयकारकम् ।
कृष्णदत्तविचित्रान्नभोक्तृतत्प्रियमुत्तमम् ।।७।।

ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।
प्रोक्ताः सप्तशिवास्ताश्च मातरस्तत्र संस्थितम् ।।८।।

तद्विचारपरं प्रोक्तं ज्ञानदोग्धृ तृतीयकम् ।
लातव्यस्य ऋजोस्तस्य दशप्रमतिनामकम् ।।९।।

वादिनां ज्ञानदानैकशीलानां राजनं यतः ।
वेति ज्ञानं समुद्दिष्टं देति दानमुदाहृतम् ।।१०।।

प्रोक्तः शील इकारेण राजनं राजशब्दितम् ।
वादिराजाभिधं रूपं दशप्रमतिशब्दितम् ।।११।।

पूर्णज्ञानं विना प्रोक्तराजनं तु कथं भवेत् ।

---

(1). . These RkSamhitā stanzas were quoted and published by उडुपि अष्टमठाधिपतिगळु nearly two-hundred years ago.

स्पष्टमुक्त्वा, भजकवर्गे मुखत्वात् तेन तदीयैश्च विशेषेण जन्मान्तरे भजनीयत्वम्; तैः उत्सवादेः स्वशक्त्यानुसारेण कर्तव्यत्वं सूचितम् । **अत्राप्यध्यायात्मकमेकमेव प्रकरणं** ज्ञातव्यम् ।

**तृतीयाध्याये** तु (१) 'मत्कृतौ' इत्यारभ्य 'पुत्रक' इत्यन्तमेकं प्रकरणम् । (२) 'विप्रार्थमेव' इत्यारभ्य 'अलकसंस्थमौलिना' इत्यन्तमेकं प्रकरणम् । एवं **द्वे प्रकरणे** ।

**चतुर्थे** (१) 'हे पुत्र' इत्यारभ्य 'तद्वृन्दश्च समाययुः' इत्यन्तमेकं प्रकरणम् । (२) 'इदं वृन्दावनाख्यानम्' इत्यारभ्य 'ब्राह्मणाय तु मानवाः' इत्यन्तमेकं प्रकरणम् । (३) 'तन्मानोपि' इत्यारभ्य अध्यायान्तमेकं प्रकरणम् । एवं **त्रीणि** प्रकरणानि ।

**पञ्चमे** तु (१) 'लक्ष्मीपते'त्यारभ्यः 'कुतः शरः प्रयोक्तव्यो सुरस्यायोग्यबुद्धिनः' इत्यन्तं लक्ष्मीपतिनामकव्यासभक्तश्रोतृप्रकरणम् । (२) 'तस्मात्' इत्यारभ्य 'कोणपं भजते नु किम्' इत्यन्तं वृन्दावनाचार्यश्रोतृप्रकरणम् । (३) 'शिलास्थाम्' इति पद्यं व्यासभक्तश्रोतृप्रकरणम् । (४) 'देवैरप्यर्थिताम्' इति पद्ये 'सार्थीकुरुत' इति बहुवचनबलाद् बहुश्रोतृप्रकरणम् । (५) 'चरमाज्ञा' इत्यारभ्य 'तद्दासत्वमाप्तवान्' इत्यन्तं व्यासभक्तप्रकरणम् । (६) 'पूर्वं मयोक्ते'त्यारभ्य 'अन्वारुहमहो स्वर्गं सह देवैर्वसाम्यहम्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (७) 'इदमाश्चर्यम्' इत्येतत् बहुभक्तश्रोतृप्रकरणम् । (८) 'कर्तुं चाकर्तुम्' इत्यारभ्य 'परस्पर्श गात्रं नेत्रान्तैः' इत्यन्तं वृन्दावनाचार्यश्रोतृप्रकरणम् । (९) 'कात्र कीर्तिः कृपापात्रतया हीनस्य पुत्रक' इत्यारभ्य 'सद्वृन्दानां प्रयच्छामि चेष्टावृन्दानि सर्वशः' इत्यन्तं शेषश्रोतृप्रकरणम् । एवं **नव** प्रकरणानि ।

**षष्ठे च** (१) 'तथैव नन्दने' इत्यारभ्य 'अतिसौभाग्यवन्तश्च सन्तु भक्तियुता हरौ' इत्यन्तं शेषश्रोतृप्रकरणम् । (२) 'मम वृन्दावने' इत्यारभ्य 'सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते' इत्यन्तं विप्रश्रोतृप्रकरणम् । (३) 'शस्तं शस्तं कुरु क्षिप्रम्' इत्यारभ्य 'कात्र हानिः कृता चास्य परैर्हास्ये कृतेऽप्युते'त्यन्तं वेदनिधिश्रोतृप्रकरणम् । (४) 'ब्राह्मणाधम' इति सार्धं पद्यं विप्रश्रोतृप्रकरणम् । (५) 'मत्सन्निधाने'त्यारभ्य 'दानवा अपि तच्छ्रुत्वा स्तुवन्तो मां दिवं ययुः' इत्यन्तं वेदनिधिश्रोतृप्रकरणम् । एवं **पञ्च** प्रकरणानि ।

**सप्तमे च** (१) 'एवं वै देवतालोके'त्यारभ्य 'मन्दहासान्वितो नित्यमिन्दिरेशोऽपि मां तदा' इत्यन्तं वेदनिधिश्रोतृप्रकरणम् । (२) 'सुषिरोक्तिरित्युक्तेः' इत्यारभ्य 'वशेकरं सर्वमहेश्वरं स्मर' इत्यन्तं विप्रश्रोतृप्रकरणम् । (३) 'अनन्तासनम्' इत्यारभ्य 'उपभोक्ष्ये ह्युपेक्षा तु उपभोक्तृषु नास्ति मे' इत्यन्तं वेदनिधिश्रोतृप्रकरणम् । (४) 'मम भोजनसन्तोषम्' इत्यारभ्य

'मदनादरतो यद्वत्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (५) 'द्विजं तोषय' इत्यारभ्य 'मत्प्रियं विप्र-साक्षिकम्' इत्यन्तं वेदनिधिश्रोतृप्रकरणम् । (६) 'हे सीतापतिभक्तेश' इत्यारभ्य पद्यद्वयं सीता-पतिश्रोतृप्रकरणम् । (७) 'हे पुत्र' इत्यारभ्य 'साङ्गं कुर्यां तपस्त्वहो' इत्यन्तं वेदनिधिश्रोतृ-प्रकरणम् । एवं **सप्त** प्रकरणानि ।

**अष्टमे च** (१) 'तुङ्गभद्रानदीतीरे' इत्यारभ्य 'सुत सत्यं मयोदितम्' इत्यन्तं विप्रश्रोतृ-प्रकरणम् । (२) 'मयोक्तश्लोकपूगेषु' इत्यारभ्य 'वेदोधरां श्रीधराज्ञाधारिणी मे सुवाक् धरा' इत्यन्तं लक्ष्मीपतिनामकश्रोतृप्रकरणम् । (३) 'रथस्योपरि' इत्यारभ्य 'मखैरपि दुरापन्नं खगमुख्यैश्च दैवतैः' इत्यन्तं विप्रश्रोतृप्रकरणम् । एवं **त्रीणि** प्रकरणानि ।

**नवमे** च (१) 'हनूमान् बहुनामायम्' इत्यारभ्य 'प्रेष्य सत्यं मया सर्वं विश्वासं कुरु सर्वदा' इत्यन्तं विप्रश्रोतृप्रकरणम् । (२) 'इत्थं ब्राह्मणमुख्येन' इत्यारभ्य 'करोमि ब्राह्मण-मुखादाख्यानं शोकनाशनम्' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (३) 'अहमाकाशमार्गेण' इत्या-रभ्य 'कीदृशोऽस्मद्गुणो लोके त्वादृशोऽपि न विद्यते' इत्यन्तं विप्रश्रोतृप्रकरणम् । एवं **त्रीणि** प्रकरणानि ।

दशमे च (१) 'गणैः स नारायणभूतनाथः' इत्यारभ्य 'वायुप्रवेशनोपायं तवायुर्वृद्धये कुर्मः' इत्यन्तं विप्रश्रोतृप्रकरणम् । (२) 'कूर्मावतारेण' इत्यारभ्य 'शतानन्दस्य लोकेऽपि सदानन्द-विवर्धकः' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (३) 'अहमानन्दमुनिना' इत्यारभ्य 'मया सहैवाशु च हंसवाहं यो हंसरूपी न्यरुणत्पयोब्धौ' इत्यन्तं विप्रश्रोतृप्रकरणम् । (४) 'शाल्मलीद्वीपमाश्रित्य' इत्यारभ्य 'अहं वृन्दावने स्थित्वा सर्वाभीष्टं ददामि ते' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (५) 'इदं ममात्मजे'त्यारभ्य 'कन्दाशनायनमिदं प्रणमेत भक्त्या' इत्यन्तं विप्रश्रोतृप्रकरणम् । (६) 'मद्दत्तपुत्र'मारभ्य 'तद्वरं प्राप्नुवन्तु ते' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (७) 'नैवेद्यं मृष्टमन्नं मे' इत्यारभ्य 'यतस्तद्देहगोऽह्यहम्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (८) 'वेदवेद्य जयस्व त्वम्' इत्यारभ्य 'स्वप्ने च मम वाग्भूतिविलासयाश्रयं परम्' इत्यन्तं वेदवेद्यमुनिश्रोतृप्रकरणम् । (९) 'एतदन्यत्र नैवाहम्' इत्यारभ्य 'नरके पुण्यसङ्क्षयः' इत्यन्तं छन्दोभङ्गादिशङ्काकलङ्कित-दुष्टपुरुषविशेषश्रोतृप्रकरणम् । (१०) 'तस्मात् घोरे कलौ काले ह्यलमेतावता द्विज' इत्येतत् विप्रश्रोतृप्रकरणम् । (११) 'वेदवेद्य' इत्यारभ्य 'न मृषेति विचिन्तय' इत्यन्तं लक्ष्मीपति-श्रोतृप्रकरणम् । (१२) 'सकृदेवोपदेशेन' इत्यारभ्य 'शिशोः क्षीरं भविष्यति' इत्यन्तं विप्र-

श्रोतृप्रकरणम् । (१३) 'शेष घोषय' इत्यारभ्य 'कुर्विदं तु तवाज्ञया' इत्यन्तं शेषश्रोतृप्रकरणम्; (१४) 'ब्राह्मण त्वं तत्र गत्वा' इत्यारभ्य 'कुरु त्वं सार्थमेव' इत्यन्तं विप्रश्रोतृप्रकरणम् । (१५) 'शेषाशेषं च' इत्यारभ्य 'ख्यातिं चात्र करिष्यते' इत्यन्तं शेषश्रोतृप्रकरणम् । (१६) 'विप्र त्वमेव' इति सार्धं पद्यं विप्रश्रोतृप्रकरणम् । (१७) 'अस्यातिशुद्धबुद्धेः' इत्यारभ्य अध्यायान्तं लक्ष्मीपतिश्रोतृप्रकरणम् । इति **सप्तदशप्रकरणानि** ।

**एकादशे च** (१) 'अलौकिकायाम्' इत्यारभ्य 'सा चापि मम प्रियोऽभूत्' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (२) 'मद्भागवतमुख्यांस्तु त्रीन्' इत्यारभ्य 'नागशयनः सुबुद्धिमान्' इत्यन्तं पुष्यनक्षत्रसञ्जातप्राप्तयतिभावविप्रपरमगुरुश्रोतृप्रकरणम् । (३) 'वेदवेद्य' इत्यारभ्य 'नैवेद्यं नैव गृह्णामि तावत्पर्यन्तमेव ते' इत्यन्तं विप्रश्रोतृप्रकरणम् । (४) 'वृन्दाने मदनमर्दनरुद्रहृद्यम्' इत्यारभ्य 'सर्वेष्टानि भविष्यन्ति हयग्रीवस्य चाज्ञया' इत्यन्तं शेषश्रोतृप्रकरणम् । (५) 'यो मनांसि' इत्यारभ्य 'सोऽपि मत्पादमापन्नः शापभीतो न भक्तिभाग्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (६) 'ब्राह्मणं मानिनम्' इत्यारभ्य 'भुक्तेर्नास्ति ततोऽधिकम्' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (७) 'मद्वाचा नन्दन त्वम्' इत्यारभ्य 'नागशयनः सुबुद्धिमान्' इत्यन्तं पुष्यनक्षत्रसञ्जातश्रोतृ-प्रकरणम् । (८) 'मद्वाक्यं मानसंसिद्धम्' इत्यारभ्य 'प्रतिबन्दी दुरुत्तरा' इत्यन्तं दुष्टपुरुष-विशेषश्रोतृप्रकरणम् । (९) 'जनाः सुपापिनः सर्वे' इत्यारभ्य 'गुरुत्वात् कुरु कारुण्यं कुरु विप्रस्य' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (१०) 'अज्ञानहारिणम्' इत्यारभ्य 'कृतसमस्त-शुभसत्कृते हरेः' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (११) 'द्विजे'त्यारभ्य 'मत्कृतेरर्थबुद्धिभिः' इत्यन्तम् अनेकभक्तश्रोतृप्रकरणम् । (१२) 'सुत सुसूक्ष्ममतिमन्' इत्यारभ्य 'अग्रजं व्यग्र-मानिनम्' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (१३) 'अप्पण्णकृष्णभट्टश्च' इत्यारभ्य 'चिरञ्जीव सुखीभव' इत्यन्तं विप्रश्रोतृप्रकरणम् । (१४) 'द्विजसभाजनसज्जनप्रिय' इत्यारभ्य 'क्लीबशब्दं प्रयुक्तवान्' इत्यन्तं वेदनिधिश्रोतृप्रकरणम् । एवं **चतुर्दशप्रकरणानि** ।

**द्वादशे च** (१) 'मत्प्रसादाच्च भूपेन' इत्यारभ्य 'चिन्तय त्वं सुखीभव' इत्यन्तं विप्रश्रोतृ-प्रकरणम् । (२) 'मद्दत्ताचार्यनाम्ना' इत्यारभ्य 'मत्कृतिं वक्ष्यतु त्विमाम्' इत्यन्तं बहुभक्तश्रोतृ-प्रकरणम् । (३) 'लक्ष्मीपते सूक्ष्ममते' इत्यारभ्य 'तत्सङ्गात् श्रुणुयादिमाम्' इत्यन्तं लक्ष्मी-पतिश्रोतृप्रकरणम् । (४) 'को वा त्वयि' इत्येकं पद्यं विप्रश्रोतृप्रकरणम् । (५) 'यश्चाक्षेपं करोत्यत्र' इत्यारभ्य 'निर्विघ्नं कुरु तत्र च' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (६) 'मत्कार्य-मपि भूदेव' इत्यारभ्य 'करमञ्जसा' इत्यन्तं विप्रश्रोतृप्रकरणम् । (७) 'विप्रस्य पुत्रलाभोऽम्'

इत्यारभ्य 'कुजनं त्यज दुर्बुद्धिं भुजङ्गं तु जनो यथा' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (८)'मया यदुच्येत तद्वै' इत्यारभ्य 'त्वङ्गीकुर्वन्तु मत्कृतिम्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (९) 'हे पुत्र विप्रवर्योऽयम्' इत्यारभ्य 'मानयस्व सुवाससा' इत्यन्तं शेषश्रोतृप्रकरणम् । (१०) 'शश्वद्वि-स्मृतिशीलस्य' इत्यारभ्य 'समिद्धो बुद्धिगां कुरु' इत्यन्तं विप्रश्रोतृप्रकरणम् । (११) 'मा त्यजस्व ममावासम्' इत्यारभ्य 'देहं तु मा त्यज' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (१२)'शब्दजालानि' इत्यारभ्य 'स्मर्तव्या नैव ते मम' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (१३)'विप्रत्वं लज्जया' इत्यारभ्य 'मत्पुत्रमप्यभिमतं वद भिन्नरूपम्' इत्यन्तं लक्ष्मीपतिश्रोतृ-प्रकरणम् । (१४) 'तव नन्दन कर्णस्य' इत्यारभ्य 'सत्र कर्म सदा कुरु' इत्यन्तं विप्रश्रोतृ-प्रकरणम् । (१५) 'अहं विमानमारुह्य' इत्यारभ्य 'तस्मात् तव न भीति र्वा मम वा नास्ति' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (१६) 'पार्थिवात्' इत्यारभ्य अध्यायान्तं विप्रश्रोतृप्रकर-णम् । एवं **षोडश**प्रकरणानि ।

**त्रयोदशे** तु (१) 'वादिराजाख्य' इत्यारभ्य 'अङ्गीकृता मत्कृतिरस्तु सर्वदा' इत्यन्तं विप्रश्रोतृप्रकरणम् । (२) 'इति श्रीत्यादि वाक्यानि' इत्यारभ्य 'न पश्यामि सुमानव' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (३) 'संसारक्लेशतस्तोक' इत्यारभ्य 'वक्ष्ये शिक्षन् क्षणात्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (४) 'ब्राह्मणोऽयं न गृह्णाति' इत्यारभ्य 'तावायुर्वृद्धिमेष्यति' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (५) 'हे दासाः सन्ति लोकेऽस्मिन्' इत्यारभ्य 'निःसङ्गा यान्तु मद्गतिम्' इत्यन्तं बहुभक्तश्रोतृप्रकरणम् । (६) 'हे ब्राह्मण त्वम्' इत्यारभ्य 'पालकोऽहं सदा तव' इत्यन्तं विप्रश्रोतृप्रकरणम् । (७) 'वृद्धे बुद्धिमतां बुद्धे' इत्यारभ्य 'तवायुर्वृद्धिमेष्यति' इत्यन्तं वादिराजाख्यश्रोतृप्रकरणम् । (८) 'विप्र ते मत्सुतेनैव' इत्यारभ्य 'मदन्तर्यामितां स्मर' इत्यन्तं विप्रश्रोतृप्रकरणम् । (९) 'मन्नामधर' इत्यारभ्य 'तनौ तथा' इत्यन्तं वादिराजाख्य-श्रोतृप्रकरणम् । (१०) 'ममोपदेशकर्णस्य' इत्यारभ्य 'मत्कृतौ पक्षपातिनाम्' इत्यन्तं सीता-पतिश्रोतृप्रकरणम् । (११) 'स्वर्णेन शून्ये'त्यारभ्य अध्यायान्तं विप्रश्रोतृप्रकरणम् । **इत्येकादश**-प्रकरणानि ।

**चतुर्दशे च** (१) 'सीतापते शुभकृते' इत्यारभ्य 'लक्षणं मम सर्वं तु शिक्षन् सर्वान् विचक्षण' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (२) 'हे शेष शोषरहित!' इत्यारभ्य 'तत्कृतं तु ममैव हि' इत्यन्तं शेषश्रोतृप्रकरणम् । (३) 'विट्ठल भ्रष्टसन्मार्ग' इत्यारभ्य पदद्वयं विठ्ठलश्रोतृ-प्रकरणम् । (४) 'एवमेव हि ह्यविश्वासम्' इत्यारभ्य 'मच्छापात्कुत्सिता नराः' इत्यन्तं लक्ष्मी-

पतिनामकश्रोतृप्रकरणम् । (५) ‘अयं तु कुजन’ इत्यारभ्य ‘शेषशायिपदे शपे’ इत्यन्तं शेष-श्रोतृप्रकरणम् । (६) ‘विप्रस्याच्चोपदेशो मे’ इत्यारभ्य अध्यायान्तं लक्ष्मीपतिश्रोतृप्रकरणम् । ‘सुत सुलोचन’ इत्यारभ्य ‘मां तात शरणं गतः’ इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणान्तर्गत-विठ्ठलश्रोतृप्रकरणम् । एवं विठ्ठलावान्तरप्रकरणसहितानि **षट्** प्रकरणानि ।

**पञ्चदशे तु** (१) ‘ऋणेऽप्यथ शरण्यं तम्’ इत्यारभ्य ‘तवैव कर्तव्यमेतन्मन्निरूपं परं स्मर’ इत्यन्तं विप्रश्रोतृप्रकरणम् । (२) ‘अहं प्रेरयिता’ इत्यारभ्य ‘नेत्रयोर्नाशनं मुने’ इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (३) ‘इति पूर्वकृतं कर्म’ इत्यारभ्य ‘चाग्रजन्मनाभवत् तत’ इत्यन्तं विप्रश्रोतृप्रकरणम् । (४) ‘वृद्धं न त्यज’ इत्यारभ्य ‘जाने मत्कृतिमञ्जसा’ इत्यन्तं शेषश्रोतृ-प्रकरणम् । (५) ‘सीतापते मम सुत’ इत्यारभ्य ‘कृत्यं कुरु गुरोरपि’ इत्यन्तं सीतापतिश्रोतृ-प्रकरणम् । (६) ‘हे पुत्र चित्रम्’ इत्यारभ्य ‘गच्छ पुत्र सुखी भव’ इत्यन्तं विप्रश्रोतृप्रकरणम्; (७) ‘सीतापते मम’ इत्यारभ्य ‘श्रुणु विप्रावमानिनाम्’ इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (८) ‘पापिनां च’ इत्यारभ्य ‘शरणं व्रज तं भज’ इत्यन्तं विप्रश्रोतृप्रकरणम् । (९) ‘पूर्वं शेष’ इत्यारभ्य ‘हाराणां भारं मे गौरवाद्ददौ’ इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (१०) ‘ममोपदेश-कर्णाख्ये’त्यारभ्य ‘स्यात्तवैवेह ब्राह्मणे’त्यन्तं विप्रश्रोतृप्रकरणम् । (११) ‘सीतापते न त्यज’ इत्यारभ्य ‘नाहं तं सम्भरामि च’ इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (१२) ‘नञ् द्वयम्’ इत्यारभ्य अध्यायान्तं विप्रश्रोतृप्रकरणम् । एवं **द्वादश**प्रकरणानि ।

**षोडशाध्याये** तु – (१) ‘मत्पादसेवाविषये’ इत्यारभ्य ‘शुभानां भूर्भविष्यति’ इत्यन्तं शेषश्रोतृप्रकरणम् । (२) ‘इत्येकं श्लोकमुख्यं मे’ इत्यारभ्य ‘भज मां भुजगेश्वरम्’ इत्यन्तं विप्रश्रोतृप्रकरणम् । (३) ‘ममाभिप्रायमज्ञात्वा’ इत्यारभ्य ‘मन्तव्या तेन मत्कृतिम्’ इत्यन्तं शेषश्रोतृप्रकरणम् । (४) ‘हे ब्राह्मण’ इत्यारभ्य ‘पापिनं तं महात्मभिः’ इत्यन्तं विप्रश्रोतृ-प्रकरणम् । (५) ‘लक्ष्मीपते’ इत्यारभ्य ‘माणिक्यवत्सगौणीमवात्यजत्’ इत्यन्तं लक्ष्मीपति-श्रोतृप्रकरणम् । (६) ‘अचिन्त्याद्भुतमाहात्म्यमहं हयमुखं भजे’ इत्यारभ्य ‘वैभवं न पराहतम्’ इत्यन्तं विप्रश्रोतृप्रकरणम् । (७) ‘पापपुरुषाः’ इत्यारभ्य ‘जिह्वागतं त्वहो’ इत्यन्तं बहुपुरुष-श्रोतृप्रकरणम् । (८) ‘हे वृद्धे’त्यारभ्य अध्यायान्तं विप्रश्रोतृप्रकरणम् । इति **अष्टौ** प्रकरणानि ।

**सप्तदशे** तु – (१) ‘अयं विप्रः सुप्रशस्तम्’ इत्यारभ्य ‘निग्राह्या न वदन्ति ये’ इत्यन्तं शेषश्रोतृकत्वेन श्रीपतेः श्रोतृकत्वेन वा व्याख्यातृश्रोतृकत्वेन वा प्रवर्तितं प्रकरणम् । (२) ‘हे

विप्र' इत्यारभ्य 'न वक्ष्ये मानवोत्तम' इत्यन्तं श्रीपतिश्रोतृप्रकरणम् । (३) 'मानं तत्याज माधव्या' इत्यारभ्य 'प्राप्तवान् वै ममान्नद' इत्यन्तं श्रीपतिश्रोतृप्रकरणम् । (४) 'विप्र त्वं मासपर्यन्तम्' इत्यारभ्य 'अतर्क्याणां दुरुक्तिभिः' इत्यन्तं विप्रश्रोतृप्रकरणम् । (५) 'हे तम्मण' इत्यारभ्य 'भज मां भुजगेश्वरम्' इत्यन्तं तम्मणश्रोतृप्रकरणम् । (६) 'हे भूप' इत्यारभ्य 'राज्यं ते रक्षयिष्यति' इत्यन्तं भूपश्रोतृप्रकरणम् । 'भज त्वम्' इत्यारभ्य 'बहु दातुं त्वमिच्छसि' इत्यन्तं भूपश्रोतृप्रकरणान्तर्गतावान्तरविप्रश्रोतृकप्रकरणम् । (७) 'हे शुण्ठ विप्र' इत्यारभ्य 'सर्वैरप्यनिवारितम्' इत्यन्तं विप्रश्रोतृकप्रकरणम् । (८) 'हे सूर्यनामधार' इत्यादिपद्यद्वयं सूर्य-नामकश्रोतृप्रकरणम् । (९) 'लक्ष्मीपते' इति पद्यं लक्ष्मीपतिश्रोतृप्रकरणम् । (१०) 'उपेन्द्रभट्ट ताम्' इत्यारभ्य 'वृन्दावनकृतिं वद' इत्यन्तम् उपेन्द्रनामकभक्तश्रोतृप्रकरणम् । (११) कनका-कृष्णभट्टोपि' इत्यारभ्य 'श्रेयोहारिभिः पापभीरुभिः' इत्यन्तं विप्रश्रोतृप्रकरणम् । (१२) 'हे श्रीपते त्वम्' इत्यारभ्य 'विना तेन च को महान्' इत्यन्तं श्रीपतिश्रोतृप्रकरणम् । (१३) 'हे कृष्णे'ति पद्यं कृष्णाख्यभक्तश्रोतृप्रकरणम् । (१४) 'तस्य सीतापते त्वम्' इत्यारभ्य 'सज्ञाघटि सुत स्तव' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (१५) 'हे विठ्ठल' इत्यारभ्य 'मामेव स्त्री भविष्यति' इत्यन्तं विप्रगुरुविठ्ठलश्रोतृप्रकरणम् । (१६) 'इत्येक श्लोकमुख्यं मे' इत्यारभ्य अध्यायान्तं विप्रश्रोतृप्रकरणम् । एवं **षोडश** प्रकरणानि ।

**अष्टादशे च** – (१) 'इदं सर्वम्' इत्यारभ्य 'सदृशो नास्ति सादृश्यं मम वृन्दावने यथा' इत्यन्तं विप्रश्रोतृप्रकरणम् । (२) 'आयातु मम' इत्यारभ्य 'प्रयोक्तव्यानीति संस्मर बुद्धिमन्' इत्यन्तं शेषश्रोतृप्रकरणम् । (३) 'ब्राह्मण शृणु संवादानि' इत्यारभ्य 'पक्षपातेन सुविचक्षण' इत्यन्तं विप्रश्रोतृप्रकरणम् । (४) 'मद्दत्तजीवनम्' इत्यारभ्य 'यद्वा पुण्यदिने मम' इत्यन्तं शेषश्रोतृप्रकरणम् । (५) 'हे विप्र कविवृत्तेन' इत्यारभ्य 'तद्वै स्यात् तव नान्यथा' इत्यन्तं विप्रश्रोतृप्रकरणम् । (६) 'हयकन्धरसन्नाम' इत्यारभ्य 'केन यास्यन्त्युपस्थितम्' इत्यन्तं हयग्रीवकर्मन्दिप्रकरणम् । (७) 'हे पयः फेनवच्छुभ्र' इत्यारभ्य 'सविता वेत्ति सर्वदा' इत्यन्तं विठ्ठलश्रोतृप्रकरणम् । (८) 'नारसिंह नरश्रेष्ठ' इत्यारभ्य 'हरिष्ये म्लेच्छबन्धनम्' इत्यन्तं नारसिंहश्रोतृप्रकरणम् । (९) 'मुग्धेति सम्बोध्य मया' इत्यारभ्य 'यत्कृतं त्वज्ञताप्रकम्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (१०) 'द्वे सहस्रे च पद्यानाम्' इत्यारभ्य 'प्रवृत्तिं लक्षयाम्यहम्' इत्यन्तं मौद्गलनारसिंहप्रकरणम् । (११) 'हयकन्धरकर्मन्दिन्' इत्यारभ्य 'दैवं भूदैवतं च वा' इत्यन्तं हयग्रीवकर्मन्दिप्रकरणम् । (१२) 'मन्नन्दन' इत्यारभ्य 'कामतिं त्यजथाशु च' इत्यन्तं बहुभक्त-

श्रोतृप्रकरणम् । (१३) 'तस्थिवांसि' इत्यारभ्य अध्यायान्तं विप्रश्रोतृप्रकरणम् । एवं **त्रयोदश** प्रकरणानि ।

**एकोनविंशे** च – (१) 'हे ब्राह्मण' इत्यारभ्य 'मा त्यज त्वं द्विजोत्तम' इत्यन्तं विप्र-श्रोतृप्रकरणम् । (२) 'लज्जाविहीन कुब्जायाःपतेर्नाम्ना प्रभञ्जन' इत्यारभ्य 'शरणागतसंसरणं मरणार्तिं हर प्रिय' इत्यन्तम् अप्पणकृष्णभट्टश्रोतृप्रकरणम् । (३) 'हे वृन्दावनग स्वामिन्' इत्यारभ्य 'त्यक्त्वा त्वयि प्रिय' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (४) 'समागतोसि श्रीपते' इत्यारभ्य 'मामकं तं प्रकाशय' इत्यन्तं श्रीपतिश्रोतृप्रकरणम् । (५) 'हे हयग्रीवकर्मन्दिन्' इत्यारभ्य 'अपाकुरु पुरो मम' इत्यन्तं हयग्रीवकर्मन्दिप्रकरणम् । (६) 'नन्दनायं मन्दबुद्धिः' इत्यारभ्य 'मरणार्तिसमं भवेत्' इत्यन्तं शेषश्रोतृप्रकरणम् । (७) 'अयं ग्रामो बहुलब्राह्मणेभ्यः' इत्यारभ्य 'आददस्व कृणुष्व तत्' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (८) 'श्रीपते श्रीनि-वासोऽयम्' इत्यारभ्य 'मरणार्तिसमं नृणां करणं तस्य मानव' इत्यन्तं श्रीपतिश्रोतृप्रकरणम् । (९) 'कृतिश्च ब्राह्मणश्चेयम्' इत्यारभ्य 'नैवाबद्धं वदाबुध' इत्यन्तं लक्ष्मीनारायणश्रोतृप्रकरणम् (१०) 'यद्वा करिष्यते विप्र' इत्यारभ्य 'यत्पापं तद्भवेत् तव' इत्यन्तं शेषश्रोतृप्रकरणम् । (११) 'चिन्तामणिसुत' इत्यारभ्य 'प्रायश्चित्तं कर्तुं द्विजाधम' इत्यन्तं लक्ष्मीनारायणश्रोतृप्रक-रणम् । (१२) 'नमस्कारप्रतीकार' इत्यारभ्य 'निखिलागमनिर्णयैः' इत्यन्तं शेषप्रकरणम् । (१३) 'कुर्यां प्रमाणमित्युक्त्या' इत्यारभ्य 'लक्ष्मीकरमहोत्सवे' इत्यन्तं लक्ष्मीनारायणश्रोतृप्रक-रणम् । (१४) 'हे मञ्जुकञ्जपत्राक्ष' इत्यारभ्य अध्यायान्तं लक्ष्मीपतिश्रोतृप्रकरणम् । एवं चतुर्दशप्रकरणानि ।

**विंशाध्याये** तु – (१) 'हयग्रीवयतीयौ द्वौ' इत्यारभ्य 'जीवयामि पुनस्त्वहो' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (२) 'हे नन्दनाहमानन्दपूर्णोऽस्मि' इत्यारभ्य 'पौरुषादेवेह समन्वितः' इत्यन्तं हयग्रीवकर्मन्दिश्रोतृप्रकरणम् । (३) 'अलक्ष्मीकस्य' इत्यारभ्य 'पूजितस्त्वं न संशयः' इत्यन्तं लक्ष्मीनारायणाख्यविप्रश्रोतृप्रकरणम् । (४) 'नाध्यापयामि चाध्यायपर्यन्तम्' इत्यारभ्य 'तव प्रिय न संशयः' इत्यन्तं विप्रश्रोतृप्रकरणम् । (५) 'कारयित्वा भारतस्य' इत्यारभ्य 'हा मृतोऽसि गते मयि' इत्यन्तं श्रीपतिश्रोतृप्रकरणम् । (६) 'हे दाम्बल पित्तमौले' इत्यारभ्य 'मनः कामं प्रयाति च' इत्यन्तं दम्बलग्रामस्थनारायणश्रोतृप्रकरणम् । (७) 'हे नन्दन' इत्यारभ्य 'दिवाप्यहो' इत्यन्तं विठ्ठलश्रोतृप्रकरणम् । (८) 'गेहं नास्ति' इत्यारभ्य 'निशाम्याशु सुविस्मित'

इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (९) 'अंहो मुग्वचनं हित्वा' इत्यारभ्य 'महिष्ठम्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (१०) 'न सभासु च' इत्यारभ्य 'लोकान्ततोऽपि ते' इत्यन्तं श्रीपति-श्रोतृप्रकरणम् । (११) 'उपरागम्' इत्यारभ्य 'पश्य' इत्यन्तं हयग्रीवकर्मन्दिप्रकरणम् । (१२)'सुग्रीवमित्राह्व' इत्यारभ्य 'तवार्यैः पूरयिष्यति' इत्यन्तं सीतापतिश्रोतृप्रकरणम् । (१३)'वेङ्कटेशो मठेशस्य' इत्यारभ्य अध्यायान्तं वासुदेवमुनिश्रोतृप्रकरणम् । इति **त्रयोदश**-प्रकरणानि । (= १६६)

**एकविंशाध्याये** च– (१) 'तव कायगतं वायुम्' इत्यारभ्य 'तव माणवकपुण्यं ते' इत्यन्तं विप्रश्रोतृप्रकरणम् । (२) 'ब्राह्मण त्वम्' इत्यारभ्य 'कलहं तु कलिप्रियम्' इत्यन्तं शेषश्रोतृप्रक-रणम् । (३) 'हे विद्वांस' इत्यारभ्य 'कर्तव्य इति पूर्वोक्तमनुसन्धध्वमञ्जसा' इत्यन्तं बहुभक्त-श्रोतृप्रकरणम् । (४) 'तस्मान्मयोक्तं सकलम्' इत्यारभ्य 'न भ्रातापितरौ' इत्यन्तं शेषश्रोतृ-प्रकरणम् । (५) 'हयग्रीवनिरूपं त्वम्' इत्यारभ्य 'वटबीजवदेवास्मदुटजानन्दवर्धकः' इत्यन्तं हयग्रीवमुनिश्रोतृप्रकरणम् । (६) 'हे विप्र तव जामाता' इत्यारभ्य 'ह्यपि तेषु वदस्व तानि' इत्यन्तं विप्रश्रोतृप्रकरणम् । (७) 'तस्माद्विश्वासवन्तः' इत्यारभ्य 'हरिः सुस्थिरः एव च' इत्यन्तं बहुभक्तश्रोतृप्रकरणम् । (८) 'इति श्री' इत्यादिकमारभ्य 'नैव सोऽपि' इत्यन्तं वेद-निधिश्रोतृप्रकरणम् । (९) 'अन्नयाचनं कुरु' इत्यारभ्य 'तदन्नं ते प्रदास्यति' इत्यन्तं विप्र-श्रोतृप्रकरणम् । (१०) 'मम भोजनसन्तोषम्' इत्यारभ्य 'आकरस्थं लेखनं च कारय त्वं मयेरितम्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (११) 'हे ब्राह्मणान्नमन्त्रं त्वम्' इत्यारभ्य 'एवमेव न संशयः' इत्यन्तं वेदनिधिश्रोतृप्रकरणम् । (१२) 'मुनिं मन्नन्दनम्' इत्यारभ्य 'सदानन्दं तनोतु तनुभृत्स्वयम्' इत्यन्तं बहुभक्तश्रोतृप्रकरणम् । (१३) 'हे वादिराजभट्टार्य' इत्यारभ्य 'परार्धं लोकमेष्यति' इत्यन्तं वादिराजभट्टश्रोतृप्रकरणम् । (१४) 'निष्कद्वयं स दत्वा' इत्यारभ्य 'प्रार्थयस्त्वं सदा द्विज' इत्यन्तं विप्रश्रोतृप्रकरणम् । (१५) 'अपां फेनेन' इत्यारभ्य अध्यायान्तं वेदवेद्यश्रोतृप्रकरणम् ।

**द्वाविंशे च** (१) 'श्रीपते' इति श्लोकः श्रीपतिश्रोतृप्रकरणम् । (२) 'त्वद्वेङ्कटगिरे नाम' इत्यारभ्य 'दिवि वा वाङ्न मे मृषा' इत्यन्तं शेषाद्रिपण्डितश्रोतृप्रकरणम् । (३) 'अमुचन्नमुचिः' इत्यारभ्य 'क्षुद्रास्ते वैरिणस्तव' इत्यन्तं वेदवेद्यश्रोतृप्रकरणम् । (४) 'हे नन्दन द्विजोऽयं ते' इत्यारभ्य 'प्रेरयिष्यति गाढशः' इत्यन्तं श्रीपतिश्रोतृप्रकरणम् । (५) 'हे विप्र मत्प्रसादेन' इत्यारभ्य 'तिलमात्रं न दुष्कृतम्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (६) 'भाषया भीषयस्य'

इत्यारभ्य 'मत्पट्टोदयपर्वतात्' इत्यन्तं हयग्रीवकर्मन्दिश्रोतृप्रकरणम् । (७) 'हे वेदवेद्य' इत्यारभ्य 'कर्षणं यास्यते यमात्' इत्यन्तं वेदवेद्यश्रोतृप्रकरणम् । (८) 'हे वादिराजगुरुनामधर' इत्येक-श्लोकः वादिराजभट्टश्रोतृप्रकरणम् । (९) 'हे शिष्ट कार्यत्रयमास' इत्यारभ्य 'अथापि त्वद्धिताय च' इत्यन्तं लक्ष्मीपतिश्रोतृप्रकरणम् । (१०) 'हे नन्दन कामधेनुवत्' इत्यारभ्य 'प्रार्थये हरिम्' इत्यन्तं वेदवेद्यश्रोतृप्रकरणम् । (११) 'ब्रूमो वयं तु' इत्यारभ्य 'कारय प्राङ्मयेरितम्' इत्यन्तं विप्रश्रोतृप्रकरणम् । (१२) 'बाणवालीयरामस्य' इत्यारभ्य अध्यायान्तं हयग्रीवकर्मन्दिश्रोतृ-प्रकरणम् । (एवं द्वादशप्रकरणानि) ।

### श्रीसोदामठगुरुपरम्परा

''श्रीमन्मध्वं विष्णुतीर्थं भजेहम् व्यासं वेद्यं वेदगर्भं वरेशम् ।
यतिश्रेष्ठं वामनं वासुदेवं, वेदव्यासं श्रीवराहं मुनीन्द्रम् ।
वेदात्मानं विश्ववन्द्यं सरत्नगर्भं वेदाङ्गाख्यं विद्यापती च ।
कर्मन्दीड्यं विश्ववन्द्यं च विश्वतीर्थं वन्दे विठलं संयमीन्द्रम्।
वन्दे वरदराजाख्यं वागीशमुनिपुङ्गवं
वादिराजगुरून् वेदवेद्यं विद्यानिधिं मुनिम् ।
यतिं वेदनिधिं स्तौमि सेवे वरदराजकम् ।
नौमि विश्वाधिराजेन्द्रं वादिवन्द्यार्यमन्वहम् ।
विश्ववन्द्यमुनिं वन्दे तथा विबुधवर्यकम् ।
विश्वनिध्याख्ययोगींद्रं विश्वाधीश्वर सन्मुनिम् ।
विश्वेशतीर्थ सहितं वन्दे अभीष्टप्रदं सताम् ।
व्यासतीर्थरिंद मूवत्तनयवरे वृन्दावनाचार्यरु.
श्रीव्याससेवानिरतान् द्वादशाब्दमुपोषितान् ।
विश्वप्रियगुरून् वन्दे वराहमुनिसेवितान् ।।
आश्वास्यपादभजकान् विश्वाधीशगुरून् भजे ।
आश्वास्य कोल भजकान् विश्वेन्द्रार्य गुरून्नमः ।।
श्रीविश्वोत्तमतीर्थ गुरुभ्योनमः ।।
अधुनापीठस्थ श्रीविश्ववल्लभतीर्थगुरुभ्यो नमः ।।

## ।। श्रीमदणुवृन्दावनाख्यानव्याख्यानं प्रारभ्यते ।।

हरिः ॐ ।।

ओं लक्ष्मीकान्तं भूवराहं भजेहं बादरायणम् ।
वादिराजहृदम्भोजमन्दिरं वाजिकन्धरम् ।। १ ।।

भीमसेनानन्दतीर्थवानरेन्द्रानहं भजे ।
वादिराजगुरून् वन्दे वेदवेद्यगुरून् भजे ।। २ ।।

गुरून् वेदनिधीन् वन्दे नारसिंहगुरून् भजे ।
वन्दे नारायणाचार्यान् कर्णादिगणसेवितान् ।। ३ ।।

वन्दे वृन्दावनाचार्यान् हयग्रीवमुनीन् भजे ।
शेषसीतापतिव्यासान् प्रणमामि गुरुप्रियान् ।। ४ ।।

(वृन्दावनाचार्यसम्प्राप्तज्ञानैश्वर्यानहं सदा ।
रघुप्रवीराख्यगुरून् भजे ज्ञानादिसिद्धये ।।)

श्रीमद्वृन्दावनाख्यानव्याख्याने मन्दधीरहम् ।
यद्यपि अनधिकार्यस्मिन् तथापि गुरुवाक्यतः ।।

मया यदल्पं विज्ञातं तत् स्मृत्यर्थं निरूप्यते ।
सन्तः सन्तु कृपावन्तो गुरुराजपदाश्रयाः ।।

भगवान् अव्यवहितभाविकल्पसमीरो लातव्याचार्यः सुरवर्यैः सम्प्रार्थितः श्रीनारायणेन आज्ञप्तः सन्, भूवौ अवतीर्य वादिराजनामा यतिकुलतिलको भूत्वा, दुर्वादिनो विजित्य, युक्तिमल्लिकादीन् ग्रन्थान् विरचय्य, सज्जनानां सम्यक्ज्ञानमुत्पाद्य, अत्यक्तदेहः सन् वृन्दावनस्थो भूत्वा, भक्तानां इष्टानिष्टप्राप्तिपरिहारसाधनात्यर्थप्रसादजनकअपरोक्षज्ञानजनकपरोक्षनिश्चयोत्पादकउपनिषदादिना प्रतिपादित स्वस्य ऋजुभावं ख्यापयितुं वृन्दावनाख्यानं कुर्वन्, कस्यचित् तदानीम् अकुशलदेशीयस्य ('ईषदसमाप्तौ कल्पब् देश्यदेशीयरः' इति पाणिनिः) ब्राह्मणस्य स्वप्ने विश्वासयोग्यानां विश्वासम् उत्पादयितुम् उपदिदेश ।।

ननु श्रीमद्वादिराजमुनेः ऋजुत्वज्ञानेन किं प्रयोजनम्? न तावत् दृष्टान्तस्य कृष्यादिनैव तत्सम्भवात्; नापि अदृष्टं स्वर्गादि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतिसिद्धयागादि-

नैतत्सम्भवात् । नापि मोक्षः प्रयोजनम् । 'तमेवं विद्वानमृत इह भवति', 'नान्यः पन्था अयनाय विद्यते' इत्यादि श्रुत्या तस्यापि ज्ञानैकसाध्यत्वात् । न च ज्ञानार्थोपासनस्य श्रीविष्णुविशिष्टप्रतिमाज्ञानं विना अनुपपत्तेः तदेव प्रयोजनं इति वाच्यम् । वायोः विशिष्टप्रतिमाज्ञानेनैव तत्सम्भवात् । वायोः अन्यस्यापि ऋजुत्वज्ञानं इति चेत् तर्हि तदन्येषां ऋजुत्वज्ञानस्य आवश्यकत्वापत्त्या अनवस्थाप्रसङ्गात् । अतः न वादिराजमुनेः ऋजुत्वज्ञानं अत्यावश्यकं इति चेत् न ।

**गुह्यादेशा ब्रह्मपदे ये योग्या देवतागणाः ।**
**सर्वे गुह्योपदेष्टारः सर्वेषां गुरवो हि ते ।।** इति छान्दोग्यभाष्यवचनेन ,
**तस्माद्वायुत्वयोग्यै र्हि येषां लोकाः प्रकीर्तिताः ।**
**तेषाम् अलोकाशंका च नैव कार्या अरिणा क्वचित्'** इति बृहद्भाष्यवचनेन ,
**अतो ब्रह्मपदे योग्या जीवाः हंसाः प्रकीर्तिताः ।**
**तेषां परंपरा प्राप्तं यैः ज्ञानं नियमेन तु ।।**
**ते मुच्यन्ते न चैव अन्ये गुरुर्ब्रह्मा यतो नृणाम् ।।'** इति श्रुतिगीतातात्पर्यवचनेन,

वायुत्वयोग्यानाम् ऋजुत्वज्ञानस्य आवश्यकत्वसिद्धेः न अनवस्था दोषः । कपिञ्जलाधिकरणन्यायेन तत्परिहारसम्भवात् । वायुत्वयोग्यैः इतिवत् लातव्यत्वयोग्यैः, गव्यत्वयोग्यैः, इत्यादि उक्ति अभावेन च अनवस्था अवकाशाभावात् ।

'लिङ्गात् लातव्यतः पूर्वं ऋजोः ब्रह्मत्वतः शतात्' इत्यादिषु बहुकल्पानन्तरभाविनामपि गुरुराजत्वोक्तेः च । अव्यवहितभाविकल्पसमीरावतारस्य ऋजुभावज्ञानं तदनुग्रहयोग्यानामत्यवश्यकं इति सिद्धम् ।।

**('अनादिकालतः सर्वदोषहीना गुणाधिकाः ।**
**सर्वजीवगणेभ्यो ये ते हि वायुत्वमाप्नुयुः ।।''**
**ऋजवो नाम ये देवाः देवानामपि देवताः ।**
**विशिष्टज्ञानभक्त्यादौ सर्वजीवनियामकाः ।।**
**''यावत् ज्ञानं चास्ति मे वासुदेवे तावत् ज्ञानं वायुदेवस्य चास्ति ।**
**यावत् ज्ञानं वायुदेवस्य चास्ति तावत् ज्ञानं चास्ति वै तत् ऋजूनाम् ।।''**

ननु अस्य ऋजुत्वे किं मानम्? प्रत्यक्षम् अनुमानम् आगमो वा? आद्ये किमीश-लक्ष्मीऋज्वादिप्रत्यक्षं प्रमाणम्? उत अस्मदादिप्रत्यक्षं प्रमाणम्? न आद्यः । ईशादिप्रत्यक्ष-सिद्धत्वस्य अस्माभिः ज्ञातुम् अशक्यत्वात् । अस्मदादिप्रत्यक्षस्य स्वकीयगुणदोषग्रहणासमर्थस्य श्रीगुरुराजऋजुभावग्राहकत्व असम्भवात् । नापि अनुमानम् । 'विमतो ऋजुः, गरुडोत्तमत्वे सति ईशावरपुरुषत्वात्' इति अनुमानं प्रमाणम् । गरुडोत्तमत्वस्य सन्दिग्धत्वेन सन्दिग्धासिद्धेः । नाप्यागमः । 'ब्रह्मत्वयोग्या जीवास्तु ऋजवो नाम कीर्तिताः' इत्यादौ 'वादिराजमुनिः ऋजुस्थः' इति अनुक्तेः । नापि वृन्दावनाख्यानं प्रमाणम् । प्रत्यक्ष-आगमयोः निरस्तत्वेन दृष्ट-अदृष्टार्थयोः प्रत्यक्ष-आगमसंवादरहितस्य प्रामाण्यायोगात् । तस्मात् वादिराजमुनेः ऋजुभावो न युक्तः । नापि श्रीमद्वृन्दावनाख्यानम् उपादेयम् इति चेत्, न ॥

श्रीगुरुराजऋजुभावस्य प्रमाणत्रयसंवादसिद्धत्वात् ।

तथा हि -- यदुक्तं ईशादिप्रत्यक्षसिद्धत्वम् अस्माभिः ज्ञातुम् अशक्यत्वात् अनुपपन्नं इति, तत् न ।

**''पस्पर्श पाणिना मे अङ्गं प्राणनाथप्रियो ह्यसौ ।**
**द्वैपायनो महायोगी वैशम्पायनमानितः ॥''** (आ. ४/६८)

**''नमामि कामतातं मां कुमारश्चेति मानयन् ।**
**रमायै काममात्रे च मेरौ मे दत्तवान् मुनिम् ॥** (आ. १/७८)

इत्यादिना ज्ञातुं शक्यत्वात् । गरुडोत्तमत्वलिङ्गमपि न सन्दिग्धम् । तत्कथम्?

**''वैद्यो धन्वन्तरीश्चायं चैद्यशापाख्यरोगहा''** (७/३२)

**''भैषज्यं कृतवान् मह्यं वैषम्यरहितः प्रभुः ।**
**भैष्मीपति प्रसादाख्यं प्रेष्यस्य स महाभिषक् ॥''** (७/३४)

इत्यत्र स्वयं शिशुपालशापकथनेन, तस्मिन् काले स्वस्य अवतारः, शिशुपालापकारकत्वं च सूचयित्वा, भैष्मीपतिप्रसादकारणप्रेष्यभावकथनेन रुक्मिण्याः तद्भर्तुः श्रीकृष्णस्य सन्देशाहर्ता ब्राह्मणः अयं इति उक्तिं भवति । अन्यथा हयग्रीवप्रसादाख्यं नारायणप्रसादाख्यमिति अवक्षत् ।

अस्तु रुक्मिण्याः सन्देशाहरणम् । किं तेन? 'द्विजोत्तमं हरेः पदोः सकाशमाश्वयोजयत्' इति श्रीमन्महाभारततात्पर्यनिर्णये । 'कश्चित् द्विजवरं दृष्ट्वा' इति । 'कश्चित् द्विजवरश्रेष्ठः'

इति भागवतदशमोत्तरार्धेन, भगवत्पादैः भगवता च 'विप्रम् अयोजयत्' इति अनुक्त्वा, 'द्विजोत्तम' 'द्विजवर' शब्दाभ्यां तत् व्याख्यानरूपेण 'द्विजवरश्रेष्ठ' पदेन 'आशु अयोजयत्' इति आशुगमनलिङ्गेन च गरुडोत्तमत्वं सूचितम् । तथा च रमा अवरत्वे सति गरुडोत्तमपुरुषत्वलिङ्गेन ऋजुत्वं साधयितुं शक्यते ।

**'यन्मन्त्रभीरवः सर्वे ग्रहाः यान्ति दिशो दश ।**
**सोऽहं महानुभावोऽत्र न ग्रहोथ बलिग्रहः ।।(३/३)**

इति तृतीयाध्यायपद्यगतेन 'बलिग्रह'शब्देन 'तायो वेद स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति' इति श्रुत्यनुकरणं कृतं भवति । श्रुत्यर्थस्तु – 'ताः व्याहृतिविद्याः यः वेद स ब्रह्म नारायणं वेद । अस्मै विरिञ्चाय सर्वे देवाः गरुडादयः बलिम् आवहन्ति, पूजां कुर्वन्ति ।' तद्भाष्ये 'बलिं हरन्ति मुक्ताय विरिञ्चाय च पूर्ववत्' इत्युक्त्योदाहृत श्रुतिवचनं ऋजुपरम् इति ज्ञायते । 'अहं च बलिग्रहाः' इत्यनेन एतत् श्रुत्युक्तयत्शब्दोक्तब्रह्मपदयोग्यऋजुगणान्तर्गतत्वम् उक्तं भवति ।।

उदाहृतं 'चैद्यशापाख्य रोगहा' इत्यनेन । 'अहं राजाधिराजश्चाप्येतदुत्तरजन्मनि' इति नवमाध्यायोक्तजन्मत्रयमुक्तम् (९/६) । तत्र एकस्मिन् जन्मनि चैद्यशापप्रयोजकरुक्मिणी-सन्देशकथनेन । 'यदीमुपह्वरते' इति श्रुतिवचनस्य हनुमत्परत्वमिव स्वपरत्वं 'तद्वन्ममापि कामेन हीनस्य मनसाप्यहो' (९/४) इत्यादिना सूचितम् । 'अहं राजाधिराजश्चाप्येतदुत्तरजन्मनि' इत्यनेन पृतनाक्षयकारित्वेन प्रयोजकराजाधिराजताकथनेन 'पृक्षो वपुः पितुमान्' इति श्रुति-वचनस्य भीमपरत्वमिव स्वपरत्वं सूचितम् । 'दशप्रमतिं जनयन्त' इत्यादेः 'अहमानन्दमुनिना' इत्यादिना मध्वपरत्वमिव स्वपरत्वं सूचितम् ।

ननु उदाहृतऋगादिषु, अस्मिन् काले, अस्मिन् देशे, कश्चित् ऋजुः अवतीर्य वादिराजनामकः सन् इमानि कर्माणि करिष्यति इति स्पष्टोक्तेरभावात् उक्तमयुक्तमिति चेत्, न । 'अस्मिन् काले अस्मिन् देशे मध्यगेहाख्यगेहे वायुः अवतीर्य आनन्दतीर्थनामा सन् इमानि करिष्यति' इति स्पष्टोक्तिः नास्ति इति कुशङ्कया श्रीमदाचार्यवायुभावस्यापि श्रुत्युक्तत्वाभावप्रसङ्गात् । एवं श्रीबादरायणस्यापि वर्तमानजनाभ्यस्तवेदभागेषु श्रीनारायणः पराशरात् सत्यवत्यां अवतीर्य ब्रह्म-सूत्रादिकं कृतवान् इति स्पष्टोक्तिः नास्ति । भारतादिनिखिलपुराणानां च तेनैव कृतत्वात् तत्र स्वमाहात्म्यवर्णनं कृतं इति कुशङ्कायाः अनुपादेयत्वप्रसङ्गात् । एवं श्रीविष्णोः सर्वोत्तमत्वे,

श्रीवायोः जीवोत्तमत्वे, जगत्सत्यत्वे च स्पष्टश्रुतिवचनस्यैव आवश्यकत्वेन मन्वादिस्मृतीनां पुराणानां सूत्रभाष्यटीकानां च वैय्यर्थ्यप्रसङ्गात् । श्रीबादरायणावतारकाले माहात्म्यातिशयदर्शनात्; 'आविष्टवानकुशलम्' इत्यादिना श्रीमदाचार्यस्य माहात्म्यस्यापि तत्कालीनैः उपलब्धस्य तदुपदेश-परम्परया अस्माभिः अवगतत्वेन आप्ततया निश्चितत्वात् तत्कृत 'बळित्थे'त्यादि मन्त्रभाष्यादेः अत्युपादेयत्वमिव श्रीमद्बृन्दावनाख्यानस्य अपि अकुशलदेशीयविप्रस्वप्नोपदेशमाहात्म्यस्यापि तत्कालीनैः उपलब्धस्य तदुपदेशपरम्परया अवगतत्वेन तदानीम् उक्तार्थस्य इदानीं द्रष्टुं योग्यस्य नियमेन उपलम्भात् । अतीन्द्रियार्थेषु उक्तरीत्या आख्यानानुसन्धानवतां श्रुत्यादिसंवाददर्शनात् च शिष्टेष्टमिदमाख्यानम् अति उपादेयमिति सिद्धम् ।।

विलीनप्रकृतितया अन्तरायविधुरोऽपि आचार्यवत् शिष्यान् ग्राहयितुं ग्रन्थादौ मङ्गलमाचरति – **हयग्रीव इत्यादिना ।।**

### ।। अथ श्रीअणुवृन्दावनाख्यानं सव्याख्या प्रारभ्यते ।।

**श्रीमद्बृन्दावनाख्यानव्याख्याने मन्दधीरहं**
**यद्यप्यनधिकार्यस्मिन् तथापि गुरुवाक्यतः ।**
**मया यदल्पं विज्ञातं तत्स्मृत्यर्थं निरूप्यते**
**सन्तः सन्तु कृपालवो सदा गुरुराजपदाश्रयः ।।**

भगवानव्यवहितभाविकल्पसमीरो लातव्याचार्यः सुरवर्यैः सम्प्रार्थितः श्रीनारायणेनाज्ञप्तः सन्, भूमाववतीर्य वादिराजनामा यतिकुलतिलको भूत्वा दुर्वादिनो विजित्य युक्तिमल्लिकादि ग्रन्थान् विरचय्य सज्जनानां सम्यग्ज्ञानमुत्पाद्य अत्यक्तदेहः सन्, वृन्दावनस्थो भूत्वा भक्तानाम् इष्टानिष्टप्राप्तिपरिहारसाधनात्यर्थप्रसादजनकापरोक्षज्ञानजनकपरोक्षनिश्चयोत्पादकोपनिषदादिप्रति-पाद्यऋजुभावं स्वस्य ख्यापयितुं वृन्दावनाख्यानं कुर्वन् कस्यचित्तदानीमकुशलस्य देशीयब्राह्मणस्य स्वप्ने विश्वासयोग्यानां विश्वासमुत्पादयितुमुपदिदेश ।।

#### मङ्गळाचरणम्

**ओं लक्ष्मीकान्तं भूवराहं भजेऽहं बादरायणम् ।**
**वादिराजहृदम्भोजमन्दिरं वाजिकन्धरम् ।। १ ।।**

**भीमसेनानन्दतीर्थवानरेन्द्रानहं भजे ।**
**वादिराजगुरून् वन्दे वेदवेद्यगुरून् भजे ।। २ ।।**

गुरून् वेदनिधीन् वन्दे नारसिंहगुरून् भजे ।
वन्दे नारायणाचार्यान् कर्णादिगणसेवितान् ।। ३ ।।

वन्दे वृन्दावनाचार्यान् हयग्रीवमुनीन् भजे ।
शेषसीतापतिव्यासान् प्रणमामि गुरुप्रियान् ।। ४ ।।

अथ श्रीवेदनिधिस्थापित शिलालिखितअणुवृन्दावनाख्यानं प्रारभ्यते ।।

**ओं हयग्रीवं चिदानंदविग्रहं सदनुग्रहम् ।**
**दशग्रीवच्छिदं शापान्मणिग्रीवविमोचनम् ।। १ ।।**

**स्वनामग्रहणादेव निरस्तग्रहविग्रहम् ।**
**वृन्दावनगतं वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् ।। २ ।।**

अत्र **हयग्रीवं वन्दे** इति योजना । उत्तमपुरुषप्रयोगादहमिति लभ्यते । **हयग्रीव**पदेन ब्रह्मत्वप्रदत्वमिष्टत्वं सूचयति । विशिष्टत्वसूचनाय **ब्रह्मरुद्रेन्द्रवन्दितमिति** ।। ब्रह्म च (महद्ब्रह्मनामकलक्ष्मीः) ब्रह्माच ब्रह्माणौ तौ च रुद्रश्च इन्द्रश्च ब्रह्मरुद्रेन्द्राः । तै**र्वन्द्यम्** । **''ममयोनिर्महद्ब्रह्म''** इति गीतोक्तेः । नपुंसकशब्दो रमावाचकः । ततश्च रमाब्रह्मादिवन्दितत्वेन सर्वोत्तमत्वं सिद्धम् । अधिकृतत्वसूचनाय – **वृन्दावनगतम् इति** ।। वृन्दावनसन्निहित हयग्रीव-स्यैव तद्ग्रन्थप्रतिपाद्यत्वात् । यद्यप्येतेषां विशेषणानां स्तुत्यर्थत्वात् प्रयोजनान्तरं नान्वेष-णीयम् । तथापि महदुक्तेः बहूनां प्रयोजनानां सत्वात् यथामति प्रयोजनम् अन्वेषणीयम् । तत्र अनिष्टनिवृत्त्यर्थम् – **स्वनामग्रहणादेव निरस्तग्रहविग्रहम् इति** ।। स्वनाम्नः हयग्रीवनाम्नः उच्चारणं ज्ञानं वा । तत एव निरस्तः परिहृतः ग्रहाणां विग्रहो देहो युद्धरूपो वा येन तम् । भक्तानां प्रारब्धवशेन पैशाचजन्मसमये श्रीहयग्रीवनामज्ञानेन तन्निर्वृत्तिर्भविष्यतीति भावः । इष्टप्राप्त्यर्थं – **चिदानंदविग्रहं सदनुग्रहम् इति** । 'आनन्दादयः प्रधानस्य' (ब्र.सू.३-३-१२) इत्युक्तं चिदानन्दात्मत्वम् अनेनोक्तं भवति । सदनुग्राहकस्य अतिशयेन सत्वस्य । आत्म-शब्दार्थस्वामित्वस्य[१] च सिद्धत्वात् । वृन्दावने दक्षिणपश्चिमउत्तरभागस्थितहनुमद्भीममध्वोपास्य

---

(१) **'पूर्णत्वादात्मशब्दोक्तः कश्चित्सर्वनरोत्तमः ।**
**सोऽपि नारायणो नान्यः स च सर्वेषु संस्थितः ।**
**तद्वशा इतरे सर्वे श्रीब्रह्मेशपुरःसराः ।।'** – भागवततात्पर्यनिर्णयः (११.२.४७)

रामकृष्णवेदव्यासात्मकत्वेन पूर्वभागस्थितस्वोपास्यहयग्रीवस्य भक्तैः भजनीयत्व सूचनाय – **दशग्रीवच्छिदम्** इत्यादिविशेषणानि । तत्र **दशग्रीवच्छिदम्** इति अनिष्टनिवृत्त्यर्थम् । शापात् तरुभावप्रापकात् मणिग्रीवविमोचकम् ।।२।।

**(व्या)** रमारमणइतिवत् ब्रह्मपदेन हयग्रीवस्य गुणपूर्णत्वं प्रथमाध्यायोक्तार्थः हयग्रीवपदेन ग्रीवापर्यन्तं वर्णनम् । भगवत् महिमाज्ञानमानध्येयम् आह – **यो मामिति** ।।

**यो मां देवं विजानाति ऋजुस्थं पुण्यकृन्नरः ।**
**स याति निलयं पुण्यं यद्गत्वा न निवर्तते ।।३।।**

**सः** ऋजुत्वज्ञानी । निवृत्तपुण्यं निलयम्[१] अपरोक्षज्ञानद्वारा वैकुण्ठादिकं प्राप्नोति । मुक्तो भवतीत्यर्थः ।।३।।

**विमानं दिव्यमानं च दीप्यमानं सदायनम् ।**
**वृन्दावनोपरि गतं पूजयन्तु सदा मम ।। ४ ।।**

**(व्या)** **दिव्यमानं** देवतासम्बन्धिमानं यस्य तत् देवैः पूजितम् इत्यर्थः । अथवा देवसम्बन्धिमानं प्रमाणं सङ्कोचविकासयुक्तपरिमितियुक्तं [२]सुधर्मादिवत् । **दीप्यमानं** प्रकाशमानं तथापि प्रकाशस्य सूक्ष्मत्वाद् योगिदृश्यम् । **सदायनं** सताम् ऋष्यादीनां त्रिकोटियत्यादीनाम् आश्रयं मम वृन्दावनोपरि विद्यमानम् । **सन्तः पूजयन्तु** । तृतीयाध्यायस्थमिदम् ।। ४ ।।

**पञ्चवृन्दावने पुण्ये पञ्चरूपात्मको हरिः ।**
**पञ्चीकृत्य स्वरूपाणि नित्यं सन्निहितः स्वयम् ।। ५ ।।**

**(व्या)** **पञ्चरूपात्मकः** अनिरुद्धादि पञ्चरूपः स्वस्वरूपाणि **पञ्चीकृत्य** 'अनिरुद्धानिरुद्ध अनिरुद्धप्रद्युम्न' इत्यादिप्रकारेण प्रत्येकं पञ्चरूपोपेतं कृत्वा वृन्दावनपञ्चके तिष्ठतीत्यर्थः ।।५।।

**अहं ब्रह्माच वायुश्च विष्णू रुद्रश्च पञ्चमः ।**
**रमाम नित्यमेवात्र श्वेतद्वीपे यथा वयम् ।। ६ ।।**

---

(१) **'निवृत्तं ज्ञानपूर्वं च निवृत्तमिति चोच्यते ।**
**निवृत्तं सेवमानंस्तु ब्रह्माभ्येति सनातनम् ।।'** – इति भागवतात्पर्यनिर्णये (११.१०.४)

(२) 'इन्द्रसभा'

**अहं सदा देवसभासुभाजितः[१] सुभास्वरैः दिव्यविभूषणैर्युतः ।**
**अहंसमानैः सुरमानिमानितः सुमानयुक्तैः सुमनोभिरञ्जसा ।। ७ ।।**

**(व्या)** विमानस्य वृन्दावनोपरिगतत्वकथनेन देवसभाप्रवेशोनास्तीति न चिन्तनीयं इत्याशयेनाह – **अहंस इति । अहंसमानैः** यानभूतहंससत्काररहितैः गरुडादिभिः । सुरमानि-मानितः सन् देवानां सभासु सुभाजितः = दिव्यविभूषणैर्युक्तः सन् यास्यामीत्यर्थः । देवपूज्यत्वं ज्ञानं, दिव्यविभूषणोपेतत्वज्ञानं च भक्तानां देवसभाप्रवेशयोग्यानां तत्प्रापकं इति ज्ञेयम् ।।७।। एवं ग्रहशब्दोपलक्षितकल्यादि असुरोपद्रवनिवारकत्वं निखिलपापनिवारकत्वम् । निखिलसुकृत-समृद्धिहेतुत्वं बादरायणैकशिष्यत्वं वातविरिञ्चसखित्वं, हंसोपेतविमानपतित्वं गरुडादिमान्यत्वं च प्रतिपादितम् ।।

**(अव)** इदानीं भक्तैः ध्येयं स्वऋजुमहिमायुक्तं रूपमाह – **गुरुमिति ।।**

**गुरुमखिलगुणज्ञं सद्गुणैकाधिवासं**
**शमदमपरिनिष्ठं सत्वनिष्ठं वरिष्ठम् ।**
**सकलसुजशिष्टं नित्यनिर्धूतकष्टं**
**हयमुखपदनिष्ठं मां भजन्तु प्रपन्नाः ।। ८ ।।**

**(व्या) प्रपन्नाः** मां भजन्तु । कीदृशम्? **अखिलगुणज्ञम्** अखिलोपास्यभगवद्गुणा-भिज्ञम् । **सद्गुणैकाधिवासम्** ऋजुत्वात् दोषरहिततया शमादिगुणानां मुख्याश्रयम् । गुणपूर्ण-विष्णोरेकाधिवासं विशिष्टप्रतिमारूपम् इति कालेषु निष्ठावन्तम् । **सत्वनिष्ठं** [२]सत्वसत्व-सत्वसात्विकदेहयुक्तं **वरिष्ठम्** अधिकारिषु । तथापि **हयमुखपदनिष्ठं** हयग्रीवोपासकं **मां भजन्तु** । तेन अभीष्टसिद्धिर्भवतीत्यर्थः ।। ८ ।।

---

(१) 'सभाजितः' इति शुद्धः पाठः । 'सभाज पूजायाम्' इति वार्तिकम् ।
(२) **'सात्त्विकास्त्रिविधास्तत्र श्रेष्ठा एवोत्तरोत्तराः ।**
**देवा इन्द्रो विरिञ्चाद्या इति त्रेधैव देवताः ।**
**क्रमोत्तराः शिवो वाणी ब्रह्मा चैवोत्तरोत्तराः ।**
**सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुखः ।**
**तस्माद् यावद् विमुक्तिः स्यान्मुक्तावेवं सुखक्रमः' इति च ।।** – गी.ता. (१८/४१)

(अव) स्वस्यावासस्थानभूतवृन्दावनमाहात्म्यमाह – **तीर्थानामिति ।।**

**तीर्थानाम् उत्तमं तीर्थं वनानाम् उत्तमं वनम् ।**
**क्षेत्राणाम् उत्तमं क्षेत्रं मम वृन्दावनं द्विज ।। ९ ।।**

**तस्मात् वृन्दावनमिदं सर्वाभीष्टप्रदं सताम् ।**
**पञ्चवृन्दावने पुण्ये सुपर्वाणश्च सर्वदा ।। १० ।।**

**वसन्ति पुण्यकर्माणो विशेषात्ते च पर्वसु ।**
**पञ्चम्यां च तिथौ नित्यं पञ्चपर्वसु पूजयेत् ।। ११।**

(व्या) सर्वतीर्थाभिमानिदेवाः वृन्दावने धवळसरोवरे च सन्ति । सर्ववनदेवताश्च वृन्दावने सन्ति । उपलक्षणया त्रयस्त्रिंशत्कोटिदेवाः इन्द्रादयः मेर्वादिगिरिमानिदेवाश्च अत्र सन्ति । बदर्यादिक्षेत्रदेवाश्च । क्षेत्रस्थभगवद्रूपाणि इतरदेवतारूपाणि च अत्र सन्ति । बिन्दुमाधवः वेङ्कटेशः इत्यादि रूपाणां स्थितिः प्रत्येकं प्रतिपाद्यते ।। एवं सन्निधानाधिक्यात् **वृन्दा-वनमिदं** मुक्तियोग्यानां श्रद्धादिगुणयुक्तानां **सर्वाभीष्टप्रदम्** ।। ९-१० ।। पर्वकाले, द्वादशी, सङ्क्रमण, अमापौर्णिमाख्य पञ्चपर्वकाले; कुहूयोग, सिनीवालीयोग, पद्मकयोग, अर्धोदयादि विशेषयुक्तकाले देवानां सन्निधानविशेषो ज्ञातव्यः, पञ्चरूपात्मकहरियुक्तत्वात् । अहं ब्रह्मा च इत्युक्तरीत्या पञ्चभिः लोकानुग्रहार्थं वृन्दावनेस्थितत्वज्ञापकत्वाच्च ।। तस्मात् **पञ्चम्यां** नित्यं नियमेन पूजां कुर्यात् ।। ११ ।।

**धूपैर्दीपैस्तथा माल्यैः गन्धैर्दूर्वाक्षतादिभिः ।**
**पञ्चभक्ष्यसमायुक्तं पञ्चामृतसमन्वितम् ।। १२ ।।**

**पञ्चखर्जूरसंयुक्तं नैवेद्यं विनिवेदयेत् ।**
**एवं सम्पूज्यमानोहं दद्यां वरमनुत्तमम्।।१३**

**तस्मात् वृन्दावने पुण्ये पञ्चपर्वसु पूजनम् ।**
**दर्शनं सुजनानान्तु सर्वाघौघविनाशनम् ।। १४ ।।**

(व्या) पूजा तु भक्तानाम् अर्चकद्वारा । श्रीपादानां द्वारा वा कार्या ।। १४ ।।

ग्रन्थकर्त्रादिकमाह – **वादिराजाख्येत्यादिना ।।**

**वादिराजाख्ययतिना ब्राह्मणा स्वाप्नमूर्तिना ।**
**कृतं वृन्दावनाख्यानं पठतां सम्पदां पदम् ।।१९ ।।**

**वेदनिध्याख्ययतिना वादिराजेण चोदितम् ।**
**स्वाप्नं वृन्दावनाख्यानं लिखितं प्रीतये गुरोः ।। १६ ।।**

(व्या) ब्राह्मणस्वप्ने उपदेशपदं मूर्तिः यस्य तथोक्तः । तेन गुरुणा श्वेतद्वीपवर्ति-हर्याज्ञानुसारेण देवकार्यार्थं रचितम् । असुरैः क्रियमाणपुण्यापहारं त्याजयित्वा, अन्तःकरणात् कल्यादीन् निष्कासयित्वा, हयग्रीवादिरूपिणः हरेः प्रसादविशेषं सेवकसज्जनेषु प्रापणार्थम् आज्ञानुसारेण लातव्येन ऋजुना रचितम् ।। ''शतानन्दं मुकुन्दावसितं वदन्'' (३-९८) इति तेनैवेदं सूचितम् । वेदनिध्याख्ययतिना गुरुराजप्रशिष्येण एतानि षोडशपद्यानि शिलायां लेखयित्वा स्थापितानि । सा शिला श्रीवेदवेद्यवृन्दावनपुरतः स्थापिता वर्तते । एवम् अणु-वृन्दावनाख्यानं सम्पूर्णम् । तथापि श्लोकद्वयं पूर्वोक्तषोडशपद्यैः सह पठ्यते साम्प्रदायिकैः । तच्च वक्ष्यते – माता राजेत्यादिना ।।

**माता राजा मत्पिता वादिराजो भ्राता राजा मत्सखा वादिराजः ।**
**सर्वस्वं मे वादिराजो दयालुः नान्यद् दैवं नैव जाने न जाने ।। १७ ।।**

**हरिभक्तिदयाम्बोधितरळक्रीडनोत्सुकाः ।**
**गुरवो वादिराजार्याः करुणां वितरन्तु मे ।। १८।।**

(व्या) यथा मातृवान् अन्नपाचनार्थं न यतते । पितृवान् स्वापेक्षितधनसम्पादनार्थं न यतते किन्तु मात्रादीनाम् अपेक्षितरीत्या स्वव्यासङ्गादिषु आसक्तः सन् वर्तते । एवं गुरुराजे प्राप्तमात्रादिभावः अधिकारी सर्वदा गुरुराजसेवां कुर्वन् गुरुराजेष्टहरिवायुसेवायां श्रवणमननादिषु युक्तिमल्लिकाव्याख्यानादिषु आसक्तः सन् वर्तते । एवं रीत्या शरणागतस्य गुरुराजः सर्वदा पालक एव ।। श्रीः ।।

।। इति श्रीमदणुवृन्दावनाख्यानं सम्पूर्णम् ।। श्रीमध्वेशार्पणमस्तु ।।

।। श्रीहनुमद्भीममध्वान्तर्गतनरहरिरामकृष्णवेदव्यासाय नमः ।।

## ।। श्रीमत्स्वाप्नवृन्दावनाख्यानम् ।।

## ०१-००- प्रथमोऽध्यायः

श्रीगुरुराजो विजयते ।

।।श्रीः।। मङ्गलमस्तु ।

ॐ लक्ष्मीकान्तं भूवराहं भजेऽहं बादरायणम् ।
वादिराजहृदंभोजमन्दिरं वाजिकन्धरम् ।।१।।
भीमसेनानन्दतीर्थवानरेन्द्रानहं भजे ।
वादिराजगुरून् वन्दे वेदवेद्यगुरून् भजे ।।२।।
गुरून् वेदनिधीन् वन्दे नारसिंहगुरून् भजे ।
वन्दे नारायणाचार्यान् कर्णादिगणसेवितान् ।।३।।
वन्दे वृन्दावनाचार्यान् हयग्रीवमुनीन् भजे ।
शेषसीतापतिव्यासान् प्रणमामि गुरुप्रियान् ।।४।।

**हरिः ॐ –**

**हयग्रीवं चिदानन्दविग्रहं सदनुग्रहम् ।**
**दशग्रीवच्छिदं शापान्मणिग्रीवविमोचनम् ।।१।।**

**सुग्रीवाभयदं सम्यगुग्रसेनविभूतिदम् ।**
**उग्रविग्रहहन्तारं भक्ताभयकरग्रहम् ।।२।।**

**स्वनामग्रहणादेव निरस्तग्रहविग्रहम् ।**
**वृन्दावनगतं वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् ।।३।।**

अन्वयः – चिदानन्दविग्रहं सदनुग्रहं दशग्रीवच्छिदं शापान्मणिग्रीवविमोचनं, सुग्रीवाभयदं उग्रसेनविभूतिदं, उग्रविग्रहहन्तारं, भक्ताभयकरग्रहं, स्वनामग्रहणादेवनिरस्तग्रहविग्रहं, ब्रह्मरुद्रेन्द्रवन्दितं, वृन्दावनगतं हयग्रीवं (अहं) सम्यग् (भक्त्या) वन्दे ।।१-३।।

(व्या) अत्र **हयग्रीवं (भक्त्या[१]) वन्दे** इति योजना । उत्तमपुरुषप्रयोगात् अहम् इति लभ्यते । **हयग्रीवपदेन**[२] ब्रह्मत्वप्रयोजकम् इष्टत्वं सूचयति (हयग्रीवस्य गुरुराजेष्टदेवत्वात्।) विशिष्टत्वसूचनाय **ब्रह्मरुद्रेन्द्रवन्दितम् इति ।।** ब्रह्म च ब्रह्मा च ब्रह्मणौ तौ च रुद्रश्चेन्द्रश्च ब्रह्मरुद्रेन्द्राः । तैर्वंद्यम् । **"मम योनिर्महद्ब्रह्म तस्मिन् गर्भे ददाम्यहम्"** इत्युक्तेः नपुंसकब्रह्मशब्दो रमावाचकः । ततश्च रमाब्रह्मरुद्रेन्द्रादिवन्दितत्वेन सर्वोत्तमत्वं सिद्धम् ।

अकृतत्वसूचनाय **वृन्दावनगतम् इति ।** वृन्दावने सन्निहितस्य श्रीहयग्रीवस्य एव एतद्ग्रन्थप्रतिपाद्यत्वात् । यद्यपि अन्येषां विशेषणानां स्तुत्यर्थत्वात् प्रयोजनान्तरं न अन्वेषणीयम् । तत्र अनिष्टनिवृत्यर्थं **'स्वनामग्रहणादेव निरस्तग्रहविग्रहम्'** इति । **स्वनाम** हयग्रीवनाम्नः ग्रहणं, उच्चारणं, ज्ञानं वा । तत एव **निरस्तः** परिहृतः । 'ग्रहाणां विग्रहो देवो युद्धरूपो वा येन तम् । भक्तानां प्रारब्धकर्मवशेन पैशाचजन्मसमये श्रीहयग्रीवनामज्ञानेन (मन्त्रजपेन वा) तन्निवृत्तिः भविष्यति इति भावः । इष्टप्राप्त्यर्थं **चिदानन्दविग्रहं सदनुग्रहम्** इति । **"आनन्दादयः प्रधानस्य"** (ब्र.सू. ३/३/५,१२) इत्युक्त'सच्चिदानन्दत्वम्' अनेन उक्तं भवति । [३]सदनुग्राहकस्य अतिशयेन सत्वस्य आत्मशब्दार्थस्वामित्वस्य च सिद्धत्वात् ।

वृन्दावने दक्षिणपश्चिमउत्तरभागस्थितश्रीहनुम-भीम-मध्वोपास्यश्रीरामकृष्णवेदव्यासात्मकत्वेन पूर्वभागस्थितस्वोपास्यश्रीहयग्रीवस्य भक्तैः भजनीयत्वसूचनाय **'दशग्रीवच्छिदम्'**

---

(१) भक्त्या = इति शब्दः उपस्करणीयः । 'सोपस्कराणि हि वाक्यानि भवन्ति' इति जैमिनीयमीमांसातत्वविदो वदन्ति ।

(२) **'तस्माद्वेदाः समुत्पन्ना विद्याख्या मूलिका श्रुतिः ।**
**सर्वोपनिषदश्चैव पञ्चरात्राख्यसंहिताः ।**
**ब्रह्मसूत्राणि वेदानां व्याख्यास्तासां च विस्तरः ।**
**वेदानां व्याख्यास्तासां च विस्तरः । सर्वमेतज्जगच्चैव निःसृतं तुरगाननात् ।।'**

इति बृहदारण्योपनिषद्भाष्यवचनात् 'समं सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम्' इति प्रशंसितस्य अस्य आख्यानस्य मङ्गलाचरणं श्रीहयग्रीवस्मरणेन कृतम् इति विशेषः ।

(३) सदनुग्राहकस्य = सताम् अनुग्रहकारकः; 'सताम् = ऋजूनाम्' इत्यर्थः । 'प्राणः सद्' इति श्रुतेः । भाविप्राणः सत् ।

इत्यादि विशेषणादीनि । तत्र **'दशग्रीवच्छिदम्'** इति अनिष्टनिवृत्त्यर्थम् । इष्टप्राप्त्यर्थं **सुग्रीवाभयदम्** इति श्रीरामविशेषणम् । शापात् तरुभावप्रापकात् **मणिग्रीवविमोचनं** – मणिग्रीवविमोचकम् । (रमायाः रमणकं) रमाया रमणमिति यावत् ।१।

**सम्यगुग्रसेनविभूतिदम्** – उग्रसेनस्य कंसपितुः ऐश्वर्यप्रदम् । **सम्यक्**पदेन पुत्रवधस्य व्यसनहेतुत्वाभावः सूचितः । अत्र आद्यम् अनिष्टनिवृत्त्यर्थम् । द्वितीयम् इष्टप्राप्त्यर्थं श्रीकृष्ण-विशेषणम् । **उग्रविग्रहहन्तारं**(१) ग्रहः = ज्ञानम् । वि = तत् विरुद्धो विग्रहः अज्ञानमिथ्या-मतिरूपः । 'उग्रः' इष्टप्रतिबन्धकत्वात्, अनिष्टसाधनत्वात् च क्रूरः । स चासौ विग्रहश्च तथोक्तः । तस्य सतां मनसि निलीनस्य हन्तारम् । सच्छास्त्रशस्त्रेण संहर्तारं इति वा । **भक्ताभयकरग्रहं** – भक्तानाम् अभयं करोति इति तथोक्तः । तादृशः ग्रहः ज्ञानं येन स तथोक्तः । **'तर्काभयेतम्'** इति उक्तं भवति । अत्रापि आद्यम् अनिष्टनिवारकं द्वितीयम् इष्टप्रापकं श्रीबादरायणविशेषणं (उग्रविग्रहहन्तारं) क्रूरशरीरयुक्तमधुदैत्यघातकम् । शङ्खाक्ष-पुस्तकसुबोधयुतबाहुभिः भक्तानाम् अभयप्रदकरग्रहणदातारं इति श्रीहयग्रीवविशेषणं च ।२।

### नान्दीपद्याष्टकम् -
### ब्रह्मसूत्राणां प्रथमाध्यायस्य अर्थविवरणम् ग्रीवापर्यन्तवर्णनम्

अत्र नान्दीपद्याष्टके **'वृन्दानगतं वन्दे'** इति चतुर्वारोक्त्या भागचतुष्टयम् । तत्र प्रथमभागे 'इन्द्रो रुद्र' इत्यादि उत्तरग्रन्थानुसारेण, **ब्रह्मरुद्रेन्द्रवन्दितम्** इति विभागात् लक्ष्मीवाचकब्रह्मपदघटितब्रह्मरुद्रेन्द्रवन्दितम् इति ब्रह्मपदेन श्रीहयग्रीवस्य(२) सर्वोत्तमत्व-

---

(१) **'उग्रोऽसुरान् प्रति'** इति ऋग्भाष्यम् (३-३६-१८), **'उग्रोऽसुरान् प्रति देवश्चेत्युग्रदेवः'** इति श्रीजयतीर्थविरचितऋग्भाष्यटीका (३.३६.१८)

(२) हयग्रीवपदस्य 'ओहाक् त्यागे' इति धातोः हकारः = पारतन्त्र्यादिनिखिलदोषराहित्यवाची । यातेर्गत्यर्थत्वात्' यो = ज्ञानवाची । हयाः = निर्दोषज्ञानात्मिका । ग्रीवा = तदुपलक्षित सर्व अवयवाः यस्य स इति विग्रहः । ॐ उषावा अश्वस्य मेधस्य शिरः –

**'अश्वस्वरूपो ब्रह्माऽभूदश्वरूपात् जनार्दनात् ।**
**तत्र सन्निहितो विष्णुः अश्वरूपः स्वयं प्रभुः ।**
**तयोश्च प्रतिमा मेध्यो यतोऽश्वोऽयं श्रुतौ श्रुतः ।**
**सर्वं जगत्तदङ्गेषु तस्मात् सन्निहितं स्मृतम् ।**
**तयोरङ्गेष्विदं यस्मात् जगत्सर्वं प्रतिष्ठितम् ।' – इति प्रधाने (बृ.अश्वब्राह्मणम्)**

सिद्ध्यर्थगुणपूर्णत्वरूपः[१] प्रथमाध्यायार्थः उक्तः । श्रीहयग्रीवपदेन ग्रीवापर्यन्तं वर्णनं कृतम् ।।१,२,३।।

---

(१) श्रीहयग्रीवस्य सर्वोत्तमत्वं तु श्रीमदाचार्यैः बृहदारण्योपनिषद्भाष्ये मधुब्राह्मणे वर्णितम् । तद्यथा **भगवतो रूपं रूपं प्रति जीवाख्यः प्रतिबिम्बो बभूव । बभूवेति सदेव सोम्येदमग्र आसीदिति-वदनादित्वार्थे ।**

'सुखदा सर्वभूतानां पृथ्वी मधुवदुच्यते ।
पृथिव्याश्चैव भूतानि तथा सर्वाश्च देवताः ।
पृथिव्यादिषु देवेषु शरीरादिषु च स्थितः ।
एक एव परो विष्णु**र्हयशीर्षस्वरूपधृत् ।**
अनन्ततेजा नित्यश्च स एव ब्रह्म सर्वगः ।
तदेव गुणपूर्णत्वाद्ब्रह्म सर्वमनूनतः ।
आत्मनामा परो विष्णुः सर्वगो यः प्रकीर्तितः ।
स एव हयशीर्षाख्यस्त्वधिदैवादिषु स्थितः ।
अराणामाश्रयौ यद्वद्वहिरन्तः प्रतिष्ठितौ ।
नाभिनेमी तथा विष्णुर्जीवानामाश्रयः स्थितः ।
स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः ।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः ।
भूताख्यः सर्वजीवानां विरिञ्चानां च सर्वशः ।
आत्मनाम्नां स एवैको राजाऽधिपतिरेव च ।
स्वामित्वाद्राजशब्दोऽयमाधिक्यात्पालनात्तथा ।
अधिपश्चेति सम्प्रोक्तः पुरुषः पुरुषस्थितेः ।
पुराख्येष्वेव देहेषु हृत्पुर्यपि वसत्यसौ ।
नानेन किञ्चिदव्याप्तं नानेनाच्छादितं न च ।
नैवास्मात्पूर्वकं किञ्चिन्नैवास्मादपरं तथा ।
सर्वस्माद्बाह्यतश्चासौ सर्वस्मादन्तरस्तथा ।
व्याप्तेरात्मेति सम्प्रोक्तो ब्रह्मेति गुणपूर्तितः ।
स सर्वस्यापरोक्षज्ञ इति वेदानुशासनम् ।'' इति ।

अविरोध्यायप्रतिपादितदोषदूरत्वसमर्थनम् - बाहूनां वर्णनम्

**शक्रराज्यप्रदातारं चक्रशङ्खधरं हरिम् ।**
**नक्रमोचितहस्तीन्द्रं वक्रबुद्धिविदारणम् ।।३।।**

**शुक्रे वक्रेपि हर्तारं बलिराज्यं महाप्रभुम् ।**
**वृन्दावनगतं वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् ।।४।।**

**अन्वयः – शक्रराज्यप्रदातारं, चक्रङ्खधरं, नक्रमोचितहस्तीन्द्रं, वक्रबुद्धिविदारणं, शुक्रे वक्रेपि, बलिराज्यं हर्तारं, महाप्रभुं, ब्रह्मरुद्रेन्द्रवन्दितं, वृन्दावनगतं (श्रीहयग्रीवं अहं) वन्दे ।।**

**(व्या)** ग्रीवावर्णनानन्तरं सङ्गतं बाहुवर्णनम् । प्रथमाध्यायार्थकथनानन्तरं सङ्गतं द्वितीय अध्यायार्थदोषातिदूरत्वस्य कथनं द्वितीयभागे । **शक्रराज्यप्रदातारम् –** शक्रस्य कुशत्वेन अवतीर्णस्य श्रीरामरूपेण **राज्यप्रदातारम् ।** अर्जुनत्वेन अवतीर्णस्य श्रीकृष्णरूपेण राज्य-प्रदातारम् । टीकाचार्यत्वेन अवतीर्णस्य श्रीमदाचार्यसन्निहितश्रीबादरायणरूपेण वेदान्तविद्या-रूपराज्यप्रदातारम् । स्वान्तर्गतश्रीहयग्रीवरूपेणापि धारकम् । मूलरूपिण इन्द्रस्य श्रीवामनरूपेण राज्यप्रदातारम् । **'चक्रशङ्खधरम्'** चक्रशङ्खयोः भरतशत्रुघ्नत्वेन अवतीर्णयोः श्रीरामरूपेण धारकम् । प्रद्युम्न-अनिरुद्धरूपेण अवतीर्णयोः श्रीकृष्णरूपेण धारकम् । बाहुमूले अङ्कनीयत्वेन श्रुत्यादिसिद्धयोः श्रीमदाचार्यसन्निहितश्रीबादरायणरूपेण धारकम् । (पूर्वभाग-स्थितलातव्यात्मकश्रीमद्वादिराजगुर्वन्तर्गत)स्वान्तर्गतश्रीहयग्रीवरूपेणापि धारकमित्यर्थः । **हरिं** दुर्जनसंहारकत्वाद् हरिः, तं दोषातिदूरम् इत्यर्थः । **नक्रमोचितहस्तीन्द्रम् –** नक्रात् मोचितः हस्तीन्द्रः गजेन्द्रः येन स तथोक्तः, तम् । **वक्रबुद्धिविदारणम् –** वक्रबुद्धीनां रावणादीनां कंसादीनां कल्यादीनां मधुप्रभृतीनां च विदारणं येन सः तथोक्तः, तम् ।।४।।

**शुक्रे वक्रेपि हर्तारं** – शुक्रे वक्रे सति अपि, राज्यप्रदानप्रतिबन्धके सति अपि, **बलिराज्यं** – **बलिराज्यं** बलिराज्यस्य **हर्तारम्** अपहर्तारम् । षष्ठ्यर्थे द्वितीया । महाप्रभुं महतां शक्रादीनां बल्यादीनां च प्रभुम् । एवं राज्यदान-अपहरण, चक्रशङ्खधारण, भक्तभय-परिहरणकथनेन बहुशालिताम् अतिशयिताम् उक्त्वा, **हरि**पदेन दोषपरिहारित्वकथनेन दोषातिदूरत्वमपि उक्तं भवति ।।५।।

ऊरूवर्णनं, तृतीयाध्यायार्थज्ञेयत्ववर्णनम्

**त्रिवक्रानुग्रहं देवं त्रिजगद्वन्द्यविग्रहम् ।**
**त्रिवेदवेद्यविभवं त्रिलोकानामथेश्वरम् ।।६।।**

**त्रिविक्रमं त्रिकालज्ञं त्रिधामानमथाच्युतम् ।**
**त्रिदशानुग्रहं देवं त्रिपुरघ्नभयापहम् ।**
**वृन्दावनगतं वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् ।**

**अन्वयः – त्रिविक्रानुग्रहं, देवं, त्रिजगद्वन्द्यविग्रहं, त्रिवेदवेद्यविभवं, अथ त्रिलोकानां ईश्वरं, त्रिविक्रमं, त्रिकालज्ञं, त्रिधामानं, अथ अच्युतं, त्रिदशानुग्रहं, देवं, त्रिपुरघ्नभयापहं, ब्रह्मरुद्रेन्द्रवन्दितं, वृन्दावनगतं (अथ पुनः पुनः हयग्रीव-महं) वन्दे ।**

**(व्या)** तदनन्तरसङ्गतोरुवर्णनेन तृतीयाध्यायार्थज्ञेयत्वकथनार्थश्च **त्रिवक्रेत्यादि** तृतीयो-भागः । **'त्रिवक्रानुग्रहं'** त्रिवक्रायाम् अनुग्रहो यस्य तम् । **देवम्** = तत्सम्भोगानुकूलक्रीडादि-गुणवन्तम् । **'त्रिजगद्वन्द्यविग्रहम्'** । लोकत्रयस्तुत्यविग्रहो देहः, रावणकलिकंसमधुप्रभृतीनां हननसाधनयुद्धरूपो वा, विशेषज्ञानरूपो वा यस्य सः तम् । [१]**त्रिवेदवेद्यविभवं** त्रिषु भूरादिषु वेदवेद्यविभवाः **''भूरित्यग्नौ प्रतितिष्ठति''** इत्यादिवेदवेद्यविभूतिविशेषाः यस्येति वा । त्रिभिः प्रणवावयवैः अकारोकारमकारैः भूरादिभिः व्याहृतिभिः गायत्रीपादैः पौरुषसूक्तवर्गैर्वा उक्ताः वेदवेद्यविभूतिविशेषाः यस्येति वा । त्रिभिः ऋगादिभिः वेदैः वेद्याः विभवाः ऐश्वर्यरूपाः यस्येति वा तथोक्तः । अथ त्रिलोकानाम् ईश्वरम् **''भूरित्ययं लोकः भुवरित्यन्तरिक्षं सुव-रित्यसौ लोकः''** इत्युक्त्यनन्तरं **''ब्रह्मणा वाव सर्वे लोकाः महीयन्ते''** इत्युक्तरीत्या सर्वलोकानाम् ईश्वरम् ।।६।।

**त्रिविक्रमम्** = त्रिषु विक्रमो यस्य सः तम् । **त्रिकालज्ञम्** जागृदादिकालत्रयाभिज्ञम् । अतएव **त्रिधामानम्**[२] । **''त्रिषु धामसु यद्भोज्यम्''** इति श्रुत्युक्तानि त्रीणिधामानि

---

(१) **त्रिवेदवेद्यविभवः = त्रिसत्यः इत्यर्थः ।** तथाहि तन्त्रभागवतम् –
**'वेदमुख्यार्थरूपत्वात् त्रिसत्यो भगवान् हरिः –** इति भाग.ता.नि. (१०.३.२३)

(२) 'त्रिधामा = त्रिपाद' इत्यर्थः ।

स्थानानि दक्षिणाक्षि मनो हृदयरूपाणि यस्य ।

**''दक्षिणाग्निस्थितो विश्वः मनस्यन्तस्तु तैजसः ।
आकाशे च हृदि प्राज्ञः त्रिधा देहे व्यवस्थितः ।''**

इति श्रुत्युक्तस्य विश्वादिरूपस्य विष्णोः । तम् (श्वेतद्वीप, अनन्तासन, वैकुण्ठनामक-स्थानत्रयोपेतमिति वा, श्वेतद्वीपे नारायणः, अनन्तासने वासुदेवः, वैकुण्ठे वैकुण्ठनाम-स्वरूपांशत्रयोपेतमिति वा, तम्) । अथ अवस्थात्रयातिक्रमानन्तरम् । अच्युतम् न च्युताः, नाशरहिताः (जीवाः) येन तुरीयरूपेण हरिणा सः तम् । **त्रिदशानुग्रहम्** त्रिदशेषु तदुप-लक्षितमुक्तियोग्येषु प्रागुक्तानुग्रहो यस्य सः तम् । **त्रिपुरघ्नभयापहम्** – त्रिपुरघ्नस्य शिवस्य भस्मासुरादेः प्रसक्तभयपरिहारकम् । एवं (त्रिवक्रानुग्रहेन =) त्रिवक्रासम्भोगकथनेन तदुप-युक्तक्रीडादिगुणसम्पन्नत्वेन, त्रिजगद्वन्द्यशब्दोक्तसौन्दर्यसारत्वेन, रमणोपपादकत्वेन, नटन-सूचकेन त्रिपुरघ्नभयापहशब्देन उपविष्टत्वबोधकैः त्रिवेदवेद्यमित्याद्यैः सप्तभिः पदैः ऊरु-वर्णनम् । **वेद्य**शब्देन तृतीयाध्यायज्ञेयत्वकथनं च कृतं भवति ।७।

### पादवर्णनम् - चतुर्थाध्यायार्थगम्यत्ववर्णनम्

**(व्या)** ऊरुवर्णनानन्तरसङ्गतपादवर्णनार्थः तृतीयाध्यायार्थज्ञेयत्ववर्णनानन्तरसङ्गततुरीया-ध्यायार्थगम्यत्ववर्णनार्थश्चतुर्थो भागः – **वृन्दावनगतं देवमित्यादि ।**

**वृन्दावनगतं देवं मन्दाकिन्याः पदं हरिम् ।
कन्दाशनमनोगम्यं वृन्दारकसमन्वितम् ।।९।।**

**अमन्दानन्दसन्दोहं मन्दारस्यापहारिणम् ।
वृन्दावनगतं वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् ।।१०।।**

**(अन्वयः) – (यमुनातीरे प्रसिद्ध) वृन्दावनगतं देवं मन्दाकिन्याः पदं हरिं कन्दाशनमनोगम्यं वृन्दारकसमन्वितम् अमन्दानन्दसन्दोहं मन्दारस्य अपहारिणं ब्रह्मरुद्रेन्द्रवन्दितं वृन्दावनगतं (हयग्रीवं अहं) वन्दे ।**

**(व्या) वृन्दावनगतं देवं** – यमुनातीरे प्रसिद्धवृन्दावनगतं, रासक्रीडादिगुणवन्तम् ।

---

**'अनन्तासनवैकुण्ठक्षीराब्धिस्थो हरिस्त्रिपात्'** इति भाग.ता.नि. (३.१०.१६)

**मन्दाकिन्याः** काशीतलवाहिन्याः **पदम्** = आश्रयः तम् । तत्क्षेत्रस्थरुद्रोपास्यरामात्मकम् । गङ्गाजनकतीर्थपादम् ॥८॥ (**हरिं** = पापहारिणम्, भागीरथीहृदिस्थहरिनामकम् ।) **कन्दाशनमनोऽगम्यम्** – कन्दाशनानां मुनीनां मनोभिः गम्यं बादरायणम् (कर्षन्नङ्घ्रियुगं - (रु.वि.३) इत्युक्तरीत्या मुनीन्द्रैः मनसा ध्यातपादपद्मं कृष्णं इति वा । मनोगम्यं साकल्येन अज्ञेयमिति वा) **वृन्दारकसमन्वितं** = विशर्वपूर्वगीर्वाणैः समन्वितम् । **हरिम्** बन्धापहारिणम् । **(अमन्दानन्दसन्दोहम्)** अमन्दाः पूर्णाः निरवधिकाः ते च ते आनन्दाश्च । तेषां सन्दोहः समूहः यस्य तम्; अमन्दानां मुक्तानाम् आनन्दसन्दोहो येनेति वा । तम् । **मन्दारस्य** = मन्दारोपलक्षितस्य कल्पवृक्षस्य । **अपहारिणम्** कल्पवृक्षमूले शेषपर्यङ्के अमृताभिषिक्ततया उपविष्टत्वेन पुराणप्रसिद्धं हयवदनमित्यर्थः[१] ।

एवं **मन्दाकिन्याः**[२] **पद**मिति पादवर्णनम् । **कन्दाशनमनोगम्यं, हरिम्, अमन्दानन्दसन्दोह**मिति पदत्रयेण पादवर्णनं गम्यत्वकथनं च कृतम् । चतुर्थाध्यायार्थश्च उक्तो भवति ।

### विशेषणगळल्लि अनिष्टनिवृत्ति, इष्टप्रदत्वद विवर

**शक्रे**त्यादि द्वितीयभागे त्रीणि अनिष्टनिवर्तकानि, इष्टप्रापकाणि त्रीणि । **त्रिवक्रे**त्यादि तृतीयभागे एकम् अनिष्टनिवर्तकम्, तदन्यानि इष्टप्रापकाणि । **वृन्दावनगतं देव**मित्यादि तुरीयभागे एकम् अनिष्टनिवारकम्, अन्यानीष्टप्रापकाणि । **मन्दानाम्** अज्ञानाम् अरस्य दोषसमूहस्य **अपहारिणामि**त्यनुसन्धाने तु एतदुभयार्थकम् ॥९॥

### आत्मस्तोत्रदिन्दुण्टागुव आत्मस्तोत्रजदोषपरिहार

**आत्मस्तोत्रजदोषं तमात्मस्तोत्रं विनाशयेत् ।**

---

(१) वन्दे तुरङ्गवदनं शशिबिम्बसंस्थं चन्द्रावदातममितात्मकरैः समन्तात् ।
अण्डान्तरं बहिरपि प्रतिभासयन्तं शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम् ॥
नस्तो मुखादपि निरन्तरमुद्गिरन्तं विद्या अशेषत उताब्जभवेशमुख्यैः ।
संसेव्यमानमतिभक्तिभरावनम्रैर्लक्ष्म्याऽमृतेन सततं परिषिच्यमानम् ॥
– तन्त्रसारोक्तहयग्रीवध्यानम्

(२) यस्मात् पदात् = पादात् मन्दाकिनी = गङ्गा समुद्भवति तत् - 'मन्दाकिन्याः पदम्' इत्यलौकिकप्रयोगः ।

**(अन्वयः) तम् आत्मस्तोत्रजदोषं आत्मस्तोत्रम्[१] एव विनाशयेत् ।**

**(व्या)** एतत् स्तोत्रपारायणस्य फलमाह – **आत्मेति ।।** ''आत्मानः जीवाः ब्रह्मादयः प्रोक्ताः आत्मैकस्तु जनार्दनः'' इति स्मृत्यर्थानुसन्धानसहकृतब्रह्मरुद्रेन्द्रवन्दितत्वेन सूचितस्य परमात्मनः स्तोत्रं स्तुतिः । **तं** = प्रसिद्धम् आत्मस्तोत्रजदोषम् । आत्मनां जीवात्मनां परमात्मैक्यसाम्याधिक्यादिकथनरूपेण स्तोत्रेण जातं दोषं (स्वप्रशंसाजनितदोषं वा, स्वस्मिन्, जीवान्तरे वा स्वातन्त्र्यारोपेण अहं बलवान्, सुखी, सिद्धोऽहं, त्वं शूरः इत्यादि कथनेन जातं दोषं वा।) **विनाशयेत् ।** अयं च दोषः रुद्रादिजीवेष्वेव सम्भावितः; गुरुराजस्य तु विलीनप्रकृतितया अन्तरायप्रसक्त्यभावात् । अज्ञानां बोधनार्थं कृतस्य क्वापि दोषानापादकत्वात् । भागवतत्वेन प्रामाणिकस्तोत्रस्य सुकृतापादकत्वात्[२] । एतैः पद्यैः अन्यैः कृतं स्तोत्रं तदीयदोषं विनाशयेदिति भावः ।।१०।।[३]

---

(१) **आत्मस्तोत्रम्** = श्रीविष्णुस्तोत्रम् इत्यर्थः । तथाहि श्रीमदनुव्याख्यानम् – (१.३.१)

**'विष्णावेवाऽत्मशब्दस्य रूढत्वान्न शिवादिकान् ।**
**श्रुतिर्वक्ति ......'** इति ।

आत्मस्तोत्रजदोषम् = स्वस्य प्रशंसाजनितदोषम् इत्यर्थः ।

(२) (सुकृतआधायकत्वात् – पा)

(३) **प्रक्रमवत्स्वसत्कृतं पुरुषेषु धीषु तु बहिरन्तरसञ्चरणे ।**
**तव पुरुष वदन्त्यखिलशक्तिधृतः स्वकृतम्** ।। – भागवतम् (१०.९४.२१)

*** सर्वपुरुषेषु सर्वधीषु च स्थित्वा श्रीब्रह्मादिषु प्रकर्षेण क्रमेण स्वात्मनैव सत्कृतं अण्डाद्यन्त-र्बहिश्च असञ्चरणे पापाचारे स्थित्वा पापाचारमपि स्वात्मनः पूजात्वेनैव कारयन्तं त्वां वदन्ति । तस्याधोगत्यर्थम् । तस्मात्सर्वं तव स्वकृतमेव वदन्ति ।**

**'नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।**
**न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च' इत्याद्या श्रुतिः ।।**

**'श्रीब्रह्मरुद्रपूर्वेषु क्रमात्स्थित्वा जनार्दनः ।**
**स्वात्मानमर्चयत्यद्धा बहिरन्तरसत्सु च ।**
**असतामधमाचारो हरिदृष्ट्याऽऽत्मपूजनम् ।**
**तस्याधोगमनायेति श्रुतिराहाखिलक्रियम्' इति तन्त्रभागवते ।**
**स्वकृतमित्यनन्यापेक्षया ।।** – भागवततात्पर्यनिर्णयम् ।

वृन्दावनसन्निहितदेवोपदेवाः

**इन्द्रो रुद्रः कुबेरश्च यमो वरुण एव च ।**
**अग्निर्निर्ऋतिर्वायुश्च चन्द्रसूर्यादयो ग्रहाः ।।११।।**

**देवोपदेवा भूदेवा नरदेवाश्च सर्वशः ।**
**सकलत्राः सपुत्राश्च सर्वे सपरिवारकाः ।।१२।।**

**गीतवादित्रनृत्यैश्च जयशब्दपुरस्कृतैः ।**
**नानोपहारबलिभिः ब्रह्मघोषोपबृंहितैः ।।१३।।**
**उपासते हयग्रीवं वृन्दावनगतं सदा ।**

(अन्वयः) इन्द्रः रुद्रः कुबेरः यमः वरुण एव च; अग्निः निर्ऋतिः (कोणपो) वायुः, चन्द्रः, सूर्य आदयः ग्रहाः । देवाः उपदेवाः भूदेवाः नरदेवाः सर्वशः सकलत्राः सपुत्राः सर्वेश्च सपरिवारकाः । गीतवादित्रनृत्यैः जयशब्दपुरस्कृतैः नाना उपहारबलिभिः ब्रह्मघोषउपबृंहितैः च वृन्दावनगतं हयग्रीवं सदा उपासते ।

(व्या) स्वस्य ऋजुत्वोपपादनाय रुद्रादिनिखिलदेवोपास्यविष्णुप्रतीकत्वम्, तत्स्थत्वेन हयग्रीवोपासनम्, समस्तदेवानां क्षेत्राभिमानिनां वनाभिमानिनां पर्वताभिमानिनां तीर्थाभिमानिनां च वृन्दावने सन्निहितत्वं भक्तैर्भजनीयत्वे तात्पर्यनिश्चायकमुच्यते – **इन्द्रोरुद्र इत्यादिना** ।। वृन्दावने पूर्वोत्तरभागस्थितयोः हयवदनबादरायणयोः तदुपासकयोः वादिराजमध्वयोः यतिरूपयोरुपस्थितत्वेन, दिक्पालकयोरिन्द्रकुबेरयोः तन्मध्यस्थस्य रुद्रस्य इन्द्रगुरुत्वेन कुबेरसखित्वेन उपस्थितस्य च इन्द्रोरुद्रःकुबेरश्चेति प्रथमोक्तिः । बलकार्यत्वेनोपस्थितयोः दक्षिणपश्चिमभागस्थयोः रामकृष्णयोः तदुपासकयोर्हनुमद्भीमयोरुपस्थित्यनुसारेण **यमो वरुण एव चे**त्युक्तिः । तदनन्तरमवराणाम् अग्न्यादिकोणपानाम् उक्तिः । एवकारः समुच्चयार्थः ।।११-१३।।

**त्रयस्त्रिंशच्च कोटीनां देवाः सन्निहिताः सदा ।।१४।।**

**मम वृन्दावने पुण्ये हयग्रीवस्य चाज्ञया ।**
**तीर्थानामुत्तमं तीर्थं वनानामुत्तमं वनम् ।।१५।।**

**क्षेत्राणामुत्तमं क्षेत्रं मम वृन्दावनं द्विज ।**

(अन्वयः) हयग्रीवस्य आज्ञया मम वृन्दावने त्रयस्त्रिंशत् कोटीनां देवाः सदा सन्निहिताः ।। मम वृन्दावनं तीर्थानाम् उत्तमम्, वनानाम् उत्तमम्, क्षेत्राणाम् उत्तमम् (अस्ति) ।।

(व्या) हयग्रीवस्य आज्ञया च मम पुण्ये वृन्दावने त्रयस्त्रिंशत् कोटीनां देवाः च सदा सन्निहिताः (सन्ति)। हे द्विज! तीर्थानाम् उत्तमं तीर्थं वनानाम् उत्तमं वनं क्षेत्राणाम् उत्तमं क्षेत्रं मम वृन्दावनं (हे द्विज! सकलतीर्थाभिमानिदेवाः सकल-वनाभिमानिदेवाः सकलक्षेत्राभिमानिदेवाः मम वृन्दावने सन्निहिताः सन्ति) ।

**वनं वृन्दावनं नाम नैमिषं वनमेव च ।१६।**
**वनं चैत्ररथं नाम नन्दनं वनमेव च ।**

**वनं तु खाण्डवं नाम गुहस्य वनमेव च ।१७।**
**वनं तु पद्मकं नाम सोमनन्दिवनं तथा ।**

**ब्रह्मारण्यमितिख्यातं यद्वनं वर्तते भुवि ।१८।**
**आनन्दकाननं चेति यद्वनं वर्तते सदा ।**
**एतान्यन्यानि पुण्यानि वर्तन्ते भुवि कानिचित् ।।१९।**

**तानि सर्वाणि वर्तन्ते मम वृन्दावने द्विज ।**
**तस्माद्वृन्दावनमिदं सर्वाभीष्टप्रदं सताम् ।।२०।।**

(अन्वयः) वृन्दावनं नाम वनं, नैमिषं[१] वनं एव च । चैत्ररथं नाम वनं नन्दनं वनं एव च । खाण्डवं नाम वनं तु गुहस्य (कार्तिकेयस्य) वनं एव च । पद्मकं नाम वनं तु, तथा सोमनन्दिवनं । ब्रह्मारण्यं इति यद्वनं भुवि ख्यातं

---

(१) एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा ।
उवाच निमिषेणेदं निहतं दानवं कुलम् ।
अरण्येस्मिंस्ततस्त्वेवं नैमिषारण्यसञ्ज्ञितम् ।
भविष्यति यथार्थं वै ब्राह्मणानां निवेशनम् ।
अहं च यज्ञपुरुष एतस्मिन् वनगोचरे ।
नाम्ना याज्यो सदा च ...............(१०९-१११) – वराहपुराणम्

वर्तते (तत्) आनन्दकाननवनं इति च यद्वनं सदा वर्तते । एतानि अन्यानि पुण्यानि भुवि कानिचित् वनानि वर्तन्ते, तानि सर्वाणि (वनाभिमानिदेवाः अपि हे) द्विज! मम वृन्दावने सदा वर्तन्ते (सदा सन्निहिताः सन्ति) तस्मात् इदं वृन्दावनं सतां सर्वाभीष्टप्रदं (भवति) ।

(व्या) वनं वृन्दावनं नामेत्यादौ नामेति प्रसिद्धिमुच्यते ।१४।

वृन्दावने सन्निहितपर्वतानां वर्णनम्

**मन्दरो हिमवानद्रिर्महेन्द्रो गन्धमादनः ।**
**विन्ध्याचलोऽथ मैनाक इन्द्रकीलक एव च ।।२१**

**सुनाभः पारियात्रश्च वज्रनाभस्तथा गिरिः ।**
**श्रीपर्वतः शेषगिरिः तथा हेमगिरिः स्वयम् ।।२२**

**गोवर्धनो गोवृषश्च गोमन्तः पर्वतोत्तमः ।**
**धीरः सुरनिर्मेरुः गिरिभिः सहितो रमन् ।।२३**

**विरजो गिरिजादेवीपतेराश्रयभूश्च यः ।**
**रमापतिप्रियान् साक्षाद्देवांश्च रमयन् मुहुः ।।२४**

**उमापत्यालयेनापि मम वृन्दावनं गतः ।**
**एते चान्ये च बहवः पर्वताः पुण्यवर्धनाः ।।२५**

**मम वृन्दावने पुण्ये वसन्त्यरिधराज्ञया ।**
**तस्माद्वृन्दावनमिदं सर्वाभीष्टप्रदं सताम् ।।२६**

(अन्वयः) मन्दरः, हिमवानद्रिः, माहेन्द्रः, विन्ध्याचलः गन्धमादनः अथ मैनाकः इन्द्रकीलकः एव च । सुनाभः पारियात्रः च वज्रनाभगिरिः तथा श्रीपर्वतः शेषगिरिः तथा स्वयं हेमगिरिः । गोवर्धनः गोवृषः पर्वतोत्तमः गोमन्तः च धीरः सुरनिधिः मेरुः गिरिभिः सहितः रमन् । यः च विरजो गिरिजादेवीपतेः आश्रयभूः साक्षात् रमापतिप्रियान् देवान् च मुहुः रमयन् । उमापत्यालयेन अपि (सहितं) मम वृन्दावनगतं गतः । एते च अन्ये च बहवः पुण्यवर्धनाः पर्वताः

(पर्वताभिमानिदेवाः च) । मम पुण्ये वृन्दावने अरिधराज्ञया सन्ति तस्मात् इदं वृन्दावनं सतां सर्वाभीष्टप्रदं (भवति) ।

(व्या) विरजो गिरिजादेवीपतेराश्रयभूः = कैलासश्चेत्यर्थः । उमापत्यालयेन इत्यस्य शिवसदनाभिमानिना सहेत्यर्थः ।

गिरिः प्राणः समुद्दिष्टः तत्सुता वेदवाक् स्मृता ।
तत्पतेः वेदव्यासस्य आश्रयभूः मेरुः ।
मुमोद मेरौ च तथा बदर्यां.... (महाभारततात्पयनिर्णयः अ.१०)

इत्युक्तेः । उमापत्यालयेन कैलासेशेन (शिवेन) देवेन सह इति वा अर्थः । विगतं रजः रजोगुणकार्यं यस्मात् सः विरजः । क्लीबस्य पुंलिङ्गविशेषणत्वम् अकारान्तत्वं वा न लौकिकम् । अतः 'सुमनो भव' इत्यादिवत् गिरिविशेषणम् ।

### वृन्दवनधवळगङ्गादर्शनादेव अघनाशनम्

**गङ्गा सरस्वती कृष्णवेणी चैव महानदी ।**
**मलापहा भीमरथी कावेरी कपिला नदी ।।२७**

**गोमती गोपतेः पुत्री तथा गोदावरी नदी ।**
**मरुद्वृधा असिक्नी च शतद्रुश्च महानदी ।।२८**

**वरदा सरितां श्रेष्ठा सरयूश्च महानदी ।**
**तुङ्गभद्रेति विख्याता स्नातानां भद्रदायिनी ।।२९**

**एताः पुण्यतमानद्यः एतदन्याश्च या द्विज ।**
**पुष्करिण्यश्च याः सर्वाः सर्वाण्यायतनानि च ।।३०**

**मम वृन्दावने पुण्ये तत्पश्चात् तु सरोवरे ।**
**वसन्ति तीर्थपादस्य हयग्रीवस्य चाज्ञया ।।३१**

अन्वयः – गङ्गा, सरस्वती, महानदी, कृष्णवेणी एव च मलापहा, भीमरथी, कावेरी, कपिलानदी, गोपतेःपुत्री गोमती, गोदावरीनदी, तथा मरुद्वृधा च, असिक्नी, महानदी शतद्रुः च । सरितां श्रेष्ठा वरदा महानदी सरयूः च, स्नातानां

भद्रदायिनी इति विख्याता तुङ्गभद्रा, एताः पुण्यतमाः नद्यः अन्याश्च (नद्यः नद्यभिमानिदेवताः च) याः सर्वाः पुष्करिण्यः एतत् सर्वाणि आयतनानि (आभि- मानिदेवताः) मम पुण्ये वृन्दावने, तत् पश्चात् सरोवरे तु तीर्थपादस्य हयग्रीवस्य आज्ञया च वसन्ति ।

**तस्माद्वृन्दावनमिदं धवलाख्यं सरोवरम् ।**
**स्नानेन दर्शनेनापि सर्वाघौघविनाशनम् ।।३२**

(अन्वयः) तस्मात् (हे) द्विज इदं वृन्दावनं धवलाख्यं सरोवरं (च) स्नानेन दर्शनेन अपि सर्वाघौघविनाशनम् (विनाशकम्) ।

**(व्या) मलापहा** मलापहारिणी । **मलापहेति** प्रयोगात् हलन्तत्वात् टाबन्तः[१] **मरुद्वृधा कावेरीति** विशेषणविशेष्यभावः ।।२८-३१।। पृथक् पृथक् क्षेत्रादिदर्शनसाध्येष्टा- निष्टानिष्टकार्यसाधनत्वपरिहारसूचनाय 'तस्माद्वृन्दावनमिदं सर्वाभीष्टप्रदं सतां', 'सर्वाघौघ- विनाशनम्' इति चासकृदुक्तिः ।३२।

**समस्तग्रन्थस्य पीठप्रायभूतश्लोकः**

**(व्या)** स्वस्य विष्णुविशिष्टप्रतिमात्वोपपादकसर्वदेवोपास्यत्वज्ञातृभिः कर्तव्यमाह – **एवं निशम्येति** ।।

**एवं निशम्य मम भृत्यमुखाश्च सर्वं वृन्दावनस्य विभवं सुजनाश्च सर्वे ।**
**श्रद्धालवो विततभक्तियुता भजन्तु सर्वेष्टदं सकलपापविनाशनं तत् ।।३३।।**

(अन्वयः) एवं निशम्य मम भृत्य(स्वप्नद्रष्टृविप्रस्य)मुखात् (रचितं) सर्वं वृन्दावनस्य विभवं सर्वे सुजनाः निशम्य, श्रद्धालवः (आख्यानोक्तं सर्वं अस्ति इति निश्चितवन्तो भूत्वा) विततभक्तियुताः (सन्तः), सर्वेष्टदं सकलपापविनाशनं (विनाशकं) तत् भजन्तु ।

---

(१) (टाबन्तः ।

**वष्टि भागुरिरल्लोपम् अवाप्योरुपसर्गयोः ।**

**अपां चैव हलन्तानां यथा वाचा निशा दिशा ।** एन्दु कारिका. इल्लि अपहन्तीति अपहः स्त्रीत्व- विवक्षायां कारिकाप्रकारेण टाप् बन्दिदे. मलापहा एन्दु आकारान्तस्त्रीलिङ्ग.)

**(व्या) एवं वृन्दावनस्य** = वृन्दावने सन्निहितस्य मम, **सर्वविभवम्** = मदुपास्यं रामकृष्णवेदव्यासहयवदनात्मकं विभूतिरूपं तदुपासकत्वम्, तदनुग्रहविषयत्वम्, रुद्रादि-पूज्यत्वम्, तदनुग्राहकत्वरूपं च । **मम भृत्यमुखात्** स्वप्नद्रष्टुः विप्रस्य मुखात् । **सर्वे सुजनाः** शेषसीतापतिव्यासादयः । **निशम्य । श्रद्धालवः** = उक्तं सर्वमस्तीति (अस्माकं महत्प्रयोजनं भविष्यत्येव, पापविनाशनं स्यादेवेति) निश्चयवन्तः भूत्वा । **विततभक्तियुताः** सन्तः **भजन्तु** । किं तस्य प्रयोजनम्? यस्मात् तत् **सर्वेष्टदं सकलपापविनाशकं** च स्यात् इत्यतः शृण्वन्तु सर्वे ।

सर्वस्यापि ग्रन्थस्य पीठभूतमिदं पद्यम् । अपि चायमध्यायः सर्वाध्यायपीठभूतः । तत्कथमिति चेत्? **प्रथमाध्याये स्तुत्या भजनीयत्वस्य, द्वितीये उत्सवरूपस्य, मन्त्र-जपात्मकस्य तृतीये, सर्वसमर्पणात्मकस्य भजनस्य चतुर्थाध्याये** प्राचुर्येण निरूपणात् । **'सर्वेष्टदम्'** इत्युक्तेषु **दृष्टेष्टप्रदत्वादेः निदर्शनस्य द्वादशाध्यायादौ** निरूपणात् । जिज्ञासासूत्रवत् पीठभूतमिदं पद्यम् । प्रथमाध्यायस्य कथं समग्राध्यायपीठभूतत्वम्? इति चेदित्थम् – विप्रानुग्राहकहयग्रीवस्य शेषाद्युपास्यभगवद्रूपाणां च प्रत्येकं विशिष्टतया स्तुतत्वेन समस्ता-ध्यायोक्तानुग्राहकत्वस्य अत्र सूचितत्वात् ॥३३॥

### वृन्दावनस्थहयग्रीवस्तोत्रपारायणेन अपमृत्युपरिहारः

**इदं वृन्दावनस्तोत्रं त्रिकाले यः पठेच्छुचिः ।**
**नाकाले तस्य मृत्युः स्यात् मत्प्रसादात् न संशयः ॥३४॥**

**अन्वयः – यः शुचिः (भूत्वा) त्रिकाले इदं वृन्दावनस्तोत्रं (श्रीमद्वृन्दावना-ख्यानं) पठेत् (पठति) तस्य, मत्प्रसादात् मृत्युः अकाले न स्यात्; (अत्र) न संशयः ।**

**(व्या)** एवं वृन्दावनाचार्यनामकविप्रानुग्राहकवृन्दावनशब्दोक्तस्वान्तर्गतहयग्रीवस्तोत्र-पारायणस्य फलमाह – **इदमिति ॥ 'तं तथा यथोपासते'** इति श्रुत्या विप्रमृत्युपरिहारकत्वेन उपासकस्य अकालमृत्युनिवृत्तिर्भविष्यतीति भावः ॥३४॥

### धवलगङ्गावर्णनम्

**(व्या)** इदं वृन्दावनं कुत्र वर्तते? इति जिज्ञासूनां ज्ञापनायाह – **अश्वत्थेत्यादिना ॥**

**अश्वत्थचूतपनसाम्रसुनारिकेलधात्रीक्षुदण्डकदलीवनमध्यगा या ।**
**वृन्दावनाष्टकपिनाकिहनूमतां च मध्ये स्थिता तु धवलेति सुदिव्यनाम्नी ।।३५।।**

**गङ्गासुमङ्गलतरङ्गवती स्वभक्तपापौघभङ्गकरिणी भवाब्धेः ।**
**सा मानिनी परमपावनपावनी च वृन्दावनस्य मम पश्चिमगा विभाति ।।३६**

(अन्वयः) अश्वत्थ-चूत-पनस-आम्र-सुनारिकेल-धात्री-इक्षुदण्ड कदलीवनमध्यगा वृन्दावनाअष्टकपिनाकिहनूमतां च मध्ये या सुदिव्यनाम्नी धवलेति तु स्थिता, सुमङ्गलतरङ्गवती स्वभक्तपापौघभङ्गकरिणी भवाब्धेःतरिणी परमपावनपावनी च सा मानिनी मम वृन्दावनस्य पश्चिमगा गङ्गा विभाति ।

(व्या) सोदापुरे अश्वत्थादिवृक्षालङ्कृते वने धवळगङ्गा वर्तते ।।३५।। तत्पूर्वभागे मम वृन्दावनं वर्तते इत्युक्तं भवति ।३६।

**मुनिमन्त्रसमाहूता भीता दिव्यसरोगता ।**
**विष्णोः सुता लोकमाता सततं सुगतिः सताम् ।।३७**

(अन्वयः) मुनिमन्त्रसमाहूता भीता लोकमाता सतां सततं सुगतिः विष्णोःसुता दिव्यसरोगता (अभवत्)

(व्या) धवलगङ्गायां भागीरथ्यागमनमाह – **मुनिमन्त्रेति ।।** वादिराजमुनेर्मम मन्त्रेण समाहूता ।।३७।।

धवळगङ्गातीरे विष्णु, रुद्र हनुमतः सन्निधानम्

**हित्वा तु मत्सुतां स्थातुं न चोत्सेहे कदापि हि ।**
**इति बुद्ध्यैव विष्णुस्तु देवस्तत्तीरगोभवत् ।।३८**

(अन्वयः) मत्सुतां (तां धवलगङ्गां) हित्वा तु स्थातुं कदापि न च उत्सेहे इति बुद्ध्यैव देवः विष्णुः तु तत् तीरगः अभवत् । हि

(व्या) **हित्वेति । मत्सुतां** = पादाङ्गुष्ठजाताम् ।।३८।।

**हित्वा मदाश्रयां स्थातुं न चोत्सेहे कदापि हि ।**
**इति बुद्ध्यैव रुद्रस्तु देवस्तत्तीरगोभवत् ।।३९**

(अन्वयः) मदाश्रयां (मया शिरसिधृतां, गङ्गां) हित्वा स्थातुं कदापि हि न चोत्सेहे इति बुद्ध्या एव रुद्रः तु तत् तीरगः अभवत् ॥

(व्या) हित्वेति । मदाश्रयां = मया शिरसि धृताम् ॥३९॥

**हित्वा मत्स्वामिनं स्थातुं न चोत्सेहे कदापि हि ।**
**इति बुद्ध्यैव हनुमान् देवस्तत्तीरगोभवत् ॥४०**

(अन्वयः) मत्स्वामिनं (गङ्गाधरोपास्यं श्रीरामं रामात्मकं श्रीत्रिविक्रमं) हित्वा स्थातुं कदापि हि न चोत्सेहे, इति बुद्ध्यैव देवः हनूमान् तत् तीरगः अभवत् ।

(व्या) हित्वा मदिति ॥ मत्स्वामिनं गङ्गाधरोपास्यरामात्मकं त्रिविक्रमम् ॥४०॥

**तस्मात् सरोवरमिदं सर्वाघौघहरं परम् ।**
**इदं तु यो नरः श्रुत्वा गतिं नेष्टां लभेत किम्? ॥४१**

(अन्वयः) तस्मात् इदं परं सरोवरं सर्वाघौघहरं, यः नरः इदं (उपाख्यानं) श्रुत्वा तु, इष्टां गतिं न लभेत किम् ?

(व्या) इदं तु यो नर इति । इदं श्रुत्वा । धवळगङ्गायां भागीरथ्याः योगेन, हरिहर-हनुमत्सन्निधानेन सर्वपापहरत्वं श्रुत्वा, यो नरः याति । यश्च सोदापुरयात्राकृन्नरः इष्टां गतिं न लभेत किम्? लभत एव ॥४१॥

(व्या) स इति (अश्वत्थदेवं वर्णयति) –

**स पिप्पलतरुर्भाति फलं कल्पतरुर्यथा ।**
**वितरन्नुत्तराशायां मम वृन्दावनस्य हि ॥**

**अश्वत्थदेव सकलेष्टद देवदेव भूदेववन्दितपदः प्रददास्यभीष्टम् ।**
**वेदैकवेद्य सुजनाब्धिसुपूर्णचन्द्र भक्ताभयप्रद सुपुत्रमपुत्रिणां च ॥**

(अन्वयः) यथा कल्पतरुः (फलप्रदा तथा) मम वृन्दावनस्य उत्तराशायां (स्थितः) सः पिप्पलतरुः फलं वितरन् भाति । हि! हे अश्वत्थदेव! सकलेष्टद! देवदेव! भूदेववन्दितपद! वेदैकवेद्य (वेदैः एकवेद्यः)! सुजनाब्धिसुपूर्णचन्द्र! भक्ताभयप्रद! (त्वं) अभीष्टम् अपुत्रिणां सुपुत्रं च प्रददासि ।

(व्या) अश्वत्थ इति । हे वेदैकवेद्य[१] । वेदैः एकवेद्य! त्वम् । [२]अश्वत्थान्तर्गतः सन् । अभीष्टं सुपुत्रं च प्रददासि ।४३।

**किं चित्रं देवदेवस्य भक्ताभीष्टप्रदातृता ।**
**यस्य किङ्करतां यान्ति देवाः सर्वे वरप्रदाः ।।४४**

(अन्वयः) यस्य (अश्वत्थदेवस्य) सर्वे वरप्रदाः देवाः किङ्करतां यान्ति, (तस्य) देवदेवस्य भक्ताभीष्टप्रदातृता किं चित्रम्?

(व्या) यस्य अश्वत्थान्तर्गतस्य ते ।।४४।।

### वृन्दावनान्तर्गतभगवद्रूपाणां स्तोत्रम्

(व्या) एवं विप्रानुग्राहकवृन्दावनस्थस्वान्तर्गतहयवदनस्तुतिं कृत्वा 'वृन्दावनाश्वत्थसेवा परशुना हन'(२२/२) इत्युक्तरीत्या अश्वत्थान्तर्गतस्य विप्रानुग्रहपात्रशेषानुग्राहकत्व-सूचनाय स्तुतिः कृता । विप्रमुखेनैतदाख्यानश्रोतारौ शेषसीतापतिनामकौ तयोरनुग्राहकः हयग्रीवत्वेनोपासितः शेषशायी ।

शेषशायिं हयग्रीवं तोषय त्वं च भूषय – (१०/१३५)

मन्मन्त्रतन्त्रविधिभिः कुरु वारिधौ यः शेते ।

स शेषशयने परमस्य पूजां ...(१५/३०)

इति शेषप्रकरणे सीतापतिप्रकरणे च वक्ष्यमाणत्वात् । एतौ (शेषसीतापती) नृपानु-ग्राहकौ । नृपानुग्राहकः रामचन्द्रः ''रामचन्द्रवरभूपतिसान्द्र प्रेमवन्द्यचरणो रघुपेन्द्र'' (१५/१०४) इति वक्ष्यमाणत्वात्, इति सूचयितुं नृपानुग्राहकरामस्तोत्रात् प्राक् शेषशायिनं परमात्मानं स्तौति – शेषशायिन् इति (वृन्दावनस्थशेषशायी इत्यर्थः) ।

---

(१) वेदैकवेद्यः = वेदमात्रवेद्यः; वेदैरेव वेद्य इत्यर्थः ।

(२) बिदरहळ्ळिअश्वत्थदेववर्णनम् –

**पादस्थानल्पपादः तनुनिहिततनुः कोमलाग्रस्थितास्यः**
**स्कन्धस्कन्धोग्र्यशाखास्थितकरनिकरः श्रीधराश्लिष्टपार्श्वः ।**
**व्याप्याश्वत्थं मुकुन्दस्त्रिदशपरिवृतस्तुङ्गभद्रातिभद्रे**
**वेणुग्रामे सदास्ते सकलजनमनोभीष्टदायी दयालुः ।** (तीर्थप्रबन्धम् प.प्र. श्लो६५)

**शेषशायिन् मम स्वामिन् देव भूमन् नमोस्तु ते ।**
**वृन्दावनपतेऽनन्तानन्तजन्माघनाशन ।।४५**

(अन्वयः) मम स्वामिन्! (हे) शेषशायिन्! भूमन्! देव! वृन्दावनपते अनन्तानन्तजन्माघनाशन! ते नमः अस्तु ।

**हयग्रीव समग्राङ्ग शुभाग्र्याक्ष्यवलोकन ।**
**जगद्ग्रासावसाने तु जगद्विग्रह ते नमः ।।४६**

(अन्वयः) (हे) समग्राङ्ग! हयग्रीव! शुभाग्र्याक्ष्यवलोकन! अवसाने तु जगद्ग्रास! जगद्विग्रह ते नमः ।

**(व्या)** वृन्दावनस्थहयवदनात्मकत्वसूचनाय **हयग्रीव समग्राङ्गेति** ।। एकं विष्णोः हयग्रीवरूपं, तस्यैव चणकार्पणसमये सामस्त्येन हयरूपमेकम्, इति सूचनाय **समग्राङ्गेति ।।** हयस्य ग्रीवेव ग्रीवा समग्राङ्गं च यस्य सः, तस्य सम्बुद्धिः । **शुभाग्र्याक्ष्यवलोकन!** शुभे च ते अग्र्ये च ते अक्षिणी च । शेषशब्दोक्तगुणसूचनं **जगद्विग्रह इति ।।** जगत् विग्रहे यस्य सः । **''भवानेकः शिष्यते शेषसञ्ज्ञः''** इति दशमस्कन्धभागवतोक्तेः[१] (१०/४/२५)।।

**वन्देरविन्दनयनं मदनाभिरामं मन्दाकिनीधरमुखैस्त्रिदशैः सुवन्द्यम् ।**
**वृन्दावने च कृतमन्दिरमप्रमेयं मन्दारभूमिजधरं हयशीर्षमाद्यम् ।।४७**

**वृन्दावने मदनमोहनदेहभाजं मन्दारमाल्यकृतपूजकवादिराजम् ।**
**नन्दादिपार्षदगणैर्नुतदेवराजं वन्देनिशं मम हृदि हयास्यराजम् ।।४८**

अन्वयः – अरविन्दनयनं, मदनाभिरामं, मन्दाकिनीधरमुखैः त्रिदशैः सुवन्द्यं, वृन्दावने च कृत मन्दिरं, अप्रमेयं, मन्दारभूमिजधरम् आद्यं हयशीर्षं वन्दे ।

मदनमोहनदेहभाजं, मन्दारमाल्यकृतपूजकवादिराजं (श्रीमद्वादिराजेन मन्दार-

---

(१) मेले व्याख्यानदल्लि उद्धरिसिद भागवतश्लोकद पूर्णपाठ हीगिदे –
''नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु ।
व्यक्तेव्यक्तं कालवेगेन याते भवानेकः शिष्यते ()शेषसञ्ज्ञः ।''
तत्रैव – '(अ)शेषसञ्ज्ञः सर्वनामा' इति श्रीमदाचार्याः ।

**माल्यादिभिः पूजितं), नन्दादिपार्षदगणैः नुत देवराजं, मम हृदि, वृन्दावने (सन्निहितस्य च) हयास्यराजम् अनिशं वन्दे ।**

**(व्या) वन्दे अरविन्दनयनमित्यादि** रामात्मकत्वसूचनाय । कृष्णात्मकत्वसूचनाय **मदनमोहनदेहभाजमिति** । व्यासात्मकत्वसूचनाय **अप्रमेयमिति ।** 'अः पुराणर्षिः व्यासः' इत्युक्तेः । अकारेण प्रमातुं योग्यं इत्यर्थः **(मन्दारभूमिजधरं** मन्दारपर्यायपारिजातवृक्षं द्वारकां प्रति आनेतारमित्यर्थः ।) ।।४७।। **मन्दारमाल्यकृतपूजकवादिराजम्** – मन्दारमाल्यकृता पूजा येन सः, तादृशो वादिराजो यस्य सः, तम् । अनेन शेषसीतापत्योः भगवत्पूजकत्वम् इतरवैलक्षण्येन अस्तीति सूचितं भवति ।४८।

**(अव)** शेषसीतापतिभ्यां कर्तव्योपकारकं श्रीरामचन्द्रं स्तोतुं तद्विशिष्टप्रतिमारूपिणं हनुमन्तं स्तौति – **हनूमन्निति ।।**

**हनूमन् भूरिमहिमन् रामनाम्नि सदा रमन् ।**
**रमारमणधामानि मा समापय ते नमः ।।४९**

**प्राभञ्जने अञ्जनासूनो कञ्जजनाभप्रियाग्रणि ।**
**कुञ्जरायुतशक्तिं च त्वं जनानां प्रयच्छसि ।।५०**

**(अन्वयः) (हे) हनूमन्! भूरिमहिमन्, रामनाम्नि सदा रमन् रमारमणधामानि मा = मां(१) समापय (सम्यक् प्रापय); ते नमः । (हे) प्राभञ्जन! अञ्जनासूनो, कञ्जजनाभप्रियाग्रणि, त्वं जनानां कुञ्जरायुतशक्तिं च प्रयच्छसि ।**

**(व्या) मां रमारमणधामानि समापय** ते सम्यक् प्रापय । **ते नमः** ।।४९-५०।।

(अव) नृपानुग्राहकं रामं प्रणमति – **वृन्दावनेति ।।**

**वृन्दावने मदनमर्दनरुद्रहृद्यं सद्भिः प्रवन्दितपदं मदनाभिरामम् ।**
**वृन्दारकेन्द्रमरुदंशसुमर्दिताङ्गं रक्षो विदार्य वरदं प्रणमामि रामम् ।।५१**

**(अन्वयः) मदनमर्दनरुद्रहृद्यं, सद्भिः प्रवन्दितपदं, मदनाभिरामं, वृन्दारकेन्द्र-मरुदंशसुमर्दिताङ्गं, रक्षः विदार्य वरदं वृन्दावने (सन्निहितं) रामं प्रणमामि ।**

---

(१) मा = माम्; 'त्वमावेकचने' इति पाणिनिः ।

(व्या) वृन्दावने सन्निहितं **मदनमर्दनरुद्रहृद्यम्** = मन्मथमर्दकस्य शिवस्य हृद्यम् । अत एव हनुमद्भीममध्वहृषीकेशतीर्थपद्मनाभतीर्थाद्यैः **सद्भिः प्रवन्दितपदम्** । **मदनमर्दनेत्यनेन** यत्याश्रमस्थैः पूजितप्रतीकस्थत्वं सूचितम् । नृपानुग्राहकत्वसूचनाय **मदनाभिरामम् इत्यादि** । **वृन्दारकेन्द्रमरुदंशसुमर्दिताङ्गम्** । रक्षः रावणाख्यं **विदार्य वरदं** विभीषणादि-वरप्रदम् । अस्य नृपस्याज्ञया शत्रूणां वधो भवतीति सूचनाय **रक्षो विदार्येति** । राज्यलाभसूचनाय – **वरदमिति** ।।५१।।

**हयग्रीवं हारभास्वद्ग्रीवं भासुरविग्रहम् ।**
**सुरारिनिग्रहकरसुदर्शनकरग्रहम् ।।५२**

**मुरारिविग्रहधरपौण्ड्रविग्रहनिग्रहम् ।**
**पुरारिविग्रहकरासुरचक्रविनिग्रहम् ।।५३**

(अन्वयः) हारभास्वद्ग्रीवं, भासुरविग्रहं, सुरारिनिग्रहकरसुदर्शनकरग्रहम्, मुरारि-विग्रहधरपौण्ड्रविग्रहनिग्रहं, पुरारिविग्रहकरासुरचक्रविनिग्रहं (श्रीहयग्रीवं नमामि)।

(व्या) (नृपानुग्राहकश्रीरामस्य) हयग्रीवात्मकत्वसूचनाय **हयग्रीवमित्यादि** ।। **सुरारि-निग्रहकरसुदर्शनकरग्रहम्** = सुरारिनिग्रहकरस्य देवारिनाशकरस्य चक्रस्य पाणौ परिग्रहो यस्य सः तम् ।।५२।।

कृष्णात्मकत्वसूचनाय **मुरारिविग्रहधरपौण्ड्रविग्रहनिग्रहमिति** । मुरारेः कृष्णस्य विग्रह इव विग्रहो देहः । तं धरतीति तथोक्तः । स चासौ पौण्ड्रश्च पौण्ड्रकवासुदेवश्च । तस्य विग्रहो देहः युद्धरूपो वा, विष्णुरहमेवेति विपरीतज्ञानरूपो वा । तस्य निग्रहो येन सः । तम् । **पुरारिः** शिवः । शिवेन सह विग्रहकराणाम् असुराणां समूहस्य विशेषेण निग्रहो येन तम् ।५३।

**बलारिपौरुषहरबलिबन्धविनिग्रहम् ।**
**नमामि कमलात्मानं विमलात्मानमच्युतम् ।।५४**

(अन्वयः) बलारिपौरुषहरबलिबन्धविनिग्रहम्, अच्युतं विमलात्मानं, कमला-त्मानं (हयग्रीवं) वन्दे ।

(व्या) बलारिपौरुषहरबलिबन्धविनिग्रहम् । बलारेरिन्द्रस्य पौरुषहरस्य बलेः बन्धेन विनिग्रहो यस्य सः तम् । वामनस्य सहायेन इन्द्रस्येव राज्यलाभसूचकमिदं विशेषणम् । बादरायणात्मकत्वसूचनाय कमलात्मानमित्यादि । 'या सुपद्मासहितः' इत्युक्तस्य पद्मा-पतित्वसूचनात् । कमलायाः पद्मायाः आत्मानं पतिम् । (विमलात्मानं =) विमलासु नारायणदत्तासु शुद्धशिलासु, आत्मानम् अन्तर्यामितया सन्निहितम् ।५४।

**ब्रह्मात्मकौस्तुभमणिं चिन्मात्रानन्तसद्गुणम् ।**
**तन्मात्रनिर्मितगुणं सन्मात्रकृतसद्गुणम् ॥५५**

**(अन्वयः) ब्रह्मात्मकौस्तुभमणिं, चिन्मात्रानन्तसद्गुणं, तन्मात्रनिर्मितगुणं, सन्मात्रकृतसद्गुणं (श्रीहयग्रीवं नमामि) ।**

(व्या) ब्रह्मात्मकौस्तुभमणिम्, ब्रह्माभिमन्यमानः कौस्तुभमणिः यस्य सः तम् । चिन्मात्रानन्तसद्गुणम् – केवलज्ञानात्मकाः अनन्तसद्गुणाः यस्य तम् । तन्मात्रनिर्मितगुणं = तन्मात्रे चतुर्मुखब्रह्ममात्रे । (अ)निर्मितः गुणः कल्यावेशादिराहित्यलक्षणः येन सः तम् । सन्मात्रकृतसद्गुणं = सकलसज्जनाः केवलसज्जनाः इति वा । कृतसद्गुणाः कृत सच्छिष्याः । येन सः तम् (सर्वे शिष्याः सत्यवतीसुतस्य इत्युक्तेः सर्वसज्जनाः तस्य शिष्या एव ।) । त्वत्कण्ठगं कौस्तुभमासन्धाता इत्यनुसन्धाने । बादरायणत्वं प्रतीयते[१] ।५५।

**अत्यद्भुताकारमूर्तेऽप्रत्ययानन्तसद्गुण ।**
**दृप्तदानवविध्वंसिन् मर्त्यसिंह नमो नमः ॥५६**

---

(१) ('तन्मात्रनिर्मितगुणं' एंबुदर श्रीव्याख्यानदल्लि चतुर्मुखमात्रे निर्मित गुणः येन सः । तम् । एन्दिरुवुदु अर्थवागुवुदिल्ल. अनिर्मितः एंदिरबेकु. इल्लदिद्दरे तन्मातृनिर्मितगुणं एंदिरबेकागुत्ते. तन्मात्रेण = तदनन्यत्वमारम्भणशब्दादिभ्यः इति सूत्रोक्तरीत्या अन्यसहायं विना तेनैव निर्मितः । गुणः ब्रह्मा-ण्डाख्यः येन सः तम् । गुणाः अप्रधानभूताः चतुर्विंशतितत्वानि तेषाम् अभिमानिनः येन सः तम् । इति वा । तन्मात्रा = सत्यवती देव्या (तस्याः गर्भे) अनिर्मिताः गुणाः देहगुणाः यस्य सः । तम् । मातृदत्तदेहहीनं इत्यर्थः । इति वा । तन्मात्रे = चतुर्मुखन तायिगोस्कर अवळिगे ब्रह्माण्डनायकि एंब पदवि कोडुवुदक्कोस्कर अथवा तन्मात्रे = केवल चतुर्मुखनोब्बन विषयदल्लि = चतुर्मुखनु स्वकीयरन्नु साधने माडिसिकोंडु मुक्तनागलि एंब उद्देशदिन्द निर्मितगुणः = ब्रह्माण्डसृष्टिमाडिदंथ एन्दू अर्थवागुत्ते. तत् = व्याप्तवाद मातृज्ञानाश्रयवू सर्वज्ञवू आद अनिर्मितगुणाः अनागन्तुकस्वरूपभूतअनन्तकल्याण-गुणगळुळ्ळवनाद एन्दू अर्थवागुत्ते.)

**(अन्वयः) (हे) अत्यद्भुताकारमूर्ते! दृप्तदानवविध्वंसिन्, मर्त्यसिंह, प्रत्यया-नन्तसद्गुण (ते) नमो नमः ।**

(व्या) **अत्यद्भुताकारमूर्ते** = अत्यद्भुताः 'तटिदमले'त्युक्तरीत्या आकाराः यासु ताः तथोक्ताः । तादृशाः मूर्तयः शिलारूपाः यस्य प्रतिमारूपाः । यद्वा, अत्यद्भुतौ नराकार-सिंहाकारौ यस्याः सा । अद्भुताकारमूर्तिः यस्य सः तस्य सम्बुद्धिः । **'अप्रत्ययानन्तसद्गुण'** 'अः इति प्रत्येकं गुणपूर्णा' इति जीवाद्भिन्ना इति दोषदूरा इति व्यासात्मका इति प्रत्ययो येषां ते तथोक्ताः । अनन्ताः नाशरहिताः सद्गुणाः यस्य सः । तस्य सम्बुद्धिः । **(दृप्त-दानवविध्वंसिन् =)** दृप्तानां मदयुक्तानां दानवानां विध्वंसिन् । **मर्त्यसिंह** = नरसिंह । अनेन नृपानुग्राहकरामचन्द्रस्य **'नारसिंह नरश्रेष्ठे**त्यत्र (अ१८/श्लो५६,५७) वक्ष्यमाण-यतिवरपूजितप्रतीकस्थरामवेदव्यासात्मकत्वम् दुरितादिनिवर्तकत्वं चोक्तं भवति ॥५६॥

**नरस्तोत्रजदोषं तं नरसिंहस्तुतिः सदा ।**
**नाशयेन्नरजन्मानि चैवमेव न संशयः ॥५७**

**(अन्वयः) तं (प्रसिद्धं) नरसिंहस्तुतिः नरस्तोत्रजदोषं, नरजन्मानि च सदा नाशयेत्, एवमेव । (अत्र) न संशयः ।**

(व्या) नरस्तोत्रादिभयेन अभिमतराजधानीप्रवेशे शेषादीनां वैमुख्यनिरासाय **नरस्तोत्रजे-त्यादि** ॥ 'आत्मस्तोत्रज' इत्यादिवत् अर्थो ज्ञातव्यः ।५७।

**वादिराजाख्ययतिना वागीशकरजेन च ।**
**वृन्दावनगतेनैव ब्राह्मणस्वाप्नमूर्तिना ॥५८**

**कृतं स्तोत्रमिदं पुण्यं पठतां सम्पदां पदम् ॥५९**

**अन्वयः – वागीशकरजेन वृन्दावनगतेन वादिराजाख्ययतिना ब्राह्मणस्वाप्नमूर्तिना एव स्तोत्रं च कृतम् । पुण्यं इदं पठतां सम्पदां पदम् ।**

(व्या) ब्राह्मणस्वप्ने उपदेशप्रदा मूर्तिः यस्य सः, तेन । नृपस्य स्वानुग्रहेण शुभ-सूचकस्वप्नो भवतीति सूचनाय अस्मिन् प्रकरणे ब्राह्मणस्वाप्नमूर्तिना इत्युक्तम् (**'पठतां सम्पदां पदम्'** इति फलोक्तिः अस्मिन् ग्रन्थे सात्विकलक्ष्मीसन्निधानसूचनार्थम् । तथा च साधनोपयोगिधनप्रापकमित्यर्थः ।५९।)

(व्या) सकलवाङ्मनोदेवतायाः सम्पत्प्रदायाः प्रसादस्यावश्यकत्वेन प्रणामं करोति – वन्देऽरविन्दनयनामित्यादि ।

**वन्देऽरविन्दनयनां वदनारविन्दां वृन्दावनाख्यसदनां मदनस्य चाम्बाम् ।**
**वृन्दावनाख्यसदनानवनां स्वभक्तान् मन्दाकिनीजनकपादहयास्यजायाम् ।।६०**

(अन्वयः) अरविन्दनयनां, वदनारविन्दां, वृन्दावनाख्यसदनां, मदनस्य अम्बां, वृन्दावनाख्यसदनानवनां, मन्दाकिनीजनकपादहयास्य जायां च वन्दे ।

(व्या) वृन्दावनाख्यसदनां = वृन्दावने सन्निहिताम् । वृन्दावनाख्यसदनान् वृन्दा-वनाख्यं सदनवत् सदनं येषां ते । तथोक्ताः तान् । स्वभक्तान् अवतीति अवनाम् । मन्दाकिनीजनकपादहयास्यजायाम् । पूर्वभागस्थहयग्रीवपत्नीं लक्ष्मीं वन्दे इत्युक्तं भवति ।।६०।।

(व्या) दक्षिणभागस्थितरामपत्नीत्वेन जानकीं प्रणमति – लक्ष्मीमिति ।।

**लक्ष्मीं लक्षणसम्पन्नां लक्ष्मणाग्रजकाङ्क्षिणीम् ।**
**लक्षयामि क्षणं लक्षवित्तदात्रीं कटाक्षतः ।।६१**

(अन्वयः) लक्षणसम्पन्नां, लक्ष्मणाग्रजकाङ्क्षिणीं, कटाक्षतः लक्षवित्तदात्रीं लक्ष्मीं क्षणं लक्षयामि ।

(व्या) लक्षणसम्पन्नाम् =

यदि रामस्य दूतोसि वद रामस्य लक्षणम् ।
लक्षणं देवदेवस्य को वक्ताऽथापि सूच्यते ।।

इति प्रश्नप्रतिवचनादिना रामलक्षणानि सम्पन्नानि ज्ञातानि यया ताम् । रामोक्तैः लक्षणैः हनुमता सम्पन्नां ज्ञाताम् । लक्षणत्वेन श्रीवत्सरूपेण भगवल्लक्षणत्वेन सम्पन्नाम् । लक्षणैर्नित्यमुक्तत्वानुमापकैः(१) युक्तामिति वा । लक्ष्मणाग्रजकाङ्क्षिणीं जानकीम् । पश्चिम-भागस्थितकृष्णपत्नीत्वेन रुक्मिणीं प्रणमति लक्षवित्तदात्रीमिति ।। कटाक्षमात्रेण कुचेलादिभ्यो लक्षोपलक्षितवित्तदात्रीम् ।।६१।।

---

(१) '**श्रीर्नित्यमुक्ता**', इति तत्वविवेकः ।। (श्लो. ४)

(व्या) उत्तरभागस्थबादरायणपत्नीं प्रणमति – **भक्ताभयकरीमिति ।।**

**भक्ताभयकरीं नित्यं श्रुत्वा गच्छन्ति सात्विकाः ।**
**शरणं करुणापाङ्गि मरणं हर प्राणिनाम् ।।६२**

अन्वयः – भक्ताभयकरीं श्रुत्वा सात्विकाः नित्यं शरणं गच्छन्ति । हे करुणापाङ्गि प्राणिनां मरणं हर (तां लक्ष्मीं लक्षयामि) ।

(व्या) **भक्ताभयकरीम्** अभयमुद्रया बादरायणेन सूचितम् अभयं करोतीति भक्ता-भयकरीम्, **लक्षयामी**ति पूर्वेणान्वयः । **सात्विकाः** एतादृशीं श्रुत्वा **शरणं** गच्छन्ति ।।६२।।

### श्रीलक्ष्मीस्तोत्रद पठनेय फल

**लक्ष्मीस्तुतिमिमां नित्यं पठेद् यः सुविचक्षणः ।**
**लक्षापराधिनमपि क्षमते नात्र संशयः ।।६३**

(अन्वयः) सुविचक्षणः (सन्) इमां स्तुतिं (यः) नित्यं पठेत् (पठते) लक्षा-पराधिनम् अपि (तं) (सा लक्ष्मी) क्षमते, अत्र न संशयः ।

(व्या) **सुविचक्षणः** सन् **इमां स्तुतिं यः पठते । तं लक्षापराधिनमपि क्षमते** ।।६३।।

### नरकोत्तारनरकेसरिस्तोत्रम्

(व्या) यस्मिन् नृपे अनुग्राहकत्वेनाभिमतो रामचन्द्रः । तद्दृष्टान्तत्वेनोपस्थित-नृपान्तरानुग्रहोपयुक्तगुणवत्तया परमात्मानं स्तौति – **नमामीति ।।**

**नमामि नरकोत्तारं नमामि नरकेसरिम् ।**
**नमामि नागशयनं नमामि नगवासिनम् ।।६४**

अन्वयः – नरकोत्तारं नमामि, नरकेसरिं नमामि, नागशयनं नमामि, नग-वासिनं नमामि ।

(व्या) **नरकोत्तारं** गन्धर्वाणां सद्गुरुप्राप्तिसमये प्रसक्तेन पण्डितमानित्वेन प्रसक्तस्य नरकस्य पश्चात्तापं निमित्तीकृत्य परिहारकम् । **नरकेसरिम्–** नरके सरतीति तथोक्तः तम् । नरके सरणं किमर्थम्? भक्तानाम् उपद्रवपरिहारार्थम् । इत्येवं नरकोद्धारकम् इत्या-

द्युक्तस्य उपयुक्तगुणस्मरणार्थमिदं विशेषणम् । **नमामि नागशयनम्** अनन्तशयनम् । **नगवासिनं** मन्दारादिषु वसन्तम्[१] ।६४।

(व्या) नरकेसरिपदस्यार्थं स्पष्टीकरोति – **नरके चेति** ।।

**नरके च गतिर्यस्य सकाशात् पापिनो भवेत् ।**
**हिरण्यकशिपोः सोयं नरकेसरिरुच्यते ।।६५**

(अन्वयः) पापिनः हिरण्यकशिपोः च (भगवन्निन्दया) नरके (प्रसक्ते अपि) यस्मात् (यस्य) सकाशात् गतिः भवेत्, सः अयं नरकेसरिः (इति) उच्यते ।

(व्या) **हिरण्यकशिपोः** नरके प्रसक्तेपि **यस्य सकाशात् गतिः भवेत् सोऽयं नरकेसरिरि**त्युच्यते । अनेन नरकेसरिरित्युक्तं विवृतं भवति ।६५।

**प्राणिनां प्राणभर्ता यो ह्यरणं शरणार्थिनाम् ।**
**तं प्राणं प्राणिनां प्राणं प्रणमामि परायणम् ।।६६।।**

अन्वयः – यः प्राणिनां प्राणभर्ता, शरणार्थिनाम् अरणं हि, तं प्राणिनां प्राणं परायणं प्रणमामि ।

(व्या) **प्राणिनां प्राणभर्ता** प्राणपरिपालकः यः, तं प्राणिनां प्राणचेष्टकः (शरणार्थिनाम् अरणं गृहवत् आश्रयदातारमित्यर्थः) ।६६।

**तं देवाः प्राणयन्तीति ह्युक्तमुक्थेति यं विदुः ।**
**तं प्राणं प्राणिनां प्राणं मरणार्त्या गतोरणम् ।।६७।।**

अन्वयः – देवाः प्राणयन्त इति (उत्थापकत्वात्) उक्थं उक्थं इति हि यं प्राणं विदुः तं प्राणिनां प्राणं, मरणार्त्या (भक्तानां प्रसक्त्या मरणार्त्या निमित्तभूतया) अरणं (शरणं) आगतः (गतोऽस्मि) ।

(व्या) उत्थापकत्वात् **उक्थम्**[२] । 'उक्थ'इत्यादिवेदवाक्यैः यं विदुः । **तं अरणं**

---

(१) (**नगवासिनं** एन्दरे **मन्दारादिषु** एंदिदे. नग एन्दरे वृक्षवेंदिट्टुकोंडरे अदु सरियाद अर्थ. आदरे नग एन्दरे पर्वत एन्दर्थविदे. आग मन्दरादिषु एंदिरबेकेंदु तोरुत्ते.)

(२) **'य एष उक्थनामाऽसौ सर्वोत्थापनको हरिः ।**

**गतोऽस्मि** = शरणं गतोऽस्मि । **मरणात्या** निमित्तभूतया भक्तानां प्रसक्त्या । अनेन(भक्त) विप्रस्य पुनरायुःप्रदानसूचकगुणस्मरणं कृतं भवति । कश्चिन्नृपः विष्णुभक्तो जातः । तस्याहितं पूर्वनृपेण कृतम् । भक्तेन च 'हिरण्यकशिपुवत् अपकारः क्रियते किमर्थम्' इति (भक्तेन उक्तेन) भक्तोक्तेन पूर्वनृपेण । तर्हि नृसिंहः क्व? इति उक्तः भक्तनृपः । तदा शृङ्खलाबद्धा महतीघण्टात्रुटिता भूमौ पतिता । तां दृष्ट्वा पूर्वनृपो भीतः । इति कथा अत्रानुसन्धेया ।६७।

**एवं शश्वत्स्तुतः स्तुत्यः कृतकृत्यस्तु सत्पतिः ।**
**कितवान्तकरो भूत्वा शं तनोतु सतां मम ।६८।**

(अन्वयः) एवं शश्वत् स्तुतः स्तुत्यः सत्पतिः कृतकृत्यः तु कितवान्तकरः भूत्वा मम सतां शं तनोतु ।

**(व्या) एवमिति ।। कितवान्तकरः ।** (कितवानां कपटिनाम्) (मम भक्तभूतानां शेष, सीतापति,व्यास,भूपादीनां शत्रूणां निग्रहेण तान् भक्तान् सुखयतु इत्यर्थः) ।६८।

**श्रीरमादेविस्तोत्रम्**

**(व्या)** एवं विप्रशेषसीतापतिभूपनारसिंहाद्युपास्यमानहयवदनात्मकस्य विष्णोः स्तुतिं विधाय एतद्ग्रन्थाकारत्रयप्रविष्टव्यासराजनामकभक्तानुग्राहकबादरायणस्तुतिं कर्तुं यतिवर्य-पूजितप्रतीकरामचन्द्रे[१] समानाधिकरणशुद्धशिलाप्रतीकस्थबादरायणस्य नारसिंहाद्यनुग्राहकत्व-मिव पौरुटभाजनस्थप्रतीकसन्निहितबादरायणस्य हयवदनसमानाधिकरणस्य यतिरूपविप्रानु-ग्राहकत्वमप्यस्तीति सूचयितुं बादरायणस्तुतेः पूर्वं यासु 'स पद्मासहित'इत्युक्तपद्मासाहित्य-सूचनाय पद्मायाः प्रणामं करोति – **अहं भज इति ।।**

**अहं भजे मुदा भजे हृदा भजे सदाम्बुजे ।**
**कृतालयां कृपालयां हरेरथाच्युतालयाम् ।।६९।।**

---

**महांश्च परिपूर्णत्वात् सहस्रबृहतीस्थितः ।।'**
इति महैतरेयभाष्यम् (२.२.४.१); तथाहि ऋग्भाष्यम् –
**'उक्थमुत्थापकत्वेन स एष भगवान् हरिः (४८६ मन्त्रः) ।**

(१) (ई यतिवर्यरु उत्तरादिमठद श्रीसत्यधर्मादिगळु)

**अन्वयः – अहम् अम्बुजे सदा कृतालयां (श्रीरमां) भजे; मुदा भजे; हृदा भजे । हरेः कृपालयाम् अथ अच्युतालयां (श्रीरमां भजे) ।**

(व्या) **अम्बुजे सदा कृतालयां** रमां भजे । भजनमपि न व्यसनतयेति सूच्यते **मुदा भजे इति** ।। अन्यत्र मनःसञ्चारराहित्यसूचनाय – **हृदा भज इति** ।। हरिप्रियात्वेन नम्यत्वसूचनाय **हरेः कृपालयामिति** ।। भगवदाश्रितत्वसूचनाय **अच्युतालयामिति** ।।६९।

(व्या) 'प्राप स नारायणतः' इत्युक्तसूचनाय बादरायणस्य स्तुतिसमये नरनारायणं स्तौति – **यस्मादिति** ।।

**यस्मान्नरसमूहानामयनं नयनाग्रतः ।**
**नरकान्न तरेत् सोऽयं नरनारायणोच्यते ।।७०**

**(अन्वयः) – यस्मात् नरसमूहानाम् अयनम् । (यस्य) नयनाग्रतः नरकात् न तरेत् सः अयं (अयं नरसिंहः) नरनारायण (इति) उच्यते ।**

(व्या) नराणां समूहो नारम्, तस्य अयनत्वात् नारायणः । सोऽयं नरसिंहः । **नयनाग्रतः** = कटाक्षतः । न रीयते नरकादिरूपं क्षयं न प्राप्नोत्यनेनेति नरः । स चासौ नारायणश्चेति नरनारायण इति उच्यते । 'उच्यते' इत्यलौकिकः[१] । अच्यते ज्ञायते इति वा ।।७०।।

**रजतपीठपुरमप्रतिमं भुवि पुरुटपीठगतमप्रतिमं हरिम् ।**
**करटबुद्धिरपि याति को महान् सरटजन्म न जहाति तद्गतः ।।७१।।**

**अन्वयः – भुवि सर्वलोकेषु रजतपीठपुरम् अप्रतिमम्; पुरटपीठगतमप्रतिमं च हरिं को महान् करटबुद्धिरपि याति? स तद्गतः (तत्क्षेत्रगतः) सरटजन्म नैव**

---

(१) यस्मात् यं परित्यज्य पापी नरकात् न तरेत् । नरकान् प्रति न पतति । पुण्यक्षयं प्राप्य नरकपतनं न प्राप्नोतीति नरः । नरश्चासौ नाराणां अयनश्च इति नरनारायणः । नरनारायण उच्यते एन्दु संहिता नियम. आदरे नरनारायणोच्यते एन्दु गुणसं आगिरुवन्ते बरेदिद्दारे. व्याकरणविरुद्धवेन्दु आशंकिसकोंडु एरडु रीति उपपत्ति हेळिद्दारे. (१) इदु अलौकिकप्रयोग. (२) नरनारायणोच्यते एन्दु ओदि अच्यते' तिळिल्पडुत्ताने एन्दर्थ.) हीगे आ (हिन्दे वर्णिसिद) श्रीनृसिंहदेवरे ''नरनारायण''नेन्दु करेयल्पडुवनेन्दु स्तोत्रमाडिद्दारे.

जहाति । (सरटजन्म प्राप्नोतीत्यर्थः) ।

(व्या) रजतपीठपुरमिति ।। भुवि भूलोके रजतपीठपुरम् अप्रतिमम् असदृशम् । तद्गतः रजतपीठपुरगतः । महान् आकारेण वृकोदरः सद्गन्दनादिभिः शून्यं वदनं भुवि-निन्दितम्' (१९/४६) इति वक्ष्यमाणानुसारेण अमहान् इति वा । कोऽपि कश्चित् । पुरुटपीठगतम् अप्रतिमं हरिम् = मध्यवाटमठपौरुटभाजनस्थबादरायणं प्रति । करटबुद्धिः सन् काकबुद्धिः सन् । यज्ञाजनमण्डलस्थले बुद्धियुक्तः सन् इत्यर्थः । याति । सः सरटजन्म न जहाति । ''कल्यावेशादल्पदोषः कृकलासवधोऽपि सन्'' इति बृहद्भाष्योक्तरीत्या कृकलासदेहावासयोग्यस्य कलेः । 'कलिः कमलनाभाख्यः पुनर्भूवलयेऽभवत्' इति(२१/१५) वक्ष्यमाणस्य च । अर्थानुसन्धानेन तात्पर्यं ज्ञातव्यम्[१] ।।७१।।

**तादृशं कृष्णमाराध्य चेदृशं वैभवं तव ।**
**यादृशं कृष्णमाहात्म्यमीदृशं नोच्यते बुधैः ।।७२।।**

**अन्वयः – तादृशं कृष्णम् आराध्य च तव ईदृशं वैभवं, यादृशं कृष्णमाहात्म्यम् ईदृशम् अबुधैः नोच्यते (इति तात्पर्यम्) ।**

(व्या) तादृशं कृष्णमाराध्य = करटबुद्धेः सरटजन्मप्रदं बादरायणमाराध्य । तव ईदृशं वैभवं प्राप्नोषि । यादृशं कृष्णमाहात्म्यं तव च माहात्म्यम् इत्यालोच्य ईदृशमित्य-बुधैर्नोच्यते = बुधैस्तूयते इति तात्पर्यम् (तादृशमित्यारभ्य कृष्णे भक्तिं करोत्यलम् इत्यन्तं वेदव्यासवचनं गुरुराजं प्रति ।) ।

**सोऽहं कृष्ण इति ख्यातो विष्णौ तृष्णाविधायकः ।**
**कृष्णायाश्च वरं दत्वा पुष्णाम्येतत् पतीन् सतीम् ।७३।**

---

(१) (भविष्यसूचकरहस्यार्थक श्लोक. आपातसाहित्यद अर्थवू प्रामाणिकवे. अदेनेन्दरे रजतपीठपुरं उडुपिक्षेत्रम् । भुवि = भूलोके । अप्रतिमम् असदृशम् । यतः अत्र तद्गतः उडुपीक्षेत्रगतः । करटबुद्धिरपि = गजवत् अल्पबुद्धिरपि । पुरुटपीठगतं अप्रतिमं हरिम् = सुवर्णसम्पुटस्थ बादरायणमूर्तिं । वृन्दावनाचार्यैः आनीतम् । याति प्राप्नोति । कृष्णेन साकं च पूजितं पश्यति । तद्गतः । कः महान् पण्डितः सरटजन्म न जहाति । नीचयोनिं न त्यजति । किन्तु वैराग्यादिकमेव प्राप्नोतीति योजना । अन्तरङ्गार्थस्तु श्रीकारैरुक्तः ।) (आकारेण वृकोदरः = लक्ष्मीनारायणभट्टन विषय (१९/९३) इति वक्ष्यमाणानुसारेण स्थूलकायः ।) ( सद्गन्दनादिभिः - शेषाद्रिपण्डितन विषय - १९/४६)

(अन्वयः) विष्णौ तृष्णाविधायकः सः अहं कृष्णः इति ख्यातः कृष्णायाः वरं दत्वा, एतत् सतीन् पतीन् च पुष्णामि ।

(व्या) सोऽहमिति । (श्रीबादरायणस्य) कृष्णात्मकत्वसूचनाय कृष्णायाश्च वरं दत्वा पुष्णाम्येतत् पतीन् इति ।। (श्रीबादरायणस्य) रामात्मकत्वसूचनाय सतीम् इति । अहल्यां सीतां च पुष्णामीत्यर्थः (अनेन श्रीबादरायणाराधनविघ्नरूपाणां निग्रहो भवति इति सूचितम्) ।७३। (विष्णौ तृष्णाविधायकः = विष्णौ तृष्णां भक्तिं विधत्ते)

**ईदृशं कृष्णमव्यक्तं विष्णुतत्त्वोपदेशकम् ।**
**श्रुत्वा तृष्णां जहात्याशु कृष्णे भक्तिं करोत्यलम् ।।७४।।**

अन्वयः – ईदृशम् अव्यक्तं कृष्णं विष्णुतत्वोपदेशकं श्रुत्वा, कृष्णे अलं भक्तिं करोति; तृष्णाम् आशु जहाति ।

(व्या) ईदृशं = स्वाराधकानां ब्रह्मेन्द्रादिपदवीदातारम् । अव्यक्तं कृष्णं = (सुवर्ण-सम्पुटस्थ)व्याससालग्रामे स्थितं बादरायणम्, श्रीमदानन्दतीर्थप्रतिष्ठितशिलास्थितं कृष्णं च, विष्णुतत्वोपदेशकं= कृष्णव्यासयोः महिमावबोधकउपदेशकर्तारं गुरुराजं च (माहात्म्यं) श्रुत्वा, ज्ञात्वा तेषां प्रसादात् (विषय)तृष्णाम् आशु जहाति; श्रीकृष्णे भक्तिम् अलं करोति अधिकारी ।

**इति मामुक्तवान् व्यासो दासं भासुरविग्रहः ।**
**मन्दहासान्वितो नित्यं वृन्दं सर्वं प्रहर्षयन् ।।७५।।**

(अन्वयः) इति भासुरविग्रहः मन्दहासान्वितः व्यासः नित्यं सर्वं वृन्दं प्रहर्षयन् (सन्) दासं मां प्रति उक्तवान् ।

(व्या) इति मां गुरुराजं प्रति बदर्यां वेदव्यासः मुनिवृन्दं प्रहर्षयन् उक्तवान् । एतादृशं रजतपीठपुरे कृष्णवेदव्याससमागममाहात्म्यम् इति भावः ।

**नमामि नारायणपादपद्मं वदामि नारायणनामधेयम् ।**
**करोमि नारायणपूजनं च स्मरामि नारायणमूर्तिमेव ।।७६।।**

(अन्वयः) नारायणपादपद्मं नमामि; नारायणनामधेयं वदामि; नारायणपूजनं करोमि; नारायणमूर्तिमेव स्मरामि च ।

(व्या) बादरायणस्य नरनारायणात्मकत्वमनुसन्धेयमिति सूचयितुमाह – **नमामीति** ।। (सुतनुवाक्मनआदिसर्वसमर्पणेन तस्य पूजा श्रेष्ठा इति सूचिता भवति[१]) ।७६।

**तदात्मकं हयग्रीवं सदाऽनुग्रहकारकम् ।**
**तारकं भवराशेर्मां मारकं पापिनामिह ।।७७।।**

**अन्वयः – तदात्मकं सदाऽनुग्रहकारकं भवराशेः मां (मे भक्तान् सज्जनान्) तारकम्; इह (श्रीबादरायणपूजाविघ्नरूपाणां) पापिनाम् मारकं हयग्रीवं नमामि ।**

(व्या) **तदात्मकं हयग्रीवमिति** स्पष्टम् । **इह पापिनां मारकम्** । बादरायणपूजाविघ्नरूपाणां मारकम् । 'तेषामाकर्षणं काले यमदूतैश्च कामयन्' इति वक्ष्यमाणत्वात् (६/६१)

**नमामि कामतातं मां कुमारश्चेति मानयन्[२] ।**
**रमायै काममात्रे च मेरौ यो दत्तवान् मुनिम् ।।७८**

**तमीश्वरं भास्वरसूर्यशौर्यदं ममेश्वरं सर्वजगच्च सेश्वरम् ।**
**मुनीश्वरैः सर्वसुरेश्वरेश्वरैर्वशेकरं सर्वमहेश्वरं स्मरे ।।७९**

**अन्वयः – मां मुनिं कुमारः इति मानयन् यः मेरौ काममात्रे रमायै च दत्तवान् (तं) कामतातं (श्रीकृष्णं) नमामि । भास्वरसूर्यशौर्यदं मम ईश्वरं सर्वजगच्च सेश्वरम् मुनीश्वरैः सर्वसुरेश्वरैः वशेकरं, सर्वमहेश्वरं तम् ईश्वरं स्मरे ।**

(व्या) **नमामि कामतातमिति** यत्याश्रममात्रस्थपूज्यत्वसूचनाय ।।७८।। (नमामि कामतातमिति यत्याश्रमपालनार्थम् एवम् उपासनं कार्यम् इति सूचनाय) ।

'पापिनां मारक'मिति विघ्नपरिहारे सूचितेपि, सज्जनानाम् असम्मतौ कथमस्य धर्मसाधनत्वमित्याशङ्कां वारयितुमाह – **तमीश्वरमिति** ।। उत्तमानां भक्तिः । समानानां स्नेहः । अवराणां दया च जायते उक्तगुणस्मरणादिति ।७९।

**मूलरूपेण बालार्कसदृशं कमलेश्वरम् ।**
**नीलमेघप्रतीकाशं लोकदृष्ट्या महाबलम् ।।८०**

---

(१) यमाः शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् – (तन्त्रसारः)

(२) **कर्त्रे धर्त्रे च संहत्रे पात्रे च हयवक्त्र मे ।**
**पित्रे धात्रे धियां दात्रे सत्रे जाताय ते नमः ।।** – सरसभारतीविलासे प्र.वि. २५

**सान्द्रं कमण्डलुधरं चोपेन्द्रं चाण्डलग्नकम् ।**
**भजामि भजनीयं तं भुजगेश्वरशायिनम् ।**
**कुजनाशङ्कया जातवृजिनार्तिहरं च मे ॥८१**

**(अन्वयः) मूलरूपेण बालार्कसदृशं, कमलेश्वरं, नीलमेघप्रतीकाशं, लोकदृष्ट्या महाबलं, सान्द्रं कमण्डलुधरं च, उपेन्द्रम् अण्डलग्नकं, मे(मम) कुजनाशङ्कया जातवृजिनार्तिहरं भजनीयं तं भुजगेश्वरशायिनम् च भजामि ।**

**(व्या) मूलरूपेणेति** । अज्ञानान्धकारपरिहाराय **मूलरूपेण बालार्कसदृशमिति** । भक्ताभीष्टवर्षणे **नीलमेघप्रतीकाशम् । लोकदृष्ट्या** ज्ञानदृष्ट्या ॥८०॥ **सान्द्रमिति ॥** वामनरूपेण **सान्द्रं कमण्डलुधरम्** । सङ्क्षेपेणोपक्रमेपि परिणामे सामीचीन्यमनेन सूचितम् । **भुजगेश्वरशायिनम्** 'अनन्तशयनं दृष्ट्वा ह्यनन्तसुखमन्वहम्' इति वक्ष्यमाणत्वात् । 'पारम्पर्येण राजत्वं त्वदीयानां मदीरितम्' (७/५७) इति वक्ष्यमाणानां राज्ञामभीष्टम् अभिमतसिद्ध्यर्थमिदम् ॥ **कुजनाशङ्कया** भक्तानाम् आचार्यानभिमतमिदमिति कुजनाशङ्कया भक्त्याः उत्पन्नस्य । **वृजिनस्य** संशयादिरूपस्य परिहारकम् ।८२। (अथवा इदमाख्यान-मप्रमाणम् आप्तिमूलत्वाभावात्, स्वाप्नकार्यत्वाच्च । प्रमाणत्वेऽपि अनुबन्धचतुष्टयरहितत्वादनु पादेयं शिष्यैः स्वप्नलब्धनिधिवत् अनुपयुक्तं चेति कुजनैः नास्तिकादिभिः अपक्काकारिभिरपि कृता शङ्कया मे = मदीयानां शेषसीतापतिव्यासादीनां यत्प्रसक्तं वृजिनं मनःकालुष्यरूपः अपराधः तज्जनितपापादिकं साधननाशादिकं च अपहरतीति अपहरं महेश्वरं हयग्रीवं स्मरामीति भावः ।)

**(व्या)** एवं व्यासाख्यजीवानुग्राहकस्य बादरायणस्य विशेषेण विप्रोपास्यत्वं सूचयित्वा, तन्मठाधीशैः विशेषेण पूज्यत्वेन –

**'मद्वशे सति मध्वेशे मध्वाचार्यप्रिये मयि ।**
**मधुघातकभक्ता ये भक्तिं कुर्वन्ति नित्यशः ।' (१९/४)**

इति वक्ष्यमाणाभिप्रायसूचनाय बादरायणस्य हयवदनभूवराहसामानाधिकरण्यसूचनार्थं हयवदनकृतमधुहननकथनेन भूवराहात्मना धरणीगर्वापहारकथनेन, कृष्णरूपेण कृतनरकासुर-हननकथनेन च स्तौति – **अथेत्यादिना** ।८३। (तादृशमनोदोषः, कुजनाशङ्कया जात-

वृजनार्तिः, पुराणश्रवणेन नश्यतीति[१] सङ्ग्रहेण हयवदन,वराह,कृष्णमहिमानं वर्णयति) – **अथेत्यादिना** ।) (अनेन एतादृशशङ्कायाः मधुनरकासुरादिप्रधानदैत्यावेशप्रयुक्तत्वं सूचयति अथवा आख्यानपाठासक्तभक्तानां दारिद्र्यादिपरिहारार्थं वाङ्मनोदेव्याः लक्ष्म्याः प्रसाद-प्रापकभूदेवीउद्धारोपाख्यानम् आरभते – **अथेति** ।।)

**अथ मधुं युधि निहत्य मोदते बुधजनैरभिहितो मधुहेति ।**
**विधिभवेन्द्रगुरुपूर्वकैः सुरैः कुसुमवर्षिभिरीडितः स्वराट् ।।८२**

अन्वयः – अथ (श्रीहयग्रीवः) युधि मधुं निहत्य मोदते । (अत एव) मधुहा इति बुधजनैः अभिहितः । विधिभवेन्द्रगुरुपूर्वकैः सुरैः स्वराट् (इति) कुसुमवर्षिभिः ईडितः ।

**शङ्खचक्रगदाद्युद्यदायुधैः शार्ङ्गसञ्ज्ञितधनुःप्रवरेण ।**
**बाणपूगसहिताक्षयतूणीभ्यामुपागमदथाब्धिषु मध्ये ।।८३**

अन्वयः – अथ शङ्खचक्रगदाद्युदायुधैः बाणपूगसहिताक्षयतूणीभ्यां शार्ङ्गसञ्ज्ञित-धनुप्रवरेण अब्धिषु मध्ये उपागमत् ।

(व्या) **उदायुधैः** प्रकाशमानायुधैः उत्कृष्टायुधैर्वा इत्यर्थः ।८४। (अत्रापि **उद्यदायुधैः** इति पाठे त्रिष्टुप्छन्दःसामञ्जस्यम् अर्थसामञ्जस्यं च भवति । समुद्रमध्ये श्रीहयवदनस्य मधुनामकदैत्येन घोरयुद्धमभवदित्यर्थः ।)

**तद्युद्धमभवद्घोरं समुद्रसलिले तदा ।**
**दृष्ट्वा तत् खेचराः सर्वे दुद्रुवुर्भयतो दिशः ।।८४**
**नभस्थलं विशालाक्ष विमानावलिभिः सुराः ।**
**अलंचक्रुर्मलयजैराक्तोरःस्थलमालिनः ।।८५**

अन्वयः – तदा समुद्रसलिले घोरं युद्धम् अभवत् । तत् दृष्ट्वा सर्वे खेचराः भयतः दिशः दुद्रुवुः । (हे) विशालाक्ष (विप्र!) सुराः मलयजैः आक्तः उरस्थल-मालिनः विमानावलिभिः नभस्थलम् अलंचक्रुः ।

---

(१) तापत्रयेण सन्तप्तं यदेतदखिलं जगत् ।
वक्ष्यामि शान्तये तस्य कृष्णामृतमहार्णवम् – इति श्रीमदाचार्याः कृष्णामृतमहार्णवे ।

(व्या) **मलयजैः** चन्दनैः **आप्तं** (= लिप्तं) **उरःस्थलं** येषां ते तथोक्ताः । मालाः एषां सन्तीति **मालिनः** । आक्तोरस्थलाश्च ते मालिनश्चेति विशेषणोभयपदकर्मधारयः ।।८६।। (सामान्यदेवाः पक्षिणश्च पिशाचाश्च मधुराक्षसस्य भयङ्कररूपं दृष्ट्वा पलायनं चक्रुः । प्रधानदेवाः युद्धदर्शनार्थम् आगत्य गगने विमानेषु तस्थुः ।८५।)

**तदैव देवो भवपूर्वकैः सुरैः सुवन्दितः शत्रुवधं च कुर्विति ।**
**तदोमिति प्रासवरेण वैरिणं निवारयामास जहास वै हरिः ।।८६**

**जानुमात्रं तु तस्यासीत् भानुमण्डलमप्यहो ।**
**को नु तं वर्णयेद्देहं(वं) सूनुवर्य शृणुष्व भो ।।८७**

अन्वयः – तदा भवपूर्वकैः सुरैः शत्रुवधं कुरु इति देवः सुवन्दितः एव । तदा 'ॐ' इति प्रासवरेण वैरिणं निवारयामास वै हरिः जहास च ।। तस्य जानुमात्रं अपि तु भानुमण्डलं आसीत् भो सूनुवर्य! तं देहं कः नु वर्णयेत्? श्रुणुष्व । अहो! भो सूनुवर्य तं देहं कः नु वर्णयेत् श्रुणुष्व । तस्य जानुमात्रम् अपि तु भानुमण्डलं आसीत् अहो!

(व्या) (तदा रुद्रादिभिः प्रार्थितः हयवदनः मधुं प्रासायुधेन तताड ।८७। भूमेरूर्ध्वं लक्षयोजनोन्नतप्रदेशे सूर्यमण्डलं वर्तते । मधुदैत्यनाशकदेवदेहस्य तस्य जानुपरिमितित्वे तस्य देहः लक्षचतुष्टययोजनोन्नतः । सार्धद्वयलक्षयोजनस्थूलदेहवान् देवः इति च सिद्ध्यति । दैत्यदेहः प्राकृतः ततोऽधिकस्थूलतरः इति च सिद्ध्यति । अत एव तस्य रक्तमांसादिभिः भूमेरुपचयो जातः । सूनुवर्य! इति अत्र, 'पुत्र' इत्युत्तरश्लोके च सम्बोधनात् एतदध्यायः विप्रश्रोतृकः ।८८।)

**तदस्त्रशस्त्राणि स्वशस्त्रसश्चयैः विवृश्च्य पुत्राप्रतिशस्त्रधारया ।**
**शिरो जहाराशु सुरैः समीडितो गिरीन्द्रवत्तच्च पपात कं भुवि ।।८८**

अन्वयः – हे पुत्र! तत् अस्त्रशस्त्राणि अप्रतिशस्त्रधारया स्वशस्त्रसश्चयैः विवृश्च्य सुरैः समीडितः शिरः आशु जहार । गिरीन्द्रवत् तत् कं भुवि पपात च ।

(व्या) **विवृश्च्य** छित्वा, **अप्रतिशस्त्रधारया** = न विद्यते प्रतिशस्त्रधारा यस्याः सा

तथोक्ता । विष्णोः **शस्त्रधारा** निखिलारिशस्त्रछेदिका । स्वयं तु न विद्यते इति भावः । **कं** = शिरः **भुवि पपात** ।८९।

**देवाः सर्वे पुनर्याताः तत्र स्वर्यान्ति केचन ।**
**कैलासं लोकविख्याताः सत्यलोकं च केचन ॥८९**

**ब्रह्मा स्तुवन् परंब्रह्म ब्रह्मलोकं मुदा तदा ।**
**ययौ ब्रह्म हृदि ध्यायन् ब्राह्मणैर्ब्रह्मवित्तमैः ॥९०**

अन्वयः – लोकविख्याताः सर्वे देवाः पुनः याताः तत्र केचन स्वर्यान्ति; कैलासं केचन सत्यलोकं च । तदा ब्रह्मा परंब्रह्म स्तुवन्, ब्रह्म हृदि ध्यायन् ब्रह्मवित्तमैः ब्राह्मणैः (सह) मुदा ब्रह्मलोकं ययौ ।

(व्या) **स्वर्याताः** = स्वर्गं प्राप्ताः ।९०। (**कृतयुद्धदर्शनाः** । प्राप्तप्रयोजनाः देवाः पुनः स्वस्वलोकं प्रति जग्मुरिति वदति – **देवा इति** ॥ यान्ति केचन कैलासम् । यान्ति केचन सत्यलोकम् ।)

**कैलासं लोकपालैश्च बालार्कद्युतिरव्ययः ।**
**शूली कालाग्निवद्भीमः स्वलोकं च ययौ मुदा ॥९१**

**इन्द्रोऽपि सान्द्रसन्तोषादुपेन्द्रेणान्वितः प्रभुः ।**
**मुनीन्द्रैः सह मन्द्रैश्च चन्द्रलोकोपरि ह्यगात् ॥९२**

अन्वयः – बालार्कद्युतिः कालाग्निवत् भीमः अव्ययः शूली च लोकपालैः (सहितः सन्) स्वलोकं कैलासं (प्रति) मुदा ययौ ॥ इन्द्रः अपि प्रभुः उपेन्द्रेण मुनीन्द्रैः च अन्वितः मन्द्रैः सह सान्द्रसन्तोषात् चन्द्रलोकोपरि हि अगात् ।

(व्या) **इन्द्रोपीति** ॥ **चन्द्रलोकोपरी**त्यनेन दक्षिणायनोत्क्रान्तानां 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इत्युक्तरीत्या स्वर्गफलेच्छूनां पुनरावृत्तिः सूचिता । **मन्द्रैः** बहुवचनमाद्यर्थे मन्द्रमध्यमतारैः स्तूयमानमित्यर्थः ।९३। (**ब्राह्मणैः** नारदभृगुवसिष्ठादिभिः सह इति सहयोगे तृतीया ।९१। **लोकपालैः** इत्यत्रापि सहयोगे तृतीया । ते लोकपालाः एकैकांशेन हरसभायां वर्तन्ते । **शूली** = त्रिशूलधारी ।९२।)

**तस्य त्वक्चर्ममांसैश्च मेदो मज्जास्थिभिः सुत ।**
**रक्तैः रक्तां धरां चक्रे प्रकृत्यवयवैरिह ।।९३**

**नखैः खननवच्चक्रे कुन्तैः *कुद्दालकैरपि ।**
**पिण्डीकृत्य च तत्पङ्कं सोऽनन्तमहिमः स्वराट् ।।९४**

(अन्वयः) – हे सुत! अनन्तमहिमः स्वराट् सः तस्य त्वक्चर्ममांसैः मेदो मज्जास्थिभिः रक्तैः प्रकृत्यवयवैः च रक्तां धरां चक्रे । (एवं तस्य) नखैः कुन्तैः कुद्दालकैः खननवत् अपि चक्रे । तत् पङ्कं च पिण्डीकृत्य धरां चक्रे ।

(व्या) 'कृष्णैव पृथिवी स्वतः' इति स्वाभाविककृष्णरूपम् । हयग्रीवनिहतमधुनामकासुररक्तसम्बन्धेन स्थलविशेषेषु रक्तत्वम् । रक्तोपादानैः **प्रकृत्यवयवैः** मिश्रितत्वात् ।।९४।। **नखैरिति** । एवं तस्य नखैः कुन्तकुद्दालाद्यायुधविशेषैः । तदुपादानैर्मिश्रितं भौमस्थलं **खननवत्** खननसाधनलोहाद्युत्पत्तिसाधनं **चक्रे** ।।९५।। (तस्य = मधुनामकदैत्यस्य गतप्राणस्येत्यर्थः ।) (*कुन्ताळकैः – पा)

**मेदोभिर्निर्मितत्वाच्च मेदिनीति विदुर्बुधाः ।**
**तद्धृताभरणैर्युक्ता तस्मात् तां धरणीं विदुः ।।९५**

**लोकाधारत्वयुक्तत्वात् तां धरेति विदुर्बुधाः ।**
**स्वयं तूर्वरितत्वाद्धि नष्टेषु स्वपतिष्वहो ।।९६**

**उच्यते सापि चोर्वीति पर्वताद्यैरथान्विता ।।९७**

(अन्वयः) – (दैत्य)मेदोभिः निर्मितत्वात् मेदिनी इति च बुधाः विदुः । तत् धृताभरणैः युक्ताः तस्मात् तां धरणीं (इति) विदुः । लोकाधारत्वयुक्तत्वात् तां धरा इति बुधाः विदुः । स्वपतिनष्टेषु (पृथिवीपतीनां नष्टत्वेऽपि) स्वयं तु उर्वरितत्वात्, अथ पर्वताद्यैः अन्विताः च सापि 'उर्वी' इति च उच्यते हि । अहो!

(व्या) (दैत्यमेदोभिर्मिश्रितमृदात्मकत्वात् भूम्याः मेदिनी नाम । मधुदैत्यस्य आभरणानां धारकत्वात्; आभरणैः सहितत्वात् धरणीति भूदेव्याः नाम इति ज्ञानिनः विदुः ।) **लोकेति** । जनानां धारकत्वात् **धरेति** भूदेव्याः नाम ज्ञानिनो विदुः । इमानि भूदेव्याः

नामानि भक्तानां पुण्यजनकानि अर्थज्ञानपूर्वकं यदि पठितानीति सूचयति – **विदुः बुधाः इत्यनेन** । तथा 'पृथिवीपति' इति अभिमानवतां चक्रवर्तिनां नष्टत्वेपि पृथ्वी च उर्वरिता एव । अत उर्वीति तस्याः नाम । पर्वतादि उत्कृष्टवस्तुयुक्तत्वाच्च उर्वीति तस्याः नाम।९७

**उर्वी च पर्वतधृताऽपि श्रियोऽवराभूत् श्रीपर्वतं च स्वयमेव धरत्यमोघम् ।**
**तस्माद्वराहमहिषी च बभूव कोलादङ्के धृता च मुहुरप्यभिलाषिता सा ।।९८**

**(अन्वयः) सा च उर्वी पर्वतधृता अपि श्रियः अवरा एव अभूत् । (यद्यपि) अमोघं श्रीपर्वतं च स्वयं (एव) धरति; सा वराहमहिषी बभूव; कोलात् अङ्के अपि धृता मुहुः अभिलाषिता ।**

**(व्या)** तस्याः भूम्याः अभिमानिनी धरादेवी पञ्चभूताऽवरा । **श्रीपर्वतं** रमायाः प्रीतिविषयं शैलनामकं धरती । **वराहमहिषी च बभूव** ।।९८।। (सा च उर्वी यद्यपि पर्वतादिभिः आलिङ्गिता । तथापि लक्ष्मीदेव्याः सकाशात् अवरा एव । तथापि श्रियः वरा अभूत् । पर्वतदेवैः आश्रितत्वात् श्रीदेव्याः प्रियपर्वतस्य स्वेन धृतत्वाच्च अहं लक्ष्मीदेव्यपेक्षया श्रेष्ठा इति अभिमानं जातम् । **मुहुरप्यभिलाषिता सा** । अभिलाषिता = तारकादिभ्य इतच् इति इतच् प्रत्ययः । स्त्रीत्वाट्टाप् । अभिलाषा अस्याः सञ्जाता इति **अभिलाषिता** । सर्वापेक्षया अहम् अधिका भवेयं इति अपेक्षाविशिष्टा । अत एव दुरभिमानविशिष्टा जाता इति भावः ।)

**यस्या गर्वहरायेह वराहो नरकं सुतम् ।**
**लोकराहुं धरायां च सृष्ट्वाऽरोहयदद्भुतम् ।।९९**

**लोकपालपदं ब्रह्मवरतः पर्वतोपमान् ।**
**कारयामास पापानां राशींस्तेन दुरात्मना ।।१००**

**(अन्वयः) यस्याः गर्वहराय इह वराहः धरायां लोकराहुं सुतं नरकं सृष्ट्वा ब्रह्मवरतः अद्भुतं लोकपालपदं (दत्वा) आरोहयत् । तेन दुरात्मना पर्वतोपमान् पापानां राशीन् कारयामास ।**

**(व्या) यस्या इति** । तस्माद्गर्वप्रसक्तौ तत्परिहारार्थं तस्यां नरकमुत्पाद्य, तस्य पातकसम्पूर्त्यनन्तरं कृष्णरूपेण जघान ।।९९। (**लोकराहुं** = लोकोपद्रवकरं) (**लोकपालपदं**

सृष्ट्वा आरोहयत् इति पूर्वेणान्वयः । 'नरकासुरः लोकपालान् विजित्य तेषां कार्याणि स्वयमेव स्वकीयदैत्यसहायेन चकार' इति कथा । अनेन नरकासुरस्य पापवृद्धिरेव जाता । असुराणाम् ऐश्वर्यं पदव्यादिकं च तेषां पापवृद्ध्यर्थमेव भविष्यति ।१००।[१])

**स्वदंष्ट्रं चोग्रपापानां सिद्ध्यर्थमददात् प्रभुः ।**
**जघान स्वयमेवाजौ कृष्णो वै रुग्मिणीपतिः ।।१०१**

**पातयामास कोपेन तत् तमोऽन्धं धरासुतम् ।**

**(अन्वयः) उग्रपापानां सिद्ध्यर्थं प्रभुः स्वदंष्ट्रं अददात्; स्वयमेव कृष्णो रुग्मिणी-पतिः (भूत्वा) आजौ (युद्धे) तं धरासुतं जघान वै; कोपेन तत् तमोऽन्धं पातयामास ।**

(व्या) (उग्रपापानां सिद्ध्यर्थं, नरकेन प्रार्थितः सन् पिता स्वस्य एकतरदंष्ट्रं अमोघास्त्ररूपेण उपदिश्य तस्मै ददौ । तेन अपि नरकासुरस्य पापबुद्धिः जाता । यतः तेन अस्त्रेण ब्रह्मादीनामपि पीडयामास । ततः देवैः ऋषिभिश्च प्रार्थितः सन् स्वयमेव रुग्मिणीपतिश्रीकृष्णरूपेण **आजौ** तं **जघान वै** । **तमोऽन्धम्** अन्धेतमसि पातयामास । **कोपेन** = 'ईश्वरत्वस्वभावेन तस्य पापानुसारेण' इत्यर्थः; न तु तामसक्रोधेन । तस्य निर्गुणे हरौ अभावात् । धरादेवीपुत्रः तमसि पपात । तमोद्वारं जगाम । कल्पान्ते अन्धेतमसि पतिष्यति ।

**ब्रह्माणमम्भृणीपुत्रं चकारारिनिषूदनः ।।१०२**

**एवं तत्पुत्रयोर्नीचत्वाधिकत्वतया मुने ।**
**तारतम्यं चकारात्र शृणु पुत्र न संशयः ।।१०३**

**इत्थं मधुहरेणैव निर्मितां धरणीं पुरा ।**
**पौराणिको वदत्येवं करुणां कुरु ब्राह्मणे ।।१०४**

**(अन्वयः) हे पुत्र! शृणु । अरिनिषूदनः अम्भृणीपुत्रं च ब्रह्माणं चकार । एवं**

---

(१) **'असुराणां सुखाद्याश्च देवावेशादुदीरिताः ।**
**स्वतस्तु निर्गुणाः सर्वे सर्वदोषात्मका मताः ।।'** – इति भाग.ता. ११/२/४९

**तत्पुत्रयोः नीचत्वाधिकत्वतया तारतम्यं[१] चकार; अत्र न संशयः ।**

**एवं पुरा इत्थं मधुहरेणैव धरणीं निर्मिताम् इति पौराणिकः वदति । हे मुने ब्राह्मणे करुणां कुरु ।**

**(व्या)** अम्भ्रणीपुत्रस्य ब्रह्मणः उत्कर्षज्ञापनेन रमायाः सर्वोत्कृष्टत्वं सूचितम् । एवं मधुहननादिस्मरणेन भक्तानाम् अन्तरायाद्यनिष्टनिवृत्तिश्च भवतीति सूचितम् । **हे मुने** इति विठ्ठलादिसन्निहितस्य वेदवेद्यस्य सम्बोधनम् ।१०३। (लक्ष्मीपुत्रस्तु चतुर्मुखः ब्रह्मपदव्यां सहभोगं भुक्त्वा प्रळयान्ते वैकुण्ठमध्यास्ते । तत्र हरिदेहे सायुज्यमुक्तिं लभते ।१०२।) **ब्राह्मणे करुणां कुरु** । तत्कुतः? मदुपदेशेन हयवदनस्य उक्तरीत्या भूनिर्मातृत्वेन भूवराहात्मकत्वम् अनुसन्धाय । मधुहरेणैव निर्मितां धरणीं वदन्ति । तत्पुण्यप्रभावेण श्रीभूवराहात्मकहयवदनपूजनानुकूलां करुणां कुरु इत्यर्थः ।१०४। (**इत्थं इति** । पूर्वोक्तप्रकारेण भूमिः मधुदैत्यनाशकहयग्रीवस्वामिना रचितमिति रोमहर्षणसूतादिरूपपौराणिकः वदति । एवं पुराणकथा प्रसिद्धा इत्यर्थः । **'हे मुने! पुत्र! करुणां कुरु ब्राह्मणे'** इति श्रीवेदवेद्यं प्रति गुरुराजस्य सम्बोधनम् । अथवा पौराणिकः ब्राह्मणः एवं वदति । पौराणिकः सन् एडमूकब्राह्मणः प्रातःकाले प्राप्तवाक्शक्तिः पूर्वोक्तं वदति । तादृशग्रन्थप्रचारके ब्राह्मणे हे वेदनिधे! दयां कुरु । तस्मै अन्नं देहीत्यर्थः ।[२])

**इमां भूम्याश्च महिमां मानवोऽपि शृणोति यः ।**
**वराहेण हयग्रीवस्वरूपेण महात्मना ॥१०५**

**दत्तां तत्पदवीं याति यं वदन्तीह भूपतिम् ।**

**(अन्वयः) (पूर्वोक्तां) इमां भूम्याश्च महिमां मानवः अपि यः (विप्रमुखतः) शृणोति हयग्रीवस्वरूपेण महात्मनः वराहेण दत्तां तत्पदवीं यं इह भूपतिं (इति) वदन्ति, तत् पदवीं याति ।**

---

(१) तारतम्यं विमुक्तिगम् इति श्रीमदाचार्यवाक्यमत्र स्मर्तव्यम् । तद्यथा –
**मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम् ।**
**ततो विष्णोः परोत्कर्षं सम्यग्ज्ञात्वा विमुच्यते ।' इति कौर्मे ॥** – ईशावास्योपनिषद्भाष्ये ।

(२) सीतापतिप्रकरणे 'करुणां कुरु ब्राह्मणे' इति २०/७८ तमे श्लोकेपि अस्ति ।

(व्या) कैमुत्यमाह **इमामिति ।। इमां महिमां**[१] पूर्वोक्तमहिमानं **यः श्रुणोति** । **स मानवोपि हयग्रीवस्वरूपेण दत्तां तत्पदवीं याति** । विप्रस्तु उपदेष्ट्रा मन्मुखतः श्रोता तत्पदवीं यातीति किमु वक्तव्यम् ।१०५। (क्षत्रियकुलोत्पन्नः राजपदवीयोग्यस्तु भूपतिरेव भवतीति = **यं वदन्तीह भूपतिं** इत्यनेन सूचितम् ।)

**श्रीमद्वादीभराजोऽहं वादिराजोऽवदं द्विजे ।।१०६**
**बुधाः श्रुण्वन्तु मे दासाः सदा मम हिते रताः ।**

**(अन्वयः) श्रीमद्वादीभमृगराजः वादिराजः अहं द्विजे अवदम् । सदा मम हिते रताः मे दासाः बुधाः शृण्वन्तु ।**

(व्या) उक्ततात्पर्योपपादनाय – **वादिराजो अवदं द्विजे इति** ।। **वादिराजः अहं** धरणीनिर्मातारं हयवदनं **द्विजे अवदम्** । **मे दासाः सदा मम हिते रताः** सन्तः **शृण्वन्तु** । अनेन चिकीर्षितप्रतिज्ञाकृता भवति । विषयप्रयोजनसम्बन्धाश्च सूचिता भवन्ति । वृन्दावनस्य रामकृष्णवेदव्यासात्मकभूवराहात्मकहयवदनः **विषयः** । तज्ज्ञानेन तत्तद्योग्य-फलप्राप्तिः **प्रयोजनम्** । विप्रशेषादयो दासाः **अधिकारिणः** । यथायोग्यः **सम्बन्धः** इति । अध्यायान्ते विषयादिसूचनं किमर्थमिति चेत्, एतदध्यायसर्वस्यापि नान्दीपद्यतुल्यत्वात् । नान्दीपद्यान्ते विषयादिसूचनमिव अध्यायान्ते तत्सूचनस्य युक्तत्वात् ।१०६। (तथा च कुजनाऽशङ्कापि निर्मूला । आप्तऋजुगुरुराजप्रणीतत्वात् । प्रियशिष्याय एकान्ते उपदिष्टत्वात् आनुकूलत्रयोपेतम् । विशिष्टफलप्रदं च साधकानां दासभूतानामिदं स्वाप्नाख्यानमिति सूचितं भवति ।१०६।)

**हरेर्वक्षस्थले दृष्ट्वा श्रियं विस्मितवानहम् ।।१०७**
**पाश्वयोरुभयोर्देवीं करे चामरधारिणीम् ।**
**अङ्के च पङ्कजाक्षीं तां शङ्खपाणेर्महात्मनः ।।१०८**
**कुङ्कुमाङ्कितगन्धाढ्यां कङ्कणादिविभूषिताम् ।**
**अग्रतः पृष्ठतश्चापि ह्यधस्थादुपरिस्थिताम् ।**
**सर्वत्र तां श्रियं दृष्ट्वा परमानन्दनिर्भरः ।।१०९**

---

(१) श्लोके 'महिमान् इत्यर्थे महिमाम्' इत्यलौकिकः प्रयोगः ।

(अन्वयः) हरेः वक्षस्थले श्रियं दृष्ट्वा अहं विस्मितवान्, महात्मनः शङ्खपाणेः उभयोः पार्श्वयोः करे चामरधारिणीं कुङ्कुमाङ्कितगन्धाढ्यां कङ्कणादिविभूषितां, अङ्के च तां पङ्कजाक्षीं, अग्रतः पृष्टतः अधस्तात् उपरि च सर्वत्र स्थितान् तां अपि देवीं श्रियं दृष्ट्वा (अहं) परमानन्दनिर्भरः ।

(व्या) एवं स्तुतस्य विष्णोः सकलवाङ्मनोदेवत(ता)या रमया सह क्षीरनीर-वदासीनत्वस्मरणं क्षिप्राभीष्टसाधनमिति सूचयितुमाह – **हरेरिति** । (पुराणं वक्तुः स्वस्य किं फलमिदानीजातमित्यतो वा आह – **हरेरिति** । श्रीहरेर्वक्षःप्रदेशे, अङ्के च पार्श्वयोश्च सर्वदिक्षु विदिक्षु च स्थितां सेवां साक्षात्कुर्वन्तीं लक्ष्मीं दृष्ट्वा, सैव भगवत्पूजायाः साक्षा-न्मुख्याधिकारिणीति ज्ञात्वा आश्चर्यमग्नोभूदित्यर्थः । अनेन भगवत्पूजायाम् अस्माभिः प्राकृतेन्द्रियवद्भिः स्वातन्त्र्यभ्रमवद्भिः अहङ्कारो न कार्यः, पूजाकर्तृभूतायाः रमायाः वयं उप-करणमात्रमिति ज्ञात्वा, निरहङ्कारेण पूजासाधनानि समर्पयाम इति सूचितं भवति ।१०९।)

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ॥११०**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्य-ज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ॥११२**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दा-शनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण)

मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेम-निर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।।११३**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु(१) ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।११३**

।। इति श्रीमत्कविकुलतिलकश्रीवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराज-पूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे प्रथमाध्यायः समाप्तः ।।

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

(व्या) एतच्छ्रवणफलमाह – एतत्सर्वमिति । सर्वे भक्ताः गर्वं हित्वा एतत्सर्वम्= उक्तं वक्ष्यमाणं च विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान् भागवते 'विद्याकामस्तु गिरिशम्'(२) इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले

---

(१) श्रीवादिराजगुरुगळ कालदल्लिये किरिय यतिगळाद श्रीवेदनितीर्थरल्लि अध्ययन माडिद श्रीराम-चन्द्राचार्यरेंब शिष्यरु बरेद 'श्रीवादिराजगुरुवरचरितामृत'दल्लियू ई स्वाप्नवृन्दावनाख्यानग्रंथद महिमेयन्नु हीगे वर्णिसिद्दारे.

**स्वाप्नवृन्दावनाख्यानपठनं मध्वसद्गुरोः ।**
**भाष्यादिसर्वमूलानां कृतीनां पठनं तथा ।८/३२।**

(२) ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणः पतिम्
इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन्

उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता ।

---

देवीं मायां तु श्रीकामस्तेजस्कामो विभावसुम्
वसुकामो वसून्रुद्रान्वीर्यकामोऽथ वीर्यवान्
अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः सुतान्
विश्वान्देवान्राज्यकामः साध्यान्संसाधको विशाम्
आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत्
प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ
रूपाभिकामो गन्धर्वान्स्त्रीकामोऽप्सर उर्वशीम्
आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम्
यज्ञं यजेद्यशस्कामः कोशकामः प्रचेतसम्
विद्याकामस्तु गिरिशं दाम्पत्यार्थ उमां सतीम्
धर्मार्थ उत्तमश्लोकं तन्तुः तन्वन्पितॄन्यजेत्
रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान्
राज्यकामो मनून्देवान्निरृतिं त्वभिचरन्यजेत्
कामकामो यजेत्सोममकामः पुरुषं परम्
अकामः सर्वकामो वा मोक्षकाम उदारधीः
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्
एतावानेव यजतामिह निःश्रेयसोदयः
भगवत्यचलो भावो यद्भागवतसङ्गतः
ज्ञानं यदाप्रतिनिवृत्तगुणोर्मिचक्रम्
आत्मप्रसाद उत यत्र गुणेष्वसङ्गः
कैवल्यसम्मतपथस्त्वथ भक्तियोगः
को निर्वृतो हरिकथासु रतिं न कुर्यात् – इति भागवते द्वितीयस्कन्धे ।

**सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**।। ॐ इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्यानव्याख्याने**
**प्रथमाध्यायः ।। श्रीकृष्णार्पणमस्तु ।।**

* * * * *

# ०२-००- द्वितीयाध्यायः

**अवतारिका** – श्रीवादिराजगुरुभ्यो नमः । वायोरिव स्वस्यापि हयग्रीवविशिष्टप्रतिमात्वात् स्वान्तर्यामित्वेन तदुपासनं भक्तानामिष्टानिष्टप्राप्तिपरिहारफलकत्वात् कर्तव्यमिति निश्चय-मुत्पादयितुं **'इन्द्रो रुद्र'** इत्यादिनोक्तमिन्द्राद्युपास्यत्वं विशदीकृत्य स्तोत्रानन्तरसङ्गतं हयवदनात्मकस्यैव त्रिविक्रमस्य उत्सवरूपभजनप्रकारः । वृन्दावनाचार्यनामकस्य स्वप्ने द्रष्टु-र्विप्रस्य जन्मान्तरे यतित्वं, मखकारयितृत्वं, पारिबर्हसमर्पणम्, पुण्यदिने विशेषाराधनं च इत्येवं रूपभजनप्रकारश्चोच्यते अनेनाध्यायेन ।

**हरिः ॐ ।**

**इन्द्रोऽपि सान्द्रसन्तोषादुपेन्द्रेण सहागतः ।**
**वृन्दावनगतं देवं चन्द्रवद्रञ्जनं दिशः ।।१**

**नत्वा तस्मै स्तुतिं कृत्वा तस्मै करं त्वरन् ।**
**श्रुत्वा तस्य कथामुक्त्वा वृत्रासुरवधं तथा ।।२**

**विनिर्गतः पुनः स्वर्गं गुर्वग्निसहितः स्वराट् ।**
**गन्धेन चर्चितश्चोग्रं दुर्गन्धं तेन वारयन् ।।३**

(अन्वयः) इन्द्रः अपि उपेन्द्रेण सह सान्द्रसन्तोषात् आगतः चन्द्रवत् दिशः रञ्जनं (रञ्जकं) वृन्दावनगतं देवम्; नत्वा तस्मै स्तुतिं कृत्वा, तस्मै त्वरन् करं दत्वा, तस्य कथां श्रुत्वा, तथा वृत्रासुरवधम् उक्त्वा, गन्धेन चर्चितः च तेन उग्रम् दुर्गन्धं वारयन् स्वराट् गुर्वग्निसहितः पुनः स्वर्गं (प्रति) विनिर्गतः ।३।

**(व्या)** इन्द्रोपासनाप्रकारमाह – **इन्द्रोऽपीत्यादिना । इन्द्रः उपेन्द्रेण** अनुग्राहकेण **सह आगतः । अपि**शब्दः गुर्वग्न्योः समुच्चायकः । **दिशः चन्द्रवत्**[1] **रञ्जनं** रञ्जकम् ।

---

(१) **'चन्द्र आह्लादरूपत्वात्'** – इति तैत्तिरीयभाष्यम् । तथा च बृहद्भाष्यम् (५-६-१) –
**'आह्लादनात् चन्द्रनामा देवोऽसविनिरुद्धकः ।**
**स एव चन्द्रमाविश्य स्थितस्तन्नामकोऽपि सः ।।'** इति ब्रह्माण्डे ।

* **चन्द्रवत् रञ्जनम्** इत्यत्र नित्ययोगे मतुप् । मम वृन्दावनं नित्यं सर्वदा श्रीहरिसन्निधानयुक्तमित्यर्थः।

चन्द्रावदातम् अण्डान्तरं बहिरपि प्रतिभासयन्तम् (हयग्रीवं) इत्युक्तं भवति ।१। नत्वेति । वृत्रासुरवधम् उक्त्वा । वृत्रासुरवधोपलक्षितं पुण्यं समर्प्य ।२।

विनिर्गत इति । तदर्पितेन गन्धेन चर्चितः । तेन उग्रं दुर्गन्धम् असुरावेशादि-प्रापकम् उपमर्दयोग्यप्रारब्धं पापं वारयन् (हरिवाय्वादिपरशुक्लत्रयार्पितगन्धमाल्यादिभिः । गुरूणां पादमृत्तिकादिभिश्च असुरावेशविवृत्तिः, पापनाशनं, प्रारब्धोपमर्दश्च भविष्यन्तीत्यनेन सिद्ध्यति ।) पुनः स्वर्गं प्रति विनिर्गतः । स्वराट् स्वर्गराजः ।३।

**इत्थं चाग्निस्तिग्मतेजाः मग्नश्चानन्दवारिधौ ।**
**भग्ने च यज्ञकृत्ये च निर्माल्यं जग्मिवान् हरेः ।।४।**

(अन्वयः) इत्थम्, च आनन्दवारिधौ मग्नः च अग्निः तिग्मतेजाः यज्ञकृत्ये च भग्ने च हरेः निर्माल्यं जग्मिवान् ।

(व्या) इत्थमिति । अग्निः निर्माल्यं जग्मिवान् इति पृथगुक्तेः नात्र तत्साहित्यमभिप्रेतम् (पूर्वोक्तइन्द्रसाहित्यम् ।) किन्तु गुर्वग्निसहितः सन् विनिर्गतः इति विनिर्गमनमात्रे साहित्य-मभिप्रेतम् । आनन्दवारिधौ मग्नोपि तिग्मतेजाः इति विरोधाभासः[१] । उत्सवविशेषे यजमानपत्नीषु अग्नेरनुरागदोषेण पुरोहितेनोक्तेन, तस्मिन् भग्ने सति, तत्सूचितप्रारब्धोप-मर्दसाधनं निर्माल्यं जग्मिवान् ।।४।।

**यमश्च यमुनाभ्राता कमनीयं हरिं प्रति ।**
**रमापतिं मम स्वामिनं ननामाऽगतः स्वयम् ।।५।**

**निवेद्य स्वाधिकारं तु दुर्जनानां च बाधकम् ।**
**साधकं सिद्धधर्माणां[२] सम्पदां तं प्रणम्य च ।।६**

**जगाम निमिषेणायं स्वालयं कालयन्नरीन् ।**

---

(१) इल्लि विरोधाभासविल्ल. स्वप्रारब्धोपमर्दके अनुकूलस्थळ सिक्कितेन्दु आनन्दवारिधियल्लि मग्ननादनु एन्दु हेतुगर्भविशेषण. अपि शब्दविल्ल. **यज्ञकृत्ये भग्ने सति** एंबल्लि हेळल्पट्ट अग्निय क्लेशद विचार भारत अरण्यपर्वदल्लिदे. ।

(२) (सद्धर्मपद्धत्या अनुष्ठितसत्कर्मानां प्राप्तपुण्यानां -
**'अस्यातिशुद्धबुद्धेश्च यस्य सद्धर्मपद्धतिम्'** – स्वा.आ. १०/१५३)

**पालयन् शीलवृत्तानां त्याजयन् दुर्जनान् सुखात् ।।७।**

(अन्वयः) यमुनाभ्राता यमः च स्वयम् आगतः कमनीयं हरिं मम स्वामिनं रमापतिं प्रति ननाम ।दुर्जनानां बाधकम्, सिद्धधर्माणां साधकं च स्वाधिकारं तु निवेद्य, तं सम्पदां प्रणम्य च, अयं निमिषेण शीलवृत्तानां पालयन्, दुर्जनान् सुखात् त्याजयन्, अरीन् कालयन् स्वालयं जगाम ।

**(व्या) यमश्चेति ।। स्वामिनं ननामे**ति नात्र यतिभङ्गः शङ्कनीयः । तस्य शास्त्र-दोषत्वाभावात् । **'य उपाधिर्लगति साध्ये सम्बन्धविशेषणे'** इत्यन्यत्र (उदयनेन) प्रयोगात् ।५। (**निवेद्य** = यज्ञत्वेन हयग्रीवाय समर्पयित्वा इत्यर्थः) ।६। (**अरीन् कालयन्, शील-वृत्तानां पालयन्, दुर्जनान् सुखात् त्याजयन्** इत्यत्र 'लक्षणहेत्वोः क्रियायाः' इति हेतौ शतृप्रत्ययः; 'कालयितुं, पालयितुं, त्याजयितुं स्वालयं ययौ' इति योजना । **शीलवृत्तानां** इत्यत्र कर्मणी षष्ठी ।७।

**वरुणो वायुना सार्धं लोकाधिपतिना गुणिन् ।**
**शरणं प्राप मद्वृन्दावने श्रीरमणं शृणु ।।८।**

**स्वाधिकारं निवेद्यास्मै गङ्गादार उदारधीः ।**
**सदारः प्रययौ धीरः सुधास्राव्यातपत्रगः ।।९।**

(अन्वयः) हे गुणिन्! (विप्र) शृणु । वरुणः लोकपतिना (प्रवह)वायुना सार्धं, मद्वृन्दावने श्रीरमणं प्राप । उदारधीः गङ्गादारः अस्मै स्वाकारं निवेद्य सुधा-स्राव्यातपत्रगः सदारः धीरः वरुणः प्रययौ ।

**(व्या) वरुण इति** । मुख्यवायुत्वप्रतीतिं वारयितुं **लोकपतिनेति** (प्रवहवायुना वायव्य-कोणपेनेत्यर्थः ।) **स्वाधिकारमिति** । **गङ्गादारः** सदारो वरुणः, गङ्गया तदन्याभिर्भार्याभि-श्च सहितः (**सुधास्राव्यातपत्रगः** = अमृतस्रावि आतपत्रं शिरसि वहन् जगाम ।)[१] ।९।

---

(१) 'गुणिन्' एंबुदागि विप्रनिगे मुख्यसंबुद्धि. वेदवेद्यरिगू वेदनिधिगळिगू अन्वयिसुत्ते. (आतप = बिसिलु, अदरिन्द रक्षणे कोडुवुदु आतपत्र = छत्रि). स्वाधिकार निवेदने = हिंदिनन्ते तम्म कार्यगळन्नु हागू अदरिन्दुंटाद पुण्यगळन्नु हागू इतरे करसमर्पणेगळन्नु भगवन्तनिगे भक्तियिन्द अर्पिसुवुदु एन्दर्थ.

**कुबेरो नरवाहं च निर्ऋतिं त्वरया रयन् ।**
**गर्हयन् पुरतः शीघ्रमाससाद रमापतिम् ।१०।**

**स्वाधिकारं निवेद्यास्मै प्रसादं शिरसा धरन् ।**
**सदारः(सादरः) प्रययौ शीघ्रमुदारः स्वपुरं नरैः ।११।**

**(अन्वयः) कुबेरः नरवाहं त्वरयारयन् निर्ऋतिं गर्हयन् सन् पुरतः रमापतिं शीघ्रं आससाद ।। अस्मै स्वाधिकारं निवेद्य, प्रसादं(भक्त्या) शिरसा धरन्, उदारः सदारः नरैः शीघ्रं स्वपुरं प्रययौ ।।**

**(व्या) कुबेरः नरवाहनं त्वरया रयन्** शीघ्रं वेगयुक्तं कुर्वन् सन् = शीघ्रम् अनागमनदोषेण निर्ऋतिं गर्हयन् सन् । आससाद (श्रीमुष्णाचार्यर व्याख्यानार्थ बाधित. बेरे अन्वय इदे. कुबेरः स्वस्य **नरवाहं गर्हयन्** सन् । स्वस्य **नरवाहं त्वरया रयन्** = त्वरयन् (अन्तर्णित णिच्) अथवा त्वरया रयन् कुबेरः स्वस्य वाहकं इतोप्यधिकवेगगमनशक्तिचोदनार्थं गर्हयन् । निर्ऋतिं पुरतः (अभितः इतिवत् द्वितीया)[१] । शीघ्रं रमापतिं आससाद प्राप । अथवा निर्ऋतिं[२] पुरतः नरवाहं गर्हयन् राक्षासाकारेण विद्यमान निर्ऋतिरूपस्य भयङ्करत्वात् तस्य पुरतः भर्त्सने नरः बिभेतीति मत्वा तथा चकार । अथवा 'स च विभीषणवत् साधु राक्षसः कुतो बिभेषि?' इति गर्हयामास । स च नरवाहः 'निर्ऋतिर्मां भक्षयति' इति मत्वा वेगेनाऽधावत् । तथा स कुबेरः शीघ्रं रमापतिम् आससाद । न तु निर्ऋतेः पूर्वकाले एव । किन्तु निर्ऋतेरनन्तरमेव आससाद । वाहनस्य नरत्वात् विळम्बस्वभावः कुबेरः । तथापि गुरुराजवृन्दावनं प्रतिगमनवेळायां वाहकं गर्हयन् शीघ्रं वृन्दावनं प्राप इति भावः । उत्तरश्लोके कुबेरस्य अपराधप्रसक्तिर्नास्ति । **उदारः** । **सादरः** । इति च स्तुतः । तस्माद्योग्यान्वयो कर्तव्यः ।) अग्निर्निर्ऋतिप्रागुक्तस्य इदानीं विलंबद्योतनाय अनुक्तिः (इल्लि व्याख्यानदल्लि प्रमाददिन्द तप्पु बिद्दु होगिदे. उदारः कुबेरः स्वाधिकारकृतसेवां यज्ञत्वेन हयग्रीवाय समर्पयित्वा, प्रसादं भक्त्या शिरसि न्यस्य नरैः शीघ्रं प्रययौ ।

---

(१) **अभितः परितः समयानिकर्षाऽध्यधियोगेषूपसङ्ख्यानम्'** इति द्वितीया ।

(२) 'निर्ऋतिः' शब्दस्य अपरम् अर्थः जिज्ञासार्थे स्मर्तव्यम् । तद्यथा –

**'ऋतप्राप्तिविरुद्धत्वात् संसारं निर्ऋतेः शिरः ।**
**अगणय्य पदाऽऽक्रम्य वैष्णवं निलयं ययुः ।।' इति गारुडे –** भाग.ता.नि. (१०.९४.२७)

निरृतिसेवकान् राक्षसान् दृष्ट्वा भीता भवन्तीति । ततश्च निरृतिरपि सेवां चकार इति योजना ज्ञेया) ।११। ।११।

**रुद्रोऽपि वीरभद्रेण शूद्रमोहनरूपिणा ।**
**कार्द्रवेयादिभिः सार्धं द्रुतमायाद्रमापतिम् ।।१२।**

(अन्वयः) वीरभद्रेण शूद्रमोहनरूपिणा रुद्रः अपि कार्द्रवेयादिभिः सार्धं रमापतिं द्रुतम् आयात् ।

**(व्या) (रुद्रोपीति । कार्द्रवेयादिभिः** कर्कोटकवासुक्यादिनागगणैः भूषणभूतैः सहितः वीरभद्रनामकशूद्रोपासितमनोहररूपेण द्रुतं भक्तिभरितः आजगाम ।)

**मद्वृन्दावनमध्यस्थं सद्वृन्दैरन्वितोऽनमत् ।**
**तद्वृन्दावनगं गोपं मद्वृन्दावनमध्यगम् ।।१३**

**दृष्ट्वा च विस्मितो भूत्वा स्वनाथं राममेव च ।**
**अत्यन्तं स तु सन्तोषभरितो भरतो यथा ।।१४**

**बभूव स तु रुद्रोऽपि सरुद्रत्वं जहाविह ।**
**रूपान्तरेण कैलासं ययौ रूपान्तरेण च ।।१५**

**अत्राप्यन्तर्गतं रामं भजते निजसेवया ।**

(अन्वयः) सद्वृन्दैः अन्वितः मद्वृन्दावनमध्यस्थम् अनमत् । तद्वृन्दावनगं गोपं मद्वृन्दावनमध्यगं दृष्ट्वा (अनमत्) । यथा भरतः अत्यन्तं सन्तोषभरितः (तथा) सः (रुद्रः) तु स्वनाथं रामं एव च (दृष्ट्वा) विस्मितो भूत्वा (सन्तोषभरितः) बभूव । सः रुद्रोपि तु इह सरुद्रत्वं (तमोगुणाभिमानित्वं) जहौ । (ततः) रूपान्तरेण कैलासं ययौ । अत्रापि (रूपान्तरेण) अन्तर्गतं रामं च निजसेवया भजते ।

**(व्या) सद्वृन्दैरन्वितोनमदिति** । परिवारवानपि तामसान् परित्यज्य आगतः । तेषां (तामसानां) अनधिकारित्वादित्युक्तं भवति । **तद्वृन्दावनगं** यमुनातीरे प्रसिद्धवृन्दावनगं **गोपं** (कृष्णात्मकं) व्यासात्मकं, हयग्रीवात्मकं **स्वनाथं रामं अनमद्**िति पूर्वेणान्वयः ।१३।

(**भरतो यथा** रामदर्शनेन चतुर्दशवर्षानन्तरं अति**सन्तोषभरितः** तथा **रुद्रोपि** स्वोपास्य **रामं** वृन्दावने **दृष्ट्वा** आनन्दपूर्णो बभूवेत्यर्थः। **सरुद्रत्वं** दशरुद्रसहितत्वं त्यक्त्वा एकाकी तपसि स्थितम् । भयङ्कररुद्रगणैः भूतादिभिः सहितत्वं त्यक्त्वा, केवलसौम्यभक्तैः सह स्थितवान्)।

**एवं सर्वेपि देवाश्च स्वस्वयोग्यहरिं प्रभुम् ।।१६**

**भजन्ते निजसेवाभिः भक्तिमन्तोऽत्र नान्यथा ।**

**(अन्वयः) एवं सर्वेपि देवाः च भक्तिमन्तः स्वस्वयोग्यं प्रभुं हरिं निजसेवाभिः भजन्ते । अत्र न अन्यथा ।१६।**

**(व्या)** (अन्ये **देवाश्च** रुद्रदेव इव एकांशेन वृन्दावने तपःकरणार्थं[१] स्वस्वबिम्ब-रूपसदृशहरिदर्शनसन्तुष्टाः[२] सन्तः अत्रैव स्थिताः ।१६।)

---

(१) श्रीगरुडपुराणे ब्रह्मकाण्डे षष्ठ, सप्तम, अष्टमाध्याये कृत विष्णुस्तुतीः, देवतातारतम्यनिरूपणम् अत्र स्मर्तव्यम् – तद्यथा –

**तत्र तत्र स्थिता सर्वे देवाः तत्त्वाभिमानिनः ।**
**स्वे स्वे ह्यायतने स्वाङ्गे तदर्थं च खगेश्वर ।**
**हरिं नारायणं सम्यक् स्तोतुं समुपचक्रिरे । ...**
**तत्राप्यादौ हरिं लक्ष्मीं स्तोतुं समुपचक्रमे । ...**
**शुश्रूषणं मदुचितं स्तवनं रमेश प्रीत्यर्थमेव च हरे न किञ्चिदस्ति । (इति श्रीः)**
**न मे हृषीकाणि पतन्त्यसत्पथे पदारविन्दे तु पतन्तु सर्वदा ।**
**लक्ष्म्या ह्यहं कोटिगुणेन हीनः स्तोतुं सामर्थ्यं नास्ति मे सुप्रसीद । (इति ब्रह्मा) ..**
**एतत्सर्वं विष्णुप्रीत्यर्थमेव ह्येतद् व्रतं सर्वदा वै करिष्ये ।**
**अवैष्णवान् दूषयिष्ये सदाहं सद्वैष्णवान् पालयिष्ये मुरारे ।**
**विष्णुद्रुहां छेदयिष्ये च जिह्वां तच्छ्रुण्वतां पूरयिष्ये त्रपूल्काः ।। .. (इति श्रीभारतीरमणः)**
**कर्माभिमानी पुष्कराख्याभिधोऽहं शनैश्चरात् सर्वदा न्यूनयुक्तः । .. (इति पुष्करः)**

इति श्रीपरमात्मनि स्वस्वाधिकारं कर्तव्यं तारतम्यं च निवेद्य स्तोत्राणि कृतवन्तः । तथा श्रीगुरुराज-वृन्दावनेऽपि सर्वे देवाः स्वाधिकाराणि निवेद्य, तपःकरणार्थं एकांशेन स्थिता बभूवुः इति यत् श्रीगुरुराजैः प्रोक्तं तत् श्रीगुरुराजस्तु श्रीहरेर्विशिष्टप्रतिमारूपेण भक्तानुग्राहकत्वेन वृन्दावने सन्निहिताः स्युः इत्यत्र स्मरणीयांशम् ।

(२) अत्र 'हरि'शब्दप्रयोगेन –

**इत्थमष्टदिशांपालैः कृतवैभवमञ्जसा ॥१७**

**मञ्जु मद्वृन्दावनस्य श्रुत्वानन्दं स याति च ।**
**तस्माद्वृन्दावनमिदं सर्वाभीष्टप्रदं सताम् ॥१८**

(अन्वयः) इत्थम् अष्टदिशांपालैः मञ्जु मद्वृन्दावनस्य कृतवैभवमञ्जसा श्रुत्वा च स आनन्दं याति । तस्मात् वृन्दावनं सतां सर्वाभीष्टप्रदम् ।

**(व्या)** (श्रद्धया अष्टदिक्पालपूजितत्वश्रवणेन गुरुभक्तिश्रवणादिद्वारा मोक्षानन्दमेव प्राप्नोत्यधिकारी ।१७। **इत्थमिति । सः आनन्दं याति** । सद्वृन्दावनशब्दोक्तः सतां समुदायः आनन्दं याति ।१८।

**भेरीशङ्खमृदङ्गैश्च पणहानकगोमुखैः ।**
**कहाळताळसम्मिश्रैः दुन्दुभेः सिन्धुनिस्वनैः ॥१९**

**तौर्यत्रिकैर्नृत्तगीतैर्वादित्रैर्भृत्यसंस्तवैः ।**
**भाति त्रिविक्रमोयं मे मनोरथमहोत्सवे ॥२०**

(अन्वयः) अयं त्रिविक्रमः मे मनोरथमहोत्सवे, भेरीशङ्खमृदङ्गैः, पणहानकगोमुखैः, कहाळताळसम्मिश्रैः, दुन्दुभेः सिन्धुनिस्वनैः, तौर्यत्रिकैः नृत्तगीतैः, वादित्रैः, भृत्यसंस्तवैः भाति ।

**(व्या) भेरीशङ्खमृदङ्गैरिति । अयं त्रिविक्रमः** हयवदनात्मकः अष्टदिक्पालोपास्य-तयोक्तः । **अयमि**त्यनेन (एतावता अध्यायभागेन) पूर्वाध्याये 'विततभक्तियुता भजन्तु' इत्युक्तस्य 'इन्द्रो रुद्रः' इत्यादिना संक्षेपेणोक्तप्रपञ्चनं सङ्गतम् । त्रिविक्रमोत्सवकथने तु का सङ्गतिः? इत्यस्य यस्य वृन्दावनस्थः हयग्रीवः उपास्यत्वेनोक्तः तेनैव प्रतिष्ठितप्रतीकस्थत्वेन तदुपास्यत्रिविक्रमस्य हयग्रीवात्मकस्य देवोपास्यत्वकथनमपि 'विततभक्तियुता भजन्तु' इत्युक्तस्यैव उपपादकमिति सूचितं भवति ।

**भेरीशङ्खमृदङ्गैरि**त्यत्र एकवद्भावाभावः अलौकिकः । भेरी शङ्खः मृदङ्गं च तच्च तच्च

---

**''पीठपूजां विधायाथ तत्रावाह्येति सूत्रतः ।**
**हरिमावाहयेद्भक्त्या तद्विधिः प्रोच्यतेऽधुना''** इति टीकाकृत्पादैः पद्यमालायां हरिरूपम् सर्वैः बिम्बरूपत्वेन पूजाकाले आवाहयेत् इति यदुक्तं तत् स्मर्तव्यम् ।

भेरीशङ्खमृदङ्गानीति वा । **मनोरथमहोत्सवे** । ननु देवानां त्रिविक्रमसेवनं कथम् उपपद्यते? अन्यवासनामयस्य अन्यैर्द्रष्टुमशक्यत्वात् इति चेन्न । सर्वज्ञानां देवानां तद्दर्शनशक्तियुक्तत्वात् । अस्मदादिवासनामयानाम् अस्पष्टानामपि दर्शनं देवानां नासम्भावितम् । स्पष्टानां गुरुराजवासनामयानां तु उज्ज्वलतमानां दर्शनं तु कथमयुक्तं स्यात् । पुष्पकविमानावच्छिन्नप्रदेशवत् गुरुराजवासनामयावच्छिन्नदेशस्यापि अवकाशप्रदत्वेन तत्प्रसादेन देवानाम् उपासनोपपत्तेश्च । ब्रह्ममानसपुत्रादीनामिव बाह्यत्वसम्भवाच्च । रथादीनां तद्वासनामयानां तद्दर्शनयुक्तम् ।१९-२०।

**पुरोडाशाशनैः सम्यगीडितः क्रीडया हरिः ।**
**रथस्थगरुडारूढो देवराड् भाति निश्चयात् ।।२१**

**चतुर्वीथिषु भृत्येन कारितः सुविशेषतः ।**
**रथे गच्छन् मम मनोरथैः कृतमहोत्सवे ।।२२**

**महाप्रदीपावळिभिः कोलाहलमहास्वनैः ।**
**कृतैः करतळैः शब्दैर्भाति भक्तसुपालकः ।।२३**

**(अन्वयः) रथस्थगरुडारूढः देवराड् हरिः पुरोडाशाशनैः सम्यक् निश्चयात् ईडितः क्रीडया भाति । भृत्येन चतुर्वीथिषु सुविशेषतः कारितः मम मनोरथैः कृतमहोत्सवे रथे गच्छन् महाप्रदीपावलिभिः कोलाहलमहास्वनैः करतलैः कृतैः शब्दैः भक्तसुपालकः (श्रीरमात्रिविक्रमः रथे गच्छन्) भाति ।**

**(व्या) पुरोडाशाशनैरिति** । देवैः इत्यर्थः । **निश्चयात्** एतदाख्यानार्थेषु निश्चयात् **ईडितः** स्तुतः । **(देवराड् =)**[(१)] देवादीनां ब्रह्मादीनां राट् त्रिविक्रमो भाति ।२१।

**चतुर्वीथीष्विति** । सोदापुरे त्रिविक्रमदेवालयस्य चतुर्दिक्षु विद्यमानचतुर्वीथीषु **भृत्येन** = विप्रेण, वृन्दावनाचार्यत्वेन जातेनेति भावः । गुरुराजमनोरथानुसारेण श्रीवृन्दा- वनाचार्यः त्रिविक्रमरथोत्सवं विशेषविजृम्भणेन कारयिष्यतीति तात्पर्यं ज्ञेयम् ।२२। **कोलाहल** इति

---

(१) अथवा देवराट् = देववीतमः' इत्यर्थः । **'देवेषु ज्ञानवत्तमः'** इति **ऋग्भाष्यम्** (३.३६.९). तत्रैव **ऋग्भाष्यटीका** ''यस्त्वं देववीतमः, वी गतौ, ततः क्विप् गतिश्च ज्ञानम् अतिशयेन वीर्वीतमः । देवेषु वी तमो देववीतमः । देवेषु ज्ञानवत्तमोऽसि'' इति ।

उत्सवादिषु सात्विकेषु देवताः जनेषु आविष्टा भवन्ति । तथा च कोलाहलादिकं जायते ।२३।(१)

**देवदुन्दुभयोर्नेदुर्जगुर्गन्धर्वकिन्नराः ।**
**ननृतुश्चाप्सरश्रेष्ठाः रथस्थे च त्रिविक्रमे ।।२४**

**दिवा दिनकरायुतप्रभः प्रियान्वितः प्रभुः ।**
**रथोपरि प्रयातीह प्रकीर्णविधिषु प्रियः ।।२५**

**(अन्वयः) रथस्थे च त्रिविक्रमे देवदुन्दुभयोः नेदुः । गन्धर्वकिन्नराः जगुः । अप्सरश्रेष्ठाः ननृतुः च । इह रथोपरि दिवा दिनकरायुतप्रभः, प्रियान्वितः, प्रकीर्णविधिषु प्रियः प्रभुः प्रयाति ।**

**(व्या) प्रकीर्णविधिषु** विस्तृतविधिषु । **देवदुन्दुभय इति ।** सात्विकरथोत्सवादिषु गरुडदर्शनं, देवतावाद्यादिश्रवणं जायमानं सुप्रसिद्धमेव ।२४। (**दिनकरायुतप्रभः** त्रिविक्रमः गुरुराजादियोगिगम्यः । हरेः स्वरूपभूतप्रकाशस्य स्थूलेन्द्रियैः अग्राह्यत्वात् । ........... । छत्रसेवा, चामरसेवा, दर्पण, गीत, नृत्त, नारिकेळदान, लड्डुकादिक्षेप, फलसमर्पणादि रथोत्सवसम्बन्धिभक्तैः क्रियमाणेषु सकलसूक्ष्मानुष्ठानेषु प्रीतिमान् इत्यर्थः ।)

**विमानं संस्पृशन्तीह सुमानव ममाप्यहो ।**
**विसर्जिता इमे बाणाः नारायणरथोत्सवे ।।२६**

---

(१) **महाप्रदीपाः** = तैलपूरितसमुदायदीपगळु (पञ्जु) एन्दर्थ. यथोक्तं नारदीये उत्तरखण्डे २७ने अध्याये रुक्माङ्गदेन ।

**''हिंसनं सूक्ष्मदेवानां जलपावकखेलनम् ।**
**दैवाविष्टो वरारोहे नरः सर्वं करोति वै ।''**

भूतशक्त्युत्तंभनदिन्द निर्मितवाद एल्ला यंत्रगळू मत्तु वाहनगळू साधकरिन्द उपयोगिसल्पडकूडदु. अवु तामस. मूळे, छाये, अन्धकारादिगळन्ते दैत्यावेशक्के स्थान.

महाप्रदीपाः तैलपूरितदीप(पञ्जु)समुदायैरित्यर्थः । विद्युदादिदीपानां भूतशक्तिहिंसनेन जातत्वात् अणेकट्टु, रैलु, विद्युद्दीपादयः शास्त्रनिषिद्धः, पाण्डवैर्न नियोजिताः निषिद्धत्वात् तैलघृताद्यक्तवर्ति-ज्वालाश्रेणय एव उत्सवेषु वेङ्कटेशकल्याणे च उपयुक्ताः ।

**ब्रह्मरुद्रेन्द्रपूर्वैश्च गीर्वाणेन्द्रैरपीदृशः ।**
**महोत्सवो न सन्दृष्टः कर्मन्दीन्द्रकृतोत्सवे ॥२७**

(अन्वयः) हे सुमानव!(विप्र) कर्मन्दीन्द्रकृतोत्सवे, नारायणरथोत्सवे, विसर्जिता इमे बाणाः इह मम विमानं स्पृशन्ति । (यादृशः) महोत्सवः ब्रह्मरुद्रेन्द्रपूर्वैः च गीर्वाणेन्द्रैः अपि (सन्दृष्टः) ईदृशः (अन्यैः) न सन्दृष्टः ।

**(व्या) बाणाः** गन्धकचूर्णकृताः । यावद्दूरगाः तावद्दूरे विमानं वर्तते । तत् संस्पृशन्ति ।२६। **ब्रह्मेति कर्मन्दीन्द्रकृतोत्सवे** यादृशः **महोत्सवः** ब्रह्मरुद्रेन्द्रपूर्वैः सन्दृष्टः । **ईदृशः अन्यैः न सन्दृष्टः । (विमानमिति ।** वृन्दावनाचार्यकर्तृकएतदुत्सवकाले गुरुराजस्तु विमाने वृन्दावनोपरि आकाशे त्रिकोटियतिभिः साकम् उपस्थिता भवन्ति । तत्काले उत्सवार्थं निसृष्टाः **बाणाः** गन्धकचूर्णकृताः क्वचिदुपरि विद्यमान विमानमपि संस्पृशन्तीति भविष्य-सूचना । **सुमानव** इति विप्रस्य सम्बोधनम् । स हि स्वप्नद्रष्टा ।२६। **कर्मन्दीन्द्रकृतोत्सवे** इति हेतुगर्भविशेषणम् । गुरुराजाविष्टवृन्दावनाचार्यैः कृतत्वात् एतस्मिन् उत्सवे यथा ब्रह्मरुद्रेन्द्रादयः आगताः, यथा उत्तमबाणादयः विसर्जिताः यथा च गन्धर्वादिभिः नर्तन-कीर्तनादिकमभूत् तादृश उत्सवः केनापि भूलोके अन्यकर्तृक उत्सवेषु तदानीं दृष्टः । अन्य मानुषकर्तृकउत्सवेषु ब्रह्मरुद्रेन्द्रादयः गन्धर्वादयः न आगच्छन्ति । वृन्दावनाचार्यैः कारित-रथोत्सवः विलक्षणरूपः । देवा अपि तदानीं गुरुराजप्रसादेन तस्मिन् उत्सवे सहकारं कृतवन्तः इति भावः सहयोगे तृतीया ।)

**सन्तो वसन्तवारीणि नारायणरथोत्सवे ।**
**सुवर्णकुम्भैरानीय चाम्भोधिशयनं हरिम् ॥२८**

**स्नापयामासुराश्वेनं प्राश्निकैरपि कात्स्न्र्यतः ।**
**स्नानेन शुद्धवृद्धास्ते तत्र सम्प्रश्नकोविदाः ॥२९**

**'सन्तो वसन्तमभ्युदवस्यन्ती'ति श्रुतिप्रियाः ।**
**सन्ततं चक्रिरे सर्वे वसन्तेनान्तिमोत्सवम् ॥३०**

(अन्वयः) तत्र नारायणरथोत्सवे, स्नानेन शुद्धवृद्धाः सम्प्रश्नकोविदाः प्राश्निकैः अपि कात्स्न्र्यतः ते सन्तः, सुवर्णकुम्भैः वसन्तवारीणि च आनीय अम्भोधिशयनं

**हरिम् आशु स्नापयामासुः । 'वसन्तम् अभ्युदवस्यन्ति' इति श्रुतिप्रियाः सर्वे सन्तः अन्तिमम् उत्सवं वसन्तेन चक्रिरे ।**

**(व्या)** (**सन्तः** साधवः पुरोहिताः **वसन्तवारिणा** उत्सवपर्यवसानकाले **स्नापयामासुरि**ति उत्तरत्र विद्यमानक्रियाया अन्वयः । **ओकळि उत्सव** इति अपभ्रष्टनाम ।।२८।। **प्राश्निकाः**[१] यजुर्वेदीयपुरोहिताः ।।२९।। **'वसन्तमभ्युदवस्यन्ति'** इति यजुर्वेदस्य श्रुति-विशेषः ।३०।)

**सकुङ्कुमरसैः स्निग्धैः महारजनवारिभिः ।**
**कस्तूरिकर्पुराद्यैस्तैर्मिश्रितैर्हिमवारिभिः ।।३१**

**दिव्यगन्धोदकैरङ्गदिव्यमन्दारगन्धिभिः ।**
**दिव्यद्रव्यसमायुक्तैः दिव्यकुम्भप्रपूरितैः ।।३२**

(अन्वयः) स्निग्धैः सकुङ्कुमरसैः महारजत(न)वारिभिः कस्तूरिकर्पुराद्यैः मिश्रितैः दिव्यगन्धोदकैः दिव्यमन्दारगन्धिभिः दिव्यद्रव्यसमायुक्तैः दिव्यकुम्भप्रपूरितैः तैः हिमवारिभिः हे अङ्ग! (आशुं स्नापयामासुः) ।

**(व्या) सकुङ्कुमरसैः** महारजनाख्यवर्णद्रव्यविशिष्टवारिभिः स्नापयामासुः इत्यन्वयः ।३१। **दिव्य इति** = मन्त्रपूतत्वात् देवतासन्निधानयुक्तगन्धोदकैः स्नापयामासुः इत्यन्वयः ।३२।

**दिविजा दिविजेन्द्राग्रे दिवि देवैः दिवोत्सवे ।**
**दिवाकरे समुदिते दिवि देवोत्तमाज्ञया ।।३३**

**धर्मराजकृते राजसूये राजपुरोहिताः ।**
**राजानः सद्विजाश्चावभृतं सस्नुर्यथा तथा ।।३४**

---

(१) 'सम्प्रश्नकोविदाः' 'न्यायोक्षो व्यवहारोऽथ सम्प्रश्नः सम्प्रधारणम्' इति यादवः । न्यायकोविदाः, व्यवहारकोविदा वा इत्यर्थः । **'सन्तो वसन्तमभ्युदवस्यन्ति'** इति श्रुतिः इति वृन्दावनाख्यानम् । ''सन्तं श्रीब्रह्मरुद्रादयः सपत्नीकाः, वसन्तम् (वस आच्छादने च + झच् औणादिकः ३।१२८), श्रीनृसिंहं, श्रीहयग्रीवं, रमात्रिविक्रमं वा, अभि उत् अवस्यन्ति = सर्वत उत्कृष्टेन भक्त्या सेवन्ते'' इति तच्छ्रुत्यर्थः ।

**(अन्वयः) दिवि दिवाकरे समुदिते (सति) यथा दिवि दिविजेन्द्राग्रे देवोत्तमाज्ञया देवैः (क्रियमाणे) दिवा उत्सवे दिविजाः (अवभृतस्नानं चक्रुः) । यथा धर्मराजकृते राजसूये राजपुरोहिताः राजानः सद्विजाश्च अवभृतं सस्नुः तथा ।**

(व्या) (**दिविजेन्द्राग्रे** त्रिविक्रमरथस्य पुरतः ।[१] आकाशे स्थित्वा **दिविरेवै** क्रीडां चक्रुः । भूमौ पुरोहितादयः **अवभृथं** चक्रुः ।३३-३४।) ('दिवि रे' इति पाठे, भो! साधकवर्ग! इत्यर्थः । दिवि = वैकुण्ठरूपे श्रीसोदाक्षेत्रे ।)

**जगुर्गन्धर्वपतयो गान्धर्वे च विशारदाः ।**
**ननृतुश्चाप्सरश्रेष्ठाः नृसिंहस्य महोत्सवे ।।३५**

**देवदुन्दुभयो नेदुर्बंदिनो[२] वन्दनोत्सुकाः ।**
**नन्दनाद्य शृणुष्वेह शतानन्दमहोत्सवे ।।३६**

**(अन्वयः) हे नन्दन! अद्य श्रुणुष्व नृसिंहस्य महोत्सवे, गान्धर्वे विशारदाः, गन्धर्वपतयः, जगुः, च अप्सरश्रेष्ठाः ननृतुः च ।। इह शतानन्दमहोत्सवे वन्दनोत्सुकाः बन्दिनः इह देवदुन्दुभयोः नेदुः ।**

(व्या) देवगन्धर्वादयः हरेराज्ञया एतस्मिन् उत्सवे सेवां चक्रुः यथा पुरा युष्ठिरकृतराजसूयावभृथे । **नृसिंहस्य** देवश्रेष्ठस्य त्रिविक्रमस्य ।३५।

**वागीशपूर्वकाः सर्वे सस्नुश्चावभृथं ततः ।**
**एवं देवाश्च देव्यश्च रथोत्सववरे हरेः ।।३७**

**(अन्वयः) ततः वागीशपूर्वकाः सर्वे च अवभृथं सस्नुः । एवं देवाः च देव्याः च हरेः वरे रथोत्सवे अवभृथं सस्नुः ।**

(व्या) (**वागीशपूर्वकाः** चतुर्मुखः प्रधानवायुर्वा वागीशतीर्थ इति वा पूर्वं येषां ते, देवाः देवलोके विद्यमानगुरुजनाश्च तत्काले अवभृथस्नानार्थमागमिष्यन्तीति भावः ।३७।)

---

(१) 'दीविरे वै' एन्दु मूल वृं. पाठ । दीविरे वै एन्दु आर्षप्रयोग तिळियबेकु. चक्रे, चक्राते, चक्रिरे इतिवत् । दिविरे वै एंबुदु विलक्षण लिट् प्रयोग. दिविविरे एंबुदु दिविरे एन्दागिदे. व्यत्ययो बहुलं छंदसि एंदिरुवुदरिन्द वेदतुल्यवाद ई ग्रंथदल्लि विवक्षितार्थ तिळियबेकु.

(२) 'बन्दिनः' इति पदं वृं मूले 'वन्दिनः' इत्यस्ति

(यथा धर्मराजकृते राजसूये दिवाकरे समुदिते देवोत्तमाज्ञया दिवि राजपुरोहिताः राजानः सद्विजाः च अवभृथं सस्नुः; तथा अत्र श्रीरमात्रिविक्रमस्य महोत्सवे अपि सन्तः अवभृथं सस्नुः)।

**''दिवाकरे समुदिते ते दिवि देवोत्तमाज्ञया ।**
**धर्मराजकृते राजसूये राजपुरोहिताः ।**
**राजानः सद्विजाश्चावभृथं सस्नुर्यथा तथा ।''**

**इमं सार्धं च श्लोकं च त्यक्तवानसि विप्रक ।**
**पाकशासनलोकं च नाकिभिर्नीयते कृतिः ।।३८**

(अन्वयः) ''दिवाकरे समुदिते'' (आरभ्य) 'सस्नुः यथा तथा' (इत्यन्तं) इमं सार्धं श्लोकं च हे विप्रक (त्वं) त्यक्तवानसि । नाकिभिः पाकशासनलोकं च कृतिः नीयते च ।

(व्या) शतानन्दमहोत्सवे (एतदारभ्य) तृतीयकल्पे भाविशतानन्दमहोत्सवे ।।३६।। एकस्मिन् दिने उपदिष्टश्लोकेषु सार्धश्लोकः विस्मृतः विप्रेण । तदुत्तरदिनस्वप्ने उपदेशसमये गुरुराजेण तं स्मारयितुं उक्तम् –

'दिवाकरे समुदिते ते दिवि देवोत्तमाज्ञया ।
धर्मराजकृते राजसूये राजपुरोहिताः ।
राजानः सद्विजाश्चावभृथं सस्नुर्यथा तथा ।'

इत्येकम् आहत्य सार्धैकश्लोकः, त्वं त्यक्तवानसि । बहुश्लोकेषु लिखितेषु सत्सु सार्धश्लोकत्यागेन को दोषः? इत्यत आह – पाकशासनेति ।३८।

**अतः प्रमादो मा ते मे कुमारं स्मर ब्राह्मण ।**
**सुमानवं प्रभावन्तं क्रमान्मत्साम्यसङ्गमम् ।।३९**

**त्रिकोटियतिषु श्रेष्ठं मुकुटेनाङ्कितप्रियम् ।**

(अन्वयः) अतः ते प्रमादो मा । हे ब्राह्मण! सुमानवं प्रभावन्तं, क्रमात् मत्साम्य-सङ्गमं(सम्भवम्) त्रिकोटियतिषु श्रेष्ठं मुकुटेनाङ्कितं प्रियं मे कुमारं स्मर ।

(व्या) प्रमादाभावसाधनमाह – **कुमारमिति** । (कुमारं =) करकमलसञ्जातं वेदवेद्यनामकम् । **सुमानवं**[१] देवोत्तमयोग्यम्, 'ब्रह्माद्या मनुनामकाः' इत्युक्तेः । तदुपपादकं **क्रमान्मत्साम्यसङ्गममिति** । यस्मिन् कल्पे मम वायुत्वं तस्मिन् कल्पे तस्य लातव्यता । विरिञ्चत्वे तु वायुत्वम् । ततो ब्रह्मत्वमित्येवं क्रमेण मत्साम्यसम्भवम् ।३९। मुकुटेनांकितानां देवानां प्रियम् (देवानाम् अत्यन्तप्रियमित्यर्थः) ।

**सोऽहं समीडितगतिः पाठकैः शिष्ट नान्यथा ।।४०**

**(अन्वयः) हे शिष्ट! सः अहं पाठकैः समीडितगतिः; अन्यथा न ।**

(व्या) एवं प्रमादपरिहारसाधनमुक्त्वा प्रकृतमनुसरति – **सोऽहमिति** । उक्तमहोत्सवकारयिता **अहम्** पाठकैः **समीडितगतिः** स्तुतगतिः । अन्यथा न औपचारिकस्तुतिर्न ।।

**पश्यामि चाकाशविमानकोशे नाकीशमित्थं सुत सत्यमेव ।**
**कीनाशलोकस्य च नाशकोऽहं तोकास्य सेवां कुरु सर्वदैव ।।४१**

**(अन्वयः) हे सुत आकाशविमानकोशे च इत्थं नाकीशं इत्थं सत्यं एव पश्यामि अस्य सेवां सदा कुरु । हे तोक अहं कीनाशलोकस्य नाशकः ।**

(व्या) उक्तोत्सवसमये हयग्रीवात्मकत्रिविक्रमस्य सर्वदेवोपास्यत्वात् त्वयाऽप्युपास्यः । स एव इन्द्रान्तर्यामित्वेन त्वया उपास्यः । तदुपासनस्य त्वद्योग्यपदसाधनत्वादित्येव आह – **पश्यामीति** । (आकाशविमानकोशे =) आकाशगते विमानकोशे[२], वृन्दावनोपरिगतमद्विमानकोशे मत्परिवारतया त्वदनुग्राहकभगवत्प्रतीकत्वेन **नाकीशं** तदन्तर्यामित्वेन नाकिनां ब्रह्मरुद्रादीनाम् ईशम्, **इत्थं** प्रागुक्तोत्सवेन आराधितं त्रिविक्रमं च सत्यमेव पश्यामि । 'यत् सत्तदमृतम् । यत्ति तन्मर्त्यम् । यद्यं तेनोभे यच्छति' (छान्दोग्य अ.८.खं.३.मं.५) इति श्रुत्युक्तरीत्या मुक्तामुक्तनियामकमेव पश्यामि । **हे तोक!** पुत्रवत् प्रीतिविषय! **अस्य** इन्द्रस्य

---

(१) **'तत्पुरुषो मानवः' इति श्रुतिः । 'ते मनवे वायवे बाधिताय' इति श्रुतिः । 'मनुश्चात्र वायुः' इति श्रीमदाचार्याः ।**

(२) **'विमानकोशे'** विमानरूढकोशः, कोशः श्रीहरिः; तत्सन्निधाने । तथा हि छान्दोग्यभाष्यम् –

**'क इत्यानन्द उद्दिष्ट उश इच्छा प्रकीर्तिता ।**
**आनन्देच्छास्वरूपोऽसौ कोशो विष्णुः प्रकीर्तितः ।।'** इति । (६-३-१)

तदन्तर्यामिणो हरेः । तदुपकारकत्रिविक्रमस्य च सेवां कुरु । यद्वा, सम्यक् प्रकाशमाने श्रीमदाचार्यानीतसम्पुटाख्यविमानकोशे । **नाकीशं 'मां विना तां विना नाकी नाकित्वं नैति नान्यथा'** (स्वा.आ. ४/१२) इति वक्ष्यमाणानुसारेण बादरायणरूपिणम् । **सत्यम् । 'नाम्ना तु सा सत्यवतीति तस्यां तवात्मजोहं भवितास्म्यजोऽपि'** इति तात्पर्यनिर्णयोक्त्या सत्यवत्यामवतीर्णं सत्यनामकं **पश्यामि** । अस्य बादरायणस्य **सेवां (सर्वदा =)** सदैव **कुरु** । स्वस्य परलोकगमनसमये इन्द्रानीतं **'किम्वन्तकासिलुलितात्पततां विमानात्'** इति भागवतोक्तक्षुद्रपुण्यफलविमानसदृशं विमानं पश्यामीति भ्रान्तिं वारयितुमुक्तं – **कीनाशलोकस्य च नाशकोऽहं इति** । अत्यक्तदेहस्य अन्तकभयरहितस्य तदसम्भवादिति भावः ।४१।

**इतःपरं कुरु सुत मम पुण्यदिनं महत् ।।४२**

**गदाभृतः सदा पादं हृदा ध्याये मुदा भजे ।**
**बुधादृतं कदाचिद्वा आपदालस्यमदा न मे ।।४३**

**एवं महोत्सववरं श्रुत्वा सर्वेपि वर्णितम् ।**
**कर्णामृतं महाभाग कृतार्थास्ते न संशयः ।**
**श्रद्धान्वितो हयग्रीवभक्तस्य सुमहात्मनः ।।४४**

**(अन्वयः) सुत! हयग्रीवभक्तस्य (सुमहात्मनः) मम पुण्यदिनं (श्रद्धान्वितः सन्) इतःपरं महत् कुरु । बुधा आदृतं गदाभृतः पादं सदा हृदा ध्याये, मुदा भजे । कदाचित् (अपि) आपत्-आलस्य-मदा वा मे न । हे महाभाग (विप्र)! एवं वर्णितं कर्णामृतं महोत्सववरं श्रुत्वा, श्रद्धान्वितः ते सर्वे अपि कृतार्थाः (भविष्यन्ति), (अत्र) न संशयः ।**

**(व्या)** उक्तरीत्या उपासनं कथमुपपद्यते? निखिलाख्यानश्रवणानन्तरं विप्रस्य भूलोका-वासाभावात् । जाग्रदवस्थायां सम्यगाख्यानार्थानुसन्धानाभावाच्च इत्यत आह – **इतःपरं इति** ।। **इतःपरं** = जन्मान्तरे आख्यानार्थम् अनुसन्धाय उक्तरीत्या बादरायणसेवां कुर्विति भावः । तदा **मम पुण्यदिनं महत्कुरु** । पूर्वं सङ्क्षिप्तं महत्कुरु । विशेषाराधनं **कुरु** ।४२।

**गदाभृत इति ।।** न तावता देहत्यागशङ्का कार्येति सूचयितुमुक्तम् – **मे आपदालस्य मदाः न इति** ।४३। विप्रस्य जन्मान्तरे बादरायणभजकत्वमुक्तम् । त्वदीयानां 'एवं

निशम्य' इति प्रथमाध्यायोक्तानां शेषादीनाम् । एतदाख्यानार्थानुसन्धानसमयकेन च । स एव कालः । अर्थानुसन्धानरहितविप्रमुखतः श्रवणासम्भवादित्यत आह – **एवमिति । हे विप्र!** ते त्वदीयाः शेषादयः । सर्व एव जन्मान्तरे त्वया **वर्णितं कर्णामृतं महोत्सववरं श्रुत्वा कृतार्था** भविष्यन्ति ।४४। (अन्वय ४२श्लोकदिन्द माडबेकु)

**हे नन्दनानन्दपूर्णो भवामि तव दर्शने ।**
**कन्दाशनसहायेनामन्दवृन्दावनेऽनिशम् ।।४५**

**(अन्वयः) हे नन्दन! तव दर्शने (सति) आनन्दपूर्णो अमन्दानन्दवृन्दावने कन्दाशनसहायेन अनिशम् भवामि ।**

**(व्या) हे नन्दन! कन्दाशनसहायेन** = बादरायणसहायेन । हयग्रीवभक्तस्य = हय-वदनबादरायणाराधकत्वेन उत्पन्नस्य तव दर्शने सति । अहम् **आनन्दपूर्णो** भवामीति भावः । **अमन्दवृन्दावने** = अमन्दानां वृन्दस्य अवने पालनार्थम्; तादर्थ्ये सप्तमी । एत-त्पद्यगतस्य **श्रद्धान्वित** इत्यस्य 'श्रद्धान्वितः सन् पुण्यदिनं महत्कुरु' इति पूर्वेणान्वयः।४५।

**तस्मात् त्रिकोटियतिभिः त्रिविक्रमरथोत्सवे ।**
**त्रिवेदवेद्यं दृष्ट्वा च त्रिवारमपि नैव मे ।।४६**

**तृप्तिर्न जाता मज्जातकुब्जापतिपरायण ।**
**धिग्जाड्यं तु प्रजानां च न जातु मम साम्यगाः ।।४७**

**(अन्वयः) त्रिकोटियतिभिः (सहितः) मे त्रिविक्रमरथोत्सवे त्रिवेदवेद्यं त्रिवारं दृष्ट्वा अपि तृप्तिः नैव जातः । हे मज्जातकुब्जापतिपरायण! तस्मात् प्रजानां तु जाड्यं धिक्, जातु विमाने (कदापि) मम साम्यगाः न (भवन्ति) ।**

**(व्या)** किमानन्दपूर्तौ निमित्तम्? इत्यत आह – **तस्मादिति । त्रिविक्रमरथोत्सवे** त्रिवेदवेद्यं दृष्ट्वा **अपि तृप्तिर्न जाता** । तस्मात् पुनरुत्सवकारयितुः तव दर्शने आनन्दपूर्णो भवामि ।४६। **मज्जात!** अनुग्रहात् मत्तः जात उत्पन्न! **कुब्जापतिपरायण** । रजतपीठपुर-गतकृष्णाराधक ।। **विमाने** । बादरायणसन्मानविषये । **प्रजानां जाड्यं** मतिमान्द्यं धिक्, ताः जातु कदापि मम साम्यम् अत्र गौणं विवक्षितम् । मन्मथस्य हरेः साम्यवत् ।४७। (साम्ययोग्या न भवन्ति)

**त्वां विना साम्यसंयुक्तं मां विना काम्यमागतम् ।**
**को मानवो न जानामि विमाने मम साम्यगः ।।४८**

**तस्मान्मयि त्वमप्यत्र ह्यमुत्रापि त्रिविक्रमे ।**
**सुत्रामपूजिते पुत्र भक्तिं कुरु गुरूदिताम् ।।४९**

(अन्वयः) विमाने मम साम्यगाः त्वां विना को मानवः (वर्तते)? (तत्) न जानामि । (उक्तसन्माने) काम्यमागतं मां त्वां च विना साम्यसंयुक्तं न जानामि ।४९। तस्मात् त्वं मयि सुत्रामपूजिते त्रिविक्रमे अपि, अत्र अमुत्र अपि हि, हे पुत्र! गुरूदितां भक्तिं कुरु ।५०।

(व्या) (विमाने) बादरायणसन्माने मम साम्यगः त्वां विना को वा वर्तते तत् न जानामि? उक्तसन्माने काम्यमागतं मां त्वां च विना साम्यसंयुक्तं बुद्धिसाहित्यसंयुक्तं अन्यं न जानामि ।४८।

**इतःपरं पारिबर्हं दातुमर्हसि मेर्हतः ।**
**गर्हितं नार्हयाम्यद्धा बर्हिषद्धर्षणं कुरु ।।५०**

**इतःपरं पारिबर्हं गर्हितं दातुमर्हसि ।**
**न मेर्हतो बर्हिषदां हर्षं कुरु गुरूक्तितः ।।५१**

(अन्वयः) – इतःपरं गर्हितं पारिबर्हं मे दातुं न अर्हसि । अतः अर्हतः गुरूक्तितः बर्हिषदां हर्षणं कुरु ।

(व्या) पुनः 'द्विमुखतः'[१] इति वक्ष्यमाणरीत्या तदेवाह । देवपूज्यस्य ममपूजा उत्तमवस्तुभिरेव कार्येति सूचयति – इतःपरमिति । इतःपरं पारिबर्हं दातुमर्हसि । बर्हिषद्धर्षणम् बर्हिषि सीदन्तीति बर्हिषदः, तेषां हर्षणं कुरु ।५०।

**सुखी भव सखायं मां मखाग्रेणापि पूजय ।**
**शिखारहित ते दुःखावाप्तिर्न च नखादपि ।५२।**

(१) मया द्विमुखतश्चोक्तं सुमुख प्राग्द्विधाकृतम् ।
इदानीं मुख्यमेवोक्तमेकेनैव मुखेन तु।।८-१०१।। – (स्वा.आ)

**(अन्वयः) हे शिखारहित! सखायं मां मखाग्रेणापि पूजय । सुखी भव । ते नखादपि दुःखावाप्तिः च न (नास्ति) ।**

(व्या) तत्कथमित्यत आह – **सुखी भव इति । 'मखाग्रेण पूजय शिखारहित'** इति यतित्वद्योतकम् । तर्हि मखाग्रेण कथं पूजनम् गुरूक्तितः? यज्ञं कुर्विति अधिकारिणं प्रति आज्ञया कारयितृत्वेनेति यावत् (ऋजोः सन्ततसुखवतः मम आवेशात् तव च लेशमपि दुःखं नास्ति । तामसदुःखं नास्तीत्यर्थः । एकादश्युपवासव्रतानुष्ठानादिजनितसात्विकदुःखस्य जीवस्वरूपे नीचत्वानापादकत्वात् । पापजनकं पापफलार्हस्य भ्रष्टत्वापकर्षाद्यापादकं दुःखमेव अनिष्टं ऋषीणाम् ।५२।)

**नरके नरकान्तं च स्मर त्वं नरकेसरिम् ।**
**गुरोर्ममापि[१] कारुण्यं गृहाणेह सुपुत्रक ।।५३**

**(अन्वयः) हे सुपुत्रक! नरके नरकान्तं नरकेसरिं च स्मर । गुरोः मम कारुण्यमपि इह (त्वं) गृहाण ।**

(व्या) तथापि पादयात्रादिना दुःखमस्त्येव, सदा भिक्षान्नभोजनं च दुःखकरमेवेत्यत आह – **नरकेति ।** दुःखे प्राप्ते सति, प्रसक्ते सति वा नरकेपि गत्वा गुरुराजप्रार्थनेन तद्भक्तानां नरकावासनाशकं नरसिंहं स्मर । स च सात्त्विकदुःखं ज्ञानवृद्धियुक्तं कृत्वा सह्यं करोति । गुरुं मामपि स्मर ।

''आपादमौलिपर्यन्तं गुरोरप्याकृतिं स्मरेत् ।

---

(१) मूलभूतगुरोः श्रीहरेः स्मरणमपि कार्ममेवेत्याशयः । तथाहि भागवततात्पर्यनिर्णयः –

**गुरुः श्रीब्रह्मणोर्विष्णुः सुराणां च गुरोर्गुरुः ।**
**मूलभूतो गुरुः सर्वजनानां पुरुषोत्तमः ।**
**गुरुर्ब्रह्माऽस्य जगतो दैवं विष्णुः सनातनः ।**
**इत्येवोपासनं कार्यं नान्यथा तु कथञ्चन' इति वाराहे ।** (१०-२६-१५)
**'.................. वाग्मी सन्देहवर्जितः ।**
**वासुदेवैकशरणो गुरुरित्युच्यते बुधैः ।**
**गुरुलक्षणसम्पूर्णः साक्षादेव चतुर्मुखः ।**
**ततः शेषेन्द्रवीन्द्राद्याः क्रमेणैव प्रकीर्तिताः' इत्यादि गुरुविवेके –** भाग.ता.नि(१०.९४.३४)

तेन विघ्नाः प्रणश्यन्ति सिद्ध्यंति च मनोरथाः ।''

इति प्रमाणानुसारेण गुरुप्रसादेन अपारोपि दुःखसमुद्रः कूपायते । एवं नृसिंहस्मरणेन मत्स्मरणेन च विघ्नादिअनिष्टम् त्यक्त्वा सन्ततं हयवदनकृष्णत्रिविक्रमबादरायणोपासनं कुरु इति भावः ।५३।

**हे नन्दन भोजनं मे जातं कर्मन्दिभिः शनैः ।**
**वृन्दावनपतेः सम्यक् मृष्टान्नं मम तद्दिने ।।५४**

**अतस्त्रिकोटियतिभिः प्रीतोस्मि तव पुत्रक ।**
**त्रिविक्रमोऽपि सुप्रीतश्चासीत् त्वद्भक्तिसत्कृतः ।।५५**

(अन्वयः) हे नन्दन(विप्र)! मम तद्दिने[१] (मम पुण्यदिने) वृन्दावनपतेः कर्मन्दिभिः (सहितं) मे (त्वया समर्पितं यदन्नं) मृष्टान्नं (तेन) (तत् दृष्ट्वा) शनैः सम्यक् भोजनं जातम् । हे पुत्रक! अतः त्वद्भक्तिसत्कृतः त्रिकोटि-यतिभिः सह (युक्तः अहं) तव (त्वयि) प्रीतः अस्मि । त्रिविक्रमः अपि सुप्रीतः आसीत् च ।

(व्या) हे नन्दनेति! हे नन्दन (हे वृन्दावनाचार्य!) मम दिने (मम पुण्यदिने) त्वया समर्पितं यदन्नम् । तद्दृष्ट्वा त्रिकोटियतिभिः सह प्रीतोस्मि । कर्मन्दिभिः सहितस्य मे भोजनं जातम् ।५४। त्रिविक्रमोपि सुप्रीतः ।५५।

**हे विप्र मम पुत्रस्य प्रसिद्धिः सुप्रतिष्ठिता ।**
**प्रजासु प्राप्तकामोऽहमभवं नात्र संशयः ।।५६**

(अन्वयः) हे विप्र मम पुत्रस्य (तव) प्रसिद्धिः सुप्रतिष्ठिता । प्रजासु अहं प्राप्तकामः अभवम् । अत्र न संशयः ।

(व्या) हे विप्र! मम पुत्रस्य ते प्रसिद्धिः सुप्रतिष्ठिता भविष्यति । मदुक्तकार्य-दर्शनात् । प्रजासु । त्वया प्राप्तकामोभवम् ।५६।

---

(१) * 'तद्दिने' = मम दर्शनार्थमागते त्रिजगत्प्रसिद्धे मम पुण्यदिने । 'पुण्यदिने' इति शब्दार्थस्तु 'जीवोत्तमस्य मम दर्शनभाग्यमेव भवतां पुण्यदिनमित्यर्थः' ।

**ब्रह्मेशशक्रमरुदंशभवैः सुरेन्द्रैः देवैः समस्तयतिभिः पतिभिः सुराणाम् ।**
**दृष्ट्वा रथोत्सववरं सुरवर्यकार्यं स्वर्यामि शश्वदवनात्सुचिराय जीव ॥५७**

(अन्वयः) ब्रह्मेशशक्रमरुदंशभवैः, सुरेन्द्रैः देवैः समस्तयतिभिः सुराणां पतिभिः (सह त्वया कारित) सुरवर्यकार्यं रथोत्सववरं दृष्ट्वा, स्वर्यामि; शश्वदवनात् (त्वं) सुचिराय जीव । (सुचिराय (कृतं) शश्वदवनात् जीव)

(व्या) ब्रह्मेशेति । त्वया कारितं रथोत्सवं दृष्ट्वा । स्वर्यामि[१] = सुखं यामि । सुचिराय जीवेति पुनर्जातस्य स्थैर्यार्थं आशीर्वचनम् (शश्वदवनात् = मया तव रक्षणं यत् कृतं तत्सार्थकमभूदिति ज्ञात्वा इत्यर्थः ।५७।)

**मम वृन्दावनं धीमन् कन्दाशनमदाञ्जनम् ।**
**सदानन्दं ददानीति वदन् कर्मन्दिनामभूत् ॥५८**

(अन्वयः) हे धीमन्! मम वृन्दावनं कन्दाशनमदाञ्जनम् । कर्मन्दिनां सदानन्दं ददामि इति वदन् अभूत् ।

(व्या) ममेति ।(हे धीमन् विप्र!) मम वृन्दावनम्, कन्दाशनमदाञ्जनम् = मुनीनां मदोपलक्षितदोषपरिहारकम् (अपरोक्षज्ञानप्रतिबंधकसूक्ष्मकामाहङ्कारनाशकमित्यर्थः । सदानन्दं विरक्तसन्यासिनाम् अपरोक्षज्ञानं ददानीति वदतीव विजृम्भते इत्यर्थः) ।।५८।

**अतः कर्मन्दिभिर्वन्द्यं वन्ध्यानन्दनदं बुध ।**
**गन्धद्वारानन्ददं च मुकुन्दस्यापि नन्दन ॥५९**

(अन्वयः) अतः हे बुध! (विप्र!) (मम वृन्दावनं) कर्मन्दिभिः च वन्द्यम्[२] । वन्ध्यानन्दनदं हे नन्दन, गन्धद्वारानन्ददं (गन्धद्वारायाः रमायाः आनन्ददं) मुकुन्दस्य अपि (नन्ददम् अस्ति) ।

---

(१) स्वर्यामि = इन्द्रादिदेवतापूजास्वीकरणार्थं स्वर्गलोकं च यामि; सुखं यामीति वा ।

(२) **संसारबाधितैः प्राप्यौ बाध्वो वायुरुदाहृतः ।**
**स हि मोक्षप्रदो विष्णोराज्ञया स उवाच ह ।** – इति ऐतरेयोपनिषद्भाष्यम् ।

श्रीगुरुराजोऽपि वायुसमत्वात् श्रीहयग्रीवस्याज्ञया कर्मन्दिभिः वन्द्यत्वेन वृन्दावने स्थितः सन् समस्तसुजीवानाम् अनन्दं ददातीति किमु वैचित्र्यम् ।

(व्या) (अतः कर्मन्दिभिरपि सेव्यम् । वन्ध्यायाः अपि उत्कृष्टपुत्रफलप्रदम् । हे बुध! विप्र! गन्धद्वारायाः रमायाः आनन्ददम् ।५९।)

**यतयः कृतिनो वृत्तप्रवृत्ताः शास्त्रवित्तमाः ।**
**अमत्ता आपतन्तीह सती च स्वपतिं यथा ।।६०**

(अन्वयः) यथा सती स्वपतिं (तथा) यतयः कृतिनः (सुकृतिनः) वृत्तप्रवृत्ताः (सुवृत्ते प्रवृत्ताः) शास्त्रवित्तमाः अमत्ताः इह (मम वृन्दावनं) आपतन्ति च (शरणागताः सन्तः सेवां कुर्वन्ति) ।

(व्या) यतय इति । कृतिनः = सुकृतिनः (विद्वांसः । वृत्तप्रवृत्ताः सुवृत्ते प्रवृत्ताः । इह वृन्दावने आपतन्ति शरणागताः सन्तः सेवां कुर्वन्ति । यथा विश्वप्रियतीर्थाः ।६०।)

**तस्माद्यतिकुलैः सेव्यं मतं लैङ्गिकमार्गिभिः ।**
**कृतालौकिककृत्यैश्च वृथा लौकिकवार्तिका ।।६१**

(अन्वयः) तस्मात् यतिकुलैः लैङ्गिकमार्गिभिः सेव्यं मतं; अलौकिककृत्यैः च कृतलौकिकवार्तिका वृथा ।

(व्या) (तस्मादिति । पूर्वोक्तबहुफलदातृत्वात् ।) लैङ्गिकमार्गिभिः तात्पर्यलिङ्ग-सूचितमार्गानुसारिभिः । (ब्रह्ममीमांसाशास्त्रज्ञानिभिरपि मतं = सेव्यत्वेन निर्णीतम् । इदं वृन्दावनम् । कृता अलौकिककृत्यैः सम्पादितनिष्कामधर्मैः विरक्तैः यतिकुलैः सेव्यम् । च यस्मात् । लौकिकवार्तिका वृथा । इतरमानुषादीनां सेवादिविचारः निष्प्रयोजनः । एतत् कर्तव्यं परित्यज्य अन्यसेवादिविचारे कृते सति सा धनहानिः स्यादिति भावः । अयमेव इदानीं मोक्षाधिकारिणां विघ्ननाशसम्पादकमार्गः ।६१।)

(अव) ननु अस्माभिः सत्यं अनुष्ठीयते । तपस्तप्यते । मन्त्रं जप्यते । दानं दीयते । शास्त्रं श्रूयते । मननं च क्रियते । तेन मोक्षमार्गः लभ्यते किं गुरुराजसेवया? इत्यत आह – कुत इति ।।

**कुतः सत्यं तपस्तप्तं जप्तं दत्तं मतं तथा ।**
**वृथायतकृताचारो येन सेवन्ति सात्वतम् ।।६२**

**(अन्वयः) ये (लौकिकाः) सात्वतं न सेवन्ति (तेषां) सत्यं कुतः? तप्तं तपः, जप्तं (जपः) दत्तं (दानं) तथा (सेव्यं) मतं कुतः? (न कुतोपि) ते वृथायत-कृताचाराः (भवन्ति) ।**

(व्या) सत्यमेतत्पर्यन्तम् उक्तमार्गेण साधनमार्गप्राप्तिरिति । अधुना कल्यादिदैत्यानां संविधानविशेषेण राहुग्रस्तसूर्य इव विद्यमानमुमुक्षवः सोदापुरस्थपञ्चवृन्दावनस्थहयग्रीव-रामकृष्णवेदव्याससेवां विना, गुरुराजानुग्रहं विना मोक्षमार्गे पदमपि क्षेप्तुम् असमर्था भवन्ति । तेषां सत्य,तप,जपाद्यनुष्ठानमेव क्वचिद्दैत्यैः निहन्यते । उत्पन्नेपि सत्य,जप,-तपादिकं दुर्जनाभिमानादिदोषेण उत्तमावज्ञादिद्रोहेन नष्टं भवति । तैः कृतश्रवणमनन-ध्यानादिकमपि कलुषीकृतं सत् अपरोक्षाय न प्रभवति । 'भक्तिह्रासो भवेत् तेषामुत्तमानां प्रकोपतः' इत्युक्तरीत्या हरिवाय्वादिभिः कृतव्यवस्थाम् अज्ञात्वा, ज्ञात्वापि औद्धत्येन वा, कृत सत्य,तप,जप,दान,श्रवण,मननादिसर्वं कुतः? कथं सात्विकं यथा भवति तथा उत्पद्येत? उत्पन्नेऽपि तत्सर्वं दैत्यानपहृतं कथं भवेत्? किन्तु सर्वं पुण्यं दैत्यपीडया विनष्ट-मेव भवति । ये सात्वतं न सेवन्ति । वृन्दावनस्थहयग्रीवकृष्णरामव्यासानां हनुमभीममध्वगुरु-राजानाम् अनुग्रहं न प्राप्नुवन्ति । ते वृथायताः कृताचाराः येषां ते; दैत्यैः विनाशितसर्वधर्माः भवन्तीत्यर्थः[१] ।

**तस्माद्वृन्दावनस्थं च सात्वतां पतिमव्ययम् ।**
**गोपतिं गोकुलपतिं गोपीनां पतिमापतेत् ।।६३**

**(अन्वयः) तस्माद्वृन्दावनस्थं च सात्वतां पतिं, अव्ययं, गोपतिं, गोकुलपतिं, गोपीनां पतिम्, आपतेत् ।**

(व्या) **तस्मात्** । हयग्रीवगुरुराजयोः अनुज्ञां विना मोक्षमार्गाय अधिकारी न प्रभवतीति रहस्यस्य प्रामाणिकत्वात् **वृन्दावनस्थम् अव्ययं** नाशरहितम् । **गोपतिं** भूपालकं रामचन्द्रम् गवां वाचां कुल्य पतिं हयवदनबादरायणात्मकम् **गोपीनां पतिं** कृष्णम् । अधिकारी **आपतेत्** सेवितुमागच्छेत् ।६३। एतावता अस्मिन् अध्याये हयग्रीवात्मक-त्रिविक्रमस्य देवाद्युपास्यत्वरूपम् अलौकिकं वैभवम् । विप्रस्य जन्मान्तरे यतिरूपेण हयवदनबादरायणाराधकत्वादिरूपलौकिकोपासनकर्तृत्वरूपवैभवं चोक्तं भवति ।हरिः ॐ।

---

(१) **हयास्यपादाम्बुजभक्तिभाजं श्रीमध्वशास्त्राम्बुपूर्णराजम् ।**
**वयामि विद्वज्जनराजराजं श्रीवादिराजं यतिधर्मराजम् ।** – इति लिखितपुस्तके अत्र अस्ति ।

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।।६४**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्य-ज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।।६५**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दा-शनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेम-निर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।।६६**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।६७**

। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराज-
पूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे द्वितीयाध्यायः समाप्तः ।

**(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्तिसन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।**

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्या-नोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकं अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**।।ॐ इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरकमलसञ्जात-
श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्यानव्याख्याने द्वितीयाध्यायः समाप्तः ।**

**।श्रीभाविसमीरान्तर्गतमध्वेशार्पणमस्तु ।**

# ०३-०००- तृतीयोऽध्यायः

(व्या) श्रीवादिराजगुरुभ्यो नमः ।। रुद्रेन्द्रादिभिरुपासितत्वात्, सर्वेष्टप्रदत्वात्, सकलपापविनाशकत्वाच्च वृन्दावनसन्निहितस्वान्तर्गतहयवदनस्य सर्वसुजनभजनीयत्वेन प्रथमाध्यायोक्तस्य स्वस्वयोग्यपदादिप्रापकगुणवत्वेन स्मर्तव्यत्वेन सूचनाय स्तुत्यत्वमुक्तम् । तेन सूचितं विशिष्टप्रतीकत्वम् । तच्छतानन्दपदेन स्पष्टमुक्त्वा, भजकवर्गे स्वप्रद्रष्टुः विप्रस्य मुख्यत्वात् तेन तदीयैश्च विशेषेण जन्मान्तरे भजनीयत्वम् । तैः उत्सवादेः स्वशक्त्यनुसारेण कर्तव्यत्वमुक्तं द्वितीयाध्याये । भजनसाधनमन्त्रग्रहणप्रकारं ध्येयान् धर्मान् तत्सङ्गतलौकिकविशेषानपि प्रतिपादयत्यनेनाध्यायेन ।।

**हरिः ॐ।।**

**दास्यत्ययं मनुर्दिव्यं वादिराज इतीरितम् ।**
**दास्यत्ययं मनुर्दिव्यं वादिराज यतीरितम् ।।१**

**ॐश्रीकारद्वयेनापि पूर्वापरसमन्वितम् ।**
**नमः शब्दचतुर्थ्यन्तगुरुशब्दैश्च मिश्रितम् ।।२**
**गृहाण त्वं च विप्रेन्द्र सर्वां सिद्धिमवाप्स्यसि ।**

(अन्वयः) वादिराज इतीरितं, दिव्यं मनुम् अयं दास्यति । वादिराज इति ईरितं दिव्यं मनुम् अयं दास्यति ।। ॐश्रीकारद्वयेन पूर्वापरसमन्वितं नमःशब्दचतुर्थन्तं गुरुशब्दैश्च मिश्रितं हे विप्रेन्द्र! त्वं च गृहाण सर्वां सिद्धिम् अवाप्स्यसि ।।

(व्या) आदौ मन्त्रग्रहणप्रकारमाह – **दास्यतीति** ।। **अयं** बुद्धिसन्निहितो वेदनिधिः । **दिव्यं** देवैर्जप्यं **वादिराजयतीरितं** = वादिराजयतिः ईरितः प्रतिपादितः येन । **ॐश्रीकारद्वयेन** ॐकारसहितयोः श्रीकारयोः युग्मेन, **पूर्वापरसमन्वितम्** । मन्त्रघटकशब्देषु पूर्वभागे एकः ॐकारसहितः श्रीकारः, अपरभागे एकः ॐकारसहितः श्रीकारः । आहत्य द्वौ प्रणवसहितश्रीकारौ । ताभ्यां समन्वितौ । **नमःशब्द** चतुर्थ्यन्तगुरुशब्दैः मिश्रितम् । नमः शब्दश्च चतुर्थ्यन्तपदघटकगुरुवाचकशब्दाश्रितम् । **मनुं दास्यति** ।।१-२।।

**त्वं च गृहाण** । **च**शब्देन त्वदन्योपि गृह्णाति । ननु एतस्य प्राग्जन्मनि गुरुराजोपदिष्टत्वात् दास्याम्यहमिति वक्तव्यमिति चेन्न, जन्मान्तरप्राप्तेरुक्तत्वेन तदा विस्मृतमन्त्रस्य

पुनर्मन्त्रग्रहणसाधनस्य वेदनिधिकर्तृकस्य मन्त्रप्रदानस्य अत्र अभिप्रेतत्वात् । तदपि कथम्? वेदनिधेरपि विप्रस्य जन्मान्तरसमये अभावादिति चेन्न, शिलालेखनद्वारा वेदनिधिर्दास्यतीत्यभिप्रेतत्वात् । अत एव अस्मिन् प्रकरणे **'एतां कृत्वा शिलायाम्'** इत्युक्तिः सङ्गता भवति । सीतापतिना प्राप्तजन्मान्तरेण सहितस्य ब्राह्मणस्य मन्त्रपाठसन्देहे सति सीतापतिना शिलायां तौलवलिपिरेखा दृष्टा; विप्रेण नागरलिपिरपि दृष्टा; ततो मन्त्रनिश्चयो जात इति आख्यायिका उक्ताभिप्रायसूचिका ॥

**यन्मन्त्रभीरवः सर्वे ग्रहा यान्ति दिशो दश ॥३॥**

**सोऽहं महानुभावोऽत्र न ग्रहोऽथ बलिग्रहः ।**

**(अन्वयः) यन्मन्त्रभीरवः सर्वे ग्रहाः दश दिशो यान्ति । सः महानुभावः अहं अत्र न ग्रहः । अथ किन्तु बलिग्रहः ।**

**(व्या)** ग्रहोच्चाटनकामेन ज्ञातव्यमाह – **यन्मन्त्रेति ॥**३॥ बलिग्रहः ''सर्वेस्मै देवा बलिमावहन्ति' इत्युक्तबलिग्रहः ॥ (**न ग्रहः** न पिशाची; मम मन्त्रादेव पिशाचा पलायनं कुर्वन्ति, किन्तु बलिग्रहः ॥ अथ 'सर्वे अस्मै देवा बलिमावहन्ति' पूजां कुर्वन्ति इत्युक्तबलिग्रहः अतो अत्र श्लोके प्रतिपादितः महापुरुषः इति महानुभावपदेन उच्यते, महान् अनुभवो ज्ञानं प्रतिभातपरावरत्वम्, ईशादन्यत्र आलोचने सर्वविषयकज्ञानम् इति तल्लक्षणोक्ते): ॥

**यद्गुणोच्चारणादेव पापसङ्घातपञ्जरम् ॥४**
**जहाति मर्त्यः सततं स पापी तु कथं भवेत्?**

**(अन्वयः) सततं यद्गुणोच्चारणादेव मर्त्यः पापसङ्घातपञ्जरं जहाति । सः (महानुभावः) तु कथं पापी भवेत्?**

**(व्या)** पापक्षयकामेन अनुसन्धेयमाह – **यद्गुणेति ॥** (यद्गुणस्य यन्मन्त्रस्य यद्गुणानां मम ऋजुस्थत्व-सर्वज्ञत्व-अव्यभिचरितहरिभक्तिमत्वरुद्राद्युत्तमत्वादीनां वा उच्चारणेन मनुष्यः स्वकृतपापपञ्जरं त्यजति । स मन्त्रप्रतिपाद्यः ऋजुस्थदेवः अहं कथं पापी भवेयम् इति भावः॥)

**यत्पादस्मरणान्नित्यं नराः सुकृतिनः सदा ॥५**
**सोऽहं पुण्यतमः शुद्धः सततं नात्र संशयः ।**

**(अन्वयः) नित्यं यत्पादस्मरणात् नराः सदा सुकृतिनः, सः अहं पुण्यतमः सततं शुद्धः; अत्र न संशयः ॥**

(व्या) पुण्यवृद्धिकामेन अनुसन्धेयमाह – **यत्पादेति** ॥(स्पष्टम्)

(व्या) ग्रहोच्चाटनादिमाहात्म्यासहिष्णोः ग्रहत्वज्ञानिनो अनिष्टमाह – **यो मामिति** ॥

**यो मां ग्रहं विजानाति तस्य पुण्यं हराम्यहम् ॥६**

**स याति नरकं घोरं यावद्ब्रह्मा चतुर्मुखः ।**
**यो मां देवं विजानाति ऋजुस्थं[१] पुण्यकृन्नरः ॥७**

**स याति निलयं पुण्यं यद्गत्वा न निवर्तते ।**

**(अन्वयः) यः मां ग्रहं विजानाति तस्य पुण्यं अहं हरामि । सः (च) यावत् चतुर्मुखः ब्रह्मा (तावत्) घोरं नरकं याति ॥**

**(किन्तु) यः पुण्यकृन्नरः मां ऋजुस्थं देवं विजानाति, सः पुण्यं निलयं याति, यद्गत्वा न निवर्तते ॥**

(व्या) अकामैः सर्वकामैरपि ध्येयमाह – **यो मामिति** ॥७॥ **स** ऋजुत्वज्ञानी । पुण्यं निवर्त्यं **पुण्यं निलयम्** अपरोक्षज्ञानरूपं तत्साध्यं वैकुण्ठादिरूपं च याति ॥ ('स याति नरकं घोरम्' इति श्लोकभागः पूर्वश्लोकेण सङ्गतः ।' यो मां पिशाचं जानाति स ब्रह्मणः परकालपर्यन्तं नरके दुःखमनुभवती'त्यर्थः ॥)

**आत्मस्तोत्रं न कर्तव्यमहङ्कारेण धीमता ।**
**अज्ञानां बोधनार्थाय कर्तव्यं नात्र संशयः ॥८॥**

**(अन्वयः) अहङ्कारेण आत्मस्तोत्रं न कर्तव्यम् । (तथापि) अज्ञानां बोधनार्थाय धीमता (मया) कर्तव्यम् । अत्र न संशयः ॥**

(व्या) (आत्मस्तुतिर्हि आत्महननवत् स्वकृतपुण्यविघातिनी । तां ज्ञानी न करोत्येव । तथापि स्वाश्रितानां भक्तानां समीचीनज्ञानोत्पत्त्यर्थम् उत्तमो गुरुः स्वमाहात्म्यं कथयत्येव यथा

---

(१) **'विजानाति ऋजुस्थम्'** इत्यत्र 'नानिष्ठार्था शास्त्रप्रवृत्तिर्भवितुमर्हति' इति महाभाष्यवचनान्न सन्धिः।

श्रीसर्वज्ञाचार्याः । तथा अत्रापि गुरुराजैः विप्रादिशिष्याणाम् उद्धारार्थं स्वमहिमावबोधिनी एषा कृतिरुपदिष्टेति भावः ।।८।।)

**हरिद्रोहगुरुद्रोहसुरद्रोहहरे परे ।**
**गिरिगह्वरकासारे तपः कुर्यां हरेरिति ।।९**

**(अन्वयः) हरिद्रोहगुरुद्रोहसुरद्रोहहरे परे गिरिगह्वरकासारे हरेः इति तपः कुर्यां ।**

**(व्या)** तपःसमृद्धिकामेन ज्ञेयमाह – **हरिद्रोहेति ।।** स्वस्य हरिद्रोहादिप्रसक्त्यभावेऽपि अन्येषां प्रसक्तपापानां तत्परिहारके **गिरिगह्वरकासारे** = गिरेः पर्वतस्य गह्वरं वदनैकदेशः । तत्रत्यः **कासारः** । तत्तीरे **तपः कुर्याम्** । तदपि हरेः प्रेरणया च । इति हेतोः अहङ्कारेण आत्मस्तोत्रं न कर्तव्यम् । तथापि अज्ञानां बोधनार्थाय धीमता मया कर्तव्यम् । तस्यापि तत्प्रीत्यर्थत्वादिति भावः ।।९।।

**(व्या)** स्वस्य ऋजुत्वोपपादकं बादरायणमुख्यशिष्यत्वम् । ब्रह्मवायुसखत्वं च भक्तैर्ज्ञातव्यम् । तेन स्वयोग्यगुरुप्राप्तिः । स्वयोग्यसत्सङ्गतिः सुज्ञानं च भूयादित्यभिप्रायेणाह – **गिरिजेति ।।**

**गिरिजापतिमाराध्य विरजार्कायुतद्युतिम् ।**
**सुरजातचरं देवमरिजातहरं परम् ।।१०**
**गुरुजातमतिं लप्स्ये नरजातिं समुत्सृजे ।**
**हरिजातगुणान् ध्याये करजाताभयं लभे ।।११**

**(अन्वयः) विरजार्कायुतद्युतिं सुरजातचरम् अरिजातहरं परं देवं गिरिजापतिं आराध्य, गुरुजातमतिं लप्स्ये । नरजातिं समुत्सृजे । हरिजातगुणान् ध्याये, करजाताभयं लभे ।।**

**(व्या)** 'गिरिः प्राणः समुद्दिष्टः तत्सुता वेदवाक् स्मृता' इति चतुर्थतात्पर्योक्तेः **गिरिजा** वेदवाणी । तत्पतिं बादरायणं हयवदनं (हयग्रीवं) वा आराध्य । कीदृशं **विरजार्कायुतद्युतिम्** विगतरजस्कं सूर्यायुतकान्तिं **सुरजातचरं** देवानां समूहे अन्तर्यामितया चरन्तम् । **देवं** क्रीडादिगुणसम्पन्नम् । **अरिजातहरं** कामाद्यान्तरशत्रूणां बाह्यशत्रूणां च समूहस्य नाशकम् । **परं** क्षराक्षरविलक्षणम् (**आराध्य**) ।।१०।।

**गुरुजातमतिं** = जाता मतिर्यया विद्यया सा । तथोक्ता । गुर्वी च सा जातमतिश्च गुरुजातमतिम् । **'ब्रह्मात्वो वदति जातविद्याम्', 'महत्वाद्भारवत्वाच्च महाभारतमुच्यते'** इत्युक्तेः महाभारतादिजातविद्यां **लप्स्ये** । **नरजातिं** मानुषजननं **समुत्सृजे** । अनेन प्रकाशसंहितायाम् ऋजुप्रकरणे 'अन्यजा इव भ्रान्तितः' इत्युक्तं ऋजूनां असाधारणलक्षणम् । लक्ष्मीनारायणाभ्याम् अन्येभ्यो जननाभावलिङ्गमुक्तं भवति । तर्हि कथमाचार्यस्य मध्यगेहभट्टगृहे जननमिति चेन्न । ''श्रीश्रीधरप्रततिसारशरीरयष्टि' इति लक्ष्मीनारायणयोः रजतपात्रस्थस्वर्णपात्रवत् दम्पतिदेहस्थयोः सकाशात् जन्मनः सूचितत्वात् । **हरिजातगुणान् ध्याये** । **करजाताभयं** अभयमुद्रोपेत-बादरायणकरजातम् अभयम् लभे ।।११।।

**तेन च ब्रह्मणा साकं हरिमाराध्य भूरिशः ।**
**ताभ्यां महानुभावाभ्यां मुच्येऽहं कर्मबन्धनात् ।।१२**

(अन्वयः) **तेन च ब्रह्मणा साकं हरिं भूरिशः आराध्य ताभ्यां महानुभावाभ्यां कर्मबन्धनात् अहं मुच्ये ।।**

**(व्या) तेनेति ।। तेन** ब्रह्मत्वदशायां गिरिपदोक्तप्राणेन, प्राणत्वदशायां **ब्रह्मणा**, लातव्यत्वदशायां ताभ्यां ब्रह्मवायुभ्यां सह **भूरिशः हरिम् आराध्य** । **ताभ्यां महानुभावाभ्यां** गिरिजापतिशब्दोक्तां हयवदनबादरायणाभ्याम् अनुग्राहकाभ्यां **मुच्ये** । दशमश्लोकस्थ-गिरिजापतिशब्दः रुद्रपरः किं न स्यात्? इति चेन्न । ऋजूनां रुद्राराधनासम्भवात् । ब्रह्मरुद्राभ्यां सह मुक्तेः शशविषाणतुल्यत्वात् ।।१२।।

**एतां कृत्वा शिलायां मम कृतिमथ च स्थापयेत् तां च दृष्ट्वा**
**सन्तः सन्तोषभाजः सुमतिदमशमैर्युक्तमात्मानमीशम् ।**
**ज्ञात्वा देवेषु मुख्यं शुभगुणसुमुखं नित्यनिर्धूतहेयं**
**मामेवं सद्गुणाढ्यं शुभविततगतिं यान्तु सन्तः सदा ते ।।१३**

(अन्वयः) **एतां मम कृतिं शिलायां कृत्वा (लिखित्वा) अथ च स्थापयेत् । तां च दृष्ट्वा ते सन्तः सन्तोषभाजः (सन्तः) । त्वदीयाः सज्जनाः सन्तोषयुक्ताः सन्तः (ममेशं) आत्मानं ज्ञात्वा, सुमतिशमदमैः युक्तं मां, देवेषु मुख्यं शुभगुणसुमुखं नित्यनिर्धूतहेयं सद्गुणाढ्यं ईशम् एवं मां च ज्ञात्वा सदा शुभविततगतिं यान्तु ।।**

(व्या) 'दास्यत्ययं मनुम्' इत्यस्योपपादकं शिलालेखनं वेदनिधिमुनिना कर्तव्यमाह – एतामिति ।। एतां ऋजुत्वाबोधिकाम्, मन्त्रात्मिकां च शिलायां कृत्वा लिखित्वा स्थापयेत् । तां दृष्ट्वा ते सन्तः सन्तोषभाजः सन्तः, त्वदीयाः सज्जनाः सन्तोषयुक्ताः सन्तः । मम ईशम् आत्मानं परमात्मानं ज्ञात्वा । सुमत्यादियुक्तं मां । देवेषु मुख्यम् । आत्मानं 'आत्मा विरिश्चः सुमना' इत्युक्तेः भाविब्रह्माणं ज्ञात्वा । शुभविततगतिं यान्तु ।।१३।।

**पञ्चाशद्योजनानां तु विस्तीर्णं कार्तभास्वरम् ।**
**हंसवाहनसंयुक्तं जाम्बूनदमयं शुभम् ।।१४**

**हेमराशिप्रतीकाशं हेमाद्रिशिखरोपमम् ।**
**नानामणिमयं दिव्यं नानामाल्योपशोभितम् ।।१५**

**नानोपहारबलिभिर्जयशब्दपुरस्कृतैः ।**
**नानामुनिगणैर्दिव्यैर्नानादेवगणैस्तथा ।।१६।।**

(अन्वयः) पञ्चाशद्योजनानां तु विस्तीर्णं कार्तभास्वरम् । हंसवाहनसंयुक्तं जाम्बूनदमयं शुभम् ।। हेमराशिप्रतीकाशं, हेमाद्रिशिखरोपमं, नानामणिमयं दिव्यं नानामाल्योपशोभितं । नानोपहारबलिभिः जयशब्दपुरस्कृतैः नानामुनिगणैः तथा दिव्यैः नानादेवगणैः च संराजितम् ।

(व्या) मुक्तौ साधनकाले स्वर्गादौ च योग्यगेहादिसाधनत्वेन ध्यातव्यं (स्व)विमानं निरूपयति पञ्चाशदित्यादिना ।। कार्तभास्वरम् – कार्तेभ्यः कृतयुगसम्बन्धिभ्यः । उत्तमरत्नादिभ्यः भास्वरम् । हंसवाहनसंयुक्तं ऋजुलक्षणमेतत् । (जाम्बूनदमयं[१] सुवर्णालङ्कृतम्) ।। अल्पमतीनाम् बुद्ध्याऽरोहाय हेमराशिप्रतीकाशमिति ।। प्राज्ञविवक्षया हेमाद्रिशिखरोपम-मिति ।।१५।।

**गन्धर्वैरप्सरोभिश्च सेव्यमानं समन्ततः ।**
**गीतवादित्रनृत्यैश्च छत्रचामरपूजितम् ।।१७**

---

(१) 'जाम्बूनदमयम्' तथाहि बृहद्भाष्यम् – (६-४-४) –
"स्वर्णं पीतं गान्धर्वमेव च । इन्द्रगोपनिभं नाम्ना जाम्बूनदमिति स्मृतम् ।" इति ।

**वितानैरर्कवर्णैश्च सेव्यमानं समन्ततः ।**
**भक्ताभयकरं दिव्यं भक्तमुक्तिप्रदायकम् ॥१८**

**अमृतानां सुपानैश्च सोमपानां तथैव च ।**
**सुरभिक्षीरपानैश्च सेवितं नित्यमेव च ॥१९**

**विमानं दिव्यमानं च दीप्यमानं सदायनम् ।**
**वृन्दावनोपरिगतं पूजयन्तु सदा मम ॥२०॥**

**(अन्वयः) गन्धर्वैः अप्सरोभिः च गीतवादित्रनृत्यैः च समन्ततः सेव्यमानं छत्र-चामरपूजितम् । अर्कवर्णैः वितानैः च समन्ततः सेव्यमानं भक्ताभयकरं दिव्यं भुक्तिमुक्तिप्रदायकम् । अमृतानां सुपानैश्च सोमपानैः तथैव च सुरभिक्षीरपानैश्च नित्यं सेवितम् ॥ दिव्यमानं दीप्यमानं सदा (सतां) अयनं मम वृन्दावनोपरिगतं विमानं (सन्तः) सदा पूजयन्तु ॥**

**(व्या) (गन्धर्वैः अप्सरोभिश्च सेव्यमानं** सुखार्थं आश्रितमित्यर्थः । यथा अस्माभिः उद्यानवनं सेव्यते । गीतवादित्रनृत्ययुक्तैः गन्धर्वैः अप्सरोभिश्च इत्यन्वयः । गीतानि, वादित्राणि, नृत्यानि, येषां ते तैरिति बहुव्रीहिः । 'गन्धर्वाः जगुः; अप्सरसः ननृतुरि'ति विवेकः । छत्र-चामरपूजितम् अलङ्कृतमित्यर्थः । अथवा छत्रचामरादिपूजाद्रव्यविशिष्टमित्यर्थः । पूजा इति करणे क्यप् । तत् इतच् ॥) (**वितानैरिति ॥** अर्कस्य वर्ण इव वर्णः येषां, तैः वितानैः उल्लोचैः मण्टपैः (क्यानोपि पेण्डाल् इति म्लेच्छभाषायां व्यवहृतैः) समन्ततः । तत्र तत्र विद्यमानैः निमित्तभूतैः सेव्यमानं । हरिभक्तानामभयप्रदम् । **भुक्तिः** भोजनम् । **भक्तमुक्ति- प्रदायकमिति** पाठेऽपि 'भक्तमन्नमिति प्रोक्तम्' इति वचनात् स एवार्थः । भक्तानां संसारमोचनहेतुभूतम् । गुरुराजप्रसादद्वारा इति वा अर्थः ॥१८॥)

**सोमपानैः** यज्ञे प्रसिद्धैः । **सुरभिक्षीरपानैः** कामधेनुक्षीरपानैः ॥१९॥

**दिव्यमानं** देवतासम्बन्धिमानो यस्य तत् तथोक्तः । सदा **सतां अयनम्** आश्रयम् । **मम वृन्दावनोपरिगतं** सन्तः पूजयन्तु ॥२०॥

**अहं सदा देवसभासभाजितः सुभास्वरैर्दिव्यविभूषणैर्युतः ।**
**अहंसमानैः सुरमानिमानितः सुमानयुक्तैः सुमनोभिरञ्जसा ॥२१**

**(अन्वयः) सुभास्वरैः दिव्यविभूषणैः युतः अहं देवसभासु सदा सभाजितः । सुरमानि मानितः अहंसमानैः सुमानयुक्तैः सुमनोभिः (अहं) अञ्जसा (वर्ते) ।।**

**(व्या)** विमानस्य वृन्दावनोपरिगतत्वकथनेन देवसभाप्रवेशो नेति न चिन्तनीयमित्याशयेन आह – **अहमिति ।। अहंसमानैः =** हंसमानरहितैः गरुडादिभिः । **सुरमानिमानितः** सन् । सुरमानि सभायामित्यर्थः । **देवसभासभाजितः** । देवानां सभाः तत्र सभाजितः । एतत् ज्ञानं दिव्यविभूषणैर्वृतत्वज्ञानं च भक्तानां देवसभाप्रवेशादियोग्यानां तत्प्रापकमिति ज्ञेयम् ।।२१।। (**सुभास्वरैः दिव्यविभूषणैः युतः** । सुरमानिभिः सुरैः पूजां स्वीकुर्वद्भिः हंसवाहनयुक्तऋजुज्ञानिभिः मानितः सादृश्यनिमित्तेन सत्कृतः । अहं । **अहंसमानैः** वाहनभूतहंससत्काररहितैः अथवा 'हंसा ब्रह्मादयः प्रोक्ताः' इति वचनात् ऋजुयोगिभिः अनमस्कृतवतैः । कथंभूतैः **सुमानयुक्तैः** भक्ति-पूर्णगौरवविशिष्टैः गरुडादिभिः **सुमनोभिः** शोभनध्यानोपेतैः पारिजातादिपुष्पैः पूजासाधनैः । सदा । **देवसभासभाजितः** देवसभासु सभाजितानि यस्य सः । सर्वदेवतानां समक्षं प्रीत्या पूजितः इत्यर्थः[१] ।।)

**(व्या)** एवं ग्रहशब्दोपलक्षितकल्याद्यसुरोपद्रवनिवारकत्वम्; निखिलपापनिवारकत्वम्; निखिलसुकृतसमृद्धिहेतुत्वम्; बादरायणैकशिष्यत्वम्; वातविरिञ्चिसखित्वम्; हंसोपेतविमान-पतित्वम्; गरुडादिमान्यत्वं च पूर्वश्लोके प्रतिपादितम् । इदानीं एतैः धर्मैः श्रेष्ठगुरुत्वज्ञानपूर्वकं भजनीयत्वमाह – **गुरुमिति ।।**

**गुरुमखिलगुणज्ञं सद्गुणैकाधिवासं शमदमपरिनिष्ठं सत्वनिष्ठं वरिष्ठम् ।**
**सकलसुजनशिष्टं नित्यनिर्धूतकष्टं हयमुखपदनिष्ठं मां भजन्तु प्रपन्नाः ।।२२**

**(अन्वयः) अखिलगुणज्ञं सद्गुणैकाधिवासं शमदमपरिनिष्ठं सकलसुजनशिष्टं सत्वनिष्ठं वरिष्ठं नित्यनिर्धूतकष्टं हयमुखपदनिष्ठं गुरुं मां प्रपन्नाः भजंतु ।।**

**(व्या) प्रपन्नाः मां भजन्तु** । कीदृशम्? **अखिलगुणज्ञम् =** अखिलोपास्यभगवद्गुणा-भिज्ञम्, **सद्गुणैकाधिवासम्** सद्गुणस्य दोषासम्भिन्नगुणपूर्णस्य विष्णोः **एकाधिवासं** विशिष्ट-प्रतिमारूपम् । **शमदमपरिनिष्ठं** शमदपोपलक्षितैः परितः समस्तदेशकालेषु निष्ठा यस्य सः तम् । **सत्वनिष्ठम्** 'निःशेषगुणपूर्णत्वात् सत्वमित्येव तं विदुः' इति सत्वगुणैकनिष्ठम् ।

---

(१) 'वर्ते' एंदु क्रियापद अध्याहार माडबेकु. बहुव्रीहि माडदिद्दरे एकादेशान्वय माडबेकागुत्ते.

**सकलसुजनशिष्टं** सकलसज्जनेषु श्रेष्ठम् । विलीनप्रकृतितया **नित्यनिर्धूतकष्टम्** । **हयमुखपद-निष्ठम्** । हयमुखपदयोः निष्ठावन्तम् । अतएव **वरिष्ठम् । गुरुम्** ।।२२।।

**(व्या)** 'प्रपन्नस्य दुष्कर्मबलेन कदाचिदभजनेपि स्वानुग्रहबलेन कालान्तरे भजनं करोति' इति सूचयितुं शेषाचार्यस्य वृत्तांतमाह – **मच्छिष्येति** ।।२३।।

**मच्छिष्यमध्ये मद्भक्तियुक्तो यश्च मदाग्रही ।**
**मत्सम्प्रदायसंयुक्तो मन्मन्त्रजपशीलवान् ।।२३।।**

**मत्कृतिं न शृणोत्यर्थं न जानाति न तुष्यति ।**
**न पूजयति मत्पीठं न करोति सदाऽशुचिः ।।२४।।**

(अन्वयः) मच्छिष्यमध्ये यः (शेषः) मद्भक्तियुक्तः मदाग्रही (मम लातव्यत्वविषये आग्रही) च, मत्सम्प्रदायसंयुक्तः, मन्मन्त्रजपशीलवान् ।। (स च मम निजभक्तः, तथापि) मत्कृतिं (श्रीमद्बृंदावनाख्यानं) न शृणोति, (स्वयं) अर्थं न जानाति, (परोक्तं श्रुत्वापि) न तुष्यति । मत्पीठं (मद्बृंदावनं) न पूजयति (स्वरूपज्ञान-पूर्वकपूजां) न करोति (सः) सदा अशुचिः ।।

**(व्या) मत्कृतिमिति ।।** भक्त्यादियुक्तोऽपि शेषः **मत्कृतिं न शृणोति** । स्वयम् **अर्थं न जानाति** । परोक्तं श्रुत्वापि **न तुष्यति** । **पीठं** वृन्दावनम् । 'आवाहयामि पीठे त्वाम्' इति प्रयोगात् पीठशब्दः प्रतिमावाची । **न पूजयति** । (**न करोति** विध्युक्तस्नानादिसत्कर्म न करोति, किन्तु सदा अशुचिः सन् विद्यते ।)

**स च विप्रबहिर्भूतो मद्रोहफलभाक् स्वयम् ।**
**पितृभिः सह मज्जेत नरके न च मामकः ।।२५**

**इतः परं कियज्जन्म जातः प्रेक्षति मत्कृतिम् ।**
**अवशिष्टं तु वक्तव्यं मुक्तिं यास्यामि सद्गतिम् ।।२६।।**

(अन्वयः) स च विप्रः स्वयं मद्रोहफलभाक् बहिर्भूताः (भूत्वा) पितृभिः सह नरके च मज्जेत; (तथापि) न, मामकः । (मद्बृन्दावनाख्यानविषये एतद्रोहक्रियमाण-शेषाचार्यः) इतः कियत् जन्म जातः परं (इतः एतदाख्यानउपदेशकालीनजन्मतः परं विप्रस्य यतित्वयोग्यजन्मसमये जातः सन्) मत्कृतिं प्रेक्ष्यति (बहुषु जन्मसु जातः

**सन् मत्कृतिं प्रेक्ष्यति । तस्य विषये) अवशिष्टं वक्तव्यं तु (अस्ति) । (तेन योग्य-साधनं कारयित्वा) सद्गतिं (सुज्ञानं) मुक्तिं (च) यास्यामि ।।**

**(व्या)** तेन अनर्चितेन विपरीतचित्तेन स्तुत्याद्यकरणेन मद्द्रोहफलभागपि नरके न मज्जेत ।। द्रोहपरिहारकसाधनमाह – **इतःपरमिति ।। इतः** एतदाख्यानोपदेशकालीनजन्मतः परं विप्रस्य यतित्वयोग्यजन्मसमये जातः सन् कियज्जन्मसु जातः सन् कृतिं प्रेक्ष्यति । बहुषु जन्मसु जातः सन् **मत्कृतिं प्रेक्ष्यति** । अस्य वृत्तान्तं **वक्तव्यम् अवशिष्टं** वर्तते । तदिदं कथं सङ्घटते (५/७८) इत्यादावुच्यते । **सद्गतिं** सुज्ञानं मुक्तिं **च** यास्यति । **यास्यामी**ति व्यत्ययेन स्वस्य स्वातंत्र्यं सूचितं ('सुप्तिङुपग्रहलिङ्गनराणाम्' इत्यादि प्रथमतात्पर्योक्तरीत्या) । अस्य वृत्तान्तं वक्तव्यमस्ति चेत् । अत्र किमर्थं किञ्चिदुक्तमिति चेत् । मन्त्रप्रकरणे विप्रसीतापत्योरिव शेषस्याप्यधिकारसूचनार्थम् ।।२६।।

**(व्या)** वृन्दावनोपरिगतविमानस्थत्वमिव स्वस्य नन्दनवनगतत्वमपि ध्येयमित्याह – **नन्दने चेति ।।**

**नन्दने च वने रम्ये स्यन्दनेऽमन्दनन्दने ।**
**इन्द्राण्येन्द्रेण चानन्दी मन्दाकिन्यां रमाम्यहम् ।।२७**

**(अन्वयः) (वृन्दावनोपरिगतविमानस्थत्वमिव) इन्द्राणी इन्द्रेण च (इन्द्राण्या इन्द्रेण च सहितः) रम्ये अमन्दनन्दने (अमन्दानां ज्ञानिनां नन्दने सुखप्रदे) नन्दने[१] वने च, स्यन्दने, आनन्दी अहं मन्दाकिन्यां (स्वर्गगङ्गासमीपे) रमामि ।।**

**(व्या) अमन्दनन्दने** = अमन्दानां ज्ञानिनां नन्दने सुखप्रदे ।। (**स्यन्दने** रथे तिष्ठन् अथवा मण्टपविशेषे स्थित्वा । **मन्दाकिन्यां** स्वर्गगङ्गासमीपे **आनन्दी** व्यक्तस्वरूपसुखवान् **अहं रमामि** ।।२७।।)

**(व्या)** वृन्दावने नन्दनवनापेक्षया न्यूनताशङ्कां वारयितुमाह – **तथैवेति ।।** (स्पष्टम्)।।

**तथैव नन्दन प्रख्ये मम वृन्दावनेनिशम् ।**
**रमामि रमया देवैः हयग्रीवेण चान्विते ।।२८।।**

---

(१) 'अथवा 'नन्दने च वने' = निरन्तरभगवत्सन्निधानयुते वने' इत्यर्थः । तथाहि महैतरेयभाष्यम् – (२.३.३.) – **'पूर्णानन्दरूपत्वान्नन्दनो भगवान्'** इति ।

(अन्वयः) तथैव (हे) नन्दन! रमया हयग्रीवेण देवैः च अन्विते प्रख्ये मम वृन्दावने च अनिशं रमामि ।।

**नन्दन स्यन्दनाकारे मम वृन्दावनेऽनिशम् ।**
**वन्दनं नन्दनार्था ये कुर्वन्तु गुणनन्दिनः ।**
**तस्माद्वृन्दावनमिदं सर्वाभीष्टप्रदं सताम् ।।२९।।**

(अन्वयः) (हे) नन्दन! ये गुणनन्दिनः (गुणानुपलभ्य नन्दिनः सन्तोषवन्तं) नन्दनार्थाः (नन्दनवनरूपः पुत्ररूपः च अर्थः प्रयोजनं येषां ते तथोक्ताः) (वदनं कुर्वन्तु) (नन्दनवन अपेक्षिणः पुत्र अपेक्षिणः वा) स्यन्दनाकारे (रथाकारे) मम वृन्दावने अनिशं वन्दनं कुर्वन्तु । तस्मात् इदं वृन्दावनं सतां सर्वाभीष्टप्रदं (अस्ति) ।।२९।।

**(व्या) नन्दनेति ।। हे नन्दन! स्यन्दनाकारे** रथाकारे (**नन्दनस्यन्दनाकारे** नन्दनवनस्थ रथमंटपसदृशे इति वा ।।) **मम वृन्दावने ये गुणनन्दिनः** गुणान् उपलभ्य नन्दिनः सन्तोषवंतः **नन्दनार्थाः** नन्दनवनरूपः पुत्ररूपश्च अर्थः प्रयोजनं येषां ते तथोक्ताः । **वन्दनं** कुर्वन्तु (उपपादकबाहुल्यात् पौनःपुन्येन कथ्यते – **तस्माद्वृन्दावनम् अभीष्टप्रदमिति** ।।) ।।२९।।

**वृन्दावनाख्यं मम मन्दिरं सदा कन्दाशनानन्दपदं सुधीमताम् ।**
**वृन्दारकाणामिव मन्दराद्रिः सन्दर्शनानन्दसुधां प्रदद्यात् ।।३०**

(अन्वयः) वृन्दावनाख्यं मम मन्दिरं सदा कन्दाशनानन्दपदं (कन्दाशनानां ऋषीणाम् आनन्दप्रदं) वृन्दारकाणां (देवानां) मन्दराद्रिः इव, सुधीमतां सन्दर्शनानन्दसुधां प्रदद्यात् ।।

**(व्या) वृन्दावनाख्यमिति ।। कन्दाशनानन्दपदं** = कन्दाशनानां ऋषीणाम् आनन्दपदम् ।।३०।। (तत्र दृष्टान्तः । **मन्दराद्रिः वृन्दारकाणां** देवानां सतां विष्ण्वादिमहतां दर्शनजन्य आनन्दामृतं यथा ददाति तथा वृन्दावनं शोभनबुद्धियुक्तानां माध्वानाम् आनन्दं ददाति ।।)

'आनन्दसुधां प्रदद्यात्' इत्युपक्रममुपपादयितुमुक्तम् – **वृन्दावनमिति ।।** (तथा च तारतम्यानुसारेण निखिलदेवसङ्घपरिवृतत्वेन वृन्दावनस्थः श्रीविष्णुः मन्त्रजपसमये स्मर्तव्यः इति सूचयितुमाह – **वृन्दावनम् इति** ।।)

**वृन्दावनं सदवनं सदनं ममेदं इन्द्रानुजस्य सदनं मदनस्य चेदम् ।**
**वृन्दारकेन्द्रभवनं परमस्य चेदं नन्दादिपार्षदगणायनमेव चेदम् ।।३१।।**

(अन्वयः) इदं वृन्दावनं[१] परमस्य इन्द्रानुजस्य (सर्वोत्तमस्य श्रीलक्ष्मीकान्तस्य श्रीविष्णोः सन्निधानं) सदनं (ब्रह्मादीनां सभार्याणां सन्निधानसूचनाय) इदं मम सदनं (इति) (इन्द्रकामयोः सन्निधानसूचनार्थं) मदनस्य च (सदनं) वृन्दारकेन्द्रभवनं (वृन्दारकपदेन पुष्करान्तर्गतानां तदन्येषां च सन्निधानं सूचितं) नन्द (सुनन्द) आदि पार्षदगण अयनं च, सदनं इदं सदवनम् एव ।।

**(व्या) परमस्य इन्द्रानुजस्य**[२] सर्वोत्तमस्य लक्ष्मीकान्तस्य विष्णोः सन्निधानम् । ब्रह्मादीनां सभार्याणां सन्निधानसूचनाय – **मम सदनमिति ।। वृन्दारकेन्द्रभवनं मदनस्य च सदनम्** इति इन्द्रकामयोः सन्निधानसूचनार्थम् । **वृन्दारक**पदेन पुष्करान्तानां तदन्येषां च सन्निधानं सूचितम् । तथा च तारतम्यानुसारेण निखिलदेवसङ्घपरिवृतत्वेन वृन्दावनस्थो विष्णुः मन्त्र- जपसमये स्मर्तव्यः इत्युक्तं भवति ।।३१।।

**मेरौ मारमणं दृष्ट्वा रममाणो रमापतेः ।**
**करकञ्जं रमायाश्च शिरसा मानयाम्यहम् ।।३२**

(अन्वयः) मेरौ रममाणः मारमणं दृष्ट्वा रमापतेः रमायाश्च करकञ्जम् अहं शिरसा मानयामि ।।

**(व्या)** विष्णोः सन्निधानोपपादकम् – **मेरौ मारमणमिति** ।।३२।।

स्वपरिवारत्वेन मदनस्य स्थितत्वात् । स्वस्य कामविकाराभावमाह – **उर्वश्यादिति ।।**

**उर्वश्याद्यप्सरस्त्रीणां शर्वस्यार्धाङ्गिसन्निधौ ।**
**गर्वस्यार्थं कृतं नृत्तं सन्दृश्याम्यत्र चाद्भुतम् ।।३३**

---

(१) **वृन्दावनं** नाम = 'सकलभक्तवृन्दस्य अवनं रक्षणं यस्मात् तद् वृन्दावनम्' इत्यपादानबहुव्रीहिः ।

(२) **परमस्य इन्द्रानुजस्य** इत्यत्र इन्द्रानुजशब्दो विष्णुपरः । अनुजः = अनुभूः । इन्द्रश्चासौ अनुजश्च इन्द्रानुजः इति कर्मधारयः । इन्द्रः = श्रीहरिः । तथा हि गीतातात्पर्यम् (११.३९) – **'इन्द्रः स परमैश्वर्यादिति नानाभिधो हरिः'** इति । (अनुजः = अनुभूः) तथा हि भागवततात्पर्यनिर्णयः – (२.२.७) – **यथेष्टभवनाद् विष्णुरनुभूः परिकीर्तितः'** इति **बृहत्संहितायाम्** इति ।

**कैलासे पर्वते श्रेष्ठे सविलासेक्षणाः स्त्रियः ।**
**पलाशेक्षितचावङ्ग्यः कलाशे पीतपौष्पिकाः ।।३४**

**नर्तनं प्रेरयन्त्यो वैकर्तनद्युतिसन्निभाः ।**
**मदनं प्रेक्षकाश्चात्र प्राप्नुवन् वै मया विना ।।३५**

(अन्वयः) कैलासे(कलाशे) पर्वतश्रेष्ठे कैलासे शर्वस्य अर्धांगि सन्निधौ, पलाशेक्षित-चार्वन्ग्यः, नर्तनं प्रेरयन्त्यः पीतपौष्पिकाः वैकर्तनद्युतिसन्निभाः सविलासेक्षणाः स्त्रियः उर्वश्याद्यप्सरस्त्रीणां गर्वस्यार्थं नृत्तं कृतम् अत्र मया विना (सर्वे) प्रेक्षकाः मदनं वै प्राप्नुवन् । अत्र च अद्भुतं सन्दृश्यामि ।

**(व्या)** शर्वस्य शिवस्य अर्धांगिसन्निधौ पार्वतीसन्निधौ । **कलाशे** कलाभिः आ सम्यक् सुखप्रदे कैलासे । **पलाशेक्षितचार्वंग्यः** राक्षसैरवलोकितसुन्दराङ्गैरुपेताः **पीतपौष्पिकाः** कृतमधु-पानाः याः स्त्रियः तासां उर्वश्याद्यप्सरस्त्रीणां **गर्वस्यार्थं** गर्वभङ्गार्थं **नृत्तं कृतं** कारितम् । अत्र **मया विना प्रेक्षकाः सर्वे मदनं प्रापुः** । तेन अन्येषां प्राप्तकामानां पुरुषाणाम् अप्सरसां च गर्वभङ्गो जातः इति भावः । अत्र **अद्भुतं सन्दृश्यामि** सम्पश्यामि । अलौकिकोऽयं प्रयोगः ।।३३-३५।।

**(व्या)** स्वस्य मदनतातकरावलम्बम्, मदनवैरिणः शिवस्य स्वकरावलम्बं, तयोर्मध्य-गतत्वेन वातविरिश्चयोरिव रजोगुणनियामकत्वं च (स्वस्य) सूचयितुमाह – **हरस्येति** ।।३६।।

**हरस्य करकञ्जं च हरेश्चक्रधरं करम् ।**
**अहं कराभ्यां सङ्गृह्य तयोरन्तरगः सदा ।।३६**

(अन्वयः) चक्रधरं हरेः करं हरस्य करकञ्जं च अहं कराभ्यां सङ्गृह्य सदा तयोः अन्तरगः । (भवामि)

**(व्या)** वृन्दावनविमाननन्दनेष्विव ब्रह्मलोके विष्णुलोके च स्थितत्वं ध्येयमाह **तथैवेति** ।।

**तथैव ब्रह्मणो लोके ब्रह्मानन्दात्मकं हरिम् ।**
**हंसवाहनसंवीजच्चामरं चारुहासिनम् ।।३७**

**हयग्रीवं सुराग्रण्यं हारकेयूरधारिणम् ।**
**दृष्ट्वा मन्नयनानन्दं मग्नश्चानन्दवारिधौ ।।३८**

**(अन्वयः) तथा एव ब्रह्मणः लोके ब्रह्मानन्दात्मकं चारुहासिनं हारकेयूरधारिणं सुराग्रण्यं हंसवाहनसंवीजश्चामरं मन्नयनानन्दं हयग्रीवं च दृष्ट्वा आनन्दवारिधौ मग्नः ।**

**(व्या) ब्रह्मणः** विरिञ्चस्य, **लोके** वैजयन्ताख्यलोके ॥३७॥ **ब्रह्मानन्दात्मकं** चतुर्मुखस्य आनन्दप्रदं हयग्रीवरूपिणं हरिम् । चतुर्मुखादि ऋजुभिः संसेव्यमानं दृष्ट्वा सन्तोषं प्राप इत्यर्थः ॥३७-३८॥

**एवं जनिशतावृत्त्या तद्भक्त्या तत्प्रसादतः ।**
**लक्ष्मीकटाक्षतश्चाहं मुच्ये तत्कुक्षिगः क्षणात् ॥३९**

**(अन्वयः) एवं जनिशतावृत्त्या तद्भक्त्या तत्प्रसादतः लक्ष्मीकटाक्षतः च तत्कुक्षिगः अहं क्षणात् मुच्ये ।**

**(व्या) एवं जनिशतावृत्त्या** 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति ततः परं हि माम्' (भाग.४-२४-२९)[१] इत्युक्तरीत्या जनिशतस्य आवृत्त्या जननशतस्य आवृत्त्या द्विशता-वृत्यां च । योग्यापरोक्षात्पूर्वं शतब्रह्मकल्पजननम् । ततः शतकल्पजननम् । प्रकाशसंहितोक्तं ज्ञेयम् ॥३९॥

**(व्या)** स्वर्गसत्यवैकुण्ठलोकेषु सञ्चरणम्, हरिभजनम्, इन्द्रादिमान्यत्वम् ध्येयमाह – **स्वर्गे चेत्यादिना ॥**

**स्वर्गे च स्वर्धुनीं यायां स्वर्गिणां स्वागतेन च ।**
**स्वाराज्यपतिना सम्यक् स्वर्चितश्च स्वराडहम् ॥४०**

**(अन्वयः) स्वर्गे स्वर्धुनीं च यायां, स्वर्गिणां स्वाराज्यपतिना च अहं 'स्वराड्' इति सम्यक् स्वागतेन स्वर्चितः ।**

---

(१) तत्रैव श्रीमदाचार्याः –
'ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु ।
त एव शतजन्मानि विशेषोपासका हरेः ।
प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्राप्यानुमोदिताः ।
तया ततो हरिं यान्ति वसन्ति हरिसन्निधौ । – इति षाड्गुण्ये (भाग.ता.नि.)

(व्या) **नन्दने चेति**(३/२७) वने मान्यत्वमुक्तम् । अत्र स्पष्टं स्वर्गसञ्चरणमिति न पुनरुक्तिः । वायुत्वे स्वस्य स्वारोचिषमन्वन्तरे रोचननामकइन्द्रत्वसूचनाय स्वराडिति ॥४०॥ (**स्वाराज्यपतिना** इन्द्रेण । सम्यक् सु अर्चितं भक्त्या सात्विकमार्गेण पूजितः । **स्वर्धुनीं** देवगङ्गाम् ॥)

**स्वर्गादूर्ध्वं हरेः मार्गं गत्वानर्घ्यं सुशीघ्रतः ।**
**धाम निःसीमममानवसमन्वितम् ॥४१**

**नमामि स्वामिनं मारतातं माकान्तमव्ययम् ।**
**वसामि सुचिरं तत्र विरिञ्चेन चिरं रमन् ॥४२**

(अन्वयः) स्वर्गात् ऊर्ध्वम् अनर्घ्यं हरेः मार्गम् अमानवसमन्वितं सुशीघ्रतः (गच्छन् सन्) निस्सीमं ब्रह्मणः धामनिः गत्वा । (तत्रत्यं) मारतातं माकान्तं अव्ययं (मम) स्वामिनं नमामि । तत्र विरिञ्चेन (सह) चिरं रमन्(सन्) सुचिरं वसामि ॥

(व्या) **स्वर्गादूर्ध्वमिति** ॥ **हरेः मार्गम्** । **ब्रह्मणः** धाम सत्याख्यम् । 'तत्र वसामि' इत्युक्तश्लोकस्थपदेन अन्वयः । **तत्रत्यं स्वामिनम्** । **विरिञ्चेन चिरं रमन्** सन् **नमामि** ॥४१-४२॥ (अनेन श्लोकेन गुरुराजसेवकानां भक्तानां कामजयं सूचितं भवति)

**वैष्णवंधाम निःसीमं ततो यास्याम्यमायया ।**
**एतत् ते कथितं विप्र सुप्रसन्नो भवामि ते ॥४३**

**पुत्र सुत्रामलोकोऽयं सत्राद्यैः कर्मभिर्भवेत् ।**
**वैष्णवं धाम चाव्यक्तं योगिनामपि दुर्लभम् ॥४४**

**सुलभं मम तत्सर्वं हरेर्ज्ञानादिसाधनैः ॥४५**

(अन्वयः) ततः (सत्यलोकात्) निस्सीमं वैष्णवं धाम अमायया यास्यामि । (हे) विप्र! एतत् ते कथितं (तेन) ते (तुभ्यं) सुप्रसन्नो भवामि । (हे) पुत्र! अयं सुत्रामलोकः सत्राद्यैः कर्मभिः भवेत् । अव्यक्तं वैष्णवं धाम च योगिनामपि दुर्लभम् । (तथापि) मम हरेः ज्ञानादिसाधनैः तत्सर्वं सुलभम् ॥

(व्या) वैष्णवमिति ।। ततः सत्यलोकात् वैष्णवं धाम यास्यामि । अमायया[१] क्षुद्रफलानिच्छया । एतत् ते कथितं त्वयोपास्यमेतत् कथितम् । ते तुभ्यम् इति वा ।।४३।।

**एवं सुमानं सुमनोभिरञ्जसा सञ्जातमग्र्यं सुजनार्य सर्वम् ।**
**कञ्जाक्ष गृह्णामि चिरं तु जीव त्वं जीवलोके कुजनार्तिदः सन् ।।४६**

(अन्वयः) हे सुजनार्य! एवं सुमनोभिः अञ्जसा सञ्जातम् अग्र्यं सर्वं सुमानं जीवलोके गृह्णामि । हे कञ्जाक्ष! त्वं तु कुजनार्तिदः सन् चिरं जीव ।।

(व्या) एवमिति ।। एवं सुमनोभिः कृतं सुमानम्(= शोभनपूजां) । जीवलोके जीवानां शरीरेऽपि सर्वं गृह्णामि । त्वं तु कुजनार्तिदः सन् चिरं जीव ।। मुख्यप्राणवत् जीवानां शरीरे सुमनोमान्यत्वानुसन्धानेन साधनानुकूलतया तवायुर्वृद्धिर्भविष्यतीति भावः ।।४६।। (विप्र- प्रकरणं सम्पूर्णम्)।

### लक्ष्मीपतिप्रकरणम्

(व्या) 'मम वृन्दावने पुण्ये' इत्यारभ्य 'विश्वासः सर्वदा कार्यो मत्कृतौ च सुनिश्चयात्' इत्यन्तम् एकं प्रकरणम् । तच्च व्यासभक्तनामकलक्ष्मीपतिमुद्दिश्येति मन्तव्यम् ।

**मम वृन्दावने पुण्ये सुपर्वाणश्च नित्यशः ।**
**वसन्ति पुण्यकर्माणो विशेषात् ते च पर्वसु ।।४७**

**तस्माद्वृन्दावने पुण्ये पञ्चपर्वसु पूजनम् ।**
**दर्शनं सुजनानां तु सर्वाघौघविनाशनम् ।।४८**

(अन्वयः) पुण्ये मम वृन्दावने सुपर्वाणः नित्यशः वसन्ति च । पुण्यकर्माणः ते विशेषात् पर्वसु (वसन्ति) । तस्मात् पुण्ये वृन्दावने पञ्चपर्वसु पूजनं, दर्शनं तु सुजनानां सर्वाघौघनाशनम्[२] ।।

---

(१) अमायया = मायया निर्मितमोक्षबन्धकरीअविद्याविरहिता । तद्यथा – 'मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते' (भाग.ता.नि. ११-११-३)

(२) 'सुहृद्दर्शनतः सद्यः क्लेशनाशो हि जायते ।
सूर्यावलोकनात् पापनाशः सर्वस्य सम्मतः' ।। इति युक्तिमल्लिका विश्वसौरभे ३२७

(व्या) अत्र पञ्चपर्वशब्देन दर्शपौर्णमास्यौ सङ्क्रमणः, एकादशीद्वयं पाञ्चरात्रे प्रसिद्धत्वात् । अत एव श्रीरङ्गादिक्षेत्रेषु तेषु दिनेषु हरेर्विशेषेणोत्सवं कुर्वन्ति । न च तथा वृन्दावने विशेषोत्सवकरणं सङ्गतम् । तस्मिन् दिने धूपदीपनैवेद्यादिभिः पूजनाभावादित्यत आह **एतदिति** उत्तरश्लोके ।।४७ऽ४८।।

**एतद्रहस्यं मम पुत्र पश्यन् त्वं सुप्रसिद्धिं कुरु सत्सु नित्यम् ।**
**शृण्वन्तु सर्वे सुजनाश्च मत्कृतिं सर्वेष्टदात्रीं शरणागतानाम् ।।४९**

(अन्वयः) हे पुत्र! मम एतद्रहस्यं त्वं पश्यन् सत्सु नित्यं सुप्रसिद्धिं कुरु । शरणागतानां सर्वेष्टददात्रीं मत्कृतिं सर्वे सुजनाश्च शृण्वंतु ।।

(व्या) **एतदिति** ।। एतत्पञ्चपर्वपदतात्पर्यं रहस्यं **त्वं पश्यन्** जानन् सन्, **सत्सु** प्रसिद्धिं **कुरु** । ज्ञानप्रकारश्च 'पञ्चजन्मसु पञ्चास्यवत्समर्थो भव प्रिय' इति (१६/२५) वक्ष्यमाणानुसारेण सपरिवारस्य विप्रस्य पञ्चजन्मसमयः पञ्चपर्वशब्दार्थ इति । **पुत्रेति** अभिमतरहस्यदर्शिनः वेदवेद्यनिखिलशब्दोक्तव्यासराजनामकस्य तदन्तर्यामिणो वेदवेद्यमुनेर्वा सम्बोधनम् ।।४९-५१।।

**इदमद्भुतमाख्यानं मम वृन्दावनस्य च ।**
**शृण्वतां पठतां वापि सर्वाभीष्टप्रदं सताम् ।।५०**

**इदं तु संशयवतां न तु शंस कदाचन ।**
**विश्वासिनां तु शंस त्वं शेषशायि सदात्मनाम् ।।५१**

(अन्वयः) इदं मम वृन्दावनस्य च अद्भुतम् आख्यानं शृण्वतां पठतां वापि सतां सर्वाभीष्टप्रदम् । (तथापि) इदं (वृन्दावनाख्यानं) तु संशयवतां तु कदाचन (कदापि) न शंस । विश्वासिनां शेषशायिसदात्मनां तु त्वं (सर्वदा) शंस ।।

(व्या) (वृन्दावनमहिमानिरूपकआख्यानमेव सर्वाभीष्टप्रदं, वृन्दावनं सुपूजितं चेत्, तत्रापि पर्वकाले सेवितं चेत्, किमु वक्तव्यम् इति भावः ।।५०।। अत एव विशिष्टाधिकारित्वादाख्यानं विष्णुदीक्षारहितानां श्रद्धारहितानां न वक्तव्यमिति[१] पुनः पुनः विधानम् ।।५१।।)

---

(१) ''वायुं विद्याः समासाद्य सर्वासाम्पतिमूचिरे ।
स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु चे''त्यैतरेयसंहितायाम् ।।

**इदं समाप्तं मम शोभनं महद्वृन्दावनाख्यानमनुत्तमं नृणाम् ।**
**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।।५२**

**भवत्यहो सर्वशुभाप्तिसन्मतिं ददात्यजस्रं सुत सत्यमेव तत् ।**
**अतः सतां त्वं वद मत्कृतिं सदा शुभाप्तये ते च ममात्र कीर्तये ।।५३**

(अन्वयः) इदं समाप्तं (सम्यगाप्तं) शोभनम् अनुत्तमं मम महत् वृन्दावनाख्यानं यत् शृण्वतां नृणां उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः भवति । सर्वशुभाप्तिसन्मतिः अजस्रं (तेभ्यः) ददाति । अहो! हे सुत! तत् सत्यमेव । अतः हे सुत! ते (तव) सतां च शुभाप्तये अत्र मम कीर्तये त्वं मत्कृतिं सदा वद ।

**(व्या) इदमिति ।। (समाप्तं =)** सम्यगाप्तं समाप्तम् (सम्यक् सात्विकयत्नेन आप्तं प्राप्तं सम्पादितं विज्ञातं च) विज्ञातमिति यावत् ।।५२।। **ते** तव **सतां च शुभाप्तये** (आनन्दोन्नाहार्थं अथवा अपरोक्षज्ञानोत्पत्त्यर्थम् इत्यर्थः) । **अत्र** अस्मिन् देशे **मम कीर्तये** ख्यात्यर्थम् (अज्ञां साधनानुकूलत्वेन बोधनार्थम्); लोकान्तरे स्वतः सिद्धत्वादिति भावः ।।५३।।

**वेदवेद्य निरवद्य मद्दयावारिधे कदनकोविदवादिभिः ।**
**त्रिदशवन्द्यहयशीर्षसद्मनि स्यन्दनेन विरहामि नन्दन ।।५४**

(अन्वयः) हे वेदवेद्य! निरवद्य! हे नन्दन मद्दयावारिधे! त्रिदशवन्द्यहयशीर्षसद्मनि कदनकोविदवादिभिः(कल्यादिभिः) स्यन्दनेन विरहामि ।

**(व्या) वेदवेद्यनिरवद्येति ।। हे वेदवेद्य निरवद्य!** वेदाः ऋगादिरूपेण विभक्ताः द्वापरादौ तैः वेद्याः ज्ञातुं योग्याः येन सः वेदवेद्यो वेदव्यासः । तेन अनुग्राहकेण निरवद्य । उक्तरहस्यज्ञान-प्रतिबन्धकरहित **(मद्दयावारिधे)** । **त्रिदशैर्वन्द्यहयशीर्षसद्मनि** = भक्तमानसरूपे हयवदन-सदने । **कदनकोविदवादिभिः** कल्यादिभिः, मनोगतैः विपरीतज्ञानप्रेरकैः दैत्यैः । **स्यन्दनेन** सत्सिद्धांतरूपेण रथेन **विरहामि** तैः सह युद्धं करोमीति भावः[१] । मया तेषां हनने सति ज्ञातव्यार्थज्ञानं (तव) सुलभमिति सूचितं भवति । वेदवेद्यपदस्य वेदवेद्यमुनिपरत्वे किं बाधकमिति चेत्, चिरकालवासस्य जनदृग्विषयस्य अभावेन । तन्मुखतः वर्तमानानां बहूनां जनानां श्रवणानु-पपत्तिः । स्वात्मवत् स्नेहपात्रस्य स्वदयापात्रत्वानुपपत्तिश्च बाधिका ।।५४।।

---

(१) ततः श्वेतहयैर्युक्ते महति **स्यन्दने** स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः – (गीता प्रथमाध्याये १४)

**चिरं जीव चिरं जीव सुखी भव सुखी भव ।**
**ममाशीर्वचनेनैव हयग्रीवपरो भव ॥५५॥**

(अन्वयः) सुखी भव चिरं जीव सुखी भव चिरं जीव मम आशीर्वचनेनैव हय-ग्रीवपरः भव ।

(व्या) विप्रादेरिव व्यासराजनामकजीवस्यापि जन्मान्तरसूचनायाह **चिरं जीवेति ॥ मम आशीर्वचनेनैव हयग्रीवपरः** त्वदुपास्यबादरायणस्य मदन्तर्यामिहयग्रीवात्मकत्वस्मरणेन हयवदन-परः सन् भव । उत्पन्नो भव । **चिरं जीव । सुखी च भव** । (धनादीनां विषये क्लेशं विना सात्विकसुखवान् वर्तस्व इत्यर्थः) ।।५५।।

**नन्दन स्यन्दनाकारे मम वृन्दावनेऽनिशम् ।**
**वन्दनं नन्दानार्था ये कुर्वन्तु गुणनन्दिनः ॥५६॥**

(अन्वयः) हे नन्दन! स्यन्दनाकारे (रथाकारे) मम वृन्दावने (सन्निहितं मां, मदन्तर्गत श्रीहयवदनं च) ये गुणनन्दिनः (गुणान् उपलभ्य सन्तोषवंतः) नन्दनार्थाः (नन्दनवन अपेक्षिणः पुत्रापेक्षिणः वा) अनिशं वन्दनं कुर्वन्तु ॥

(व्या) **नन्दनेति ॥ नन्दनार्थाः वन्दनं कुर्वन्तु'** इति पुनरुक्तिः किमर्थमिति चेत् । प्राक् (३/२९) नन्दनवनप्राप्त्यर्थं वन्दनमुक्तम्; इदानीं पुत्रार्थमिति वा । तदा विप्रं प्रतीदानीं व्यासभक्तं प्रतीति वा । न पुनरुक्तिदोषः । (किंच) एतदाख्यानार्थविमर्शकाले विप्रः शेषः सीतापतिर्व्यासश्च पुनरुत्पन्नाः विस्मृतातीतजन्मवृत्तान्ताः । न च तज्ज्ञानं विना आख्यानार्थ-विमर्शः सङ्गतो भवति । द्वितीयादिजन्मवृत्तान्तानामपि बहूनामुक्तत्वात् । अतस्तेषां पृथग-नुमापकानि कार्याणि वक्तव्यानीति मनसि निधाय, सर्वेष्वध्यायेषु बहूनि विप्रादीनां चिह्नानि प्रतिपादितानीति ।।५६।।

(अव) – (मन्त्रनिरूपणार्थे अस्मिन्नध्याये विप्रसीतापतिशेषाणां कार्यान्तरमिव पञ्चपर्वार्थ-दर्शनं व्यासभक्तकार्यमुक्त्वा, वेदवेद्य(३/५४) पदेन व्यासभक्तस्यैव कथनमिति निश्चयमुत्पाद-यितुमाह – **अलौकिकैरित्यादि** ।।)

**अलौकिकैरदृश्यार्थैर्लौकिकैः श्लोकभावितैः ।**
**अलौकिकानुवाकैश्च लौकिकैर्वाक्यविस्तरैः ॥५७॥**

**लौकिकालौकिकजनसाधारण्येन मत्कृतम् ।**
**इदं वृन्दावनाख्यानं श्रुत्वा सर्वेपि लौकिकाः ।।५८।।**
**लौकिकालौकिकफलं प्राप्नुवन्ति न संशयः ।**

**(अन्वयः) अदृश्यार्थैः अलौकिकैः श्लोक(लोक)भावितैः लौकिकैः अलौकिकअनुवाकैः (कैश्चित् वेदवाक्यैः) लौकिकैः वाक्यविस्तरैः च ।। लौकिकअलौकिकजनसाधारण्येन मत्कृतं इदं वृन्दावनाख्यानं सर्वे लौकिकाः अपि श्रुत्वा लौकिकालौकिक(दृष्टादृष्ट)फलं प्राप्नुवन्ति; (अत्र) न संशयः ।।**

**(व्या)** अत्र ग्रन्थे कानिचिद्वाक्यानि लौकिकानि । कानिचिदलौकिकानि । तत्र लौकिकत्वं द्विविधम् । शब्दतो अर्थतश्च । एवमलौकिकत्वमपि द्विविधम् । (शब्दतः अर्थतश्चेति) । तत्र अर्थतो लौकिकत्वं नाम लोके द्रष्टुमयोग्यार्थप्रतिपादकत्वम् **अलौकिकैरदृश्यार्थैरि**त्यनेनोक्तम् । लोके द्रष्टुं योग्यार्थबोधकत्वं अर्थतः लौकिकत्वमुक्तं **लौकिकैर्लोकभावितैरि**त्यनेन । ''श्लोक-भावितैः'' इति पाठे तु श्लोकशब्दः कीर्तिवाची । **अलौकिकानुवाकैः** । अलौकिकानि एतत् कालीनैरनभ्यस्तानि यान्यनुवाकरूपाणि वेदवाक्यानि तद्गतपदघटितैः कैश्चिद्वाक्यैः । **लौकिकै-र्वाक्यविस्तरैः** बहुभिर्लौकिकैः वाक्यैरपि ।।५७।। (पूर्वोक्तरीत्या) बहुभिर्लौकिकैः वाक्यैरपि । कृतमिदं वृन्दावनाख्यानं श्रुत्वा । **लौकिकालौकिकफलं** दृष्टादृष्टफलं प्राप्नुवन्ति ।।५८-५८ १/२।।

**अप्रयोगेति भासन्ते ते सर्वेपि ह्यलौकिकाः ।।५९।।**

**सुप्रयोगेति भासन्ते ते सर्वेपि तु लौकिकाः ।**
**तस्मान्नकार्या दोषस्य शङ्काशूका सुबुद्धिभिः ।।६०।।**

**विश्वासः सर्वदा कार्यो मत्कृतौ च सुनिश्चयात् ।।**

**(अन्वयः) (ये) अप्रयोगेति भासन्ते ते सर्वेपि अलौकिका हि । (ये) सुप्रयोगेति भासन्ते ते सर्वेपि तु लौकिकाः । तस्मात् सुबुद्धिभिः मत्कृतौ दोषस्य शङ्काशूका न कार्या; सुनिश्चयात् विश्वासः च सर्वदा कार्या ।**

**(व्या)** शब्दतः अलौकिकत्वं नाम लोकरीत्या अप्रयोगत्वेन प्रतीयमानत्वमिति सूचयितुमुक्तम् – **अप्रयोगेति भासन्ते ते सर्वेपि ह्यलौकिकाः इति** ।।५९।। शब्दतः लौकिकत्वं च लोकरीत्या

सुप्रयोगत्वेन भासमानत्वमिति सूचयितुमुक्तम् – **सुप्रयोगेति भासन्ते ते सर्वेपि तु लौकिकाः इति** ।। अत्रेयमुक्तिः अप्रयोगेति यावन्तः शब्दाः भासन्ते ते अलौकिकाः । अत्रेयमुक्तिः सुप्रयोगेति यावन्तः शब्दाः भासन्ते ते सर्वे लौकिका इति अध्याहारेण योजनीयम् । अध्याहाराभावे तु अप्रयोगेति सुप्रयोगेति भासन्ते इत्येतदुभयं अलौकिकोदाहरणमिति मन्तव्यम् ।।६०।। (एवम् उत्तराणां दत्तत्वात् कृतौ दोषशङ्का न कार्या । किन्तु प्रामाण्यनिश्चयः सुदृढं यथा भवति तथा कर्तव्यः) पञ्चपर्वदर्शनार्थमिव लौकिकालौकिकविभागदर्शनमपि व्यासभक्तेन प्रायशः कर्तव्यम् । अष्टमाध्यायगतस्य (८/३६) ''मयोक्तश्लोकपूगेषु वक्तुं योग्यान् पृथक्कुरु'' इत्यादि प्रकरणस्य एतत्समाख्यारूपत्वात् । अत्रत्य(५४रह्लि) **वेदवेद्यनिरवद्य**पदं व्यासभक्त-नामकद्विजवाचकम् ।। व्यासभक्तप्रकरणं समाप्तम् ।।

### ०३-०६१-०७८-विप्रप्रकरणम्

**(व्या) 'सुरराजप्रसादेन'** इत्यारभ्य **'देवैरप्याप्तवान् काममौदासीन्यविवर्जितैः'** इत्यन्त-मेकं तृतीयप्रकरणं विप्रश्नोतृकम् ।

अत्र **'तोकस्य सेवां कुरु सर्वदैव'** (२/४१) इति अस्य नाकीशपदोक्तस्य इन्द्रान्तर्गतस्य विष्णोः सेवां कुर्विति तात्पर्यम् । तस्याप्यभिप्रेतत्वेन तत्फलं किम्? इत्येतदुपपादनार्थं मन्त्रजप-समये मर्त्योत्तमैः चतुर्गुणोपासनस्यैव कर्तव्यत्वेन बहूनां गुणानां कथनं किं प्रयोजकम्? इत्याशङ्कानिवारणार्थं चोक्तम् – **सुरराजप्रसादेन इति** ।।

**सुरराजप्रसादेनामरराजो भव द्विज ।।६१।।**

**वादीभमृगराजोऽहं वादिराजो हरिं भजे ।**

**(अन्वयः) हे द्विज! सुरराजप्रसादेन अमरराजो भव । वादीभमृगराजः अहं वादि-राजः हरिं भजे ।।**

**(व्या) हे द्विज!** इन्द्रान्तर्गतत्वेन भगवदुपासनजन्येन उक्तानां बहूनां गुणानां कथनं ध्यानजन्येन च । सुरराजान्तर्गतमदन्तर्गतहयवदनप्रसादेन **अमरराजो भव** = इन्द्रो भव । चतुर्गुणोपासनस्यैव मर्त्योत्तमैः कर्तव्यत्वेऽपि, त्वया बहुगुणोपासनं कर्तव्यम् इन्द्रपदयोग्यत्वात् इत्युक्तं भवति । 'अमरराजो भव' इत्याशीर्वचनं न तपोभङ्गकारणम् ।।६१।। दुर्वादिजेतृत्वमिव सच्छिष्योपदेष्टृत्वमिति सूचयितुमाह **वादीभेति** ।।

(व्या) ममेन्द्रपदयोग्यत्वं कथम्? सांशत्वस्य अणिमाद्यष्टैष्वर्यादेश्चानुपलम्भादित्यत आह – अनेकेति ।।

**अनेकमूर्तिभिर्युक्तः स्थौल्यसौक्ष्म्यादिभिर्वृतः ।**
**अणिमाद्यष्टसिद्धोऽहं हयग्रीवस्य चाज्ञया ।।६२।।**

**(अन्वयः) (हे विप्र त्वं) स्थौल्यसूक्ष्मादिभिर्वृतः अनेकमूर्तिभिर्युक्तः (भव) । हयग्रीवस्य आज्ञया च अहम् अणिमाद्यष्टसिद्धः ।**

(व्या) **अनेकमूर्तिभिर्युक्तः स्थौल्यसौक्ष्म्यदिभिर्वृतो भव** ।। 'युगानुसारात् मानुषत्व-दशायां गुणानाम् अनुपलम्भेपि तद्योग्यकाले अंशिरूपेण अनेकरूपत्वम् । अणिमादिकं च भवति' इति भावः । स्वस्य अणिमादिसिद्धत्वज्ञानं विप्रस्य अणिमादिसिद्धत्वज्ञानं विप्रस्य अणिमादिप्रापकमिति भावेनाह – **अणिमादीति** ।। अकृतकाम्योपासनस्य कथमणिमादीत्यत उक्तम् – **हयग्रीवस्य चाज्ञया इति** ।। श्रीकृष्णाज्ञया भीमकृतास्त्रप्रयोगवत् हयग्रीवाज्ञया कृत-साधनस्य स्वभावतश्चाणिमादिसिद्धत्वोपपत्तेरिति भावः ।।६२।।

(व्या) प्रागुक्तवृन्दावनगतत्वादिकम् उपसंहृत्य, ध्यातव्यमिति सूचयितुमाह – **वृन्दावने चेति** ।।

**वृन्दावने च मम नन्दनकानने च**
**कैलासमेरुशिखरेषु तथैव नाके ।**
**सत्याख्यदिव्यभवने च विरिञ्चिरम्ये**
**द्वीपे चरामि हरिणा सह दिव्यधाम्नि ।।६३।।**

**(अन्वयः) (अहं) मम वृन्दावने नन्दनकानने च कैलासमेरुशिखरेषु तथैव नाके विरिञ्चिरम्ये सत्याख्यदिव्यभवने च (श्रीहरेः) दिव्यधाम्नि (रम्ये) (श्वेत)द्वीपे च हरिणा सह चरामि ।।**

(व्या) (स्पष्टम् । वृन्दावने नन्दनवने, कैलासशिखरे, मेरुशिखरे, नाके, विरिञ्चि-युक्तसत्यलोके, दिव्यनाम्नि द्वीपे, श्वेतद्वीपे उपलक्षणया अनन्तासनवैकुण्ठयोश्च हरिणा सह चरामीत्यन्वयः[१]) ।।६३।।

---

(१) 'लोका इति मुक्तानामानन्दानुभवाः स्वरूपभूताः । अप्सु वायाविति स्वरूपस्यैव प्रस्तुतत्वात् ।

**ब्रह्मेशशक्रसुरकार्यधुरन्धरैश्च**
**देवैः समस्तयतिभिः पतिभिः सुराणाम् ।**
**दृष्ट्वा रथोत्सववरं सुरवर्यकार्यं**
**स्वर्यामि शश्वदवनात्सुचिराय जीव ।।६४।।**

**(अन्वयः) ब्रह्मेशशक्रसुरकार्यधुरन्धरैः देवैः समस्तयतिभिः सुराणां पतिभिः च सुरवर्य-कार्यं रथोत्सववरं दृष्ट्वा स्वर्यामि । (मया कृतात्) शश्वत् अवनात् सुचिराय जीव ।।**

**(व्या) ब्रह्मेशेति ।।** (विप्रस्य भाविवैभवमाह) उक्तसत्यलोकादौ स्थितेन ब्रह्मणा, कैलास-गतेन शिवेन, स्वर्गाधीशेन शक्रेण, तदन्यैः देवैः, सुरकार्यधुरन्धरैः गन्धर्वादयः, वृन्दावनस्थैः यतिरूपैः, सुराणांपतिभिश्च सह सुरवर्यकार्यं सुरवर्यैः इन्द्रादिभिः कर्तुं योग्यम् । तत्पदयोग्येन त्वया कार्यम् । **रथोत्सववरं दृष्ट्वा स्वर्यामि** = सुखं यामि । मया कृतात् **शश्वदवनात् सुचिराय जीव** ।।६४।।

**(व्या)** मानुषत्वदशायां दुर्घटत्वेन प्रतीयमानस्यापि इन्द्रपदस्य दाने समर्थोऽहमिति निश्चयमुत्पादयितुमाह – **कर्तुमिति** ।।६५।।

**कर्तुं चाकर्तुमप्येवमन्यथा कर्तुमेव च ।**
**समर्थोहं न सन्देहश्चेश्वरस्य सदाज्ञया ।।६५।।**

**(अन्वयः) ईश्वरस्य आज्ञया च कर्तुं अकर्तुं च अन्यथाकर्तुं अपि अहं सदा समर्थः । न सन्देहः ।**

**(व्या)** (**कर्तुं** सामर्थ्यं, **अकर्तुं** सामर्थ्यं, **अन्यथाकर्तुमपि** सामर्थ्यं च **सरसभारतीविलासे** विवृतम् । **ईश्वरस्य सदाज्ञया** इत्यनेन स्वस्य ऋजुगणस्थत्वं सूचितं भवति ।।६५) । **ईश्वरस्य** (ईः लक्ष्मीः । तस्याः वरः श्रेष्ठः । तस्य श्रीहयग्रीवस्य[१]) **आज्ञया च** (योग्यतया विद्यमानं)

---

अनतिप्रश्नां वै देवतामतिपृच्छसीति देवतास्वरूपप्रश्नस्यैवावगम्यमानत्वाच्च । न चोपरितनलोकेशु अध-स्तनलोकाः आश्रिताः । न च वायुर्गन्धर्वलोकाश्रितः । वाय्वाश्रयत्वश्रुतेः सर्वलोकानाम् । 'वायुना हि सर्वे लोका नेनीयन्ते' इत्यादिना । 'सप्तस्कन्धगतो लोकान्यो बिभर्ति महाबलः' इति हरिवंशेषु - इति सर्वे लोकानां वाय्वाश्रितत्वे उदाहृतं गार्गिब्राह्मणप्रकरणे बृहदारण्यकभाष्ये श्रीमदाचार्यैः ।

(१) ईश्वरः, तथाहि ब्रह्मवैवर्तपुराणम् – (गी.भा. ४.६) **'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् । वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्यचित्' । इति ।**

**कर्तुं, अकर्तुं च अन्यथा कर्तुमपि** (अन्यैः रुद्रादिभिः कर्तुम् अत्यन्तअशक्यं, तदपि कर्तुं श्रीहरिकृपया) **अहं सदा समर्थः** (तादृशश्रीहरिसन्निधानमाहात्म्यं च नित्यं स्वाभाविकं इति सूचनाय 'सदा' इत्युक्तं) न सन्देहः ।

**(व्या)** इन्द्रप्रदप्रदाने समर्थश्चेत् (विप्रस्य) इदानीम् अभिमतसम्पदप्रदानं किमर्थमित्यत आह – **अहमिति** ।।६६।।

**अहं महानुभावश्च सर्वसम्पद्विधायकः ।**
**कालश्चायं कलिरिति ह्यौदासीन्यं कृतं मया ।।६६।।**

(अन्वयः) अहं महानुभावः[१] सर्वसम्पद्विधायकः च (अस्मि) । (तथापि) अयं कालः च कलिः इति मया औदासीन्यं कृतम् ।।

**(व्या)** तर्हि मर्त्यैः द्रष्टुं योग्यानि कानिचित्कार्याणि किमर्थमुक्तानीत्यत आह– **परीक्षार्थ-मिति** ।।

**परीक्षार्थं तु भक्तानामुक्तं नैतदपेक्षया ।**
**अहं मन्ये धनं धान्यं तनुं चापि तृणोपमाम् ।।६७।।**

(अन्वयः) भक्तानां परीक्षार्थं तु उक्तम् । न एतदपेक्षया । अहं धनं धान्यं तनुं चापि तृणोपमां मन्ये ।।

**(व्या) भक्तानां** परस्परनिश्चयानुकूलपरीक्षार्थम् । अज्ञदृष्ट्या धनादीनां महाफलत्वेन प्रतीयमानत्वेपि **अहं तृणोपमं मन्ये** ।।६७।।

**कनकं शनकैर्हित्वा म्रियते शुनको यथा ।**
**जीवश्चायं तु कञ्जाक्षं मञ्जीरमणिमौलिनम् ।**
**सञ्जानाति न सञ्जीवन् पुञ्जीकृतसुपापधीः ।।६८।।**

**वैराग्याभरणश्चाहं करिसन्त्राणकारिणम् ।**
**वरुणाद्गोपतित्राणं मरणात्यां गतोरणम् ।।६९।।**

---

(१) 'सुकृतौ पुण्यवान् धन्यो धर्म्यौ च धर्मवानपि ।
महाशयो महेच्छुः स्यान्महानुभाव इत्यपि ।।' शब्दरत्नावली

**(अन्वयः) अयं जीवः च (धनादिलाभे सति) पुञ्जीकृतसुपापधीः सञ्जीवन् कनकं हित्वा शुनकः यथा म्रियते (तथा) कञ्जाक्षं मञ्जीरमणिमौलिनं तु न सञ्जानाति ।। (तस्मात्) अहं वैराग्याभरणः च (भक्तानां प्रसक्तया) मरणात्या (परिहारार्थं) करिसन्त्राणकारिणं वरुणाद्गोपतित्राणम् अरणं गतः ।।**

**(व्या) कनकमिति ।।** धनादिलाभे सति पुञ्जीकृतसुपापधीर्भूत्वा परमात्मानं न जानाति ।।६८।। तस्माद्वैराग्याभरणोहं भक्तनां प्रसक्तया मरणात्या, गजेन्द्रनन्दगोपयोः पालकं हरिं शरणं गतोऽस्मि । **करि**र्गजेन्द्रः **गोपति**र्नन्दगोपः एतदुभयपालनस्मरणं भक्तस्य भवग्राहग्रस्तस्य अनिष्ट-निवृत्तिपूर्वकं भवसागरोत्तरणकारणम् । साधनकाले विप्रस्य यतित्वदशायां तद्योग्यवैराग्या-भरणत्वलाभाय स्मर्तव्यं वैराग्याभरणत्वविशेषणम् ।।६९।।

**(व्या)** एवं दण्डादयोपि आश्रमोचितधर्माभिवृद्धिसाधनत्वेन ध्यातव्याः इति भावेनाह – **यमदण्डेति ।।**

**यमदण्डोपमश्चायं मम दण्डोपि पण्डित ।**
**ब्रह्माण्डारम्भशौण्डोऽयं मद्दोर्दण्डैकमण्डनम् ।।७०।।**

**(अन्वयः) हे पण्डित! यमदण्डोपमः अयं मम दण्डः; ब्रह्माण्डारम्भशौण्डः अयं मद्दोर्दण्डैकमण्डनम् अपि ।।**

**(व्या)** पापप्रेरकासुरभयङ्करत्वेन स्मरणाद्भक्तपापनिवारकत्वेन **यमदण्डोपमः** । **ब्रह्मा-ण्डारम्भशौण्डः** ब्रह्माण्डारम्भकार्ये सत्वप्रचुरभागो यस्य (दण्डस्य) उपादानम् । ब्रह्माण्डारम्भे शौण्डः भगवद्रूपविशेषः यस्मिन् सन्निहित इति वा । स्वाभिमन्यमानब्रह्माण्डस्य भावितृतीय-कल्पभाविनः आरम्भे साधनरूपत्वेन वा शौण्ड इति ब्रह्माण्डारम्भशौण्डः ।।७०।।

**मम कौपीनमप्येतत्पापिनं पावयत्यहो ।**
**गोपीनां पतिना दत्तं पीताख्यं पाणिनिर्मितम् ।।७१।।**
**माणिक्यानां तु श्रेणीभिः शोणाच्छोणितशोभिनाम् ।**
**खचितं चार्चितं हंसैर्याचितं याचकैः सदा ।।७२।।**
**यतीनां पतिना दत्तं कृष्णेनाद्भुतकर्मणा ।**
**नारदस्याप्यदत्वा तु मय्येवानुग्रहार्थिना ।।७३।।**

(अन्वयः) गोपीनां पतिना दत्तं पाणिनिर्मितं (श्रीलक्ष्म्या पाणिनिर्मितं) पीताख्यं एतत् मम कौपीनं पापिनम् अपि पावयति, अहो! शोणात् शोभितशोभिनां माणिक्यानां श्रेणीभिः तु खचितं; (परम)हंसैः च अर्चितं, याचकैः (नारदाद्यैः मुनिभिः) सदा याचितमपि, [१]नारदस्य अदत्वा तु, यतीनां पतिना अद्भुतकर्मणा अनुग्रहार्थिना कृष्णेन (तत्कौपीनं) मयि एव दत्तम् ।।

(व्या) (श्लोकत्रयेण कौपीनमाहात्म्यं वर्णयति – **मम कौपीनमिति ।।** एतन्मम कौपीनं तद्ध्यातारं पापिनं शुद्धात्मानं करोतीत्यर्थः ।।) **पीताख्यम्** पीतत्वेन । आ सम्यक् ख्यातिर्यस्य तत् तथोक्तम् । (**गोपीनां पतिं** श्रीकृष्णेन दत्तम्) ।।७१।। (अतिरक्तमाणिक्यानां श्रेणीभिः खचितम् । **नारदाय च अदत्वा** अनुग्रहविशेषेण गुरुराजाय दत्तम् ।।७२ऽ७३)

**सूत्रं कटितटे भाति गात्रमध्ये मम द्विज ।**
**कात्र कीर्तिर्यतीनां तु शास्त्रसिद्धविधिं विना ।।७४।।**

(अन्वयः) हे द्विज! मम गात्रमध्ये कटितटे सूत्रं भाति । शास्त्रसिद्धविधिं विना यतीनां तु अत्र का कीर्तिः? (नास्त्येव नास्त्येव ) ।।

**वामनादाप्तवान्कामं कमनीयं कमण्डलुम् ।**
**शमनं क्षुत्पिपासे चाप्यमृतोपमवारिणा ।।७५।।**

(अन्वयः) क्षुत्पिपासे अपि शमनं अमृतोपमवारिणा च (युक्तं) कामं (सर्वैः अपि अपेक्षितुं योग्यं) कमनीयं कमण्डलुं वामनात् आप्तवान् ।।

(व्या) (स्वस्मिन् विद्यमानअमृतसदृशजलेन क्षुत्पिपासयोः परिहारकम् । यद्यपि जलं पिपासानिवर्तकम् । दिव्यत्वादेतज्जलं क्षुन्निवर्तकमपि भवति ।।)

**कम्बलं रत्नजम्बालं चाम्बरं शाम्बरं तथा ।**
**शम्भुना सम्भ्रमादाप्तं कुम्भराक्षसभञ्जिना ।।७६।।**

(अन्वयः) रत्नजम्बालं कम्बलं तथा शाम्बरम् अम्बरं च कुम्भराक्षसभञ्जिना शम्भुना सम्भ्रमात् आप्तम् ।।

---

(१) 'नारदस्याप्यदत्वा' इत्यत्र चतुर्थ्यर्थे षष्ठीविभक्तिः । 'नारदायाप्यदत्वा' इत्यर्थः ।

(व्या) कम्बलमिति ।। रत्नजम्बालम् रत्नमयजम्बालेन पङ्कसदृशेन सिक्तम् । तथा शम्बर-सम्बन्धि अम्बरं वस्त्रम् । कुम्भराक्षसवशं गतम् । तद्राक्षसभञ्जकेन शम्भुना समर्पितम् ।।७६।।

(ऋ.दी.) 'रत्नजम्बालं' इति वृन्दावनाख्यानम् । रत्नजम्बालम् = रत्नशैवालं; रत्नैः परिपूर्णमित्यर्थः ।

**पादपीठे हठात्प्राप्ते दिव्यरत्नसुघट्टिते ।**
**त्वष्ट्रा च विठ्ठलादेशात्काठिण्यरहिते शुभे ।।७७।।**

(अन्वयः) त्वष्ट्रा दिव्यरत्नसुघट्टिते, (अपि) काठिण्यरहिते, शुभे च पादपीठे विठ्ठलादेशात् हठात् (योग्यताविशेषात्) प्राप्ते ।

(व्या) पादपीठे इति ।। हठात् योग्यताविशेषात् ।।

**एवं सर्वाणि वस्तूनि वस्त्राद्याभरणानि च ।**
**देवैरप्याप्तवान्काममौदासीन्यविवर्जितैः ।।७८।।**

(अन्वयः) एवं वस्त्रादि आभरणानि सर्वाणि वस्तूनि च औदासीन्यविवर्जितैः (मम सेवाकर्तुं श्रद्धया युक्तैः) देवैः अपि कामं (सर्वैः अपि अपेक्षितुं योग्यं) (मया) आप्तवान् ।।

४. कश्चिद्विप्रेश प्रकरणम्।। श्लोकाः (७९-८३)

(व्या) 'मत्कृतौ' इत्यारभ्य 'चिरं जीव पुत्रक' (८३) इत्यन्तं कश्चिद्विप्रेशप्रकरणम् ।। अत्र विप्रेशेति(८०रलि) कस्यचिद्ब्राह्मणस्य सम्बोधनम् । विप्रः वृन्दावनाचार्यः ईशो यस्य स तथोक्तः ।

**मत्कृतौ यस्य विश्वासो नास्ति तस्य यशः श्रियः ।**
**आयुष्यं स्रवते भिन्नघटान्तस्थोदकं यथा ।।७९।।**

(अन्वयः) मत्कृतौ यस्य विश्वासः नास्ति तस्य यशः श्रियः आयुष्यं भिन्नघटान्तस्थोदकं यथा स्रवते (तथा स्रवते) ।। (यशः स्रवते, श्रियः स्रवन्ते, आयुष्यं स्रवते इत्यन्वयः ।

**इमं श्लोकं तु विप्रेश सर्वदा सज्जनेष्विह ।**
**वदस्व त्वं मदीयेषु मद्दयाविषयेषु च ।।८०।।**

**(अन्वयः) हे विप्रेश! इमं श्लोकं तु इह सज्जनेषु मदीयेषु मद्दयाविषयेषु च त्वं सर्वदा वदस्व ।।**

**(व्या)** तव साधनान्तराभावेऽपि 'मत्कृतौ यस्य विश्वासो नास्ति' इति श्लोकं सज्जनेषु **वदस्व** इत्युक्तम् । अनेन श्लोकार्थकथने सामर्थ्याभावः सूचितः । **मदीयेषु** मम ब्रह्मत्वदशायां मया सह मुच्यमानेषु । **मद्दयाविषयेषु** तदन्येषु ।।८०।।

**(व्या)** विप्रेण बहुसाधनं कारयामि । एकं पद्यं त्वया सदा सत्सु वक्तव्यमित्युक्तम् । तत्रोपेक्षा न कर्तव्येति सूचयितुमाह – **विप्रप्राणावधिरिति ।।**

**विप्रप्राणावधिर्यावत्सत्प्रमाणाविरोधतः ।**
**तद्वाण्या च प्रवक्ष्येऽहं मद्वाण्याविष्टयानया ।।८१।।**

**मत्कार्यं विप्रकार्यं वा न जानासीति बुद्धिमन् ।।८२।।**

**क्रोधोपि मम नास्त्येव त्वं चिरं जीव पुत्रक ।।८३।।**

**(अन्वयः) यावत् विप्रप्राणावधिः तावत्पर्यन्तं (वेदादि)सत्प्रमाणाविरोधतः अनया मद्वाण्या आविष्टया तद्वाण्या (विप्रवाण्या) च अहं (इमां कृतिं) प्रवक्ष्ये ।**

**'मत्कार्यं विप्रकार्यं वा हे बुद्धिमन् त्वं न जानासि' इति (तथापि) मम क्रोधः नास्ति एव । हे पुत्रक! त्वं (सुखेन) चिरं जीव ।।**

**(व्या) यावद्विप्रप्राणावधिः** तावत्पर्यन्तम् वेदादिसत्प्रमाणविरोधेन अनया **मद्वाण्या आविष्टया तद्वाण्या** विप्रवाण्या इमां कृतिं वक्ष्ये । त्वां प्रति तु किञ्चिदुक्तम् । तदवश्यं कर्तव्यमिति भावः ।।८१।। सभामध्ये उक्तश्लोकोच्चारणादिना भवत्कार्यस्य वा विप्रकार्यस्य वा । मम कार्यस्य च सामग्रीपरिज्ञानाभावात् कथमित्याशङ्कां वारयितुमाह – **मत्कार्यमिति ।।** 'अलौकिकप्रयोगेऽपि विश्वासः सर्वदा कार्यो मत्कृतौ च सुनिश्चयात्' इत्युक्तोपपदानार्थं 'मत्कृतौ यस्य विश्वासः नास्ति' इति पद्यम् । तद्वचनमस्य विप्रेशस्य साधनम् । तस्मादस्य(पद्यस्य) अत्रोक्तिः सङ्गतेति ज्ञेयम् ।।८२।। (त्वया विप्रेशेन त्वयैव उक्तपदस्यार्थः न विमर्शया निर्णीतः । कृतिपरायणादिकं न तीव्रश्रद्धया कृतमिति मम क्रोधः नास्ति । तथापि सभासु 'मत्कृतौ' इति पद्योच्चारणं न व्यर्थम् । त्वं चिरंजीव इत्यायुर्वृद्धिः आशास्यते) कश्चिद्वि-प्रेशप्रकरणं सम्पूर्णम् ।।

### ५. व्यासभक्तप्रकरणम्।। श्लोकाः (८४ऽ१०४)

**(व्या) 'विप्रार्थमेव'** इत्यारभ्य **'अलकसंस्थमौलिना'** इत्यन्तम् एकं प्रकरणं व्यासभक्त-श्रोतृकम् । अत्र पुनः सिंहावलोकनन्यायेन 'वेदवेद्यनिरवद्य' पदोक्तं प्रति वक्तव्यं किंचिदुच्यते ।।

**विप्रार्थमेव सच्छास्त्रं वक्ष्येऽहं शृणु पोतक ।**
**श्रुत्वा सर्वं च सद्धर्मं हृदिस्थं कुरु सर्वदा[१] ।।८४।।**

**अयं तु ब्राह्मणः श्रीमान्मामेव शरणं गतः ।**
**वृन्दावनकृतेः पूर्वं स्वस्याभीष्टं निवेद्य मे ।।८५।।**

(अन्वयः) हे पोतक! शृणु । विप्रार्थमेव अहं सच्छास्त्रं वक्ष्ये । (त्वं तदुक्तं) सर्वं च सद्धर्मं श्रुत्वा सर्वदा हृदिस्थं कुरु ।। अयं श्रीमान् ब्राह्मणः मे (मम) वृन्दावनकृतेः पूर्वं स्वस्य अभीष्टं निवेद्य मामेव शरणं गतः ।।

**(व्या) हे पोतक!** 'तद्वाण्या च प्रवक्ष्येहं' इत्युक्तरीत्या विप्रार्थमेव सच्छास्त्रं वक्ष्ये ।। त्वं तदुक्तं **सर्वं** धर्मं **श्रुत्वा** सदा हृद्गतं कुरु ।।८४।। विप्रार्थमेव सच्छास्त्रकथने कारणमाह – **अयं त्विति ।। मे** मम **वृन्दावनकृतेः पूर्वं स्वस्याभीष्टम्** 'एतदाख्यानप्रख्यानरूपं साधनं मया कार्यम्' इति **(निवेद्य)** विज्ञाप्य **मामेव शरणं गतः** । तस्मात् **विप्रार्थमेव वक्ष्ये** । वृन्दावनप्रवेशानंतरमिदमाख्यानं भविष्यतीति तत्पूर्वकाले कथं तद्ब्राह्मणे न विज्ञातमिति चेत् । युगान्तरे वा मूलरूपेण वा भविष्यदर्थज्ञानसामग्रीबलेन तत्सम्भवात् । (यथा अर्जुनस्य गाण्डीव-प्राप्तिज्ञानं नारदात्) ।।८५।।

**शरणागतनिर्हरणं मरणं तु विदुर्बुधाः ।**
**करुणाकर तत्त्राणं करणं सर्वकर्मणाम् ।।८६।।**

(अन्वयः) हे करुणाकर! बुधाः शरणागतनिर्हरणं तु मरणं विदुः । (तस्मात्) तत् सर्वकर्मणां त्राणं करणं (युक्तम्) ।।

**(व्या)** (श्रीमतां वृन्दावनप्रवेशानन्तरं इदं वृन्दावनाख्यानं भविष्यति इति तत्पूर्वकाले कथं

---

(१) इदमेव महत्कार्यं भवतां मम पूजनम् ।
इदमेव महाप्रीतिसाधनं भवतां मतम् ।।
– इति आख्याने अन्यत्र यदुक्तं तत् सदा गुरुराजभक्तेन स्मर्तव्यम् ।

तद्ब्राह्मणेन विज्ञातम् इति चेत्, युगांतरे वा, मूलरूपेण वा, भविष्यदर्थज्ञानसामग्रिबलेन तत्सम्भवात्) शरणागतस्य त्यागे बाधकमाह – **करुणाकर तत्त्राणमिति ।। हे करुणाकर!** दयानिधे! **तत्** तस्मात्कारणात् विप्रस्याभिमतसर्वकर्मणां त्राणकरणं युक्तम् । तव **तत्त्राणकरणं** सच्छास्त्रार्थकथनादिना त्राणम् । सर्वकर्मणां करणम् तव सर्वपुण्याभिवृद्धिसाधनमिति भावः ।८६।

**अहं वित्तानि दास्यामि चेति बुद्धिः प्रजायते ।**
**कालश्चायं कलिरिति ह्यौदासीन्यं कृतं मया ।।८७।।**

(अन्वयः) अहं वित्तानि दास्यामि इति बुद्धिः च प्रजायते । (तथापि) अयं कलिः कालः हि इति (बुद्ध्या) च मया औदासीन्यं कृतम् ।।

**(व्या)** एवम् अनुग्राहकस्य भवतः इदानीमभिमतवित्ताप्रदानं किं निमित्तम्? इत्यत आह **अहमिति ।।** पूर्वप्रकरणे (३/६६) –

'अहं महानुभावश्च सर्वसम्पद्विधायकः ।
कालश्चायं कलिरिति ह्यौदासीन्यं कृतं मया ।।'

इति विप्राभिमतसम्पदामप्रदाने निमित्तमुक्तम् । इदानीं तु सन्न्यासाभिमतवित्ताप्रदाने निमित्त-कथनमिति न पुनरुक्तिः । दशमाध्यायान्ते (१०/५५-५६) –

'अयं च ब्राह्मणश्चात्र मामेव शरणं गतः ।
वृन्दावनकृतेः पूर्वं स्वस्याभीष्टं निवेद्य च ।।
कृत्वा वृन्दावनं चेति प्राक्श्लोकद्वितयेन च ।
अतस्त्वं मे मयाप्रोक्तं तत्सत्यं समभूदहो ।।'

इति वक्ष्यमाणसमाख्ययेदं व्यासप्रकरणमिति ज्ञायते ।।८७।।

**सुराणां तु मनुष्याणां दर्शनं स्पर्शनं तथा ।**
**सम्भाषणं च सद्बुद्धे नैव धर्मोऽत्र जातुचित् ।।८८।।**

(अन्वयः) हे सद्बुद्धे! सुराणां मनुष्याणां तु दर्शनं स्पर्शनं तथा सम्भाषणं च (नृजाते देवैरपि) अत्र नैव धर्मः ।

**(व्या)** तर्हि 'अहं प्रत्यक्षतश्चापि वक्ष्ये सूक्ष्ममते सुत' इति वक्ष्यमाण(१२/७७)-विप्रोपदेशदर्शनादिकं कथमित्यत आह – **अथापीति ।।** यद्यपि –

'अप्रत्यक्षो ह्यसंस्पर्शः असम्भाषणमेव च ।
देवैरपि नृजातेस्तु गुह्यधर्मो दिवौकसाम् ।।(म.भा.ता.नि.११/४४)'

इत्याचार्योक्तरीत्या मानुषसम्भाषणं न धर्मः ।।८८।।

(अव) तर्हि 'अहं प्रत्यक्षतश्चापि वक्ष्ये सूक्ष्ममते सुत' इति वक्ष्यमाणउपदेशदर्शनादिकं कथम् इत्यत आह – अथापीति ।।

**अथापि विप्रवर्येऽस्मिन् वक्ष्ये मम कलेवरम् ।**
**पूर्वानुभवसंस्कारकारणाद्विद्धि बुद्धिमन् ।।८९।।**

(अन्वयः) अथापि हे बुद्धिमन्! अस्मिन् विप्रवर्ये, पूर्वानुभवसंस्कारकारणात्, मम, कलेवरं, विद्धि । (प्रतिमादौ इव विप्रवासनाशरीरे सन्निहितः सन्) वक्ष्ये ।

(व्या) अथापि अस्मिन् विप्रवर्ये पूर्वानुभवसंस्कारकारणात् मम कलेवरं विद्धि । प्रतिमादाविव विप्रवासनामयशरीरे सन्निहितः सन् वक्ष्ये । क्वचित् बलवत्तरपुण्यकारणेन प्रत्यक्षतश्चाप्युभयज्ञानं शब्दितायामवस्थायां वक्ष्ये । तस्माद्बलवत्तरसाधनसम्पत्तिकाले दर्शनं भविष्यति । तदभावकाले तु नेति भावः ।।८९।।

(व्या) न केवलं विप्रवासनामये स्वसन्निधानम् । अपि तु विप्रदेहादावपि सन्निधानमिति ज्ञापयितुमाह – तदेवेति ।।

**तदेव मत्कलेवरं द्विजस्य यत्कलेवरम् ।**
**तदेव मत्कलेरितं द्विजस्य यत्कलेरितम् ।।९०।।**

**तदेव कल्पनेरितं द्विजस्य कल्पनेरितम् ।**

(अन्वयः) द्विजस्य यत् कलेवरं (शरीरं), तत् मत् कलेवरं एव । यत् द्विजस्य कलेरितं (विप्रस्य यत् कलया ज्ञानेन विद्यया कल्पनेन वा यत् ईरितं प्रेरितं), तत् मत्कलेरितं एव (मम विद्यया ज्ञानेन वा प्रेरितम् एव) ।। द्विजस्य (यत्) कल्पनेरितं तत् (मत्) कल्पनेरितम् एव । (विप्रः यत् यत् करोति (माति वदति) तत् सर्वं मत् प्रेरणया एव इति विद्धि) ।

(व्या) कलेवरं शरीरम् । कलाविद्याविशेषः ।।९०।। कल्पनेरितमिति ।।

(व्या) 'ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र.सू.१.२.८) इत्युक्तेः ईश्वरस्य जीवदेहगतस्येव विप्रदेहगतस्य स्वस्य दुःखाद्यभावमाह – सुखस्येति ॥९१॥

**सुखस्य भोक्ता तद्देहे नासुखस्य कदाचन ॥९१॥**

**सुखस्य कर्ता तद्देहे नासुखस्य कदाचन ।**
**तस्माच्च सुखभोक्तृत्वं सर्वदा मे न चान्यथा ॥९२॥**

(अन्वयः) तत् देहे सुखस्य भोक्ता (एव), कदाचन असुखस्य न । तत् देहे सुखस्य कर्ता (कदाचित् अपि तदितरदुःखस्य बीजं पापं) असुखस्य कदाचन न । तस्मात् (विप्रदेहे स्थित्वा सुखसाधनैः पुण्यकरणात्) मे सर्वदा [१]सुखभोक्तृत्वं (एव) न च अन्यथा ।

(व्या) सुखस्य कर्ता = तत्साधनपुण्यकर्ता ॥९२॥ (अनेन स्वस्य द्वासुपर्णाश्रुति-प्रतिपाद्यत्वम् उपलक्षणया वेदप्रतिपाद्यत्वं च सूचयति[२] । सर्वदाशब्देन इदं मम स्वाभाविकगुणम् इत्यपि सूचयति ।)

(व्या) 'श्रुत्वा सर्वं च सद्धर्मम्'(३/८२) इत्युक्तश्रवणसाधनत्वेन ज्ञातव्यमाह – मार्ताण्डेति ॥

**मार्ताण्डमण्डलाभे द्वे कुण्डले पुण्डरीकिणा ।**
**प्राप्तेभशुण्डादण्डेन पण्डितेन विडम्बिना ॥९३॥**

(अन्वयः) पुण्डरीकिणा (व्याघ्रचर्मधारिणा शिवेन शुकरूपेण अवतीर्णेन श्रुतं श्रीमद्भा-गवतं) पण्डितेन विडम्बिना (लेखकेन) इभदण्डाशुण्डेन (श्रीवेदव्यासाज्ञयाविघ्नेशलिखितं श्रीमन्महाभारतं) मार्ताण्डमण्डलाभे द्वे कुण्डले प्राप्ते (मम) ।

---

(१) सरसभारतीविलासे पञ्चमो विलासे (५२) –
जीवैरनन्तैश्च कृतसुकृतानां फलं सुखम् ।
सह भुङ्क्ते किल श्रीशो ब्रह्मभूतहनूमता ॥
इति सूचितप्रकारेण भाविचतुर्मुखस्य श्रीगुरुराजस्य भोक्तृत्वं स्मर्तव्यम् ।

(२) उत्तमः सर्वदेवेषु प्राण एव हरेरनु ।
चतुर्मुखस्य प्राणस्य न विशेषोऽस्ति कश्चन । – बृहदारण्यकभाष्यम् ।

(व्या) **पुण्डरीकिणा** व्याघ्रचर्मधारिणा शिवेन **प्राप्तेभशुण्डादण्डेन** विघ्नेशेन । **मार्ताण्ड-मण्डलाभे द्वे कुंडले प्राप्ते** ।। व्यासाज्ञया विघ्नेशलिखितभारतादिरूपकर्णभूषणालङ्कृतत्वज्ञानम् श्रवणसमृद्धिसाधनमिति भावः ।।९३।। मार्ताण्डमण्डलाभत्वं कर्णभूषणस्य श्रवणस्योपपादयितुमाह – **शतपत्रेति** ।।

**शतपत्रोपमं छत्रं रत्नदण्डविचित्रितम् ।**
**वृत्रस्य शत्रुणा गोत्रभेत्त्रा चाप्तं शशिप्रभम् ।।९४।।**

**चामरे चामरेशेन रत्नदण्डे शशिप्रभे ।**
**सामरे सामरे लोके प्रेषिते मम पार्श्वयोः ।।९५।।**

(अन्वयः) रत्नदण्डविचित्रितं शशिप्रभं शतपत्रोपमं छत्रं च गोत्रभेत्रा वृत्रस्य शत्रुणा आप्तम् । रत्नदण्डे शशिप्रभे चामरे च सामरे लोके (अमरे लोके देवसभायां) सामरे (चामरवाहकाभ्यां सहिते) मम पार्श्वयोः अमरेशेन प्रेषिते ।।

(व्या) कुण्डलछत्रचामराणां मार्ताण्डचन्द्रसादृश्यस्मरणात् अज्ञाननिवारकत्वेन मार्ताण्डस्य स्मरणश्रवणजन्यज्ञानस्य तेन, तापान्धकारनिवारकस्य चन्द्रसदृशमननजन्यज्ञानस्य पद्मोपमस्य । तत्रापि दुर्वादिमक्षिकाणां विद्राणानुकूलत्वेन निर्दुष्टत्वेन च चामरोपमयोः परपक्षदूषणस्वपक्ष-साधनानुकूलयोः ज्ञानयोः लाभो भवतीति सूचितं भवति ।।९४ऽ९५।।

(**शतपत्रोपमं** पद्मसदृशम् । रत्नमयदंडेन सहितम् । **शशिप्रभं** चन्द्रकान्तियुक्तम् । **छत्रं** । **गोत्रभेत्त्रा** पर्वतपक्षनाशकेन । **वृत्रस्य शत्रुणा** इन्द्रेण **आप्तं** दत्तम् ।।९४।। तथैव रत्नदण्डालङ्कृते चन्द्रकान्तिविशिष्टे **चामरे** च, द्वे **चामरे अपि अमरेशेन** इन्द्रेण **सामरे** अमरैः सहिते । सामरे सदा देवासुरयुद्धैः प्रचुरे । **लोके** स्वर्गलोके **मम** पार्श्वयोः प्रेषिते) ।।९५।।

**मया पीठं हठादाप्तं तटिन्निभसुपौरुटम् ।**
**त्वष्ट्रा सुघट्टितं रत्नकोटिभिः कठिनेतरम् ।।९६।।**

(अन्वयः) त्वष्ट्रा (निर्मितं) रत्नकोटिभिः सुघट्टितं (तथापि) कठिनेतरं (मृदुतरं), तटिन्निभसुपौरुटं पीठं मया हठात् आप्तम् ।।

**एवं सदा दिव्यमहाविभूतिभिः संसेव्यमानस्त्रिदशैर्ममानुगैः ।**
**विरिञ्चलोके सुचिरं रमन् मुदा रमामि लोकेपि रमापतेः प्रिये ।।९७**

**नन्दनं ते शतानन्दमुकुन्दावसितं वदन् ।**

(अन्वयः) एवं, दिव्यमहाविभूतिभिः, ममानुगैः त्रिदशैः संसेव्यमानः (सन्), मुकुन्दावसितं, नन्दनं वदन् (सन्) विरिञ्चलोके, सुचिरं रमन्, रमापतेः प्रिये लोकेऽपि मुदा रमामि ।

**(व्या) एवमिति ।। एवम्** = उक्तप्रकारेण **दिव्यमहाविभूतिभिः** = देवयोग्याभिः उत्कृष्टविभूतिभिः **ममानुगैः** अनुचरैः **त्रिदशैः** देवैः **संसेव्यमानः** सन् **विरिञ्चलोके** मेरुसदन-वैजयन्तसत्याख्ये विरिञ्चं प्रति **मुकुन्दावसितम्** एतदाख्यानप्रवर्तकत्वेन भगवता निश्चितं **नन्दनं** विप्रं **वदन्** सन् **रमामि । रमापतेः प्रिये** श्वेतद्वीपादौ ।।९७।।

**नन्दगोपसुतामन्दानन्दात्मन् पाहि नन्दनम् ।।९८।।**

(अन्वयः) (तत्रस्थहरिरूपाणाम् एवं प्रार्थयामि) हे नन्दगोपसुत! [१]अमन्दानन्दात्मन् ते नन्दनं पाहि ।

**(व्या) हे नन्दन** नन्दगोपसुत **अमन्दानन्दात्मन् ते नन्दनं** नन्दकम् **पाहि** ।।९८।।

**ध्रुवं वातेन सन्त्यक्तं पीतं तच्च घटामृतम् ।**
**नारदाच्छारदामूर्तिं पाहि तं मत्सुतं तथा ।।९९।।**

(अन्वयः) (यथा) वातेन सन्त्यक्तं ध्रुवं (स्थिरं विषं) नारदात् (नारदात् बोधितं कंसप्रेषितपूतनास्तनगतं) त्वया पीतम् । तत् च घटामृतं तथा शारदामूर्तिं तं मत्सुतं पाहि ।।

**(व्या) ध्रुवमिति ।। यथा वातेन** वायुना (वायुना प्रधानवायुना अमृतमथनकाले यदा विषम् उत्पन्नं तदा इत्यर्थः) **सन्त्यक्तं** परित्यक्तम् । **ध्रुवम्,** स्थिरम् विषम् । **नारदात्** बोधितं कंसप्रेषितपूतनास्तनगतं त्वया पीतम् । तच्च घटौ मृतं जातम् । घटे अमृतकलशे गतं अमृतसादृश्यं जातम् । तथा **शारदामूर्तिं** शारदासन्निधानयोग्यमूर्तिमन्तं **मत्सुतं पाहि** ।।९९।।

**मुकुन्द कुन्दकुड्मलदन्तपङ्क्तिविराजित ।**
**नन्दगोपसुतामन्दानन्दात्मन् पाहि नन्दनम् ।।१००।।**

---

(१) अमन्दानन्दसन्दोहं - द्वादशस्तोत्रम्

**(अन्वयः) कुन्दकुड्मलदन्तपङ्क्तिविराजित अमन्दानन्दात्मन् नन्दगोपसुत! नन्दनं पाहि ।**

(व्या) **मुकुन्देति** ।। **कुन्दकुड्मलदन्तपङ्क्तिविराजित! अमन्दानन्दात्मन् हे मुकुन्द! नन्दनं पाही**ति पुनरुक्तिरादरार्था । 'इति मुकुन्दं प्रतिवदन् सन् रमामी'ति पूर्वेणान्वयः ।। अनेन विप्रस्य तत्तत्काले प्रसक्तविषाद्यनिष्टनिवृत्त्यर्थम् अनुग्रहः कृतो भवति ।।१००।।

(व्या) एवमनुग्रहपात्रे विप्रे विप्रलम्भकताशङ्का न कार्येति भावेनाह – **यत्प्रेरणामिति** ।।

**यत्प्रेरणां विना सोऽयं ब्राह्मणः पुण्यकीर्तन ।**
**एकं वा वक्ष्यति श्लोकं तर्हीदं तत्कृतं भवेत् ।।१०१।।**

**परीक्षां कुरु तच्छक्तिं वाग्भूतिविषयां सुत ।**
**स्वाप्नं श्लोकं विना चैकं श्लोकं वक्ष्यति वा न वा ।।१०२।।**

**(अन्वयः) हे पुण्यकीर्तन! सः अयं ब्राह्मणः यत्प्रेरणां विना एकं वा श्लोकं वक्ष्यति (चेत्) तर्हि इदं तत्कृतं भवेत् । हे सुत! तत् वाग्भूतिविषयां शक्तिं च परीक्षां कुरु । स्वाप्नं श्लोकं विना एकं श्लोकं वक्ष्यति वा न वा (इति) ।।**

(व्या) (स्वप्नाभावदशायां स्वाप्नश्लोकनिरूपणानन्तरं 'ततः परं मूक एव । साक्षी चाहं च मे गुरुः' इति रामचन्द्राचार्यविरचितश्रीवादिराजगुरुवरचरितामृते उक्तरीत्या विप्रः श्लोकादिकं रचयितुं वक्तुं वा असमर्थः । तस्माद्गुरुराज एव आख्यानकर्तेति भावः) ।।१०१-१०२।।

(व्या) स्वस्य सदा समस्ताश्रमभाक्त्वसूचनाय स्वकीयकुण्डलादिवत् मकुटस्यापि ज्ञातव्यत्वं सूचयितुमाह – **मकुटमिति** ।।

**मकुटं रत्नसत्कूटं हाटकाद्रिरिति स्फुटम् ।**
**भाति पौरुटभूयिष्ठं कोटिसूर्यसुपाटवम् ।।१०३।।**

**(अन्वयः) रत्नसत्कूटम्, पौरुटभूयिष्ठं(जाम्बूनदमयं), हाटकाद्रिः इति, कोटिसूर्यसुपाटवम्(कोटिसूर्यवत् तीक्ष्णप्रकाशोपेतं), मकुटं स्फुटम् भाति ।।**

(व्या) **रत्नसत्कूटम्, हाटकाद्रिरिति** प्रतीयमानम्, पौरुटभूयिष्ठम्, अज्ञाननिवृत्तौ **कोटिसूर्यसुपाटवम्** ।।१०३।।

**सुवर्णपूर्णे मम कर्णभूषणे गणैर्मणीनां तु झणझणध्वनिः ।**
**गलस्थहारावलिभिः सुमेलने त्वासीत्तथा चालकसंस्थमौलिना ।।१०४।।**

(अन्वयः) तथा मम सुवर्णपूर्णे कर्णभूषणे, मणीनां गणैः गलस्थहारावलिभिः च आलकसंस्थमौलिना सुमेलने झणझणध्वनिः तु आसीत् ।।

(व्या) सुवर्णपूर्णे इति ।। तथा **मम कर्णभूषणे** आभरणरूपे **सुवर्णपूर्णे** = काञ्चनपूर्णे भारतादिरूपे तु समीचीनैः अक्षररूपवर्णैः । (गलस्थहारावलिभिः) पूर्णगलस्थहाराणाम् मुक्ता-हाराद्याभरणरूपाणाम्, वैदिकलौकिकशब्दरूपाणाम्, तारादीनाम् आवलीभिः चूर्णकुन्तलगत-किरीटेन मेलने सति झणझणध्वनिरासीत् ।।१०४।।

तथा चास्मिन्नध्याये विप्रसीतापत्योः मन्त्रग्रहणम्; शेषस्य कदाचिदविश्वासः जन्मान्तरे विश्वासः; व्यासस्य पञ्चपर्वशब्दोक्तरहस्यज्ञानादिलौकिकम् । कल्यादिग्रहोच्चाटनादिसमर्थत्वादि स्वासाधारणमाहात्म्यरूपमलौकिकं चोक्तं भवति ।।

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।।१०५**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वकं तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दा-शनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण)

मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेम-निर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराज-पूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे तृतीयाध्यायः समाप्तः ।

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्तिसन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात्

श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक-ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य-जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकं अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**।।ॐ इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरकमलसञ्जात-श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्यानव्याख्याने तृतीयाध्यायः समाप्तः ।**

**।श्रीभाविसमीरान्तर्गतमध्वेशार्पणमस्तु ।**

# ०४-०० चतुर्थोऽध्यायः

### ०४-००१-०२२- वादिराजभट्टप्रकरणम्

(व्या) ओं ।। वृन्दावनगतस्वान्तर्गतभगवतः भजनीयत्वं प्रतिज्ञाय कृताभिः स्तुतिभिः स्वस्योपास्यगुणवत्तया स्तुतिरूपं भजनं कर्तव्यमित्युक्तं प्रथमाध्याये । तत्वज्ञानोत्पत्यर्थानि मखोपलक्षितानि अन्तःकरणशुद्धिप्रदानि सम्पुण्यानि कर्तव्यानीति सूचितं द्वितीयाध्याये । तेन शुद्धान्तःकरणानां मन्त्रग्रहणप्रकारः, श्रवणादीनाम् आवश्यकत्वं च 'श्रुत्वा सर्वं च सद्धर्मं' इत्यादिना तृतीयाध्याये सूचितम् । इदानीं समर्पितमनोदेहेन्द्रियाखिलाङ्गसाध्यपुण्यानां तत्तदङ्गाभरणविमानाश्वगजादिसमर्पणसूचनेन, बादरायणदर्शनप्रकारकथनेन च अपरोक्षज्ञानलाभप्रकारं सूचयति अनेनाध्यायेन । अत्र **वादिराजाख्य** इत्यारभ्य **'श्लोकानां हरणे न भूत्'** इत्यन्तं वादिराजभट्टश्रोतृकं प्रकरणम् ।

तत्र वादिराजाख्येति (१३/१) त्रयोदशाध्याये वक्ष्यमाणस्य वादिराजभट्टस्य सम्बोधनम् । प्राप्तजन्मान्तरस्य विप्रस्य यतित्वसमये वादिराजभट्टोऽपि प्रेत्य यत्याश्रमः, विप्रादप्याश्रमज्येष्ठः । शेषादीनामिव तस्यापि एतदाख्यानोक्तमन्त्रादौ अधिकारित्वेन तेन मन्त्रद्रष्टृविप्रस्य मान्यत्वमुच्यते – **वादिराजाख्येति** ।।

**हरिः ॐ ।। वादिराजाख्य सन्मन्त्रं सदा भज मदाद्विना ।**
**कदापि तव दासत्वे संशयो न वदादरात् ।।१।।**

**(अन्वयः) हे वादिराजाख्य! विना मदात् सन्मन्त्रं सदा भज । तव दासत्वे कदापि संशयो न, (तस्मात्) आदरात् वद ।।**

**(व्या)** वादिराजस्य आख्येव आख्या यस्य स तथा । तस्य सम्बुद्धिः । **हे वादिराजाख्य! सन्मन्त्रम्** पूर्वाध्यायोक्तम् रामादिकं मन्त्रं वा, शुभ आलोचनरूपं वा **मदाद्विना भज** । कदाचित्प्रसक्तस्य मदस्य कथं भवद्दासत्वम्? इत्याशङ्कां वारयितुमाह – **कदापीति** ।। (रामादिभगवद्रूपनिरूपितदासत्वे वा, गुरुराजनिरूपितदासत्वे वा संशयो नास्तीति निर्णयं प्राप्य, आदरात् श्रद्धाभक्तिपूर्वकं कृतकर्मणः यज्ञत्वमनुसन्धाय वद मध्वशास्त्रं युक्तिमल्लिकादिमच्छास्त्रं च पठ । शिष्येभ्यः प्रवचनं कुरु ।।१।।)

(व्या) पादसाध्यानां पुण्यक्षेत्राटनादीनाम् । पादाभरणरूपाणां समर्पणीयत्वं सूचयितुमाह – नूपुरे इति ।।

**नूपुरे तूपरिप्राप्ते श्रीपरीते च रूपिते ।**
**कापरीक्षा परेशेन चापरैर्या निरूपिता ।।२।।**

(अन्वयः) **श्रीपरीते नूपुरे तूपरिप्राप्ते अपरैः या निरूपिता का परीक्षा (इति) परेशेन रूपिते ।।**

(व्या) आभरणपक्षे – अपरैः आभरणपरीक्षकैः अनयोः पादाभरणयोः एतावन्मौल्यमिति या परीक्षा निरूपिता । सा का परीक्षा कुत्सितपरीक्षेति परेशेन हरिणा रूपिते निरूपिते । श्रीपरीते शोभोपेते उपरि नूपुरे उत्कृष्टनूपुरे प्राप्ते । पुण्यपरत्वे – अपरैः मीमांसकादिभिः निरूपिता या परीक्षा सा कापरीक्षेति परेशेन निरूपिते । (श्रीपरीते) श्रिया हरिप्रीति-साधनत्वरूपया परीते युक्ते नूपुरे पुण्यक्षेत्राटनादिरूपे प्राप्ते इत्यर्थः ।।२।।

**अङ्गदे भङ्गदेरीणां सङ्गदे सर्वदा हरेः ।**
**अङ्गदेशे विराजेते तुङ्गहेम ममाङ्गज ।।३।।**

**मम केयूरमप्येतद्वायुरूपं शिवायुतम् ।**
**मयूररवतो नित्यं वायुत्वं तस्य वक्त्यहो ।।४।।**

(अन्वयः) **हे अङ्गज! अरीणां भङ्गदे सर्वदा हरेः सङ्गदे तुङ्गहेम अङ्गदे मम अङ्गदेशे विराजेते । (अङ्गदशब्दोक्तं) एतत् मम केयूरम् अपि शिवायुतं वायुरूपं नित्यं तस्य मयूररवतः वायुत्वं वक्ति अहो !**

(व्या) अरीणां भङ्गदे नारायणद्विट्तदनुबन्धिनिग्रहसाधने अङ्गदे बाहुभूषणरूपे पुण्यरूपे च अङ्गदेशे विराजेते ।। ममेति ।। अङ्गदशब्दोक्तं मम केयूरं वायुरूपं वायुत्वानुमापकं शिवेन शत्रुसंहारोपयोगिना आ सम्यक् युक्तम् । तदभिमन्यमानमिति यावत् । तस्य शिवस्य मयूररवतः मम वायुत्वं वक्ति ।।४।।

**मुद्राङ्गुलीयकं रुद्रात्कद्रूवाः पुत्रेण चादृतम् ।**
**अद्राक्षं द्रागभद्राणि द्रावयेद्राज्यदं द्रुतम् ।।५।।**

(अन्वयः) कद्र्वाः पुत्रेण आदृतम् च; मम मुद्राङ्गुलीयकं रुद्रात् (आप्तवान्); (सतां) अभद्राणि द्रुतं द्रावयेत्, द्राक् राज्यदम्; (अहं) अद्राक्षम् ।।

(व्या) **मुद्राङ्गुलीयकमिति ।। मुद्राङ्गुलीयकं** भूदानानुकूलपुण्यरूपम् आभरणरूपं च । **रुद्रेण** कद्रूपुत्रेण शेषेण च आदृतम् । **सताम् अभद्राणि द्रावयेत्** । सुपात्रेभ्यो **द्रुतं राज्यदम्** ।।

**हस्ताङ्गुलीयकं शस्तं समस्तैः रत्ननिर्मितम् ।**
**प्रहस्तादपि तं रामः स्वहस्ताच्च ददौ मुदा ।।६।।**

**वरुणो दत्तवान् कामं मरणाद्रहितस्य(१) मे ।**
**करणं सर्वरत्नानां किरणाद्रञ्जनं दिशः ।।७।।**

(अन्वयः) शस्तं समस्तैः च रत्ननिर्मितं, सर्वरत्नानां कारणं किरणात् दिशः रञ्जनं हस्ताङ्गुलीयकं, प्रहस्तात् अपि, रामः, स्वहस्तात् (वरुणाय) ददौ । वरुणः कामं तं मरणात्रहितस्य मे (मुदा) दत्तवान् । ।

(व्या) **हस्ताङ्गुलीयकमिति ।।** प्रहस्तवशे स्थितं समस्तलक्षणैर्युक्तं हस्ताङ्गुलीयकं रामः उपाहृत्य वरुणाय ददौ ।।६।। **वरुण इति ।। मरणाद्रहितस्य मे वरुणो** ददौ । तत्कीदृशम्? **रत्नानां का(क)रणम्** = प्रापकम् । **किरणात् दिशः रञ्जनं** रञ्जकम् । 'यथा सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति श्रुत्या हरिभक्तानां पापं तद्द्वेषिणां फलाधायकम् । तथा प्रहस्तोपलक्षितहरिद्वेषिगतं शत्रुनिग्रहफलकपुण्यरूपं बाणप्रयोगाद्यनुकूलं वरुणोपलक्षितहरिभक्तवर्गाय रामचन्द्रो ददौ । स मम इत्थं ददौ ।।७।।

(व्या) एवं नूपुरादिहस्ताङ्गुलीयकां तैराभरणैयुक्तत्वमुक्त्वा विप्रतोषस्य कर्तव्यतामाह – **जनैरिति ।।**

**जनैरवेद्यविभवं स्फुटीकर्तुं द्विजस्य मे ।**
**कुरु मद्वचनात् तोषं तत्तोषेऽहं सुतोषितः ।।८।।**

(अन्वयः) मे जनैः अवेद्यविभवं स्फुटीकर्तुं द्विजस्य तोषं मद्वचनात् कुरु । तत् तोषे अहं (अपि) सुतोषितः ।

---

(१) मरणाद् रहितस्य, मरणेन रहितस्य इत्यर्थः । तृतीयार्थे पञ्चमीविभक्तिरलौकिकः प्रयोगः ।

**(व्या)** अत्र का सङ्गतिरिति चेत्, वादिराजभट्टं प्रति 'अरण्यं न वस' (३१/७१) इति अभिमतसञ्चरणस्य । 'सह तस्य गृहं दत्वा'(२१/७५) इति गृहदानस्य । 'अमित्रतापं करोषि'(२१/७५) इति अमित्रतापकारस्य विप्रतोषार्थं कर्तव्यतया वक्ष्यमाणानां सूचनार्थत्वेन नूपुराद्याभरणोपेतत्वकथनानन्तरं विप्रतोषस्य कर्तव्यत्वकरणं कथनं च सङ्गतमिति मन्तव्यम् ।।८।।

**(व्या)** विप्रस्य मानत्वं किन्निमित्तमिति चेत्, एतदाख्यानवक्तृत्वनिमित्तकमिति सूचयितुं दृष्टान्तमाह – **कटकमिति ।।**

**कटकं हाटकमयं मम सद्रत्नकोटिकम् ।**
**काठकं पाठकैराप्तं हाटकाद्रौ रविप्रभम् ।।९।।**

**गळे हारावलिर्भाति ताराणां तु कळेव मे ।**
**मिळिता चेन्द्रनीलैश्च पुळकाङ्कं करोत्यहो ।।१०।।**

(अन्वयः) हाटकाद्रौ (मया) पाठकैः काठकम् आप्तम् । (तैः) हाटकमयं सद्रत्नकोटिकं रविप्रभं कटकं मम (समर्पितं); मे गळे ताराणां तु कळा इव इन्द्रनीलैः मिलिता च हारावलिः भाति । पुलकाङ्कं करोति अहो!

**(व्या)** यथा **काठकं पाठकैः** मदुपदेशेन **प्राप्तम्** । **तैः** मह्यं (गुरुदक्षिणारूपेण) कटकसमर्पणं कृतम् । तथा मन्मुखतः (त्वन्मुखतः इति वा) मद्भक्तैः इदमाख्यानम् । अधिगतस्य विप्रस्य तोषः कर्तव्य इति भावः ।। उपदेष्टृत्वसिद्धये ज्ञातव्यमाह – **गले इति** ।। **हारावलिभिः** मुक्ताहाराणाम् आवलिः पङ्क्तिः ताराणां नक्षत्राणां कलेव भाति । अपौरुषेयागमरूपैः मिळिता वेदवाक्यरूपाणां हाराणामावलिः । प्रसिद्धेन्द्रनीलैः प्रसिद्धमुक्ताहारावलिभिः मिळितेति ज्ञेयम् ।।१०।। (मन्मुखतः इदमाख्यानम् अधिगतवतो विप्रस्य तोषः मद्भक्तैः कर्तव्यः इति भावः)

**एवं सदाऽसङ्ख्यसुखैश्च संयुतो मखैर्दुरापैः खगमुख्यदैवतैः ।**
**दुःखैरसम्भिन्नतरैश्च शश्वत् प्रमोदते देववरो मयि प्रभुः ।।११।।**

(अन्वयः) एवं खगमुख्यदैवतैः दुरापैः मखैः अपि दुःखैः असम्भिन्नतरैः असङ्ख्यसुखैः च (अहं) सदा संयुतः । देववरः प्रभुः मयि शश्वत् प्रमोदते ।

(व्या) एवमिति ।। एवमुक्तप्रकारेण अहम् असङ्ख्यसुखैर्युक्तः । कीदृशैः? गरुडादिभिः देवैः यज्ञादिभिः प्राप्तुमशक्यैः । तत्र निमित्तकथनम् । देववरः निखिलदेवोत्तमः प्रभुः मयि शश्वत् एकप्रकारेण मोदते । अनेन विशिष्टप्रतिमात्वं सूचितं भवति ।।११।।

मदन्येषां मठाधीशानां बहूनां सत्वात् विशिष्टतया मम विप्रतोषकत्वं कुतः? इत्यत आह – काञ्चनीयेति ।।

**काञ्चनीयाञ्चनीयां तु काञ्चनीयान्मयाञ्चनात् ।**
**मां विना तां विना नाकी नाकित्वं नैति नान्यथा ।।१२।।**

**(अन्वयः) – काञ्चनीयात् मया अञ्चनात् काञ्चनीयाम् अञ्चनीयां तां विना मां विना नाकी नाकित्वं नैति, नान्यथा ।**

(व्या) मया ब्रह्मत्वयोग्येन कृतात् काञ्चनीयादञ्चनात् पूजनात् काञ्चनीयाञ्चनीयां च । काञ्चनीय(सौवर्ण)मध्यवाटगतपौरुटभाजने पूजनीयां तां बादरायणमूर्तिं मां विना च नाकी देवभावयोग्यः विप्रः नाकित्वं न (एति) प्राप्नोति । तस्मात् बादरायणमूर्तिः विप्रेण पूज्या । तत्र अन्ये सासूयाः । अहं तु विप्रानुग्राहकः । यत्तस्मात् त्वया तोषणीय इति भावः ।।

**चामीकरमये मेरौ स्वामी करतळे(ले)न मे ।**
**कामे रतमुनीन् हित्वा मामेवाग्रे परामृशत् ।।१३।।**
**मेरौ नारायणो यस्य कारुण्यं मे परायणम् ।**
**रमाया मां करे प्रादात् कुमारोऽयमिति ब्रुवन् ।।१४।।**

**(अन्वयः) चामीकरमये मेरौ मे (मम) स्वामी कामे रतमुनीन् हित्वा माम् एव अग्रे करतलेन परामृशत् । मेरौ यस्य कारुण्यं मे परायणं नारायणः 'अयं कुमारः' इति ब्रुवन्, मां रमायाः करे प्रादात् ।।**

(व्या) तस्य बादरायणस्य इतरवैलक्षण्येन स्वमात्रपूज्यत्वमिति सूचयितुमाह – चामीकर इति ।। (अहमेव अत्यन्तनिष्कामि शुद्धभागवतधर्मनिरतऋजुः इति भावः) । इतरत् स्पष्टं ।।१३।। मेराविति ।। (यस्य कारुण्यं मे परायणम् । स च नारायणः अयं तव कुमारः इति ब्रुवन् मेरौ रमायाः करे मां प्रादात्) कुमारोयमित्यनेन ऋजुत्वमुपपादितम् । श्रोतृभेदादिना पुनरुक्तिदोषाभावो मन्तव्यः ।।१४।।

(व्या) तोषणीयत्वेनोक्तस्य विप्रस्यैव कृपापात्रत्वे किं निमित्तम्? इत्यत आह (सप्तभिः श्लोकैः) – **मर्त्येति ।**

**मर्त्यलोकं तु हित्वाहं सत्यलोकमितोगमम् ।**
**श्रुत्यभावं कर्तुकामो दैत्यः कश्चिद्धतो मया ।।१५।।**

(अन्वयः) **मर्त्यलोकं तु हित्वा इतः अहं सत्यलोकम् अगमम्; श्रुत्यभावं कर्तुकामः कश्चित् दैत्यः मया हतः ।**

(व्या) सत्यलोकगमनकाले **मया कश्चिद्दैत्यः हतः** । सतां मनसि निलीनः वाग्बाणेन हतः (एतदाख्यानरूपश्लोकबाणेन हतः इति भावः) । सत्यलोकगमनानन्तरम् । **श्रुत्यभावं कर्तुकामः** (श्रुत्यभावं श्रवणमेव यथा न स्यात् तथाविघ्नं कर्तुम् उद्युक्तः दैत्यः मार्गे सत्यलोकगमनात् प्रागेव मया हतः इत्यर्थः) । एतदाख्यानार्थश्रवणप्रतिबन्धकतया जातः ।।१५।।

**नाकेऽपि सर्वलोकेशाः पाकशासनपूर्वकाः ।**
**पिनाकी च मया साकं शोकहीनं चतुर्मुखम् ।।१६।।**

**गत्वा दत्वा करं तस्य स्तुत्वा श्रुत्वा सुधामयीम् ।**
**वाचं शोचन्तमात्मानं पाप्मानं च जहूरहः ।।१७।।**

(अन्वयः) **नाकेपि पाकशासनपूर्वकाः सर्वे लोकेशाः पिनाकी च शोकहीनं मया साकं चतुर्मुखं गत्वा, तस्य करं दत्वा, (तं) स्तुत्वा, (तस्य) सुधामयीं वाचं श्रुत्वा, आत्मानं शोचन्तं पाप्मानम् अहः जहुः ।**

(व्या) **नाकेपीति** ।। तदा स्वर्गस्थाः सर्वे देवाः मया सहितं **चतुर्मुखं स्तुत्वा । करं दत्वा** च, चतुर्मुखोक्तां **सुधामयीं** वाणीं प्रसक्तदैत्योपद्रवपरिहारप्रकारबोधिकां वाचं **श्रुत्वा शोचन्तं** पापरूपिणं दुरात्मानं **दैत्यं जहुः** त्यक्तवन्तः ।। (विप्रान्तर्यामिणः स्वसन्निधानपात्रत्वेन दैत्योपद्रवपरिहारकत्वं, विप्रस्य आचार्यत्वं ब्रह्मणा दत्तं, तत्र केचित् मानं न कुर्वन्ति; त्वम् आश्रमज्येष्ठः, त्वया माने कृते, सर्वे सन्तः मानं कुर्वन्ति, इति सूचयितुमाह)

**नरैश्च दत्ताचार्यत्वेप्यनेकापि सुमान्यता ।**
**भवतीह न सन्देहस्तच्छिष्यैः सर्वथा सुत ।।१८।।**

**लोकैकगुरुणा दत्ताचार्यत्वे तु न कश्चन ।**
**मानो न जातो विप्रस्य चातो हास्यतरं तु किम् ।।१९।।**

(अन्वयः) हे सुत (वादिराजभट्ट) नरैः (प्रौढमानवैः वा राजादिभिः वा यतिवर्यैः वा) च दत्तआचार्यत्वेऽपि (दत्तां बिरुदाङ्कितमपि) तत् शिष्यैः अनेका अपि इह (भूलोके) सर्वथा सुमान्यता भवति (सर्वे मानयन्ति) (अत्र) न सन्देहः ।

(इदं तु) लोकैकगुरुणा (ब्रह्मणा चतुर्मुखेन) दत्तआचार्यत्वे तु न कश्चन (केचिन्मानं न कुर्वन्ति); विप्रस्य मानो न जातः; अतो (इतोपि) हास्यतरं (हास्यास्पदं) तु किम् (अन्यत् किमस्ति)?

(व्या) (एवं चतुर्मुखवचनेन विप्रस्य आचार्यत्वं लब्धम् । राज्ञा 'आचार्यः एषः' इति माने कृतेपि जनाः तं पुरुषं पूजयन्ति । तच्छिष्यजनाः सुतरां पूजयन्ति इति अष्टादशश्लोकार्थः) ।। **लोकैकगुरुणा इत्यादि ।।** विप्रान्तर्यामिणो दैतेयोपद्रवपरिहारकत्वं, स्वसन्निधानपात्रत्वेन विप्रस्य आचार्यत्वं ब्रह्मणा दत्तम् । तत्र केचिन्मानं न कुर्वन्ति ।।

**एवं हास्यास्पदं चैतन्न कुरुष्व मम प्रभो ।**
**विप्रान्तर्यामिणः पूर्णपुण्यस्य तु गुणार्णव ।।२०।।**

**त्वया कृते तु सन्माने सर्वे कुर्वन्ति मानवाः ।**
**मानं मौनवतां श्रेष्ठ कुरु मच्छासनं मुने ।।२१।।**

(अन्वयः) हे गुणार्णव प्रभो! विप्रान्तर्यामिणः पूर्णपुण्यस्य मम तु एतत् हास्यास्पदं च; (तस्मात्) एवं न कुरुष्व । हे मुने! त्वया (विप्रस्य) सन्माने कृते तु सर्वे मानवाः (तं) मानं कुर्वन्ति । हे मौनवतां श्रेष्ठ! मच्छासनं कुरु ।

(व्या) (त्वं तथा **न कुरु** इति वादिराजभट्टं प्रति गुरुराजवचनम् । **प्रभो** इति वादिराजभट्टं प्रति सम्बुद्धिः तस्य मठाधिपतित्वात् । विप्रावमानं कुतो न कर्तव्यम् इति चेत्, अहं विप्रे अन्तर्यामितया सदा वर्ते । स च पूर्णपुण्यवान् । लोकशिक्षार्थमपि त्वया तन्मानं कर्तव्यम् । **मच्छासनमिति** ज्ञानेनापि मानं कर्तव्यम् इति गुरुराजवचनम्) त्वमाश्रमज्येष्ठः । **त्वया माने कृते सर्वे** (मानवाः =) सन्तः **मानं कुर्वन्ति** ।। ।।१९-२१।।

**लोकानां गुरुणोक्तं तु श्लोकानां तु चतुष्टयम् ।**
**काकानामिव वाक्यानि शोकानां हरणे न भूत् ॥२२॥**

(अन्वयः) लोकानां गुरुणा (मया) उक्तं श्लोकानां चतुष्टयं तु, काकानां वाक्यानि इव; श्लोकानां हरणे न भूत् ।

**(व्या) लोकानामिति** मयोक्तश्लोकचतुष्टयम् असतां शोकपरिहारकं न भविष्यति । तस्मात् त्वया तोषणीयत्वेनोक्तस्य विप्रस्य एवं कृपापात्रत्वमिति भावः ॥२२॥ वादिराजभट्टप्रकरणं समाप्तम् ॥

०४-०२३-०५४ विप्रप्रकरणम्

**(व्या) 'हे पुत्र'** इत्यारभ्य **'तद्वृन्दाश्च समाययुः'** इत्यन्तम् एकं विप्रश्रोतृकं प्रकरणम् । पूर्वप्रकरणे वादिराजाख्यं प्रति बादरायणाराधकत्वेन मान्यत्वमुक्तम् । तदुपपादक-आश्रमधर्म-निष्ठत्वादिकं मान्यत्वसिद्धये स्वनिष्ठं सर्वदेवमान्यत्वं चात्र प्रतिपादयति – **हे पुत्र दिव्यकटि-सूत्रेत्यादिना ॥**

**हे पुत्र दिव्यकटिसूत्र शुभाक्षसूत्र सच्छास्त्रवृत्तिभिरहो प्रतिभासि मे त्वम् ।**
**मद्दत्तमन्त्रजपतः सुकृतैकपात्र वृत्रस्य शत्रुपदवीं जितवानितीव ॥२३॥**

(अन्वयः) हे पुत्र! दिव्यकटिसूत्र शुभाक्षसूत्र सच्छास्त्रवृत्तिभिः मद्दत्तमन्त्रजपतः मे सुकृतैकपात्र! वृत्रस्य शत्रुपदवीं जितवानिव इति त्वं प्रतिभासि । अहो!

**(व्या) 'दिव्यकटिसूत्र'** इत्यादिना यत्याश्रमोचितधर्मनिष्ठत्वमुक्तम् । **'सच्छास्त्रवृत्तिभिः प्रतिभासि'** इत्यनेन सच्छास्त्रप्रवक्तृत्वम् । **'मद्दत्तमन्त्रजपतः'** इति स्वोपदिष्टमन्त्रजप्तृत्वम् ॥ (वृत्तिर्व्याख्या । **पादपीठं** प्रपूज्यत्वम् । तस्याग्रतः पुरतः **सच्छास्त्रवृत्तिभिः वृत्रस्य शत्रुपदवीम्** इन्द्रपदवीं **जितवानिति** प्रतिभासि प्राप्तवानिव प्रतिभासि ॥२३॥)

**अग्र्यासने सुनिहितं मम पादपीठं सम्यक्प्रपूज्य विधिवत्परमप्रकाशम् ।**
**तस्याग्रतः परमदर्शनगुह्यसारं व्याख्येयमेव(य)मनिशं प्रदिशामि तेद्य ॥२४॥**

(अन्वयः) परमप्रकाशम् अग्र्यासने सुनिहितं मम पादपीठं सम्यक् विधिवत् प्रपूज्य, तस्याग्रतः परमदर्शनगुह्यसारं अनिशं व्याख्येयं इयं ते अद्य प्रदिशामि ।

(व्या) **अग्रयासन इति ।।** गुरुत्वेन स्वपादपीठपूजकत्वम् **अग्रयासन इत्यादिना** । **'व्याख्येयम् इयम्'** इत्यादिना स्वानुग्रहलब्धविद्योपेतत्वं चोक्तं भवति ।।२४।।

(व्या) विप्रस्य प्रवक्तृत्वसिद्ध्यर्थं ज्ञातव्यमाह – **दशग्रीवेति ।।**

**आयुर्वर्चः श्रियं क्षेमं विद्यां च तव सर्वथा ।**
**दशग्रीवशिरोहर्ता मणिग्रीवाभयप्रदः ।।२५।।**

**हयग्रीवो मम ग्रीवाभरणानि ददौ मुदा ।**
**सोदापुरेऽपि हि सदा मुदा मम गदाधरः ।।२६।।**

**पादाङ्गुलीयकं प्रादाद्वादान्निर्जितवादिनः ।**

**(अन्वयः) दशग्रीवशिरोहर्ता मणिग्रीवाभयप्रदः तव आयुः वर्चः श्रियं क्षेमं विद्यां च सर्वथा (प्रदायकं) । हयग्रीवः ग्रीवाभरणानि मुदा मम ददौ । सोदापुरे अपि सदा गदाधरः वादात् निर्जितवादिनः पादाङ्गुलीयकं मुदा मम (मे) प्रादात् । हि ।**

(व्या) हयग्रीवप्रदत्तग्रीवाभरणलङ्कृतत्वज्ञानं प्रवक्तृत्वसाधनम् । तस्य दशग्रीवशिरोहन्तृत्वज्ञानम् आयुर्वृद्धिप्रदम् । तेन विभीषणस्यायुर्वृद्धेः दृष्टत्वात् । तथा मणिग्रीवस्य तरुभावं परिहृत्य वर्चःप्रदातृत्वेन कृष्णस्मरणं वर्चः प्रापकम् । विभीषणोग्रसेनादीनां सम्पत्प्रदत्वेन रामकृष्णयोः स्मरणं श्रीलाभप्रापकम् ।।२५।। **ग्रीवाभरणानि** वेदोच्चारणादिपुण्यरूपाणि प्रसिद्धानि च ।।२६।।

दुर्वादिविजयसाधनत्वेन ज्ञातव्यमाह – **सोदापुरे इति ।। गदाधरः** त्रिविक्रमः । 'त्रिविक्रमं रम्य गदारिशंखसरोजमालाधरम्'[(१)] इत्यादेः । पादेन कृतकार्यत्वात्पादाभरणप्रदातृत्वं त्रिविक्रमस्य ज्ञातव्यम् । पूर्वं नूपुरशब्देन तीर्थाटनादिपादभूषणमुक्तम् । अत्र तु (दिग्विजयपूर्वकं) दुर्वादिनिग्रहरूपं पादसाध्यं पुण्यमुक्तमिति न पुनरुक्तिः । एवं श्रोतृभेदादिनापि पुनरुक्तिपरिहारप्रकारो मन्तव्यः ।।२७।।

**एवमाभरणानां तु कारणानि शरीरिणाम् ।।२७।।**

**श्रुत्वा मच्छरणानां तु श्रोतॄणां सुखदानि च ।**

---

(१) त्रिविक्रमं रम्य गदारिशंखसरोजमालाधरमिन्दुवर्णम् ।
रमामनोज्ञं यतिवादिराजप्रतिष्ठितं नौमि सदा प्रसन्नम् ।

**एवमाभरणान्याशाः किरणाद्रञ्जनानि मे ॥२८॥**

**श्रवणात् सर्वपुण्यानि प्रापयन्ति मनीषिणाम् ।**

(अन्वयः) (आभरणानां तु) एवं श्रुत्वा, मच्छरणानां श्रोतॄणां शरीरिणां सुखदानि आभरणानां कारणानि च (भवन्ति) । एवं किरणात् आशाः रञ्जनानि मे (मम) आभरणानि श्रवणात् मनीषिणां सर्वपुण्यानि प्रापयन्ति ।

(व्या) उक्ताभरणज्ञानिनां फलमाह – **एवमिति ॥ एवं श्रुत्वा** प्रसिद्धाभरणत्वेन श्रुत्वा । मच्छरणानाम् **आभरणानि** मदीयाभरणानि आभरणानां प्रापकाणि भवन्ति (कारणानि इत्यस्यार्थः) । मनीषिणां **श्रोतॄणां तु** पुण्यरूपत्वेन जानतां पुण्यानि प्रापयन्ति ॥ (एवं **मे आभरणानि किरणादाशाः रञ्जनानि** प्रकाशकानि । **(श्रवणात्) मनीषिणाम्** अधिकारिणां **सर्वपुण्यानि प्रापयन्ती**ति योजना ज्ञेया ॥२८१/२॥) विप्रस्य मान्यत्वसिद्ध्यर्थं स्वस्येन्द्रादिमान्यत्वमाह – **इन्द्र इति ॥**

**इन्द्रो ममेन्द्रनीलाढ्यं सान्द्रनीलाम्बुदप्रभम् ॥२९॥**
**उपेन्द्रेरितहस्तीन्द्रं चतुर्दन्तं ददौ मुदा ।**
**तथैव शुभ्राभ्रप्रभायुक्तमेकं प्रबर्हकम् ॥३०॥**
**प्रददौ मत्प्रियं विप्र प्रयुतौजसमप्यहो ।**

(अन्वयः) उपेन्द्रेरित इन्द्रः इन्द्रनीलाढ्यं सान्द्रनीलाम्बुदप्रभं चतुर्दन्तं हस्तीन्द्रं मे मुदा ददौ । हे विप्र! तथैव शुभ्राभ्रप्रभायुक्तं प्रयुतौजसं अपि मत्प्रियं प्रबर्हकम् एकं प्रददौ । अहो!

(व्या) इन्द्रो **हस्तीन्द्रं सान्द्रनीलाम्बुदप्रभं** सात्विकतामसत्वेन प्रमितमानुषोत्तममानसरूपम् । मदयुक्तत्वेन हस्तीन्द्रसदृशं च ददौ । इन्द्रस्य मनोभिमानित्वात् । **तथैवेति** । तथैव शुभ्राभ्रप्रभम् अतामसानाम् ऋष्यादीनां मानसरूपम् । प्रसिद्धहस्तीन्द्रं च प्रददौ ॥ **प्रबर्हकं** प्रकृष्टबर्होपेतम् । मदोपजीविनां भ्रमरादीनां मनोभिमानिनाम् असुराणाम् उच्चाटनोपयुक्तवैराग्यादिकं प्रसिद्धं च बर्हशब्देनोक्तम् ॥३०-३११/२॥

**उभौ तौ दन्तिनौ पुत्र गच्छन्तौ तौ (वै) ममाग्रतः ॥३१॥**
**वायुवेगमनोवेगवन्तौ कान्तौ महोन्नतौ ।**

**अहं तु धृत्वा द्वे रूपे तावारुहमहो मुने ।।३२।।**

**चरामि सर्वलोकेशान् करोमि मम पूजकान् ।**

(अन्वयः) हे पुत्र! वायुवेगमनोवेगवन्तौ कान्तौ महा उन्नतौ मम अग्रतः गच्छन्तौ तौ उभौ दन्तिनौ ।। हे मुने! अहं तु द्वे रूपे धृत्वा तावारुह्य सर्वलोकेशान् मम पूजकान् करोमि ।।

(व्या) अहमिति ।। सर्वलोकेशान् प्रसिद्धसर्वलोकेशान् मानसविषयाधीशांश्च पूजकान् करोमि ।। (तैः पूजितः सन् चरामि । तैः कृतपूजादिकान् स्वीकृत्य, तेषामनुगृह्णामि) ।

**तल्लोकपतिभिः साकं सल्लापैः सहितोगमम् ।।३३।।**

**तेषां सन्दर्शयाम्यद्य मद्वृन्दावनवैभवम् ।**

(अन्वयः) तल्लोकपतिभिः साकं सल्लापैः सहितः अगमम् । तेषां मद्वृन्दावनवैभवं अद्य सन्दर्शयामि ।

**वाजिनं भ्राजमानं वै देवराजश्च मे द्विज ।।३४।।**

**समाजे निर्जराणां तु सौजन्याद्वै ददौ मुदा ।**

**तमश्वं निस्व(श्व)मप्यश्वं शश्वद्वायुमनोजवम् ।।३५।।**

**सुस्वरं भास्वरं पार्श्वे कार्तस्वरविभूषितम् ।**

(अन्वयः) (अत्युत्तमगजदानेनापि अतृप्तः) देवराजः निर्जराणां समाजे तु भ्राजमानं वाजिनं (इन्द्रियसमुदायरूपं) च (आर्जवेन युक्तः) मे सौजन्यात् मुदा ददौ वै । निश्वं(अमौल्यं) शश्वत् वायुमनोजवं सुस्वरं भास्वरं पार्श्वे कार्तस्वरविभूषितं (सुवर्ण आभरणेन अलङ्कृतं) तमश्वं (इन्द्रियसमुदायरूपमश्वसमुदायं प्रसिद्धमपि प्रददौ)।

(व्या) वाजिनमिति ।। निर्जराणां दशेन्द्रियाभिमानिनां देवानाम् । सौजन्यात् । इन्द्रियसमुदायरूपम् अश्वसमुदायम् । प्रसिद्धं च ददौ ।।

**अहमारुहमाहार्यनीहारमिव लाघवात् ।।३६।।**

**मनोजवेन शर्वादीन् सर्वान् वै देवतागणान् ।**

**गत्वा श्रुत्वागमं भूमिं तैः साकं नाकिभिः सुत ।।३७।।**

**तेषां सन्दर्शयाम्यद्य मद्वृन्दावनवैभवम् ।**

(अन्वयः) नीहारमिव आहार्यनीराहमिव तमश्वं लाघवात् अहम् आरुहं; (तदनन्तरं) मनोजवेन वै गत्वा शर्वादीन् सर्वान् देवगणान् (देवलोकान् गत्वा, तेषां स्वाधिकार-कर्तव्यनिवेदनं) श्रुत्वा हे सुत! तैः नाकिभिः साकं (इन्द्रादिलोकपालैः सहितः) भूमिं (मम वृन्दावनं प्रति) अगमं (आगत्य) तेषाम् अद्य मद्वृन्दावनवैभवं सन्दर्शयामि ।।

(व्या) अहमिति ।। आहार्यनीहारमिव आहर्तुं योग्यनीहारवत् शुभ्रम् । बदर्यादौ प्रसिद्ध-मेतत् ।।३६-३७१/२।।

**एवं विमानं सन्मानं कृत्वा मे दानवान्तकः ।।३८।।**

**भानुतेजोनिभं प्रादात् कीनाशेन सुमानितम् ।**
**किम्वन्तकासीति वाक्यान्न ह्यन्तकभयं च मे ।।३९।।**

**इति बुद्ध्या मया चोक्तं कीनाशेन सुमानितम् ।**

(अन्वयः) एवं (गज,अश्वदानवत् विमानमपि दत्तवान्), (सुरसभायां) सन्मानं कृत्वा दानवान्तकः (देवेन्द्रः) भानुतेजोनिभं (सूर्यवत् प्रकाशमानं) कीनाशेन (यमेन) सुमानितं (प्रसिद्ध)विमानं (देहरूपं च) मे प्रादात् । किम्वन्तकासि इति वाक्यात् अन्तकभयं च मे नहि इति बुद्ध्या 'कीनाशेन सुमानितं' इति (पूर्वश्लोके) मया उक्तम् ।

(व्या) एवमिति ।। विमानं प्रसिद्धम् । देहरूपं च । प्राणत्वदशायां यावन्मम सन्निधानं तावत् कीनाशेन सुमानितम् । ज्ञानसाधनत्वाद्भानुतेजोनिभम् ।।३९।

**अहं देदीप्यमाने च विमाने मानवोत्तम ।।४०।।**
**मानितः सुमनोभिश्च कनकाम्बरभूषणैः ।**
**तद्गतानां तु देवानां मद्गतैकमनोयुजाम् ।।४१।।**
**तेषां सन्दर्शयाम्यद्य मद्वृन्दावनवैभवम् ।**

(अन्वयः) हे मानवोत्तम! अहं देदीप्यमाने विमाने च कनकाम्बरभूषणैः अलङ्कृतैः

सुमनोभिः च मानितः तद्गतानां देवानां मद्गतैकमनोयुजां तेषाम् अद्य मद्वृन्दावनवैभवं तु सन्दर्शयामि ।

(व्या) तद्गतानामिति ।। तद्गतानां शरीरादिसन्निहितानां देवानाम् ।।४१।। मद्वृन्दावन-वैभवं भगवद्विभूतिरूपात्मकं सन्दर्शयामि ।।

**नानावाहनसंस्थोहं नानामानैः सुमानितः ।।४२।।**

**नानामणिगणैर्नित्यं नानामुनिगणैस्तथा ।**
**गन्धर्वैरप्सरोभिश्च किन्नरोरगराक्षसैः ।।४३।।**

**सिद्धैः साध्यैर्मरुद्भिश्च बद्धस्नेहैः सुबुद्धिभिः ।**
**किमत्र बहुनोक्तेन मद्वैभवसमो न हि ।।४४।।**

(अन्वयः) नाना(गजतुरगविमानादि नानाविध)वाहनसंस्थः अहं गन्धर्वैः तथा अप्सरोभिः च किन्नर उरगराक्षसैः च सिद्धैः साध्यैः मरुद्भिः (मयि) बद्धस्नेहैः नाना मणिगणैः, नानामुनिगणैः सुबुद्धिभिः (जीवोत्तमत्वेन) नित्यं सुमानितः । बहुनोक्तेन किम्? मद्वैभवसमः (मम समवैभवयुक्तः) अत्र (जीवेषु) न हि (कोपि नास्ति इत्यर्थः) ।

(व्या) नानामणिगणैरिति बहुव्रीहिः तुलसीपद्माक्षधात्र्यादिमणिमालालङ्कृतैः मुनिगणैः नित्यं सुमानितः इत्यन्वयः ।।४३।। सुबुद्धिभिः गन्धर्वादिभिः मानितः । सुबुद्धिभिः अत एव ज्ञात गुरुराजजीवोत्तमत्वैः । अत एव बद्धस्नेहैः मानितः, मद्वैभवसमो न हि । वैभवयुक्त मम समः जीवेषु नास्ति इत्यर्थः । 'अहं ऋजुः' इति तात्पर्यम् ।।४४।।

**एवं महावैभवमेव भोक्ष्ये सभासभास्वप्रतिमम् ऋभूणाम् ।**
**महानुभावस्य मधुद्विषः सदा भक्तस्य किं चित्रममुत्र वैभवे ।।४५।।**

(अन्वयः) एवम् ऋभूणाम् अप्रतिमं सभासभासु (च) (अहं) महावैभवम् एव भोक्ष्ये । मधुद्विषः (मधुवैरिश्रीहयग्रीवस्य) सदाभक्तस्य महानुभावस्य (मम) अमुत्र (देवलोकेषु पारत्रिक) वैभवे किं चित्रम्? (अश्चर्यं किम् न किमपि इति भावः)

(व्या) एतानि पद्यानि स्पष्टम् ऋजुत्वसूचकानि । ऋभूणां देवानां सभासु । भास्वतां

सूर्याणां बहुसूर्यसदृशं यथा भवति तथा **महावैभवं भोक्ष्ये** । हयग्रीवप्रसादेन तादृश अनुभवप्राप्तिः नाश्चर्यरूपा ॥४५॥

**एतत् ते लेशतश्चोक्तं मम वैभवराशितः ।**
**साकल्याद् वक्तुमेवं ते नालं वर्षशतैरपि ॥४६॥**

**य एतद्वै शृणोत्यद्धा श्रद्धायुक्तो बुधाग्रतः ।**
**मद्धामपद्धतिं याति बद्धभावो मधुद्विषि ॥४७॥**

(अन्वयः) (हे विप्र!) मम वैभवराशितः ते एतत् लेशतः च उक्तम् । एवं ते साकल्यात् वक्तुं (समग्रकथने) वर्षशतैः अपि नालम् । (पर्याप्तं न भवतीति भावः) । यः एतत् (पूर्वोक्तं मम वैभवं) श्रद्धायुक्तः बुधाग्रतः (विप्रमुखतः) शृणोति वै (सः) मधुद्विषि (श्रीहयग्रीवे) बद्धभावः (सुदृढभक्तिमान् भूत्वा) मद्धामपद्धतिं (मम स्वामिनो धाम वैकुण्ठादि) याति (प्राप्नोति = अपरोक्षज्ञानसाधनमार्गं, मुक्तिसाधनमार्गं) याति ।

(व्या) साकल्येन अवर्णनीयमहिमा ऋजुत्वद्योतकः ॥४६॥ ज्ञानिगुरोः सकाशात् । वेदनिधिवृन्दावनाचार्यादयः खलु सम्यक् गुरुराजऋजुत्वं बोधयन्ति । ऋजुत्वज्ञानेन हरिभक्तिः अपरोक्षज्ञानं सत्यलोकप्राप्तिश्च भवन्तीत्यर्थः ॥४७॥

**दक्षिणांसं तु वायोर्वामांसमेव च ।**
**गृह्य सव्येतराभ्यां मे पाणिभ्यां संस्थितोऽभवम् ॥४८॥**

**दक्षिणे कर्णे वायोः कर्णे तु वामके ।**
**संविदं तु करोम्यद्य विष्णोस्तत्वस्यनिर्णये ॥४९॥**

(अन्वयः) (समत्वेन ब्रह्मवायुभ्यां मानितत्वमाह) (कदाचित् अहं देवसभासु) ब्रह्मणः दक्षिणांसं वायोः वामांसं एव च सव्य इतरां मे पाणिभ्यां गृह्य (तयोः मध्ये) संस्थितः अभवम् । दक्षिणे कर्णे वायोः वामके कर्णे तु विष्णोः (भगवतः) तत्वस्य निर्णये (निर्णयात्मकं) संविदं तु (शास्त्रं) करोमि (कुर्वे) ।

(व्या) (ऋजुत्वसाधकलिङ्गद्वयं निरूपयति द्वाभ्याम्) समत्वेन ब्रह्मवायुभ्यां मानितत्वमाह

– **ब्रह्मण इति** ।।४८।। (**संविदं** = सात्विकवादं) ।। ब्रह्मवाय्वोरावेशतः उभयमध्यगतत्वं मन्तव्यम् ।।४९।।

**रमापतेः करं गृह्य सञ्चरामि रमामि च ।**
**श्वेतद्वीपे बुधालापे सदा पापहरे परे ।।५०।।**

**श्वेतद्वीपेऽर्णवानूपे समीपे श्रीपतेरभूत् ।**
**सुधारूपे करारोपे शरीरे पुळकाञ्चनम् ।।५१।।**

(अन्वयः) सदा पापहरे परे श्वेतद्वीपे बुधालापे रमापतेः करं गृह्य सञ्चरामि रमामि च । श्वेतद्वीपे अर्णवानूपे समीपे श्रीपतेः सुधारूपे (अमृतमये) करारोपे (करस्य आरोपे मच्छिरसि निक्षिप्ते सति, मत्) शरीरे पुळकाञ्चनम् अभूत् ।

**(व्या)** हरेः करावलम्बरूपमान्यत्वमाह – **रमापतेरिति** ।।५०।। **अर्णवानूपे** = जलप्राप्ये समुद्रतीरे ।।५१।।

**(व्या)** एकस्मिन् दिने स्वप्ने अनुक्तिकारणमाह – **अत इति ।।**

**अतो मया च पूर्वेद्युर्नोक्तं स्वप्ने तव द्विज ।**
**मत्पुत्रचरणाम्भोजं भज मुक्तिर्भविष्यति ।।५२।।**

(अन्वयः) अतः हे द्विज पूर्वेद्युः (पूर्वदिने) तव स्वप्ने च मया न उक्तम् । मत्पुत्र-चरणाम्भोजं भज मुक्तिर्भविष्यति ।

**(व्या)** मत्पुत्रस्य वेदवेद्यमुनेः[(१)] ।।५२।।

**(व्या)** स्वान्तर्यामिणो वेदवेद्यान्तर्यामिणश्च हरेर्निखिलदेवमान्यत्वेन भजनं कार्यमित्य-भिप्रायेणाह – **मद्वृन्देति ।।**

**मद्वृन्दावनमध्यस्थं तद्वृन्दावनचारिणः ।**
**यद्गोपालेति नामास्य तद्गोपालाः समाययुः ।।५३।।**

---

(१) ‘अतो ब्रह्मपदे योग्याः जीवा हंसा प्रकीर्तिताः ।
तेषां परम्पराप्राप्तं यैर्ज्ञानं नियमेन तु ।
ते मुच्यन्ते न चैवान्ये गुरुर्ब्रह्मा यतो नृणाम् ।।’

**मद्वृन्दावनमध्यस्थं सद्वृन्दावनचारिणः ।**
**यद्वृन्दावनता ह्यस्य तद्वृन्दाश्च समाययुः ।।५४।।**

(अन्वयः) मद्वृन्दावनमध्यस्थं तद्वृन्दावनचारिणः यत् गोपाल इति अस्य नाम; तत् गोपालाः समाययुः । मद्वृन्दावनमध्यस्थं सद्वृन्दावनचारिणः यत् वृन्दावनता हि अस्य तत् वृन्दाः समाययुः ।

(व्या) मद्वृन्दावनमध्यस्थस्य **तद्वृन्दावनचारिणः** । वेदवेद्यमुनेर्वृन्दावनगतस्य च । हरेः । रामकृष्णरूपेण भूभारापहर्तुः हयवदनबादरायणरूपेण वेदोद्धर्तुश्च । द्विधा गोपालनामकत्वेन भूपालाः वेदपालाश्च सुग्रीवोग्रसेनपैलादयः । मद्वृन्दावनमध्यस्थः तद्वृन्दावनगतं च । सेवितुम् आययुः । तस्मात् त्वमपि भजेत्यर्थः ।।५३।।

**'मद्वृन्दावनमध्यस्थं तद्वृन्दावनचारिणः'** इति पद्यं ''मया द्विमुखतश्चोक्तं सुमुख प्राग्-द्वधाकृतम्'' इति वक्ष्यमाणपर्यालोचनाया मुखान्तरान्निसृतमिव भवति । **सद्वृन्दावनचारिणः** सतां सुग्रीवोग्रसेनादीनां भूपानां वेदेशानां च । अवनार्थं रामकृष्णरूपेण हयवदनबादरायणरूपेण च । सञ्चरतः यत्समूहपालकत्वं । तद्वृन्दाः । **मद्वृन्दावनमध्यस्थं तद्वृन्दावनगतं** च सेवितुम् आययुः । तस्मात् त्वया सर्वदेवभजनीयत्वेन विष्णोः, तत्प्रतीकत्वेन मम वेदवेद्यस्य च भजनं कार्यम् । तेन तव मान्यत्वादिसिद्धिर्भवतीति प्रकरणाभिप्रायः ।।५४।। विप्रप्रकरणं सम्पूर्णम् ।।

### ०४-०५५-६१-व्यासभक्तप्रकरणम्

(व्या) **'इदं वृन्दावनाख्यानम्'** इत्यारभ्य **'ब्राह्मणाय तु मानव'** इत्यन्तम् एकं प्रकरणं व्यासभक्तश्रोतृकप्रकरणम् ।। अत्र मान्यत्वेनोक्तविप्रसन्निहितस्वाराध्यबादरायणप्रतीकागतिप्रकारः प्रागुक्तप्रकरणद्वयाभिप्रायस्य द्वैविध्यं सूचयितुं द्विधा व्याख्येयत्वं चोच्यते । अत्र 'नन्दन' इति न द्विजसम्बोधनं सङ्गतम्, तस्य द्विजानन्दप्रदत्वानुपपत्तेः । नापि हे द्विजेति सम्बोधनं सङ्गतम्, आनन्दप्रदो भवेति पुनरुक्तेर्वैय्यर्थ्यापत्तेः । तस्मात् 'नन्दनस्तु ममानन्दं करिष्यन् व्याकरिष्यति' इति वक्ष्यमाणसमाख्यया द्विधा व्याख्यातुर्व्यासभक्तस्य सम्बोधनं सङ्गतम् ।

**इदं वृन्दावनाख्यानं सदानन्दादिसाधनम् ।**
**द्विधा व्याख्यानवक्तृत्वान्मदानन्दपरो भव ।।५५।।**

**मन्नन्दन ममानन्दप्रद सद्वन्दनादिना ।**
**विलसद्वदनाम्भोजद्विजानन्दप्रदो भव ।।५६।।**

**अहं तु गत्वा चायास्ये चिरं जीव सुखी भव ।**

(अन्वयः) सदानन्दादिसाधनम् इदं वृन्दावनाख्यानं द्विधा व्याख्यानवक्तृत्वात् मदा(मा)नन्दपरो भव । हे मन्नन्दन! ममानन्दप्रद! सद्वन्दनादिना विलसद्वदनाम्भोज-द्विजानन्दप्रदः भव । अहं गत्वा तु आयास्ये च चिरञ्जीव सुखीभव ।

**(व्या)** नन्दनत्वोपपादकं **ममानन्दप्रदेति** ।। अथवा ममानन्दप्रदं यत् सद्वन्दनं चामर-वीजनवादितेन() **(विलसद्वदनाम्भोजद्विजानन्दप्रदः)** विलसद्वदनाम्भोजस्य विप्रस्य आनन्दप्रदो भवेति । सतामानन्दादिसाधनं 'नूपुरे तूपरिप्राप्ते' इत्यारभ्य 'तद्वन्दाश्च समाययुः' (४/५४) इत्यन्तं यदिदं वृन्दावनाख्यानं तस्य द्विधा व्याख्यानवक्तृत्वात् द्विजान्तर्यामिणो ममाप्यानन्दप्रदो भव।। द्विधा व्याख्यानसमये तु त्वन्मनःप्रेरणार्थम् **अहमायास्ये** । कदा? अहं बादरायणदर्शनार्थं गत्वा, त्वदीयव्याख्यानसमयं ज्ञात्वा, व्याख्यानकाले तु तदुपयुक्तस्य आयुषः सूचनाय – **चिरञ्जीवेति** ।। तदुपयुक्तजन्मनः करणपाटवादेरपि आनुकूल्यसिद्ध्यर्थं सुखीभवेति ।।५६१/२।।

**अहं गत्वा बदर्यां तु कदर्याणां भयङ्करः ।।५७।।**

**सोदर्यादादृतो नित्यं गिरिदर्यां वसाम्यहम् ।**
**तत्रापि दृष्ट्वा श्रीवासं व्यासं भासन्तमावसम् ।।५८।।**

(अन्वयः) अहं कदर्याणां भयङ्करः बदर्यां तु गत्वा, सोदर्यात् आदृतः (सन्) नित्यम् अहं गिरिदर्यां वसामि । तत्रापि श्रीवासं व्यासं भासन्तं दृष्ट्वा आवसम् ।

**(व्या)** बदरिकाश्रमे स्वस्य व्यासदर्शनसमये यद्वृत्तं तदाह – **अहमिति** ।। **कदर्याणां** = कृपणानां दैतेयानाम् ।।५७।। **सोदर्यादिति** ।। **सोदर्यात्** श्रीमध्वाचार्यात् । **गिरिदर्यात्** तत्रत्य पर्वतगुहायाम् । **श्रीवासं** रमानिवासम् । **भासन्तं** वेदव्यासं दृष्ट्वा । तत्रापि तत्सन्निधानेपि **आवसं** वासं कृतवान् ।।५८।।

**पृच्छामि तच्छासनानि स्वच्छान् यादृच्छकानि च ।**
**तत्रानन्दादिमात्रेण मा त्रासः संसृतेस्त्वया ।।५९।।**

**कर्तव्यः सततं विष्णुः स्मर्तव्यः सृतिनाशनः ।**
**इति सम्बोधितो नित्यं संसाराम्भोधिभीतितः ।।६०।।**

**पादमूलमुपासेहं पापहारिकृपायुजः ।**

(अन्वयः) आनन्दादिमात्रेण यादृच्छकानि स्वच्छानि तच्छासनानि पृच्छामि । 'त्वया संसृतेः त्रासः मा, (तथापि) सृतिनाशनः विष्णुः सततं स्मर्तव्यः' इति सम्बोधितः (सन्) संसाराम्भोधिभीतितः पापहारिकृपायुजः पादमूलं अहं उपासे ।

(व्या) यादृच्छकानि भगवदिच्छानिमित्तकानि स्वच्छानि निर्मलानि शासनानि पृच्छामि ।। 'त्वया संसृतेः सकाशात् त्रासो न कर्तव्यः, त्वदावरणस्य(लिङ्गशरीरस्य) दग्धपटायमानत्वात् । सृतिनाशनः बन्धपरिहारकः विष्णुः सततं त्वया स्मर्तव्यः' इति आनन्दादिमात्रेण केवलानन्दादिस्वरूपेण व्यासेन सम्बोधितः ।। पापहारिकृपायुजः पापापहारिणीया कृपा तया युक्तस्य बादरायणस्य विष्णोः व्यासात्मकस्य पादमूलम् । संसारसमुद्रभयात् । उपासे उपास्ये ।।६०।।

**इति जानन्ति मां नित्यं ये नराः पापशीलिनः ।।६१।।**

**तेषां पापानि हर्ताहं हयग्रीवस्य चाज्ञया ।**

(अन्वयः) पापशीलिनः ये नराः इति मां नित्यं जानन्ति हयग्रीवस्य चाज्ञया अहं तेषां पापानि हर्ता ।

(व्या) इतीति ।। पापशीलिनोपि ये नराः मां नित्यं जानन्ति । तेषां पापानाम् अहं हयग्रीवस्य आज्ञया परिहर्ता ।।६११/२।।

(व्या) (तस्मिन् बदरिकाश्रमे श्रीवेदव्यासकृतपरमप्रसादम् आह – शिष्याणामिति)

**शिष्याणामयुते तस्मिन् पुष्पाणां कृतमालिकाम् ।।६२।।**

**पुष्यरागप्रभां दिव्यां तुष्यन् मह्यं ददौ मुदा ।**

(अन्वयः) तस्मिन् पुष्यरागप्रभां दिव्यां पुष्पाणां कृतमालिकां शिष्याणामयुते (सति) तुष्यन् मुदा मह्यं ददौ ।

(व्या) शिष्याणामिति ।। तदा तस्मिन् काले तस्मिन् बदरिकाश्रमे शिष्याणाम् अयुते अयुतादिसङ्ख्यानां शिष्याणां मध्ये पुष्यरागप्रभां पुष्यरागप्रभोपमप्रभायुक्तां दिव्यां देवयोग्यां पुष्पाणां समूहैः (कृतमालिकां) कृतां मालिकां मह्यं (भगवान् श्रीव्यासः) तुष्यन् सन् ददौ ।।६२१/२।।

(व्या) (तदा भगवान् व्यासः तत्रस्थशिष्यगणान् सम्बोधयन् मां एवमाह । किमिति चेत् 'भारतार्थ'मिति ।)

**''भारतार्थं समाख्याय मारुतेरितबुद्धिना ।।६३।।**

**कीर्तिमावृत्य लोकेस्मिन् मूर्तिं प्राथ्यार्मुदाददीः ।**
**युक्त्याख्यमल्लिकाभिश्च भक्त्या मत्पादमर्चयन् ।।६४।।**

**कृत्यानया सुतुष्टोऽहं मत्या मालां ददामि ते ।**

(अन्वयः) भारतार्थं समाख्याय मारुतेरितबुद्धिना प्राथ्यार्ं मूर्तिम् उदाददीः; युक्त्याख्यमल्लिकाभिश्च मत्पादं भक्त्या अर्चयन् (सन्) अस्मिन् लोके कीर्तिमावृत्य (असि), अनया कृत्या अहं सुतुष्टः सन् ते मालां ददामि ।

(व्या) भारतार्थमिति ।। भारतार्थं समाख्याय भारतस्य लक्षाभरणाख्यां व्याख्यां कृत्वा, अस्मिन् लोके कीर्तिमावृत्य विस्तीर्य, मारुतेरितबुद्धिना वायुप्रेरितबुद्धिना प्रह्लादावतारेण व्यासरायमुनिना, प्राथ्यार्ं मूर्तिं मम मूर्तिं (व्यासमुष्टिकाम्) उदाददीः आनीतवानसि ।। युक्ताख्यमल्लिकाभिः इति ।। युक्तिमल्लिकाग्रन्थोक्ताभिः युक्तिरूपमल्लिकाभिः मत्पादं पूजयन् सन् मम मूर्तिमुपाददीः इति पूर्वेणान्वयः ।।६४।। अनया कृत्या मध्यवाटं प्रति मन्मूर्त्यानयन-रूपया, युक्तिमल्लिकाकरणाख्यया, लक्षाभरणरचनाख्यया च कृत्या तदनुकूलया च मत्या तुष्टः सन् ते तुभ्यं मालां ददामि ।।६४१/२।।

**क्षुत्क्षामतृट्परीहर्त्री दात्री मुक्तेश्च पद्धतिम् ।।६५।।**
**कृत्या मया तु दत्तेयं त्रायतां त्वां सदैव तु'' ।**
**इति मामुक्तवान् व्यासो दासं भासुरविग्रहः ।।६६।।**
**मन्दहासान्वितो नित्यं कन्दाशनरतं मुनिम् ।**

(अन्वयः) कृत्या मया तु दत्तेयं माला क्षुत्क्षामतृट्परीहर्त्री मुक्तेः पद्धतिं च दात्री त्वां सदैव त्रायताम् । इति भासुरविग्रहः नित्यं मन्दहासान्वितः व्यासः कन्दाशनरतं मुनिं दासं माम् उक्तवान् ।

(व्या) क्षुत्क्षामेति ।। अनया कृत्या मया दत्तेयं माला क्षुत्क्षामतृट्परिहर्त्री मुक्तेः

पद्धतेः प्रदात्री त्वां सदा त्रायताम्[१] ।। इति मामिति ।। इति भासुरविग्रहो व्यासः दासं मां प्रति उक्तवान् ।।६६।।

**सुखोपविष्टः संहृष्टः सुदृष्टिर्विष्टरश्रवाः ।।६७।।**

**दृष्टवांस्तपसायुक्तं पुष्टाङ्गं मां धियोत्कटम् ।**
**पस्पर्श पाणिना मेङ्गं प्राणनाथप्रियो ह्यसौ ।।६८।।**

**द्वैपायनो महायोगी वैशम्पायनमानितः ।**

(अन्वयः) सुखोपविष्टः संहृष्टः सुदृष्टिविष्टरश्रवाः तपसायुक्तं पुष्टाङ्गं धियोत्कटं मां दृष्टवान् । असौ वैशम्पायनमानितः महायोगी प्राणनाथप्रियः हि । (तस्मात् तत्पदयोग्यं) मे अङ्गं पाणिना पस्पर्श ।

(व्या) मन्दहासान्वित इति ।। मन्दहासान्वितः सुखोपविष्टः विष्टरश्रवाः[२] व्यासात्मको विष्णुः । (कन्दाशनरतं मुनिम्) धियोत्कटं बुद्ध्या रुद्राद्यपेक्षया अधिकं तपसायुक्तम् । अथापि पुष्टाङ्गं मां दृष्टवान् ।। पस्पर्शेति ।। मे अङ्गं पाणिना पस्पर्श । हि यस्मात् । वैशम्पायन-मानितः (वैशम्पायनस्थचतुर्मुखस्तुतः) महायोगी असौ द्वैपायनः प्राणनाथप्रियः मुख्यप्राण-प्रियः । तस्मात् तत्पदयोग्यं मां पस्पर्श ।।६८१/२।।

**यादृक्पारत्रिकं विप्राद्वैभवं भुवि कीर्तितम् ।।६९।।**

**तादृक् सार्वत्रिकं नैव तपसश्चापि दुश्चरात् ।**
**नरनारायणो देवो वरनारीपरायणः ।।७०।।**

**हरेः रामायणं सार्थं स्वराट् पारायणं व्यधात् ।**

(अन्वयः) विप्रात् (स्वप्ने) यादृक् पारत्रिकं (मम) वैभवं भुवि कीर्तितं (कथितं)

---

(१) 'रामस्य वाण्या मणिमञ्जुमाला व्याजेन दीर्घां करुणां बबन्ध' – इति श्रीसुमध्वविजये सूचितमार्गेण श्रीहनूमान् प्रति श्रीसीतादेवीद्वारा श्रीहरिः प्रसादं दत्तवान् हि । तथाहि इदं प्रकरणमिति स्मर्तव्यम् ।

(२) 'विष्टरश्रवाः = विष्णुः' इत्यमरः ।
**'उत्पाट्य वृक्षं दैत्येन्द्रः शतशाखं महाशिखम् ।**
**तेन तं योधयामास विष्टरश्रवसं प्रभुम् ।।'** इति हरिवंशे भविष्यत्पर्वे ५१/७ (शब्दकल्पद्रुमः)

**तादृक् (मम वैभवं) दुश्चरात् तपसः अपि सार्वत्रिकं नैव (भवति) । वरनारी परायणः नरनारायणो देवः हरेः रामायणं सार्थं स्वराट् पारायणं व्यधात् ।**

(व्या) **यादृगिति** ।। विप्रात् स्वप्ने मदुपदेशयोग्यात् ब्राह्मणात् **यादृग्वैभवं भुवि कीर्तितं** कथितम् । (मम) तादृग्वैभवम् **दुश्चरादपि तपसः सार्वत्रिकं** रुद्रादिजीवसाधारणं **नैव** भवति ।। **नरनारायण इति** ।। **वरनारीणाम्** उर्वश्याद्यप्सराणां **परायणः नरनारायणो देवः हरेः** मूलरूपिणः सकाशात् उत्पन्नं **रामायणं सार्थं व्यधात्** ।।७०१/२।।

(व्या) (श्रीहरिभजनानन्तरं गुरुभजनं निष्कामत्वेन कुर्वे इत्याह **कदळीवनमध्यस्थमिति**)

**कदळीवनमध्यस्थं द्विदळीकृतराक्षसम् ।।७१।।**

**सदळीकृतपादाब्जं मदळीकं विना भजे ।**
**इतीयं बादरी वृत्तिर्मधुरालापचित्रिता ।।७२।।**

**धरित्री पापहानिं च दात्री सत्यं मयोदितम् ।**

**(अन्वयः) कदळीवनमध्यस्थं द्विदळीकृतराक्षसं सदळीकृतपादाब्जं मदळीकं विना भजे । इति इयं बादरीवृत्तिः मधुरालापचित्रिता धरित्री पापहानिं च दात्री मया उदितं सत्यं ।**

(व्या) **कदलीवनमध्यस्थमिति** ।। **सदलीकृतपादाब्जं** सज्जनाः भ्रमरीकृताः येन तथोक्तं पादाब्जं यस्य सः तं हनुमन्तम् **अलीकं विना** क्षुद्रफलेच्छां विना **भजे** ।। **इयं** बादरी बदरिकाश्रमसम्बन्धिनी मम वृत्तिः । **मधुरालापचित्रिता** बादरायणकृतैः मधुरालापैः विचित्रिता । **पापहानिप्रदा** । सज्जनानां **धरित्री** आश्रयभूता । **मयोदितं** इदं **सत्यम्** ।।

**"भारतं भारतीभर्ता कीर्तयन् सेवते हरिम् ।।७३।।**

**मारुतो मारुतस्त्वं हि नित्यं कीर्तय भारतम् ।**

**(अन्वयः) (यथा) भारतीभर्ता मारुतः नित्यं भारतं कीर्तयन् (सन्) हरिं सेवते । त्वं भाविमारुतः हि (तस्मात्) नित्यं भारतं कीर्तय ।**

(व्या) **भारतमिति** ।। यथा **भारतीभर्ता मारुतः नित्यं भारतं कीर्तयन् सन् हरिं सेवते** । (तथा त्वमपि हि यस्मात् भाविमारुतः तस्मान्नित्यं भारतं कीर्तय इत्यन्वयः)।।

**समीरणो जगत्प्राणः कारणात् कुरुनन्दनः ।।७४।।**

**भूत्वा रणमणिं कृत्वा हत्वा सर्वगुणाधमान् ।**
**कृष्णानन्दस्य पात्राणि पूरयामास वीर्यवान् ।।७५।।**

**भीमो मागधभीमस्य मारो धीरपराक्रमः ।**
**रोदयामास देवारीन् बादरायणसादरः ।।७६।।**

(अन्वयः) समीरणो जगत्प्राणः कारणात् कुरुनन्दनो भूत्वा, रणमणिं कृत्वा, सर्वगुणाधमान् हत्वा, कृष्णानन्दस्य पात्राणि पूरयामास । वीर्यवान् भीमः पराक्रमः धीरः मागधभीमस्य मारः, देवारीन् रोदयामास, बादरायणसादरः प्रभयायुक्तश्च बभूव ।

**(व्या) समीरणो** जगच्चेष्टको वायुः **कारणात्** कुरुनन्दनो भूत्वा (जगद्भारहारिकृष्णस्य सेवाङ्गं भवानीति कारणात्कुरुकुलेजातः सन्), **रणमणिं** उत्तमयुद्धं **कृत्वा**, **सर्वगुणाधमान्** दुर्योधनादीन् हत्वा, कृष्णायाः द्रौपद्याः आनन्दस्य **पात्राणि पूरयामास** ।। **वीर्यवान् भीमः मागधभीमस्य** = सज्जनभयङ्करस्य जरासन्धस्य **मारो** मारकः सन्, **देवारीन्** देवशत्रून् **रोदयामास** । बादरायणसादरः व्यासे आदरसहितः ।।७६।।

**बभूव प्रभया युक्तः, स्वभयादभयं न भूत् ।**
**सभास्वशुभभावानां भारतीभावक्षोभिनाम् ।।७७।।**

**कुत्सितं कीचकं छित्वा पाचको याचको यथा ।**
**शोचकः सर्वदैत्यानां मोचको व्यसनात् सतः" ।।७८।।**

**इति मामुक्तवान् व्यासो दासं भासुरविग्रहः ।**
**मन्दहासान्वितो नित्यं वृन्दे हासं समर्पयन् ।।७९।।**

(अन्वयः) सभासु अशुभभावानां भारतीभावक्षोभिनां कुत्सितं कीचकं छित्वा, याचकः यथा पाचको भूत्वा सतः व्यसनात् मोचकः सर्वदैत्यानां शोचकः (च बभूव) । इति मां भासुरविग्रहः व्यासः मन्दहासान्वितः नित्यं वृन्दे हासं समर्पयन् (सन्) उक्तवान् ।

**(व्या)** (स भीमः) **प्रभयायुक्तश्च बभूव** । **सभासु अशुभभावानाम्** अशुद्धमनोरथानाम्

**भारतीभावक्षोभिनां** भारत्यां द्रौपद्यात्मिकायां भावेन रागेण क्षोभवतां चित्तविक्षेपवताम्, अथवा भारत्याः वेदवाण्याः भावे अभिमततात्पर्ये क्षोभवताम् । अत एव **अशुभभावानाम्** अन्धन्तमः प्रापकत्वेन अशुद्धे जीवाभेदादौ अभिप्रायवताम् । **स्वभयात्** (स्वेन भीमेन) अनिष्टभयात् तेषां दैत्यानाम् **अभयं** सौख्यं **न भूत्** नाभूत् । अलौकिकोयं प्रयोगः ।।७७।।

**कुत्सितमिति ।। कीचकं** विराटशालकं **छित्वा** संहृत्य, तत्सदने **पाचकः** सन् **सर्वदैत्यानां शोचकः, सतः** सज्जनसमूहस्य **मोचकश्च** ।।७८।। तथा त्वमपि मारुतः भाविकल्पे मारुतो भविता । तस्मात् त्वमपि मारुतवत् **नित्यं भारतं कीर्तय इति मां प्रति भासुरविग्रहो व्यासः मन्दहासान्वितः वृन्दे हासं समर्पयन् सन् उक्तवान्** ।।७९।।

**इतीमां बादरीवृत्तिमादराद्यस्तु वक्ष्यति ।**
**बादरायणसम्प्रीतिं सादरं याति निश्चयात् ।।८०।।**

**पूर्णप्रज्ञस्तु मां दृष्ट्वा पूर्णसन्तोषसम्भृतः ।**
**पूर्णानन्दश्च व्यासोपि पूर्णानन्दास्ततोपरे ।।८१।।**

(अन्वयः) इति इमां बादरीवृत्तिं यः तु आदरात् वक्ष्यति (सः) निश्चयात् बादरायणसम्प्रीतिं सादरं याति; (न केवलं श्रीबादरायणस्य एव मयि प्रीतिः अभूत् किन्तु सर्वेषामपि अभूत् इत्याह) पूर्णप्रज्ञः तु मां दृष्ट्वा पूर्णसन्तोषसम्भृतः पूर्णानन्दः (अभवत्) ततः व्यासः (श्रीवेदव्यासात् श्रीमदाचार्यात् च) अपरे (अन्ये) अपि (तत्रत्य सर्वे व्यासशिष्यांश्च मां दृष्ट्वा) पूर्णानन्दाः (परिपूर्णानन्दा बभूव) ।।

**(व्या)** उक्त कथाज्ञानस्य फलमाह – **इति मामिति ।।** (**बादरीवृत्तिं** बदरीयात्रायां प्रवृत्तकथां पूर्वोक्तां यस्तु पारायणं करोति शिष्याय श्रावयति वा सः बादरायणानुग्रहं प्राप्नोतीत्यर्थः) ।। **पूर्णप्रज्ञस्त्विति ।।** श्रीमध्वाचार्यः **मां दृष्ट्वा पूर्णानन्दः** (बहुव्रीहिः)। **ततः** व्यासात् आचार्याच्च **अपरे** अन्ये । **मां दृष्ट्वा पूर्णानन्दाः** ।।८१।।

**मानवस्वामिनो वार्तां कामिनां स निवेद्य(सन्निवेद्य) मे ।**
**मामेव पुनरागन्ता ब्राह्मणः शृणु मामकः ।।८२।।**

**राजभृत्यो यथा वार्तां सर्वेषां स निवेद्य(सन्निवेद्य) च ।**
**पुना राजानमेवैति मनांस्यस्य प्रहर्षयन् ।।८३।।**

(अन्वयः) (विप्रस्य मान्यत्वे कारणं चाह) यथा राजभृत्यः मानवस्वामिनां वार्तां शुभवार्तां सर्वेषां (तदीयानां) कामिनां सन्निवेद्य च (तेषां) मनांसि प्रहर्षयन् (सन्) पुना राजानं एव एति; तथा मे वार्तां (इदं वृन्दावनाख्यानं) कामिनां (जिज्ञासूनां) सन्निवेद्य (अयं) ब्राह्मणः मां एव (मां प्रति) आगन्ता; तस्मात् शृणु; अयं मामकः।

**(व्या) मानव इति ।। यथा राजभृत्यः मानवस्वामिनः** राज्ञः **शुभवार्तां सर्वेषां** तदीयानां **कामिनाम्** तदीयशुभवार्तापेक्षावतां सन्निवेद्य, तेषां मनांसि प्रहर्षयन् सन् (स्वपुन-रागमनेन अस्य राज्ञः मनांसि प्रहर्षयन् सन्) पुनः **राजानमेव एति** । तथा **मम वार्तां कामिनां** (मोक्षकामवतां) सन्निवेद्य, **मां** प्रति **आगन्ता अयं ब्राह्मणः** । तस्मात् **अयं मामकः** ।।८२-८३।।

**शुभस्य वार्तामाहर्तुः सर्वे कुर्वन्ति मान्यताम् ।**
**तथा मद्वैभवाहर्तुः सर्वे कुर्वन्तु मान्यताम् ।।८४।।**

(अन्वयः) (यथा) सर्वे शुभस्य वार्ताम् आहर्तुः मान्यतां कुर्वन्ति, तथा सर्वे मद्वैभवाहर्तुः मान्यतां कुर्वन्तु ।

**(व्या)** (शुभस्य जयादिविषयस्य मङ्गळस्वरूपस्य चक्रवर्तिनः इति वा । वार्तां वृत्तान्तं सन्देशम् आहर्तुः सेवकस्य सर्वे मान्यतां कुर्वन्ति) **मद्वैभवाहर्तुः** सज्जनेषु मदीयमहिमोपदेष्टुः अस्य विप्रस्य **सर्वे** मद्भक्ताः **मान्यतां कुर्वन्तु** ।।८४।।

**मद्वार्तं मद्गतप्राणं ब्राह्मणं प्रापणं गुणान् ।**
**येऽवजानन्ति नाकीन्द्रभृत्यं मद्द्रोहिणश्च ते ।।८५।।**

**मद्द्रोहान्नरकानेव परकायप्रवेशिनः ।**
**भूत्वा भविष्यन्ति भूमौ भूतप्रेतपिशाचकाः ।।८६।।**

**तस्मात् कुर्वन्तु सन्मानं ब्राह्मणाय तु मानवाः ।**

(अन्वयः) मद्वार्तं मद्गतप्राणं गुणान् प्रापणं च नाकीन्द्रभृत्यं ब्राह्मणं ये अवजानन्ति ते मद्द्रोहिणः । मद्द्रोहात् नरकानेव (प्राप्नुवन्ति) भूमौ भूतप्रेतपिशाचकाः भूत्वा परकायप्रवेशिनः भविष्यन्ति । तस्मात् मानवाः ब्राह्मणाय तु सन्मानं कुर्वन्तु ।

**(व्या) मद्वार्तं** मद्विषयिण्याः वार्तायाः वक्तारम् । **मद्गतप्राणं** मत्पूजासाधनत्वेन सङ्कल्पितेन्द्रियवन्तम् । **गुणान् प्रापणं** गुणानां (गुणानां ज्ञानादिगुणवर्धनं) प्रापकम् । नाकीन्द्रस्य बादरायणस्य मम च भृत्यं **ये** दुर्जनाः **अवजानन्ति ते मद्द्रोहिणः** ।।८५।। **मद्द्रोहादिति ।। मद्द्रोहात् नरकानेव** प्राप्नुवन्ति । तदनन्तरं **भूमौ भूतप्रेतपिशाचका भूत्वा परकायप्रवेशिनः** परशरीरप्रवेशिनः भविष्यन्ति ।।८६।। **तस्मादिति ।। तस्मात् मानवाः** देवपक्षिणः (मुक्तियोग्याः) मद्भक्ताय **ब्राह्मणाय सन्मानं कुर्वन्तु** ।।८७।। **(मानवाः =** मनुवंशजाता राजानः । श्रीहरिगुरुस्वोत्तमद्रोहादि कदापि, केनापि, कस्मिंश्चित् काले न कार्यं इति भावः ।)

एवं बदरिकाश्रमवृत्तान्तकथनेन, 'द्विधा व्याख्यानवक्तृत्वात् ममानन्दपरो भव' इत्युक्तस्य व्याख्यातुः व्याख्यानजन्येन पुण्येन, यथा भारतव्याख्यानेन युक्तिमल्लिकाख्यग्रन्थकरणेन व्यास-(मुष्टिका)प्रतीकानयनेन च मयि बादरायणप्रीतिः । हनुमद्भीममध्वाख्यस्य श्रीमदाचार्यस्य स्नेहः । भाविकल्पे समीरभावः (तदानीं) हनुमद्भीममध्वरूपेण दुष्टापकारः शिष्टोपकारश्च । तथा (अन्येषां भक्तानां) स्वयोग्यतानुसारेण भाविफलप्राप्तिश्च भविष्यतीति फलं सूचितं भवति । तस्मान्मुख्यप्राणसदृशे मयि सन्निहितो बादरायणः, अहं च भजनीय इत्यपि प्रतिपादितं भवति ।

हनुमद्भीममध्वसादृश्यकथनेन बळित्थेत्यादिमन्त्रोक्तमाहात्म्ययोग्यत्वं च सूचितं भवति ।। व्यासभक्तप्रकरणं सम्पूर्णम् ।।

### ०४-०८७-०९२-वादिराजभट्टप्रकरणम्

**(व्या) 'तन्मानोपि'** इत्यारभ्य अध्यायान्तं वादिराजभट्टाख्यश्रोतृकं प्रकरणम् ।

**तन्मानोपि ममैवेह तदन्तर्यामिणो मुने ।।८७।।**

**ब्राह्मणस्य मुखेनैव चेदमुक्तमिति प्रभो ।**
**मा कुरु त्वमविश्वासं विश्वासं कुरु सर्वथा ।।८८।।**

(अन्वयः) **हे मुने! तन्मानः अपि इह तत् अन्तर्यामिणः मम एव । प्रभो! ब्राह्मणस्य मुखेनैव इदं उक्तम् इति च अविश्वासं मा कुरु, (किन्तु) सर्वथा विश्वासं कुरु ।**

**(व्या) तन्मानोपीति ।। हे मुने** वादिराजाख्य! **तन्मानः** विप्रसन्मानः कृतश्चेत्, **सः ममैव** सन्मानः कृतो भवति ।।८७।। (तदन्तर्यामिणः इति हेतुगर्भविशेषणम् । विप्रे आवेशरूपेण

मम विद्यमानत्वादित्यर्थः) (**हे प्रभो मठाधिपते! वादिराजाख्य**) एतदपि वृत्तान्तं ब्राह्मणमुखेनै-वोक्तम् । **इत्यविश्वासं सर्वथा मा कुरु** ।।८८।। (प्रत्युत अज्ञानिब्राह्मणद्वारा सम्प्राप्तपद्यानां माहात्म्यं पर्यालोचनेन इदम् ऋजुस्थगुरुराजकृतमिति निश्चित्य सर्वथा सम्पूर्णम् अप्रामाण्य-शङ्कारहितं यथा भवति तथा विश्वासं कुरु)।।

**(व्या)** (श्रीवेदव्यासादिदर्शनार्थं बदरीं गतस्य मम श्रीव्यासवचनं वक्ष्यामि । श्रुणुष्व । श्रीबादरायणः मां प्रति एतत् उक्तवान्) ।

**''तव वैभवविख्यात्यै भुवि को वर्तते युवन् ।**
**वद तं वदतांश्रेष्ठ त्वव तं त्ववतांवर ।।८९।।**

**(अन्वयः) हे युवन्! तव वैभवविख्यात्यै कः भुवि वर्तते; हे वदतांश्रेष्ठ! तं वद. अवतांवर! तं तु अव.**

**(व्या)** तत्कुतः इत्यत आह – **तवेति ।। तववैभवविख्यात्यै** तव महिम्नः ख्यात्यर्थं विप्रं विना अस्य कः पुरुषो वर्तते? अन्यस्य तद्वत् ख्यापनोपयुक्तपुण्यरहितत्वात् । (**हे युवन्** युक्तिज्ञानादिपूर्ण ऋजुदेव! अन्यः कः वर्तते? तं वद । हे वदतां तु श्रेष्ठ! तादृशः नास्त्येव । तस्मात् अवतां तु वर! तं विप्रम् **अव** सम्यक्पालय ।।८९।।) अयं ब्राह्मण एव ख्यापकः ।।८९।।

**शिबिकामधिरोप्यार्तं शुभवार्तां च वाचकम् ।**
**अभयं तस्य दत्वा त्वमभरस्त्वं द्विजोत्तम'' ।।९०।।**

**(अन्वयः) हे द्विजोत्तम! शुभवार्तां च वाचकं शिबिकाम् अधिरोप्य, तस्य अभयं दत्वा, आर्तं तं त्वं अभरः ।**

**(व्या) शिबिकामिति ।। शुभस्य** त्वन्महिमारूपस्य **वार्तां** कथकं ब्राह्मणं **शिबिका-मारोप्य** अधिरोप्य, तस्य अभयं दत्वा, अभरः विप्रभरणं पालनरूपं कृतवानसीति उक्तवान् ।।९०।।

**इति मामुक्तवान् व्यासो दासं भासुरविग्रहः ।**
**मन्दहासान्वितो नित्यं वृन्दे हासं समर्पयन् ।।९१।।**

**तस्माद् द्विजस्य सन्मानं सुजनोत्तम तं कुरु ।।९२।।**

(अन्वयः) इति भासुरविग्रहः व्यासः मन्दहासान्वितः भूत्वा वृन्दे हासं समर्पयन् (सन्) मां दासं (प्रति) उक्तवान् । तस्मात् हे सुजनोत्तम तं द्विजस्य सन्मानं कुरु. (त्वया कृतं चेत्, सर्वे कुर्वन्ति)

**(व्या)** (**हे द्विजोत्तम** इति गुरुराजं प्रति सम्बोधनं बादरायणकृतं ज्ञेयम् ।। इति भासुरशरीरः वेदव्यासः **नित्यं मन्दहासान्वितः** ऋषिवृन्दे स्थित्वा मन्दहासं नूतनतरं कुर्वन् मां प्रति विप्रानुग्रहार्थं वचनमुक्तवान् । **'अभरः'** इति लङः भरिष्यतीति लृडर्थः । 'एष्यत्तु निश्चितं यत्तु तदतीतत्वेन भण्यते' इति वचनात् । वृन्दावनाचार्यजन्मनि विप्रस्य एतादृशरक्षा प्राप्ता प्रमिता ।।९१।।) **तस्मादिति ।। तस्मात्** बादरायणेनैवमुक्तत्वात् **हे सुजनोत्तम** (वादिराजाख्य) **तं** 'जनैरवेद्यविभवम्' इत्यनेनोक्तं विप्रसन्मानं कुरु ।।९२।। एवमध्यायचतुष्टयात्मके अस्मिन् भजनपर्वणि प्रथमाध्याये 'एवं निशम्ये'ति पद्येन भजनस्य कर्तव्यत्वमुक्तम् । द्वितीयाध्याये स्वान्तर्यामिणः, तृतीयाध्याये स्वस्य, अस्मिन्नध्याये स्वभक्तानां भजनीयत्वमुक्तम् । भजनसाधन-भक्तिजनकज्ञानविषयवैभवान्यपि सङ्क्षेपतः कथितानि । पञ्चमादिषु प्रपञ्चनं तु भक्तानां विशेष-जिज्ञासानुसारेणेति ज्ञातव्यम् ।।९३।। वादिराजभट्टप्रकरणं चतुर्थप्रकरणं सम्पूर्णम् ।।

**एतत्सर्वं स्वाप्रपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्रपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

**(व्या)** (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ॥**

। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे चतुर्थोऽध्यायः समाप्तः ।

**(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्तिः, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।**

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा ।

**मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक-ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य-जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकं अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**।। इति श्रीस्वाप्नवृन्दावनाख्यानव्याख्याने अलौकिकविभागे भजनपर्वणि चतुर्थाध्यायः ।।**

**।। श्रीमध्वान्तर्गतकृष्णार्पणमस्तु ।।**

## ०५-०००-पञ्चमाध्यायः

(व्या) हरिः ॐ ।। अध्यायचतुष्टयोक्तभजनत्रयसाधनभक्त्यर्थं वैभवमुच्यते सप्तभिरध्यायैः । एतदाख्यानोक्तार्थे विश्वासरहितानां गुरूपदेशयोग्यत्वाभावरूपम् अनिष्टम् उच्यते । तत्किमर्थम् भक्तानां विश्वासमुत्पादयितुम् – **अस्यामिति ।। व्यासस्यैवाज्ञया** इत्यनेन । बादरायणाभि-मतार्थस्य एतदध्यायप्रतिपाद्यत्वं सूचितं भवति । कृतिमात्रे अविश्वासफलस्य एतदध्यायोपक्रमे कथनस्य सङ्गत्यभावात् । (प्रथमश्लोके उक्तमनिष्टं न केवलं पञ्चमाध्यायोक्तप्रमेयाविश्वासिनाम् । किन्तु कृतिमात्रे यत्र कुत्रापि अविश्वासेऽपि अत्रोक्तमनिष्टं दुर्वारमेव । सर्वस्य ऋजुप्रणीतत्वात्, सर्वस्य निर्दोषत्वात् निर्मूलशङ्कायाः पापमूलत्वात् । कृतिमात्रे अविश्वासी अयोग्यः तस्मात् एतदध्यायोक्तप्रमेयेष्वविश्वासी तु तत एव अयोग्यः इति सम्भवता प्रमाणं कैमुत्ययुक्तिश्च सूचिता भवति ।

निरवकाशकृतिपदघटित 'अस्यां मम कृतौ' इति श्लोकभागेन स्वारसिकी एव सङ्गतिः । व्यासदर्शनानन्तरं व्यासानुग्रहात् प्राप्तकृतिविषयकवरदानस्य उल्लेखो आकाङ्क्षित एव । प्रासङ्गिकी वा सङ्गतिः साध्वी । भजनस्य पूर्वाध्यायेन निरूपणानन्तरं वैभवनिरूपणोपक्रमे अस्यां कृतौ विश्वासकर्तव्यत्वबोधनम् अवसरप्राप्तम् । तस्मिन् विषये पूर्वाध्यायान्ते प्रसक्तव्यासाज्ञायाः उल्लेखश्च युक्त एव । न हि अध्यायमात्रं दृष्ट्वा व्यासो एवम् आज्ञा कृतवान् । किन्तु निखिलकृतिं मनसास्वीकुर्वन्नेव । तस्मात् 'व्यासस्यैव आज्ञया कृतौ' इति श्लोकभागेन पूर्णकृतिस्थनिखिलप्रमेयजातं व्याससम्मतमिति सूचयति । अथवा चतुर्थाध्याये वादिराजभट्टस्य कृतिमान्यत्वज्ञापनानन्तरम् । एतस्मिन् पञ्चमाध्याये लक्ष्मीपतिं प्रति कृतिमहत्वं बोधयित्वा, वैभवं वर्णयित्वा, प्रवचनेन कृतिप्रचारार्थं तं शिक्षयति – **अस्यां मम कृतौ इति ।।** अस्मिन् पक्षे प्रथमश्लोकद्वयमपि लक्ष्मीपतिश्रोतृकमपि भवति । तत्र कृतिमहत्ववर्णनरूपमाद्यम् । व्यासनमस्काररूपं द्वितीयम् । ततश्च लक्ष्मीपतिं प्रति आज्ञां विधत्ते **लक्ष्मीपते** इत्यादिना।।)

### १. विप्रप्रकरणम्।। श्लोकाः (१८२)

**हरिः ॐ।।**

**अस्यां मम कृतौ यस्य विश्वासो नास्ति दुर्मतेः ।**
**तस्मिन्नाशास्यता न स्याद्व्यासस्यैवाज्ञया हरेः ।।१।।**

(अन्वयः) अस्यां मम कृतौ यस्य दुर्मतेः विश्वासः नास्ति (तस्य) हरेः व्यासस्य आज्ञया तस्मिन् आशास्यता एव न स्यात् ।

**सर्वैर्गिरीन्द्रसदनैर्मदनोपिदारैर्दूरीकृतश्च बदरीपुरवासिभिस्तैः ।**
**यस्याश्रयात् सकलदैवतदैवतेशं व्यासं सुशान्तमनिशं मनसा स्मरामि ।।२।।**

(अन्वयः) यस्याश्रयात् गिरीन्द्रसदनैः बदरीपुरवासिभिः अपिदारैः तैः मदनः दूरीकृतः (तं) सकलदैवतदैवतेशं सुशान्तं व्यासम् अनिशं मनसा स्मरामि ।

**(व्या)** पर्वारम्भे मङ्गलमाचरति – **सर्वैरिति** ।। 'हयग्रीवं स्मरामी'त्यनुक्त्वा 'व्यासं स्मरामी'त्युक्त्वा तस्य विशेषेण प्रतिपाद्यत्वमुक्तं भवति । **अपिदारैः** = यतिभिः । अपिशब्दस्य गर्हार्थत्वात् 'गर्हिताः दाराः यै स्ते अपिदाराः' इति विग्रहः । '**गिरीन्द्रसदनैः** बदरिकाश्रम-वासिभिश्च यस्याश्रयात् मदनो दूरीकृतः' इति कामोपद्रवनिवारकत्वेन यतिपूज्यबादरायण-वृत्तान्तमुच्यत इति सूचितं भवति ।।

२. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (३ऽ१५)

**(व्या)** '**लक्ष्मीपते**'रित्यारभ्य '**कुतः शरः प्रयोक्तव्योसुरस्यायोग्यबुद्धिनः**' इत्यन्तं लक्ष्मी-पतिनामक व्यासभक्तश्रोतृकं प्रकरणम् – **लक्ष्मीपतेरिति** ।।

**लक्ष्मीपते सूक्ष्ममते मत्कथामृतवारिणा ।**
**सतामाध्यात्मिकाद्यग्निं शमय त्वं सुखीभव ।।३।।**

**त्रिवाचापि मया चोक्तं तव बुद्धिर्यथा तथा ।**
**कुरु विप्रस्य वचनं न मृषेति विचिन्तय ।।४।।**

(अन्वयः) हे लक्ष्मीपते! मत्कथामृतवारिणा सतां आध्यात्मिकादि अग्निं शमय; सुखी (च) भव । त्रिवाचा अपि मया चोक्तं तव बुद्धिः यथा तथा कुरु; विप्रस्य वचनं मृषा इति न विचिन्तय ।

**(व्या)** (**हे लक्ष्मीपते!** मदनुग्रहेण ममऋजुत्वादिसूक्ष्मप्रमेयज्ञ! मन्महिमा वर्णनेन मुक्ति-योग्यसदाचारसम्पन्नसाधूनाम् आधिदैविकआधिभौतिकनामकतापत्रयं **निवारय** । मम किं प्रयोजनम्? इत्यत आह – **सुखी भव** ।। कर्तव्यं कृत्वा, 'कृतसाधनोऽहम्' इति ज्ञानेन

अपरोक्षज्ञानं अविलम्बेन भविष्यतीति निश्चयेन शान्तमनसा हरिं ध्यायन् प्रशस्तसुखवान् भव ।।३।।) **त्रिवाचेति ।।** हरिब्रह्मवायूनां वाचा ।। (मया च मद्वाचा । तेषामाज्ञया मया कृतिः रचिता । अथवा तेषां मम च वाचा तव आज्ञा दत्ता, 'सताम् उपदिशे'ति) (तव बुद्धिः) **यथा तथा** = यथार्था । 'याथातथ्यतोर्थान्' इत्यत्र याथातथ्यशब्दस्य यथार्थत्ववाचित्वात् । अनेन कथनसाधनविवक्षितार्थतत्वज्ञानानुकूलम् अनुग्रहभाक्त्वं सूचितं भवति ।। (**'कुरु विप्रस्य वचनं न मृषेति विचिन्तय'** इत्युक्तत्वात् **'तव बुद्धिर्यथा तथा कुरु'** इत्यपि (१८/६३) गीतोक्तरीत्या 'यथेच्छसि तथा कुरु' इत्यपि तात्पर्यं ज्ञेयम् । 'कष्टे प्राप्तेऽपि कृतिवाक्ये अप्रामाण्यशङ्कां न कुरु । सा शङ्का अतीवपापदायिनी' इति भावः । एवं वचनेन क्वचित्काले लक्ष्मीपतिरपि उपदेशकार्यं विहाय तूष्णीं तिष्ठति । तथापि अप्रामाण्यशङ्कां न करोतीति सूचितं भवति ।।४।।)

**मन्महामहिमां वक्तुं मानवानां न शक्यते ।**
**मापतेर्भक्तमाहात्म्यं कामतेः शक्यते नु किम् ।।५।।**

(अन्वयः) **(यतः) मन्महिमां वक्तुं मानवानां न शक्यते । मापतेः भक्तमाहात्म्यं कामतेः शक्यते नु किम् । अथवा (यतः) मापतेः भक्तमाहात्म्यं वक्तुं मानवानां न शक्यते (ततः) मन्महिमां वक्तुं कामतेः शक्यते नु किम्**

**(व्या) कामतेः** कुबुद्धेः ।।५।। (इतरोऽपि जनः भवन्महिमानं वदतु इति चेन्न । मानवानां तादृशसामर्थ्यमेव नास्ति । यद्यपि देवत्वयोग्याः तत्र तत्र सन्ति । तेपि अननुगृहीतबुद्धयः सन्तः असमर्थाः यथा अनुग्रहाभावदशायां जयतीर्थः अज्ञ एव आसीत् । त्वं तु मया अनुग्रहीतबुद्धिः । तस्मान्न काकबुद्धिः (काबुद्धिः कुबुद्धिरित्यर्थः; काकबुद्धिरिति वा) । अतः मन्महिमाप्रवचनकार्यं सदा परमोत्साहेण कुरु । तदर्थं तव तज्जन्म । यथा जयतीर्थस्य टीकारचनार्थं इति तात्पर्यम् । रमापतेर्भक्तमाहात्म्यम् इत्यनेन स्वमहिमा हयग्रीवोपासनेन प्राप्तः यथा भीमसेनस्य महिमा कृष्णोपासनेन लब्धः इति प्रमाणं सूचितम् । **'चरितं विष्णुभक्तानां विष्णूद्रेकाय कथ्यते'**(१) (म.भा.ता.नि. २/१२९) इति स्वमाहात्म्योपदेशेन विष्णुमाहात्म्यं प्रकटं भवति । तस्मात् विष्णुभक्तिद्वारा मोक्षोपि भवतीति फलसूचनं च । तद्वर्णने स्वानुगृहीतबुद्धिकृतौ लक्ष्मीपतिरेव समर्थः इति सूचितो भवति ।।५।।) (**विप्रस्य वचनं कुरु** इत्यपि विवक्षितयोजनेन विप्रानन्तरं

(१) 'चरितं वैष्णवानां तु विष्णूद्रेकाय कथ्यते' तथा भागवतेऽप्युक्तं हनूमद्वचनं परम् ।।

लक्ष्मीपतिः गुरुराजमहिमाप्रवचने समर्थः इति । विप्रस्य वृन्दावनाचार्यरूपेण अवतारपर्यन्तं स एव मुख्यवक्ता इत्यपि सूचितो भवति । वृन्दावनाचार्यत्वेन अवतारानन्तरं विप्राज्ञया वर्तनं लक्ष्मीपतेः श्रेयस्करमिति भावः ।)

**यादृग्वैभवभोगस्य स्थानं भुवि दिवि स्थितम् ।**
**तादृग्वैभवरूपेण तत्तल्लोके वसाम्यहम् ।।६।।**

**(अन्वयः) भुवि दिवि च यादृक् वैभवभोगस्य स्थानं स्थितं तादृक् वैभवरूपेण तत्तल्लोके अहं वसामि ।**

**(व्या) यादृगिति ।। भुवि** भूलोके **यादृग्वैभवभोगस्य स्थानम्** । रजतपीठपुरगत-कृष्णादिभगवद्रूपाराधकत्वम्, तदनुग्रहपात्रत्ववृन्दावनाचार्यादिभक्तानुग्राहकत्वरूपमाहात्म्यानुभव-स्थानम् । **दिवि** द्युलोके **यादृग्वैभवभोगस्य स्थानम्** सूर्यमण्डलस्थनारायणादिभगवद्रूपाराधकत्व-तदनुग्रहपात्रत्वरुद्रादिभक्तानुग्राहकत्वतत्पूज्यत्वादिमाहात्म्यानुभवस्थानम् । तादृग्वैभवरूपेण तादृश-वैभवानुकूलरूपेण **तत्तत् लोके वसामि** ।

अनेन वैभवं द्विविधम् – भौमं दिव्यं चेति । भौमं द्विविधम् – भाक्तं भागवतं चेति । भाक्तं – भक्तानुग्राहकत्वादि । भागवतं – भगवदाराधकत्वादि । वैभवं पुनर्द्विविधम् – लौकिकम् अलौकिकं चेति । लोकैर्द्रष्टुयोग्यं – लौकिकम् । लोकैर्द्रष्टुमशक्यम् – अलौकिकम् । दिव्यं वैभव-मपि द्विविधम् भाक्तं भागवतं चेति । दिव्यं सर्वमलौकिकमेवेति विभागः सूचितो भवति ।।६।।

**बहुरूपाणि धृत्वाहं सहभोगं तु दैवतैः ।**
**इह भुक्त्वा दिविस्थोपि सह मुच्ये विरिञ्चिना ।।७।।**

**(अन्वयः) विरिञ्चिना दैवतैः (च) सह अहं बहुरूपाणि धृत्वा, इह भुक्त्वा, दिविस्थः (सन्) अपि सहभोगं मुच्ये ।**

**(व्या)** एकस्य बहुस्थाननिवासः कथम्? इत्यत आह – **बहुरूपाणीति ।। विरिञ्चिना दैवतैश्च सह बहुरूपाणि धृत्वा, इह भूलोके** भोक्तव्यं वैभवं भुक्त्वा, **दिविस्थः** सन् तत्र भोक्तव्यं वैभवमपि भुक्त्वा, **सहभोगं** सत्यलोकाधिपत्यं कृत्वा, मुच्ये – इति योजना । **'धातुः पदं तत्सहभोगनाम'** इति निर्णये(ता.नि.९/८९) । अनेन ऋजोः ब्रह्मणा सह मुक्तिः कथम्? इति परास्तम् ।।७।।

**इति मद्वैभवाहर्तुर्भुवि प्राप्यस्य मद्गतिम् ।**
**यां गतिं प्राप्य मोदन्ते तामप्यस्य ददाम्यहम् ॥८॥**

(अन्वयः) **इति मद्वैभवाहर्तुः प्राप्यस्य भुवि मद्गतिं यां गतिं प्राप्य मोदन्ते तां अपि अस्य ददामि ।**

(व्या) **इतीति ॥** पूर्वप्रकारेण **मद्वैभवाहर्तुः** मन्माहात्म्योपदेष्टुः प्राप्य च **मद्गतिम्** = भूवराहहयवदनादिपूजकत्वादिरूपाम् । अन्ये मठपतयः **यां गतिं प्राप्य** = मध्यवाटमठपौरुट-भाजनस्थव्यासाराधकत्वरूपां गतिं प्राप्य मोदन्ते; तामपि ददामि । अनेन अस्मिन् प्रकरणे । भूवराहहयवदनकृष्णवेदव्यासपूजकत्वरूपं भागवतलौकिकभौमवैभवम्; वृन्दावनाचार्यस्यापि तत् पूजकत्वानुकूल्यानुग्राहकत्वरूपभौमभाक्तलौकिकवैभवं च उक्तं भवति ॥८॥

(व्या) एतद्वैभवश्रोतृणां फलमाह – **इतीति ॥**

**इति मद्वैभवगतिं श्रुत्वा मद्भक्तिसंयुताः ।**
**मत्पादाब्जगतिं यान्ति मद्दयाविषयाश्च ते ॥९॥**

(अन्वयः) **इति मद्वैभवगतिं श्रुत्वा (ये) मद्भक्तिसंयुताः (सन्ति) ते मद्दयाविषयाः च मत्पादाब्जगतिं यान्ति ।**

(व्या) मद्वैभवस्य मत्पूज्यबादरायणमूर्तिरूपवैभवस्य **गतिम्** । पूजकत्वेन विप्रेण सह । अत्रागमनं श्रुत्वा । ये **मद्भक्तिसंयुताः । ते मद्दयाविषयाः । मत्पादाब्जगतिं यान्ति** ॥९॥

**एवं श्रुत्वा विप्रवर्यात्सुगूढमाश्चर्यभूतं मम वैभवं तु ।**
**पुत्र चैतत्सुप्रसिद्धं कुरु त्वं मित्रो यथैवान्धकारस्थमर्थम् ॥१०॥**

(अन्वयः) **एवं सुगूढं आश्चर्यभूतं मम वैभवं तु विप्रवर्यात् श्रुत्वा, हे पुत्र! यथा मित्रः अन्धकारस्थमर्थं (प्रकाशयति) एव (तथा) त्वं एतत् सुप्रसिद्धं च कुरु ।**

(व्या) एवमिदं प्रकरणं गूढार्थम् । तत्रापि वैभवपदं गूढार्थम् । तद्वृन्दावनाचार्यमुखतः त्वया श्रोतव्यम् । योग्येषु वक्तव्यं च । तव गूढार्थज्ञानं च विप्रमुखतः श्रवणेपि । यथा विप्रस्य हयवदनपूजकत्वं मदनुग्रहेण भविष्यति । (तथा तवापि मदनुग्रहेण मम वैभवगूढार्थज्ञानं, प्रवचन -शक्त्यादिकं च भविष्यतः') तस्मात् त्वया योग्येषु गोपनं न कार्यमित्यभिप्रायेण आह – **एवमिति ॥ पुत्रे**ति लक्ष्मीपतिसम्बोधनम् । **मित्रः** = सूर्यः ॥१०॥

**उक्तानि सर्वकर्माणि मम वैभवपर्वणि ।**
**सर्वे वदन्तु भद्राणि सदा पर्वणि पर्वणि ॥११॥**

**तेषामिष्टानि पुष्टानि भविष्यन्ति न संशयः ।**
**तेषां कष्टानि नष्टानि भविष्यन्ति न संशयः ॥१२॥**

(अन्वयः) मम वैभवपर्वणि उक्तानि भद्राणि (मङ्गलप्रदानि) मम सर्वकर्माणि सर्वे (मम भक्ताः) सदा पर्वणि पर्वणि वदन्तु । तेषां इष्टानि पुष्टानि भविष्यन्ति न संशयः; तेषां कष्टानि नष्टानि भविष्यन्ति न संशयः ।

**(व्या) उक्तानीति ॥ वैभवपर्वणि** सप्ताध्यायात्मके भागे । **भद्राणि** मङ्गलकराणि । **मम कर्माणि** मम कार्याणि भगवदाराधनभक्तपालनादीनि । **उक्तानि सर्वे** मम भक्ताः तानि पर्वणि पर्वणि प्रतिपर्वकाले वदन्तु । पर्वशब्दस्तु 'पञ्चपर्वसु पूजनम्' इत्यत्र व्याख्यातः ॥११॥ तत्फलमाह – **तेषामिति ॥** (**तेषाम्** अधिकारिणां भक्तानां मनोरथाः परिपूर्णाः भविष्यन्ति । ज्ञानभक्तिवैराग्याणि वर्धन्ते । तेषां **कष्टानि** साधनविघ्नानि हयग्रीवप्रसादेन परिहृतानि भवन्ति । अस्मिन् विषये **संशयः न** कर्तव्यः ॥१२॥

**सत्यं सत्यं पुनः सत्यं चोद्धृत्य भुजमुच्यते ।**
**विप्रेणोक्तं च यत्सर्वं तत्सर्वं च मयोदितम् ॥१३॥**

(अन्वयः) विप्रेण (विप्रद्वारा) यत् उक्तं तत्सर्वं च मया उदितम्; सत्यं सत्यं पुनः सत्यं (इति) भुजं उद्धृत्य उच्यते ।

**(व्या)** शपथपूर्वकं विप्रोक्तं सर्वं स्वप्ने तस्मै गुरुराजेन उपदिष्टमेवेति वक्ति – **सत्यं सत्य-मिति** ॥१३॥

**हयग्रीवं महोग्रावं संसारग्राहनिग्रहम् ।**
**मणिभास्वच्छुभग्रीवं शृणु वन्दे कृताञ्जलिः ॥१४॥**

(अन्वयः) (हे लक्ष्मीपते) कृताञ्जलिः शृणु! महोग्रावं संसारग्राहनिग्रहं मणि-भास्वच्छुभग्रीवं हयग्रीवं (कृताञ्जलिः) वन्दे ।

**(व्या) हयग्रीवमिति ॥** प्रकरणादौ बादरायणस्मरणं कृतम् । तत्समानाधिकरणं हयग्रीवं

प्रकरणान्ते प्रणमति । **‘महोग्रावं** महारुद्रपरिपालकं (महांश्चासौ उग्रश्च महोग्रः, तं अवतीति महोग्रावः, तम्) रामात्मकम्, संसारे ग्राहतुल्यानां कंसादीनां नन्दगोपापकारिग्राहस्य च निग्राहकं कृष्णात्मकम्, **मणिभास्वच्छुभग्रीवं** ‘ब्रह्मात्मकौस्तुभमणिम्’ इत्याद्युक्तबादरायणात्मकं वन्दे’ इति कथनेन सर्वत्र भगवद्रूपे दृष्टवृन्दावनस्थ(रामकृष्णवेदव्यासात्मक)हयवदनाख्यात्मकत्वं चिन्तनीयमिति सूचितं भवति (‘कृताञ्जलिरहं वन्दे; कृताञ्जलिः सन् त्वं शृणु’ इति योजना ।।१४

**इतः परं न वक्ष्येऽहं परस्याक्षेपकारणम् ।**
**कुतः शरः प्रयोक्तव्योसुरस्यायोग्यबुद्धिनः ।।१५।।**

(अन्वयः) इतः परं परस्याक्षेपकारणम् अहं न वक्ष्ये; अयोग्यबुद्धिनः असुरस्य शरः (तेन) सत्सु कुतः प्रयोक्तव्यः ।

**(व्या)** मया गूढमुक्तम् । तत् त्वया ख्यापनीयमित्युक्तम् । स्पष्टोक्त्यभावे किं निमित्तम्? इत्यत आह – **इतः परमिति ।। इतः** गूढार्थवाक्यात् **परं** विलक्षणं = स्पष्टार्थं, **न वक्ष्ये** । यतः तत् (स्पष्टनिरूपणं) **परस्य आक्षेपकारणम्** । **अयोग्यबुद्धिनः** अयोग्यैः बुद्धं ज्ञानम् अस्यास्तीति अयोग्यबुद्धी, तस्य । असुरस्य **शरः** तेन सत्सु **कुतः प्रयोक्तव्यः** । तस्मात् गूढमुक्तम् ।।१५।। लक्ष्मीपतिप्रकरणं समाप्तम् ।।

### ३. वृन्दावनाचार्यप्रकरणम्।। श्लोकाः (१६ऽ२७)

**(व्या)** **‘तस्मात्’** इत्यारभ्य **‘कोणपं भजते नु किम्’** इत्यन्तं वृन्दावनाचार्यश्रोतृकं प्रकरणम् ।।

पूर्वप्रकरणे वृन्दावनाचार्यस्य **‘तामप्यस्य ददाम्यहम्(५/८)’** इति बादरायणाद्याराधकत्वमुक्तम् । तर्हि तत्काले (तत्काले यदा वृन्दावनाचार्यः बादरायणपूजनं करोति तदा इत्यर्थः । तदनुग्राहकस्य गुरुराजस्य तत् बादरायणपूजनं) तदनुग्राहकस्य तन्नास्तीति न मन्तव्यमिति ज्ञापयितुं तत्करणाविष्टैः स्वकरणैः बादरायणाद्याराधकत्वरूपं वैभवम् अत्रोच्यते ।।

**तस्माद्वृन्दावनाख्यानं मन्दानां शङ्कितुं मुने ।**
**कन्दाशनेन्द्ररचितं तं दोषं न ददाति च ।।१६।।**

(अन्वयः) तस्मात् हे मुने! कन्दाशनेन्द्ररचितं वृन्दावनाख्यानं शङ्कितुं मन्दानां (तथापि) तं च दोषं न ददाति ।

**(व्या)** आदौ गूढभावशब्दप्रयोगेन न्यूनतादोषो नास्ति । मन्दाशङ्काफलकत्वादित्याह – **तस्मादिति ।।** (गूढोक्तिः दोषः इति मन्दा वदन्ति । न तु ज्ञानिनः । 'परोक्षप्रिया इव हि देवाः' इति प्रमाणेन तत्र तत्र गूढोक्तिकरणं गुणः इति जानन्ति । तथापि मन्दानामपि समाधानार्थम् इतःपरम् उत्तराध्यायेषु बहुगूढवचनं विना प्रायेण स्पष्टवचनेनैव कथां वक्ष्ये – इति भावः । तथा च स्पष्टवचनेनैव मत्प्रेरणया विप्रादीनां सुपुण्यस्यैव प्राप्तिर्भविष्यतीति वर्णयति नवभिः श्लोकैः ।।१६।।

**मन्दानाम्** अल्पपुण्यानाम् अज्ञभक्तानां अथवा पुण्यहीनानाम् असुरमन्दानाम् । **शङ्कितुं** शङ्कायाः अवकाशो यथा विद्यते तथा । **तं दोषम्** अतिगूढवचनेन कथानिरूपणरूपदोषम् । **कन्दाशनेन्द्ररचितं** गुरुवादिराजकृतं **वृन्दावनाख्यानं न ददाति** प्रायेण न प्रदर्शयति । **च**शब्देन देवस्वभावत्वात् तत्र तत्र गूढार्थः स्पष्टवचनेष्वपि विद्यते । क्वचिदेष्यविचारं गूढभाषयैव वक्ष्ये । तादृशनिरूपणस्य गुणत्वादिति भावः ।)

**मन्मनःसन्निकर्षेण त्वन्मनः स्मृतिकारणम् ।**
**दिने दिनेभिजानीहि कानीह सुकृतानि ते ।।१७।।**

(अन्वयः) **मन्मनःसन्निकर्षेण त्वन्मनः स्मृतिकारणं ते सुकृतानि इह कानि? दिने दिने अभिजानीहि ।**

**(व्या) मदिति ।।** स्मृतिकारणम् = हरिस्मृतिकारणं **ते सुकृतानि** त्वत्सुकृतानि **कानि** कीदृशानि? अतिशोभनानीति जानीहीति भावः ।।१७।। (मन्मनःसन्निकर्षेण त्वन्मनसा मन्मनः संयोगेनेत्यर्थः । स्मृतिकारणं विलक्षणस्मृतिकारणम् । भगवद्रूपादिविषयकस्मृतिजनकम् इत्यर्थः । एवमेव इतरेन्द्रियजातपुण्यान्यपि महत्त्ववन्तीति ज्ञेयम् ।।१७।।)

**मन्नेत्रसन्निकर्षेण नयनं ते सुदर्शनम् ।**
**दिनेदिनेभिजानीहि कानीह सुकृतानि ते ।।१८।।**

**मत्कर्णसन्निकर्षेण त्वत्कर्णं शृणुतेनिशम् ।**
**दिने दिनेभिजानीहि कानीह सुकृतानि ते ।।१९।।**

(अन्वयः) **मन्नेत्रसन्निकर्षेण ते नयनं सुदर्शनं ते (त्वत्) सुकृतानि इह कानि दिने दिने अभिजानीहि ।। हे विप्र! मत्कर्णसन्निकर्षेण त्वत्कर्णम् अनिशं श्रुणुते । ते**

(त्वत्) सुकृतानि इह कानि (कीदृशानि अतिशोभनानि इति) दिने दिने अभि-जानीहि ॥

(व्या) सुदर्शनं(बहुव्रीहिः) समीचीनं हरिप्रतीकादिदर्शनं यस्मात् तत् तथोक्तम् ॥१८॥ शृणुते सत्कथाम् ॥१९॥ (यद्यपि कर्णशब्दः पुल्लिङ्गः । तथापि 'व्यत्ययो बहुलम्' इति नपुंसकलिङ्गप्रयोगोपि ग्राह्यः । एवमेव पादम् इत्यत्रापि नपुंसकत्वं साधु ॥१९॥)

**मज्जिह्वायुक्तत्वज्जिह्वाप्यंहोमुग्वचनं भवेत् ।**
**दिने दिनेभिजानीहि कानीहि सुकृतानि ते ॥२०॥**

**मद्घ्राणसन्निकर्षेण त्वद्घ्राणं जिघ्रतेनिशम् ।**

**दिने दिनेभिजानीहि कानीह सुकृतानि ते ॥२१॥**

(अन्वयः) मज्जिह्वायुक्तत्वज्जिह्वापि अंहोमुग्वचनं भवेत् । ते (त्वत्) सुकृतानि इह कानि? दिने दिने अभिजानीहि । मद्घ्राणसन्निकर्षेण त्वद्घ्राणम् अनिशं जिघ्रते । ते (त्वत्) सुकृतानि इह कानि? दिने दिने अभिजानीहि ।

(व्या) मज्जिह्वेति ॥ अंहोमुग्वचनम् (बहुव्रीहिः) पापपरिहारकवचनं प्रयुक्तं भवेत् । (क्रियाविशेषणमेतत् । अंहोमुग्वचनं तद्यथा भवति तथा भवेत् इति योजना । अतः तव जिह्वेन्द्रियजन्यपुण्याधिक्यमिति भावः । दिने दिने प्रतिदिनं वृन्दावनाचार्यजन्मपूर्तिपर्यन्तम्) ॥२०॥ जिघ्रते = हरिपादसल्लग्नतुलस्यादिगन्धं जिघ्रते (सद्गन्धघ्राणने एव मदिन्द्रियसहायः । एवं केवलशुभगन्धाघ्राणनात् । तव पुण्याधिक्यं भविष्यतीत्यर्थः ॥२१॥)

**मद्धस्तसन्निकर्षेण त्वद्धस्तः कुरुते कृतिम् ।**
**दिने दिनेभिजानीहि कानीह सुकृतानि ते ॥२२॥**

**मत्पादसन्निकर्षेण त्वत्पादं चलते पदम् ।**
**दिने दिनेभिजानीहि कानीह सुकृतानि ते ॥२३॥**

(अन्वयः) (हे विप्र) मद्धस्तसन्निकर्षेण त्वद्धस्तः (हरिपूजादिकं कर्म) कृतिं कुरुते । ते (त्वत्) सुकृतानि इह कानि? दिने दिने अभिजानीहि । मत्पादसन्निकर्षेण त्वत्पादं चलते पदम् । ते (त्वत्) सुकृतानि इह कानि? दिने दिने अभिजानीहि ।

**(व्या) मद्धस्तेति ।। कृतिं** हरिपूजादिकं कर्म । (न तु अयोग्यचर्मस्पर्शादिकं, तेन तव अनन्तसङ्ख्याकानि अपरिमितानि पुण्यानि भविष्यन्तीति भावः) ।।२२।। **मत्पादेति ।। पदम्** विष्णुक्षेत्रादिकं प्रति त्वत्पादश्चलते ।।२३।। (प्रतिदिनम् एवं मत्पादसन्निधानयुक्तत्वत्पादेन क्षेत्रयात्रादीनां करणात् । त्वत्पुण्यं निरतिशयमिति जानीहीति भावः ।।२३।।)

**सर्वाणि करणानीति युक्तमत्करणानि ते ।**
**कर्माणि पुण्यरूपाणि कुर्वन्ति मम सन्निधेः ।।२४।।**

**तस्माद्वृन्दावनाख्यानं मुकुन्दानन्दकारणम् ।**
**मन्दानां बोधनार्थाय कन्दाशनकृतं त्वभूत् ।।२५।।**

(अन्वयः) **(यस्मात्) ते सर्वाणि करणानि युक्तमत्करणानि, मम सन्निधेः पुण्यरूपाणि कर्माणि कुर्वन्ति । तस्मात् वृन्दावनाख्यानं मुकुन्दानन्दकारणं, मन्दानां बोधनार्थाय कन्दाशनकृतं तु अभूत् ।**

**(व्या) (इति ।।** पूर्वोक्तप्रकारेण **ते सर्वाणि करणानि युक्तमत्करणानि** (बहुव्रीहिः) भूत्वा) मुनेः **मम सन्निधेः** सन्निधानात् पुण्यरूपाणि **कर्माणि कुर्वन्ति** ।।२४।। यस्मात् मत्करणानुग्रहीतानि त्वत्करणानि, तस्मात् मयोपदिष्टम्, त्वयेरितमपि (वृन्दावनाख्यानं), मन्दबोधाय त्वदन्तर्यामिणा कन्दाशनेन्द्रेण मुनीन्द्रेण मया रचितम् । तत् मुकुन्दानन्दकारणं हरितोषणकारणम् अभूत् ।।२५।।

**एवं निशम्य मम भृत्यमुखाच्च सर्वं**
**वृन्दावनस्य विभवं सुजनाश्च सर्वे ।**
**श्रद्धाळवो विततभक्तियुता भजन्तु**
**सर्वेष्टदं सकलपापविनाशनं तत् ।।२६।।**

(अन्वयः) **एवं (मम) वृन्दावनस्य सर्वं विभवं मम भृत्य (स्वप्नद्रष्टुः विप्रस्य) मुखात् सर्वे सुजनाः निशम्य, श्रद्धालवः विततभक्तियुताः (सन्तः) (यस्मात्) सर्वेष्टदं सकलपापविनाशनं (विनाशकं) तत् भजन्तु ।**

**(व्या) 'मन्दानां शङ्कितुमिदमाख्यानम्'** इति प्रागुक्तम् । तस्यैव कथं मन्दबोधकत्व-मित्याशङ्कां वारयितुं सप्ताध्यायात्मकस्य अस्य वैभवपर्वाख्यस्य । प्रथमाध्यायगत(१/३३)

विभवपदव्याख्यानरूपत्वं च सञ्चयितुम् 'एवं निशम्येति' पद्यमनुवदति – **एवमिति ।।** पूर्वं **'मन्दानां शङ्कितुम्** (५/१६)' इत्यत्र ज्ञानानधिकारिणो मन्दशब्देनोक्ताः । अत्र तु ज्ञानाधिकारिणः सुजना इति पूर्वोत्तराविरोधः इति सूचितं भवति ।।२६।। (श्लोकार्थः पूर्वमेव(१/३३) उक्तः) ।।

**मत्पादस्मरणेनैव जनानामणिमादिता ।**
**प्राणनाथपदं हित्वा कोणपं भजते नु किम् ।।२७।।**

**(अन्वयः) जनानां मत्पादस्मरणेनैव अणिमादिता (भवति) (तस्मात्) प्राणनाथपदं हित्वा कोणपं[(१)] भजते नु किम्?**

**(व्या)** मन्दानां शङ्कितुं कृतमिदमाख्यानम्; कथमन्येषां मन्दानां बोधकम्? कथमत्रत्य मन्दपदं ज्ञानाधिकारिपरम्? इत्यत आह – **मत्पादेति ।। मत्पादस्मरणेन जनानाम् अणिमादिता** अणिमाद्यष्टैश्वर्यं भवति । तस्मात् मदनुग्रहसहकृतमिदमाख्यानम् । कुजनानामबोधकमपि सुजनानां बोधकम् । यथा प्राणनाथेतिपदं[(२)] 'प्राणनाथप्रियो ह्यसौ' इत्यादिमुख्यप्राणप्रकरणे (४/६८) पठितम् । स्वमुख्यार्थं हित्वा कोणाधिपतिं प्रवहवायुं न बोधयति । तथा ज्ञानाधिकारिप्रकरणे पठितं मन्दपदं ज्ञानाधिकारिवाचकमिति भावः ।।प्र.२।। वृं. आ. प्रकरणं सम्पूर्णं ।।

### ४. व्यासभक्तप्रकरणम्।। श्लोकः (२८)

**शिलास्थां कुरु पुत्रेश बलात्कारेण मत्कृतिम् ।**
**स्थलान्तरगतां विद्धि स्वलाभार्थं च नाकिना ।।२८।।**

**(अन्वयः) पुत्रेश बलात्कारेण मत्कृतिं शिलास्थां कुरु । नाकिना स्वलाभार्थं बलात्कारेण शिलास्थां स्थलान्तरगतां विद्धि ।**

---

(१) 'कोणपं भजते नु किम्'' इति वृन्दावनाख्यानम् । कोणपः = कौणपः पिशाचो राक्षसो वा; ''नक्तञ्चराः नैर्ऋतकाः कौणपकाः कैकसेयाः स्युः'' इति हलायुधः ।

(२) अत्र 'पद्यते अनेन इति पदं = **साधनम्'** । - (बृ.भाष्य); **'प्राणनामा वासुदेवो मोक्षं स्वान् प्रणयेद्यतः'** - (छां.भा.) **'विष्णुर्हि दाता मोक्षश्च वायुश्च तदनुज्ञया'** इति श्रीमदाचार्यैः उदाहृतानि वाक्यानि स्मर्तव्यम् ।

(व्या) शिलास्थामिति ।। इदमेकं पद्यं व्यासभक्तश्रोतृकं तृतीयं प्रकरणम् । अत्र विप्रान्तर्यामिरूपेण प्रागुक्तं बादरायणाराधकत्वं स्पष्टीक्रियते । हे पुत्रेश! पुत्रः वृन्दावनाचार्यः । ईशः यस्य स तथोक्तः, तस्य संबुद्धिः । हे व्यासभक्त इत्यर्थः । मत्कृतिम् = 'तामप्यस्य ददाम्यहम्' इत्यादिरूपां मम कृतिं शिलास्थां कुरु । बादरायणप्रतीकरूपा मध्यवाटमठ-पौरुटभाजनस्था, या शुद्धशिला, तद्विषयिणीं कुरु । शिलाविषयतया कर्तव्यत्वं च ज्ञातव्यमिति सूचयितुमुक्तं बलात्कारेणेत्यादि ।। नाकिना = नाकिभावयोग्येन वृन्दावनाचार्येण बलात्कारेण 'अविश्वासेन सर्वेषाम्'(६/६०) इति वक्ष्यमाणानुसारेण अविश्वासिना (कमलनाभेन) बलात्कारेण बाधके प्रसक्ते सति स्वलाभार्थं स्वकीयसाधनपूर्तिरूपस्वलाभार्थम् । स्थलान्तर-गतां स्थलं मध्यवाटमठरूपम्, तदन्यत् स्थलान्तरं तद्गतां (तत्र प्राप्तां) शिलां विद्धि । ततश्च शिला विषयतया करणं च तद्विषयतया ज्ञानमेवेति भावः सूचितो भवति ।।२८।। इति व्या.भ.प्र.सं. ।।

### ५. बहुभक्तप्रकरणम् ।। श्लोकः (२९)

(व्या) ततश्च देवैरित्यादिबहुभक्तश्रोतृप्रकरणम् ।।

**देवैरप्यर्थितां स्वार्थम् आर्तिनाशाय पार्थिवैः ।**
**प्रार्थ्येति किमु वक्तव्यं सार्थीकुरुत मत्कृतिम् ।।२९।।**

**(अन्वयः) स्वार्थं देवैरपि अर्थिता, पार्थिवैः आर्तिनाशाय प्रार्थ्या इति किमु वक्तव्यम् मत्कृतिं सार्थीकुरुत ।**

(व्या) देवैरिति ।। देवैरप्यर्थितां स्थलान्तरगतां विद्धीति पूर्वेणान्वयः । अस्मिन् पद्ये सार्थीकुरुतेति बहुवचनबलात् बहुभक्तश्रोतृकं पादत्रयात्मकम् एकं चतुर्थप्रकरणम् । अत्र 'शिलास्थां कुरु पुत्रेश' इत्यनेन विप्रान्तर्यामिरूपेण बादरायणाराधकत्वरूपं वैभवम् । एकेनैव ज्ञातव्यमिति न मन्तव्यम् । सर्वैर्भक्तैर्ज्ञातव्यमित्युच्यते । हे सुजनाः! मत्कृतिम् = प्रागुक्ताम्, 'तामप्यस्य ददाम्यहम्' इत्यादिरूपां सार्थीकुरुत । सूचितार्थप्रतिपादकतया जानत । 'बला-त्कारेण शिलास्थां कुरु' इति योजना न युक्ता । लेखकानां शिल्पिनां ताडनादि बलात्कारस्य असङ्गतत्वात् । बलात्कारेण मत्कृतिं स्थलान्तरगतां विद्धीत्यपि न । बलात्कारेण पुस्तकाप-हरणस्यासङ्गतत्वात् ।।२९।। ब.भ.श्रो.प्र.सं.।।

**६. व्यासभक्तप्रकरणम्।। श्लोकाः (३०-३८ १/२)**

(व्या) **'चरमाज्ञा'** इत्यारभ्य **'तद्दासत्वमवाप्तवान्'(३९)** इत्यन्तं व्यासभक्तश्रोतृक-प्रकरणं पञ्चमं ज्ञेयम् ।। अत्र विप्रान्तर्यामिरूपेण प्रागुक्तबादरायणाराधकत्वरूपवैभवनिश्चयार्थं तत्प्रतीकाधिकरणसम्पुटस्थदशावताराधकत्वरूपं वैभवं न्यायरूपत्वेन उच्यते ।।

**चरमाज्ञा ममैवेयं परमार्थेति विद्धि ताम् ।**
**कुरु मा चान्यथा बुद्धिं परमानीतिरीर्यते ।।३०।।**

**(अन्वयः) (हे व्यासभक्त) इयं मम चरमाज्ञा एव इति परमार्था इति विद्धि अन्यथा बुद्धिं च मा कुरु परमानीतिः ईर्यते ।**

(व्या) **इयं** प्रागुक्ता **'ममैव चरमाज्ञा'** इति राजादीनामिव स्वाभिप्रायनिश्चायिका । तृतीयाज्ञा । अतः **'तां परमार्था'** इति विद्धि = प्रामाणिकेति विद्धि । **अन्यथाबुद्धिं मा** कुरु । प्रागुक्त**'तामप्यस्य ददाम्यहम्'**(५/८) इत्यादिकम् बादरायणविषयं नेत्यन्यथाबुद्धिं मा कुरु । पुनरपि तन्निश्चयार्थं **परमा** उत्तमा **नीतिः** न्यायः उच्यते ।।३०।।

**अहं रमामि रामेण रमारमणरूपिणा ।**
**अहं पुष्णामि कृष्णेन भाषितं विष्णुरूपिणा ।।३१।।**

**अहं पृच्छामि मत्स्येन सच्छास्त्राणि प्रसङ्गतः ।**
**गच्छामि कच्छपेनैव स्वच्छरूपेण स्वेच्छया ।।३२।।**

**(अन्वयः) रमारमणरूपिणा रामेण अहं रमामि विष्णुरूपिणा कृष्णेन भाषितं अहं पुष्णामि, प्रसङ्गतः मत्स्येन सच्छास्त्राणि पृच्छामि, स्वच्छरूपेण कच्छपेन एव स्वेच्छया गच्छामि.**

(व्या) तमाह – **अहमिति ।।** तत्सम्पुटस्थदशावताराधकत्वज्ञाने । 'एकसम्बन्धिज्ञानम् अपरसम्बन्धिस्मारकम्' इति न्यायेन बादरायणस्मरणं भवतीति भावः । **रमारमणरूपिणे**ति रामशब्दार्थकथनम् । **अहं कृष्णेन भाषितं** गीतादि **पुष्णामि** = व्याख्यास्यामि ।।३१।। मत्स्यरूपिणो हरेः वेदोद्धर्तृत्वात् (सत्यव्रताय सकलशास्त्रोपदेष्टृत्वाच्च) **सच्छास्त्राणि पृच्छामि** । निराश्रयस्य गमनासम्भवात् । **कच्छपेन गच्छामि** ।।३२।।

**वराहेण करारोहे नमितोहं च राहुणा ।**
**नृसिंहेन कृतस्नेहे सैंहिकेयेन पूजितः ।।३३।।**

**वामनेन च सन्माने कामेनापि सुमानितः ।**
**भार्गवेणैव चानर्घ्ये माने सति च स्वर्गिणा ।।३४।।**

**गर्गादिमुनिभिः सार्धं श्रद्धयाराधितो ह्यहम् ।**

(अन्वयः) वराहेण करारोहे अहं राहुणा नमितः, च नृसिंहेन कृतस्नेहे सैंहिकेयेन पूजितः, वामनेन सन्माने कामेन अपि सुमानितः, च स्वर्गिणा भार्गवेण एव अनर्घ्ये माने सति च गर्गादिमुनिभिः सार्धं श्रद्धया अहम् आराधितः हि ।

**(व्या) वराहेण ।।** भगवत्पादपूजितप्रतीकस्थेन पूजाकाले **करारोहे** = मत्करारोहे कृते सति तेन उद्धृतायाः भूमेः अभिमानिना शनैश्चरसदृशेन राहुणा पूजितः । (नृसिंहेन मयि प्राप्तस्नेहे सति) । **सैंहिकेयेन** केतुना पूजितः । केत्वाश्रयस्तम्भाश्रयत्वादेर्नृसिंहस्य ।।३३।। वामनस्य ब्रह्मचारि(रूप)त्वात् तदनुग्रहे सति **कामेन मानितः** । (तथा परशुरामेण कुत्रत्येन? **स्वर्गिणा** स्वर्गे विद्यमानरूपान्तरेण यदा परशुरामः गुरुराजे अनर्घमानं कृतवान् । तदा गर्गादिब्राह्मणऋषयः प्रणिपातादिना गुरुराजम् आराधयामासुः ।) गर्गादिब्राह्मणपक्षपातिना दुष्टक्षत्रियनिग्राहकेन मानिते सति । तैरपि (गर्गादिभिरपि) आराधितः ।। ३४भ।।

**बुद्धः प्रबुद्धः सिद्धेशोऽबद्धबुद्धिप्रबोधकः ।।३५।।**

**बौद्धराद्धान्तसिद्धार्थं देवानां बोधयत्यलम् ।**
**स देवो वरदो मह्यं कदा चेह समागतः ।।३६।।**

**इति मामुक्तवान् सूक्तं स्वपादे चावदत्यजत् ।**

(अन्वयः) बुद्धः प्रबुद्धः सिद्धेशः बौद्धराद्धान्तसिद्धार्थं अबद्धबुद्धिप्रबोधकः देवानां अलं बोधयति. स देवः मह्यं वरदः(सन्) 'इह कदा च समागतः' इति मां सूक्तं उक्तवान्. स्वपादे च आपदा त्यजत् ।

**(व्या) बुद्ध इति ।। दैत्यानाम् अबद्धबुद्धिप्रचोदकः** सच्छास्त्रासम्बद्धबुद्धिप्रदाता ।।३५।। (सः बुद्धनामकस्वामी । देवान् प्रति स्वोक्त'शून्यं तत्वम्'इत्यादिवाक्यानां समीचीनार्थमुक्त्वा

देवानां तत्वज्ञानं विस्तारयामास । **सः देवः मह्यं** वरं दत्तवान् । **इह कदा** आगतवानसि इति स्वागतप्रश्नं प्रीत्या चकार । किंच) **स्वपादे** प्रणतं मां रक्षितवान् । **मम अहितं** कल्यादिकम् **अत्यजत्** ।।३६।।

**कल्की सङ्कल्पसंसिद्धो म्लेच्छमूलकुलान्तकः ।।३७।।**

**अनल्पमपि चालस्यं चालयामास लीलया ।**
**एवं दशावतारेषु दुर्दशारहितेषु च ।।३८।।**

**सदा सुशरणं प्राप्य तद्दासत्वमवाप्तवान् ।।३८।।**

**(अन्वयः) सङ्कल्पसंसिद्धः म्लेच्छकुलान्तकः कल्की आलस्यं च अनल्पम् अपि लीलया चालयामास । एवं दुर्दशारहितेषु दशावतारेषु सदा सुशरणं प्राप्य तत् दासत्वम् आप्तवान् ।**

**(व्या)** (**कल्कीति ।। सङ्कल्पसंसिद्धः**[१] = सत्यसङ्कल्पः । स्वसङ्कल्पानुसारेण म्लेच्छानां मूलकुलानामेव अन्तकः ।।३७।।) मद्भक्तानां आलस्यं **चालयामास** (मम च परमोत्साह-वर्जनरूपदोषम् **अनल्पमपि** अतिशयितमपि **चालयामास** त्याजयामास, **लीलया** अनायासेन । 'शुद्धसत्वगुणम् उत्तेजयन् अनुत्साहरोगं निवारितवान्' इत्यर्थः) ।। (एवं पूर्वोक्तरीत्या) मूर्छादि-**दुर्दशारहितेषु** = मूर्छाद्यवस्थारहितेषु । (भक्तानां दुर्दशाः रहिताः यस्मात् सः तेषु, भक्त-दुर्दशात्याजकेषु । इति वा अर्थः) ।।३८।। (तादृश**दशावतारेषु** । **सदा सुशरणं** गतः (सन्) दशावताररूपाणाम् अनुग्रहः प्राप्य । तद्दशावताररूपाणां दासो भूत्वा उपासनं च सदा करोमीति

---

(१) **सङ्कल्पसंसिद्धिः** – इदम् अणिमादिसिद्ध्योऽन्तर्भावः । भागवते –

**श्री भगवानुवाच –**
**सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः ।**
**तासामष्टौ मत्प्रधाना ता एव गुणहेतवः ।। ......**
**स्वच्छन्दमृत्युर्देवानां सह क्रीडानुदर्शनम् ।**
**यथा सङ्कल्पसंसिद्धिराज्ञाऽप्रतिहता गतिः ।। – ११-१५-०३,०७**

तत्रैव भागवततात्पर्यनिर्णये –
**'सर्वाधिका अणिमाद्या विष्णोर्नान्यस्य कस्यचित् ।**
**स्वाभाविका विरिञ्चस्य तत्प्रसादात्पराधिकाः'** इति स्वाभाव्ये

भावः ।।) अत्र काममानितत्वादि भाक्तम्, दशावतारकृपापात्रत्वरूपं भागवतं च रूपं वैभवमुक्तं भवति । चशब्देन केशवाद्यनुग्रहपात्रत्वं च ग्राह्यम् ।। व्या.भ.प्र.सं. ।।

**७. विप्रप्रकरणम्।। श्लोकाः (३९-४३)**

**(व्या) 'पूर्वम्'** इत्यारभ्य **'अन्वारुहमहो स्वर्गं सह देवैर्वसाम्यहम्'** इत्यन्तं विप्रश्रोतृकं षष्ठं प्रकरणम् । अत्र प्रागुक्तं विप्रान्तर्यामिरूपेण बादरायणाराधकत्वं सदृष्टान्तमुच्यते । 'कुरु मा चान्यथाबुद्धिम्'(५/३०) इति व्यासभक्तं प्रति प्रागुक्तम्; इदानीं विप्रं प्रत्याह – **पूर्वमिति ।।**

**पूर्वं मयोक्तश्लोकेषु सांशायिकमतिं त्यज ।।३९।।**

**त्वत्कर्णाभरणमुद्दिश्य मणिव्यत्ययतः कृतम् ।**
**अहं ब्राह्मण ते वामकर्णे संस्थितसन्मणिम् ।।४०।।**

**पाणिना दक्षिणे कर्णे न्यस्य तद्गतकामणिम् ।**
**वामकर्णे पुनर्न्यस्य मम पुण्यवचांस्यहो ।।४१।।**

**अथोपदिष्टवानस्मि स्पष्टं मद्धस्तकर्म ते ।**
**कर्णे ते दक्षिणे विद्वन् पश्य हस्तेन संस्पृशन् ।।४२।।**

**(अन्वयः) मया पूर्वम् उक्तश्लोकेषु सांशायिकमतिं त्यज; त्वत् कर्णाभरणं उद्दिश्य मणिव्यत्ययतः कृतं; हे ब्राह्मण! अहं पाणिना ते वामकर्णे संस्थितसन्मणिं दक्षिणे कर्णे न्यस्य तद्गतकामणिं वामकर्णे पुनः न्यस्य मम पुण्यवचांसि 'हे विद्वन् ते दक्षिणे कर्णे हस्तेन संस्पृशन् मद्धस्तकर्म स्पष्टं पश्य' इति उपदिष्टवान् अस्मि - अहो!**

**(व्या) पूर्वं मयोक्तश्लोकेषु** । 'तामप्यस्य ददाम्यहम्'(५/८) इत्यादिषु । बादरायण-प्रतिपादकत्वमस्ति न वेति संशयकारणीभूतां बुद्धिं **त्यज** ।।३९।। तत्कथमित्यतः स्वप्ने आख्यानोपदेशकाले एकस्मिन् दिने विप्रेण **दक्षिणकर्णे** धर्तव्यः **सन्मणिः वामकर्णे**, वामकर्णे धर्तव्यः **कामणिः** दक्षिणकर्णे धृतः । तदा स्वकृतकर्मदृष्टान्तत्वेनाह – **अहमिति ।।** अहं वाम-कर्णगतसन्मणिं दक्षिणकर्णे न्यस्य तद्गतकामणिं वामकर्णे **न्यस्य 'हस्तेन संस्पृशन् मद्धस्तकर्मपश्य'** इत्युपदेशं कृतवान् ।।

**इतीदं विद्धि सद्बुद्धे वृद्ध मद्धस्तकर्म च ।**
**शुद्धभावेन मामद्धा भज क्रोधमिमं त्यज ।**
**अन्वारुहमहो स्वर्गं सह देवैर्वसाम्यहम् ॥४३॥**

**(अन्वयः) हे वृद्ध! 'इदं (सद्बुद्धेः) मद्धस्तकर्म' इति च विद्धि । इमं क्रोधं त्यज; शुद्धभावेन मां अद्धा भज । स्वर्गम् अन्वारुहम् देवैः सह वसाम्यहम् ।**

**(व्या)** एवमुत्तरत्रापि; **इदं** बादरायणप्रियं **कर्म विद्धि** । मध्यवाटमठस्थलं वामकर्ण-सदृशम् । तद्गतसन्मणिसदृशी शुद्धशिला(वेदव्यासदत्ता) । व्यासमुनिप्रतिष्ठिता कामणिसदृशी शिला दक्षिणकर्णसदृशे हयवदनसमीपे स्थिता । एतां (व्यासयतिप्रतिष्ठितां) मध्यवाटमठे स्थिरी-कृत्य शुद्धशिलां (बादरायणदत्तां) हयवदनपीठे स्थिरीकृतवान् इति मदनुग्रहपूर्वकं **कर्म विद्धि** ॥४२॥

**शुद्धभावेन अद्धा** सम्यक् **भज** । तदा प्रसक्तं कोपं त्यज ॥४३॥ ततः प्रत्यवायशङ्का न कार्या इति सूचयितुमाह – **अन्वारुहमिति ॥** 'त्रिवाचापि मया चोक्तम्' इत्युक्तरीत्या हरिवायु-विरिञ्चिसम्मत्या कृतस्य । (भाविवायोः स्वस्य आज्ञया कृतस्य) सुकृतसुसाधनत्वमेवेति ज्ञातव्यमिति भावः ॥४३भ॥ विप्र.प्र.सं.॥

### ८. बहुभक्तप्रकरणम् श्लोकाः (४४)

**(व्या)** 'इदमाश्चर्यवृत्तम्' इत्यारभ्य 'गर्वं त्यजत शीघ्रतः' इत्यन्तं बहुश्रोतृकं सप्तमं प्रकरणम् ॥

**इदमाश्चर्यवृत्तं मे श्रुत्वा सर्वेऽपि गर्विताः ॥४४॥**
**चर्वितं मे मया सर्वं गर्वं त्यजत शीघ्रतः ।**

**(अन्वयः) इदं मे आश्चर्यवृत्तं श्रुत्वा सर्वेऽपि गर्विताः (स्युः), मे सर्वं मया चर्वितं; शीघ्रतः गर्वं त्यजत ।**

**(व्या)** हे सुजनाः! **इदं** मणिव्यत्ययसदृशं (मध्यवाटमठस्थशुद्धशिलां हयवदनसमीपं प्रति आनयनम्) बादरायणप्रियं कर्म, **आश्चर्यवृत्तिम्** = अश्चर्यकरीं व्याख्याम् । मणिव्यत्यय-दृष्टान्तकथनम् । तेन कृतां व्याख्यां **श्रुत्वा गर्विताः** ॥४४॥ यूयम् **गर्वं शीघ्रतः त्यजत** । **मे**

मदीयं **सर्वम्** अभिमतम् । मयैव विचारितम् । न भवतां सामर्थ्येन ।।४४।। अनेन अत्र भक्तगर्वापहारित्वरूपं भाक्तवैभवमुक्तं भवति ।। बहु.भ.प्र.सं. ।।

### ९. वृन्दावनाचार्यप्रकरणम् ।। श्लोकाः (४५-६०)

**(व्या)** **'कर्तुं चाकर्तुम्'** इत्यारभ्य **'पस्पर्शगात्रं नेत्रान्तैः'** इत्यन्तम् अष्टमं वृन्दा-वनाचार्यश्रोतृकं प्रकरणम् ।। पूर्वप्रकरणेषु बादरायणपूजकत्वादिभौमभागवतवैभवं तदुपयुक्तं वृन्दावनाचार्याद्यनुग्राहकत्वरूपभाक्तवैभवं च प्रतिपादितम् । तत्र अशक्यत्वशङ्कापरिहाराय सम्पुटसदृशब्रह्माण्डरूपपौरुटभाजनऽ गतबादरायणप्रतीकसदृशसूर्यमण्डलस्थितनारायणाराधकत्वादि दिव्यं भागवतऽ वैभवं अरुणाराध्यत्वादि दिव्यं भाक्तं वैभवं चात्रोच्यते । असम्भावनाशङ्कां परिहर्तुं तृतीयाध्यायोक्तं(३/६५) सामर्थ्यमनुसन्धेयमित्याह – **कर्तुं चाकर्तुमिति** ।।४६।।

**कर्तुं चाकर्तुमप्येममन्यथाकर्तुमेव च ।।४५।।**
**समर्थोऽहं न सन्देहश्चेश्वरस्य सदाज्ञया ।**
**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।।४६।।**

(अन्वयः) **हे बुद्धिमन्! ईश्वरस्य सदाज्ञया (एव) कर्तुं अकर्तुं अपि च एवं अन्यथाकर्तुं एव च अहं (सदा) समर्थः न सन्देहः । इति पूर्वं मया प्रोक्तं (त्वं) अनुसन्धत्स्व ।**

**(व्या)** (एष श्लोकः सरसभारतीविलासे गुरुराजैरेव व्याख्यातः । 'अग्नये खाण्डववनं न देयम्' इति सेन्द्रैः सर्वैरप्युच्यमानेऽपि कृष्णः स्वोदिष्टं कर्तुं समर्थः । 'दुर्योधनाय सुभद्रा देया' इति बलरामादिभिरुच्यमानेऽपि कृष्णः अकरणे कृतप्रतिज्ञः अकर्तुं समर्थ एव । नरकासुरेण स्वविवाहार्थं कन्यापहारे कृतेऽपि अन्यथाकरणे समर्थः कृष्णः अन्यथैव तत्कृतवान् । एवम् अचिन्त्यशक्तिमान् हरिः । गुरुराजश्च हरेः प्रसादात् इत्यनुसन्धानं सदा कर्तव्यम् ।।४६।।)

**(अव)** स्वस्य सामर्थ्यातिशयोपपादकं मार्ताण्डरथमारूढत्वादिकं वर्णयति ।

**मार्ताण्डरथमारुह्य स्वाण्डार्तेन सुमानितः ।**
**शरकाण्डजमातॄणां करकाण्डेन पूजितः ।।४७।।**
**भानुमण्डलगं विष्णुं को नु ब्रह्माण्डसंस्थितः ।**
**दोर्दण्डादर्चयन् साक्षान्मां विनाण्डस्य शक्तिमान् ।।४८।।**

**(अन्वयः) मार्ताण्डरथं आरुह्य (तत्र) स्वाण्डार्तेन सुमानितः, शरकाण्डजमातॄणां करकाण्डेन (अहं) पूजितः । भानुमण्डलगं साक्षात् विष्णुं दोर्दण्डात् अर्चयन् (सन्) अण्डस्य मां विना कोनु शक्तिमान् ।**

**(व्या)** सामर्थ्यातिशयोपपादकम् – **मार्ताण्डरथारूढत्वादिकम् । स्वाण्डार्तेन** अरुणेन । करकाण्डजमातॄणां षट्कृत्तिकानां (**करकाण्डेन** करसमूहेन इत्यर्थः स्यात् । करिकाण्डेन इति वृंपाठानुसारेण गजसमूहेन इत्यर्थः ।)।।४७।। मां विना **ब्रह्माण्डसंस्थितः** ब्रह्माण्डसल्लग्न-पादमूलतयास्थितः सन् **भानुमण्डलगं विष्णुं दोर्दण्डादर्चयन्** सन् । अण्डस्य अन्तं प्राप्तुं **कः शक्तिमान्** ।।४८।।

**सूर्यस्य रथमाश्रित्य वीर्यस्य परमात्मनः ।**
**आर्यस्यापि ममास्यान्तं कार्यस्यान्तं गतं मया ।।४९।।**

**एवं सुष्ठु रथे तिष्ठन् पृष्ठतः परमात्मनः ।**
**काष्ठान्तं यामि कामेन स्पष्टं पश्यंश्च सज्जनान् ।।५०।।**

**(अन्वयः) वीर्यस्य सूर्यस्य परमात्मनः रथम् आश्रित्य मम आर्यस्य आस्यान्तं कार्यस्य अन्तं मया गतम् । एवं परमात्मनः पृष्ठतः (सूर्य) रथे सुष्ठु तिष्ठन् सज्जनान् च स्पष्टं पश्यन् (सन्) काष्ठान्तं (दिशामन्तं) कामेन यामि ।।**

**(व्या) वीर्यस्य** । विः अरुणः ईर्यो यस्य स तथोक्तः, तस्य **सूर्यस्य** ज्ञानिप्राप्यस्य **परमात्मनः** सूर्यान्तर्गत**परमात्मनः रथमाश्रित्य** अस्य मम **आर्यस्य** मज्ज्येष्ठस्य कार्यस्य ब्रह्मणः सकाशात् कनिष्ठस्य हनूमतः । **कार्यस्य** व्याकरणाभियोगरूपकार्यस्य **अन्तम्** । मया अधिगतम् अनुसन्धत्स्व ।।४९।। **एवमिति ।।** यथा हनूमान् मत्कृतिं कार्यं दृष्टवान् । एवं स्पष्टं दूरगतानपि **सज्जनान् स्पष्टं पश्यन्** सन् **काष्ठान्तं** दिशामन्तं **यामि** (परमात्मनः सूर्यान्तर्गतनारायणस्य रथे नारायणस्य पृष्ठे सुष्ठु **तिष्ठन् कामेन** स्वेच्छया) ।।५०।।

**शिंशुमारं समासाद्य कंसमारेण चादृतः ।**
**संसरामि पुनर्नाहं कं सरामीति याचये ।।५१।।**

**(अन्वयः) (एवं अहं) शिंशुमारं समासाद्य कंसमारेण आदृतः (सन्) 'अहं पुनः न संसरामि कं सरामि इति याचये ।**

(व्या) एवम् अहं शिंशुमारमासाद्य कंसमारेण तेन आदृतः सन् । 'अहं पुनर्न संसरामि कं सुखरूपं परंब्रह्म सरामि । अनुसरामि' इति याचये ।।५१।।

**स देवो वरदो मह्यं करदाय महाप्रभुः ।**
**स्मरदाश्रितदुष्कर्म विददार हरिः स्वयम् ।।५२।।**

(अन्वयः) करदाय मह्यं सः महाप्रभुः देवः (अपि) वरदः स्मरदाश्रितदुष्कर्म हरिः स्वयं विददार ।

(व्या) सोपि मह्यं वरप्रदः । करदाय करसमर्पकाय (मह्यम्) स्मरदाश्रितदुष्कर्म विष्णु-विशिष्टप्रतीकत्वेन मां स्मरन्तः आश्रिताश्च ये सज्जनाः तेषां दुष्कर्म, विददार ।।५२।। (गुरुराजभक्तानां पापं परिहृत्य । स्वेच्छया करदाय गुरुराजाय वरं दत्तवानिति भावः ।।)

**तत्पुच्छान्तं न पश्यामि स्वर्गमूर्तेर्महात्मनः ।**
**पृच्छामि स्वच्छतत्वानि तत्पुच्छगततेजसाम् ।।५३।।**

**स चोपदिष्टवान् स्पष्टं ज्योतिर्मण्डलमण्डनम् ।**
**ध्रुवादिसर्वलोकानां पालकत्वं स्ववैभवम् ।।५४।।**

(अन्वयः) स्वर्गमूर्तेः महात्मनः तत् पुच्छान्तं न पश्यामि । तत् पुच्छगततेजसां स्वच्छतत्वानि पृच्छामि । सः च ज्योतिर्मंडलमण्डनं ध्रुवादि सर्वलोकानां पालकत्वं स्ववैभवं स्पष्टं उपदिष्टवान् ।

(व्या)(तत्पुच्छान्तं शिंशुमारस्वामिनः पुच्छस्य अन्त्यावधिं परिमितिमित्यर्थः । महात्मनः सर्वोत्तमचेतनस्य स्वर्गमूर्तेः आनन्दज्ञानात्मकशरीरस्य।) तत्पुच्छगततेजसां शिंशुमार-पुच्छाश्रिततेजःसन्निहितभगवद्रूपाणां स्वच्छतत्वानि पृच्छामि ।।५३।। (स च भगवान् शिंशुमारः भक्ताय मह्यम् । स्पष्टं यथा भवति तथा । ज्योतिर्मण्डलमण्डनम् अलङ्काररूपेण ग्रहसमुदायानां तत्र तत्र योग्यस्थळे विन्यासरूपं ध्रुवादिलोकपालकत्वरूपं स्ववैभवं वर्णयित्वा मद्भक्तिं वर्धयामास ।।५४।।

**एवं क्रमेण सर्वाणि ज्योतींषि गतवानहम् ।**
**तेजसा सर्वचक्षूंषि विमुष्णन् विष्णवनुज्ञया ।।५५।।**

(अन्वयः) एवं क्रमेण सर्वाणि ज्योतींषि अहं गतवान् । विष्णवनुज्ञया तेजसा सर्वचक्षूंषि विमुष्णन् ।

(व्या) एवमेव सर्वाणि प्रकाशयुक्तमण्डलानि प्राप्य, मत्तेजसा तत्रत्य देवादीन् अतिशयित्वा, योग्यानाम् अनुग्रहं चकार । एतत्सर्वं विष्णवनुज्ञया हयग्रीवप्रसादेन कृतवान् इत्यर्थः ।।५५।।) ('वायोर्महतोऽतिप्रकाशिनः' – ऋग्भाष्य मन्त्र २७७)

**तिष्ठन् सूर्याभिमुख्येन कष्टं कुर्वन्नधः सदा ।**
**स्पष्टं तप्ये महात्मानं दृष्टा य चेक्षन् तमीश्वरम् ।।५६।।**

**रथे तिष्ठन् पृथुग्रीवं (तथो ग्रावान्) वृथाग्रहसुनिग्रहम् ।**
**ध्याये मायां विना कायं पातयित्वा च दण्डवत् ।।५७।।**

(अन्वयः) सदा कष्टम् अधः कुर्वन् सूर्याभिमुख्येन तिष्ठन् तं महात्मानम् ईश्वरं दृष्ट्या स्पष्टम् ईक्ष्यन् (सन्) तप्ये । तथा रथे तिष्ठन् (सन्) पृथग्रीवं वृथाग्रहसुनिग्रहं (तम् ईश्वरं) कायं दण्डवत् पातयित्वा मायां विना ध्याये ।

(व्या) तिष्ठन्निति ।। कष्टम् अधः कुर्वन् सन् = निराकुर्वन् ।।५६।। रथे तिष्ठन् सन् । पृथुग्रीवम् = उच्चकण्ठम्, वृथाग्रहसुनिग्रहम् = वृथाग्रहाणां विपरीतज्ञानिनां दुराग्रहाणां च, सुनिग्रहं सम्यक् निग्राहकम् तम् ईश्वरं ध्याये । 'तथोग्रवान्' इति पाठे उग्राणाम् अयोग्यानां पालकांश्च दृष्ट्वा तत्पराजयकारणं परमात्मानम् मायां विना क्षुद्रफलेच्छादिरूपां मायां विना ध्याये ।।५७।।

**श्रेयो यास्ये त्वया वार्यं मयोक्तं सत्यतः कुरु ।**
**इति सम्प्रार्थयन् नित्यं श्रुत्यन्तेषु विचारयन् ।।५८।।**
**कृत्यं सर्वं तु हित्वाहं स्तुतेः कृत्यं करोमि ते ।**

(अन्वयः) त्वया अवार्यं श्रेयः अहं यास्ये, मया उक्तं सत्यतः कुरु । इति नित्यं सम्प्रार्थयन् (सन्) श्रुत्यन्तेषु विचारयन् (सन्) सर्वं कृत्यं तु हित्वा अहं ते स्तुतेः कृत्यं करोमि ।

(व्या) श्रेय इति । त्वया (हरिणा) अहं (वादिराजः) श्रेयो यास्ये । कीदृशम्? अवार्यं केनाप्यवार्यम् = मोक्षादिरूपम् । मया उक्तम्, अस्मिन् आख्याने यदुक्तम्, तत्सत्यं कुरु इति

सम्प्रार्थयन् सन् । **श्रुत्यन्तेषु** वेदान्तेषु **विचारयन्** सन् ।।५८।। **सर्वम्** अल्पं कृत्यं हित्वा । ते स्तुतेः कृत्यं करोमि इत्यन्वयः ।।५८भ।।

**प्रभुस्तदा प्रसन्नात्मा प्रवणं मां प्रकृष्टधीः ।।५९।।**

**प्रावोचत् सुप्रसन्नोस्मि प्रकृत्या मोचये प्रिय ।**
**इति मामुक्तवान् सक्तं स्वपादे चापदात्यजत् ।।६०।।**

**पस्पर्श गात्रं नेत्रान्तैः दृष्टवान् स्तोत्रमात्रतः ।।**

(अन्वयः) तदा (सः) प्रसन्नात्मा प्रभुः प्रकृष्टधीः प्रवणं मां प्रावोचत् – 'हे प्रिय सुप्रसन्नः अस्मि प्रकृत्या मोचये । इति मां सूक्तं उक्तवान् स्वपादे च आपदा त्यजत् स्तोत्रमात्रतः (अहं) नेत्रान्तैः दृष्टवान् गात्रं च पस्पर्श ।

**(व्या) प्रभुरिति ।।** (**तदा प्रसन्नात्मा प्रकृष्टधीः प्रभुः** सूर्यान्तरःस्वामी **प्रवणं** = भक्त्या नम्रं मां प्रति **प्रावोचत्** इत्यन्वयः ।।५९।।) **प्रावोचदिति ।।** (**हे प्रिय!** तव विषये **सुप्रसन्नोस्मि**) **प्रकृत्या** बन्धकप्रकृत्या **त्वां मोचये** । (इति **सूक्तं मां** प्रति **उक्तवान्** । **स्वपादे** पतितं मां रक्षितवान् । **मम अहितं** कल्यादिकम् **अत्यजत्** इति योजना ।।६०।।) **स्तोत्रमात्रतः** सन्तुष्टः सन् भक्तिभिन्नम् अनपेक्ष्य मां **पस्पर्श** । मम **गात्रं नेत्रान्तैः दृष्टवांश्च** ।।६०भ।।

### १०. शेषप्रकरणम्।। श्लोकाः (६१-९०)

**(व्या) 'कात्र कीर्तिः'** इत्यारभ्य अध्यायान्तं **'सद्वृन्दानां प्रयच्छामि चेष्टवृन्दानि सर्वथा'** इत्यन्तं शेषश्रोतृकं (दशमं) प्रकरणम् ।

**कात्र कीर्तिरिति ।।** अत्र शेषाभिमताभीष्टप्रार्थनकथनेन 'प्रसन्नीकुरु तं हरिम्' इति बालगोपालप्रार्थनस्य शेषेण कर्तव्यता सूचनेन, विप्रान्तर्यामितया शेषसमर्पितभिक्षाप्रतिग्रहकथनेन च । हयवदनबादरायणबालगोपालाराधकत्वरूपभागवतवैभवं शेषपूज्यत्वं तदभीष्टप्रदत्वरूपभौम-भाक्तवैभवं चोच्यते ।। अनेनापि 'तामप्यस्य ददाम्यहम्' इत्यादीनां बादरायणाभिमतार्थकत्वं सूचितं भवति ।

**कात्र कीर्तिः कृपापात्रतया हीनस्य पुत्रक ।।६१।।**

**त्वमप्येवं प्रसन्नास्यं प्रसन्नीकुरु तं हरिम् ।**

**गुरुं मां मावमंस्थाः त्वं कुरु कार्यं मयेरितम् ॥६२॥**

**आलस्यं न कुरु त्वं हि पालयिष्येहमञ्जसा ।**

(अन्वयः) हे पुत्रक कृपापात्रतया हीनस्य का अत्र कीर्तिः एवं त्वं अपि तं प्रसन्नास्यं हरिं प्रसन्नीकुरु. गुरुं मां मा अवमंस्थाः मया ईरितं कार्यं त्वं कुरु. आलस्यं न कुरु. अहं त्वं अञ्जसा पालयिष्ये. हि.

**(व्या) पुत्रकेति** शेषसम्बोधनम् । (**अत्र** लोके जातस्य **कृपापात्रतया हीनस्य** = भगवत्-कृपापात्रतारहितस्य भक्त्यादिना अप्रसन्नीकृतहरेः पुरुषस्य **का वा कीर्तिः?** । तस्य जन्म निरर्थकमिति भावः ॥६१॥)

**त्वमपीति** ॥ हे शेष! यथा अहं 'मयोक्तं सत्यतः कुरु' इति प्रार्थयन् सन्, सत्यसाक्षिणं सूर्यान्तर्गतपरमात्मानं प्रसन्नीकृतवान्; एवं **त्वमपि प्रसन्नास्यं** प्रसन्नवदनम्, भगवत्पाद-पूजितप्रतीकस्थत्वेन प्रसिद्धम्, मत्प्रार्थितपरमात्माभिन्नम्, **हरिं** = बालगोपालरूपिणं 'अरसभूप' इत्यादिपद्यतात्पर्यं मयोक्तं सत्यतः कुरु इति प्रार्थयन् सन् **प्रसन्नीकुरु** । **हरि**शब्दस्य बालगोपालपरत्वं तु **'शर्वादिदेववरवन्द्य हरिं भजस्व'** इति समाख्यया ज्ञातव्यम् । **गुरुं** हितोपदेष्टारं मां मावमंस्थाः मदवज्ञा न कार्या इति भावः[1] ॥६२॥ **त्वम् आलस्यं न कुरु** । मयेरितपद्यत्रयकथनादिकार्यं क्षिप्रं कुरु । **अहमञ्जसा पालयिष्ये** ।

**कालक्षेपो न कर्तव्यः स्वालयं ते भविष्यति ॥६३॥**

**क्लीबोक्त्या स्वालयं चेति तवालस्याद्भविष्यति ।**
**पालयामि बलादेव कालयाम्यपमृत्युताम् ॥६४॥**

**तस्मान्मा भीः कुमाराभ ह्यशुभाच्च शुभात्मक ।**

---

(१) अवज्ञाता गुरुणां च देवतानां न सिद्ध्यति ।
प्रयाति च तमो घोरं मन्त्रावज्ञाकृदेव च ॥ ......
गुरुदेवप्रतीपानां विमुखस्तत्प्रिये रतः ।
अकामक्रोधलोभश्च न चिरात् सिद्धिमाप्नुयात् । –

इति तन्त्रसारसङ्ग्रहे (४/११० -११२) सूचितप्रकारेण गुरोः अवज्ञाता न सिद्धिमाप्नुयात् इत्यपि अनुसन्धेयम् ।

**(अन्वयः) (हे शेष!) कालक्षेपः (त्वया) न कर्तव्यः, ते स्वालयं भविष्यति. स्वालयं इति क्लीबोक्त्या च तव आलस्यात् भविष्यति. बलादेव पालयामि. अपमृत्युतां कालयामि. तस्मात् कुमाराभ शुभात्मक अशुभाच्च मा भीः.**

(व्या) कालक्षेपः कालविलम्बकृतविक्षेपः त्वया न कार्यः । ते स्वालयं भविष्यति । 'स्वालयं नैव चालय' (१५/१०५) इति वक्ष्यमाणसमाख्यया स्वालयशब्दाभिमतं नृपाभीष्टं सतामाश्रयरूपं भविष्यतीत्यर्थः ।।६३।। 'स्वालयस्ते भविष्यति' इति वक्तव्यं नपुंसकोक्तेस्तु किं प्रयोजनम् इत्यत आह – क्लीबोक्त्या इति ।। मदनुग्रहबलात् । (उक्तफलं विलम्बेन । तव वार्धक्ये वा भविष्यति । तव प्रयत्नं विना भविष्यति ।) स्वालयं भूपं पालयामि । (बलादेव मदनुग्रहबलादेव) अपमृत्युतां कालयामि परिहरामि ।।६४।। तस्मात् हे कुमाराभ! वृन्दा-वनाचार्यसदृश (शेष)। (हे शुभात्मक! शुभस्वरूप अशुभात् मा भीः ।)

**सभासु भास्वरं वाक्यं भावगर्भं तु बोधय ।।६५।।**

**बुद्धिमान् भव सिद्धेश श्रद्धां कुरु बुधे मयि ।**
**विप्रस्य तनुरेवेयं मत्तनुर्नात्र संशयः ।।६६।।**

**अत एव स्वतो विप्रः स्वकृत्या वक्ति मत्कृतिम् ।**
**सुकृतिं चास्य विप्रस्य स्वकृत्या साधयाम्यहम् ।।६७।।**

**(अन्वयः) (हे शेष) सभासु भासुरं वाक्यं भावगर्भं तु बोधय । हे सिद्धेश बुद्धिमान् भव । बुधे मयि च श्रद्धां कुरु. इयं विप्रस्य तनुः मत्तनुः एव अत्र न संशयः । अत एव विप्रः स्वतः स्वकृत्या मत्कृतिं वक्ति । अस्य विप्रस्य सुकृतिं स्वकृत्या अहं साधयामि ।**

(व्या) निर्भयः सन् सभासु भावगर्भं भासुरं वाक्यम् एतदाख्यानगतं बोधय ।।६५।। हे सिद्धेश! मद्दयापात्रत्वेन निश्चितानां श्रेष्ठ, बुधे वृन्दावनाचार्यविषये मयि च श्रद्धां कुरु । त्वयि श्रद्धायुक्ते विप्रे तु कुतः (मम) श्रद्धा? इत्यत आह – विप्रस्येति ।। विप्रशरीरस्य मच्छरीरानुगृहीतत्वात् मत्तनुः (सा मत्तनुरेव) ।।६६।। (अत एव प्रतिमायामिव विप्रे मम स्थितत्वादेव) विप्रः स्वकृत्या स्वप्रयत्नेन मत्कृतिं मत्कृतमिदमाख्यानं वक्ति ।। अस्य विप्रस्य सुकृतिं बादरायणपूजादिसाधनप्रयत्नं स्वकृत्या मत्प्रयत्नेन साधयामि ।

**प्रयत्नं स्वकृत्या मत्प्रयत्नेन साधयामि ॥६७॥**

**तस्माद्विप्राय दातव्यं क्षुधितायान्नमुत्तमम् ।**
**सकुटुम्बाय दारिद्र्यात् क्रुद्धाय शुद्धाय च ॥६८॥**

**'अन्नकामाय चरते कृशाये'ति श्रुतौ सुत ।**
**पश्यान्नदानमाहात्म्यं मानसिद्धमनन्तकम् ॥६९॥**

(अन्वयः) तस्मात् सकुटुम्बाय दारिद्र्यात् क्रुद्धाय शुद्धाय च क्षुधिताय विप्राय उत्तमम् अन्नं दातव्यम् । हे सुत! अन्नकामाय चरते कृशाय इति श्रुतौ मानसिद्धम् अनन्तकं अन्नदानमाहात्म्यं पश्य.

**(व्या) तस्मादिति ॥ तस्मात्** मत्प्रतीकरूपत्वाद्विप्रस्य **क्षुधिताय** तस्मै **उत्तमम् अन्नं दातव्यम्** । **सकुटुम्बाय** पोष्यानेकसमुदायरूपकुटुम्बसहिताय, **दारिद्र्यात् क्रुद्धाय** = अन्यायेन स्वकीयभोज्यवित्तापहारिषु क्रुद्धाय, अत एव **शुद्धाय** (तादृशक्रोधः न पापकारणम् इति भावः) ॥६८॥ अन्नदाने को विशेषः? इत्यत आह – **अन्नकामायेति ॥** ('कृशायान्नकामाय चरते' इति श्रुतिवाक्यभागः । तस्यां श्रुतौ अन्नदातुः अक्षयलोकप्राप्तिरुच्यते । **हे सुत** शेष! तादृश अपौरुषेयवेदोक्तम् **अनन्तकम्** अपरिमितम् अक्षयलोकप्रापकत्वरूपं **माहात्म्यं पश्य** जानीहि) ॥६९॥

**श्रुत्यर्थं जानतः पुत्र कुतो वक्ष्ये निरन्तरम् ।**
**मानतः प्राप्तधर्मं तं मा त्यज त्वं सुतोत्तम ॥७०॥**

(अन्वयः) हे सुतोत्तम! श्रुत्यर्थं जानतः (ते) निरन्तरं कुतः वक्ष्ये? त्वं तं मानतः प्राप्तधर्मं मा त्यज.

**(व्या)** (**श्रुत्यर्थम्** उदाहृतश्रुतितात्पर्यं **जानतः तव** हे पुत्र! मया निरन्तरोपदेशः अनवश्यकः । तस्मात् **हे सुतोत्तम!** सुतः वृन्दावनाचार्यः उत्तमः यस्य तस्य सम्बुद्धिः । हे वृन्दावनाचार्यशिष्य **तं मानतः प्राप्तधर्मं** 'स्वोत्तमाय गुरवे पात्रभूताय अन्नदानरूपं धर्मं' **मा त्यज** ॥७०॥)

**अहं नमामि कामेन मानवायान्नदाय च ।**
**दानवा अपि यास्यन्ते चान्नदानात्सुसद्गतिम् ॥७१॥**

**(अन्वयः) अन्नदाय मानवाय च कामेन अहं नमामि, दानवाः अपि च अन्नदानात् सुसद्गतिं यास्यन्ते ।**

**(व्या) अन्नमिति ।। अन्नदाय**[१] मानवाय (ज्ञानार्थिमद्भक्ताय) । तद्धितार्थम् अहमपि हरिं नमामि । (**कामेन** स्वेच्छया तस्मिन् प्रसन्नः सन् तस्य अधिकप्रार्थनां विना तस्य अन्नदानकर्मणा सन्तुष्टः सन् तस्मै हरिं प्रार्थयामि ।) **दानवा अपी**ति कैमुत्यकथनम् । (सुसद्गतिम् अभीप्सितपदवीं सम्पदादिकम्) ।।७१।।

### अन्नशब्दस्य निर्वचनम्

**अन्नस्य नाम्ना चानन्तोप्यतियत्नं करोति च ।**
**जीवानां जनने को नु मानसिद्धं परित्यजेत् ।।७२।।**

**अन्नाद्भूतानि जायन्ते जाताश्चान्नेन वर्धन्ते ।**
**आद्यतेत्ति च भूतानि तस्मादन्नं तदुच्यते ।।७३।।**

**(अन्वयः) जीवानां जनने अन्नस्य नाम्ना (अन्ननामकेन रूपेण) अनन्तः अपि अतियत्नं करोति च, (ईदृशं) मानसिद्धं (कार्यं) को नु परित्यजेत् । अन्नात् भूतानि जायन्ते, जाताः च अन्नेन वर्धन्ते । भूतानि अद्यते अत्ति च तस्मात् तत् अन्नं उच्यते ।**

**(व्या) जीवानां जनने** जननार्थं (अनन्तोऽपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिप्रतिपाद्यनारायणोपि) अन्ननामकेन रूपेण **अतियत्नम्** ब्रह्माद्यपेक्षया अतियत्नं करोति ।। (एवं हरिणा अन्ननामग्रहणेन अन्ननामकपदार्थस्य प्राशस्त्ये ज्ञापिते सति, **को नु** मानसिद्धम् अक्षयफलप्रदम् अन्नदानं **परित्यजेत्** । स्वोत्तमे पात्रे प्राप्तेऽपि न कुर्यात् ।।७२।।) अन्ननामकरूपेण स्रष्टृत्वबोधकं श्रुतिवचनं पठति । **अन्नाद्भूतानीति ।।** उपजीव्यत्वरूपमद्यत्वम् । संह-

---

(१) ''अन्नस्य क्षुधितं पात्रं पानीयस्य पिपासितम् ।।
अन्नदो जलदश्चैव आतुरस्य चिकित्सकः ।।
त्रयस्ते स्वर्गमायान्ति विना, यज्ञेन भारत । ''– महाभारते ।
'अन्नं ज्ञानरसान्नं च बाह्यमन्नमिति द्विधा ।
ज्ञानान्नं ज्ञानबलतः श्रेष्ठं ज्ञानरतिर्हि तत् ।
यद्बाह्यं तु बलं तस्माद्बाह्यमन्नं विशिष्यते ।' – छान्दोग्योपनिषद्भाष्ये ।

तृत्वरूपमत्तृत्वम्(मत्तित्वम्) । अन्नशब्दस्य प्रवृत्तिनिमित्तमिति ज्ञापयितुम् **अद्यते अत्तिचे**ति अंशोदाहरणम्[१] ।।७३।।

**(अव)** अस्त्वन्ननामकरूपेण स्रष्टृत्वं विष्णोः । ततः किं भौतिकान्नस्य? इत्यत आह – **एवमिति** ।।

**एवमन्नं निमित्तं च कृत्वा तत्तत्करोति च ।**
**अन्नतोपि तथान्नेन माहात्म्यं स्वस्य याति च ।।७४।।**

---

(१) अन्नदन्नादन्न सप्तान्न कल्पनेम्ब अन्नमय रूप अनिरुद्ध ।
अनिरुद्ध जगक्के दिव्यान्नवने कोट्टु सलहुवि' – जगन्नाथदासार्याः ।

''अन्नस्य सारभूतोयं शरीरस्य च केशवः ।।
अन्ननामा चान्नसंस्थः शरीरेषु च संस्थितः ।
अत्तृत्वात् सर्वलोकानामन्नमित्युच्यते हरिः ।
उपजीव्यश्च भूतानामिति चान्नं जनार्दनः ।।
अन्नस्थोन्नेन सहितस्तस्मिन् रेतस्त्वमागते ।।
तस्मिन् स्थितः स्वरूपं स पुरुषस्थो बिभर्त्यजः ।
तद्रूपं रेतसा साकं स्वयं पुंसि स्थितो हरिः ।।
स्त्रियां सिञ्चति तस्यैव स्थानान्तरगतेः प्रभोः
अन्ननामा स एवान्ने चेष्टयन् सर्वमास्थितः ।।
अन्ने स्थितः स एवेशो ह्यन्नदातृगतिप्रदः ।।'' ऐतरेयभाष्ये श्रीमदाचार्याः ।

* प्रथमान्न श्रीहरिय भक्ति कामन दीक्षे
द्वितीयान्न श्रीहरिय सेवासङ्कल्पवु
तृतीयान्न श्रीहरिय महिमातिशयज्ञान
चतुर्थान्न हरिगुणज्ञतेयलास्तिक्य ।।१।।
ऐदने अन्न हरिसेवेयलि धैर्य म-
त्तादरद भगवद्धर्म आरने अन्न
माधवन गुणविवेकदि तिळिवुदेळने
ओदनवु अन्यधर्मत्याग मृष्टान्न ।।२।।
हीगे मनोरूपन्न सर्वेषु वाक्यदि हरिगु-
णौघगळ कवन नवमान्नदिन्द
ई गेह देह प्राणार्पणेयलि उदार
नागुवदे प्रसन्वेङ्कटकृष्णगे दशान्न ।।३।। – प्रसन्नवेङ्कटदासार्याः ।

**आतोन्नस्याविनाभावात् जीवानां जीवमानता ।**
**अन्नानि चैव जीवानां कानने वासिनामपि ।।७५।।**

**जीवमानप्रदान्येव किमु ग्रामनिवासिनाम् ।**

(अन्वयः) एवं (भौतिकं) अन्नं च निमित्तं कृत्वा तत्तत् करोति । तथा च एवं अन्नतः अपि तथा अन्नेन च स्वस्य माहात्म्यं याति । अतः अन्नस्य अविनाभावात् जीवानां जीवमानता कानने वासिनां जीवानां अपि अन्नानि जीवमानप्रदानि एव ग्रामनिवासिनां किमु.

**(व्या)** यथा अन्ननामकस्य हरेः कर्तृत्वम् । **एवं** भौतिकान्नम् । **अन्नं निमित्तं कृत्वा तत्तत्करोति** (अन्नस्य प्राशस्त्यज्ञापनार्थं न केवलं हरिः 'अन्नम्' इति नाम प्राप्तवान् । किन्तु तद्भौतिकान्नमेव निमित्तीकृत्य बहुसृष्टिव्यापारं च करोति । तत्तत्करोति तत्तत् सृजतीत्यर्थः ।) तथा च अन्ननामकेन हरिणा पालनादिनिमित्तत्वेन क्लृप्तत्वात् । तत्सन्निधानयोग्यत्वाच्च ।। (**अन्नतः** 'अन्नाद्भवन्ति' इत्युक्तरीत्या अन्नम् उपादानीकृत्य जीवदेहसर्जनात् । 'अन्नेन वर्धन्ते' इत्युक्तरीत्या अन्नं निमित्तीकृत्य देहिपालनात् स्वस्य माहात्म्यं प्रकटीकरोति हरिः । अथवा अन्नतः अत्यवश्यकअन्नं परित्यज्य 'अनश्नन् अभिचाकशीति' इत्युक्तरीत्या परिपूर्णएव स्थित्वा अन्नेन सर्वेषां मुक्तानाम् अमुक्तानां देवतानाम् अदेवानां सिद्धान्नदानेन शुच्यन्नदानेन दैवान्नदानेन च स्वसामर्थ्यं प्रकटयित्वा सप्तान्नेन वा । निखिलं जगत् अन्नत्वेन परिकल्प्य च स्वसामर्थ्यं प्रकटयित्वा च स्वस्य माहात्म्यं याति । तथा च अन्ने हरिसन्निधानमधिकम् इति भावः ।।)

अतो **अन्नस्येति** ।। अन्नस्य(१) परमात्माविनाभावात् जीवमानता युक्ता । अत्र **मान**शब्दः

---

(१) अन्नस्थेनैव जीवन्ति भूतान्येतानि विष्णुना ।
प्रतिहारदेवतातः स प्रतिहारो हि भोजनम्
तपो ज्ञानस्वरूपत्वाद् विज्ञानं तु विवेचनात् ।
ज्ञानानुसन्धानरूपतपसा तं जनार्दनम् ।।
क्रमाद् भृगुर्व्यजानात् तमन्नादिबहुरूपिणम् ।
एवं विजानंस्तं विष्णुं तस्मिंस्तु प्रतितिष्ठति ।।
मुक्तो भूत्वान्नवांश्च स्यादन्नादश्च सदैव तु ।
अन्ननामा तु भगवान् विद्वांस्तमुपजीवति – तैत्तिरीयोपनिषद्भाष्य.भृगुवल्ली.

सन्मानपरः । कैमुत्यमाह – **अन्नानि चैवेति** ।।७५।। (अथवा अतः हरिप्रसादात् जीवशब्दः भाववाचकः । देहि जीवानाम्(जीवनानां) अन्नेन व्याप्तत्वात् । 'अन्ने सत्येव जीवनम् अन्नाभावे जीवनाभावः' इति व्याप्तिसद्भावात् **अन्नस्य जीवमानता** सिद्धा । कर्मणि ल्युट् अन्नस्य जीवैः सत्कारार्हत्वं सिद्धम् । अथवा जीवानां जीवमानता प्राणिनां जीवनपरिमितिः अन्नस्याविनाभावात् सिद्धा । 'अन्ने सत्येव शतवर्षजीवनम् । अन्नाभावे शतायुषजीवनाभावः' इति अन्नस्य यावदा-युर्जीवनं प्रति कारणत्वं प्रमितम् । एवम् उभयथापि अन्नं न निन्द्यात् । अन्नं बहु [१]कुर्यात् । अन्ने हरिसन्निधानम् अधिकम् इति सिद्ध्यति ।।७४भ।।)

### अन्नदानद माहात्म्येय श्रवणद फल

**आतोन्नसदृशो मानो जीवानां नैव विद्यते ।।७६।।**

**मयोक्तमन्नतत्वं च शृणुते योऽनिशं सुत ।**
**अन्नं च लभते पूर्णमनन्तं चापि पश्यति ।।७७।।**

(अन्वयः) अतः जीवानाम् अन्नसदृशः मानः नैव विद्यते. हे सुत (शेष!) मया

---

(१) वेदैनं तत्त्वतो ब्रह्मा स एनं पञ्चरूपिणम् ।
प्राप्य गायति मुक्तः सन्नन्ननामास्मि भोग्यतः ।।
यथेष्टमन्नभोक्ता च कीर्तिकर्ता हरेस्तथा ।
ऋतरूपस्य विष्णोस्तु पुत्रः प्रथमजो ह्यहम् ।।
देवेभ्यः पूर्वजश्चाहं मुक्तानामाश्रयः सदा ।
यो ददाति च मां सम्यग् विष्णुतत्त्वप्रकाशकः ।।
स इत्थमेव मां याति विष्णोरन्नमहं सदा ।
ममान्नं सर्वजीवास्तु भोग्या मम यतः सदा ।।
सर्वमभ्यभवं चाहं गुणैः सर्वैश्च नित्यकैः ।
सुवर्णो भगवान् विष्णुर्ज्योतिः स मम रोचकः ।।
योहमेवंविदभवं तस्य मे माधवः पतिः ।
इति ब्रह्मा गायमानो मुक्तश्चरति सर्वदा' ।। इति यजुः संहितायाम् । – तैत्तिरीयोपनिषद्भाष्ये

''अन्नं बहु कुर्वीत'' (उ) अन्नं भगवन्तं न परिचक्षीत । न निराकुर्यात् । तद्गुणांस्तत्कर्माणि वा कुत्रापि बहु कुर्वीत । बहुगुणत्वेन प्रतिपादयेत् भगवन्तम् । यया कया च विधया बह्वन्नं प्राप्नुयात्। अतिप्रयत्नेनापि विहितप्रकारेण बहुतरां भगवद्भियां प्राप्नुयात् । – इति भाष्यटिप्पणी.

**उक्तम् अन्नतत्वं यः च अनिशं शृणुते (सः) पूर्णम् अन्नं (परिपूर्णं भौतिकान्नं) च लभते, अन्नं तं (अनन्तं) अपि च पश्यति.**

(व्या) (अतः जीवानाम् अन्नसदृशः मानः अन्नदानसदृशसत्कारः[१] नास्ति । तस्मात् सर्वप्रयत्नेन पात्रे प्राप्ते शुच्यन्नं दद्यादिति भावः ।।७६।।) **मयेति ।।** उक्तार्थश्रवणफलमाह – मयेति ।। (अनिशं प्रतिदिनं शृणुते । यथाशक्ति अन्नदानं च विष्णुज्ञानपूर्वकं करोति यः सः) **अन्नं** तम् अन्ननामकं परमात्मानं च 'पश्यति' इत्यनेन परिपूर्णभौतिकान्नलाभः । तन्नामक-परमात्मदर्शनं च फलमित्युक्तं भवति ।।७७।।

(अव) उक्तार्थे अनुपपत्तिशङ्कया प्राप्तव्यमनिष्टमाह – **इदं कथमिति ।।**

**इदं कथं सङ्कटतेनुपपत्तिरथात्र तु ।**
**इति मा वित्त जीव त्वं कत्थनं वापि मानव ।।७८।।**

**यद्येवं वदसे विद्वन् मद्वन्दनविधिं कुरु ।**
**क्रुद्धश्चेत् छिन्धि क्रोधं तं भिन्धि दुर्बुद्धिपद्धतिम् ।।७९।।**

**(अन्वयः) अथ अत्र (उक्तार्थे) तु 'इदं कथं सङ्कटते' इति अनुपपत्तिः हे मानव! त्वं मा वित्त, (हे) जीव! कत्थनं वा अपि (मा कुरु); हे विद्वन्! यदि एवं वदसे (अपराधपरिहारार्थं, पश्चात्तापपूर्वकं) मद्वन्दनविधिं कुरु । त्वं क्रुद्धः चेत् क्रोधं त्यज, दुर्बुद्धिपद्धतिं छिन्दि ।**

(व्या) अनुपपत्तिः (स्वप्ने प्रतिदिनम् उक्त्याद्यनुपपत्तिः) इति मा वित्त = मनसि शङ्कां, कत्थनं वापि मा कुरु । **हे मानव** इति सम्बुद्धिः । मानेन एनां पद्धतिम् । सात्विक-ग्रन्थतिरस्काररूपां । भिन्धि त्वमेव खण्डय । अन्येन तादृशप्रश्ने कृते सति त्वं खण्डय । त्वमेव तथा वेदानुसारिग्रन्थतिरस्कारं न कुरु इति किमु वक्तव्यमिति भावः ।।७९।।)

---

(१) अन्नदान माडदगोसुग श्वेतराय । तन्न मांस ताने केत्तिकोंडू ।
तिन्नु तिप्पनु नित्य क्लेशव बडुतलि । स्वर्गदल्लि वास ।
मुन्नेगति काणदे इरुतिरे नानाधर्म । अनन्त माडिद कालक्कागे ।
अन्नदान माडदगोसग ई बगेयु । इन्नेनु पेळलि इत्त नारन्द मुनि ।
पन्नगशयनन पाडुतली ........ – इति श्रीविजयदासार्याः ।

**नोचेद्गच्छस्व दूरं तु दारं प्रति सदा कुरु ।**
**द्वारं राज्ञां पुनर्गच्छ धीरवादमपाकुरु ॥८०॥**

(अन्वयः) नो चेत् दूरं तु गच्छस्व, दारं प्रति सदा कुरु. राज्ञां द्वारं पुनर्गच्छ धिीरवादं च अपाकुरु.

**(व्या) नो चेत् ॥** अपराधपरिहारार्थं (पश्चात्तापपूर्वकं) वन्दनाकरणे तव दूरदेशगमनं दारप्रतिनिधिभोगः, राजद्वारप्रवेशः, धीरवादकरणं च स्यादिति भावः । 'द्वारं राज्ञः पुनर्गच्छ' इत्यनुक्त्वा **राज्ञा**मिति बहुवचनेन बहुराजस्वामिके देशे = निवातकवचानां देशे । **धीरवादकरणं** वादिप्रतिवादिसाक्षिणाम् अधीरवादं विचार्य निर्णयानुकूलधीरवादकरणम् (न्यायाधिकारि उद्योगं भविष्यतीति) उक्तं भवति । ('धीरवादमपाकुरु' इति पाठे धिया रमणरूपवेदान्तविचाररूपं वादं परित्यज्य लौकिकमीमांसायां प्रविष्टबुद्धिर्भवसीति भविष्यसूचनं कृतं भवति ॥८०॥)

**(व्या) 'इतः परं कियज्जन्मजातः प्रेक्ष्यति मत्कृतिम् ।**
**अवशिष्टं तु वक्तव्यं ...................'(३/२६)**

इत्यनेन प्राक् प्रतिज्ञातेन कृतापराधे तु अनुग्राहकत्वं प्रकटयितुमाह – **अथापीति ॥**

**(वक्ष्येऽथापि ते कामं कथाक्रमविधिं बुध ।)**
**अथापि ते प्रवक्ष्यामि कथाक्रमविधिं बुध ।**
**सुक्षीणस्त्वं वृथाक्षेपो भिक्षामात्रं ददस्व मे ।**

(अन्वयः) अथापि हे (पुत्र) बुध! ते कामं कथाक्रमविधिं प्रवक्ष्यामि । वृथा आक्षेपः त्वं सुक्षीणः । मे भिक्षामात्रं[१] ददस्व ।

---

(१) **बृहदारण्यकभाष्ये – कहोळब्राह्मणे - भिक्षाचर्यं** - एम्बुदु मुक्तरू माडुत्तारेन्दू, अदु परमात्मन उत्कृष्टत्वद्योतकवागिदेयेन्दू तिळिसिद्दारे - तद्यथा –

उपनिषत् – ... लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति...

भाष्यम् – स तु भगवान्स्वत एवातीताशनायादिरतीतानागतवर्तमानकालेषु ब्रह्मादयस्तु तं विदित्वा तत्प्रसादादेव पश्चादत्येष्यन्ति एतं वैतमित्येतादृशैर्गुणैः साक्षादपरोक्षत्वजीवभेदादिभिर्युक्तमित्यर्थः । भिक्षाचर्यं चरन्ति मुक्ता अपि ब्रह्मादयस्तस्मादेव परमेश्वराद्विप्लुडानन्दमेव भिक्षन्तो वर्तन्ते।

**श्रीराघवेन्द्रश्रीमच्चरणाः तत्वप्रकाशिकाभावदीपे** – ॥ ॐ स्तुतयेऽनुमतिर्वा ॐ ॥३/४/१४ ॥ इत्यत्र

**(व्या)** (**हे बुध** । पण्डित! **कथाक्रमविधिं** वृन्दानाख्याने पापपरिहारकत्वेन मया निर्णीतकर्मानुष्ठानम् । **ते कामं** तव कामितप्रदं **वक्ष्ये** । तव उद्धारार्थं प्रायश्चित्ततया वदिष्यामि) 'मम भिक्षाप्रदानं प्रसक्तानिष्टनिवारकम्' इति भावः । (वृथाक्षेपः इदानीं निष्कारणशङ्कां कृतवान् त्वम् । **सुक्षीणः** - तदानीं दुःखेन तप्तः निर्विण्णः भविष्यसि । तत्काले एतत् प्रायश्चित्तं कर्तव्यमिति सूचितं भवति[१] ।।८०।।

---

– ''बृहद्भाष्ये अथ ब्राह्मणः मुक्तो भवतीत्यर्थः । स मुक्तः येन केनापि वर्तयन्नीदृश एव भिक्षुक एव न कदाचित्स्वतंत्रो भवतीति ग्रन्थेन मुक्तस्य भगवतः सकाशादात्मानं विदित्वा भिक्षाचर्यं चरन्तीति पूर्वप्रकृतानन्दभिक्षुकत्वपरतया व्याख्यातत्वेन'' – इति उदाहरन्ति ।

-अतः प्राप्तकामस्य श्रीगुरुराजस्य भिक्षार्थं सूचनं श्रीविष्णूत्कर्षे पर्यवसति इति अत्र न कुचोद्यावकाशः ।

(१) अत्र भिक्षाप्रदानं तु प्राकृतान्नं सूचितोऽपि छान्दोग्योपनिषदुक्तभगवदुपासनाप्रकारकभिक्षापि अनुसन्धेयम् । तद्यथा – (छान्दोग्योपनिषदि अध्याय ४ खण्डः ३)

**उपनिषत् - तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायाऽत्मा देवानां जनिता प्रजाना॒ हिरण्यद॒ंष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै(१) वयं ब्रह्मचारि-न्निदमुपास्महे दत्तास्मै भिक्षामिति ।। ७ ।।**

**तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात् सर्वासु दिक्ष्वन्नमेव दश कृत॒ सैषा विराडन्नादी तयेद॒ सर्वं दृष्ट॒ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ।। ८ ।।**

**भाष्यम् – 'संवृङ्क्ते सर्वदेवान् यद्वायुः संवर्ग ईरितः ।**
**महिमाऽस्य महानेष यदनाद्योऽत्ति देवताः ।।' इति प्रभञ्जने ।**
**'वायुस्तु सर्वदेवात्ता वायोरत्ता जनार्दनः ।**
**न तस्य कश्चिदत्ताऽस्ति स विराडधिराजनात् ।।' इति च ।**

**वेदेशीयखण्डार्थः** – अनश्चासौ सूरिश्चेत्यनसूरिः । तन्माहात्म्यमाह – महान्तमिति ।। अस्य अनस्य मुख्यप्राणस्य महिमानं महान्तमाहुर्विद्वांसः । कुतः ? यद्यस्मादसौ स्वयं विष्ण्वन्यैरनद्यमानोऽन्नममर्त्यं सर्वदेवजातमत्तीत्यनेनैव प्रकारेण वयमिदं दैवतमुपास्महे । अस्मै वायुदेवताभिज्ञाय ब्रह्मचारिणे भिक्षां दत्तेत्यन्यान् प्रत्याह कापेयः ।। ७ ।। एवमुक्ताः केचित् परिवेषकास्तस्मै तदैव भिक्षां ददुः । एवमाख्यायिकया वायोः सर्वसंहर्तृत्वमुक्तम् । तर्हि स एव सर्वसंहर्ता किं नेति भावेनाऽह रैक्वः – ते वा इति ।। ते वा एते अध्यात्माधिदैवभेदेनोक्ताः अग्न्याद्याः वागादयश्च वायुना मुख्यप्राणेन च सह पञ्चान्ये पञ्चान्ये दश सन्तः पूर्णाः सन्तो यतः तत् तस्मात् कृतमित्युच्यन्ते । कृतयुगस्यापि पूर्णधर्मात्मकत्वात् । किं तत इत्यत आह–तस्मादिति ।। तस्माद् उक्तरीत्या वायुना सह दशसङ्ख्यापूरणात् । सर्वासु दिक्षु दशस्वपि दिक्षु स्थिताः दश पूर्णाः अत एव कृतमित्युक्ताः अग्न्याद्या वागादयश्च वायुना मुख्यप्राणेन च सहान्नमेव । त

(अव) तव अदृश्यत्वात् कथं भिक्षाप्रदानम्? इत्यत आह – विप्रान्तर्यामिण इति ।।

**विप्रान्तर्यामिणः पूर्णपुण्यस्य तु गुणार्णव ।।८१।।**

**अहं विप्रमुखेनैव चान्नं भोक्ष्यामि नान्यथा ।**
**अनेकवैभवं चापि मन्नन्दनमुखेन तु ।।८२।।**

**विना नान्यत्र भोक्ष्यामि चान्नमात्रं तु तन्मुखे ।**

**(अन्वयः) गुणार्णव! पूर्णपुण्यस्य तु विप्रान्तर्यामिणः, अहं विप्रमुखेन एव अन्नं भोक्ष्यामि च नान्यथा. अनेकवैभवं चापि अनेकवैभवं चान्नं मन्नन्दनमुखेन तु भोक्ष्यामि विना तन्मुखे अन्यत्र न भोक्ष्यामि ।**

(व्या) मम अदृश्यत्वेऽपि प्राप्तजन्मान्तरस्य यतिरूपिणः वृन्दावनाचार्यस्य अन्तर्यामिणः मम भिक्षाप्रदानं युक्तमिति भावः । (पूर्णपुण्यस्य अत एव हरिप्रसादेन अणिमाद्यैश्वर्ययुक्तस्य मम वृन्दावनाचार्ये आवेशरूपेण स्थितिः सुलभा इति भावः । तथैव गुणार्णव इति सम्बोधनेन शेषस्यापि उत्तमसात्विकपुण्ययुक्तत्वात् वृन्दावनाचार्याणाम् उत्पत्तिकाले तत्सहवासः यथा भवति तथा अवतर्तुं शक्यते इति सूचितं भवति ।।८१।।) विप्रान्तर्यामिरूपेणान्नभोजनं कुतः (सर्वदेहिशरीरेषु) अन्तर्यामिरूपिणः किं न स्यात्? इत्यत आह – अहमिति ।। अनेकवैभवं चेति ।। अनेकवैभवम् अन्नं बृहतीसहस्रप्रतिपाद्यमन्नं[१] मन्नन्दनमुखेन इन्द्रमुखेन (मम)

---

एते कस्यान्नं यो वायोरप्यत्तेत्यत आह – सैषेति ।। सैषा वाय्वाद्यन्नादिदेवता विराड् अधिराजनाद् विराण्णामा विष्णुरेव । तस्यास्तदज्ञाने कथमेतदत्तृत्वं स्यादित्यत आह – तयेति ।। तया विराडाख्यदेवतयेदं सर्वं वाय्वादिकं दृष्टम् । सा सर्वज्ञेत्यर्थः । एवं विष्णूपासकस्य तदनुरूपं फलमाह – सर्वमिति ।। योऽधिकारी एवं सर्वज्ञत्वेनान्नादित्वेन च विराडाख्यं विष्णुं वेदोपास्ते । अस्यानेनोपासकेनेदं स्वयोग्यं सर्वं दृष्टं भवति । **सोऽन्नादश्च भवति** ।। ८ ।।

(१) **बृहतीसहस्रं शंसिष्यन्यदा सस्मार केशवम् ।।**
**वायुना सह देवेशस्तदा वासवमाविशत् ।**
**आविष्टो विष्णुनाथेन्द्रो वायुना सह कौशिकम् ।**
**शंसेत्युक्त्वा निषण्णोभूदिदमन्नं तवेति सः ।**

इति श्रीमदाचार्यैः बृहद्भाष्ये यत् बृहतीसहस्रप्रतिपाद्यमन्नभोक्तृत्वम् इन्द्रान्तर्यामित्वेन श्रीवायोः प्रतिपादितं तदत्र भाविसमीरैः श्रीगुरुराजैरपि भावीन्द्रवृन्दावनाचार्यान्तर्यामित्वेन सूचितमिति ज्ञेयम् ।

वायुभावे भोक्ष्यामि । **अन्यत्र न भोक्ष्यामि** । इदानीं तन्मुखे अन्नमात्रभोजनं युक्तमिति भावः ।

**तस्माद्विप्राय दातव्यं त्रातव्यश्च सदा द्विजः ।।८३।।**

**साचिव्यं कुरु वाण्या च वक्तास्या सर्व एव च ।**

**(अन्वयः) तस्मात् विप्राय दातव्यं द्विजः सदा त्रातव्यः च । वाण्या च साचिव्यं कुरु । सर्व एव च वक्ता स्यात् ।**

**(अव)** प्रागुक्तानिष्टपरिहारार्थं शेषाभिमताभीष्टप्राप्त्यर्थं च । हयग्रीवं प्रार्थयामीत्याह – **अनेकमूर्तिसंयुक्त इति** ।।

**अनेकमूर्तिसंयुक्तः कीर्तिसन्ततिसंयुतः ।।८४।।**
**प्रार्थयामि हयग्रीवं स्वार्थं यास्यामि कामितम् ।**

**(अन्वयः) अनेकमूर्तिसंयुक्तः कीर्तिसन्ततिसंयुतः श्रीहयग्रीवं प्रार्थयामि । कामितं स्वार्थं यास्यामि.**

**(व्या)** अनेकभगवद्रूपसंयुक्तः अहं (**कीर्तिसन्ततिसंयुतः** कृतसंशब्देन स्तोत्रप्रवाहेण युक्तः सन्) **हयग्रीवं प्रार्थयामि** ।।८४।। (यदा हयग्रीवम् अहं प्रार्थयामि तदा **स्वार्थं** स्वकीय-भक्तार्थम् । **कामितं** मया अभीप्सितम् । **यास्यामि** **'यं यं लोकं मनसा संविभाति'** इति श्रुतेः । 'मम प्रार्थना अमोघा । हरिकृपा मयि निरन्तरा अधिका च' इति भावः ।)

**(अव)** हयग्रीवप्रार्थनमपि बादरायणसाहित्यकाले इति सूचयितुमाह– **मूर्त्यैकया इति** ।।

**मूर्त्यैकया प्रार्थितया परैश्च स्वार्थेषु सक्तैः कृतकृत्यबुद्ध्या ।**
**आर्तिं च हृत्वा परमार्थरूपं कार्तस्वराभं हयकन्धरस्य ।।८५।।**

**(अन्वयः) कृतकृत्यबुद्ध्या स्वार्थेषु सक्तैः परैश्च प्रार्थितया एकया मूर्त्या कार्तस्वराभं हयकन्धरस्य आर्तिं च हृत्वा,**

**(व्या)** वयं कृतकृत्या इति बुद्ध्या (स्वार्थेषु सक्तैः) स्वाभिमतार्थमात्रासक्तैः परैः (अष्ट) मठाधिपतिभिः प्रार्थितया **एकया मूर्त्या** बादरायणमूर्त्या सहितं **कार्तस्वराभं** (सुवर्णाभं) **हयकन्धरस्य** (आर्तिं च हृत्वा स्थितं परमार्थ) रूपं नमामि ।।८५।।

**नमामि कामेन विना वदामि नामानि तस्यैव सुमानवाप्त्य ।**
**ध्यायामि मायामपि कामितप्रदां त्वया मतं सूक्ष्मतरं हृदिस्थितम् ।।८६।।**

(अन्वयः) सुमानवाप्त्य! कामेन विना सूक्ष्मतरं हृदिस्थितं नमामि तस्य एव नामानि वदामि त्वया मतं हृदिस्थितं कामितप्रदां मायां अपि ध्यायामि ।

**(व्या) तस्य नामानि (कामेन विना) वदामि । (हे सुमानवाप्त्य** शेष) **कामितप्रदां मायां** रमामपि **नमामि** । **'आर्तिं च हृत्वा'** इत्यनेन तदा विप्रस्य परकीयार्तिपरिहारः (परकीयेभ्यः प्राप्त आर्तेः) सूचितम् । कीदृशं हयकन्धरस्य रूपम्? **सूक्ष्मतरम् त्वया मतं** । मम च तव च हृदिस्थितम् । अथवा त्वया मतं चिन्तितम् । मनसि स्थितम् ।।८६।।

**शतं शतं च पद्यानां प्रत्यध्यायगतं कुरु ।**
**शुभश्रुतकथ त्वं च भव निःसंशयो भव ।।८७।।**

(अन्वयः) पद्यानां शतं शतं च प्रत्यध्यायगतं कुरु । हे शुभश्रुतकथ! त्वं च निःसंशयः भव.

**(व्या) शतं शतमिति ।। पद्यानां शतं शतं प्रत्यध्यायगतं कुरु** । प्रत्यध्यायगतेषु पद्येषु त्वया अत्यावश्यकत्वेन चिन्तितं पद्यानां शतम् । पृथक् उद्धर्तव्यम् । मत्तः श्रुतकथनः सन् । **निःसंशयो भव** ।।८७।।

**अहमेकेन रूपेण शोकं परिहरन् सदा ।**
**श्लोकान् वक्तुं प्रविष्टोऽहं काकबुद्धौ द्विजोत्तमे ।।८८।।**

(अन्वयः) एकेन रूपेण अहं सदा शोकं परिहरन् (सन्) काकबुद्धौ द्विजोत्तमे श्लोकान् वक्तुम् अहं प्रविष्टः ।

**(व्या)** (**अहम्** एकरूपेण लोकशोकपरिहारकआख्यानं वक्तुं **काकबुद्धौ** = स्वीय-जनोपकारके द्विजोत्तमे विप्रे **प्रविश्य** वर्ते।।८८।।)

**तथैकेनैव रूपेण मत्तोके च प्रविश्य तु ।**
**लोकस्य दर्शनात् सद्यः शोकं परिहराम्यहम् ।।८९।।**

(अन्वयः) तथा एकेन एव रूपेण मत्तोके तु प्रविश्य दर्शनात् सद्यः लोकस्य शोकम् अहं परिहरामि.

(व्या) विप्रे तदुत्तमे वेदवेद्यापेक्षया अवरे वेदनिधौ वृन्दावने च मत्सन्निधानं क्रमेणाधिकमस्तीति त्वया चिन्तनीयमिति भावेनाह – अहमिति ।।८८।। (तथा रूपान्तरेण मत्तोके वेदनिधौ पीठाधिपतौ प्रविश्य 'दर्शनादेव साधवः' इत्युक्तरीत्या तद्दर्शनात् जनानां पापं परिहरन् वर्ते ।।८९।।)

**देववृन्दसमायुक्तो मद्वृन्दावनसंस्थितः ।**
**सद्वृन्दानां प्रयच्छामि चेष्टवृन्दानि सर्वदा ।।९०।।**

**(अन्वयः) देववृन्दसमायुक्तः मद्वृन्दावनसंस्थितः (सन्) सर्वदा सद्वृन्दानां इष्टवृन्दानि च प्रयच्छामि.**

(व्या) (देववृन्देति ।। भगवद्रूपसमुदायेन ब्रह्मा वायुः रुद्रादिदेवानां च समुदायेन संयुक्तः अहं मद्वृन्दावने प्रधानरूपेण संस्थितः । सर्वदा = नियमेन सद्वृन्दानां च इष्टानि = मुक्तियोग्यानां सेवाकर्तृणाम् अभीष्टानि, प्रयच्छामि । इदम् अत्यधिकसन्निधानयुक्तं तृतीयरूपम् ।।) अनेन अस्मिन् काले वेदनिधेरपि जन्मास्तीति सूचितं भवति ।। प्रकरणसम्पूर्णम् ।।

**एतत्सर्वं स्वाप्रपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

**(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्रपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्य- ज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।**

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यानउत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

**(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण)**

मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेम-निर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि-राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मी-हयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

।। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराज-पूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे पञ्चमाध्यायः समाप्तः ।।

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्**= उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते ‘विद्याकामस्तु गिरिशम्’ इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात्

श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक-ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य-जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकं अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**ओं इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मण स्वाप्नवृन्दावनाख्याने अलौकिकविभागे वैभवपर्वणि**
**पञ्चमाध्यायः समाप्तः ॥**

**॥ श्री कृष्णार्पणमस्तु ॥**

## ०६-०००-षष्ठाध्यायः

(व्या) श्रीगुरुभ्यो नमः ।। हरिः ओं ।। पूर्वाध्याये 'विप्रान्तर्यामिरूपेण स्वस्य बादरायणाराधकत्वम्, स्वानुग्रहेण शेषस्य बालगोपालाराधकत्वम्, विप्रान्तर्यामिणः स्वस्य भिक्षाप्रदानम्, आख्यानगतपद्यविशेषोद्धरणम्, शुभश्रुतकथत्वम्, निःसंशयत्वम्, सभासुभावगर्भवाक्यार्थबोधनम्' इत्यादिकमुक्तम् । तत्र इदं कथं सङ्घटते? इत्यादिना अनुपपत्तिशङ्कया कृतापराधस्य कल्पान्तरनिरयप्राप्तिर्युक्ता । एवं सति कथमुक्ताभीष्टभिक्षाप्रदानादिः? दूरदेशगतस्य कुलान्तरोत्पन्नस्य कथं बालगोपालप्रतीकलाभः? इत्याशङ्कां निवारयितुं स्वर्गवित्तरत्नाधीशानाम् इन्द्रकुबेरवरुणानां स्वभक्तत्वेन स्वाधीनत्वात् । संयमनीपतेर्यमस्यापि तथात्वात् । मदनुग्रहपात्राणां प्रमादवशेन निरयप्रसक्तौ मदनुज्ञया निरयपरिहारकत्वादिभाव्यनुग्रहविशेषपात्रत्वेन निश्चितस्य शेषस्य 'पितृभिः सह मज्जेत नरके न च मामकः'(३/२५) इति प्रागुक्तदिशा निरयादिप्रतिबन्धाभावं सूचयितुम् इन्द्रादिकुबेरान्ताराध्यत्वम्() भक्तानां प्रसक्तनिरयपरिहर्तृत्वादिदिव्यभाक्तवैभवम् । मेर्वादिगतभगवद्रूपाराधकस्य ममानुग्रहवशेन प्रयत्नान्तराशक्यमपि बालगोपालाराधकत्वं युक्तम् । इत्यभिप्रायेण मेरुस्थभगवदाराधकत्वादि भौमभागवतालौकिकवैभवम् । रामानुग्रहपात्रत्वरूपदिव्यभागवतवैभवम् । प्रागुक्तबादरायणाराधनानुकूलश्रेष्ठजनसङ्घाधिकारिवेदनिधिविप्रशेषानुग्राहकत्वरूपभौमलौकिकभाक्तवैभवं चोच्यते अस्मिन्नध्याये ।।

### १. शेषप्रकरणम्।। श्लोकाः (१ऽ४९)

(व्या) **'तथैव नन्दने'** इत्यारभ्य **'अतिसौभाग्यवन्तश्च सन्तु भक्तियुता हरौ'** इत्यन्तं शेषश्रोतृकप्रकरणम् । अध्यायसङ्गतिकथनेन पूर्वप्रकरणसङ्गतिरपि उक्ता भवति ।।

**तथैवेति** ।। **नन्दने**ति शेषसंबोधनम् । प्रकरणान्त्यभागे (६/४५) 'मत्पुत्रे कृतपाण्डित्ये विप्रे वृन्दावने सदा' इति विप्रवेदनिधिवृत्तान्तश्रोतुः तदन्यतरत्वं न युक्तम् । व्याससीतापत्यसाधारणकार्यानुपलम्भात् शेषश्रोतृकप्रकरणमेवेदमिति ज्ञायते । **तथैव नन्दनेति** ।।

**हरिः ओं ।। तथैव नन्दने पुण्ये वने नन्दन मानितः ।**
**इन्द्राण्येन्द्रेण चानन्दी मन्दाकिन्यां रमाम्यहम् ।।१।।**

(अन्वयः) हे नन्दन! तथा एव पुण्ये नन्दने वने इन्द्राण्येन्द्रेण मानितः (सन्) आनन्दी अहं मन्दाकिन्यां रमामि ।

(व्या) इन्द्राण्या इन्द्रेण च मानितः सन् (हे नन्दन! शेष! पुण्ये नन्दने वने । आनन्दी सात्विकसुखयुक्तः सन्) मन्दाकिन्यां रमामि ।।

'नन्दने च वने रम्ये स्यन्दने मन्दनन्दने ।
इन्द्राण्येन्द्रेणचानन्दी मन्दाकिन्यां रमाम्यहम् ।।(३/२७)

इति तृतीयाध्यायोक्तमपि इन्द्राणीन्द्रमानितत्वमन्दाकिनीविहाररूपवैभवम् अत्र पुनः किमर्थमुक्तम्? इति चेत्, मन्त्रजपकाले ध्येयत्वेन विप्रश्रोतृकप्रकरणे कथितस्य (इदानीं) शेषं प्रति कथनाभावे अत्र प्रसक्तशङ्कानिवृत्तसम्भवात् । तदुपयुक्ततया प्रागुक्तस्यापि पुनरनुसन्धेयत्व-सूचनाय कथितत्वात् ।।१।।

**तथापरेण रूपेण मेरौ नारायणार्चकः ।**
**सुराणां शरणे रम्ये करणैर्मरणार्तिभिः ।।२।।**

**मुक्तो युक्तो हरेर्भक्त्या शक्त्या सूक्त्या च शक्तिमान् ।**
**पृक्तस्तुषारैर्नेत्रोत्थैः प्राक्तृष्णां त्यक्तवानहम् ।।३।।**

(अन्वयः) तथा अपरेण रूपेण रम्ये सुराणां शरणे मेरौ नारायणार्चकः (सन्) मरणार्तिभिः करणैः अशक्त्या च मुक्तः हरेः भक्त्या सूक्त्या च युक्तः नेत्रोत्थैः तुषारैः पृक्तः प्राक् (अपि) भक्तिमान् अहं तृष्णां त्यक्तवान्.

(व्या) तथापरेणेति ।। (तथैव रूपान्तरेण) सुराणां शरणे आश्रये मेरौ (नारायणार्चकः सन्) मरणेन आर्तिः येषां तानि करणानि तैः करणैः । (मरणकाले दुःखजनकैः इन्द्रियैः अथवा मरणकाले जीवं त्यक्त्वा लयं गच्छद्भिः इन्द्रियैः) ।।२।। मुक्त इति ।। (पूर्वोक्तइन्द्रियैः मुक्तः) अशक्त्या च मुक्तः । हरेर्भक्त्या च सूक्त्या च युक्तः पृक्तः लौकिकतुषारसेकानन्तरं तृष्णा-निवारकत्वम् । नैवं भगवदानन्दस्य (भगवदानन्दस्य = भगवत्सेवाजनितआनन्दस्य) । तत् प्रागपि तृष्णाप्रसक्त्यभावसम्पादकत्वम् इत्यभिप्रायेण उक्तम् प्राक् तृष्णां त्यक्तवान् इति ।।३।।

**तत्र चैवं चिरं रम्ये रमारमणसारणे ।**
**कारणं च विनारीणां शरणं यामि चारणैः ।।४।।**

(अन्वयः) एवं रमारमणसारणे च (अहं) चिरं रम्ये । तत्र अरीणां (कामादीनां) कारणं विना शरणं यामि. एवं वारणैः (चारणैः) ।

**(व्या) तत्र चैवमिति ।। (रमारमणसारणे =)** सरणमेव सारणं सञ्चरणम् । रमारमणस्य सारणं यस्मिन् सः । तत्र (मेरौ कथं सञ्चरणम्? **चारणैः** पार्षदैः सह । तादृशमेरौ ।) **अरीणां** कामादीनां **कारणं विना** । स्वभावतः **शरणं यामि** । **चारणैः** सहिते मेरौ ।।४।। (अथवा **चारणैः** पार्षदैः सहितः सञ्चारं यदा हरिः करोति तदा इति पूर्वोक्तरीत्या अन्वयः । अथवा चारणैः सह सञ्चारादिपरिचर्यादिभिः । **सेवाभिः शरणं यामि** इत्यन्वयः । श्रीकारपक्षे चारणैः सहिते मेरौ इत्युत्तरश्लोकभागेन अन्वयः ।।४।।)

**एवं मेरौ सदारामे चाराधनपरायणः ।**
**नारायणस्य चरणे मरणार्तिं जहामि च ।।५।।**

**(अन्वयः) एवं वारणैः (चारणैः सहिते) मेरौ सदारामे नारायणस्य चरणे आराधन-परायणः (सन्) मरणार्तिं च जहामि ।**

**(व्या) एवमिति ।।** चारणैः सहिते मेरौ । **सदारामे** = तद्गतसमीचीनोपवने । (**नारा-यणस्य चरणे**) आराधनपरायणः सन्[१] । मरणेन लोकानां भाविनीम् **आर्तिं जहामि** ।।५।।

**तथैकेनैव कालेन कैलासे निर्मलाचले ।**
**सालवृक्षशतालोले कोलादिमृगचञ्चले ।।६।।**

**पालिते बालरूपेण कालनं कुर्वता (कुर्वन्तां)सताम् ।**
**लोकेशपालकेनापि लालितोहं न संशयः ।।७।।**

**(अन्वयः) तथा एकेन एव कालेन निर्मलाचले कैलासे सालवृक्षशतालोले कोलादिमृगचञ्चले असतां कालनं कुर्वतां बालरूपेण लोकेशपालकेनापि अहं लालितः (अत्र) न संशयः ।**

---

(१) महाभारततात्पर्यनिर्णये श्रीमदाचार्यैः व्यासावतारवर्णने श्रीमन्नारायणस्य मेरौ बदर्यां च सन्निधानं इत्थं वर्णितम् । तद्यथा –

**चतुर्मुखेशानसुरेन्द्रपूर्वैकैस्सदा सुरैस्सेवितपादपल्लवः ।**
**प्रकाशयंस्तेषु सदाऽऽत्मगुह्यं मुमोद मेरौ च तथा बदर्याम् ।। १०/८७।।**

'सेवितपादपल्लवः' तु श्रीनारायणः - 'नारायणस्य चरणे आराधनपरायणः' तु श्रीगुरुराजाः ।

**(व्या) तथैकेनैव इति ।।** (एकेनैव कालेन तत्काले एव । यत्काले मेरौ हरिसेवाम् अकरवं तत्काले एव रूपान्तरेण) **कैलासे** (तत्रापि निर्मलपर्वतविशेषे । **निर्मलाचले** इति बहुव्रीहिर्वा । कैलासस्य विशेषणम् । पुनः कथंभूते? सालादिवृक्षनिबिडे, कोलादिभयङ्करमृगसंयुक्ते कैलासे) वनरूपाणाम् असुराणाम् । बालरूपेण प्रद्युम्नेन **कालनं** नाशनं कुर्वता । लोकेशपालकेन विश्वपालकेन हरिणा लालितः ।।६८७।।

**हे नन्दन पुनः श्रीमन् ममानन्दप्रदो भव ।**
**मद्दाससङ्गीतसंस्थसत्पद्यानि सदा शृणु ।।८।।**

**सङ्गीतस्यानुकूल्येन त्वङ्गीकुरु पदान्तरम् ।**
**प्रसङ्गीकुरु तस्यार्थं साङ्गीकुरु च मत्कृतिम् ।।९।।**

**(अन्वयः) हे नन्दन मम आनन्दप्रदः सन् पुनः भव । मद्दाससङ्गीतसंस्थसत्पद्यानि सदा शृणु । सङ्गीतस्य आनुकूल्येन पदान्तरं तु अङ्गीकुरु । च तस्य अर्थं प्रसङ्गीकुरु. मत्कृतिं साङ्गीकुरु ।**

**(व्या) हे नन्दनेति ।। हे नन्दन** शेष! **मम आनन्दप्रदः** सन् **पुनः भव** पुनरुत्पन्नो भव । **मद्दाससङ्गीतसंस्थसत्पद्यानि** = मद्दासं प्रति वृन्दावनाचार्यं प्रति, मया सम्यक् गीतानि यानि आख्यानपद्यानि । तानि **सदा शृणु** ।।८।।

**सङ्गीतस्येति** ।। तस्य सङ्गीतशब्दोक्तआख्यानस्य **अनुकूल्येन** पूर्वोत्तराविरोधेन **पदान्तरं** 'नरश्रेष्ठे'ति सङ्केतोक्तपदस्थाने 'पुरुषोत्तमे'त्यादिपदान्तरम् अङ्गीकुरु । **तस्य** अङ्गीकृतपदस्य अर्थं **प्रसङ्गीकुरु** = प्रकृतसम्बन्धयुक्तं कुरु । 'सङ्गतं कुरु' इति यावत् । आख्याने वा गाथान्तरे वा निर्मातृनिक्षिप्तपदानाम् उत्पादनस्य, पदान्तरप्रक्षेपस्य च असङ्गतत्वात् च मत्कृतिं आख्यानश्रवणजन्यसुखरूपां च **मत्कृतिं साङ्गीकुरु** । 'यथा भोजनजनिते सुखे व्यञ्जनादिना अतिशयः । एवम् अतिशयोपेतां ज्ञात्वा बोधय' इति भावः ।।९।।

**विप्रस्य दोषेण कानिचित्पद्यानि मनांसि नः ।**
**शब्दमानविरोधीनि कृण्वन्ति शृणु नन्दन ।।१०।।**

**(अन्वयः) हे नन्दन! शृणु. विप्रस्य दोषेण कानिचित् पद्यानि शब्दमानविरोधीनि मनांसि नः कृण्वन्ति.**

**(व्या) विप्रस्य दोषेणेति ।। विप्रस्य** सम्भावितेन करणापाटवादि**दोषेण शब्दमान-विरोधीनि** शब्दमानविरोधितया जनानां मनांसि कृण्वन्ति ।।१०।। (तन्निमित्तेन अज्ञाः आख्याने अनादरं कुर्वन्तीति भावः । 'कृञ् हिंसायाम्' हिंसनं कुर्वन्तीत्यर्थः)।।१०।।

**अथापि विप्रवर्यस्य दोषो नास्ति शृणुष्व तत् ।**
**जाग्रत्कृतिग्रहे वापि त्वग्रहो जायते सुत ।।११।।**

**स्वाप्नग्रहणशक्तौ च पश्य विप्र चमत्कृतिम् ।**
**तदपि ब्राह्मणस्यास्य मदनुग्रहतोभवत् ।।१२।।**

**सदनुग्रहमाहात्म्यं त्वद्हृदिस्थं सदा कुरु ।**
**अथ चानुसराम्यत्र प्रकृतं पुत्र तच्छृणु ।।१३।।**

**(अन्वयः) अथापि विप्रवर्यस्य दोषः नास्ति तत् शृणुष्व । हे सुत! जाग्रत्कृतिग्रहे (ग्रहणे) वापि तु अग्रहो जायते । स्वाप्नग्रहणशक्तौ च विप्रचमत्कृतिं पश्य । तदपि मदनुग्रहतः अभवत् । (ईदृशं) सदनुग्रहमाहात्म्यं सदा त्वत् हृदिस्थं कुरु । अथ च अत्र प्रकृतम् अनुसरामि । हे पुत्र तत् शृणु ।**

**(व्या) अथापीति ।।** (विप्रस्य विस्मरणेन चरणपदादिकम् आख्याने लुप्तमस्तीति प्रतीतावपि) न विप्रे प्रमादस्य अभिमतत्वं युक्तम्; 'इमं सार्धं च श्लोकं च त्यक्तवानसि विप्रक' इत्यादिना समीकृते आख्याने दोषशङ्कावकाशाभावात् । अथवा निर्दोषव्याख्याने (= वृन्दावनाख्याने) जनानां दोषभ्रमेऽपि[१] विप्रस्य को दोषः? इति भावेनाह – **अथापीति ।।** तथापि केषाञ्चिज्जनानां विप्रे दोषभ्रमेऽपि ।।११-१३।। (हे शेष! त्वम् अनादरमकृत्वा पुनः पुनः शृणु । जाग्रत्कालेपि जनाः श्रुतश्लोकान् विस्मरन्ति । अयं विप्रः स्वप्नकाले श्रुतानेकश्लोकान् अविस्मृत्य जाग्रति() वेदनिधिनिकटे प्रतिदिनम् उदाहरति । तस्माद्विप्रः मेधावी इति जानीहि । किञ्च मेधाविनोपि स्वप्ने श्रुतधारणशक्तिः लोके अतिविरळा । तादृशी शक्तिः विप्रस्य ममानुग्रहेण सञ्जातेति जानीहि ।।१२।। किञ्च ज्ञानिगुर्वनुग्रहमाहात्म्यं 'यं यं लोकं मनसा संविभाति' इत्यादि **आथर्वणश्रुत्युक्तम्** । तत्रापि ऋजुगुरुमाहात्म्यं **श्रुतिगीतोक्तं** सुदृढं मनसि निर्णय । एवं तव हितोपदेशं कृत्वा, प्रकृतं मम माहात्म्यं निरूपयामीत्यर्थः ।।१३।। श्रुतिगीता

(१) देहदोषगळिन्द विरोचननंतह असुरर तप्पुतिळिदिद्दन्नु छान्दोग्य ८ अध्याय ८ खण्डदल्लि नोडबहुदु.

(१०/९४/४१) तात्पर्ये –

'.................. हंसा ब्रह्माण एव तु ।.....
अतो ब्रह्मपदे योग्या जीवा हंसाः प्रकीर्तिताः ।
तेषां परम्पराप्राप्तं यैर्ज्ञानं नियमेन तु ।
ते मुच्यन्ते नैव चान्ये गुरुर्ब्रह्मा यतो नृणाम् ।(१)'

इति वर्तते । 'विपश्चितो घ्नन्ति मुहूर्तसेवया' इत्यत्र तात्पर्यं च पठ (१०/७२/१२) ।।१३।।)

**कृच्छ्रान्नास्ति ममैवेह तथा चापि न संशयः ।**
**अहमेकेन रूपेण स्वर्गेनर्घ्ये न घर्घरम् ।।१४।।**

**दीर्घज्ञानं दिशाम्यद्धा गर्गादीनां न संशयः ।**

**(अन्वयः) तथा अपि च कृच्छ्रात् (प्रयासेन) इह एव मम नास्ति । (अत्र) न संशयः । अहम् एकेन रूपेण अनर्घ्ये स्वर्गे गर्गादीनां दीर्घज्ञानं न घर्घरम् अद्धा दिशामि । (अत्र) न संशयः ।**

(व्या) **कृच्छ्रादिति** ।। **कृच्छ्रात्** प्रयासेन । इहैव । एष्वेवं जनेषु मम बोधनीयत्वेन आवश्यकता नास्ति । तर्हि आख्यानस्य निरधिकारित्वापत्त्या कथमुपादेयता स्यात्? इत्यत आह – **अहमेकेनेति** ।। केषाञ्चिदल्पानां बोधनीयत्वेन आवश्यकत्वाभावेपि नाख्यानस्य अनुपादेयत्वम् ।। **न घर्घरम्** ।। अत्र न समासः । सत्प्रमाणविरुद्धं **घर्घरम्** । तद्विरुद्धं न घर्घरम् । 'क्रकचमिव सतां चेतसः कष्टशास्त्रं' इति दुःशास्त्रजन्यज्ञानस्य घर्घरत्वेनोक्तेः । तद्विरुद्धं सत्प्रमाणानुसारीति यावत् ।।१४भ।।

**यमोऽपि कमनीयं मे रूपं दृष्टा व मनोरमम् ।।१५।।**

**कः पुमानीदृशोस्माकं लोकं नाकं त्वमागतः ।**
**इत्यपृच्छत् प्रचेताश्च सुचेता अपि काश्चन ।।१६।।**

**(अन्वयः) यमः अपि मे (मम) कमनीयं रूपं दृष्ट्वा, 'त्वम् ईदृशः कः पुमान्**

---

(१) (ऋजुत्वचन्द्रोदयेऽपि प्रकाशितम्)

**अस्माकं लोकं नाकम् आगतः इत्यपृच्छत् । ततः सुचेताः प्रचेताः अपि इति अपृच्छत् ।**

(व्या) तद्विरुद्धस्य सत्प्रमाणानुसारित्वं ज्ञापयितुमाह – **यमोपीति ।।** न केवलं गर्गादयः किन्तु **यमोपि मे कमनीयं रूपं** मनोज्ञं रूपं **दृष्ट्वा** ।।१५।। **अस्माकं नाकं लोकम्** अस्मदावासयोग्यं नाकं दुःखरहितं लोकं प्रति **त्वम् आगतः** । अस्मद्दूतादिसहायापेक्षां विना भवदिच्छानुसारेण आगतः । तस्मात् त्वम् अस्मत्सदृशो न । **ईदृशः कः** पुमान् । ईदृश-कमनीयरूपः यः स्वेच्छया मल्लोकागमनसमर्थः स ब्रह्मैव (चतुर्मुख एव) समर्थः; त्वं कः? इत्यपृच्छत् । अहं तस्यापि दीर्घज्ञानं दत्तवानिति भावः ।।१५।। **ततः सुचेताः** सुमनस्कः **प्रचेताः** वरुणः **इति अपृच्छत्** । (पूर्वोक्तप्रकारेण अपृच्छत् । अहं तस्य दीर्घज्ञानं दत्तवान् । सः सुचेताः तृप्तमनस्कः अभूदिति भावः ।) तः काश्चन स्त्रियः (इत्यपृच्छत्) ।।१६।।

**स्त्रियोप्यात्रेयमुख्याश्च कोत्र सुत्राममानितः ।**
**तदापि कमनीयं मे रूपं दृष्टा व मनोभवम् ।।१७।।**

**मेने रतिः स्वभर्तारं कामार्ता रूपसम्पदा ।**

(अन्वयः) **स्त्रियः आत्रेयमुख्याः च अत्र सुत्राममानितः कः (इत्यपृच्छत्) । तदा मे कमनीयं रूपं दृष्ट्वा रूपसम्पदा कामार्ता रतिः अपि स्वभर्तारं मनोभवं मेने ।**

(व्या) **स्त्रियः इति ।।** (स्त्रीणां प्रश्नानन्तरं) आत्रेयमुख्याः ऋषयः 'सुत्राममानितः (अयं) कः' इत्यपृच्छन्? तस्य (वरुणस्य) तासां (स्त्रीणां) तेषां (आत्रेय ऋषीणां) च दीर्घज्ञानं दत्तवान् । ('ते सुमनस्का अभूवन्' इति योजना ।।) तदा तस्मिन् काले **कामार्ता रतिः रूपसम्पदा** मां **स्वभर्तारमिव** रूपसम्पन्नं **मेने** । (मनोभवं कामं मेने) ।। 'सापि दीर्घज्ञानं प्राप' इति भावः ।।१७।।

**एवं स्त्रियश्च सर्वास्ता ऊ(उ)र्वश्याद्याः सुगर्विताः ।।१८।।**

**गुर्वादिष्टास्तु स्वाविष्टाः प्रहृष्टा रूपसम्पदा ।**
**वासिष्ठानथ दृष्ट्वा ताः पृष्टाः कामेन तुष्टिदाः ।।१९।।**

(अन्वयः) **रूपसम्पदा सुगर्विताः उर्वश्याद्याः ताः (प्रसिद्धाः) सर्वा स्त्रियः च एवं**

**गुर्वादिष्टाः तु । (ततः) स्वाविष्टाः वासिष्ठान् अथ दृष्ट्वा कामेन तुष्टिदाः पृष्टाः प्रहृष्टाः.**

**(व्या) एवमिति ।। रूपसम्पदा** गर्विताः उर्वश्याद्याः, ताः प्रसिद्धाः स्त्रियः, एवं **गुर्वादिष्टाः** सत्यः । दीर्घज्ञानं प्रापुः ।।१८।। ततः **स्वाविष्टाः** सत्यः स्वकीयगृहं आविष्टाः सत्यः । प्रविष्टाः सत्यः । **वासिष्ठान्** वसिष्ठसम्बन्धिनः कांश्चित् पुरुषान् दृष्ट्वा । **कामेन तुष्टिदा** अपि पृष्टाः । अयं कः इति पृष्टाः **प्रहृष्टाः** सत्यः । स्वज्ञातप्रमेयं (तान् पुरुषान् प्रति) उक्तवत्यः । (तेऽपि सुमनस्का अभूवन् इति योजना) ।।१९।।

**अष्टाध्यायात्मकं चैतत्कष्टान् परिहरिष्यति ।**
**काष्ठान्ते कुर्वतां ख्यातिं शिष्टानामिष्टदं सुत ।।२०।।**

**(अन्वयः) अष्टाध्यायात्मकं च एतत् शिष्टानां कष्टान् परिहरिष्यति (हे सुत) काष्ठान्ते (तत्) ख्यातिं कुर्वतां शिष्टानां इष्टदं (च) ।**

**(व्या) अष्टाध्यायात्मकमिति ।। अष्टाध्यायात्मकम्** = गर्गादिसमुदायः यमः वरुणः तत्रत्य स्त्रीविशेषसमुदायः आदित्यादिऋषिसमुदायः रतिः उर्वश्यादि स्त्रीसमुदायः वासिष्ठसमूहश्चेति अष्टभिः । तेषाम् अध्यायो अध्ययनं तदात्मकं कर्म शिष्टैः श्रुतं सत् । (**कष्टान् परिहरिष्यति**) **काष्ठान्ते** दिशामन्ते । तत् **ख्यातिं कुर्वतां** सतां कष्टान् परिहरिष्यति । (**इष्टदं** =) इष्टप्रदं च भविष्यति (इति किमु वक्तव्यमिति भावः) ।। यद्वा, एतत् गर्गादिवासिष्ठान्तैरधीतम् अष्टाध्यायात्मकं एतदाख्यानगतवैभवपर्वात्मकम् । तन्मूलभूतप्रथमाध्यायेन सह अष्टाध्यायात्मकं **शिष्टानां** कष्टान् परिहरिष्यति । इष्टप्रदं च भविष्यतीति ।।२०।।

**(व्या)** 'न केवलं गर्गादिभिरहं गुरुत्वेन मानितः । मदनुग्राहकेण यमसभातलगत-रामेणानुग्रहीतश्च' इति ज्ञापयितुमाह – **रामोपीति ।।**

**रामोपि तत्र मां दृष्ट्वा कामेन रहितं मुनिम् ।**
**सुमनोहर मे नित्यं भृत्यो भव समीपगः ।।२१।।**
**इति मामुक्तवान् सक्तं(सूक्तं) स्वपादे चापदात्यजत् ।**

**(अन्वयः) तत्र (यमसभामध्ये) रामः अपि कामेन रहितं मुनिं मां दृष्ट्वा, 'हे सुमनोहर! नित्यं मे समीपगः भृत्यः भव' इति उक्तवान्, स्वपादे सक्तं मां (सूक्तं उक्तवान्) आपदा अत्यजत् च ।**

**(व्या)** **(कामेन रहितं मुनिं मां दृष्ट्वा । हे सुमनोहर मे नित्यं)** समीपगतः भृत्यः हनुमान् भव भाविकल्पे इति भावः ।।२१।। **इति मामिति ।।** (इति मां प्रति रामः मधुरवचनं अवदत् । स्वपादे पतितं मां रक्षितवान् । मम अहितं कल्यादिकम् अत्यजत्)

**एवं यमसभामध्ये समवर्ती सुविस्मितः ।।२२।।**

**कुमाराभं च मां दृष्ट्वा स मारोपि सुलज्जितः ।**

(अन्वयः) **यमसभामध्ये एवं समवर्ती सुविस्मितः । च कुमाराभं मां दृष्ट्वा सः मारः अपि सुलज्जितः (अभवत्) ।**

**(व्या)** एवं **यमसभामध्ये** रामानुगृहीतं **मां दृष्ट्वा समवर्ती** यमः **सुविस्मितः** (अभवत्) ।।२२।। **कुमाराभमिति ।। कुमाराभं** तरुणसदृशम् । कामेन रहितं (इति पूर्वश्लोकेणान्वयः) **मां दृष्ट्वा**, सः प्रसिद्धः (**मारोपि** मारकोपि) तत्र स्वप्रयत्नावकाशाभावात्, लज्जितः बभूव ।।२३।।

**(अव) नरक इति ।।** विप्रे करणपाटवादिदोषशङ्कया अलौकिकप्रयोगदर्शनेन च । केषाञ्चित् पुरुषाणाम् आख्याने प्रामाण्यसंशयेपि महताप्रयत्नेन तद्बोधने (गुरुराजाणां) आवश्यकता नास्ति । गर्गादिभिः प्रमाणत्वेन आख्यानस्य स्वीकृतत्वात्, रामेणादृतत्वाच्चेत्युक्तम् ।। (तथापि) विप्रे च आख्याने च प्राप्तसन्देहानां पुरुषाणां मुक्त्ययोग्यत्वे तु, तेषाम् उपेक्षा युक्ता । मुक्तियोग्यत्वे तु कथं भवतः दयाळुता? इत्यत आह – **नरके इति ।।**

प्राप्तसन्देहानां योग्यतानाम् उद्धारे श्रीगुरुराजस्य दयाळुता

**नरके परकीयाश्च सुरकार्यविवर्जिताः ।।२३।।**

**स्वकीया आपि पाकीयाः प्रकीर्य मम पूजनम् ।**

**शरणं मरणातीतं करुणाकरमञ्जसा ।।२४।।**

(अन्वयः) **स्वकीयाः च परकीयाः सुरकार्यविवर्जिताः नरके पाकीयाः मम पूजनं प्रकीर्य मरणातीतं करुणाकरं शरणं माम् अञ्जसा**

**(व्या) स्वकीयाः** स्वस्य ब्रह्मत्वसमये येषां मुक्तिः ते । परेषाम् ऋजूनां ब्रह्मत्वसमये येषां मुक्तिः **परकीयाः** । तत्र केचित् प्रारब्धवशेन **सुरकार्यविवर्जिताः** आख्यानप्रामाण्यशङ्कया

अभिमतसुरकार्यविवर्जिताः ।।२३।। तेन दोषेण **पाकीयाः** प्राप्तकुम्भीपाकाः । (ते नारकिनः) मदपराधेन प्राप्तम् अनिष्टं बुद्ध्वा । **मम पूजनं प्रकीर्य** भक्त्यादिना पूजां कृत्वा ।

**तरणिं मोहसरणेः सुरणं करणं च माम् ।**
**आगताः स्वागतोक्त्या च का गतिः पापिनामिह ।।२५।।**

**इत्यपृच्छन् स्वच्छतत्वं कुत्सितं कर्म तत्यजुः ।**
**क्रकचच्छेदनं चापि छित्वा सर्वे दिवं ययुः ।।२६।।**

(अन्वयः) आगताः (सन्तः) मोहसरणेः तरणिं मां स्वागतोक्त्या च 'इह पापिनां का गतिः' इति स्वच्छतत्वं सुरणं करणं च अपृच्छन् कुत्सितं कर्म तत्यजुः. सर्वे क्रकचच्छेदनं छित्वा दिवं च अपि ययुः.

(व्या) **मोहसरणेः** मोहो भ्रमः । तस्य सरणिः पन्थाः दुःशास्त्रमिति यावत् । तस्य अन्धकारसदृशस्य । **तरणिं** सूर्यस्थानम् । **सुरणं** सम्यक् ज्ञानम्, **करणं** सुकर्म च **स्वच्छतत्वं** च कीदृशमिति **स्वागतोक्त्या आगताः** सन्तः **अपृच्छन्** (**मरणातीतम् अञ्जसा करुणाकरं मां** शरणे आगताः सन्तः अपृच्छन्) ।।२५।। **इत्यपृच्छन्** (स्वच्छतत्वं ज्ञातुम् इति अपृच्छन् ते प्रश्नकर्तारः) मदनुग्रहेण ज्ञातप्रमेयाः सन्तः, **कुत्सितं कर्म** त्यक्तवन्तः । नरके प्रसक्तं **क्रकच-च्छेदनं छित्वा** स्वर्गं **ययुः** । 'योग्यानाम् (आख्याने) अकाले संशयाद्यपराधप्रसक्तौ उपेक्षाया-मपि, सुकाले प्राप्ते (पश्चात्तप्तानां विषये) अनुग्राहकस्य दयालुता युक्ता' इति भावः ।।२६।।

(व्या) एतत्कथाश्रोतॄणां फलमाह – इत्येवमिति ।।

**इत्येवं नरकोत्तारं त्रातारं सर्वसज्जनान् ।**
**श्रुत्वा हित्वा तु कामार्तिं नरकं यान्तु मत्पदम् ।।२७।।**

(अन्वयः) इति एवं सर्वसज्जनान् नरकोत्तारं त्रातारं श्रुत्वा, कामार्तिं नरकं तु हित्वा मत्पदं यान्तु.

(व्या) एतत्कथाश्रोतॄणां फलमाह – **इत्येवमिति ।। एवम्** उक्तप्रकारेण (नरकात् तत्र पतितान् उद्धर्तारं) **सर्वसज्जनान् त्रातारम्** । येषां मदनुग्रहं विना इष्टसिद्धिर्न भवति तान् सर्वानपि त्रातारं मां श्रुत्वा । **कामार्तिं नरकं च हित्वा मत्पदं यान्तु** ।।२७।।

(व्या) **ममेति** ।। शेषस्य दुःसङ्गकृतमविश्वासं कुबुद्धिं दुर्वादं च परिहर्तुमाह – **ममेति** ।।

**मम स्वप्ने तव स्वप्ने चास्य स्वप्ने वदत्वयम् ।**
**तर्हि विप्रस्य तत्स्वप्नं सत्यं लोके भविष्यति ।।२८।।**
**इत्यविश्वासतः पुत्र ये वदन्ति कुबुद्धयः ।**
**तेषां शापान् प्रदास्यामि दासानामपि शाश्वतान् ।।२९।।**

(अन्वयः) 'अयं मम स्वप्ने तव स्वप्ने अस्य स्वप्ने च वदतु, तर्हि विप्रस्य तत् स्वप्नं लोके सत्यं भविष्यति' इति ये कुबुद्धयः अविश्वासतः वदन्ति; तेषां दासानाम् अपि शाश्वतान् शापान् प्रदास्यामि.

(व्या) **अयं** गुरुराजः विप्रस्य स्वप्ने **अस्य स्वप्ने** (**मम स्वप्ने**) च वदतु; तर्हि (तत्) **विप्रस्य स्वप्नं लोके** जनसमूहे **सत्यं भविष्यति** । सत्यत्वेन निश्चितं भविष्यति । 'विप्रेण सत्यत्वेन निश्चितम्; लोकैरपि तथा ज्ञातं भविष्यति' इति भावः । यद्वा, गुरुराजवैभवविषये सम्भावितमपि लोके वृन्दावनाचार्यादिजनविषये अस्मदादि स्वप्नोक्तिं विना, 'अयं वृन्दावनाचार्यः अयं शेषः' इत्यादि व्यक्तीनां तत्कार्यस्य च अस्मदादि स्वप्नोक्तिः विना । अस्माभिर्निश्चेतुमशक्यत्वेन अस्मदादि स्वप्नोक्तिरावश्यकी । तदभावे तु तन्न सत्यमिति भावः ।।२८।।

(ये कुबुद्धयः हे पुत्र! अविश्वासतः) 'स्वप्नमित्यलौकिकमिति ये वदन्ति । **तेषां शापान् प्रदास्यामि**' इत्येतावता पूर्तौ 'अविश्वासतः कुबुद्धयः' इत्युक्तत्वात् विश्वासेन सुबुद्ध्या च प्रार्थने कृते सति न शापः इति सूचितं भवति । अदासानाम् अविश्वासस्तु स्वाभाविकः । **दासानां** तु दुःसङ्गकृतः । तेषामपि शाश्वतान् शापान् प्रदास्यामीति कथम्? तेषां मुक्त्यसम्भवात् इति चेत् चन्द्रसुग्रीवादीनामिव प्राप्तव्यातिशयन्यूनतासम्पादकत्वेन कतिपयजन्मसुस्थिरत्वेन च शाश्वतान् शापान् प्रदास्यामीति अभिमतत्वात् । तस्मात् 'त्वया मम स्वप्ने च वदतु' इति अविश्वासादिना न वक्तव्यम् ।।२९।।

**कुतो वक्ष्ये भवत्स्वप्ने मृतिं मा यास्व पातकिन् ।**
**सुतं मेऽकुमतिं प्रेत वृथा प्रेरितवानसि ।।३०।।**

**श्रद्धाऽहीनं कुबुद्धे त्वं वृद्धं त्याजितवानसि ।**

(अन्वयः) हे पातकिन्! भवत् स्वप्ने कुतः वक्ष्ये? मृतिं मा आयास्व, हे प्रेत!

**अकुमतिं मे सुतं (त्वं) वृथा प्रेरितवान् असि । श्रद्धा अहीनं वृद्धं हे कुबुद्धे! त्वं (जनैः) त्याजितवानसि.**

**(व्या) कुतो वक्ष्य इति ।। भवत्स्वप्ने कुतो वक्ष्ये** । अनुक्तिकारणं पुण्याद्यभावः । हे पातकिन्! दुःसङ्गरूपपातकोपेत! **मृतिं मा यास्व ।** मरणं प्राप्तो मा भव । अनेन दुःसङ्गदोषेण त्वया 'अयं मम स्वप्ने वदतु' इत्युक्तम् । तत्फलं मरणाद्यनिष्टं प्राप्तव्यम् । अथापि **मरणं मा यास्व**; यतः त्वं मामक इति । 'पितृभिः सह मज्जेत नरके न च मामकः' (३/२५) इतिवदुक्तं भवति ।। **हे प्रेत!** मृतिकारणपातकोपेत ।।३०।।

**श्रद्धाहीनमिति ।। कुबुद्धे!** कुत्सितबुद्धिमन्! **अकुमतिं** कुबुद्धिरहितम् । **श्रद्धाहीनं** श्रद्धया अहीनम् । **वृद्धं मे सुतं वृथा प्रेरितवानसि** ।। त्वया 'मम स्वप्ने वदतु' इत्याद्युक्तावपि तस्य श्रद्धाभङ्गाद्यभावात् त्वं जनैः **त्याजितवानसि** । विप्रस्य श्रद्धादिलोपाभावेपि । 'इतः परं जनान् प्रति न वक्तव्यम्' इति जनेष्वपि अविश्वासोत्पादनेन जनैः त्याजितवानसीति भावः ।।३०।।

**(अव)** अपरोक्षतः अनभिमतकथने उक्तरीत्या शापादिप्रदानं युक्तम् । परोक्षतः कथितं तु कथं ज्ञायते, कथं च शापप्रदानम्? इत्यत आह – सर्वज्ञोहमिति ।।

**सर्वज्ञोऽहं न सन्देहः कुमतिज्ञो दुरात्मनाम् ।।३१।।**

**सुमतिज्ञः सतां चापि तत्वज्ञोहं विशेषतः ।**
**सर्वत्र तव विश्वासो ह्यविश्वासः कुतोत्र तु ।।३२।।**

**(अन्वयः) अहं सर्वज्ञः न सन्देहः । दुरात्मनां कुमतिज्ञः । सतां सुमतिज्ञः । अपि च विशेषतः अहं तत्वज्ञः । तव विश्वासः सर्वत्र हि । अत्र तु अविश्वासः कुतः?**

**(व्या) मम** सर्वज्ञत्वेन दुष्टानां कुमतिम्, सज्जनानां सुमतिं च जानतः विशेषेण अखिल-तत्वज्ञस्य परोक्षे अनभिमतकथितज्ञानं तेन शापश्च कथमिति न चिन्तनीयमिति भावः ।।३१।।

ननु वेदादिदृष्टान्तेन वृन्दावनाख्यानस्य उपादेयत्वादिकं (न) वृन्दावनाख्यानेनैव ज्ञातव्यम् । तस्मादत्राविश्वासः इति चेत्, (सत्यम्) 'स्वाध्यायो अध्येतव्यः' इत्यादि वेदेनैव वेदस्यो-पादेयत्वमुक्तम् । न बौद्धादिभिः । श्रीमदाचार्याणां वायुत्वमपि श्रीमदाचार्यैरेव । तद्गुरुणा बादरायणस्वामिना आचार्यशिष्यैश्च (टीकाचार्यत्रिविक्रमप्रभृतिभिः) उक्तम् । न परैः (अद्वैतिभिः) इत्यादि कुशङ्कया सर्वत्राप्यविश्वासो भवति । वेदाद्युक्तस्य (सजातीयविजातीय)संवादादिदर्शनात्

विश्वासश्चेत् । अत्रापि तथा संवादाद्युपलम्भात् अविश्वासः कुतः इति भावः ।। (वाक्यं स्वतः प्रमाणम्; बाधकसद्भावे प्रामाण्यं नास्तीति निश्चीयते । यथा वेदे भारते च बाधकं नास्ति तथा अत्रापि बाधकं नास्ति । अप्रामाण्यशङ्कायां वेदे अपौरुषेयत्वा- दिरूपशङ्कापरिहारयुक्तिरस्ति । भारते वेदपरिगृहीतत्वआप्तिमूलत्वादि युक्तिभिः अप्रामाण्यशङ्का निवर्तते । तथा अत्रापि आप्तिमूलत्व, वेदवेद्यादिसत्यधर्मादिशिष्टपरिगृहीतत्व, विजयदास- जगन्नाथदासादि वृन्दावना- चार्यादि अपरोक्षिपरिगृहीतत्व- संवाद- फलोपलब्धि- शास्त्रानु- सारित्वादियुक्तयः शङ्कां निवर्तन्ते । तस्मात् तत्र वेदादिषु विश्वासं कृत्वा अत्र अविश्वासकरणे कारणं नास्तीति भावः । राघवेन्द्रस्वामिप्रभृतिभिः कैश्चित् ज्ञानिभिः न प्रमाणत्वेन उदाहृतम् इति चेत्, तैः आख्यानग्रन्थः अप्रमाणमिति नैव निन्दितः । प्रमाणत्वेन उदाहरणाभावे कारणान्तरमूह्यते । यथा अङ्गिरसऋषिणा वेदाः प्रमाणम् इति नोक्तं तत्पुत्रेण बृहस्पतिना वेदाप्रामाण्यसाधकचार्वाकमतं प्रणीतम् । तथापि अङ्गिराः वेदप्रामाण्यवादी एव । तेन प्रमाणत्वेन उदाहरणाभावे कारणान्तर- मस्ति । एवमेव कतिपयज्ञानिभिः प्रमाणत्वेन अस्तुतेपि इदम् आख्यानं तेषाम् असम्मतम्, तैः अप्रमाणत्वेन निश्चितमिति न सिद्ध्यति । 'अप्रतिषिद्धम् अनुमतम्' इति न्यायेन 'यच्चानुकूलमेतस्य' इति तैः आदृतन्यायेन च इदम् आख्यानं तेषामपि सम्मतमेवेति सिद्ध्यतीति भावः । **आख्याने अप्रामाण्यशङ्का अविमर्शमूला** इति फलितार्थः ।।) यद्वा, गुरुराजऋजु- भावादिबोधकएतदाख्यानभागेषु विश्वासवतां लौकिकभागेपि विश्वासमुत्पादयितुमाह सर्वत्र अलौकिकभागेषु (ऋजुत्वादिबोधकेषु) तव विश्वासः कुतः? अत्र लौकिकभागेषु अविश्वासः कुतः (अर्धस्य प्रामाण्यम् अर्धस्य अप्रामाण्यमिति अर्धजरतीयन्यायस्य दुष्टत्वादिति भावः)।

### फलोपलब्ध्या अपि आख्याने प्रामाण्यनिश्चयं भवति

**अविश्वासोऽत्र ते सम्यक् यदि वा तर्हि सर्वतः ।**
**अविश्वासो भवत्येव तव सत्यं मयोदितम् ।।३३।।**
**विश्वासस्तत्र चेत्पुत्र ह्यविश्वासः कुतोत्र तु ।**
**सर्वे मयोक्ताः श्लोकास्ते शोकमूलस्य नाशकाः ।।३४।।**

**काकवाक्यानीव पुत्र मा कुरु त्वं परेरितः ।**

(अन्वयः) यदि वा अत्र ते सम्यक् अविश्वासः तर्हि सर्वतः अविश्वासः एव भवति, (तत्र) मया उदितं सत्यम् (इति) तव विश्वासः चेत्, हे पुत्र! (शेष) अत्र

**तु अविश्वासः कुतः? मयोक्ताः सर्वे श्लोकाः ते शोकमूलस्य नाशकाः हि । पुत्र त्वं परेरितः काकवाक्यानि इव मा कुरु ।**

**(व्या) अविश्वास इति ।।** (अत्र आख्याने तव अविश्वासश्चेत्, अप्रामाण्यशङ्का चेत्, तर्हि विना कारणं दुष्टान्तःकरणेन शापादिदोषेण अप्रामाण्यशङ्का कृता चेत्, तादृशकारणेन वेदभारतादिष्वपि शङ्का जायते एव । अशुद्धमनस्कस्य महदनुग्रहरहितस्य वेदादिसच्छास्त्रेपि न भवत्येव सुदृढप्रामाण्यनिश्चयः ।।३३।। तत्र विश्वासः गुरूपदेशेन शक्यते चेत् अत्रापि वृन्दावनाचार्यदिज्ञातृः तत्तत्वानाम् उपदेशेन प्रामाण्यनिश्चयः स्यादेव । ननु फलोपलब्ध्या वेदादिसच्छास्त्रे प्रामाण्यनिश्चयः सुशकः इति चेत् । अत्रापि आख्याने मयोक्ताः सर्वे श्लोकाः । शोकमूलस्य पापस्य नाशकाः । तथा च अनिष्टनिवृत्तिः इष्टप्राप्तिश्च स्याताम् । तद्रीत्या अपि अप्रामाण्यशङ्का दूरीक्रियाताम् इति भावः ।।३४।।) यदि लौकिकभागेपि अविश्वासः स्यात् । तर्हि निदर्शनाभावेन आख्यानगत अलौकिकभागोक्तार्थज्ञानेपि । प्रामाण्यनिश्चायकाभावेन सर्वत्राप्यविश्वासः स्यादिति भावः । तस्मात् सर्वेप्याख्यानगतश्लोकाः **शोकमूलस्य** दुःखमूलस्य **नाशकाः** ।।३४।।

तान् (आख्यानश्लोकान् सकलभागगतान्) **काकवाक्यानीव परेरितः** सन् **मा कुरु** । (आख्यानस्य प्रामाण्येपि विशिष्टअनुबन्धचतुष्टयशून्यत्वात् महज्जनैरनुपादेयमिति ज्ञात्वा न तिरस्कुरु । यतः शोकमूलनाशकेन मोक्षहेतुभूतज्ञानजनकमेतत् । विरक्तमुक्तियोग्यानाम् अधिकारिणामिति भावः) ।।३४।।

**(अव)** अविश्वासप्रयोजकदुष्टान्तःकरणत्वादिदोषरहिते श्रद्धादिगुणसम्पन्ने अस्मदीये अविश्वासः अपवादतुल्यः । तेन 'विप्रप्राणावधिपर्यन्तं वक्तव्यमखिलं वक्ष्यामि' इति (३/८१) उत्सर्गतः प्रतिपादितस्य अकथनम् (५/१५,६/४०) । कार्यस्य प्रस्तुतत्वरूपम् उत्तेजकम् (१०/१३५) तेन (उत्तेजकेन) कदाचित्कथनम् इत्यभिप्रायेणाह – **विप्रोयमित्यादि ।।**

**विप्रोयं मम सद्बुद्ध्या शुद्धान्तःकरणोऽभवत् ।।३५।।**

**श्रद्धायुक्तो मयोक्ते तु वृत्तिं याश्नां करिष्यति ।**
**यावदीश्वरदत्तं वै तावतैव सुखी भवेत् ।।३६।।**

**(अन्वयः) (हे शेष!) अयं विप्रः मम सद्बुद्ध्या शुद्धान्तःकरणः अभवत् । मयोक्ते**

**तु श्रद्धायुक्तः (सन्) याच्ञां वृत्तिं करोति, ईश्वरदत्तं यावत् वै तावत एव सुखी भवेत्.**

**(व्या) श्रद्धेति ।।** मम कारुण्यबलात् **शुद्धान्तःकरणः** सन्, **अयं विप्रः** द्रौपदी-करान्नभोजनेन अच्युतप्रेक्षाचार्यवत्, वृन्दावनाचार्यो भूत्वा, पूर्वपुण्येन प्राप्तशुद्धमनसा, **मयोक्ते** आख्याने सुदृढ**श्रद्धायुक्तः** सन्, सन्यासाश्रमं सम्यगनुतिष्ठति ।।३६।।

(ननु मध्वशास्त्रेण अपरोक्षज्ञानं जायते । अनुत्पन्नआख्यानकालेऽपि अधिकारिणः अपरोक्षज्ञानिनः अभूवन् इति चेत्; सत्यम् । पूर्वं वेदोपनिषद्भिरेव ऋषयः विचारयुक्तगुरूपदेशेन अपरोक्षं प्रापुः । गौतमशापादिना वेदादिगतशक्तिकुण्ठने सति श्रीबादरायणः मीमांसाशास्त्रेण प्रतिबन्धकं निराचकार । तदनन्तरं असाधुअद्वैतनिबन्धादितमसा मीमांसाशास्त्रमपि यदा कुण्ठितशक्तिमभूत् तदा श्रीमध्वगुरुः दुःशास्त्राणि खण्डयित्वा प्रतिबन्धकं निराचकार । कृते मध्वशास्त्रेपि क्वचित् वर्षशतद्वयकालानन्तरं माध्वजनाङ्गे जात असुरादिभिः बहिःजातशैवादिभिः हूणादिभिश्च वैष्णवजनानाम् अन्तःकरणानि मलिनानि अभूवन् । **मनोदोषैः गुरूपदेशयोग्यता नष्टोभूत्** । आख्यानेन वृन्दावनसेवया च ते दोषाः प्रविलीयन्ते । यथा मध्वशास्त्रं मीमांसाशास्त्रोक्तं सुदृढं प्रतिपाद्यसार्थकमभूत् । तथा वादिराजगुरुरपि स्वरचितं वृन्दावनाख्यादि सर्वं शास्त्रं मध्वशास्त्रोक्तमेव, पुनः निपुणतरं शङ्कान्तरनिरासपूर्वकं प्रतिपाद्य, मन्त्रतुल्यग्रन्थरूपेण च सार्थकमेवेति ज्ञातुं सुलभतया चकार । एवम् उत्तरत्र श्रीविष्णुतीर्थैः रचिष्यमाण ग्रन्थाः । दुर्गा-देव्यवतारकाले भविष्यग्रन्थाश्च तत्तत्कालप्राप्तविघ्नपरिहारद्वारा सार्थका एवेति ऊह्यं विद्वद्भिः । तस्माद्विशिष्टानुबन्धचतुष्टययुक्तत्वात् विशिष्टैरुपादेयमेव आख्यानम् । तथापि पण्डितेषु अविद्य-मानमनोनैर्मल्यम् अविदुषि पापादेडमूके विप्रे कथम्? इति चेदाह । अयं विप्रः मम सद्बुद्ध्या स्वप्ने दर्शनादिजनित मम अनुग्रहेण तत्सेवाफलभूतमत्प्रसादेन शुद्धान्तःकरणः सन् वर्तते । आवेशभूत मम बुद्ध्या सह वर्तते इत्यर्थः ।।३५।।)

**मत्प्रेरणाबलं पश्य ब्राह्मणे पुण्यकीर्तन ।**
**कारणं च ऋणान्मुक्तौ मत्कारुण्यं विना नहि ।।३७।।**

**(अन्वयः) हे पुण्यकीर्तन! ब्राह्मणे मत्प्रेरणाबलं (त्वं) पश्य । (तस्य) ऋणात् मुक्तौ मत्कारुण्यं (एव) च कारणं । विना नहि ।**

**(व्या) हे पुण्यकीर्तन!** आख्यानपारायणरत हे शेष! **ब्राह्मणे मत्प्रेरणाबलं पश्य** । न तं विषयसुखे चक्राधिपत्यदानेन प्रेरयामि । किन्तु क्लेशयुक्ततपःकरणार्थं प्रेरयामि । तथा च त्वमपि असूयां न कुरु इति सूचितं भवति । 'कष्टकार्ये गुरुः प्रेरयतीति दोषबुद्धिं न कुरु' इत्यर्थः ।।३६।। **कारणं चेति** ।। **ऋणान्मुक्तौ** मत्कारुण्यमेव कारणम्; न भवदादीनाम् ।।३७।। एवं च ऋणान्मुक्तौ (ऋणात् मुक्तौ तादर्थ्ये सप्तमी । सर्वऋणनाशरूपमोक्षअपरोक्षादिसिद्धये) देवऋषिपितृऋणमुक्त्यर्थम् अपरोक्षज्ञानद्वारा मुक्तिप्राप्तिविषये मम कारुण्यमेव प्रधानं कारणमित्यर्थः ।।३७।।

**एवं कृते ह्यविश्वासे ह्यलमेतावता सुत ।**
**कृतेन मम सत्पुत्र स्वस्ति तेस्तु कुतोऽशुभम् ।।३८।।**

**विप्रप्राणावधिर्यावदित्युक्तं पुण्यरूपिणा ।**
**कण्वादिमुनिमध्ये तु शृण्वद्य मम मानसम् ।।३९।।**

(अन्वयः) एवं अविश्वासे कृते हि, हे सुत एतावता कृतेन (अविश्वासेन) हि आलम् । हे मम सत्पुत्र (शेष)! ते स्वस्तिः अस्तु । कुतः अशुभम् । 'विप्रप्राणावधिर्यावत्' इति कण्वादिमुनिमध्ये पुण्यरूपिणा (मया) उक्तं, (तत् सत्यं), (किन्तु) अद्य मम (परिवर्तित)मानसं शृणु.

**(व्या) एवम् अविश्वासे** स्वकीयऋणमोचनापेक्षया विप्रेण (द्रव्यसम्पादनार्थं) मृषोच्यते इति मत्वा 'मम स्वप्ने तव स्वप्ने' इत्यादि उ(यु)क्तिबलेन अविश्वासे **कृते** सति । एतावता**कृतेन** अविश्वासेन अलम् । पुनः पुनरस्माभिः गूढार्थकथने । भवताम् अविश्वासादौ महदनिष्टं भूयात् । तत्कुतो भवितव्यम्? इति तात्पर्येण इतःपरं उक्तिसङ्क्षेपः क्रियते ।।३८।। (एतावत्पर्यन्तं कृताविश्वासस्य मम कागतिः इति चेत् **ते स्वस्ति अस्तु । तव अशुभं कुतः** पश्चात्तप्तं भक्तं त्वां रक्षामि ।।३८।।)

**(अव)** (ननु इतःपरं उक्तिसंक्षेपे भवता कृते सति पूर्वं (३/८९) कृतप्रतिज्ञायाः भङ्गो भवतीति चेदाह ।।)

**स्वर्गागमनपर्यन्तमुत्सर्गोऽयं न संशयः ।**
**निर्गतोद्य भवाम्यद्धा वाक्सर्गादपवादतः ।।४०।।**

**(अन्वयः) (विप्रस्य) स्वर्गागमनपर्यन्तं (अहं वक्ष्ये इति उक्तं) अयम् उत्सर्गः (प्रतिज्ञायाः उत्सर्गवाक्यं) न संशयः, अद्य वाक् सर्गात् अपवादतः (अहम्) अद्धा निर्गतः भवामि.**

**(व्या)** न तावता प्रतिज्ञाहानिः प्रतिज्ञायाः उत्सर्गवाक्यतुल्यत्वात् ।।

**यथा गच्छन् गजः शीघ्रं गोक्षुराद्यपवादतः ।**
**न गच्छति पुनः शीघ्रं दुर्वादिगजसिंह भो ।।४१।।**

**तथाहमपवादे तु निवृत्तो वाग्विसर्गतः ।**
**अत्रापवादकः पुत्र ह्यविश्वासोस्मदीयकः ।।४२।।**

**(अन्वयः) हे दुर्वादिगजसिंह भो! यथा गजः शीघ्रं गच्छन् (अपि) गोक्षुरादि अपवादतः न गच्छति, (कण्टकनिवारणे सति) पुनः शीघ्रं (गच्छति);**

**तथा अपवादे तु अहं वाग्विसर्गतः निवृत्तः (अभवं), अत्र हे पुत्र! अस्मदीयकः अपवादकः हि अविश्वासः ।**

**(व्या)** यथा 'न हिंस्यात् सर्वभूतानि' इत्युत्सर्गवाक्यम् । तस्यापवादः 'अग्निषोमीयं पशुमालभेत' इत्यादि । तस्यापि वाक्यस्य अपवादः –

**'इदं कृतयुगे श्रेष्ठं कलौ नैव प्रदृश्यते ।**
**उत्क्रान्तमेधा अमेध्याः पशवः'** इत्यादि ।

तदर्थस्तु – पशवः पुरुषादिछागान्ताः यस्मिन् काले उत्क्रान्तमेधाः यज्ञप्रयोजकदेवता-सन्निधानरहिताः तस्मिन् काले तदा तद्द्रव्यकयागादिकं न कुर्यात् । तत्सम्बन्धिमांसादिकं नाश्नीयादिति । तथा –

**'विप्रप्राणावधिर्यावत् सत्प्रमाणाविरोधतः ।**
**तद्वाण्या च प्रवक्ष्येहं मद्वाण्याविष्टयानया ।।(३/८१)**

इत्युत्सर्गवाक्यम् । तस्यापवादः – 'एवं कृते ह्यविश्वासे ह्यलं एतावता सुत' (६/३८). तस्यापि अपवादः 'कदाचिदेव वक्ष्यामि कार्ये तु प्रस्तुते सति' इति ।।४१-४३।। (अत्र दृष्टान्तः **हे दुर्वादिगजसिंह**! शेष! **गजः** स्वेच्छया गच्छति । कण्टकेन पादे रुद्धे सति तूर्णीं तिष्ठति । कण्टके निःसारिते सति पुनः यत्रावश्यकं तत्र गच्छति । एवं विप्रजीवनपर्यन्तम्

आख्यानोपदेशः प्रतिज्ञाप्राप्तः; इदानीम् अविश्वासतः अविश्वासिजननिन्दकवाक्यात् = विप्रः द्रव्यसम्पादनार्थं कल्पितश्लोकान् वदति' इत्यादिना **वाग्विसर्गतः निवृत्तः** अस्मि = आख्यानोपदेशात् विरमामि । पुनः कार्ये भक्तजनानाम् अवश्यहितोपदेशकार्ये प्रसक्ते सति विरामं त्यक्त्वा यदवश्यकं तद्वक्ष्यामीति दृष्टान्तपूर्वकं उपपादितमिति मन्तव्यम् ।।४३।।)

**तस्मात्प्रतिज्ञाहान्यादिदोषो मम न कश्चन ।**
**कदाचिदेव वक्ष्यामि कार्ये तु प्रस्तुते सति ।।४३।।**

**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।**

**(अन्वयः) तस्मात् मम कश्चन प्रतिज्ञाहान्यादिदोषः न, कदाचित् कार्ये तु प्रस्तुते सति वक्ष्यामि एव, इति पूर्वं मया प्रोक्तं हे बुद्धिमन् अनुसन्धत्स्व.**

**(व्या) इति पूर्वमिति ।। पूर्वं** पूर्वजन्मनि मया प्रोक्तं त्वम् उक्तजन्मनि बुद्धिमान् भूत्वा अनुसन्धत्स्व ।।

**ममेह त्रीणि रूपाणि शिष्टानि तुष्टानि च ।।४४।।**

**मत्पुत्रे कृतपाण्डित्ये विप्रे वृन्दावने सदा ।**

**(अन्वयः) इह मम कृतपाण्डित्ये विप्रे मत्पुत्रे सदा वृन्दावने (सन्निहिताः) शिष्टानि त्रीणि रूपाणि तुष्टानि (भविष्यन्ति) ।**

**(व्या)** तेन **इह** लोके । **शिष्टानि** उर्वरितानि **त्रीणि रूपाणि तुष्टानि** भविष्यन्ति ।।४४।। कुत्र सन्निहितानि? **वृन्दावने, मत्पुत्रे** वेदनिधौ, प्रागकृतपाण्डित्ये मदनुग्रहानन्तरं **कृतपाण्डित्ये विप्रे** चेति स्थानत्रये सन्निहितरूपत्रयम् ।।४४भ।।

**यथा वायुस्तवायुष्यवृद्धये वर्तते त्वयि ।।४५।।**
**तथाहं वर्तयाम्यत्र विप्रे पुत्र न संशयः ।**
**मे शुद्ध वृद्ध विप्रोयमतिमुग्धः स्वकार्यतः ।।४६।।**

**(अन्वयः) हे पुत्र! यथा त्वयि तव आयुष्यवृद्धये वायुः वर्तते तथा अहं विप्रे वर्तयामि अत्र न संशयः । तस्मात् अयं शुद्ध वृद्ध विप्रः स्वकार्यतः अतिमुग्धः ।**

**(व्या) यथा** (अपमृत्युकारणदोषयुक्तेपि मत्प्रसादेन परिहृतदोषे त्वयि) **आयुष्यवृद्धये**

**वायुर्वर्तते** तथा अपमृत्युकारणपापयुक्तेपि **विप्रे** तं दोषं परिहृत्य प्राणवायुं वर्तयामि ।। तस्मात् अयं **शुद्ध वृद्धविप्रः स्वकार्यतः अतिमुग्धः** ।।४६।।

**क्रुद्धस्त्वं मा भवस्वाद्य श्रद्धायुक्तो बुधे मयि ।**

**(अन्वयः) अद्य त्वं क्रुद्धः, बुधे मयि श्रद्धायुक्तः (सन् क्रुद्धः) मा भवस्व;**

**(व्या)** (**बुधे मयि श्रद्धायुक्तः** सन् । विप्रे **क्रोधं त्यज** इति अन्वयः) ।

**(अव)** तस्मिन् विप्रे अद्य अस्मिन् जन्मनि त्वं क्रुद्धः । इतःपरं क्रुद्धो मा भव । जन्मान्तरे क्रुद्धो मा भवेत्युक्तिः कथमुपपद्यते? तदा क्रोधविषयस्य विप्रस्य समीपस्थत्वा-निश्चयादित्यत आह – **सत्यमिति ।।**

**सत्यं वच्मि हितं वच्मि सुत वच्मि पुनस्तव ।।४७।।**

**विप्रोयं वर्तते वृत्तिं कुत्र यास्यति मत्प्रियः ।**
**विधवाश्रुत तेद्यैव विधिश्च विमुखो भवेत् ।।४८।।**

**द्विजकार्यतमद्रोहाद्द्विजकार्यविरोधिनः ।**

**(अन्वयः) हे सुत तव हितं वच्मि । सत्यं वच्मि । पुनः वच्मि । अयं विप्रः मत्प्रियः, कुत्र यास्यति? वृत्तिं वर्तते? हे विधव! अश्रुत! द्विजकार्यतमद्रोहाद्-द्विजकार्यविरोधिनः ते विधिः अद्य एव च विमुखः भवेत् ।**

**(व्या) हे सुत!** शेष! **तव हितं वच्मि । सत्यं वच्मि** ।।४७।। **मत्प्रियः अयं विप्रः** कुत्र यास्यति? मत्समीपे वृत्तिं स्थितिं यास्यति । पुनरपि तव त्वदीये भविष्यति ।।४७।।

**विधव इति ।। हे विधव!** बहुस्वामिक! 'राज्ञां द्वारं पुनर्गच्छ' (५/७९) इति बहूनां स्वामित्वेन सूचितत्वात् । **अश्रुत!** इदानीं मत्कृतिं न शृणोति (३/२४) इत्युक्तदिशा आख्यानश्रवणरहित । द्विजेन कार्यतमस्य कर्तव्यतमस्य द्रोहात् **द्विजकार्यविरोधिनः** 'अजया प्रेषितं पत्रं द्विजः कश्चिदुपाहरत्' इति रुक्मिणीशविजये सूचितरीत्या द्वयोः कल्पयोः उर्वरितजन्मद्वयस्य मे कार्यविरोधिनः । **ते विधिः अद्यैव** अस्मिन्नेव जन्मनि **विमुखः भवेत्** । जन्मान्तरे तु सुमुख एव । 'इतः परं कियज्जन्मजातः प्रेक्षति मत्कृतिम्' (३/२६) इति प्रागुक्तत्वात् ।।४८।।

(व्या) कृतापराधस्य जन्मान्तरे कथं विधिरनुकूलः इत्यतो मदनुग्रहेणेति सूचयितुमाह – सुखिनः सन्त्विति ।।४९।।

**सुखिनः सन्तु मद्भक्ताः शश्वज्जीवन्तु मत्प्रियाः ।।४९।।**
**अतिसौभाग्यवन्तश्च सन्तु भक्तियुता हरौ ।**

(अन्वयः) **मद्भक्ताः सुखिनः सन्तु, मत्प्रियाः शश्वत् जीवन्तु, अतिसौभाग्यवन्तः हरौ भक्तियुताः च सन्तु ।**

(व्या) (मयि भक्ताः प्रशस्तसात्विकसुखं प्राप्नुवन्ति । मम प्रीतिविषयाः सात्विकाः सन्तः अपमृत्युं विना जीवन्ति । तस्मात् तवापराधं क्षमे इति भावः ।।) शेषप्रकरणं सम्पूर्णं ।।

### ०७–५०–५७ विप्रप्रकरणम्

(व्या) **'मम वृन्दावने'**त्यारभ्य **'सत्यं सत्यं पुनः सत्यम्'** इत्यन्तं विप्रश्रोतृकं प्रकरणम् । पूर्वप्रकरणोक्तैरविश्वासिभिः प्रसक्तचित्तविक्षेपस्य ब्राह्मणस्य विश्वासदार्ढ्यार्थम्; केषांचिदविश्वासित्वे वेदनिधेः सीतापतिव्यासशेषाणां च अविश्वाससम्भवात्; विश्वासित्वेन भाविनां दर्शनेन चित्तविक्षेपपरिहारो भविष्यतीत्यादिकथनेन उक्तव्यक्तिचतुष्टयानुग्राहकत्वभौम-भाक्तलौकिकवैभवमत्रोच्यते – **मम वृन्दावन इति** ।।

**मम वृन्दावने पुण्ये कमनीयं तु मां स्मर ।।५०।।**
**श्रमहारिणमज्ञात्वा सुमनास्त्वं न गच्छ ह ।**

(अन्वयः) **पुण्ये मम वृन्दावने कमनीयं मां तु स्मर । श्रमहारिणं अज्ञात्वा त्वं असुमनाः न गच्छ ह ।**

(व्या) (हे विप्र! त्वं मम वृन्दावनसमीपे स्थित्वा द्वात्रिंशल्लक्षणसम्पन्नं सर्वाभीष्टदं ध्यानार्हं **मां स्मर** । आख्यानपाराणादिना वा भज । जन्मान्तरविषयकमिदम्) ।।५०।। **श्रम इति ।।** (मत्सेवया स्वप्नादौ प्राप्तसूचनादिभिः तव मनः प्रसादो भविष्यति । श्रमः नश्यति च । तावत्-पर्यन्तं त्वं सेवां कुरु । **श्रमहारिणं** माम् **अज्ञात्वा** असुमनाः **त्वं) न गच्छ** = दुष्टदुरुक्तिश्रवणेन विक्षिप्तमनस्कः सन् मत्सेवादिकं विहाय न गच्छ ।।५१।।

**एवं बुद्धौ सदा शुद्ध श्रद्धां कुरु धिया तव ।।५१।।**
**क्रोधं त्यज द्विजाद्यैव भज मां भुजगेश्वरम् ।**

(अन्वयः) एवं बुद्धौ सदा शुद्ध (हे विप्र) तव धिया (मयि सदा) श्रद्धां कुरु. हे द्विज! क्रोधं त्यज. अद्य एव भुजगेश्वरं मां भज.

**अहं तवाहितं नैव वच्मि किञ्चन काचन ।।५२।।**

**व्यथा ते मास्तु नास्तीति गुरुदैवं वदन्ति तैः ।**
**मत्सुतस्य सुविश्वासं पश्य त्वं विप्रसत्तम ।।५३।।**

**सीतापतेश्च भक्तस्य व्यासशेषस्य चैव हि ।**

(अन्वयः) (हे विप्र) किञ्चन काचन (अपि) तव अहितम् अहं नैव वच्मि । (ये) गुरुदैवं नास्ति इति वदन्ति तैः ते व्यथा मास्तु । विप्रसत्तम! (अत्र) मत्सुतस्य सुविश्वासं पश्य । सीतापतेः च भक्तस्य व्यासशेषस्य च एव हि ।

(व्या) ये गुरुदैवं नास्तीति वदन्ति तैः ते व्यथा मास्तु । मत्सुतस्य वेदनिधेः ।।५३।। सीतापतेश्चेति ।। व्यासेन सहितः शेषः व्यासशेषः ।

**चतुर्णामपि विश्वासे स्वर्णलाभं यथा तथा ।।५४।।**

**कर्णश्राव्यं भवत्येव वर्णात्मकमिदं वचः ।**
**मत्प्रेरिताः सुविश्वासं कुर्वन्त्येते न संशयः ।।५५।।**

**पश्यन्ति विश्वासफलमैहिकामुष्मिकं च यत् ।**

(अन्वयः) चतुर्णाम् अपि विश्वासे (सति) वर्णात्मकं इदं वचः (तर्हि) यथा स्वर्णलाभं तथा कर्णश्राव्यं भवति एव (भविष्यत्येव) । एते (भक्ताः) मत्प्रेरिताः सुविश्वासं कुर्वन्ति (अत्र) न संशयः । (तेन) यत् ऐहिकआमुष्मिकं विश्वासफलं (च) पश्यन्ति (प्राप्नुवन्ति) ।

(व्या) स्वर्णलाभं स्वर्णलाभप्रतिपादकवाक्यं यथा तथा ।।५४।। प्राक् वर्णात्मकमपि पश्चात् कर्णश्राव्यं[१] विवक्षितान्वयबोधजनकं भविष्यत्येव । मत्प्रेरिताः सन्त एव सुविश्वासं

---

(१) (*) 'कर्णश्राव्यम्' इत्यत्र - कर्णश्राव्यं मुख्यसामगानं कुर्वाणाः वायुपदयोग्याः । - तद्यथा –

**अर्धनारीनरवपुर्वायुः कुत्रचिदीरितः ।**
**अयास्यो विश्वसृग्यज्ञे तेनाविष्टोन्वगायत ।** बृ.भा. उद्गीथब्राह्मणम्.

कुर्वन्ति ।।५५,५६।।

**वर्णात्मकमितिप्रोक्तं कर्णेन शृणु नन्दन ।।५६।।**

**स्वर्णवर्ण शिलायां मे चीर्णेन लिखितं कुरु ।**
**वर्णानां ब्राह्मणाद्यानां कर्णश्राव्यं तथा कुरु ।।५७।।**

---

तत्रैव श्रीमदाचार्याः – **एष उद्गातेति वायुत्वयोग्यः । तद्धैतल्लोकजिदेवेति तस्माद्वराभियाचनम् ।।**

**एवंविद्वायुपदयोग्या उद्गातार एव तु ।**
**यदा भवेयुस्तेषु तदा याजी तु वृणुयाद्वरम् ।**
**आत्मने याजिने वापि ह्युद्गातैवंविधो यदि ।**
**आगायेत्तद्भवेन्नात्र कार्याभीष्टे विचारणा ।**
**एवं तं सामनामानं वायुं यो वेद सादरम् ।**
**तस्येष्टलोकराहित्ये नाशा कार्यारिणा क्वचित् ।**
**तस्माद्वायुत्वयोग्यैर्हि येषां लोकाः प्रकीर्तिताः ।**
**तेषामलोकाशङ्का च नैव कार्या कदाचन ।**
**यस्मान्नारायणस्यातिप्रियाः प्राणत्वयोगिनः ।** (बृ.भा. उद्गीथब्राह्मणे)

(*) भागवते तृतीयस्कन्धे पञ्चमेऽध्याये कर्णसुखावहत्वं श्रीकृष्णस्य ब्रह्मादीनां च चरितं श्रुतम् । तथाहि –

**परावरेषां भगवान् कृतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् ।**
**न तृप्नुमः कर्णसुखावहानां तेषामृते कृष्णकथामृतौघात् ।।१०।।**

**कस्तृप्नुयात् तीर्थपदोऽभिधानात् सत्रेषु वः सूरिभिरीड्यमानात् ।**
**यः कर्णनाडीं पुरुषस्य यातो भयप्रदां गेहरतिं छिनत्ति ।।११।।**

**श्रीविजयध्वजतीर्थाः** तत्रैव – ... श्रुतानां तेषां ब्रह्मादिचरित्राणाम् ऋते अवगमे तात्पर्यज्ञाने सति ब्रह्मादिमहिम्नापि भगवन्महिमालम्बितत्वात् कृष्णकथामृतौघ एवासौ इति, यतोऽतः तेषां भागवतानां कृष्णस्य च कथामृतौघात् श्रुतात् न तृप्नुमः । तात्पर्यज्ञाने सति कृष्णकथामृतौघत्वं कुतः? इति तत्राह – कर्णेति ।। कृष्णकथामृतौघस्यैव कर्णसुखावहत्वं नान्यस्य । .... यस्तीर्थपात् पुरुषस्य कर्णनाडीद्वारा हृदयगुहां प्रविष्टः संसारभयप्रदां गेहरतिं गृहजायापुत्रादिस्नेहलक्षणां रतिं छिनत्ति, तस्येति शेषः ।।

एतत् लक्षणं तु स्वाप्नवृन्दावनाख्याने अस्त्येव ।

**(अन्वयः) हे नन्दन! 'वर्णात्मकम्' इति प्रोक्तं कर्णेन शृणु । हे स्वर्णवर्ण! चीर्णेन मे लिखितं कुरु । ब्राह्मणाद्यानां वर्णानां कर्णश्राव्यं तथा कुरु ।**

**(व्या) स्वर्णेति ।।** 'इदं न जललिखितप्रायम्; किन्तु शिलालिखितसदृशं जानीहि' इति सूचयितुं आह – **स्वर्णवर्णेति ।। चीर्णेन** शिलालेखनसाधनेन **शिलायां लिखितं कुरु** । शिलालिखितमिव जानीहि । कार्योपलम्भे सति मुख्यार्थः ।।५७।।

**स्वर्णलाभाय ते पुत्र शर्मणे च सदा तव ।**
**सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।।५८।।**

**(अन्वयः) पुत्र! ते स्वर्णलाभाय सदा तव शर्मणे; सत्यं सत्यं पुनः सत्यं भुजं उद्धृत्य (मया) उच्यते ।**

**(व्या) शर्मणे** सुखाय । (न केवलं द्रष्टृश्रोतृजनाय । तव च स्वर्णलाभवत् गुरुसेवया महत्फलं भविष्यति । **'सदा'**पदेन तत्पुण्यं भविष्यज्जन्मसु अनुवृत्तं भवति ।।) दाढ्यार्थमाह – **सत्यमिति** ।।५८।। इति विप्रश्रोतृकप्रकरणं ।।

### ०५९–०६४– वेदनिधिप्रकरणम्

**(व्या) 'शस्तं शस्तं कुरु क्षिप्रं विप्रस्य न मृषा'** इत्यारभ्य **'कात्र हानिः कृता चास्य परैर्हास्ये कृतेप्युत'** इत्यन्तं वेदनिधिश्रोतृकप्रकरणम् (तृतीयम्) । पूर्वप्रकरणे 'मत्सुतस्य सुविश्वासं पश्य' इत्युक्तम् । तेन प्रागुक्तबादरायणसाधनतया बुद्धिसौष्टवसंयुक्तश्रेष्ठजनसङ्ग्रहस्य कर्तव्यता कथनेन तदनुग्राहकत्वरूपं भौमभाक्तवैभवम्, बादरायणाराधकत्वरूपतादृशभागवतवैभवं चात्रोच्यते शस्तं शस्तमिति ।।

**शस्तं शस्तं कुरु क्षिप्रं विप्रस्य न मृषा वचः ।**
**शीरघ्रेणाहं तु गच्छामि व्याघ्रादिभयकम्पिता ।।५९।।**

**प्राग्रा यथ गौर्यथारण्ये स्वाग्रा यं मूर्तिं भजामि ताम् ।**

**(अन्वयः) (हे वेदनिधे!) विप्रस्य वचः न मृषा । क्षिप्रं शस्तं शस्तं कुरु । यथा प्राग्रया अरण्ये व्याघ्रादिभयकम्पिता गौः (गच्छति तथा) अहं शीघ्रेण तु गच्छामि । स्वाग्रयां तां मूर्तिं भजामि ।**

**(व्या)** हे नरवरश्रेष्ठ! वेदनिधे! **विप्रस्य वचः मृषा न ।** तत् प्रशस्ततमम् । तस्मात् तदुक्तं कुरु ।।५८।। विप्रान्तर्यामिरूपेण अहं शीघ्रेण स्थलान्तरं प्रतिगच्छामि (तत्र दृष्टान्तः) । यथा व्याघ्रादिभयकम्पिता गौः ।।५९।। (प्राग्र्या = सकलसल्लक्षणसम्पन्नत्वात् श्रेष्ठा) तृणजल-समृद्ध्युपेतम् अरण्यं परित्यज्य अन्यत्र गच्छति, तथा, अहमपि दुष्टानामविश्वासेन तेषां निग्रहसमर्थोऽपि क्लप्तं स्थलं परित्यज्य अन्यत्र गत्वा, स्वकीयाम् अग्र्यां मूर्तिं बादरायणमूर्तिं भजामि(१) ।।६०।।

**(अव)** अन्यत्र गमनं किमर्थम्? उपद्रवकारिणाम् अविश्वासिनां निग्रहः किमर्थं न क्रियते? इत्यत्र आह – **अविश्वासेनेति ।।**

**अविश्वासेन सर्वेषामुर्व्यामत्यन्तपापिनाम् ।।६०।।**
**तेषामाकर्षणं काले यमदूतैश्च कारयन् ।**

**(अन्वयः) उर्व्याम् अविश्वासेन अत्यन्तपापिनां सर्वेषां तेषां काले यमदूतैश्च आकर्षणं कारयन् (सन् अहं बादरायणमूर्तिं भजामि).**

**(व्या)** (मदविश्वासेन तेषां पापवृद्धिरतिशयेन भवति । यथा दुर्योधनस्य पाण्डवद्वेषेण । किञ्च मध्वविजयोक्तदिशा यथा श्रीमदाचार्यैः दण्डकार्यस्त्यक्तः तथा अहमपि दण्डकार्यं त्यजामि । यतिधर्ममेव प्रदर्शयामि । अनेन अविश्वासिनां पापपूर्तिर्भविष्यति) ।। इदानीं निग्रहे कृते । तेषाम् अल्पमेव अनिष्टं भूयात् । ईशसङ्कल्पानुसारेण **काले** प्राप्ते सति । **तेषामाकर्षणं यमदूतैः कारयन्** सन् । अहं बादरायणं भजामि ।।६०।।

**तस्मान्नरवरश्रेष्ठ प्रेष्ठ मे सर्वदा मठे ।।६१।।**
**बुद्धिसौष्ठवसंयुक्तान् श्रेष्ठानङ्गीकुरु स्फुटम् ।**

**(अन्वयः) तस्मात् हे नरवरश्रेष्ठ! प्रेष्ठ! मठे सर्वदा बुद्धिसौष्ठवसंयुक्तान् श्रेष्ठान् स्फुटं अङ्गीकुरु.**

**(व्या)** **तस्मादित्यादि ।। तस्मात् ।** तदनुकूलतया त्वं भूमौ जन्मप्राप्य, मन्मठाधिपो भूत्वा, तत्र **बुद्धिसौष्ठवसंयुक्तान् श्रेष्ठान्** परिवारान् **अङ्गीकुरु** ।।६१।।

---

(१) इह दृष्टान्ते व्याघ्रकम्पितः = दुष्टजनानामविश्वासेन गच्छामि भजामि इति श्रीगुरुराजाणां गमने स्वतन्त्रं हि द्योतयति; न तु अस्मदिव भयेन गमनम् ।

**इयं तव शुभा बुद्धिः कियन्तः कुजना भुवि ।।६२।।**

**नयन्तो नरकावासं स्वयं तेपि पतन्त्यहो ।**

**(अन्वयः) तव इयं बुद्धिः शुभा । भुवि कुजनाः कियन्तः । नरकावासं नयन्तः ते स्वयम् अपि पतन्ति अहो ।**

**(व्या)** (यद्यपि **इयं तव बुद्धिः शुभा** सात्विकी । तथापि दुर्जना **भुवि कियन्तः** अपरिमिताः । ते तव निर्मलबुद्धिं पिशुनादिना मलिनी कुर्वन्ति । **नरकावासं** प्रति **नयन्तः** सन्तः प्रवर्तन्ते । दुर्बलसज्जनान् पातयन्ति । तेपि नरके पतन्ति । तादृशसङ्गं दूरीकुरु इति भावः[१] ।।६२।।)

**कविता ब्राह्मणे नास्ति सविता वेत्ति सर्वथा ।।६३।।**

**भविताथापि लोकोऽयमयुतं शरदां शतम् ।**

**(अन्वयः) ब्राह्मणे कविता नास्ति; सर्वथा सविता वेत्ति । अथापि भविता । अयं लोकः शतम् अयुतं शरदाम् ।**

**(व्या) कवितेति ।।** यद्यपि **ब्राह्मणे कविता नास्ति** । (सवितृनामकहरिः । आदित्यचन्द्रौ इत्यादिश्लोकोक्तसाक्षिदेवताश्च विप्रः कविताशून्यः इति जानन्ति । विप्रस्य अज्ञत्वादेव । तस्मात् कारणादेव तादृशएडमूकोक्तस्यास्य आख्यानस्य अद्भुतत्वं मद्रचितत्वनिश्चयश्च सुशकः । एवम् अयं ग्रन्थः अज्ञेन प्रोक्तः) ।।६३।। तथापि अयं लोकः अयं ग्रन्थः तन्मुखतः (केवलं) उच्चारितो भविता । मदनुग्रहेण 'अतोस्मि लोके वेदे च' इति गीतायां लोकशब्दस्य पौरुषेयागमपरत्वेन व्याख्यातत्वात् लोकशब्दो ग्रन्थपरः । विप्रस्य **शरदां शतम**पि **अयुतं** भवेत् = मदुपदेशसाधनम् । आयुः शतसंवत्सरपरिमितमपि अयुतपरिमितवत् बहुपुण्यसाधनं भविष्यतीति भावः ।।६३।।

**मयाङ्गीकृतविप्रोयं प्रेत्य पुत्र सुखी भवेत् ।।६४।।**

**कात्र हानिः कृता चास्य परैर्हास्ये कृतेऽप्युत ।।**

**(अन्वयः) हे पुत्र! मया अङ्गीकृतः अयं विप्रः प्रेत्य सुखी भवेत् । अस्य परैः हास्ये कृते अपि, उत अत्र का हानिः कृता (स्यात्) ।**

---

(१) 'अचलत्वं चापेक्ष्य' ब्र.सू. ४/१/९ – **'प्रत्याहारादिनेत्यादिपदेन दुर्जनसङ्गवर्जनं गृह्यते'** इति वाक्यार्थमुक्तावली ।

(व्या) (हे पुत्र! आख्यानप्रकटनार्थं **मया अङ्गीकृतः अयं विप्रः प्रेत्य** अपरोक्षज्ञानं तिरोहितं पुनः लब्ध्वा निवृत्तप्रारब्धपापः । उत्तमपदवीप्राप्त्यर्थं कृतसाधनः । मर्त्यलोकं त्यक्त्वा मल्लोके सुखं वसति ।।६४।।) **अस्य परैः हास्ये कृतेपि का हानिः कृता** स्यात्, न कापि । तेषामेव पापवृद्धिरिति भावः ।।६४।।

## ०६-०६५-०६६- विप्रप्रकरणम्

(व्या) **'ब्राह्मणाधम'** इत्यारभ्य ६६सार्धपद्यं विप्रश्रोतृकं प्रकरणं चतुर्थम् । अत्र प्रागुक्त-बादरायणाराधनानुकूलधैर्यार्थं कुमानवनिग्रहसाधनस्य आशीर्वचनस्य कृतत्वेन विप्रानुग्राहकत्वरूपं वैभवं, 'गुणिनां भण' इत्यनेन बहुसज्जनानुग्राहकत्वरूपं वैभवं च उच्यते ।।

**ब्राह्मणाधम मद्वाणीं निर्गुणान् प्रति मा भण ।।६५।।**

**गुणिनां भण सद्वाणीं नो चेत्प्राणान् वृणोमि ते ।**

**काण काण गुणैर्हीनोप्यण्वीकुरु कुमानवम् ।।६६।।**

(अन्वयः) हे ब्राह्मणाधम! (वेदनिधेः अवरः) मद्वाणीं निर्गुणान् प्रति मा भण । (किन्तु) सद्वाणीं गुणिनां भण । नो चेत् ते प्राणान् वृणोमि । काणः काणः गुणैः हीनः अपि (अथापि तं) कुमानवम् अण्वीकुरु ।

(व्या) (**मद्वाणीम्** = एतदाख्यानं **निर्गुणान्** प्रति = शमादिसद्गुणरहितान् प्रति शिष्यभावरहितान् वञ्चकजनान् प्रति **मा भण** ।।६५।। **सद्वाणीं** = अनिष्टनिवर्तकम् इष्टप्रापकं एतद्ग्रन्थरत्नं **गुणिनां** शिष्यभावयुक्तानां शमदमादिसम्पत्तिमतां **भण** प्रयत्नपूर्वकं वद । नो चेत्; अनधिकारिभ्यः भणने, अधिकारिभ्यः शिष्येभ्यः अभणने तव अकालमृत्युः मदवज्ञया भविष्यति ।।६५।। **काणो** भट्टः तद्वत्काणः कमलनाभः तद्गुणैः द्वेषेर्ष्यादिभिः अतिबलवत्तरै**र्हीनः** अथापि तं **कुमानवं** बादरायणाधनापकारिणम् **अण्वीकुरु** ।।६६।। विप्रश्रोतृकं प्रकरणं सम्पूर्णं ।।

## ०६-०६७-१००- वेदनिधिप्रकरणम्

(व्या) **'मत्सन्निधाने'** इत्यारभ्य अध्यायन्तं **'दानवा अपि तच्छ्रुत्वा स्तुवन्तो मां दिवं ययुः'** इत्यन्तं वेदनिधिश्रोतृकं(पञ्चमं)प्रकरणम् ।

**'शीघ्रेणाहं तु गच्छामि' 'अन्यत्र गच्छामि' 'तत्र बादरायणभजनं करोमि'** इति यदुक्तं

तत्कथम्? भवतोन्यत्र गमनेपि स्वच्छन्दस्य भगवतः हरेः भवता सह अन्यत्रगमनासम्भवात् इति, अतः स्वच्छन्दस्यापि हरेः दयाविशेषेण प्राणान्वयव्यतिरेकानुविधायित्वमिव मदन्वय-व्यतिरेकानुविधायित्वमिति स्वरूपतः लौकिकं भौमभागवतवैभवम्; वेदनिधेरादरानुसारेण तदभिमतस्थले निरन्तरावस्थानरूपं भौमभाक्तलौकिकवैभवम्; कुबेरवरुणाराध्यत्वरूपं दिव्य-भाक्तवैभवं चात्रोच्यते – **मत्सन्निधानेति ।।**

**मत्सन्निधाने सति नन्दनाग्र य वृन्दावने सुन्दरमन्दराभे ।**
**वृन्दारकेन्द्रैः(कन्दाशनेन्द्रैः) सह चेन्द्रियेशो वीन्द्रादिदेवैः सह (..देवैरपि) सन्निधत्ते।**
**मयि गच्छति सत्पुत्र देवैः सह मुनीश्वरैः ।**
**परिगच्छति स्वच्छन्दोप्यनेकात्मसुमूर्तिभिः ।।६८।।**

(अन्वयः) हे नन्दनाग्र्य! (वेदनिधे) सुन्दरमन्दराभे वृन्दावने मत्सन्निधाने सति, इन्द्रियेशः अपि कन्दाशनेन्द्रैः (वृन्दारकेन्द्रैः) सह सन्निधत्ते । हे सत्पुत्र! मयि (अन्यत्र) गच्छति (सति) स्वच्छन्दः अपि देवैः अपि मुनीश्वरैः अनेकात्मसुमूर्तिभिः सह परिगच्छति ।

**(व्या) हे नन्दनाग्र्येति ।। हे नन्दनाग्र्य!** वेदनिधे! **वृन्दावने मत्सन्निधाने सति** इन्द्रियाणामीशोपि श्रीबादरायणः **कन्दाशनेन्द्रैः** ऋषिभिः इन्द्रादिदेवैश्च सह **सन्निधत्ते** । बादरायणपूजकत्वेन रूपेण मयि सन्निहिते सति तत्र मत्पूज्योपि हरिः सपरिवारः सन् सन्निधत्ते ।।६७।। (हे सत्पुत्र!) मय्यन्यत्र **गच्छति** सति, **स्वच्छन्दः** स्वतन्त्रोऽपि हरिः । **अनेकात्म-सुमूर्तिभिः** मत्स्याद्यैः केशवाद्यैश्च सह **परिगच्छति** । अनेन पूर्वस्थलं विहाय गमनवेलायां शीघ्रेणाहं तु गच्छामीत्येवोक्तम् । गम्यस्थलं तु नोक्तम् । इदानीं मध्यवाटं विहाय वृन्दावनं प्रतिगमनम् । तत्र कतिपयदिनेष्ववस्थानम् । ततः परम् अभिमत नानास्थलगमनमित्युक्तं भवति ।।६८।।

**अन्वयव्यतिरेकानुविधायित्वेन तस्य मे ।**
**कस्य चेदृशमाहात्म्यं पश्य लोके सुचक्षुषा ।।६९।।**

(अन्वयः) तस्य अन्वयव्यतिरेकानुविधायित्वेन मे ईदृशमाहात्म्यं सुचक्षुषा पश्य । (तेन) ईदृशमाहात्म्यं लोके कस्य?

**(व्या) सुचक्षुषा** = उपक्रमादितात्पर्यलिङ्गसहितेन ज्ञानचक्षुषा **पश्य** = जानीहि । **अन्वयेति** ।। तस्य बादरायणस्य मे अन्वयव्यतिरेकानुविधायित्वम् । **अन्वयः** अवस्थानम् । **व्यतिरेकः** गमनम् । **तदनुविधायित्वं** च तदनुसारित्वम् । मदवस्थाने सति तदवस्थानम्; मद्गमने सति तद्गमनम् । तेन ईदृशमाहात्म्यं कस्य ।।६९।।

**तस्माद्विश्वासतः पुत्र यास्यन्तं स्थापयाशु तम् ।**
**सेश्वरं भास्वरं मूर्तिं कार्तस्वरसमाकृतिम् ।।७०।।**

(अन्वयः) तस्मात् हे पुत्र (वेदनिधे) त्वं यास्यन्तं (मां) विश्वासतः आशु स्थापय । तं भास्वरं मूर्तिं सेश्वरं कार्तस्वरसमाकृतिं च (एकत्र स्थापय) ।

**(व्या) तस्मादिति** ।। **तस्मात्** त्वं **यास्यन्तं** मां **विश्वासतः स्थापय** । यथा पापिनामविश्वासेन गमनं, तथैव तव विश्वासेन एकत्रावस्थानं भविष्यति । तेन **तं सेश्वरं** हयग्रीवं । (हयग्रीवसहितं इति वक्तव्यम्) **भास्वरं** प्रकाशमानं बादरायणं च एकत्र स्थापय । चिदानन्दरूपिणोः तयोरदृश्यत्वेऽपि **कार्तस्वरसमाकृतिं** हयवदनप्रतिमां । **मूर्तिं** बादरायणमूर्तिं च एकत्र स्थापय ।।७०।।

**(अव)** नानादेशाटनेच्छावतः (तव) कथमेकस्य विश्वासमात्रेण एकत्रावस्थानम्? इत्यतो दृष्टान्तमाह – **अविश्वास इति** ।।

**अविश्वासे प्रयास्यामि सुविश्वासे वसाम्यहम् ।**
**तव श्वासप्रणेताहं भविष्यामि न संशयः ।।७१।।**
**तस्मादायुष्यवृद्ध्यै ते शुद्ध विश्वाससंस्थितम् ।**
**कुरु श्रद्धायुतो नित्यं कोद्धा वक्ता च मां विना ।।७२।।**

(अन्वयः) अविश्वासे अहं प्रयास्यामि. सुविश्वासे वसामि. अहं तव श्वासप्रणेता भविष्यामि । (अत्र) न संशयः । तस्मात् शुद्ध! ते आयुष्यवृद्ध्यै नित्यं विश्वास-संस्थितं कुरु । मां विना अद्धा वक्ता कः?

**(व्या)** (अन्यत्रगमनेच्छा पूजकस्य अविश्वासप्रयुक्ता एव । भक्तसन्निधौ न वसाम्येव) एवं विश्वासफलमाह – **तवेति** ।। **प्राणत्वदशायां** (तदा) सर्वश्वासप्रणेतृत्वेऽपि **तव श्वासप्रणेता भविष्यामि** इत्युक्तेः । अत्र कश्चिद्विशेषो ज्ञायते ।।७१।। (**तस्मात्** यस्मादहमेव तव साक्षा-

द्बिम्बः अव्यवधानेन गुरुः । यस्मात् सर्वेषां मम पूजा पूर्णायुष्यदायिनी; अपूजा च अकालमृत्युप्रापिका । तस्मात् त्वमपि पूर्णायुष्यसिद्ध्यर्थं ज्ञानवृद्धिसिद्ध्यर्थं च । शुद्धविश्वासेन सम्यक् स्थितिः यस्य सः तम् । तव विश्वासनिमित्तेन सम्यक् स्थितं मां कुरु । मां विना तव कः आद्धा वक्ता? अहमेव तव स्वरूपोद्धारकगुरुरिति यावत् ।।७२।।)

**सहोदरं च हित्वापि कविः स्यां त्वन्मुखे सदा ।**
**एतच्छ्रुत्वा रहस्यं मे परस्य सुयशस्विनः ।।७३।।**

**विप्रस्य शश्वद्युक्त्या च विश्वासं कुरु मत्कृतौ ।**

(अन्वयः) सहोदरं च हित्वा अपि सदा त्वन्मुखे कविः स्याम्. परस्य सुयशस्विनः मे (मया) एतत् रहस्यं श्रुत्वा, (सुविश्वसिनः परस्य लक्ष्मीपत्यादेः उक्त्या च) विप्रस्य शश्वद्उक्त्या च मत्कृतौ विश्वासं कुरु ।

(व्या) सहोदरमिति ।। 'सहोदरं च हित्वापि कविः स्यां त्वन्मुखे सदा' इत्यनेन प्रीतिपात्रभूतः कश्चन सहोदरः प्रतीयते । (स च सहोदरः सुरोत्तमतीर्थनामा । युक्तिमल्लिकाव्याख्यानकर्ता । भण्डारकेरिमठाधीशः इति प्रमितः । तस्मिन् गुरुराजसन्निधिरस्ति । तदपेक्षया वेदनिधौ अधिकसन्निधानं स्थापयामीति भावः । परस्य सुयशस्विनः मे एतद्रहस्यम् । मे मया श्रुत्वा इति आवृत्त्या योजना ।।७३।।) विप्रस्य वृन्दावनाचार्यस्य शश्वदुक्त्या च । सुविश्वसिनः परस्य (लक्ष्मीपत्यादेः) उक्त्या च एतद्रहस्यं तव श्वासप्रणेता इत्युक्त्यभिप्रायम् । (तव) ताक्ष्र्यभावरूपं श्रुत्वा विश्वासं मत्कृतौ कुरु ।।७३।।

(व्या) नानादेशाटनेच्छावतः कथमेकस्य विश्वासमात्रेण एकत्रावस्थानम्? इत्यतो अन्यदृष्टान्तमाह – दर्वीकर इति ।।

**दर्वीकरो गर्वितोपि गरवीर्येण गारुडैः ।।७४।।**

**गां गतोपि न गन्ता च स्वां गतिं सौगतो यथा ।**
**तथैव तव विश्वासविश्वस्तः प्रस्तुतां गतिम् ।।७५।।**

**हित्वा शस्तां स्थितिं प्राप्य(प्राप्य पूजां) त्वत्कृतां संस्थितोभवम् ।**

(अन्वयः) यथा गरवीर्येण गर्वितः दर्वीकरः सौगतः अपि गारुडैः गां गतः (भूमिं

प्राप्य) स्वां गतिं च न गन्ता (भवति). तथा एव तव विश्वासविश्वस्तः प्रस्तुतां गतिं हित्वा त्वत्कृतां शस्तां (प्रशस्तां) पूजां प्राप्य संस्थितः अभवम् ।

(व्या) यथा **सौगतः** स्वेच्छागमनशीलोपि (सुगतं यस्य सः सुगतः सुगत एव सौगतः) **दर्वीकरः** (**गरवीर्येण गर्वितोपि**) सर्पः ।।७४।। **गारुडैः** मन्त्रैः प्रतिरुद्धः सन् **गां** भूमिं प्राप्य एकत्रैव गतो भवति; स्थितो भवति । (**स्वां गतिं** स्वेच्छामात्रेण यत्र कुत्रापि) **न गन्ता** भवतीति भावः । तथा तव विश्वासतः एकत्र स्थास्यामि ।। (प्रस्तुतां गतिं स्वेच्छामात्रेण अन्यत्रगमनं हित्वा स्थास्यामि । हित्वा स्वां गतिं प्रस्तुतां गतिं । तव विश्वासाभावे मया गन्तव्यतया प्रसक्तस्थानं हित्वा, तव समीपे स्थास्यामि । कथम्? **त्वत्कृतां शस्तां** प्रशस्तां स्थितिम् आवाहनासनादिपूजां प्राप्य **संस्थितः** भवामि । **अभवम्** इति लङ्प्रयोगेण एवं भविष्यत्येवेति सूचयति ।) ।।७५।।

**तवादराख्यरोधेन प्रतिरुद्धो भवामि च ।।७६।।**

**त्वदाराधितपादाब्जः सुधासागरगो यथा ।**
**अभवं शुभमेव त्वमभयं चापि मद्भव ।।७७।।**

**लभ मे भव सम्प्रीतिभाजो भव्यभवेषु च ।**

(अन्वयः) तव आदराख्यरोधेन प्रतिरुद्धः भवामि च. त्वत् आराधितपादाब्जः सन् यथा सुधासागरगः (तथा) अभवम्. हे मद्भव! त्वं शुभमेव अभयं च अपि लभ; एवं भव्य(भग्न)भवेषु मे सम्प्रीतिभाजः च भव ।

(व्या) (तव विश्वासनामकपाशेन स्वेच्छया तव निकटे **प्रतिरुद्धो भवामि** ।।७६।। **सुधासागरगः** श्रीहरिः **यथा** तथा त्वया आराधितपादकमलो भूत्वा वर्ते । हे मद्भव! त्वं शुभमेव अभयं चापि लभ ।।७७।।) **लभ मे भव इति ।।** एवं भव्यभवेषु शुभसाधनेषु जन्मसु सम्प्रीतिभाजः (त्वयि प्रीतिं कुर्वतः) मम सकाशात् अभयं लभ ।। (**शुभं लभ** । **अभयं** यथा भवति तथा **भव** । तत्रापि तव कष्टान् परिहरिष्यामि इति भावः ।।७७।।)

**इतःपरं परैरुक्तां रिक्तां विश्वासतः कृतौ ।।७८।।**

**न्यक्कृतां तर्कितां सद्भिः स्वीकृतां न कुरु प्रिय ।**

(अन्वयः) हे प्रिय! इतःपरं (मम) कृतौ विश्वासतः परैः तर्कितां सद्भिः न्यक्कृतां उक्तां रिक्तां कुरु. स्वीकृतां न कुरु.

(व्या) इतःपरं परैः उक्तां दुरुक्तिं रिक्तां कुरु (कृतौ विश्वासतः रिक्तां जानीहि) ।।७८।। सद्भिः न्यक्कृतां निराकृताम् असद्भिः तर्कितां तां त्वदीयैः स्वीकृतां न कुरु ।

**काकोदरो यथा लोके तोकोदरप्रपूरणम् ।।७९।।**

**भेकोदरगतान्त्रैर्वल्मीकोदरगतोपि सन् ।**
**कुरुते निरतस्तच्च स्मरते हरते नरैः ।**
**हरन् तु (हरंस्तु) त्वरते रन्तुं पुरते क्रियते च सः ।।८०।।**

**तद्वत्खलोऽपि मलभाण्डमजाण्डकोशे स्वस्योदरं तु तरते परपीडनाच्च ।**
**नित्यं कलत्ररतिमान् भवतीह पुत्र प्राणान् परस्य हरते नरके चरिष्यन् ।।८१।।**

(अन्वयः) यथा काकोदरः (सर्पः) लोके वल्मीकोदरगतः अपि सन् भेकोदरगतान्त्रैः (सन्) तोकोदरप्रपूरणं स्मरते । तच्च (भेकादिकं) हरते । निरतः कुरुते । हरन् तु (स्वसदृशं भेकापहारिकलत्रं) रन्तुं (रटतुं) पुरते त्वरते । (तदा) सः (तादृशः दुष्टसर्पः) नरैः (सर्पनिक्षेपस्थाने पेटिकादौ) क्रियते । तद्वत् खलः अपि अजाण्डकोशे परपीडनात् च (परेषां प्राणान् हरिष्यन् सन्) मलभाण्डं स्वस्य उदरं तु तरते । इह नित्यं कलत्ररतिमान् भवति । हे पुत्र (वेदनिधे) (सः च) परस्य प्राणान् हरते । नरके चरिष्यन् ।

(व्या) दुष्टस्तु सर्पवदुपेक्षणीयः इत्यभिप्रायेणाह – काकोदरेति ।। काकोदरः सर्पः ।। (वल्मीकोदरगतोपि सन्) भेकानां उदरस्थैः आन्त्रैः स्वकीयतोकोदरप्रपूरणं स्मरते ।।७९।। (करोमीति इच्छति) ।। तत् च हरते । भेकादिकं हरते । हरंस्तु स्वसदृशं भेकापहारिकलत्रं रन्तुं त्वरते । तादृशः दुष्टसर्पः नरैः पुरते सर्पनिक्षेपस्थाने पेटिकादौ क्रियते । 'नरैः बन्धितो भवति' इत्यर्थः ।।८०।। तद्वदिति ।। खलोपि वल्मीकसदृशे ब्रह्माण्डकोशे परपीडनात् परेषां प्राणान् हरिष्यन् सन् स्वोदरं तरते । नित्यं कलत्ररतिमान् भवति । सः नरके चरिष्यन् इत्यनेन यथा लोकोपद्रवकारी सर्पः नरैर्बद्धो भविष्यति (भवति) तथा यमदूतैः दुष्टोपि बद्धो भवतीत्यर्थः । तस्माद्दुष्टसङ्गः त्याज्यः ।।८१।।

**अप्राकृतं प्रवक्ष्यामि विप्रान्तरमुखेन च ।**
**सुप्राकृतमनेनैव सम्प्रार्थय सुताशु माम् ।।८२।।**

(अन्वयः) अनेनैव अप्राकृतं सुप्राकृतं च प्रवक्ष्यामि । विप्रान्तरमुखेन (प्रवक्ष्यामि) हे सुत! मां आशु सम्प्रार्थय ।

**(व्या) अप्राकृतमिति ।। अनेनैव** वृन्दावनाख्यानेनैव **अप्राकृतं** स्वरूपयोग्यत्वादिकम्, **सुप्राकृतं** प्रकृतजन्मवृत्तान्तं च **प्रवक्ष्यामि** । तत्कस्य मुखेन? **विप्रान्तरमुखेन** = 'अस्पष्टार्थस्य आख्यानस्य ब्राह्मणान्तरमुखेन तात्पर्यं बोधयामि' इति भावः । (हे सुत! **आशु मां सम्प्रार्थय** ।।) तस्मात् 'विप्रस्य शश्वदुक्त्या परस्योक्त्या च' इति(५/७४) प्रागुक्तम् । 'विप्रस्य शश्वदुक्त्या' इत्यनेन विप्रे माहात्म्याधिक्यमुक्तम् ।।८२।।

**(अव)** पूर्वप्रकरणे शेषं प्रति 'शिष्टानि तुष्टानि च' इति (६/४४) यदुक्तम् तद्व्याख्यानेन स्वयमेव तद्विप्रमाहात्म्यं सम्यक् वेदनिधेः बुद्ध्यारूढं करोति – **शिष्टानीति ।।**

**शिष्टानि तुष्टानि चेति वर्णन्यूनत्वतः सुत ।**
**सन्निधानस्य न्यूनत्वं क्रमाज्जानीहि मानव ।।८३।।**
**वृन्दावने यादृशं तु तादृशं नास्ति नन्दने ।**
**नन्दने यादृशं धीमन् तादृशं नास्ति ब्राह्मणे ।।८४।।**

(अन्वयः) हे सुत! 'शिष्टानि तुष्टानि च' इति वर्णन्यूनत्वतः क्रमात् सन्निधानस्य न्यूनत्वं (यदुक्तं) (तत्) हे मानव! जानीहि । वृन्दावने यादृशं नन्दने तु तादृशं नास्ति । हे धीमन्! नन्दने यादृशं तादृशं ब्राह्मणे नास्ति ।

**(व्या)** (सप्ताक्षरोपेतश्लोकभागेन निर्देशात् तानि रूपत्रयाणि न्यूनम् अधिकम् अधिकतरं इति सान्निध्योपेतानि । विप्रे **न्यूनं**, वेदनिधौ अधिकं, वृन्दावने अधिकतरम् इति त्रीणिरूपाणि ।।८३।। तथा च **वृन्दावने** विश्वतोमुखसन्निधानं **सर्वाभीष्टदायि, वेदनिधौ** ज्ञाननिमित्तकसन्निधानम् **शास्त्रज्ञानकवित्वादिदायि** । **विप्रे** तपोनिमित्तकसन्निधानम् **ज्ञान,आचार,मन्त्र,-यन्त्र,अन्तःकरणशुद्ध्यादिदायि**, अन्नभोजनेन अन्नदातुः अभीष्टदायि सन्निधानम् ।।८४।।)

**अधिष्ठानस्य महात्म्यं दातुं वृन्दावने सदा ।**
**वृन्दारकेन्द्रसन्दिष्टो मन्दस्मित वसाम्यहम् ।।८५।।**

**(अन्वयः) हे मन्दस्मित! अधिष्ठानस्य माहात्म्यं दातुं सदा वृन्दारकेन्द्रसन्दिष्टः अहं वृन्दावने (सदा) वसामि ।**

(व्या) (अधिष्ठानस्येति ।। मम अधिष्ठानभूतस्य वृन्दावनस्य माहात्म्यसिद्ध्यर्थं शेष-गरुडइन्द्रादिदेवैः प्रार्थितः विष्णुना आज्ञप्तः अहं सर्वदेवैः साकं हयग्रीवादिहरिरूपैः साकं वृन्दावने वसामि । तस्मात् वृन्दावने विप्रवेदनिध्यपेक्षया सकलतीर्थक्षेत्रापेक्षया अधिकं सन्निधानं वर्तते । तस्मात् सर्वैः सेव्यं तत्[१] ।।८५।।)

**त्वयि सच्छास्त्रवक्ता च व्यक्तं व्यक्तिमतां वर ।**
**त्यक्त्वा सर्वाणि कृत्यानि भृत्यान्नग्रहकातरः(भृत्यानुग्रहकातरः) ।।८६।।**

**वसामि मनसा श्रीमन् दासो व्यासस्य शासनात् ।**
**श्वासरूपेण चावासः श्रीशस्यापि भवाशु च ।।८७।।**

**(अन्वयः) हे व्यक्तिमतांवर! सर्वाणि कृत्यानि त्यक्त्वा सच्छास्त्रवक्ता (अहं) (सच्छास्त्रवक्ता) त्वयि भृत्यानुग्रहकातरः (सन्) दासः व्यासस्य शासनात् व्यक्तं च मनसा वसामि । हे श्रीमन् श्वासरूपेण च श्रीशस्यापि आवासः आशु भव ।**

(व्या) त्वयि सच्छास्त्रेति ।। (व्यक्तिमतांवर =) व्यक्तिमताम् उत्पत्तिमताम् । उत्पत्ति-मतां विप्रशेषादीनां सकाशात् वर । सच्छास्त्रवक्ता सन् । (त्यक्त्वा सर्वाणि कृत्यानि) त्वयि

---

(१) यदु कुलोत्तम निन्न रूपगळु अनन्ता
विधवागि उंटय्या लालिसय्या
पदुम मोदलाद चेतन जड नित्यानित्या
अधिष्ठान अवतार आवेश अंशवु
मुददिन्द अंशि ई परियल्लि नमगे संऽ
पदविगे ध्यानक्के निरुतसिद्धा
इदरोळगेनगावदु निधानद काणे
सदमल विग्रहवे सार्वभौमा
पदोपदेगे निन्न पञ्च विध मूर्तिगळु
निदरुशन निजवक्कु मुकुतरिगे
अधिकार भेददिन्दलि कल्पकल्पक्के – विजयदासार्याः

**वसामि** । भृत्यः शेषादिः (वेदनिधिप्रभृतयः) तदन्नग्रहकातरः सन् ।।८६।। (**वसामि ।।** तेषु स्थित्वा भोजनं कृत्वा अभीष्टदानार्थम् अथवा तैः क्रियमाणवाक्प्राणमनोव्यापाररूपं मठे दीय-माननैवेद्यरूपम् अन्नं च स्वीकरोमि अनुगृह्णामि च इत्यर्थः ।।८६।।)

विप्रे **वसामि** । **व्यासस्य शासनात्** तस्य (व्यासस्य) दासः सन्, वृन्दावने सन्निधानाधिक्यं दातुं **वसामि** । **त्वं श्रीशस्य श्वासरूपेण आवासो भव ।** गरुडभावेन वाहनरूपो भव । 'गरुडो मध्यपञ्चकः'(१) इति छान्दोग्यभाष्योक्तदिशा श्वासनियामकश्च भव ।।८७।।

**शास्त्रार्थज्ञ कृतार्थं मां त्राता त्वं सर्वदात्र तु ।**

**(अन्वयः) हे शास्त्रार्थज्ञ! कृतार्थं मां त्वं (जानीहि). तदा (अहं) तु सर्वदा अत्र त्राता (भवामि).**

**(व्या)** शास्त्रार्थज्ञ इति ।। हे शास्त्रार्थज्ञ । श्वासरूपेणावासो भवेति यच्छास्त्रं तस्यार्थं जानातीति तथोक्तः तस्य संबुद्धिः । हे शास्त्रार्थज्ञ । कृतार्थं मां त्वं जानीहि । तदाहं सर्वदा त्राता ।।८७।। एवं बादरायणं पूजयन् सन् । उत्तरदेशसञ्चारं कृतवान् इति सूचयित्वा । तद्दिगभिमानिना कुबेरेण मान्यत्वं रूपं दिव्यवैभवं निरूपयति – कुबेर इति ।।

**कुबेरोप्यथ मां दृष्ट्वा सभेरीरव आदरात् ।।८८।।**
**गम्भीरस्तोत्रसन्नादसुभीरुः सन्नुपागतः ।**
**गृह्णन् पाणिं गुणिन् धीमन् मणिकीर्णानि मानव ।।८९।।**
**ददौ चाभरणान्याशु चरणे मणिराशिकम् ।**

**(अन्वयः) कुबेरः अपि मां दृष्ट्वा सभेरीरव आदरात् गम्भीरस्तोत्रसन्नादसुभीरुः सन् उपागतः, अथ हे धीमन् गुणिन् मानव! पाणिन् गृह्णन् मणिकीर्णानि आभरणानि ददौ चरणे मणिराशिकं च आशु (ददौ) ।**

---

(१) तथा च –

प्राणाद्यास्त्रिविधाः पञ्च प्रधानो वायुरेव च ।
मुख्यपञ्चकरूपः सन् गरुडो मध्यपञ्चकः ।
अवमः पञ्चकस्त्वन्ये प्राणाद्यास्तस्य सूनवः ।
इति त्रेधा विभागोयं .......... – इति छान्दोग्यभाष्यम् ।

(व्या) (**मां दृष्ट्वा** भेरीरवेण सहितः **आदरात्** मां प्रति **उपागतः** ।।८८।। कथम् गम्भीर-स्तोत्राणि सन्नादानि येन सः । स चासौ सुभीरुश्च स्तोत्राणि कुर्वन् वाद्यानि ध्वनयन् विनम्रभावयुक्तः सन् । मां प्रति **उपागतः** । ततश्च हे गुणिन् धीमन् । हे मानव! मम **पाणिं गृह्णन्** मणिखचितानि आभरणानि ददौ ।।८९।। मम चरणे **मणिराशिकं** ददौ । )

**स्वगृहं वेशयामास स गृह्णन्नेव मे करम् ।।९०।।**
**प्रगृहीतमतिप्रेम्णा जगृहे मम पादुके ।**

**(अन्वयः) मे करं गृह्णन्नेव स्वगृहं वेशयामास । सः प्रगृहीतमतिप्रेम्णा मम पादुके जगृहे ।**

(व्या) (**मे करं गृह्णन् एव स्वगृहं** प्रवेशयामास ।।९०।। प्रगृहीतश्चासौ मतिप्रेम्णा च = विवृद्धज्ञानप्रयोज्यस्नेहेन **मम पादुके जगृहे** ।)

**कुबेरस्त्वथ मां दृष्ट्वा सुवीरोपि सुविस्मितः ।।९१।।**

**त्रयीविरोधिनं हत्वा कवीश्वरमुपागतम् ।**

**(अन्वयः) अथ त्रयीविरोधिनं हत्वा उपागतं कवीश्वरं मां दृष्ट्वा स्वयं वीरः अपि कुबेरः सुविस्मितः (बभूव) ।**

(व्या) (**अथ कुबेरः** स्वयं **सुवीरोपि** वीरतमं यतिं मां दृष्ट्वा विस्मितः अभूत् ।।९१।। विस्मये हेत्वन्तरमाह – वेदविरोधिनं दैत्यं पराक्रमेणैव हत्वा प्राप्तं कवीश्वरं ज्ञानिश्रेष्ठं मां दृष्ट्वा आश्चर्ययुक्तः अभवत् । प्रायेण तपोनिरताः सन्न्यासिनः स्थूलबलरहिताः । अयं तु न तथा इति ।।) **त्रयी विरोधिनं** वेदविरोधिनं जित्वा उपागतं कवीश्वरं माम् ।

**यथा करोति वेदस्य निर्भयं भारतीपतिः ।।९२।।**

**तथा करोषि लोकेशप्रीतिं साधितवानसि ।**
**इति मामुक्तवान् भक्त्या मत्कृतिस्मृतिमात्रतः ।।९३।।**

**(अन्वयः) 'यथा भारतीपतिः वेदस्य निर्भयं करोति तथा करोषि । लोकेशप्रीतिं साधितवानसि' इति मां मत्कृतिस्मृतिमात्रतः भक्त्या उक्तवान् ।**

(व्या) (मां) प्रत्युवाच – **यथा करोति इत्यादिना** ।।९२-९३।। ('निर्भयं यथा भवति

तथा, भारतीभर्ता यथा वेदस्य सहायं करोति । ऋग्भाष्य उपनिषद्भाष्यरचनादिना । तथा त्वमपि विरोधिदैत्यहननप्रवचनादिना वेदस्य सहायं करोषि । तथैव लोकेशप्रीतिं नारायणप्रीतिं प्राप्तवानसि' इति भक्त्या उक्तवान् । दैत्यहननक्रियास्मरणमात्रेण अथवा वृन्दावने सन्निधानं, आख्यानप्रसारणम् इत्यादिकृतिस्मरणमात्रेण इत्यर्थः ॥९३॥)

**त्यक्तवान् सर्वकृत्यानि श्रुत्वा तत्वानि मे सुत ।**

**(अन्वयः) हे सुत! (ततः कुबेरः) सर्वकृत्यानि त्यक्त्वा मे तत्वानि श्रुत्वा (सन्तुष्टः बभूव) ।**

(व्या) (मया तत्वश्रवणार्थं सर्वकर्माणि त्यक्तवान् 'कोटिलाभादतुलो लाभः महज्जनात् कथां श्रवणम्' इति मत्वा, यथा जनकः शुकेन श्रुतवान् तथा सर्वकर्माणि त्यक्त्वा मया प्रोक्तं कथां शुश्राव । ततश्च मे मया तत्वानि श्रुत्वा सन्तुष्टो बभूव इति अध्याहारः कर्तव्यः । न तु तत्वश्रवणानन्तरं सर्वकर्मत्याग इति ॥९३॥

**अहं निमिषमात्रेणानिमिषैः सहितोगमम् ॥९४॥**
**पश्यतामेव सर्वेषां पाशिनो लोकमागतः ।**

**(अन्वयः) पश्यतां एव अनिमिषैः सहितः (सन्) निमिषमात्रेण अहम् अगमम् । सर्वेषां पाशिनः लोकम् आगतः ।**

**प्रचेता अपि मां दृष्ट्वा सुचेताश्च विपश्चितम् ॥९५॥**
**कचेताश्चागतः पश्चात् स्वच्छं याचितवान् मया (..वान् मम) ।**

**(अन्वयः) (तत्र) प्रचेताः सुचेताः अपि विपश्चितं मां दृष्ट्वा कचेताः (सन्) आगतः । पश्चात् मया स्वच्छं च याचितवान् .**

(व्या) उत्तरदिगभिमानिकुबेरपूज्यत्ववत् वरुणपूज्यत्वमाह – **प्रचेता अपीति ॥** (सुज्ञान-वान् वरुणोपि **विपश्चितं** पूर्णज्ञानिनं **मां दृष्ट्वा** ॥९५॥ **पश्चात् कचेताः** सन् आगतः विनयेन माम् अनुसृत्य उपसत्तिं कृत्वा इति यावत् । **स्वच्छं याचितवान्** । अज्ञातप्रमेयविषये ज्ञानार्थं प्रार्थनां चकार ।

**ज्ञानं भानुनिभं मौनिन् मानेन सहितं शनैः ॥९६॥**
**अनन्तानन्तमाहात्म्यसूचनं लोचनं यथा ।**

**(अन्वयः) हे मौनिन्! यथा लोचनं तथा मानेन सहितं भानुनिभं अनन्तानन्त-माहात्म्यं ज्ञानं शनैः (प्राप)**

**(व्या) (हे मौनिन्! वेदनिधे!** स च वरुणः मया उपदिष्टः सन् **मानेन सहितं** = प्रमाणोदाहरणजनितं, **भानुनिभं ज्ञानम्** = स्पष्टत्वे पूर्वापेक्षया अतिशयोपेतं ज्ञानं, **शनैः** प्राप ।।९६।। पुनः कथम्भूतं ज्ञानम्? अनन्तानन्तहरिमाहात्म्यानां सूचनं यस्मात् तत् । लोचनम् । यथा । तथा विद्यमानं अतिस्पष्टापरोक्षज्ञानं प्राप वरुणः ।।९६।।)

**काञ्चनेनाञ्चनं कुर्वन् मां छन्नं पापिनामिह ।।९७।।**

**लाञ्छनैः प्राञ्चितं जानन् वाञ्छितं चाप्तवान्मया ।**

**(अन्वयः) (मां) काञ्चनेन आञ्चनं कुर्वन्, इह पापिनां छन्नं लाञ्छनैः मां जानन् प्राञ्चितं मया वाञ्छितम् आप्तवान् च ।**

**(व्या) लाञ्छनैः** द्वात्रिंशल्लक्षणैः । **मां** ऋजुं जानन् । (तदानीम् । **इह** भूलोके **पापिनां छन्नम्** । पापिभिः अपरोक्षज्ञानित्वेन अज्ञातम् **मां काञ्चनेन अञ्चनं** कुर्वन् सन् सभायां कनकाभिषेकं कुर्वन् **मया** मदनुग्रहेण **वाञ्छितं** तदभीष्टं ज्ञानवृद्धिम् आप्तवान् ।। अञ्चित = पूजित) ।।

**तदादरेण सर्वेपि गर्विता अपि चर्वितम् ।।९८।।**

**दर्वीकरपतिं पर्वण्याप्ताः स्वर्वासिनश्च ये ।**

**साधु साध्विति सम्भाष्य जगृहुर्दर्शनं च मे ।।९९।।**

**स्वादुस्वादुपदैर्दिव्यैर्मधुरोक्तिसमन्वितैः ।**

**(अन्वयः) सर्वे अपि गर्विताः अपि तदादरेण चर्वितं च ये स्वर्वासिनः साधु साधु इति सम्भाष्य, दर्वीकरपतिं मां पर्वणि आप्ताः सन्तः मे दर्शनं च जगृहुः. साधुसाधुपदैः दिव्यैः मधुरोक्तिसमन्वितैः (च मे दर्शनं जगृहुः)**

**(व्या) तदादरेण** वरुणस्यादरेण (**गर्विता अपि सर्वेपि** वरुणलोकस्थअज्ञजनाः) **चर्वितं** विचारितम् ।।९८।। **दर्वीकरपतिमिति ।। दर्वीकरपतिं** सर्पपतिं मां प्रति **पर्वणि** पुण्यकाल-विशेषे प्राप्ताः ।।९९।। ('ते स्वर्वासिनश्च स्वर्गवासिनः देवाश्च वरुणोक्तं साधु इत्यङ्गीकृत्य

पर्वकाले वृन्दावनं गत्वा पूजां चक्रुः' इति भावः ।।९९।। **स्वादुस्वादुपदैः मधुरोक्तिसमन्वितैः** कीर्तनैः सह वृन्दावनदर्शनं चक्रुरिति पूर्वेणान्वयः ।।९९।।)

**एवं ज्ञानोपदेशं च मानवान्तकसन्निधौ ।**
**दानवा अपि तच्छ्रुत्वा स्तुवन्तो मां दिवं ययुः ।।१००।।**

(अन्वयः) मानवान्तकसन्निधौ दानवा अपि तत् ज्ञानोपदेशं च श्रुत्वा एवं मां स्तुवन्तः (सन्तः) दिवं ययुः ।

**(व्या) मानवान्तको** निर्ऋतिः । तत्सन्निधौ स्थिताः **दानवा अपि** मां स्तुवन्तो **दिवं ययुः** ।।१००।। (निर्ऋतिदेवस्य सन्निधौ मया कृतं तत् ज्ञानोपदेशं श्रुत्वा, तत्र विद्यमान-मुक्तियोग्यदानवाः निर्ऋतेरनुयायिनः वृन्दावनं प्राप्य, गुरुराजं स्तुत्वा, तदनुग्रहेण पुनः दिवं ययुरिति भावः ।। वरुणोपदेशानन्तरं निर्ऋतये अपि उपदेशो जात इति ज्ञायते ।।१००।।)

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्य- ज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

**(व्या)** (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दा-शनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेम-निर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

।। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे षष्ठाध्यायः समाप्तः ।।

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्तिसन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह –

**यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकं अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितब्राह्मण-स्वाप्नवृन्दावनाख्यानव्याख्याने षष्ठाध्यायः समाप्तः ।।**

**।।श्रीवादिराजगुर्वंतर्गतमध्वेशाभिन्नश्रीकृष्णार्पणमस्तु ।।**

## ०७-००-सप्तमाध्यायः

### १. वेदनिधिप्रकरणम् ।। श्लोकाः (१-४४)

(व्या) हरिः ओं ।। श्रीगुरुभ्यो नमः ।। पूर्वाध्याये 'सर्वत्र तव विश्वासो ह्यविश्वासः कुतोऽत्र तु' (६/३२) इत्यादिनोक्त(आख्यानस्य)वेदादिवत्प्रामाण्यमुपपादयितुम् अप्तिमूलत्वं श्रुतिमूलत्वं युक्तिमूलत्वं च ज्ञापयितुं हयवदनधन्वन्तरिबादरायणनरनारायणात्मकभगवद्रूपेभ्यः वेदादिसच्छास्त्रश्रवणरूपभागवतवैभवं गीर्वाणोपदेष्टृत्वादि दिव्यभाक्तवैभवं वृन्दावनाचार्यशेष-सीतापतिव्यासवेदनिध्यनुग्राहकत्वरूपभौमभाक्तवैभवं चोच्यते अनेनाध्यायेन ।।

'एवं वै देवतालोके' इत्यारभ्य 'मन्दहासान्वितो नित्यं इन्दिरेशोपि मां तदा' इत्यन्तं वेदनिधिश्रोतृकप्रकरणम् । अध्यायान्ते तस्य प्रकृतत्वात् शेषश्रोतृकं चेदं प्रकरणम् । तत्प्रकरणोक्तप्रामाण्योपपादककथनार्थत्वात् । अत्र सत्यलोकस्थितहयग्रीवमुखतः वेदार्थश्रवणरूपं दिव्यभागवतवैभवम्, विप्रोपदेशरूपं भौमभाक्तवैभवम् । धन्वन्तर्यादिरूपत्रयोपदिष्टार्थश्रवणरूपं भौमालौकिकभागवतवैभवं चोच्यते ।

**हरिः ओं ।। एवं वै देवतालोके पाकशासनपूर्वकान् ।**
**दृष्ट्वा चाकाशगामी तु सत्यलोकमितोगमम् ।।१।।**

(अन्वयः) एवं वै देवतालोके पाकशासनपूर्वकान् इतः आकाशगामी तु सत्यलोकं अगमम् ।।

(व्या) एवं वै देवतालोके इति ।। एवं यथा सूर्यमण्डले स्थित्वा भूगतानखिलसज्जनान् दृष्ट्वा काष्ठान्तगमनम् (५/५०) । यथा ज्योतिर्मण्डलगतान् दृष्ट्वा स्वर्गलोकगमनं(५/५३) । तथा पाकशासनपूर्वकान् समीपस्थानिव स्पष्टं दृष्ट्वा इतः स्वर्गलोकात् सत्यलोकं प्रति अगमं गतवान् ।।१।। (आकाशगामी तु आकाशमार्गेणैव विमानोपरि अथवा अणिमादियोगजसिद्ध्या ।।१।।)

**तत्रैव निवसाम्यद्धा शुद्धान्तःकरणः सदा ।**
**बध्वा हयग्रीवपदं श्रद्धायुक्तश्च सुस्थिरः ।।२।।**
**तत्रापि मां हयग्रीवः श्रुत्यर्थं सर्वमेव च ।**
**ग्राहयामास सर्वज्ञो वर्गे वर्गार्थतत्ववित् ।।३।।**

**(अन्वयः) सदा शुद्धान्तःकरणः श्रद्धायुक्तः च (अहं) हयग्रीवपादं (भक्तिपाशेन) आद्धा बद्ध्वा, सुस्थिरः (सन्) तत्र एव निवसामि । वर्गार्थतत्ववित् तत्रापि तत्वज्ञः हयग्रीवः मां दृष्ट्वा (भक्त)वर्गे सर्वं श्रुत्यर्थं (मां) एव च ग्राहयामास ।।३।।**

**(व्या)** तत्र भक्तिपाशेन हयग्रीवपादं बद्ध्वा निवसामि ।।२।। (**अद्धा शुद्धान्तःकरणः श्रद्धायुक्तश्च सुस्थिरः** इति स्वरूपसङ्कीर्तनविशेषणानि) ।।२।।

(**तत्रापि** सत्यलोकेपि **श्रीहयग्रीवः सर्वज्ञः सर्वमेव च श्रुत्यर्थं ग्राहयामास** ।।) वर्गाः ऋग्वेदाध्यायैकदेशरूपाः कतिपयऋगात्मकाः तैः प्रतीयमाना ये अर्थाः तेषु यत् तत्वम् अबाधितम् । तदभिज्ञः = **वर्गार्थतत्ववित्** । **वर्गे** भक्तवर्गे **मां** सर्वश्रुत्यर्थं **ग्राहयामास** । **सर्वम्** इत्यनेन 'ब्रह्मणा त्वखिलैर्गुणैः' इत्युक्तदिशा सर्वगुणोपसंहाराधिकारित्वं सूचितम् ।।३।।

**''सर्गे सर्गे तथाहं वै स्वर्गं यास्यामि मार्गयन् ।**
**घर्घरौ तौ च दैत्रेन्द्रौ मधुकैटभसञ्ज्ञितौ ।।४।।**

**तौ हत्वा सलिले काले लोकं निर्मितवानल(ह)म् ।**
**पालयामि कुलालोपि कलशं पालयन् यथा ।।५।।**

**(अन्वयः) तथा सर्गे सर्गे (प्रतिसृष्टौ) घर्घरौ (क्रूरौ) दैत्याग्रौ च तौ मधुकैटभसञ्ज्ञितौ मार्गयन् अहं वै स्वर्गं यास्यामि । तौ सलिले हत्वा, काले (अहं) लोकं (च) निर्मितवान् । यथा कुलालः कलशं पालयन् (तथा) अहमपि (लोकं) पालयामि ।।**

**(व्या)** हयग्रीवोपदेशप्रकारमाह – **सर्गे सर्गे इति ।। अहमि**ति हयग्रीववचनम् । **सर्गे सर्गे** = प्रति सृष्टौ घर्घरौ क्रूरौ (दैत्येषु अग्रौ मधुकैटभनामकौ । **तौ** प्रसिद्धौ ।) **मार्गयन्** सन् । **स्वर्गं यास्यामि** ।।४।। (तौ दैत्यौ सलिले एव हत्वा, मेदिनीं स्थिरीकृत्य, काले प्राप्ते भूलोकादिकं पूर्वमेव सृष्टम् । **अलं निर्मितवान्** । तत्तत् प्रदेशे उपचययुक्तं सत् यथा भवति तथा चकार । पालनं च अहमेव करोमि । **यथा कुलालः स्वनिर्मितकलशान्** पालयति । तथा अहमपि मया सृष्टान् सर्वलोकान् पालयामि ।।५।।)

**एवं सृष्ट्याद्यष्टकं च स्पष्टं कष्टं विनाप्यहम् ।**
**श्रेष्ठ सुष्ठु करोमीष्टां भक्तानां प्रेष्ठ सद्गतिम् '' ।।६।।**

**इति मामुक्तवान् भक्तं त्यक्त्वा सर्वं तु पातकम् ।**
**प्राप्तं पदान्तिकं स्वस्य शक्त्या युक्तं श्रुतिग्रहे ।।७।।**

(अन्वयः) एवं सृष्ट्याद्यष्टकं कष्टं विनापि स्पष्टं सुष्ठु करोमि । हे प्रेष्ठ! भक्तानाम् इष्टां श्रेष्ठ सद्गतिं च (ददामि) । इति स्वस्य पदान्तिकं प्राप्तं श्रुतिग्रहे शक्त्या युक्तं त्यक्त्वा सर्वं तु पातकं भक्तं मां (श्रीहयग्रीवः) उक्तवान् ।

(व्या) एवं सृष्ट्याद्यष्टकम् इति ।। सृष्ट्याद्यष्टकं करोमि । भक्तानां सद्गतिं ददामि । इत्यादिकं श्रीहयग्रीवः उक्तवान् ।।६।। 'इति मां उक्तवान्' इति गुरुराजवाक्यम् । 'त्यक्त्वा सर्वं तु पातकम्' इत्यस्य 'कृतं सर्वं पातकं प्रायश्चित्तादिना परिहृत्या' इति नार्थः । ऋजूनां पातकप्रसक्त्यभावात् । किन्तु 'किञ्चिदपि पातकमकृत्वा' इत्यर्थः ।।७।। (अन्यत् स्पष्टं) ।।

**सहस्रपद्यतत्पद्मं तत्पदाख्यदळान्वितम् ।**
**तद्भावसौरभभुवं जिघ्रन् भिभ्रतु मूर्धनि ।।८।।**

(अन्वयः) तत् सहस्रपद्यपद्मं तत् पदाख्यदलान्वितं तद्भावसौरभभुवं जिघ्रन् बिभ्रत् स्वमूर्धनि ।।

(व्या) सहस्रपद्यतत्पद्मम् इति ।। अत्र तत्शब्देन हयग्रीवोक्तं श्रुत्यर्थबोधकं वाक्य-मुच्यते । तत् पद्ममिव सहस्रपद्यात्मकं च तत् तत्पद्मं चेति तथा = सहस्रपद्यतत्पद्मम् । सहस्रशब्देन बहुसहस्रपद्यानि अभिप्रेतानि । 'अयुतं नियुतं तथा' (१३/४८) इत्यादिवक्ष्य-माणत्वात् । हयग्रीवो बिभ्रत् । अनेन ''हयग्रीवोक्तं श्रुत्यर्थबोधकं वाक्यं मया (अनन्त)पद्यरूपेण रचितम् । तत् सहस्र(दळ)पद्मतुल्यम् । तत्पदानि दळतुल्यानि । तद्भावः सौरभतुल्यः । एतादृशं (सहस्रदळ)पद्मं मया समर्पितम् । हयग्रीवः शिरसि बिभ्रत्'' इति भावः ।।८।।

**विप्रास्यसरसोद्भूतं तरसा सर्वभूसुराः ।**
**शिरसा स्वरसोपेताः श्रियै तामरसं परम् ।।९।।**

**धारयन्तु बुधागारे धारयन्तु सदारकाः ।**
**आदरैः पादरजसा धूतपापाश्च येम(न)राः ।।१०।।**

(अन्वयः) विप्रास्यसरसोद्भूतं परं तामरसं स्वरसोपेताः सन्तः सर्वभूसुराः अमराः

**च ये पादरजसा धूतपापाः (ते) श्रियै तरसा बुधागारे सदारकाः आदरैः शिरसा धारयन्तु ।।**

**(व्या) विप्रास्येति ।।** विप्रास्यमेव सरः, तेन उद्भूतं, **परं** उत्तमं, **तामरसं** (कमलं) **श्रियै** (सम्पत्प्राप्त्यर्थं) **शिरसा धारयन्तु** । कथंभूताः सन्तः? **स्वरसोपेताः** सन्तः । स्वकीयाः रसाः सारः तात्पर्यग्रहणसामर्थ्यम् । तेन उपेताः सन्तः **भूसुराः** ब्राह्मणाः अमराः देवाश्च **पादरजसाधूतपापाः** इत्यनेन 'पांसवोऽस्मान् पुनन्तु' इत्युक्तरीत्या वायुभावयोग्यस्य । मम पादरजसा धूतपापा इत्युक्तं भवति ।।१०।। (**बुधागारे सदारकाः** सन्तः मम भक्त्या निर्धूतपापाः नराश्च आख्यानं **शिरसा धारयन्तु** । पण्डितेभ्यः गृहस्थाः सकळत्राः आख्यानं श्रुत्वा सम्पदम् अनुभवन्तु इत्यपि योजना साध्वी ।।१०।।)

**इत्थं ममोक्तिरेवेयं कथं कृत्रिमवार्तया ।**
**व्यर्थतां याति तत्वज्ञ पार्थिवेष्वपि सार्थिका ।।११।।**

**(अन्वयः) हे तत्वज्ञ! इत्थं एव इयं मम उक्तिः कृत्रिमवार्तया हे सात्विक! पार्थिवेषु अपि कथं व्यर्थतां याति ।**

**(व्या) इत्थम् इति ।। इत्थम्** । हयग्रीवोपदिष्टश्रुतिमूलिका ममोक्तिः (ममैव उक्तिरियम्, न तु विप्ररचिता) **कृत्रिमवार्तया** 'मम स्वप्ने'त्यादि कृत्रिमवार्तया (इयं विप्रकर्तृका इति दुर्जननिन्दया वा) **कथं व्यर्थतां याति?** (इयं) **पार्थिवेषु** भौमवैभवेष्वपि ।।११।। ('पृथिवीपालकानां राज्ञामपि प्रयोजनसम्पादिका । अक्षत्रियाणां जीवनसुखप्रदेति किमु वक्तव्यम्' इति भावः । 'दुर्जननिन्दया चित्तविकारं प्राप्य, आख्यानं नाभीष्टदायकमिति न मन्तव्यम्' इति यावत् ।।११।।)

**अतिगोप्यानि पद्यानि मयोक्तान्यपि कानिचित् ।**
**जनस्यायोग्यतां दृष्ट्वा हृतवान् विप्रवाक्यतः ।।१२।।**

**(अन्वयः) मया उक्तानि अति गौप्यानि कानिचित् पद्यानि जनस्य अयोग्यतां दृष्ट्वा विप्रवाक्यतः हृतवान् ।**

**(व्या) अतीति ।। अतिगोप्यानि** इत्यनेन पूर्वाध्यायोक्तरीत्या(६/४३) 'इतःपरं कदाचिदेव वक्ष्यामि' इत्येव न; उक्तान्यपि कानिचित् मयोक्तानि हृतवानिति भावः ।।१२।।

(तत्र कारणम् – जनस्यायोग्यतां दृष्ट्वा इति[१] ।।१२।।)

**अहं त्वविश्वासमेव भाविनं भावनात्मकः ।**
**भावयन् भानुमद्धीमन् अबुधानां हरामि च ।।१३।।**

**(अन्वयः) अहं तु अबुधानां भाविनम् अविश्वासं एव भावयन् (सन्), हे धीमन्, भावनात्मकः (अहं) भानुमत् च हरामि ।।**

(व्या) (कारणान्तरमप्याह – अहं भावनात्मकः भक्तिप्रधानस्वरूपकः । सर्वदा भक्तिशीलः अत एव सेवकानां तत्तद्भक्त्यनुसारेण प्रयत्नानि कारयित्वा फलप्रदः ।। भावना ध्यानं, भावना = भक्तिः । भक्तिविश्वासध्यानान्येव प्रधानानीति मत्वा अनुष्ठानं सदा करोमि । तादृश-भावनात्मकत्वात् । ये ये मयि भक्तिं कुर्वन्ति, मद्वाक्ये विश्वासं कुर्वन्ति, तेषां विश्वासानुसारेण फलं ददामीति भावः ।।) अबुधानां भाविनम् अविश्वासं भावयन् सन् (अहं) भानुमत्पद्मं (कान्तियुक्तं पद्मतुल्यं श्लोकं) प्रकाशकं पद्यं हरामि ।।१३।।

**एवं नित्यं प्रनृत्यन् वै सत्यं कर्तुं मयोदितम् ।**
**तत्तन्मुखे प्रयत्नानि वक्तुं तथ्यं करोमि च ।।१४।।**

**(अन्वयः) एवं मया उदितं सत्यं कर्तुं तथ्यं वक्तुं च नित्यं प्रनृत्यन् वै तत्तन्मुखे प्रयत्नानि करोमि ।।**

---

(१) 'ॐ अनाविष्कुर्वन्नन्वयात् ॐ' – (ब्र.सू. -३.४.४०) इत्यत्र

''**वायुं विद्याः समासाद्य सर्वासां पतिमूचिरे ।**
**स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु चे**''त्यैतरेयसंहितायाम्

– (ब्र.सू.भा. ३.४.४०) – इति श्रीमदाचार्याः

अतः परमगोप्यत्वात् कानिचित् पद्यानि जनानां योग्यतां दृष्ट्वा भाविसमीरैः श्रीगुरुराजैः उदाहृतानि इत्यत्र न कश्चित् क्षुद्रोपद्रवः (समं सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् हि आख्यानम्; श्रीहयग्रीवसंहिता हयग्रीव-विद्या च - उपरि ८तमः श्लोकः द्रष्टव्यः ) ।

* योग्यानामपि उपासनाफलवैलक्षण्यात् न सर्वगुणोपसंहारः । तद्यथा – **'ॐ वेधाद्यर्थभेदात् ॐ'** (ब्र.सू. ३.३.२६) इत्यत्र ईश्वरसाक्षात्कारसाधनोपासने भेदनादिगुणानां सर्वोपसंहार्यत्वनिरासः कृतः ।

तत्रैव **गुर्वर्थदीपिकायां - यत्याद्युपास्यत्वाभावादित्यत्र यद्यपि यत्यादीनां ध्यानात्प्राक्प्राणायामकरणे पापपुरुषशोषणदहनादिकमस्ति । तथापि ध्यानकाले स्वयोग्यगुणानेवोपासते । नतु भेदनादिकमिति । – इति ।** एतद्रहस्यमपि अयं श्लोकेन भाव्यम् ।

**(व्या)** एवमपहारे कृते कथमर्थबोधकम्, कथमुक्तकार्यं सत्यं भूयात्? इत्यत आह – **एवमिति ।। मया उदितं सत्यं कर्तुं** तथ्यं वक्तुं च **तत्तन्मुखे प्रयत्नानि** करोमि । **तत्तन्मुखे** इत्यनेन ''मदभिमतकार्यमर्थं बुद्ध्वैव स करोतीति न मन्तव्यम् । किन्तु मदीयेन प्रयत्नेन यत्कर्तव्यं तत्कृतं भवति । तदुपलभ्य आख्यानार्थविमर्शे कृते गुरुराजेन यथोक्तं तथैव जातमिति ज्ञायते''(१) इति भावः ।। **प्रयत्नान्** इति नपुंसकप्रयोगः विळम्बसूचनाय ।।१४।। (**प्रनृत्यन्** इति अनायासेन इत्यर्थः । हरेरग्रे प्रनृत्यन् इति वा ।।१४।।)

**अहं धवळगङ्गायां देवैः सह मुनीश्वरैः ।**
**अरुणोदयवेळायां स्नात्वा गच्छामि नित्यशः ।।१५।।**

(अन्वयः) अरुणोदयवेलायां देवैः मुनीश्वरैः सह अहं नित्यशः धवलगङ्गायां स्नात्वा गच्छामि ।

**(व्या)** विप्रस्वप्नोपदेशकाले तद्वशत्व-तद्दर्शनादिना दोषशङ्कां वारयितुमाह – **अहमिति ।।** (**देवैः सह मुनीश्वरैः** त्रिकोटियतिभिः वेदवेद्यादिभिश्च सह धवळसरोवरे **स्नात्वा** । प्रतिदिनं **गच्छामि** अन्यकार्यार्थं गच्छामि ।।१५।।)

**नराणां दर्शनं चापि स्पर्शनं च विमर्शनम् ।**
**सुराणां नैव धर्मश्च सम्भाषणमपि प्रिय ।।१६।।**

---

(१) * सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणम् ।
भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ।। – इति भागवते (३.७.३)
'त्रयोविंशतितत्त्वानि प्राविशद् रमया सह ।
कालाख्यया स्वयं विष्णुः शक्यत्वाच्छक्तिरूपया ।।
सर्वचेष्टकरूपेण स्वसामर्थ्येन केशवः ।
तानि भिन्नानि तत्त्वानि योजयामास चांशतः' – इति श्रीभागवततात्पर्यनिर्णयः ।

* 'कर्ता सर्वस्य वै विष्णुः एक एव न संशयः ।
इतरेषां तु सत्ताद्या यत एव तदाज्ञया' इति भविष्यत्पुराणे ।।
वामने च –
'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा' इति ।। – (ब्र.सू.भा. २.३.११)

**स्वप्नेऽपि चाप्तवान् श्रीमन् आयुष्मन् नरदेहिनम् ।**
**प्राप्नोति यदि वा तापं नरके चाप्नुयाद् ध्रुवम् ॥१७॥**

(अन्वयः) हे प्रिय! नराणां दर्शनं स्पर्शनं च विमर्शनं चापि सम्भाषणम् अपि स्वप्ने अपि च आप्तवान् सुराणां नैव धर्मः । हे आयुष्मन् यदि (सुरः) नरदेहिनं प्राप्नोति (यदि सुरः) स्वप्ने अपि (नराणां दर्शनादिकं) च आप्तवान् वा (तर्हि सः) ध्रुवं नरके च तापम् आप्नुयात् ॥

(व्या) यदि सुरः **नराणां** दर्शनादिकं प्राप्तवान् तर्हि (सः) **नरके तापम् आप्नुयात्** ॥ (स्वप्नेऽपि नरदर्शनादिकं देवानां निषिद्धमिति तात्पर्यम्[१]) ॥१६-१७॥)

**अथापि मे न दोषः स्यान्निःसङ्गवपुषो ऋषेः ।**
**अघमर्षणतो दोषं शोषयामि तद(म)प्यहम् ॥१८॥**

**तस्माद्धवलगङ्गायामङ्गीकृत्य मुनीश्वरः ।**
**सङ्गी कृतावगाहः सन् स्वाङ्गं यास्यामि नित्यशः ॥१९॥**

(अन्वयः) अथापि निःसङ्गवपुषः ऋषेः मे न दोषः स्यात् । सङ्गी मुनीश्वरः (अहं) तदपि अङ्गीकृत्य धवलगङ्गायां कृतावगाहः सन् अघमर्षणतः दोषं शोषयामि । तस्मात् नित्यशः स्वाङ्गं यास्यामि[२] ।

(व्या) **अथेति** ॥ (इतरेषां देवानां पापसद्भावेपि) मम तु निःसङ्गत्वात् पद्मपत्रवत् निर्लेपत्वात् (यथा हनूमान् रावणान्तःपुरे स्त्र्यादिदर्शनजन्यपापशून्यः तथा ममापि मानुष-दर्शनादिदोषलेपो नास्ति । अथापि लोकशिक्षार्थं लोकन्यायमङ्गीकृत्य) **सङ्गी** विप्र-

---

(१) अप्रत्यक्षो ह्यसंस्पर्शः असम्भाषणमेव च ।
देवैरपि नृजातेस्तु गुह्यधर्मो दिवौकसाम् ॥

धर्मो हि विदुषामपि देवतानां । प्राप्ते नरेषु जनने नरवत् प्रवृत्तिः । ज्ञानादिगूहनमथाध्ययनादिरत्र ।

'सुराणां तु मनुष्याणां दर्शनं स्पर्शनं तथा ।
सम्भाषणं च सद्बुद्धे नैव धर्मोत्र जातुचित् ॥

(२) तस्माद्वृन्दावनमिदं धवलाख्यं सरोवरम् ।
स्नानेन दर्शनेनापि सर्वाघौघविनाशनम् - (श्रीमत्स्वाप्नवृन्दावनाख्यानम् – १/३२)

सम्भाषणादिसङ्गवान् **धवळगङ्गायां कृतावगाहः** सन् **अघमर्षणतः तमपि दोषं शोषयामि** । ततः परं **स्वाङ्गं यास्यामि** । 'विप्रवासनामयशरीरप्रविष्टेन रूपेण विप्रबोधनादिकं कृत्वा धवळगङ्गायां स्नात्वा ततः परं नैजमङ्गं प्रविशामि' इति भावः । (**मुनीश्वरः** इति हेतुगर्भः । त्रिकोटियतीनां मार्गदर्शी । इतरमुनीनां श्रेष्ठः तस्मात् पापं त्यजामि दूरादेवेति भावः)।।१८-१९।।

**अथ ते वच्मि सत्यं च प्रश्नं मा कुरु मां प्रति ।**
**शिश्नोदरपराणां च वाचं न श्रुणु नन्दन ।।२०।।**

**(अन्वयः) अथ ते सत्यं च वच्मि । हे नन्दन मां प्रति प्रश्नं मा कुरु । शिश्नोदर-पराणां वाचं च न श्रुणु ।**

**(व्या) अथ ते इति ।। प्रश्नं मा कुरु** । 'मम स्वप्ने तव स्वप्ने वदतु'(६/२८) इति उक्तदिशा अविश्वासतः प्रश्नं मा कुरु ।।२०।। (**शिश्नोदरपराणाम्** अन्तःकरणानि तत्वविषये अशुद्धानि । तस्माद्बुद्धिमतामपि तेषाम् उपदेशाः न ग्राह्याः[१] ।।२०।।)

**शोषये स्मृतिमात्रेण दोषं सर्वविपश्चिताम् ।**
**हयास्यकृपया नित्यं मयास्य चरणार्चनात् ।।२१।।**
**प्रियास्यैव गतिः प्राप्ता प्रयास्यामि न संसृतिम् ।**

**(अन्वयः) हयास्यकृपया सर्वविपश्चितां दोषं स्मृतिमात्रेण शोषये । मया नित्यं अस्य चरणार्चनात् अस्य एव प्रिया गतिः प्राप्ता संसृतिं न प्रयास्यामि ।**

**(व्या)** (मध्वशास्त्रसम्पन्नानां मयि शरणागतानां सकलपण्डितानां दोषं परिहृत्य तान् निर्विघ्नसाधनसम्पन्नान् करोमि ।। एतादृशबहुजनोद्धारसामर्थ्यं कथम् सामान्यतः गुरवः कति–पयशिष्यान् उद्धरन्तीत्यत आह – **हयास्येति ।।** मया नित्यं हयवदनस्य चरणार्चनात्[२] । अस्य हरेः **कृपया** ।।२१।। अस्यैव हयग्रीवस्य गतिः भक्तियोगरूपमार्गः मया लब्धः । संसृतिम् गर्भवासादिदुःखं मरणादिदुःखं नाहमनुभवामि तत्कृपया[३] ।।२२।।)

---

(१) **सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ।**
**तस्यानुगस्तमस्यन्धे पतत्यन्धानुगान्धवत् ।। – (भाग. ११.२६.३०)**

(२) 'वदामि नारायणनामधेयम्' इति प्रथमाध्यायस्थ ७६तमः श्लोकमत्र स्मर्तव्यम् ।

(३) **सह मुक्तः सन् भोगान् भुङ्क्ते विपश्चिता ।**
**श्रुतिश्चैषा ब्रह्मणोन्ते मुक्तिमाह न संसृतिम् ।।२१८।। – युक्तिमल्लिकायां**

**हे पुत्र वृत्रहन्तायं विचित्रं कृतवानहो ।।२२।।**

**पित्रादिष्टश्च स्वच्छत्रं धृतवानत्र मूर्धनि ।**

(अन्वयः) हे पुत्र! अयं वृत्रहन्ता अत्र विचित्रं कृतवान् । पित्रा आदिष्टः (सन्) मूर्धनि स्वच्छत्रं धृतवान् । अहो!

**(व्या)** (**हे पुत्र!** वेदनिधे! शेष! **अयं** प्रसिद्धः त्रिलोकनाथः इन्द्रः आश्चर्यं कृतवान् । किं तदाश्चर्यमित्यत आह उत्तरश्लोके – **पित्रेति** ।।२२।।) **पित्रा** कश्यपेन दृष्टः दृष्ट्या सङ्केतितः सूचितः इत्यर्थः । स्वस्य श्वेतछत्रं गुरुराज**मूर्धनि** स्वयं **धृतवान्** ।

**(अव)** (एवं इन्द्रेण पूजितः सन् चन्द्रमण्डलान्तर्गतधन्वन्तरिं स्मृत्वा तत्र गतवान्; छत्रस्य श्वेतत्वात् चन्द्रमण्डलस्य श्वेतत्वात् सादृश्येन मण्डलं स्मरणे मण्डलवर्तिहरिस्मृतिरपि जाता । तत्र गत्वा धन्वन्तरिस्वामिनं भजे ।)

**धन्वन्तरिं भजे नित्यं मन्वन्तरपतिं प्रभुम् ।।२३।।**

**तन्वन्तरगतश्चाहं नन्वन्तरगतोऽपि सन् ।**
**अमृतांशुगतं देवं त्वमृताब्धिसमुद्भवम् ।।२४।।**

**अमृतं पाययन्तं माममृताक्तकमण्डलुम् ।**

(अन्वयः) मन्वन्तरपतिं ननु अन्तरगतः अपि तन्वन्तरगतः च सन् प्रभुं अमृतांशुगतम् अमृताब्धिसमुद्भवं, अमृताक्तकमण्डलुं, मां अमृतं पाययन्तं, देवं धन्वन्तरिं नित्यं भजे । (धन्वन्तरिप्रभुं भजे).

**(व्या) मन्वन्तरपतिं** मन्त्रविशेषाधिपतिं (धन्वन्तरिअष्टाक्षरमन्त्रप्रतिपाद्यं) एवं मन्वन्तर-पतिं च (तापसमन्वन्तरनियामकं च)।।२३।। इदानीन्तनस्य कथमतीतकालीनधन्वन्तरिभजन-मित्यत उक्तम् – **तन्वन्तरगतस्येति ।। अहम् अन्तरगतोपि** व्यवधानं प्राप्तोपि **तन्वन्तरगतः** सन् शरीरान्तस्थः सन् भजे ।।२३।। (धन्वन्तरेः मण्डलान्तर्विद्यमानत्वेपि अहमपि **अन्तरगतः** सन् सूक्ष्मशरीरान्तरं योगजशक्त्या स्वीकृत्य तस्य समीपं प्राप्य भजनं कृतवान् इति वा तात्पर्यं ज्ञेयम् ।) धन्वन्तरिं वर्णयति – **अमृतांशुगतं** चन्द्रमण्डलान्तर्गतम्, देवं, **अमृताब्धिसमुद्भवं** क्षीरसमुद्रात् मथनकाले अमृतकमण्डलुं धृत्वा आविर्भूतम् ।।२४।। अमृताक्तः कमण्डलुः यस्य सः

तम्, **माम् अमृतं पाययन्तं भजे**[१] । (अमृतांशुगतं चन्द्रगतम् । अमृताब्धिसमुद्भवं क्षीरसमुद्रादाविर्भूतम्) ॥२४॥

**स देवो वरदो मह्यं तदैव प्रभुरव्ययः ॥२५॥**

**ददौ च दिव्यविज्ञानं मुदैव मम सेवया ।**

**(अन्वयः) तदा एव प्रभुः अव्ययः सः देवः वरदः (सन्) मम सेवया मुदा एव दिव्यज्ञानं च ददौ ।**

**(व्या) स देव इति ॥ मम सेवया तदैव दिव्यविज्ञानं ददौ**[२] ॥२५ १/२॥ (तदैव अव्ययः प्रभुः सः देवः मह्यं वरदः अभूत् ॥२५॥)

**''श्रीपतिश्चोत्तमो नित्यं सत्यं जगति तत्कृतम् ॥२६॥**

**कत्थनं तच्च मिथ्येति जल्पन्ति दितिजाः सुत ।**

**(अन्वयः) हे सुत! श्रीपतिः उत्तमः । नित्यं जगति तत्कृतं सत्यम् । दितिजाः तत् च मिथ्या इति कत्थनं जल्पन्ति ।**

**(व्या)** ज्ञानदानप्रकारमाह – **श्रीपतिश्चेति ॥** (लक्ष्मीपतिः **नित्यं** सर्वोत्तमः । जीवस्य मुक्तावपि हरिसाम्यं नास्ति । **जगति** तत्कृतं रामकृष्णादिरूपेण साक्षात्कृतम् । कुलालादिषु प्रविश्य, ब्रह्मरुद्रादिषु स्थित्वा, अन्तर्यामी सन् उपादानादिभिः यत्कृतं तत्सर्वं सत्यमेव । (एवं स्थिते) विष्णोः सर्वोत्तमत्वम् असत्यमिति वक्तुं 'जगन्मिथ्ये'ति जल्पन्ति । 'जगतः सत्यत्वे सृष्ट्यादिकर्तृत्वं सत्यं भवति, (सृष्टिकर्तृत्वादिस्वातन्त्र्यगुणरहितानां) तद्रहितानां जीवानां सकाशात् भेदः सिद्ध्यति । स चानिष्टो दैतेयानाम्' इति भावः ॥२६भ॥

---

(१) **चन्द्रौघकान्तिममृतात्मकरैर्जगन्ति**
**सञ्जीवयन्तममितात्मसुखं परेशम् ।**
**ज्ञानं सुधाकलशमेव च सन्दधानं**
**शीतांशुमण्डलगतं स्मरतात्मसंस्थम् । – (तन्त्रसारे)** इति श्रीधन्वन्तरीध्यानश्लोकम् ।

(२) कथं दिव्यविज्ञानं दत्तवान् श्रीधन्वन्तरिः? इत्यत्र -
**यावद् ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम् ।**
**विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो हरेः ॥ – (गी.ता.१३/२५)**
इति गीतातात्पर्योदितप्रमेयं स्मरणीयम् । श्रीगुरुराजस्य ऋजुगणस्थत्वात् सर्वज्ञत्वाच्च ।

**पूर्वं सुरासुरगणैरर्थितोहं कथान्तरे ।।२७।।**

**तथान्तरे पपुर्देवास्त्वमृतं चेतरे मृतिम् ।**
**युद्धे देवैः सुसन्नद्धा वृद्धा(विद्धा ) वृद्धविरोधिनः ।।२८।।**

**मुग्धाः सद्भावतो दुग्धपयोधौ मध्यगाश्च ते ।**

(अन्वयः) पूर्वं कथान्तरे सुरासुरगणैः अहम् अर्थितः । तथान्तरे देवाः तु अमृतं पपुः । इतरे सद्भावतः मुग्धाः दुग्धपयोधौ मध्यगाः सुसन्नद्धाः वृद्धविरोधिनः च ते युद्धे देवैः विद्धाः मृतिं (पपुः) ।

**(व्या)** विष्णुः सर्वोत्तमत्वे प्रद्वेषकारणमाह – **पूर्वमिति ।।** अमृतपरिवेषणकाले देवानाम-मृतप्राशनेन मया कारितेन, मया कृतेन दैत्यवधेन च दैत्यानां मयि द्वेषः ।।२८।। (कथान्तरे – वाक्यव्यवहारसन्दर्भेन देवासुरैः अर्थितः सन् अमृतम् आनीतवान् ।।२७।। मोहिनीरूपेण विभज्य देवानाम् अमृतं दत्तवान् । **इतरे** दैत्याः **युद्धे सन्नद्धाः** । वृद्धविरोधिनः मूढाः यस्मात् । तस्मात् **देवैः विद्धाः** । **मृतिं पपुः** प्रापुः ।।२८।।) (**सद्भावतः** निर्मलभक्त्या **मुग्धाः** विपरीत-भावं प्राप्ताः, 'मुहु चित्तवैकल्ये' । 'भक्तिविरुद्धप्रद्वेषवन्तः जाताः' इत्यर्थः । तदा ते दैत्याः क्षीरसमुद्रतीरे केचन समुद्रमध्ये आसन् । एवं च विद्धपराजितदैत्यानां मयि द्वेषः ।)

**तद्द्वेषाद् द्वेषरूपास्ते मृषेति मम भाषितम् ।।२९।।**

**भाषन्ते शेषशायी च दोषीति सुषिरोक्तिभिः'' ।**
**इति मामुक्तवान् सक्तं(सूक्तं) स्वपादे चापदात्यजत् ।।३०।।**

**(अन्वयः) तद्द्वेषात् ते द्वेषरूपाः सुषिरोक्तिभिः मम भाषितं 'मृषा' इति शेषशायी दोषीति च भाषन्ते । इति मां उक्तवान्, स्वपादे आपदा अत्यजत् च ।**

**(व्या)** तेन द्वेषेण मत्सर्वोत्तमत्वे तद्बोधकशास्त्रे च तेषां प्रद्वेषः ।।२९।। तेन **प्रद्वेषेण मम भाषितं** वेदशास्त्रादिकं **मृषेति** अतत्वावेदकमिति । **शेषशायिं** शेषशायिनं **दोषीति भाषन्ते** । **सुषिरोक्तिभिः** = छिद्रोक्तिभिः ।। (सावकाशवाक्यैः) वेदगताभिः तत्वमस्यादिभिः आपाततो जीवाभेदादिप्रतिपादिकाभिः उक्तिभिः । इति मां धन्वन्तरिः उक्तवान् । (**सक्तं** भक्तं मां प्रति । **स्वपादे** पतितं मां रक्षितवान् । मम अहितं कल्यादिकम् **अत्यजत्)** ।।३०।।

**कापद्या(ट्या)न्तक दैत्यानामन्तकं चापि तं भज(जे) ।**
**अनन्तं तं नतोस्मीशं देशतः कालतश्च यम् ॥३१॥**

**गुणतश्च वदन्तो ये सन्तः कान्तं श्रियः सुत ।**

(अन्वयः) हे कापट्यान्तक! तं दैत्यानाम् अन्तकं च अपि भजे(भज) । हे सुत! यं सन्तः देशतः कालतः गुणतः च वदन्तः तम् अनन्तम् ईशं श्रियः कान्तं नतः अस्मि ।

(व्या) (कुत्सितदैत्यानां कापट्यनाशकम् । तेषां मारकं च धन्वन्तरिम् अहं **भजे** । **देशतः अनन्तं कालतः अनन्तं नतोस्मि** ॥३१॥ **गुणतः अनन्तं** प्रत्येकम् अपरिच्छिन्न असङ्ख्यातगुणोपेतं श्रीपतिं भजे ।)

**वैद्यो धन्वन्तरिश्चायं चैद्यशापाख्यरोगहा ॥३२॥**

**चोद्यं च कृतवान् मह्यं चाद्यन्तौ हृतवान्मम ।**

(अन्वयः) अयं वैद्यः धन्वन्तरिः चैद्यशापाख्यरोगहा मम आद्यन्तौ च हृतवान् । मह्यं चोद्यं च कृतवान् ।

(व्या) **वैद्यो धन्वन्तरिः इति ॥ अयं** प्रागुक्तो धन्वन्तरिः **वैद्यः मम** चैद्यशापाख्यो यो रोगः तस्य परिहर्ता । चैद्यस्य अवरत्वेऽपि कृष्णेन गान्धारिशापपरिग्रहवत् अयं ज्ञातव्यः । अनेन तत्कालेपि गुरुराजस्यावतारः शिशुपालापकारश्च सूचितो भवति ॥३२॥ (मह्यं चोद्यं च कृतवान्) **मम आद्यन्तौ** जननमरणश्रमरूपौ **हृतवान्** परिहृतवान् ॥३३॥

**भैषज्यं कृतवान् मह्यं वैषम्यरहितः प्रभुः ॥३३॥**

**भैष्म्याः(भैष्मी) पतिप्रसादाख्यं प्रेष्यस्य स महाभिषक् ।**
**एवं ज्ञानामृतं श्रीमन् नानृतं चोच्यते मया ॥३४॥**

(अन्वयः) सः वैषम्यरहितः महाभिषक् एवं प्रेष्यस्य मह्यं भैष्म्याः पतिप्रसादाख्यं ज्ञानामृतं भैषज्यं च कृतवान् । हे श्रीमन्! अनृतं न मया उच्यते ।

(व्या) (**वैषम्यरहितः प्रभुः** योग्यताकर्मप्रयत्नानुसृत्य यमवत् न्यायकर्तुः सत्फलं अन्याय-कर्तुः असत्फलम् इति पक्षपातादिकं विना फलप्रदः स्वामी । **मह्यं** शिशुपालस्य अन्यायशापेन

यथा हानिर्न भवेत् तथा **भैषज्यं कृतवान्** ।।३३।।) कीदृशेन औषधेन रोगपरिहारं कृतवान्? इत्यत आह – **भैष्मीपतीति ।। भैष्मीपतिप्रसादाख्यं** रुग्मिणीपतिप्रसादाख्यं **भैषज्यम्** औषधं कृतवान् । 'सीतापतिप्रसादाख्यं, हयग्रीवप्रसादाख्यम्' इत्याद्यनुक्त्वा 'भैष्मीपती'ति ग्रहणेन रुक्मिण्याः तद्भर्तुश्च सन्तोषकारणं कर्मकृतमित्युक्तं भवति ।।

वैद्यः केन तुष्टः सन् भैषज्यं कृतवान्? इत्यत उक्तम् – **प्रेष्यस्येति ।।** 'भक्तस्य' इत्यनुक्त्वा 'प्रेष्यस्ये'त्युक्त्या रुग्मिण्या कृष्णं प्रति प्रेषितपत्रनेताहं (ब्राह्मणोहं) इत्युक्तं भवति । तेन तुष्टः सन् भैषज्यं कृतवान् इति भावः ।। अनेन 'अजया प्रेषितं पत्रं द्विजः कश्चिदुपाहरत्' (रु.वि.) । 'द्विजोत्तमं हरेः पदो सकाशमाश्वयोजयत्' (ता.नि.) । 'कश्चित् द्विजवरश्रेष्ठः'(भाग १०) इत्यादिना स्वेन भगवत्पादैः भगवता च सूचितया गरुडोत्तमत्वयुक्त्या युक्तिमूलकत्वमाख्यानस्य धन्वन्तरिकथाकथनेन कथितं भवति ।।३४।। (एवं ज्ञानामृतं धन्वन्तरिस्वामिनैव कृतोपदेशविवृद्धज्ञानामृतमपि औषधरूपेण योजयामास । एवं च कृष्णप्रसादः ज्ञानामृतमिति औषधद्वयं दत्तवानिति फलितम् ।)

**'नानृतं चोच्यते मया'** इत्यनेन **'न भारती मेङ्ग मृषोपलक्ष्यते'** (२/६/३३) भागवतीयचतुर्मुखवाक्यं स्मारितं भवति[१] ।।

**को मृतिं नानुयातीह मामृते तं वदस्व मे ।**
**हयग्रीवप्रसादेन शुभमेव ग्रसिष्यसि ।।३५।।**

**(अन्वयः) (हे वेदनिधे!) इह मामृते कः मृति न अनुयाति तं मे वदस्व ।**
**हयग्रीवप्रसादेन शुभं एव ग्रसिष्यसि ।**

**(व्या)** (अन्यत् ऋजुलिङ्गमप्याह – **को मृतिमिति ।।**) **को मृतिमि**त्यनेन अत्यक्त-स्थूलदेहस्य वृन्दावनप्रवेशम् उक्तो भवति । (तादृशवैभवं श्रीराघवेन्द्रस्वामिना केवलं जन्मान्तरे व्यासतीर्थरूपेण कृतऋजुयोगिसङ्गलब्धातिशयेनेति सूचितं भवति ।। (भीमसेनस्य यथा मरणम्[२]

---

(१) न भारती मेऽङ्ग मृषोपलक्ष्यते न कर्हिचिन्मे मनसो मृषागतिः ।
न मे हृषीकाणि पतंत्यसत्पथे यन्मे हृदौत्कण्ठ्यवत्ताधृतो हरिः ।। (भा २.६.३३)

(२) तद्यथा, महाभारततात्पर्यनिर्णये –

ऋणान्युन्मुच्य दोषोक्त्या स्वानां भीमस्स्वकां तनुम् ।
तत्याज परमं ध्यायन्नाप च स्थानमुत्तमम् । (३२/७०)

अन्यनिमित्तकं नास्ति, तथा गुरुराजस्यापि स्वच्छन्दमृत्योः अन्याधीनतया मरणं नास्ति । **एवम् अनृताभावः, स्वच्छन्दमृत्युता इति ऋजुलिङ्गद्वयमुक्तं भवति** ।।३४।।) **हयग्रीवेति ।। हे पुत्रेश!** वेदनिधे! मयि हयग्रीवप्रसादः ईदृशः । मत्प्रसादेन (त्वमपि शुभमेव ग्रसिष्यसि) ।।३५।।

**भवग्राहाद्भयं नास्ति शुभग्रहनिरीक्षया ।**
**मत्प्रसादेन पुत्रेश सुप्रसङ्गी भविष्यसि ।।३६।।**

(अन्वयः) हे पुत्रेश! शुभग्रहनिरीक्षया भवग्राहात् (ते) भयं नास्ति । मत्प्रसादेन सुप्रसङ्गी भविष्यसि ।

**(व्या)** (भवरूपनक्रात् ते भयं नास्ति । शुभग्रहस्य हयग्रीवस्य कृपादृष्ट्या तद्भयं नैव उत्पद्यते, उत्पन्नमपि नश्यति ।) **मत्प्रसादेन** त्वं **सुप्रसङ्गी** सन् **भविष्यसि** । ते तव सुप्रभा समीचीनप्रभा भविष्यति ।।३६।।

**कुप्रसङ्गं निराकृत्य सुप्रभा ते प्रियो भव ।**
**नित्यं वच्मि शुचिं प्राश्नं कचं गृह्य वचो मम ।।३७।।**

(अन्वयः) कुप्रसङ्गं निराकृत्य प्रियः भव । शुचिं ते कचं गृह्य नित्यं प्राश्नं मम वचः वच्मि ।

**(व्या)** तथा **कुप्रसङ्गं** कुत्सितानां वादं **निराकृत्य** मत्प्रियो भव ।।३६।। ते **कचं गृह्य मम वचः वच्मि** ।।३७।।

**विचक्षणं विचार्याहमाचार्य प्राक् चतुर्विधम् ।**
**तत्वं तत्वविदांश्रेष्ठ मत्वा तन्मतमव्ययम् ।।३८।।**

**कृत्वा कृत्वाहमत्यन्तसुखी भव शमिन् सदा ।**

(अन्वयः) हे आचार्य[१]! (तत्वविदांश्रेष्ठ!) विचक्षणं विचार्य अहं प्राक् चतुर्विधं तत्वं[२] (उक्तवान्), अव्ययं तन्मतं मत्वा (तत्तत्काले क्रियमाणानि) कृत्वा

---

(१) आचिनोति च शास्त्रार्थान् - इत्यादि प्रमाणोक्तआचार्यत्वं भाविगरुडश्रीवेदनिधिगुरूणामस्ति; तेभ्यः श्रीगुरुराजोमत्त्वम् अत्र 'आचार्ये'ति सम्बोधनेन सूचितमित्यपि ध्येयम् ।

(२) भाविसमीरश्रीगुरुराजस्य श्रीवेदनिध्यादितत्वविदां श्रेष्ठानां देवानामपि च उपदेष्टृत्वं तु –

**कृत्वा हे शमिन् सदा अत्यन्तसुखी भव ।**

**(व्या) विचक्षणं** कश्चित्पुरुषमुद्दिश्य चतुर्विधं तत्वं हयवदनरामकृष्णवेदव्यासात्मकं तत्वम् । 'चतुर्णामपि विश्वासे स्वर्णलाभं यथा तथे'त्युक्तेः(६/५४) पुरुषैः उपास्यं प्राक् पूर्वं 'हयग्रीवं चिदानन्दविग्रहं' इत्यादौ । तन्मतं विचक्षणस्य उक्तचतुर्विधतत्वाभिज्ञस्य मतं मनसि **कृत्वा** सुखीभव ।।३८।।

**(अव)** हयवदनधन्वन्तरिभ्याम् उपदेशमुक्त्वा व्यासनारायणाभ्यां उपदिष्टत्वमाह – **वसामीति ।।**

**वसामि नित्यं श्रीशस्य सभायां सारवत्तया ।।३९।।**

**व्यासात् पाराशरात् सारतत्वानि स्मारितोभवम् ।**

**(अन्वयः) श्रीशस्य सभायां नित्यं वसामि । पाराशरात् व्यासात् सारवत्तया सार-तत्वानि स्मारितः अभवम् ।**

**(व्या)** (**नित्यं** प्रतिदिनम् । **श्रीशस्य सभायां वसामि** ।।३९।। पाराशरपुत्रात् **व्यासात् सारवत्तया सारतत्वानि स्मारितः अभवम्** । इत्यनेन श्रवणेन नूतनज्ञानालाभेऽपि 'श्रोतव्यं धर्मकारणं' इति पुण्यवृद्ध्यर्थं, दाढर्यस्पष्टत्वादिवृद्ध्यर्थं, भक्तिवृद्ध्यर्थं च श्रवणं लातव्यवायुभ्यां क्रियते इति भावः ।।३९।।)

**बदरीपुरवासे तु मदिरापानतः सुत ।।४०।।**

**कदरीकृतचारित्रान् विददार हरिः स्वयम् । ।।४०।।**

**(अन्वयः) हे सुत बदरीपुरवासे तु मदिरापानतः कदरीकृतचारित्रान् हरिः स्वयं विददार ।**

**(व्या)** बदरिकाश्रमवाससमये मदिरापानतः (सुप्रसिद्धमदिरापानतः)–

**'सुरा हरेर्गुणाः प्रोक्ताः ते मे स्युरिति चिन्तनम् ।**
**सुरापानमिति प्रोक्तं तन्न कुर्यात् कदाचन ।।' – इत्युक्तदिशा ।** (भाग.ता.११.२१.४२)

---

**गुह्यादेशा ब्रह्मपदे ये योग्या ब्रह्मणा सह ।**
**सर्वगुह्योपदेष्टारः सर्वेषां गुरवो हि ते ।**'इति श्रीमदाचार्यैः छान्दोग्यभाष्ये उदाहृतप्रमाणानुसारेण ध्येयम् ।

मदिरापानतः जीवैक्यानुसन्धानरूपतः कदरीकृतं विष्णुचारित्रान् (दैत्यान्) हरिः स्वयं विददार इत्यनेन व्यासापकारिणां स एव निग्रहं करोतीति सूचितं भवति ।।४०भ।।

**नरनारायणात्पुण्यं शृणोमि मुनिमण्डले ।।४१।।**

**स्मरणात् सर्वपापघ्नात् करणं मुक्तिपद्धतेः ।**

(अन्वयः) मुनिमण्डले स्मरणात् सर्वपापघ्नात् नरनारायणात् मुक्तिपद्धतेः करणं पुण्यं शृणोमि ।

(व्या) नरनारायणादिति ।। नारायणात् श्रुणोमि । स्वप्रदत्तशुद्धशिलास्थितबादरायण-पूजनप्रकारं शृणोमीति भावः । स्मरणादिति ।।४१।। (स्मरणमात्रेण सर्वपापपरिहारकात् नरनारायणात् = नरऋषेः अनुग्राहकनारायणात् । अव्ययनारायणात् । भरतखण्डस्थसाधकनराणां पापपरिहारकात् नारायणादिति वा । मुक्तिपद्धतेः करणं पुण्यं शृणोमि । इतरेषां मुक्ति-कारणीभूतअपरोक्षज्ञानजनकम् । मम तु केवलपुण्यसाधनं इति भावः ।। मोक्षहेतुभूतज्ञानजनकं बहुपुण्यसाधनं ब्रह्मसूत्रभारतादिकम् उपदेशविशेषं वा शृणोमि इत्यर्थः ।।४१।।)

**व्यासोपि दासाय विशालबुद्धे शशास मह्यं जगदीशदास्यम् ।**
**सदा हयास्यं समुपास्य श्रीशं सेशं सशेषं जगदास दासम् ।।४२।।**

(अन्वयः) विशालबुद्धे! दासाय मह्यं व्यासः जगदीशदास्यम् अपि शशास । 'सदा श्रीशं हयास्यं समुपास्य' (अस्मि) (तेन) सेशं सशेषं जगत् दासं आस ।

(व्या) व्यासोपि इति ।। व्यासोपि ।। वेद । मह्यं जगदीशस्य कृष्णस्य दास्यं 'कश्चिद् द्विजवरश्रेष्ठ' इति भागवते शशास उक्तवान् । तेन सशेषं जगत् मम दासमास ।।४२।।

(व्या) पुनरप्युपदेशप्रकारमाह – विरिञ्चिपूर्वमिति ।।

**विरिञ्च(चि)पूर्वं कविरञ्जितं हरिं स्वरञ्चितं मौनिजनैरथाञ्चितम् ।**
**स्मरं जय त्वं स्मर मार खं जनिं यद्रञ्जितं त्वद्धृदयं निरञ्जनम् ।।४३।।**

(अन्वयः) विरिञ्चपूर्वं कविरञ्जितं स्वरञ्चितं मौनिजनैः अञ्चितं मार खं जनिं हरिं त्वं स्मर. यत् त्वत् हृदयं निरञ्जनं. स्मरं जय.

**(व्या) विरिञ्चिपूर्वं** ब्रह्मणः पितरम्, **कविरञ्जितं** कवयः ज्ञानिनः रञ्जिताः येन सः तम्, (ज्ञानिनामानन्दप्रदं), **स्वरञ्चितं** = स्वः स्वर्गादौ अञ्चितं पूजितम्, (अथ) **मौनिजनैः** यतिजनैः अञ्चितं पूजितम्, । **मार खं जनिं** = मारस्य प्रद्युम्नत्वेनावतीर्णस्य मन्मथस्य । **खं जनिं** सुखजनकं । खं जनिं खानि इन्द्रियाणि जनयतीति तस्य इन्द्रियाणां जनकं परमात्मानं **स्मर** । यत् यस्मात् कारणात् **त्वद्धृदयं निरञ्जनं** दोषरहितं ।।

**इति मामुक्तवान् व्यासो दासं भासुरविग्रहः ।**
**मन्दहासान्वितो नित्यं इन्दिरेशोऽपि मां तदा ।।४४।।**

**(अन्वयः) भासुरविग्रहः नित्यं मन्दहासान्वितः इन्दिरेशः व्यासः अपि तदा दासं मां (प्रति) उक्तवान् ।**

**(व्या) इति मां प्रागुक्तवान्** इति गुरुराजवचनम् । (तदा **दासं** मां प्रति **नित्यं मन्दहासान्वितः** इन्दिरेशः **व्यासः उक्तवान्**) ।।४४।। इति वेदनिधिप्रकरणं समाप्तम् ।।

### २. विप्रप्रकरणम्।। श्लोकाः (४५-८१)

**(व्या) 'सुषिरोक्तिभिः'** इत्यारभ्य **'वशेकरं सर्वमहेश्वरं स्मर'** (८१) इत्यन्तं विप्रश्रोतृकं द्वितीयं प्रकरणम् ।

पूर्वप्रकरणे हयग्रीवधन्वन्तरिकथाकथनेन श्रुतियुक्तिमूलकत्वं सूचयित्वा, आप्तिमूलत्वोपपादकं स्वोपदेष्टुः हयग्रीवादिरूपिणः वक्तुः आनुकूल्यम्, स्वस्यानुकूल्यं च प्रतिपादितम् । अत्र स्वमुखतः श्रोतुः विप्रस्य गीर्वाणादीनां च श्रोतृणाम् आनुकूल्यं च सूचयितुं विप्रगीर्वाण्याद्यनुग्राहकत्वरूपं भाक्तवैभवम् । भगवत्प्रदत्तगीर्वाणादिगुरुत्वरूपं भागवतवैभवं चोच्यते । 'भाषन्ते शेषशायी च दोषीति सुषिरोक्तिभिः'(७/३०) इत्यत्रोक्तं सुषिरोक्तिभिः इति पदं विहाय तत्स्थाने 'कषणोक्तितः' इति पदं विप्रेण प्रक्षिप्तम् । तत्समीकरणार्थं परदिने स्वप्ने ब्राह्मणं बोधयति – **सुषिरोक्तिभिरित्यादिना ।।**

**सुषिरोक्तिभिरित्युक्ते कषणोक्तित इत्यहो ।**
**भाषसे भेषजं किं ते जिह्वाया अपि तद्वद ।।४५।।**

**(अन्वयः) मया 'सुषिरोक्तिभिः' इत्युक्ते 'कषणोक्तितः' इति भाषसे । अहो! किं ते तव जिह्वाया अपि भेषजं तद्वद ।**

(व्या) **सुषिरोक्तिभिः** । मया **सुषिरोक्तिभि**रित्युक्ते त्वं **कषणोक्तित** इति भाषसे । **ते जिह्वायाः भेषजं** औषधं **किं** वर्तते । **तद्वद** ।।४५।।

श्रीहरिकथाश्रवणमेव भेषजम्

**वातपित्तादिदोषाणां मेळने सति कालतः ।**
**बालकान् सति मित्रादीन् प्रति कालयते यथा ।।४६।।**

**तथा वदस्यन्यथा त्वं कथां वक्ष्ये हरेरथो ।**
**तत्कथा मत्कथायुक्ता सर्वथा मा वृथा भवेत् ।।४७।।**

(अन्वयः) कालतः वातपित्तादिदोषाणां मेलने सति यथा सति मित्रादीन् बालकान् प्रति कालयते तथा त्वम् अन्यथा वदसि । अथ हरेः कथां वक्ष्ये । मत्कथायुक्ता तत् कथा सर्वथा वृथा मा भवेत् ।

(व्या) यथा **वातपित्तादिदोषाणां मेलने सति** स्वकीयान् **बालकान्** सतीपुत्रादीन् प्रति **कालयते** । अन्यम् अन्यात्मना व्यवहरति । **तथा** त्वमपि मयोक्तं विहाय **अन्यथा** भाषसे ।।४६।।

**सैव ते भेषजं भाषाः प्रेरयिष्यति नान्यथा ।**
**निर्दोषाणां मृषा वाणी न भविष्यति सर्वथा ।**

**तस्माद्वक्ष्ये कथां तथ्यां प्रथितान्वयसम्भव ।।४८।।**

(अन्वयः) स एव ते भेषजम् । भाषाः अन्यथा न प्रेरयिष्यति । निर्दोषाणां वाणी सर्वथा न मृषा भविष्यति । तस्मात् हे प्रथितान्वयसम्भव! तथ्यां कथां वक्ष्ये ।

(व्या) तत्परिहारिकां औषधसदृशीं **कथां वक्ष्ये** । कस्य हरेः ।।४६।। **सैव** हरिकथैव **ते भेषजम्** औषधम् । अन्यथाभाषणादिरूपरोगं परिहृत्य सुभाषाः प्रेरयिष्यामि । तस्माद्धरेः **कथां वक्ष्ये** । **हे प्रथितान्वयसम्भव!** सिद्धकुलोत्पन्न! 'निर्दोषाणां वाणी मृषा न भविष्यति' इत्युक्त्या 'भविष्यत्कार्यसिद्धिकां भगवत्कथां वक्ष्ये' इत्युक्तं भवति ।।४८।।

**तिथौ तिथौ मा कृथास्त्वं व्यथां तात वृथा वृथा ।**
**तथा तथा भवत्येव हरिः कर्ता यथा यथा ।।४९।।**

**(अन्वयः) हे तात! तिथौ तिथौ वृथा वृथा त्वं व्यथां मा कृथाः, यथा यथा हरिः कर्ता तथा तथा भवति एव ।**

**(व्या)** 'तदनुसन्धानसमये उक्तकार्याणाम् अतिक्षिप्रम् अनुपलम्भेन यथा भाविनी तादृशी व्यथा न कर्तव्या' इत्याह – **तिथौ इति ।। तिथौ तिथौ** प्रतिदिने वृथा **व्यथां** मा कुरु । **हरिर्यथा यथा कर्ता तथा तथा भवत्येव** ।।४९।।

**हरेराज्ञां पुरस्कृत्य स विधिर्वर्तते विधौ ।**
**हरश्च हरते सर्वं स्वयं चास्य स्थितौ तथा ।।५०।।**

**(अन्वयः) हरेः आज्ञां पुरस्कृत्य तथा सः विधिः विधौ वर्तते । सर्वं हरः हरते च । स्थितौ च अस्य स्वयम् ।**

**(व्या)** (हरेराज्ञा परमादरेण चतुर्मुखेन परिपाल्यते सृष्टिकार्ये, हरेराज्ञा परमादरेण अनुस्रियते संहारकार्ये शिवेन स्वयं हरिरपि स्वेन कृत महासङ्कल्पानुसारेण पालनव्यापारं करोति । तस्मात् क्वचित् मानुषभक्तस्य यत्नः निष्फलं भवति । क्वचिद्विपरीतफलकं भवति । क्वचित् न्यूनफलकं भवति । क्वचिदपेक्षातिरेकेण अतिशयितफलकं भवति । क्वचिद्दुःखमिश्रितसुखजनकं भवेत् । क्वचिद्विळम्बेन अकाले वा रूपान्तरेण वा फलति । 'अहं भक्तः हरिः एवं मां अवजानाति' इति व्यथां न कुरु । 'न मे भक्तः प्रणश्यति' इति महासङ्कल्पानुपरोधेन अवान्तर अनिष्टफलानि भक्तानामपि देवदेवो साक्षाद्वा परम्परया वा ददात्येव । तदा 'एतत्सुखं वा दुःखं वा लाभो वा अलाभो वा महाहानिर्वा । तत्सर्वं मम हितायैव हरिणा दीयते' इति मत्वा क्षमाशीलो भव । न हरये क्रुध्यस्व इति भावः । सुखदुःखे समे कृत्वा सन्तुष्टमनसा तपः कुर्वतः ज्ञानसिद्धिर्भवतीत्यर्थः[१] ।।५०।।)

**गर्वं हित्वा तु गुर्वर्थं गीर्वाणाः सर्व एव च ।**
**गन्धर्वा अपि गान्धर्वशौण्डाः पण्डितमानिनः ।।५१।।**

---

(१) जलजनाभन मूर्ति मनदलि नेलेगोळिसि निश्चलभकुतियलि
चळि बिसिलु मळे गाळिगळ निन्दिसदे नित्यदलि ।
नेलदोळिह गन्धवे सुगन्धवु जलवे रस रूपवे सुदीपवु
एलरु चामर शब्द वाद्य गळर्पिसलु ओलिव ।।– (हरिकथामृतसार विभूतिसन्धि १३)

**हरिं ययुर्मुरारिं तच्चरणं परमादरात् ।**
**सुरास्ते किङ्करवराः शरणं प्रापुरञ्जसा ॥५२॥**
**करदा वरदायाथ स्मरदाश्रयदाय च ।**

(अन्वयः) (एकदा) सर्व गीर्वाणाः एव गान्धर्वशौण्डाः पण्डितमानिनः गन्धर्वा अपि गुर्वर्थं हरिं(प्रति) ययुः, अथ वरदाय स्मरदाश्रयदाय च मुरारिं ते किङ्करवराः सुराः करदा (सन्तः) परमादरात् अञ्जसा तच्चरणं शरणं प्रापुः ।

**(व्या) गर्वमिति ॥** प्रतिज्ञातां (७/४७श्लोके) कथामाह – **गर्वमिति ॥ सर्वे गीर्वाणाः** रुद्रादयो देवाः । (एकदा) **गर्वं हित्वा, गुर्वर्थं** = स्वापेक्षया अधिकगुरुलाभार्थं **हरिं** प्रति **ययुः** । न केवलं गीर्वाणाः किन्तु **गन्धर्वा अपि** ययुः । तदा गन्धर्वाः (गान्धर्वविद्यापारङ्गताः) पण्डितमानिनो जाताः ॥५१॥ तेषां तेन प्रसक्तां मनीषां (अनिष्टं च) परिहर्तुं ते सुराः अञ्जसा (**मुरारिं हरिं** तच्चरणं) **शरणं प्रापुः** । तेन किङ्करवरा अपि (गन्धर्वा अपि) देवैर्बोधितः सन्तः स्वेषां प्रसक्तानिष्टपरिहारार्थं **अञ्जसा** (हरिं) **शरणं प्रापुः** ॥५२॥ कथंभूताः सन्तः? **वरदा** वरप्रदाय **स्मरदाश्रयदाय** भक्त्या स्मरताम् आश्रयप्रदाय हरये **करदाः** सन्तः समर्पणीय समर्पकाः सन्तः शरणं प्रापुरित्यन्वयः ॥५२॥

**परदारपरान् देव विदारय क्रुधा रिपून् ॥५३॥**

(अन्वयः) हे देव परदारान् रिपून् क्रुधा विदारय ।

**(व्या)** तत्कृतप्रार्थनाप्रकारमाह – **परदारेति ॥** हे देव! **परदारपरान्** परेषां ब्रह्मादीनां दाराः भार्याः तत्पराः तदभेदानुसन्धानेन भोगानुसन्धानेन उत्तमस्त्रीकामाः । तान् रिपून् । तद्बोधनेन बहूनाम् इतरेषाम् अन्धन्तमःप्राप्तिकारणभूतअपरमार्गप्रदर्शकत्वेन[१] रिपून् तान् विदारय विदारय । 'दह दह नरसिंह' इत्यादिवत् ॥५३॥

**विदारयासिधारया सुधारसमुदा(दी)रय ।**
**उदार सादरं धरां पदारविन्दजां भर ॥५४॥**

(अन्वयः) हे उदार असिधारया विदारय, सुधारसं उदीरय, धरां सादरं पदारविन्दजां

---

(१) महतां वनिताकामः पतत्यन्धेतमस्यलम् ।
अन्यत्र निरयं याति दुःखवान् स्याद्विपर्ययः ॥

भर.

(व्या) विदारयेति ।। विदारणं च कया? असिधारया = 'स आत्मा अतत्वमसि' (न चाधिकारिकमपि पतनानुमानात् तदयोगात् ओं न देवपदमन्विच्छेत् ३/४/४१) इत्यादिरूपया असिधारया । हे उदार! 'सोऽश्नुते सर्वान् कामान्' इत्यादि श्रुत्या सर्वाभीष्टप्रद! सुधारसं न्यायसुधारसं (भाष्य,न्यायामृत,युक्तिमल्लिकारसं च) उदीरय = अस्माकं प्रापय । सादरं यथा भवति तथा । पदारविन्दजां = (पादकमलाभिषेकजात)तीर्थरूपां धारां भर पूरय ।।५४।।

### जगन्मिथ्यात्ववादी विदार्य एव

(अव) 'परदारपरान् विदारय' इत्युक्तम्; तत्किमर्थं तेषां विदारणम्? इत्यतः विदारण-प्रयोजकदोषानाहुः – इत्यूचुरिति ।।

**इत्यूचुः सोऽचिरं वाक्यं श्रुत्युक्तं प्राक्तनं च ते ।**
**यौक्तिकं शौक्तिरूप्यत्वं मतं चातात्विकं जगुः ।।५५।।**

**इति सम्प्रार्थितस्तस्य भक्त्याकृत्रिमया सुत ।**
**कृत्यं तत्कृतवानत्र चित्रं हरिकृतं बत ।।५६।।**

**(अन्वयः) ते (दैत्याः परदाराः) प्राक्तनं वाक्यम् अचिरं श्रुत्युक्तम् अतात्विकं शौक्तिरूप्यत्वं यौक्तिकं मतं च जगुः इति ऊचुः । हे सुत! तस्य अकृत्रिमया भक्त्या सम्प्रार्थितः सः अत्र कृत्यं कृतवान्, तत् हरिकृतं कृत्यं चित्रम्, बत.**

(व्या) ते परदारपराः, इति वक्ष्यमाणप्रकारेण ऊचुः । 'सोचिरम्' इत्यत्र सः अचिरं इति पदच्छेदः । वाक्यं वेदवाक्यम् अविद्याकल्पितत्वेन (अचिरं) अस्थिरमित्यूचुः । अतात्विकम् अवास्तवम् । यौक्तिकं 'विश्वं मिथ्या दृश्यत्वात्' इत्यादि कुयुक्तिप्राप्तम् । शौक्तिरूप्यत्वं मतम् । शुक्तिरूप्यवत् जगतः मिथ्यात्वबोधकं मतम् । श्रुत्युक्तं प्राक्तनं चेति जगतुः । तस्मात् तेषां विदारणं कार्यमिति भावः । अत्रत्य 'सः' इति पदम् उत्तरत्रान्वेति ।

### श्रीहरिणा क्लृप्तगुरुराजगुरुत्वे गन्धर्वाणां कृतअवज्ञाप्राप्तफलः; तैः कृतअकृत्रिमभक्त्या प्रीतः श्रीहरिणा कृतदोषपरिहारः, कार्यत्रयं च

इतीति ।। सः (सोचिरमित्यत्र पूर्वश्लोकोक्त) भगवान्, इति पूर्वोक्तप्रकारेण देवैः गन्धर्वैश्च गन्धर्वगणेषु यः श्रेष्ठः तस्य अकृत्रिमभक्त्या च सम्प्रार्थितः सन् । (हे सुत!) तत्कृत्यं – १.

दुर्वादिविदारणं २. न्यायसुधारसप्रदानं ३. पादोदकप्रदानरूपं कार्यत्रयं (सः = आ हरियु) कृतवान् ।।५६।। अत्रायं भावः । देवाः सद्गुरुप्राप्त्यर्थं गन्धर्वैः सहिताः सन्तः हरिं प्रापुः । तैः प्रार्थितेन हरिणा अहं गुरुत्वेन क्लृप्तः । मय्यज्ञातमाहात्म्याः गन्धर्वाः तदा पण्डितमानिनो जाताः । तेनापराधेन तेषां १. दुष्कुले जन्म २. असद्गुरुप्राप्तिः ३. दुःशास्त्रजन्यज्ञानं च प्रसक्तम् । तद्बुद्ध्वा देवाः पुनः गन्धर्वहितार्थं शरणं प्रापुः । गन्धर्वाः स्वहितार्थं शरणं प्रापुः । तेषु गन्धर्वेषु कश्चित् प्रमुखः सोप्यकृतिमया भक्त्या शरणं प्राप । तेन तुष्टो हरिः तैः प्रार्थितं कृत्यं कृतवान् इति भावः ।।५६।।

**(अव)** स्वापराधेन प्राप्तव्यजन्मनां गन्धर्वाणां पुनरनुग्रहेण भूलोकजननेपि वंशपारम्पर्येण तेषां राजत्वं स्वभक्तत्वं च स्वप्रदत्तमिति भावेनाह – पारम्पर्येणेति ।।

**पारम्पर्येण राजत्वं तदीयानां मदीरितम् ।**
**अतश्चिरेति धैर्यार्थं पूर्वं मे वागुदीरिता ।।५७।।**

**(अन्वयः) हे मुनीशान! तदीयानां पारम्पर्येण राजत्वं मदीरितम्; अतः पूर्वं धैर्यार्थं चिर इति वाक् उदीरिता.**

**(व्या)** हे मुनीशान! यतिवर्य! मे वाक् चिरेति स्थिरेति (= मिथ्या न भवति इत्यर्थः) तव धैर्यार्थं पूर्वं (४८ने) श्लोके 'निर्दोषाणां मृषा वाणी न भविष्यति सर्वथा' इति वाक् उदीरिता ।।५७।।

**तत्वज्ञानां मुनीशान शासनं न विनाप्यनु ।**
**शनैर्मद्वचनं जानन् धीमन् मद्वचनं शृणु ।।५८।।**

**(अन्वयः) तत्वज्ञानां शासनं अनु विनापि न (फलिष्यति); हे धीमन्! मद्वचनं शनैः जानन् मद्वचनं शृणु.**

**(व्या)** तत्वज्ञानां शासनम् । (अपरोक्षज्ञानिनाम् आज्ञाम्) न विना अपरित्यागेन । (अप्यनु किन्तु अनुसृत्यैव वर्तस्व, ज्ञानिनां शापवरादिकं फलिष्यत्येवेति सुदृढं मत्वा तेषाम् आज्ञां पालय ।।) शनैः मन्दं मन्दं मद्वचनं जानन् सन् । मद्वचनं शृणु । (हे धीमन्!) अनेन युगपत्(=एककाले इत्यर्थः) शाब्दबोधो न जायते । तस्मात् क्रमेण श्रवणं कार्यमिति भावः ।।५८।।

### अगर्वितः एव श्रीगुरुराजाज्ञापालनम् कर्तव्यम्

**अहं पूर्वेपि सर्वज्ञो गुर्वाज्ञां त्वमगर्वितः ।**
**शिरसा धारय प्रार्थ्यामीश्वरज्ञोतिशीघ्रतः ॥५९॥**

(अन्वयः) पूर्वेपि अहं सर्वज्ञः । प्रार्थ्यां गुर्वाज्ञाम् अगर्वितः (सन्) शिरसा धारय । अतिशीघ्रतः ईश्वरज्ञः (भविष्यसि) ।

**(व्या) अहमिति ।।** यथा तव तत्वज्ञानं क्रमभावि तथा नैवं ममेत्याह **अहमिति ।। पूर्वेपि** प्रागेव **अहं सर्वज्ञः** । त्वं तु **अगर्वितः** सन् **प्रार्थ्यां गुर्वाज्ञां शिरसा धारय** । तेन शीघ्रं **ईश्वरज्ञो** भविष्यसि । 'प्रागुक्तम् इदानीम् उपलब्धम् । गन्धर्वाणां गुरुप्रसादेन पारम्पर्येण राजत्वम्' इत्यनुसन्धानकाले ईश्वरज्ञो भविष्यसि । एवमीश्वरस्य महिमा वर्तते इति जानासि ।।५९।।

**(अव)** 'परदारापरान्' इति प्रागुक्तमनूद्य तात्पर्यमाह – **परदारेति ।।** परेषां दाराः इति स्पष्टम् । अतिशयार्थद्योतनाय पुनरत्र तात्पर्यकथनम् ।

**परदारेति पूर्वोक्ताः गरदाः स्वपतौ च याः ।**
**विददार हरिः सर्वा असिधाराभिरेव ताः ॥६०॥**

**तत्परं स हरिः स्वैरं गरखड्गान्न्यकृन्तत ।**

(अन्वयः) 'परदाराः' इति पूर्वोक्ताः याः स्वपतौ गरदाः च ताः सर्वा असिधाराभिरेव हरिः विददार. सः हरिः तत्परं गरखड्गात् न्यकृंतत.

**(व्या)** स्वपतौ याः गरदाः ताः परदारेति पूर्वोक्ताः **परदारेति** पदेन कथं गरदा इत्यर्थ लाभः? इति चेत्, परे भर्तृभिन्नाः, तद्भोग्याः **परदाराः** । ताः स्वपतौ परभुक्तशरीरभोगरूपम् अपवादरूपं वशीकरणानुकूलं दुष्टम् औषधरूपं गरं च ददतीति **गरदाः** ।। ताः (= अवरन्तु) **असिदाराभिः हरिः विददार** ।।६०।। **तत्परमिति ।।** तत्परं जनं च गरखड्गात् **न्यकृन्तत** = चिच्छेद । दुर्भाष्यादिरूपा वाचः दाराः, तत्पालकाः स्वपतयः तेषां विपरीतज्ञानरूपं गरं ददतीति गरदाः । ताः असिदाराभिः= अतत्वमस्यादिरूपाभिः **न्यकृंतत** । चिच्छेद । छेदनं च निराकरणम् । **तत्परं** सामान्यजनं च गरखड्गात् । शत्रुनिग्रहोपयुक्तउपक्रमादितात्पर्यलिङ्गरूपगरसहितखड्गात् अतत्त्वमस्यादिरूपात् न्यकृंतत ।।६०।।

### 'वरदाय' इत्यनेन सूचितभविष्यत्कथनम्

(व्या) 'वरदाय' इत्यस्य (पूर्वं ५२श्लोके उक्तस्य) तात्पर्यमाह – वरद इति ।।

**वरदः परदेशस्थे स्मरदाश्रयदः स्वयम् ।।६१।।**
**रामो राजीवनेत्रोऽसौ रावणावरजे यथा ।**
**करदा वरदायाथ स्मरदाश्रयदाय च ।।६२।।**
**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।**

(अन्वयः) राजीवनेत्रः स्मरदाश्रयदः असौ रामः स्वयं यथा रावणावरजे (तथा) परदेशस्थे वरदः. हे बुद्धिमन्! 'करदा वरदायाथ स्मरदाश्रयदाय च' इति मया पूर्वं (यत्) प्रोक्तं (तत्) अनुसन्धत्स्व ।

(व्या) असौ **रामः** वृन्दावने सन्निहितो रामः स्वभक्ते भूपे **परदेशस्थे** देशान्तरगतेपि, **स्वयं** (रामः) **स्मरदाश्रयः** = स्मरतः तस्य आश्रयं राज्यादिरूपं ददातीति तथोक्तः ।।६१।। तत्र दृष्टान्तमाह – **रावणावरजे यथा इति** ।। यथा लवणोदकावृते देशे विद्यमाने स्वभक्तनृपे वृन्दावनसन्निहितो रामः पूर्वनृपे विरोधिनि हते सति राज्यप्रद इति भावः ।। 'करदा वरदायाथ स्मरदाश्रयदाय च' इति यत्पूर्वमुक्तं(७/५३) तस्येदं तात्पर्यमित्यनुसन्धत्स्व ।।६२।।

(अव) प्रतिबन्धकबाहुल्येपि अस्मदभिमतं कार्यं (दूरस्थराज्ञः राज्यदानं राजधानीस्थ राज्ञः मरणदानम् । एडमूकविप्रस्य गुरुसार्वभौमत्वदानं, निन्दककमलनाभस्य श्वानजन्मादिदानं इत्यादिकं) भविष्यत्येवेति निश्चयमुत्पादयितुमाह – **वादिराजेति** ।।

**वादिराजाग्रतः क्षुद्रराजकार्यं कुतः सुत ।।६३।।**
**वादीभमृगराजोऽहं वादिराजो हरिं भजे ।**
**इत्यपि स्वोक्तमेवात्र ह्यनुसन्धेयमन्वहम् ।।६४।।**

(अन्वयः) हे सुत! क्षुद्रराजकार्यं वादिराजाग्रतः कुतः? 'वादीभमृगराजोहं वादिराजो हरिं भजे' इत्यपि स्वोक्तमेव अत्र अन्वहं हि अनुसन्धेयम् ।

(व्या) 'क्षुद्रराजकार्येण[१] भक्तकार्यप्रतिबन्धे प्रतीतेपि न चिन्ता कार्या । मदनुग्रहेण

---

(१) अत्र 'क्षुद्रराजकार्यं' इति प्रयोगेण राजकार्यमपि अल्पत्वेन द्रष्टव्यम् इति सूचितं भवति । तद्यथा – (**अल्पानीति क्षुद्रशब्दार्थः** – वाक्यार्थविवरणे ब्र.सू.भा. ३/१/१८)

कार्यसिद्धिर्भवति' इति भावः ।।६३।। (दुर्वादिनामकइभानां मृगराजत्वात् **वादिराज**नामकः **अहं** सदा **हरिं भजे** । अनेन सदा वादेन हरिभजनेन राजते इति । वादिराजः एव वादिराजः । वादवतां मध्ये राजा वादिराजः । इत्यपि अर्थः उक्तो भवति । एतदपि 'यो मां एवं ऋजुस्थम्' इत्यादिना(३/७) पूर्वं सूचितम् । सर्वज्ञत्वनामकवादिराजपदार्थानुसन्धानेन दुष्टराजापि जितो भवति ।।६४।।)

**इति सर्वज्ञतां शान्त स्वान्तस्थं कुरु चान्तकम् ।**
**मां तातं सन्ततं त्वं च चिन्तयित्वा निकृंतय ।।६५।।**

**(अन्वयः) हे शान्त! इति सर्वज्ञतां स्वान्तस्थं कुरु । तातं मां त्वं सन्ततं चिन्तयित्वा च अन्तकं निकृन्तय ।**

**(व्या) इति** पूर्वोक्तप्रकारेण मम **सर्वज्ञतां** चिन्तयित्वा मां **स्वान्तस्थं** कुरु; अन्तकं **निकृन्तय** ।।६५।।

**तस्यापि स्वोक्तदार्ढ्यार्थं स्वप्ने वक्ति रघूत्तमः ।**
**कात्र शङ्कापि ते मास्तु शास्त्रज्ञ मम सत्कृतौ ।।६६।।**

**(अन्वयः) स्वोक्तदार्ढ्यार्थं तस्यापि स्वप्ने रघूत्तमः वक्ति । हे शास्त्रज्ञ! अत्र मम सत्कृतौ ते कापि शङ्का मास्तु ।**

**(व्या) तस्य** भूपस्य **स्वोक्तदार्ढ्यार्थं स्वप्ने रघूत्तमो वक्ति** । तेन स विभीषणवत् दृढचित्तो भवति । तस्मादत्र शङ्का मास्तु इत्याह – **कात्र शङ्कापि इति** ।।६६।। (वेदतुल्यफलके आप्तिमूलके मम निर्दिष्टआख्याने कापि शङ्का ते मास्तु । मध्वशास्त्रे विद्यमाने सति इयं कृतिः निष्फला इति वा, अत्रोक्तं न फलिष्यति इति वा, अर्जुनस्य गीतेव विप्रायोक्ता इयं कृतिः न सर्वभक्तोपयोगिनी इति वा, इयं ज्ञातुमशक्यार्थका इति वा, व्याकरणादिदोषसहितेति वा शङ्का न कार्या इति भावः ।।६६।।) (शास्त्रज्ञ एम्बुदरिन्द इल्लि बरुव एल्ला तर्कमूलविकल्पगळू कूड माडबारदु एम्ब अभिप्राय सूचित) (**सत्कृतौ** इत्यनेन सन्नामकवायुसम्बन्धित्वम्; मध्व-शास्त्रान्तर्गतत्वमपि ध्येयम्) (स्वप्ने रघूत्तमः वक्ति इत्यनेन स्वप्नप्रामाण्यमपि निर्दिष्टम्)

**'उदार सादरं धरां पदारविन्दजां भर ।**
**हृदादरान्मदीरितं हृदि स्थितं सदा कुरु' ।।६७।।**

**इत्यहं प्रार्थयाम्यद्धा बुद्धिसिद्धेश्वरं हरिम् ।**
**प्रवृद्धज्ञानसंशुद्ध समिद्धाग्निरिव ज्वलन् ॥६८॥**

(अन्वयः) प्रवृद्धज्ञानसंशुद्ध समिद्धाग्निरिव ज्वलन् अहं बुद्धिसिद्धेश्वरं हरिं 'हे उदार! सादरं पदारविन्दजां धरां भर. हृदा आदरात् मदीरितं सदा हृदि स्थितं कुरु' इति अद्धा प्रार्थयामि.

(व्या) उदारेति ॥ हे उदार! पादारविन्दजां 'पद्भ्यां भूमिः' इति श्रुत्या पादारविन्दजां धरां भक्त(राज्ञः)भूमिं भर । दुष्टनृपं संहृत्य भक्ताय दत्वा पालय इति हृदा मनसा आदरात् मदीरितं मदुक्तं हृदिस्थितं सदा कुरु । (तव) चित्तगतत्वेन कुरु ॥६७॥ इति बुद्धिसिद्धेश्वरं बुद्ध्या सद्बुद्ध्या सिद्धानां गन्धर्वाणाम् ईश्वरं हरिं प्रार्थयामि । प्रवृद्धज्ञानसंसिद्धेति संबोधनम् ॥६८॥ (समिद्धाग्निरिव ज्वलन् अहं एन्दु गुरुराजरिगे विशेषणवागुत्ते. यद्यपि 'उदारसादरं' इत्यादि वाक्यं ७/५४ श्लोके गन्धर्वैः तेषां शापप्राप्तिकाले प्रोक्तम् । इदानीं (७/६७) गन्धर्वस्य भूमौ अवतारकाले तद्विपत्परिहारार्थं तद्वाक्यमेव अर्थांतरेण प्रयोज्य गुरुराजः हरिं प्रार्थितवानिति गुरुराजस्य अद्भुतपूर्ववृत्तान्तज्ञता कृतज्ञता करुणा च प्रदर्शिता इति ज्ञातव्यम् ॥६८॥)

**अतस्तदीरितं वाक्यमैहिकामुष्मिकं च यत् ।**
**तत्स्वीकुरु गुरूक्तं चेत्यतो भवति ते शुभम् ॥६९॥**

(अन्वयः) अतः तत् ऐहिकामुष्मिकं च यत् वाक्यम् ईरितं तत् गुरूक्तं च इति स्वीकुरु, अतः ते शुभं भवति ।

(व्या) **अतः तदीरितं** तस्मिन् विषये ईरितं वाक्यं भगवन्महिमाप्रतिपादकरूपं वाक्यम् । ते **ऐहिकामुष्मिकं च** यद्वाक्यम् । तदपि **गुरूक्तं** स्वीकुरु ॥ (गुरूक्तमिति विश्वासेन स्वीकुरु ।) अन्तः स्वीकारात् ते तव **शुभं** भविष्यति ॥६९॥ ('गन्धर्वविषये यानि वाक्यानि मया उक्तानि, तव विषये यानि वाक्यानि उक्तानि, तानि सर्वाणि प्रमाणभूतानि फलसूचकानि' इति विश्वासं कुरु इति भावः ॥६९॥).

(व्या) एवं गन्धर्वभूपवृत्तान्तमुक्त्वा शेषसम्बन्धिभूपकार्यम् अविश्वासकाले नोपलब्धमिति न चिन्तनीयमित्याह – **तथैवेति** ॥

**तथैव शेषमुद्दिश्य यद्वाक्यं मदुदीरितम् (च मदीरितम्) ।**
**विश्वासे सति तद्वै स्यात् न स्याद्वा तदभावतः ।।७०।।**

**विश्वासिनामवश्यं तु तद्वै स्यात्पश्य शोभनम् ।**
**स्वस्याविश्वासतः शान्त न स्याद्वा कस्य (स्याद्वाक्यस्य) दोषिता ।।७१।।**

(अन्वयः) (हे विप्र!) तथा एव यत् वाक्यं शेषं उद्दिश्य मदुदीरितं, विश्वासे सति तत् स्यात् वै, तदभावतः न वा स्यात् । विश्वासिनां तु अवश्यं शोभनं स्यात्, हे शान्त! स्वस्य अविश्वासतः न स्यात्, वाक्यस्य कस्य दोषिता न वा स्यात् । पश्य ।

(व्या) शेषमुद्दिश्य यद्वाक्यम् 'अरसभूप' इत्यादिकं तदपि **विश्वासे** दृढे **सति** स्यात् । तदभावतो न स्यात् ।।७०।। विश्वासिनां यत्कार्यं तदवश्यं स्यादेव । स्वस्य अविश्वासतः फलं न स्यात् चेत्, कस्य दोषिता अविश्वासिन एव दोषिता । न गुरोः ।।७१।। (**शान्तः = भगवन्निष्ठबुद्धिः**[१])

(व्या) शेषादन्यः को वा विश्वासी कस्य विश्वासेन किं फलं भविष्यति? इत्यत आह – **विश्वासिनामिति** ।।

**विश्वासिनां समाजे च न पश्यामि हि तादृशम् ।**
**यादृशं व्यासभक्तेशं तथा सीतापतेर्मतम् ।।७२।।**

(अन्वयः) विश्वासिनां समाजे च व्यासभक्तेशं यादृशं पश्यामि तथा सीतापतेः मतं. तादृशं (अन्यं) न पश्यामि ।

(व्या) **विश्वासिनां समाजे** समूहे **व्यासभक्तेशं यादृशं विश्वासिनं पश्यामि** । **तथा सीतापतेः मतं** सम्मतं च । यादृशं विश्वासिनं पश्यामि तादृशम् अन्यं **न पश्यामि** ।

**तयोर्विश्वसतोर्वीशाधीशः श्रीशोत्र शोभनम् ।**
**दास्यत्यसंशयं पश्य मत्प्रसादात् स विश्वकृत् ।।७३।।**

---

(१) **अशान्तः** = अशान्तः फलनिष्ठबुद्धित्वाद्भगवन्निष्ठः । .... अशान्तमनसः संयतकर्मेन्द्रियोऽपि विषयस्मृतिमान् । – **इति गीताभाष्यटीकायाम्** (३/४)।

**गुरुप्रसादतः कस्य फलं न स्यादवश्यतः ।**
**करिष्यत्येव तत्स्वामी त(म)त्प्रसादानुसारतः ॥७४॥**

(अन्वयः) विश्वसतः तयोः मत्प्रसादात् सः विश्वकृत् वीशाधीशः श्रीशः अत्र असंशयं शोभनं दास्यति पश्य. गुरुप्रसादतः कस्य फलं न (अतः) मत्प्रसादानुसारतः तत् स्वामी अवश्यतः करिष्यति एव.

(व्या) **तयोरिति** ॥ **तयोः** एकत्रमिलितयोः **विश्वसतोः** सतोः । अत्र भूपे असंशयं संशयाभावरूपं शोभनं हरिः दास्यति । विश्वकृदपि सर्वकर्तापि हरिः ॥७३॥ (वीशाधीशः गरुडरुद्रस्वामी हरिः मत्प्रसादात् अत्र वृन्दावनसन्निधाने तयोः इष्टं शोभनं दास्यतीति भावः ॥७३॥) मत्प्रसादादिष्टं दास्यतीति कुतः? (इति चेत् शृणु) गुरुप्रसादतः[१] । लोके कस्य फलं भवेत् सर्वस्यापि स्यादेव । **तत्स्वामी** भूपस्वामी **मत्प्रसादानुसारतः** प्रसादं **करिष्यत्येव** ॥७४॥

**प्रसादं मत्प्रसादेन प्रसादं स करिष्यति ।**
**कः प्रसादमृते क्वापि (तस्य) प्रसीदति न सीदति[२] ॥७५॥**

(अन्वयः) सः मत्प्रसादेन प्रसादं करिष्यति । प्रसादमृते कः क्वापि (तस्य) न प्रसीदति सीदति ।

(व्या) **सः** भूपः मत्प्रसादेनैव **मनःप्रसादं करिष्यति** । मम प्रसादं **ऋते** कोपि **क्वापि** (तस्य) **न प्रसीदति** । न मनःप्रसादं प्राप्नोति । तस्मात् मत्प्रसादाभावात् मनःप्रसादाभावतश्च **सीदति** विषादं प्राप्नोति ॥७५॥

---

(१) स्वयमेवाखिलजगद्रक्षाद्यमितशक्तिमान् ।
अप्यच्युतो गुरुद्वारा प्रसादकृदहं त्विति ॥
ज्ञापयन् फल्गुनस्यास्त्रगुरुं गिरिशमञ्जसा ।
प्रापयित्वैनमेवैतत्प्रसादादस्त्रमुल्बणम् ॥ (म.भा.ता.नि. २६/५२,५३)

'न गुरुर्न च धर्मोस्ति रामदेवस्य कुत्रचित् ।
तथापि धर्मरक्षार्थं गुरुभक्तिमदर्शयत्' इति वाराहे ॥ भागवततात्पर्य.(४/२२/६५,६६)

(२) 'सम्यग्लक्षणसम्पन्नो यद्यात्सुप्रसन्नधीः ।
शिष्याय सत्यं भवति तत्सर्वं नात्र संशयः' इति वचनात्
– इति तत्वप्रकाशिकायाम् (अनुबन्धाद्यधिकरणे ३.३.५१)

**तस्माद्गुरौ सदा धीर रतिं कुरु हरौ प्रिय ।**
**गुरुद्वारा प्रसन्नः सन् भरति त्वां रमापतिः ॥७६॥**

(अन्वयः) हे धीर! गुरौ हरौ रतिं सदा कुरु । रमापतिः गुरुद्वारा प्रसन्नः (सन्) त्वां भरति ।

(व्या) तस्मादिति ॥ हे धीर! (हे प्रिय!) तस्मात् कारणात् हरौ गुरौ च रतिं कुरु । गुरुद्वारा प्रसन्नः[१] सन् त्वां भरति पालयति ॥७६॥

**शुद्ध सद्धर्मसिद्धानां पद्धतिं बुद्धिमान् कुरु ।**
**क्रुद्धो मद्धर्मरुद्धानां पद्धतौ स्तब्धतां कुरु ॥७७॥**

**सिद्ध मद्धर्मपद्धत्या श्रद्धावान् मधुसूदनम् ।**
**आराधय बुधाराध्यं विबुधेश्वरबुद्धिगम् ॥७८॥**

**मधुं क्रुद्धं नु(तु) धीमान् यो गदाधाराहतं व्यधात् ।**

(अन्वयः) हे शुद्ध! बुद्धिमान्! सद्धर्मसिद्धानां पद्धतिं कुरु. क्रुद्धः (सन्) मद्धर्मरुद्धानां पद्धतौ स्तब्धतां कुरु । हे सिद्ध! मद्धर्मपद्धत्या श्रद्धवान् (भूत्वा) बुधाराध्यं विबुधेश्वरबुद्धिगं मधुसूदनं आराधय । हे धीमान्! क्रुद्धं मधुं यः गदाधारा हतं व्यधात् ।

(व्या) शुद्धेति ॥ हे शुद्ध! त्वं बुद्धिमान् भूत्वा सद्धर्मसिद्धानां सज्जनानां पद्धतिम् अङ्गीकुरु । मद्धर्मरुद्धानां पद्धतौ क्रुद्धः सन् तेषां स्तब्धतां कुरु । अनेन द्वेषिणां बुद्धौ स्तब्धता भविष्यतीति भावः ॥७७॥ सिद्धेति ॥ (हे सिद्ध!) श्रद्धावान् भूत्वा [२]मद्धर्मपद्धत्या

---

(१) 'देवा अपि सुयोगाढ्या यतन्तः सर्वसाधनैः ।
पुत्रदारादिभिः सार्धं निश्वसन्तीह संसृतेः ।
गुरोरनुग्रहमृते साधनं न हरेः प्रियम् ।
गुरूपदेशात्तु हरिं प्राप्नोत्येव न संशयः । – (भा.ता. १०/९४/३४)

'सर्वक्रिया हरौ भक्ते हरिभक्तैः स्वनुष्ठिताः ।
गुरुभक्तैः सदाचारैः फलंत्यद्धा न चान्यथा' – तन्त्रसार (४/१०३)

(२) तं त्वा गताहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ।
जिज्ञासया प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ – भागवत (३/२६/११)

मदभिमतधर्ममार्गेण **मधुसूदनं** हयग्रीवं (**बुधाराध्यम् । विबुधेश्वरबुद्धिगम्**) **आराधय** ।।७८।। (**मधुं क्रुद्धं** यो नु गदाधारया आहतं **व्यधात्** तं हयग्रीवम् आराधय इति पूर्वश्लोकेन अन्वयः ।।)

**अर्चिर्मार्गेण गत्वाहं स्वर्चितः सर्वदैवतैः ।।७९।।**
**चर्चितश्चन्दनैर्दिव्यैर्नार्चन् मां कोटिसद्गुणम् ।**
**ईश्वरस्य प्रसादेन सेश्वरं जगदद्य मे ।।८०।।**
**प्राश्रितं चास शास्त्रेश मा त्रासः सर्वथा तव ।**

**(अन्वयः) अहम् अर्चिमार्गेण गत्वा सर्वदैवतैः स्वर्चितः, चन्दनैः दिव्यैः चर्चितः ना कोटिसद्गुणं माम् आर्च्छत्, ईश्वरस्य प्रसादेन सेश्वरं जगत् अद्य मे प्राश्रितं च आस, (अतः) हे शास्त्रेश तव त्रासः सर्वथा मा ।**

---

**सत् प्राणः । 'सदिति प्राणः' इति श्रुतेः ।** – (भाग.ता. २/६/४४); अतः सद्धर्मसिद्धानां पद्धतिः श्रीमाध्वविद्यैव इति नूनं विज्ञेया ।

**'एकस्मात्तु गुरोर्ज्ञानं जायते नैव कस्यचित् ।**
**एकस्मादेव जायेत योग्याद्ब्रह्मपदस्य तु ।**
**स्वयं चोपदिशेज्ज्ञानं वैरिञ्चिपदयोगिनि ।**
**अनुग्रहात् तेन चापि ज्ञानं दत्वा विमुक्तिदः ।**
**ज्ञानं प्राप्य बहुभ्योपि नर्ते मुक्तिश्चतुर्मुखात् ।**
**ज्ञानमप्राप्य तेषां तु ज्ञानदो विष्णुरेव हि' इति गुरुविवेके ।। ११/९/३१ ।।**

* 'मद्धर्मपद्धत्या' इत्यनेन श्रीमद्वादिराजगुरोरुक्तपद्धत्या तु मध्वशास्त्रमेव । **'अन्ते सिद्धस्तु सिद्धान्तः मध्वस्यागम एव हि'** इति तैरेव युक्तिमल्लिकायां मध्वशास्त्रस्य माहात्म्यं वर्णितं खलु । इहापि दशमेऽध्याये गुरुराजं प्रति श्रीनारायणस्य वचनमुद्धृतम् । तद्यथा –

**श्रीमन्मध्वमतं दिव्यं मद्भक्तेनोद्धृतं सुत ।**
**मत्सर्वोत्तमतामुक्त्वा युक्तिमालाभिरञ्जसा ।।५४।।**
**व्यासात्मना मया पूर्वं यदुक्तं सर्वमेव तत् ।**
**जगत्सत्यत्वादिकं च तात्पर्यविषयं ऋते ।।५५।।**

'करौ त्वदर्चने नित्यं सुखतीर्थस्य लेखने' – इति श्रीगुरुराजकृतप्रार्थनादशके वर्तते । तस्मात् मद्धर्मपद्धत्या इत्यनेन श्रीमध्वशास्त्रं प्रतिपादितम् निर्दिष्टं च । तच्छास्त्रानुसारिणी इयं स्वाप्नवृन्दावनाख्यानं तु सर्वदा उपादेयमेव ।

**(व्या)** एवम् अभिमतमार्गेण आराधनं कर्तव्यमित्युक्तम् । बहूनां विरोधित्वे तत् कथमुपपद्यते? इत्यतः केषांचित् स्तब्धता भविष्यति इत्युक्तम् । केषांचिदज्ञानम् । तदन्येषाम् अनुकूलत्वं भविष्यतीत्युक्तं विज्ञापयितुमाह – **अर्चिरिति ।।** यथा **अर्चिर्मार्गेणाहं गत्वा देवैः स्वर्चितः** (**दिव्यैः चन्दनैः** चर्चितस्य) ।।७९।।

तथा त्वं कैश्चित् सज्जनैः पूजितो भविष्यसि । यथा (**कोटिसद्गुणं**)[१] मां केचित् न **आर्च्छत्** न ज्ञातवन्तः । तथा त्वामपि केचिन्न जानन्ति ।।७९।। **यथा ईश्वरस्य** (हरेः) **प्रसादेन सेश्वरं** (रुद्रसहितं) जगत् मां **प्राश्रितं** प्रकर्षेणाश्रितम् **आस** । एवं त्वामप्याश्रितं भविष्यति । तस्मात् **तव त्रासः** भीतिः **मास्तु** ।।८०।।

**तमीश्वरं भास्वरसूर्यशौर्यदं ममेश्वरं सर्वजगच्च सेश्वरम् ।**
**मुनीश्वरैः सर्वसुरेश्वरेश्वरैः वशेकरं सर्वमहेश्वरं स्मरे ।।८१।।**

**(व्या)** 'तमीश्वरम्' इति पद्यं त्वया स्मर्तव्यमिति भावेन जगद्वशीकरणसामर्थ्यवत्त्वेन (बलेन) प्रथमाध्यायगतपद्यमनुवदति – **तमीश्वरमिति ।।** (१/७९) ।। इति विप्रश्रोतृक-प्रकरणं सम्पूर्णम् ।।

### ३. वेदिनिधिप्रकरणम् ।। श्लोकाः

**(व्या) अनन्तासनमि**त्यारभ्य **'उपभोक्ष्ये ह्युपेक्षा तु उपभोक्तृषु नास्ति मे'** (९६) इत्यन्तं तृतीयं वेदनिधिश्रोतृकं प्रकरणम् । पूर्वप्रकरणे 'शुद्धमद्धर्मपद्धत्या श्रद्धावान् मधुसूदन-माराधय' इत्युक्तम् । तादृश आराधने सहायभूतं वेदनिधिं प्रति अनन्तासनस्थभगवत्सन्दर्शनरूपं भौमभागवतवैभवं, विप्रस्य वृद्धत्वेन अङ्गीकार्यत्वादिकथनेन, माण्डव्यादिकृतभोजनकथनेन, तत्पदोक्तभक्ताराध्यत्वरूपं भौमभाक्तवैभवं चात्रोच्यते – **अनन्तासनेति ।।**

**अनन्तासनपर्यन्तमनन्तपद सञ्चरन् ।**
**अनन्तशयनं दृष्ट्वा अ(ह्य)नन्तसुखमन्वहम् ।।८२।।**

---

(१) प्रतिमालक्षणैर्याविद्युक्त आचार्य उत्तमः ।
सर्ववित्तपसा युक्त आज्ञाशक्तियुतो हरेः ।।
यावद्भक्तो यथा लब्धैर्गुणैयुक्तोऽथ वैष्णवः ।
गुरुः सत्सम्प्रदायज्ञस्तारतम्येन सिद्धिदः ।। १३०-१३१ ।। – तन्त्रसार. ४अध्याये

**(अन्वयः) हे अनन्तपद! अहम् अनन्तासनपर्यन्तं सञ्चरन् अनन्तशयनं दृष्ट्वा, अनन्तसुखम् अन्वहं (भोक्ष्ये)**

(व्या) हे अनन्तपद! तव श्वासप्रणेताहमित्यादौ गरुडात्मभावस्य सूचितत्वेन । तस्य ''योऽनन्तनामा गरुडस्तदंसके'' इत्यत्रोक्तरीत्या अनन्तनामकत्वेन । अनन्तस्य पदं यस्य सः तस्य संबुद्धिः । हे अनन्तपद वेदनिधे! अहम् अनन्तासनपर्यन्तं सञ्चरन् । अनन्तशयनं परमात्मानं दृष्ट्वा अनन्तसुखम् अन्वहं प्रतिदिनम् अनुभोक्ष्ये ।।८२।।

**अनुभोक्ष्ये शनैर्वक्ष्ये मुने लक्ष्यं मनःक्षतिम् ।**
**तनुक्षतिं न वक्ष्येहं वक्ष्ये ननु मनःक्षतिम् ।।८३।।**

**तनुक्षतिं क्षमे नित्यं क्षमे नाहं मनःक्षतिम् ।**
**दक्षान्मनःक्षतिं त्र्यक्षः क्षमते किं विचक्षण(ः) ।।८४।।**

**(अन्वयः) हे मुने! लक्ष्यं मनक्षतिं वक्ष्ये । अहं तनुक्षतिं न वक्ष्ये ननु मनक्षतिं वक्ष्ये । अहं तनुक्षतिं क्षमे नित्यं न मनक्षतिं । हे विचक्षण! त्र्यक्षः दक्षात् मनःक्षतिं क्षमते किम्?**

(व्या) अनुभोक्ष्ये इति ।। अथापि काचिन्मनःक्षतिरस्ति । स्वस्य साक्षान्मनःक्षत्यभावेपि भक्तानां मनःक्षतेः आत्ममनःक्षतितुल्यत्वेन मनःक्षतिं वक्ष्ये इत्युक्तम् । तनुक्षतेरकथनं मनःक्षतेस्तु कथनं कुत इत्यत आह – तनुक्षतिमिति ।।८३।। (अधिकदुःखपुरतः अल्पदुःखं न वर्णनीयमिति भावः ।।८३।।) तनुक्षतिमिति ।। यथा रुद्रेण मनःक्षतिर्न क्षान्ता । तथा मयापि मनःक्षति-र्नक्षन्तव्या ।।८४।।

**मन्मनोवेदनां सद्यः पद्यैर्वक्ष्येऽत्र नन्दन ।**
**त्वदग्रतो बुधाग्र्यस्त्वं कुरु शीघ्रं तदग्रतः ।।८५।।**

**(अन्वयः) हे नन्दन! मन्मनोवेदनां सद्यः अत्र पद्यैः वक्ष्ये । बुधाग्र्य! त्वदग्रतः (वक्ष्ये) । त्वं (तु) अग्रतः तत् शीघ्रं कुरु ।**

(व्या) अतस्तत्परिहारकं त्वां प्रति वक्ष्ये (कतिपयैः पद्यैः) । त्वं तु अग्रतः (तत्) मनःक्षतिपरिहारं कुरु ।।८५।।

**अध्यायान् गुरुपद्यानां स्वाध्यायान्न विनाप्यनु ।**
**श्रद्धावान्नैव क्रुद्धोहं वृद्धमङ्गीकुरु प्रिय ।।८६।।**

(अन्वयः) हे प्रिय! अध्यायान् अविना अपि तु गुरुपद्यानां त्वं श्रद्धावान् (भूत्वा) स्वाध्यायान् कुरु । त्वम् अहम् अपि नैव क्रुद्धो भव । वृद्धम् अङ्गीकुरु ।

(व्या) स्वाध्यायान् अध्ययनयोग्यकालान् अविना अपरित्यागेन गुरुपद्यानां एतदाख्यान-गतानां स्वाध्यायान् कुरु = सम्यगध्ययनानि कुरु । श्रद्धावान् भव । त्वम् अहमपि अहङ्कारतत्वमान्यपि मदुक्तकार्ये नैव क्रुद्धो भव । विप्रं यतिरूपिणं वृद्धम् अङ्गीकुरु हे प्रिय ।।८६।।

**शिलास्थां कुरु शीलाढ्य सालप्रांशोमलां कृतिम् ।**
**लोकेशः पालयेत् सद्यः त्वां बालं कालकालतः ।।८७।।**

(अन्वयः) हे शीलाढ्य! सालप्रांश! (मे) अमलां कृतिं शिलास्थां कुरु. बालं त्वां सद्यः कालकालतः लोकेशः पालयेत् ।

(व्या) हे शीलाढ्य! हे सालप्रांश! तालसन्निभ! अमलां कृतिं शिलास्थां कुरु । बालं त्वां बालत्वेनोत्पन्नं त्वां लोकेशः विष्णुः पालयेत् । अनेन बहुष्वपि शत्रुषु सत्सु पालनं हरिकृतमिति ज्ञातव्यम् ।।८७।।

**एतद्दुःखेन मे सर्वं सुखं मे पारलौकिकम् ।**
**विषमिश्रामृतं यद्वत् तद्वदेव भवत्यहो ।।८८।।**

(अन्वयः) एतत् दुःखेन मे पारलौकिकं सर्वं सुखं विषमिश्रामृतं यद्वत् तद्वदेव भवति । अहो!

(व्या) एतद्दुःखेन = कार्यत्रयस्य अनिष्कृतिकृतेन मे मदीयस्य सर्वं पारलौकिकं सुखं विषमिश्रामृतोपमं भवति । (अहो इति आश्चर्ये । 'निर्दुःखस्य ऋजोः दुःखप्रसङ्गः न वास्तवः' इति भावः ।।८८।।)

**एतत्कार्यत्रयं शिष्टमिष्टं कुरु यथेष्टतः ।**
**स्पष्टं मे मनसस्तुष्टिं शिष्ट साधय साधु भो ।।८९।।**

**(अन्वयः) हे शिष्ट! साधु भो! शिष्टं एतत् कार्यत्रयं यथेष्टतः इष्टं कुरु । (तेन) मे स्पष्टं मनसः तुष्टिं साधय.**

(व्या) (**एतत्कार्यत्रयं शिष्टं** = 'तव भागाय' इति आज्ञप्तं मया, **यथेष्टतः इष्टं कुरु** । यथेच्छसि तथा कुरु । **हे शिष्ट!** भो साधु! **स्पष्टं** यथा भवति तथा । **मे मनसः तुष्टिं साधय** ।।८९।।)

**इतःपरं न वक्ष्यामि कुतो वक्ष्ये निरन्तरम् ।**
**सुतान्तरं न पश्यामि मतं मे साधकं त्वलम् ।।९०।।**

**(अन्वयः) (हे वेदनिधे!) इतःपरं न वक्ष्यामि । निरन्तरं कुतः वक्ष्ये? अलम् । साधकं सुतान्तरं न पश्यामि ।**

(व्या) **इतःपरं** पदे पदे इदं कार्यं कुर्विति **न वक्ष्ये** । (सूक्ष्मज्ञानिनः तव पुनः पुनः कथनमनवश्यकम् । किञ्च एतत्कार्यत्रयस्य सम्यक् प्रसादकः अन्यः शिष्यः नास्ति । त्वमेवात्र अधिकृतः । तस्माद्गुरुसन्तोषार्थं कार्यत्रयं कुरु ।।९०।।)

**हे पुत्र शास्त्रवक्ताहं स्तोत्रं कुरु ममात्र तु ।**
**हे मित्र पात्रभूतोयं कात्र शङ्का तु कृत्रिमा ।।९१।।**

**अन्यथा परसौख्यं मे दुःखासम्भिन्नमेव हि ।**

**(अन्वयः) हे पुत्र! अहं तु शास्त्रवक्ता । अत्र मम स्तोत्रं कुरु । हे मित्र! अयं पात्रभूतः । अत्र तु कृत्रिमा शङ्का का अन्यथा मे परसौख्यं दुःखासम्भिन्नमेव हि ।**

(व्या) (**हे पुत्र!** अस्मिन् आख्याने मया शास्त्रसारमेव प्रतिपादितमस्तीति विज्ञाय । अहो गुरोः कारुण्यमिति **स्तोत्रं कुरु** ।।) **हे मित्र!** अयं ब्राह्मणः पात्रभूतः । **अत्र कृत्रिमा शङ्का का** ।।९१।। अन्यथा एतत्कार्यत्रयं कृतं चेत्, **मे परसौख्यं** दुःखासम्भिन्नदुःखासमानाधिकरणम्[१] ।

---

(१) येन केनापि विधिना बह्वित्येव जनार्दनम् ।
मत्वैव प्राप्नुयान्नित्यं मनोवाक्कायवृत्तिभिः ।
य एवं समुपासीत तस्यान्नाख्यो हरिः स्वयम् ।।
सिद्ध इत्येव हि प्राहुर्विद्वांसः परिनिष्ठिताः । – (तैत्तिरीयोपनिषत् भृगुवल्ली)

**कोऽन्यथा वक्ति तत्वज्ञ मन्मतज्ञ वृथाज्ञता ।।९२।।**

**(व्या) हे मन्मतज्ञ!** त्वां प्रतिः **कः अन्यथा वक्ति अज्ञता** अनभिज्ञता वृथा । तस्मात् मम तात्पर्यं ज्ञातव्यः ।।९२।। अत्र आख्यानाध्ययनं (अध्यायकरणं), विप्रस्य वृद्धयतित्वेन अङ्गीकारः, कृतेः शिलास्थत्वेन करणं चेति कार्यत्रयं त्वया कर्तव्यम् । तत्र प्रथमजन्मनि वृद्धस्य स्वप्नद्रष्टुः आप्तत्वेन परिग्रहः, 'इति, श्री' इत्यादिकमुक्त्वा समापनरूपम् अध्याय-करणम्, शिलायां लेखनं चेति कार्यत्रयम् अवश्यकर्तव्यत्वेनोक्तम् । द्वितीयजन्मनि । पुनरुत्पन्नत्वात् यतिरूपात् ब्राह्मणात् यत्याश्रमं प्राप्य तन्मनोनुसारेण भगवदाराधनरूपं वृद्धाङ्गीकरणम्, अध्ययनरूपम् अध्यायकरणम्, बादरायणप्रतीकात्मिकाया शुद्धशिला तद्विषयत्वेन ज्ञानं कृतेः शिलास्थत्वेन करणं चेति कार्यत्रयम् अभिमतम् । तत्प्राक्तनसुखं विषमिश्रोपमं, तदुत्तरं तु निर्दुःखं शुद्धामृतसदृशम्; तस्मादिदं कार्यत्रयं कर्तव्यमिति भावः ।।९२।।

**(अव)** कृतेः अभिमतार्थबोधकत्वाभावे अध्येतव्यत्वाभावशङ्कां वारयितुं तदर्थज्ञानरूपं भोजनं माण्डव्यादिशब्दोपलक्षितैः भक्तैः भविष्यतीति भावेनाह – **ब्रह्माण्डेति ।।**

**ब्रह्माण्डसमभाण्डैर्मेमाण्डव्यमुनिपाचितम् ।**
**शाण्डिल्यशौण्डितं चान्नं कौण्डिन्यपरिवेषितम् ।।९३।।**

(अन्वयः) मे **ब्रह्माण्डसमभाण्डैः माण्डव्यमुनिपाचितं, शाण्डिल्यशौण्डितं, कौण्डिन्य-परिवेषितम् ।**

**(व्या)** चतुर्विंशतितत्वयुक्तत्वेन ब्रह्माण्डसदृशैः शरीररूपैः भाण्डैः माण्डव्यमुनिशब्दोक्तेन केनचिद्भक्तेन **पाचितम्** । तण्डुलसदृशमिदमाख्यानम् अन्नवत् उपभोग्यं जातम् । शाण्डिल्यपदोक्तेन केनचिद्भक्तेन शौण्डितं पक्वसर्षपादिसहितघृतसेकादिना सरसं जातम् । कौण्डिण्यपदोक्त केनचिद्भक्तेन **परिवेषितम्** । यथा एकत्र निक्षिप्तमन्नादिकं भोक्तुं न शक्यते । परिवेषणानन्तरं तु भोक्तुं योग्यं भवति । तथा एतदाख्यानतात्पर्यं जनान् प्रति केनचिद्बोधितम् । तद्रसास्वादनरूपं भोजनं । ततः सुलभं जातम्[१] ।।९३।।

---

'न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात् सुपुष्कलं ।
हि गीयते बहुधर्पिभिः' इति वचनात् ।
अनेक गुरुमुखैरनेकप्रकारेण श्रवणरूपातियत्नेनेत्यर्थः । – एंदिद्दारे.

(१) गुरून् वेदनिधीन् वन्दे नारसिंहगुरून् भजे ।

**चतुर्विरचितं तच्च चतुर्मुखसुचर्चितैः ।**
**चतुर्वेदोदितार्थैश्च चतुराश्रमवर्ति(भिः)तः ।।९४।।**

(अन्वयः) तच्च चतुर्मुखसुचर्चितैः चतुर्वेदोदितार्थैः च चतुराश्रमवर्तितः चतुर्विरचितम् ।

**(व्या)** जनत्रयमेळकेन पुनरेकेन सह चतुर्भिर्विरचितम् । चतुर्णां मुखैः सुसम्यक् चर्चितैः । **चतुर्वेदोदितार्थैः** । प्रथमप्रकरणोक्तरीत्या सत्यलोके हयग्रीवोपदिष्टैः । चतुर्वेदोदितार्थैः युक्तम् । चत्वारः पुरुषाः नैकत्र स्थिताः इति सूचयितुं **चतुराश्रमवर्तिन** इति ।।९४।।

**उपेन्द्रेण सह प्रेम्णा ह्युपते गा इवाकरम् ।**
**उपभोक्ष्ये ह्युपेक्षा तु ह्युपभोक्तृषु नास्ति मे ।।९५।।**

(अन्वयः) उप इन्द्रेण सह ते उप गा इव प्रेम्णा हि अकरम्; उपभोक्ष्ये; उपभोक्तृषु मे उपेक्षा तु नास्ति.

**(व्या) उपेन्द्रेणेति ।।** मेलकः कः इति न ज्ञायते । तज्ज्ञापनाय **उपेन्द्रेण सहेति ।। उप** = समीपे । **इन्द्रेण** इन्द्रभावयोग्येन वृन्दावनाचार्येण सह । **चतुर्विरचितमि**ति पूर्वेणान्वयः । ते तव उप समीपे स्थिता गावः यथा सुखेन क्षीरप्रदाः ता इव आख्यानगताः **गाः** वाचः ज्ञानक्षीरोपयुक्ततया **अकरं** कृतवानस्मि ।। चतुर्विरचितम् आख्यानार्थज्ञानरूपम् अन्नमाह – **उपभोक्ष्ये इति ।।** तेन तुष्टो भवामि । **उपभोक्तृषु** एतदाख्यानार्थरसग्राहिषु मम उपेक्षा **नास्ति** । तस्मात् मदुक्तं कार्यत्रयं त्वया कर्तव्यम् ।।९५।। वेदनिधिप्रकरणं सम्पूर्णं ।।

### ४. विप्रप्रकरणम् ।। श्लोकाः (९६-१०१)

**(व्या) 'ममभोजनसन्तोषम्'** इत्यारभ्य **'मदनादरतो यद्वत्'** इत्यन्तं चतुर्थं विप्र-

---

वन्दे नारायणाचार्यान् हयग्रीवमुनीन् भजे ।
वन्दे वृन्दावनाचार्यान् हयग्रीवमुनीन् भजे ।
शेषसीतापतिव्यासान् प्रणमामि गुरुप्रियान् ।।

व्यासेन व्युप्तबीजः श्रुति भुवि भगवत्पादलब्धाङ्कुरश्रीः
प्रत्नैरीषत् प्रभिन्नोजनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशव्यासराजादुदितकिसलयः पुष्पितोयं जयीन्द्राद्
अद्य श्रीराघवेन्द्राद्विलसति फलितो मध्वसिद्धान्तशाखी ।।

श्रोतृकप्रकरणम् । पूर्वप्रकरणे 'वृद्धमङ्गीकुरु प्रिय' इति वेदनिधिं प्रति विप्रानुग्राहकत्वरूपं भाक्तं वैभवमुक्तम् । अत्र 'ममात्मजं भज' इति वेदनिधिभजनकथनेन वेदनिध्यनुग्राहकत्वरूपं वैभवम्, भोजनसन्तोषरूपं कार्यम्, 'सज्जनान् प्रति वक्तारम्' इति कथनेन सज्जनकृपारूपं भाक्तवैभवं चात्रोच्यते ॥

**मम भोजनसन्तोषं सुजनाम्बुजभास्करम् ।**
**कुजनाम्बुजसङ्कोचं(चे) द्विजराजं ममात्मजम् ॥९६॥**

**वदन्तं द्विज ते कल्पभुजं मज्जनतां प्रति ।**
**मदजाड्यरुजाहीनं द्विजाराध्यं भजाद्य तम् ॥९७॥**

(अन्वयः) हे द्विज! मम भोजनसन्तोषं मज्जनतां प्रति वदन्तं ते कल्पभुजं मदजाड्यरुजाहीनं द्विजाराध्यं सुजनाम्बुजभास्करं कुजनाम्बुजसङ्कोचं द्विजराजं ममात्मजं भज.

(व्या) हे द्विज! ते तव कल्पभुजं सिद्धान्तानुसारिणं मम भोजनसन्तोषं मज्जनतां समूहं प्रति वदन्तं, मदजाड्यरुजाहीनं सज्जनैराराध्यम्, तं प्राग्जन्मनि मदीयत्वेन प्रसिद्धम् । ममात्मजं (कथंभूतम्? सुजनाम्बुजभास्करं सज्जनानाम् आनन्दप्रदम् । कुजनाम्बुजसङ्कोच-द्विजराजं = दुर्जनाख्यकमलसङ्कोचहेतुभूतचन्द्रम् ।) वेदनिधिं भज ॥९७॥

**मम भोजनसन्तोषं ये शृण्वन्ति मुनीश्वर ।**
**तेषामन्नानि सम्पूर्णानीति सत्या फलश्रुतिः ॥९८॥**

(अन्वयः) हे मुनीश्वर! ये मम भोजनसन्तोषं शृण्वन्ति, तेषां अन्नानि सम्पूर्णानि इति फलश्रुतिः सत्या ।

(व्या) ममेति ॥ भोजनसन्तोषज्ञानफलमाह[१] – ममेति ॥ (हे मुनीश्वर! ये मम

---

(१) श्रीगुरुराजर भोजनसन्तोषश्रवणवु ईविषयदल्लि केळगिन प्रमाण स्मरणीय –

क्षुत्पिपासादयश्चैव देवानां भोगसाधकाः ।
न तु पीडाकरास्तेषामैश्वर्यादिगुणोन्नतेः ॥
अन्नमूर्तिं ततो ब्रह्मा प्रधानेनैव वायुना ।
अपानाख्येनात्तुमैच्छत्तदैवाशकदाशु सः ॥

**भोजनसन्तोषं शृण्वन्ति** । तेषाम् अन्नानि सम्पूर्णानीति फलश्रुतिः सत्या) 'सम्पूर्णभोक्तव्यान्नलाभः, मुक्तौ सहभोजनम्' इति फलमुक्तं भवति ।।९८।।

**मम भोजनसन्तोषं ये च शृण्वन्ति नित्यशः ।**
**तेषामप्यनिशं विप्र सहभोजनमेव च ।।९९।।**

**इत्येकं श्लोकमेके च न वदन्ति मुनीश्वराः ।**

(अन्वयः) हे विप्र! नित्यशः ये मम भोजनसन्तोषं शृण्वन्ति तेषाम् अपि अनिशं सहभोजनमेव च (भविष्यति) इति एकम् एके च श्लोकं मुनीश्वराः न वदन्ति ।

(व्या) (ये च नित्यशः मम भोजनसन्तोषं शृण्वन्ति । तेषां मया साकं सहभोजनमपि मुक्तौ ब्रह्मलोके च भविष्यति ।।) केचिन्**मुनीश्वरा** यतयः मम ऋजुत्वं श्रुत्वा असहमानाः मुक्तौ सहभोजनबोधकं पद्यं **न वदन्ति** ।।९९।।

**पाकशासनलोके च को न वक्ता च नाकिषु ।।१००।।**

(अन्वयः) च पाकशासनलोके च नाकिषु को न वक्ता?

(व्या) देवास्तु निखिलाभिज्ञाः वदन्तीति भावः ।। (स्वर्गे आख्यानं पठ्यते इति प्राप्तम्) ।।१००।।

**तेन ते भविता तोषो दोषोपि तदनादरात् ।**
**मदनादरतो यद्वत् (द्विजं तोषय याजय) ।।१०१।।**

---

तस्माद्धोक्तैक एवासौ सर्वस्यान्नस्य मारुतः ।
तत्प्रसादात्परेऽश्नन्ति किञ्चित्किञ्चिन्न चाखिलम् ।।
आयूरूपोऽखिलानां च देवानां वायुरेव हि ।
अन्नदेवस्य चायुः स तस्माद्देवोत्तमो मरुत् ।।
आयुःशब्दो ज्ञानवाची गतिवाची च यत्ततः ।
चेष्टामोक्षज्ञानदाता सुराणां मारुतस्ततः ।।
अन्योन्यगुणदातृत्वात्समानौ ब्रह्ममारुतौ ।
तस्मान्मोक्षसुखे ज्ञाने विष्णुभक्त्यादिकेषु च ।।
सर्वेभ्यश्चाधिकौ तौ हि तयोर्विष्णुः परस्सदा । – इत्यैतरेयभाष्ये द्वितीयप्रघट्टके ।

**(अन्वयः) तेन ते तोषः भविता, तत् अनादरात् मदनादरतः यद्वत् (तद्वत्) दोषः अपि (भवति).**

(व्या) (तस्मात् सहभोजनपद्ये आदरः कार्यः । आदरे कृते सन्तोषः तव स्यात् । अनादरेण पापं स्यात्) अस्मिन् सहभोजनबोधकपद्ये अनादरदोषः मदनादरतुल्यः । तस्मात् आदरः कर्तव्यः इति भावः ।।१०१।। विप्रश्रोतृकप्रकरणं सम्पूर्णं ।।

५. वेदनिधिप्रकरणम् ।। श्लोकाः(१०२ द्विजं तोषय इत्यारभ्य ११०)

(व्या) **'द्विजं तोषय याजय'** इत्यारभ्य **'मतिप्रियं विप्रसाक्षिकम्'** इत्यन्तं वेदनिधि-श्रोतृकं पञ्चमं प्रकरणम् । अत्रापि प्रागुक्तकार्यत्रये आवश्यकताबुद्ध्युत्पादनेन भाक्तवैभव-मुच्यते ।।

**............... .(द्विजं तोषय याजय) ।**
**कुरु कार्यत्रयं शिष्टं परलोकसुखं हरम् ।**
**अन्यथैतच्चिन्तयामि कान्त कातरता भवेत् ।।१०२।।**

**(अन्वयः) (हे वेदनिधे!) द्विजयं तोषय । याजय । (मम) परलोकसुखं हरं शिष्टं कार्यत्रयं कुरु । अन्यथा एतत् चिन्तयामि । हे कान्त! कातरता भवेत् (इति) ।**

(व्या) (द्विजं सीतापतिं तोषय) **याजय** यज्ञं कारय । अनेन वेदनिधेः सीतापतिनामक-ब्राह्मणोपकारकत्वं (सिद्धम्) ।।१०१।। (कार्यत्रयं तवशिष्टम् आज्ञप्तम् । अन्यथा त्वया अकरणे मम परलोकसुखनाशकम् । 'सुखं हर' इति 'प्रियं वद' इतिवत् । तस्मात् एतत् त्वया कर्तव्यमिति चिन्तयामि । हे कान्त! प्रिय! त्वया अनादरे कृते मम कातरता भवेत् ।।१०२।।)

**स्वान्तरस्थां कुरु श्रान्तिं मां तारय सुकार्यतः ।।१०३।।**

**(अन्वयः) अन्यगतचित्तां श्रान्तिं स्वान्तरस्थां कुरु । सुकार्यतः अन्तर मा ।**

(व्या) अन्यचित्तगतां श्रान्तम् । **स्वान्तरस्थां** कुरु । आयसुकार्यतः लाभसुकार्यतः । अन्तरा विना । अन्यन्मास्तु ।।१०३।। (**सुकार्यतः** मया आज्ञप्तं कार्यं कृत्वा मां तारय । मम परलोकसुखं दुःखासम्भिन्नं कुरु इत्यर्थः ।।)

**एतत्कार्यत्रयं पुत्र शत्रुहास्याभिमन्त्रितम् ।**
**चित्रं गुरूक्तमप्यत्र पुत्रेण न कृतं त्विति ।।१०४।।**

**यादृशोहं(यं) गुरुर्धीरः तादृशः शिष्य एव च ।**
**इति मे हन्त दैतेयाः हास्यं कुर्वन्ति नित्यशः ॥१०५॥**

(अन्वयः) हे पुत्र! 'गुरूक्तमपि अत्र पुत्रेण न कृतम् । चित्रम्' इति एतत् कार्यत्रयं शत्रुहास्याभिमन्त्रितं (भवति) । हतदैतेयाः नित्यशः 'अयं गुरुः धीरः यादृशः शिष्यः तादृशः एव' इति च मे हास्यं कुर्वन्ति ।

**(व्या)** (अत्र श्रीव्याख्यानं नास्ति । **हे पुत्र!** वेदनिधे! यदि भवान् कार्यत्रयं न करोषि तर्हि दैत्याः **हास्यं कुर्वन्ति** । यथा वादिराजमुनिः अन्यान् अलक्षयित्वा वर्तते । तथा एतस्य शिष्योऽपि सर्वाविधेयः गुरुमपि अवजानातीति वदन्ति । **हतदैतेयाः** पुण्यहीनदैत्याः, हन्त इति पाठः खेदार्थकः ॥१०५॥)[१]

**तस्मात्कुरु गुरूक्तं ते मनसा स्मर धीर भो ।**
**कार्यत्रयं त्रिकालेपि कदा कुर्यां तदीरितम् ॥१०६॥**

(अन्वयः) हे धीर! भो! तस्मात् गुरूक्तं कुरु । तत् ईरितं कार्यत्रयं त्रिकालेपि कदां कुर्यां इति मनसा स्मर ।

**(व्या)** (**तस्मात् गुरूक्तं कुरु** । 'गुरोराज्ञां न लङ्घयेत्' इति भावः । ननु किं मया कार्यम्? कालान्तरे सामग्र्यां प्राप्तायां भवदाज्ञानुसारेण कर्तुं शक्यते । नेदानीम् । तथा सहकारिसामग्र्या अभावात् इत्यत आह – **त्रिकालेपि** ॥ 'गुरूक्तं काले प्राप्ते करोमि' इति **मनसा स्मर** = प्रतिज्ञां कुरु । तावन्मात्रमिदानीं शक्यमिति भावः[२] ॥१०६॥)

**सत्यं सत्यं पुनः सत्यं विप्रोक्तिर्नैव मे कृतिः (मत्कृतिः)।**
**तथ्यं तथ्यं पुनस्तथ्यमेतत्कार्यत्रयं सुत ॥१०७॥**

---

(१) पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ – मन्त्र

(२) इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।
भूतेषु भूतेषु विचिंत्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥
असुराणां तमः प्राप्तिस्तदा नियमतो भवेत् ।
यदा तु ज्ञानिसद्भावे नैव गृह्णंति तत्परम्' इति वचनात् ।

**(अन्वयः) हे सुत! (एतत्) विप्रोक्तिः नैव (किन्तु) मे कृतिः सत्यं सत्यं पुनः सत्यम् । एतत् कार्यत्रयं (अपि तादृश एव) । (तत्) सत्यं तथ्यं पुनः तथ्यम् ।**

**(व्या)** (त्रिवारशपथं निर्धारणाय) **विप्रोक्तिर्नैव;** किन्तु **मे कृतिः** । (इदम् आख्यानम् । तत्र दृढविश्वासं कुरु इति भावः ।।) १०७।। (१९/९/१९६५)

**तत्पादकमलं फुल्लं मद्गळे(ले) बध्यतेमल ।**
**उपलस्थलपर्यन्तं मम निर्मलसत्कृतेः ।।१०८।।**

**(अन्वयः) हे अमल! मम निर्मलसत्कृतेः उपलस्थलपर्यन्तं मद्गले फुल्लं तत्पादकमलं बध्यते ।**

**(व्या)** हे वेदनिधे! **मम निर्मलसत्कृतेः उपलस्थलपर्यन्तं** शुद्धशिलात्वज्ञानपर्यन्तं तत्पादकमलम् उपलसन्निहितबादरायणपादकमलं **मद्गले बध्यते** । वेदनिधे! 'तामप्यस्य ददाम्यहम्' इत्यादिकृतेः शुद्धशिलासन्निहितबादरायणपरत्वज्ञानपर्यन्तं तत्पादकमलस्मरणं मङ्गला-चरणवत् क्रियते इति भावः ।।१०८।।१०९।।

**अध्यायकृतिपर्यन्तं स्वाध्यायं कुरु मद्गतम्(मङ्गलम्) ।**
**बुद्ध्यारोहय मद्धार्यं वृद्धविप्रमतिप्रियम् ।।१०९।।**

**(अन्वयः) मद्गतम् अध्यायकृतिपर्यन्तं स्वाध्यायं कुरु । मद्धार्यम् अतिप्रियं वृद्धविप्रं बुद्ध्या आरोहय ।**

**(व्या)** (अध्यायकरणपर्यन्तं पुनः पुनः मत्प्रियं यथा भवति तथा पारायणं कुरु; शिष्येभ्यः प्रवचनं कुरु । **मम प्रियं वृद्धविप्रं बुद्ध्यारोहय** = अनुग्रहबुद्ध्या वर्धय । यतः स ममाति-प्रियः । मया धार्यश्च ।।१०९।।)

**एतत्कृत्य(त्कार्य)त्रयस्यापि सुनिष्कृत्यर्थमेव च ।**
**प्रत्ययं कुरु पुत्रेह मत्प्रियं विप्रसाक्षिकम् ।।११०।।**

**(अन्वयः) हे पुत्र एतत्कार्यत्रयस्यापि सुनिष्कृत्यर्थमेव मत्प्रियं विप्रसाक्षिकं प्रत्ययं इह कुरु ।**

**(व्या)** (साक्षात्कार्यं कर्तुं सामग्रीविरहदशायां बुद्धौ एव 'गुरुकार्यं करोमि, विप्रं पोषयामि,

कृतिं शिलास्थां करोमि' इति चिन्तय इति भावः । 'कार्यत्रयं करिष्याम्येव' इति सुदृढां प्रतिज्ञां विप्रसमक्षं कुरु ।।११०।।) यद्विप्रसाक्षिकं तत् मत्प्रियम् ।। इति वेदनिधिप्रकरणं सम्पूर्णं ।।

### ६. सीतापतिप्रकरणम्।। श्लोकौ (१११-११२)

(व्या) **'हे सीतापति भक्तेश'** इत्यारभ्य पद्यद्वयं सीतापतिश्रोतृकं प्रकरणम् । पूर्वप्रकरणे वेदनिधिना विप्रोपकारस्य कर्तव्यत्वम् उक्तम् । (स च विप्रः सीतापतिः) अस्मिन् प्रकरणे विप्रेण वेदनिध्युपकारकस्य कर्तव्यत्वमुच्यते । **हे सीतापति इति ।। एवमि**दानीम् । सीतापतिना प्रागुक्तमखिलं वेदनिधिं प्रतिबोधनीयमिति कथनेन भाक्तवैभवमुक्तं भवति ।।

**हे सीतापति भक्तेश हा तोकं प्रति मे वद ।**
**होमे वा जुह्व मद्वाक्यं हूहूगन्धर्वगानगम् ।।१११।।**

**कार्यत्रयं नष्टमासीत् षष्ठ(ष्ठि)कालव्रतं चरे ।**
**ममेष्टसिद्धिपर्यन्तं कष्टं त्याजय भोज हो(भोः) ।।११२।।**

(अन्वयः) हे सीतापति भक्तेश! हूहूगन्धर्वगानगं मद्वाक्यं मे तोकं प्रति वद । वा होमे जुह्व. कार्यत्रयं नष्टमासीत् (इति मत्वा) षष्ठिकालव्रतं चरे । भोज! हो! ममेष्टसिद्धिपर्यन्तं कष्टं त्याजय ।

### ७. वेदनिधिप्रकरणम्।। श्लोकाः (११३-१२७)

(व्या) **हे पुत्र** इत्यारभ्य **'साङ्गं कुर्यां तपस्त्वहो'** इत्यध्यायान्तं सप्तमं वेदनिधि-श्रोतृकप्रकरणम् । पूर्वप्रकरणेषु 'कार्यत्रयं कर्तव्यम्' इत्युक्तम् । अत्र पुराणकारयितृत्वानुकूलं तदनुग्राहकत्वरूपं भागवतवैभवम् । तद्वत्तुङ्गभद्रातीरे नारसिंहस्थेन रूपेण तदनुग्राहकत्वरूपं भाक्तवैभवम्, रङ्गनाथप्रियत्वरूपं भागवतवैभवं चोच्यते – **हे पुत्रेति** ।।११३।।

**हे पुत्र तव चाप्तिश्चेच्छ्रुत्वा सीतापतेर्वचः ।**
**कार्यत्रयं शात्रवाणां नैव हास्याश्रयं कुरु ।।११३।।**

(अन्वयः) हे पुत्र तव आप्तिः चेत् सीतापतेः वचः श्रुत्वा कार्यत्रयं शात्रवाणां हास्यास्पदं नैव कुरु ।

(व्या) ('हे वेदनिधे! सीतापतौ आप्तिं विज्ञाय = 'मन्मूलम्' इति विज्ञाय तद्वचनम्

अङ्गीकुरु । कार्यत्रयं कृत्वा मां सन्तोषय' इति भावः ।।११३।।) (''अपेक्षितवस्तुस्वीकारः आप्तिः'' ऐतरेयभाष्ये द्वितीयप्रघट्टके चतुर्थोध्याये)

**पञ्चवृन्दावने पुण्ये पुराणं पञ्चलक्षणम् ।**
**पञ्चास्यवाक्यसन्दिष्टं त्वं च कारय भूरिशः ।।११४।।**

**(अन्वयः) त्वं च पुण्ये पञ्चवृन्दावने पञ्चास्यवाक्यसन्दिष्टं पञ्चलक्षणं पुराणं भूरिशः कारय ।**

**(व्या) पञ्चवृन्दावन इति ।। पञ्चास्यवाक्यसन्दिष्टं** प्राणादिपञ्चास्यानि रूपाणि यस्य सः । तेन भाविमारुतेन मया सन्दिष्टम् इदम् आख्यानं श्रुत्वा त्वमपि तत् पञ्चलक्षणं पुराणमिव भूरिशः कारय ।।११४।। (पठनं, पदच्छेदः, पदार्थनिरूपणम्, अन्वयः, अबाधिततात्पर्यकथनं चेति **पञ्चलक्षणम्** । तथा च एष ऋजुरेव, देवकार्यार्थम् आख्यानग्रन्थं कृतवान् इति अधिकारिभिः ज्ञायते । वृन्दावनसेवां विना नैवेदान्तनीनां मोक्षमार्गप्राप्तिः इत्यपि निश्चीयते । ततश्च ते अधिकारिणः आख्यानं पठिष्यन्ति । वृन्दावनसेवां कुर्वन्ति इति पञ्चकं यथा सिद्ध्यति तथा पुराणं पाठय ।।)

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ।।' इति पुराणलक्षणम् ।

**निर्विघ्नतः कुरु त्वं च ह्यविघ्नं त्वग्निसन्निभम् ।**
**संसाररगानिभग्नानां तद्रुजां रुग्णकर्मणाम् ।।११५।।**

**(अन्वयः) त्वं च रुग्णकर्मणां संसारगानिभग्नानां तद्रुजाम् अग्निसन्निभं निर्विघ्नतः अविघ्नं कुरु ।**

**(व्या) अग्निसन्निभमि**ति पुराणविशेषणम् । **अविघ्नं** यथा भवति तथा इति क्रियाविशेषणम् ।।११५।।

**अहं निमिषमात्रेणानिमिषैः सह नैमीषे ।**
**मनुष्यलोकमायुष्मन् मनीषामि मुनीश्वर ।।११६।।**

**(अन्वयः) हे आयुष्मन्! मुनीश्वर! अहम् अनिमिषैः सह निमिषमात्रेण नैमिषे मनुष्यलोकं मनीषामि ।**

**नैमिषारण्यगस्यापि नो विषादस्त्वभून्मम ।**
**मनीषिणां मतं वक्ष्ये सर्वं तव शृणोषि चेत् ।।११७।।**

(अन्वयः) नैमिषारण्यगस्य अपि मम विषादः तु नो भूत् । सर्वं मनीषिणां मतं शृणोषि चेत् तव वक्ष्ये ।

**मनीषिणां मनःस्थं च भणेद्य शृणु नन्दन ।**
**गुणिनापि स्वपुत्रेण मुनीनां स्वामिनस्तव ।।११८।।**

**कृत्यं न कृतमप्यत्र चित्रं हरिकृतं बत ।**
**इति पृच्छंति मां नित्यं सत्यं सत्यं मयोदितम् ।।११९।।**

(अन्वयः) अद्य मनीषिणां मनःस्थं च भण हे नन्दन! शृणु । 'गुणिना स्वपुत्रेण अपि अत्र स्वामिनः तव कृत्यं न कृतं. हरिकृतं चित्रम् । बत' इति मां पृच्छन्ति । मयोदितं नित्यं सत्यं सत्यम् ।

(व्या) अहमिति ।। (अत्र श्रीव्याख्यानं नास्ति श्लोकानां स्पष्टत्वात् ।।११९।।)

**मुनयो नैमिषारण्यवासिनोऽपि निराशिनः ।**
**मयि सन्मानिनो नित्यं मुने तानपि तोषय ।।१२०।।**

(अन्वयः) नैमिषारण्यवासिनः मुनयः अपि निराशिनः, नित्यं मयि सन्मानिनः । हे मुने! तान् अपि तोषय ।

(व्या) मुनय इति ।। अनेन नैमिषारण्यवासिनाम् ऋषिणां तोषो भवति । तदभावे तेषां न तोषः इत्युक्तं भवति ।।१२२।।

**त्रिभिः पुत्रस्य पुत्रत्वं वित्त श्रुत्युक्तमेव च ।**
**कृत्यत्रयं त्वमप्यत्र कृत्वा पुत्रत्वमाप्नुहि ।।१२१।।**

(अन्वयः) हे वित्त! श्रुत्युक्तं त्रिभिः एव पुत्रस्य पुत्रत्वं च त्वमपि अत्र कृत्यत्रयं कृत्वा पुत्रत्वम् आप्नुहि ।

(व्या) ('त्रिभिः पुत्रस्य पुत्रत्वम्' इति श्रुतिरस्ति; त्वमपि कार्यत्रयं कृत्वा पुत्रो भव' इति गौणोक्तिः । अथवा 'पुन्नामकनरकात् त्राता इति पुत्रः' इति शास्त्रमस्ति । त्वमपि 'अन्त-

रङ्गदुःखात्, ऋषयः दैतेयाश्च पृच्छन्ति अपहासं च कुर्वन्ति' इत्यादि दुःखात् मां त्राता भव[१] । ततश्च पुत्रो भव इति साहित्यमुद्रया यथा वेङ्कटेशः बकुलां कन्यावरणकार्ये प्रेरितवान्, तथा गुरुः वेदनिधिं कार्यत्रये प्रेरयतीति मन्तव्यम् ।।१२२।।)

**पुदित्याहुः पूयशोणाधिभाजं व्याजान्मया नोच्यते चात्मजाद्य ।**
**तस्मात् त्राता पुत्र इत्येव चात्र यः कथ्यते सोपि त्वमेव नान्यः ।।१२२।।**

(अन्वयः) पूयशोणाधिभाजं व्याजात् (यः) पुदित्याहुः तस्मात् त्राता पुत्र इत्येव कथ्यते. हे आत्मज अद्य च (तत्) मया न उच्यते. (यतः विलीनप्रकृततया मे नरकभयं नास्ति) किन्तु 'त्राता पुत्र' इत्येव कथ्यते. सः अपि त्वं एव न अन्यः.

**इत्येवं पुत्रशब्दार्थस्त्वय्येवास्ति सुपुत्रक ।**
**ततः कृत्यत्रयं मित्र कुरु चित्रं न च त्वयि ।।१२३।।**

(अन्वयः) हे सुपुत्रक! इत्येवं पुत्रशब्दार्थः त्वय्येव अस्ति ततः हे मित्र कृत्यत्रयं कुरु. त्वयि च चित्रं न ।

(व्या) (गुरोः दुःखनाशककार्यकर्तृत्वात् त्वयि पुत्रनाम सार्थकम् । तस्मात् 'मित्वा त्रायते' इति मित्रम्, तस्य सम्बुद्धिः । मम अभिप्रायं ज्ञात्वा विवक्षितकार्यत्रयं कुरु । त्वयि चित्त्रं चित्तक्षयरूपविस्मरणं नास्ति ।।१२३।।)

**तस्मात्कृत्यत्रयं पुत्र कुरु मित्र ममात्र तु ।**
**पुत्रशत्रोसुमित्रस्य मात्र ते संशयो भवेत् ।।१२४।।**

(अन्वयः) हे पुत्र! पुत्रशत्रो (सकाशात्) असुमित्रस्य ते संशयः मा भवेत् । तस्मात् हे मित्र! अत्र तु मम कृत्यत्रयं कुरु ।

(व्या) सुमित्रवत्प्रतीयमानस्य वस्तुतः असुमित्रस्य शत्रुः, हे पुत्र! तत्सहवासेन अत्र आख्यानोक्तप्रमेये तव संशयो मास्तु ।।१२४।। (अनेन श्रीवेदनिधिनिकटे कश्चित् पण्डिताभासः वर्तते । स च वेदनिधिम् आख्यानप्रामाण्ये संशयवन्तं कर्तुं यतते इति सूचितं भवति । तथापि वेदनिधिः तं दूरीकृत्य फलोपलब्धिस्वप्नसूचनादिभिः प्रामाण्यनिश्चयं प्राप्नोत्येव ।।)

---

(१) ''जीवतो वाक्यकरणात् प्रत्यब्दं श्राद्धकर्मणा ।
गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ।।' इति ।

**मम सन्तोषणार्थं च मुनीनां तोषणाय च ।**
**तव पुण्यार्थमप्यत्र कुरुष्व निपुणाद्य तत् ॥१२५॥**

(अन्वयः) हे निपुण! मम सन्तोषणार्थं च मुनीनां तोषणाय च तव पुण्यार्थम् अपि तत् अद्य कुरुष्व ।

**एवं चेदहमेवात्र पिता तव न संशयः ।**
**त्वमेव मम पुत्रश्च नान्यः कश्चन विद्यते ॥१२६॥**

(अन्वयः) एवं चेत् अहं एव तव पिता । अत्र न संशयः । (तथा) त्वमेव मम पुत्रः । न अन्यः कश्चन विद्यते ।

(व्या) (एतयोः श्लोकयोः श्रीव्याख्यानं नास्ति । स्पष्टत्वात् ॥)

**तुङ्गभद्रानदीतीरे गङ्गास्नानपरायणः ।**
**रङ्गनाथप्रियार्थं च साङ्गं कुर्यां तपस्त्वहो ॥१२७॥**

(अन्वयः) तुङ्गभद्रानदीतीरे च, गङ्गास्नानपरायणः (सन्) साङ्गं रङ्गनाथप्रियार्थं तु तपः कुर्याम् अहो!

(व्या) वेदनिधिकर्तव्यमुक्त्वा, तत्सदृशतया फणिभावयोग्यत्वेन बुद्धिसन्निहितनारसिंहकृतं तपः रङ्गनाथसन्निधौ तुङ्गभद्रातीरे पूर्णं भविष्यति । तत्सन्निहितरूपेण गङ्गास्नानपरायणत्वम् । तत्र पूर्णसन्निधानद्योतनाय कुर्याम् इति उत्तमपुरुषप्रयोगः ॥२७॥

**तुङ्गभद्रां नदीं गत्वा गङ्गासङ्गात्सुपुण्यदाम् ।**
**अङ्गनासेवितः स्वाङ्गैः साङ्गं कुर्यां तपस्त्वहो ॥१२८॥**

(अन्वयः) गङ्गासङ्गात्सुपुण्यदां तुङ्गभद्रां नदीं गत्वा अङ्गनासेवितः सन् स्वाङ्गैः साङ्गं तपः तु कुर्याम् ।

(व्या) (एवं च कर्काटके मासि यदा तुङ्गभद्रा गङ्गासंयुक्ता भवति तदा [1]नारसिंहनामक-तपस्विनं शेषपदयोग्यं प्रविश्य तुङ्गभद्रां तेन साकं गत्वा **अङ्गनाभ्यां** तुङ्गाभद्राभ्यां **सेवितः** सन्

---

(१) गुरून् वेदनिधीन् वन्दे नारसिंहगुरून् भजे ।
वन्दे नारायणाचार्यान् कर्णादिगणसेवितान् ॥३॥

'तीर्थीकुर्वन्ति तीर्थानि' इति न्यायेन तत्र स्नात्वा स्वाङ्गैः भक्तनारसिंहाङ्गैश्च अङ्गसहितं निर्दुष्टं तपः करोमि । अहो इत्यनेन मम प्रयोजनं नास्ति । 'भक्तोद्धरणमेव मम स्वभावः' इति सूचयति । 'अङ्गनाभिः असेवितः स्त्रीमुखम् अपश्यन्' इति वा अर्थः ।।१२८।।)

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेम-निर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

।। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराज-
पूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे सप्तमाध्यायः समाप्तः ।।

**(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्तिसन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।**

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक-ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य-जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितब्राह्मण-
स्वाप्नवृन्दावनाख्यानव्याख्याने सप्तमाध्यायः समाप्तः ।।
।। श्रीकृष्णार्पणमस्तु ।।

## ०८-०००- अष्टमाध्यायः

### १. विप्रप्रकरणम्।। श्लोकाः (१-३५ १/२)

(व्या) श्रीगुरुभ्यो नमः । हरिः ओं ।। पूर्वाध्याये कृतेः आप्तिमूलतया श्रुतिमूलतया युक्तिमूलतया चेति त्रिविधप्रामाण्योपपादकम्, हयग्रीवादिरूपिणो हरेः सकाशात् श्रुत्यर्थश्रवणम्, तद्बोधकतया आख्याननिर्माणम्, देवानां विप्राणां च श्रोतृत्वम्, गुर्वर्थं गीर्वाणाः सर्व एव चेति गताध्यायोक्त्या प्रसङ्गानुकूल्यम्, 'शेषं सशेषं जगदास दासम्' इत्यनेन ऋजुत्वादि निश्चायकयुक्तिमूलत्वेन सर्वदेवोपास्यत्वं चोक्तम् । तत्र प्रत्यक्षसंवादाभावे प्रामाण्यग्राहक-प्रतिबन्धकबुद्धिदोषनिवारकाभावेन न दृष्टार्थबोधकभागस्य प्रामाण्यमुपपद्यते । व्याख्यानाभावे तु सर्वथा अर्थप्रतीत्यजनकाखिलभागस्य प्रामाण्यं ज्ञातुं न शक्यते । तद्द्रष्टुं योग्यभूलाभादिवैभवस्य व्याख्यातुः व्याख्यानोपयुक्तज्ञानप्रापकतया प्राप्तव्यवैभवानां च कथनं सर्वदेवोपास्यत्वयुक्तेः प्रपञ्चनं चास्मिन्नध्याये (क्रियते) । व्याख्यानकाले द्रष्टुं योग्यं तुङ्गभद्रातीरस्थ भूदातृभक्तपूज्यत्वादिरूपं वैभवमाह – तुङ्गभद्रेति ।। अत्र 'तुङ्गभद्रा' इत्यारभ्य 'सत्यं मयोदितं' इत्यन्तं विप्रश्रोतृकप्रथमं प्रकरणम् ।

**हरिः ओं ।। तुङ्गभद्रानदीतीरे गङ्गासङ्गात् सुपुण्यदे ।**
**मङ्गळा(ला)र्थं पितृणां च स्वां गां द्वादशनिष्कदाम् ।।१।।**

**दत्तवान् वित्तपूर्वं मे मत्तोपि स्वहितोपि च ।**
**तृप्त्यर्थं तातपूर्वेषां पितृणां नात्र संशयः ।।२।।**

**(अन्वयः) हे तात! गङ्गासङ्गात् सुपुण्यदे तुङ्गभद्रानदीतीरे मत्तः अपि स्वहितः अपि पूर्वेषां पितृणां तृप्त्यर्थं पितृणां मङ्गलार्थं च द्वादशनिष्कदां स्वां गां वित्तपूर्वं मे दत्तवान् । अत्र न संशयः ।**

(व्या) तुङ्गभद्रेति ।। कश्चिद्भक्तः । विद्यामदेन धनमदेन आभिजात्यमदेन च युक्तत्वात् मत्तः, अथापि स्वहितः स्वानां हितं यस्य सः । कर्काटकमासि गङ्गासङ्गात् पुण्यदे तुङ्गभद्रानदी-तीरे तातपूर्वेषां पितृणां तृप्त्यर्थं सर्वेषां पितृणां मङ्गलार्थं च द्वादशनिष्कदां स्वां स्वकीयां गां भूमिं मे मह्यं वित्तपूर्वं यथा भवति तथा दत्तवान् । अत्र संशयो न । 'किमयम् अन्यदीयां भूमिं दत्तवान् उत स्वकीयामिति संशयो न कर्तव्यः' इति यावत् । अनेन भूदानानन्तरं

कश्चित्संशयः प्रसक्तो भविष्यति । तत्परिहारोपि भविष्यतीति[१] सूचितं भवति ।।१८२।।

**भद्रानद्याश्च तीरेऽपि पितृणां श्राद्धतद्दिने ।**
**सुभद्रावाप्तिसिद्ध्यर्थं धाता पूर्वं ददावथ ।।३।।**

(अन्वयः) (एवं) भद्रानद्याश्च तीरे अपि धाता पितृणां सुभद्रावाप्तिसिद्ध्यर्थं श्राद्ध-तद्दिने पूर्वम् अथ ददौ ।

(व्या) एवं भद्रानदीतीरेपि **धाता** दीयमानायाः भूमेः सम्पादकः कश्चित् **सुभद्रावाप्ति-सिद्ध्यर्थं** श्राद्धदिने पूर्वमुक्तभूदानतः पूर्वं द्वादशनिष्कदां भूमिं दत्तवान् । 'भद्रानदीतीरे नारसिंहान्तर्यामिणे दानम् । तुङ्गभद्रानदीतीरे विप्रान्तर्यामिणे दानम्' इति सूचितम् ।।३।।

**इति मन्त्रत्रयं विप्र कुतो न लिखितं त्वया ।**
**तव हस्तस्य पातोयं दत्तापहरतो भवेत् ।।४।।**

(अन्वयः) इति मन्त्रत्रयं विप्र त्वया कुतः न लिखितम् तव दत्तापहरतः हस्तस्य अयं पातः भवेत् ।

(व्या) **इतीति** ।। एतत्पद्यत्रयं पूर्वाध्यायोपदेशदिने उपदिष्टेन विप्रेण न लिखितम् । तेन यत् किञ्चित्कार्यं भविष्यतीति सूचयितुमाह – **इतीति** ।। अयं लेखनत्यागरूपो व्यापारः **तव दत्तापहरतः** तव दत्ता या भूमिः ताम् अपहरतः अपहर्तुः पुरुषस्य **हस्तस्य पातो भवेदि**ति सूचयति । दत्तापहारप्रयत्नः निष्फलो भवेदिति भावः ।।४।।

**दत्तवानहमेवेष्टं तत्पितृणां त्रिविष्टपे ।**
**कष्टं नायात्यविस्पष्टं षष्ठिवर्षसहस्रकम् ।।५।।**

(अन्वयः) त्रिविष्टपे तत्पितृणाम् अविस्पष्टम् इष्टं त्रिविष्टपे अहमेव दत्तवान् । षष्ठिवर्षसहस्रकं कष्टं नायाति ।

(व्या) **तत्पितृणां** भूप्रदातुः पितृणाम् **इष्टम् अहमेव त्रिविष्टपे दत्तवान् । षष्ठिवर्षसहस्रकं** षष्ठिवर्षसहस्रपर्यन्तं कष्टं तत्पितृन् प्रति **नायाति** ।।५।।

---

(१) विद्यातपोवित्तवपुर्वयकुलैः सतां गुणैः षड्भिरसत्तमा मदैः ।
स्मृतौ हतायामभिमानदुर्दृशस्तप्ता न पश्यन्ति हि दाम भूयसाम् ।। – भागवत (४/३/१८)

'ज्ञानदानं तु देवानां फलदानं च कर्मणाम् ।
विष्णुना विहितं पूर्वं पुनर्देवनरासुराः । (बृ.भा. सप्तमोध्यायः)

**होमे वा जुह्व मद्वाक्यमित्युक्ते तव जिह्वया ।**
**दहेति चोच्यते हा हा किं ते जिह्वा दहेत्यहो ॥६॥**

(अन्वयः) 'होमे वा जुह्व मद्वाक्यं' इत्युक्ते तव जिह्वया 'दह' इति च उच्यते । हा हा ते जिह्वा दह इति किम् (उच्यते) । अहो!

**(व्या)** 'होमे वा जुह्व मद्वाक्यम्' (७/१११) इत्यत्र 'होमे वा दह तद्वाक्यम्' इति विप्रेणोक्तम् । तेन सूचितं भाविकार्यविशेषमाह – **होमे वा इति** ॥ ते **जिह्वा** 'किमपि यत्किञ्चिद्वस्तु दह' इत्याह । त्वज्जिह्वया दहेत्युक्तम् अव्यर्थम्; शत्रूणाम् इष्टं वस्तु किंचिद्दग्धं भविष्यतीति सूचयतीति भावः ॥६॥

**अश्लीलभाषा मातेयमवालं विषयेऽमल ।**
**शीलाढ्यं तु कुलाढ्यं प्रत्यशीलोक्तिर्न चोदिता ॥७॥**

(अन्वयः) हे अमल! अयम् अशीलभाषा ते मा तु । विषये अलम् अव । शीलाढ्यं कुलाढ्यं प्रति अशीलोक्तिः तु न चोदिता ।

**(व्या) अश्लीलेति** ॥ इयं भाषा **अश्लीलभाषा** शत्रूणाम् अनिष्टप्रापकत्वेन सुमङ्गल-भाषा । **ते** तव **मा** (तव अनिष्टप्रदं मास्तु) किन्तु विषये अभिमतविषयप्राप्त्यर्थं (शत्रुगृह-दहनसिद्ध्यर्थं) ताम् **अव** ॥७॥ (**शीलाढ्यं** प्रति **कुलाढ्यं** प्रति अश्लीलवचनं न चोदिता न विध्युक्ता; किन्तु निषिद्धा । 'न च उदिता' इति पदच्छेदेऽपि स एवार्थः । दुर्जनाय क्रोधः । अश्लीलवचनप्रयोगश्च – **'मोदेत साधुरपि वृश्चिकसर्पहत्या' 'कष्टात् कष्टतरं यान्तु सर्वे दुर्योधना-दयः'** इत्यादि प्रमाणसम्प्रदायपरिगृहीतः । प्रकृते त्वया कृत अश्लीलोक्तिः दुर्जनशत्रुगृहदाह-विषयणी भवतु इत्यर्थः ॥७॥)

**सावधानमनाः श्रीमन् श्रवणे भव सद्गुणे ।**
**भवने भव मे नित्यं तव नैवास्त्यसन्मतिः ॥८॥**

(अन्वयः) हे श्रीमन् सद्गुणे श्रवणे सावधानमनाः भव । मे भवने नित्यं भव । तव असन्मतिः नैव अस्ति ।

**(व्या) सद्गुणे** एतदभिप्रायश्रवणे **सावधानमनाः भव** । **मे भवने** सावधानमनाः भव । अनेन शत्रुभवनसमीपेपि मद्भवने अग्निभीतिर्न भविष्यति । किन्तु शत्रुभवने भविष्यतीति भावः ।।८।। (मन्मठे एव स्थितस्य तव असन्मतिः; दुःसङ्गेन अप्रामाण्यशङ्कादि दुर्बुद्धिः न भविष्यती-त्यर्थः) ।।८।।

**मठस्याग्रे अग्निसंस्पर्शे करमुद्धृत्य यद्गुरुः ।**
**ययाचे भार्गवं तस्माच्छत्रुगेहं गतोनलः ।।१८।।**

**हिमवत्पर्वतं गत्वा सुमहत्पर्वणि सुटम् ।**
**अगमं पर्वतस्योर्ध्वमनमत्पर्वतोपि माम् ।।९।।**

(अन्वयः) पर्वणि हिमवत्पर्वतं गत्वा; पर्वतस्य सुमहत्ऊर्ध्वं स्फुटम् अगमम् । पर्वतः अपि माम् अनमत् ।

**(व्या)** 'दह्यमानसदनसमीपगते तव सदने कुतो नाग्निभीतिः?' इत्यत आह – **हिमवत् पर्वतमिति ।।** 'हिमवत्पर्वतपूजितस्य मम सामर्थ्यातिशयेनैव अग्निभीत्यभावः' इति भावः । 'सुमहत्' इति पर्वतस्योर्ध्वमित्यस्य विशेषणम् ।

**तद्धस्तोपरि मद्धस्तमधिरोप्यादरेण च ।**
**ऋद्धिमद्धिमवद्गेहमारुहं बृहदुन्नतम् ।।१०।।**

(अन्वयः) आदरेण तत् हस्तोपरि मद्धस्तम् अधिरोप्य च ऋद्धिमत् बृहदुन्नतं हिमवद्गेहम् आरुहम् ।

**तेन सम्पूजितश्चाहं मेनकासंयुतेन च ।**
**मानितो बहुमानैश्च कामेन रहितोप्यहम् ।।११।।**

(अन्वयः) मेनकासंयुतेन च तेन अहं सम्पूजितः च । कामेन रहितः अपि अहं बहुमानैः च मानितः ।

**(व्या) मेनका** हिमवद्भार्या ।।११।। (इतरत् स्पष्टम्)

**रत्नकोटिभिराटोपयुक्तैश्च तटिदम्बरे ।**
**यथा स्फुटं मेघसङ्घघटिता धूर्जटेर्मतैः ।।१२।।**

**अभिषेकं सुषेणाग्र्य कृतवान् दोषवर्जिते ।**
**अपि मेषगते पूष्णि शेषशायिप्रियैः सह ।।१३।।**

(अन्वयः) हे सुषेणाग्र्य! दोषवर्जिते अपि पूष्णि मेषगते धूर्जटेः मतैः यथा अंबरे मेघसङ्घघटिता तटित् तथा स्फुटम् आटोपयुक्तैः रत्नकोटिभिः अभिषेकं शेषशायिप्रियैः सह कृतवान् ।

(व्या) रत्नकोटिभिरिति ।। धूर्जटेः शिवस्य सम्मतैः यथा (अम्बरे) मेघसङ्घघटिता तटित् तथा स्फुटं प्रकाशाटोपयुक्तैः रत्नकोटिभिः ।।१२।। अभिषेकं कृतवान् । (दोषवर्जिते मुहूर्ते । चैत्रमासे) । पूष्णि सूर्ये ।।१३।।

**मत्प्रसादापन्नरत्ननिचयान् सुचरित्रिषु ।**
**अददां मदनावेशरहितेषु मुनिष्वहम् ।।१४।।**

(अन्वयः) मत्प्रसादात् आपन्नरत्ननिचयान् मदनावेशरहितेषु सुचरित्रिषु मुनिषु अहम् अददाम् ।

(व्या) हिमवत्पर्वतसमर्पितरत्नव्ययप्रकारमाह मत्प्रसादेति ।। मयि विद्यमाने हरिप्रसादेन प्राप्तरत्ननिचयान् मदनावेशरहितेषु सुचरित्रिषु अददाम् ।।१४।।

**इत्यादि कृतसत्कारैरतिपूज्योहमेव तैः ।**
**हिमवत्पर्वताद्यैश्च सुमते शृणु वैभवम् ।।१५।।**

(अन्वयः) तैः हिमवत्पर्वताद्यैः च कृतसत्कारैः अतिपूज्यः अहमेव । हे सुमते! इत्यादि मम वैभवं शृणु ।

(व्या) तैः मुनिभिरपि । अहम् अतिपूज्यः (हे सुमते मम वैभवं शृणु) ।।१५।।

**ममाभिषेकस्य महोत्सवं तु ये दोषयुक्ताश्च विशेषतोऽपि ।**
**श्रुत्वा च तद्दोषलयं प्रयान्ति निर्दोषभूता च न मे मृषा वाक् ।।**

(अन्वयः) मम अभिषेकस्य महोत्सवं तु ये श्रुत्वा विशेषतः दोषयुक्ताः च अपि तत् दोषलयं प्रयान्ति । निर्दोषभूताः च (भवन्ति) । मे वाक् न मृषा ।

(व्या) अभिषेककथाश्रवणफलमाह – **ममाभिषेक इति** ।।१६।। ('मे वाक् निर्दोषभूता न मृषा' इति ऋजुत्वज्ञापकलिङ्गम् । नियमेन निर्दोषवचनम् ऋजूनामेव ।।)

(अव) हिमत्पर्वतादिपूज्यत्वरूपभौमालौकिकभाक्तवैभवमुक्त्वा, तदुपरितनस्वर्गारोहं, तदुपरिगतवैकुण्ठगतपरमात्मदर्शनं व्याख्यातुः ज्ञानसुधाप्रापकत्वेन ज्ञातव्यम् । व्याख्यातुः द्रष्टव्यार्थदर्शनकारणत्वेन ज्ञातव्यम् । मन्दरपर्वतगतपरमात्मदर्शनं, मन्दरपर्वतगतपरमात्मनमनं चेत्येतत्कथनेन दिव्यभौमभागवतवैभवमुक्त्वा, व्याख्यात्रा भारतीप्रसादसाधनत्वेन श्रोतव्यं भाविभार्यामनोरथानुकूलसङ्कल्परूपभौमभाक्तवैभवं च प्रतिपादयति – **हिमवच्छिखरादिति** ।।

**हिमवच्छिखरादूर्ध्वं स्वर्गमारुहमार्यज ।**
**घर्घराध्वानगाः सर्वे मुनयो मार्गयन्ति माम् ।।१७।।**

**(अन्वयः) हे अर्यज! हिमवच्छिखराद् ऊर्ध्वं स्वर्गम् आरुहम् । घर्घराध्वगाः सर्वे मुनयः मां मार्गयन्ति ।**

(व्या) (**हे आर्यज!** विप्र! **अहं** हिमवच्छिखरं त्यक्त्वा, स्वर्गं प्रतिगतवान् । मार्गे **(घर्घराध्वानगाः)** घर्घरायाः आकाशगङ्गायाः ध्वानं ध्वनिः यस्य सः तीरस्थमार्गः । तत्र गताः विद्यमानाः गङ्गातीरस्थ मार्गे स्थिताः ऋषयः, **मां मार्गयित्वा** = मां दृष्ट्वा, मया साकं स्वर्गं जग्मुः ।।१७।।)

**त्रिविष्टपादहं यास्ये विष्टरश्रवसं सुत ।**
**कष्टं च मम नैवास्ति वैकुण्ठपतिदर्शने ।।१८।।**

**(अन्वयः) हे सुत! त्रिविष्टपात् अहं विष्टरश्रवसं यास्ये । वैकुण्ठपतिदर्शने मम कष्टं च नैव अस्ति ।**

(व्या) (ततश्च अहं वैकुण्ठं प्रति गतवान् । वैकुण्ठलोकप्राप्तौ मम क्लेशो नास्ति इत्यर्थः ।।१८।।)

**मन्दरं कुन्धरं गत्वा सुन्दरं त्विन्दिरापतिम् ।**
**गन्धर्वसेवितं सेन्द्रवृन्दारकमनोरथम् ।।१९।।**
**अमृताब्धौ सुधासिद्धिपर्यन्तमकरोद्धि यः ।**
**तं नतोस्म्युन्नते देशे तिष्ठन्तं चाष्टसद्भुजम् ।।२०।।**

(अन्वयः) मन्दरं कुन्धरं गत्वा यः अमृताब्धौ सुधासिद्धिपर्यन्तं सेन्द्रवृन्दारक-मनोरथम् अकरोत् तं तस्मिन् उन्नतदेशे तिष्ठन्तम् अष्टसद्भुजं गन्धर्वसेवितं सुन्दरम् इन्दिरापतिं तु नतः अस्मि ।

(व्या) **अमृताब्धौ** क्षीरसमुद्रमध्ये **सुधासिद्धिपर्यन्तं सेन्द्रवृन्दारकमनोरथम्** । इन्द्र-सहितानां देवानां मनोरथं **यः अकरोत्** । तम् उन्नतदेशे **तिष्ठन्तम् अष्टसद्भुजं** विष्णुं **नतोस्मि** ।।१९-२०।। ('कुत्र? मन्दरपर्वतं गत्वा तत्र' इति योजना । इतरत् स्पष्टम् ।।२०।।) ।

**तस्मिन्मन्दारवृन्दे च मां दारः कश्चनागतः ।**
**सौन्दर्यसारसान्द्रश्चैवेन्दिरेवेन्दिरापतिम् ।।२१।।**

(अन्वयः) सौन्दर्यसारसान्द्रः च कश्चन दारः तस्मिन् मन्दारवृन्दे च इन्दिरापतिं इन्दिरा इव माम् आगतः ।

(व्या) तत्कालीनकथाविशेषमाह – **तस्मिन्निति** ।। 'दाराः' इतिवक्तव्ये 'दारः' इत्येक-वचनप्रयोगः कथमित्यस्योत्तरं स्वयमेव उत्तरत्र वक्ष्यति ।।२१।। (तस्मिन् मन्दरपर्वते एतस्मिन् मन्दारवृक्षषण्डे **कश्चन दारः** सौन्दर्यसारसान्द्रः एव; न तु एकेनापि लक्षणेन हीनः । **सौन्दर्य-सारसान्द्रैः एव** इति पाठे सारसान्द्रं च तत् सौन्दर्यं च तैः; विशेषणोत्तरपदकर्मधारयः । सारसान्द्रसौन्दर्यैः श्रेष्ठनिबिड(पूर्ण)सौन्दर्ययुक्तत्वेन प्रसिद्धः; इत्थंभूतलक्षणे तृतीया । **इन्दिरा इन्दिरापतिमिव** । मां प्रति **आगतः** इत्यर्थः ।।२१।।)

**मम सौन्दर्यसारं च दृष्ट्वा हृष्टो बभूव च ।**
**अनङ्गवशमासाद्य स्वाङ्गानि मम दर्शयन् ।।२२।।**
**अनङ्गसङ्गनिःसङ्गं मां सन्दृश्य सुविस्मितः ।**
**अभवत्सभवानीव दृष्ट्वा च भवमव्ययम् ।।२३।।**

(अन्वयः) मम सौन्दर्यसारं च दृष्ट्वा हृष्टः (सन्) अनङ्गवशम् आसाद्य अव्ययं भवं भवानि इव दृष्ट्वा, च मम स्वाङ्गानि दर्शयन् अनङ्गसङ्गनिःसङ्गं च मां सन्दृश्य सुविस्मितः बभूव ।

(व्या) (सौन्दर्यस्य सारः अतिशयः यस्य सः । सौन्दर्येण सारः श्रेष्ठः सौन्दर्यसारः तम् । **सौन्दर्यसारं**, तादृशं **मां दृष्ट्वा**, स दारः रोमाञ्चयुक्तो बभूव । योग्यतावत्वात् कामं प्राप्य, मां

प्रति आगतः ।।२२।। मां निष्कामं दृष्ट्वा, आश्चर्यं प्राप्य निर्विकारः **भवं दृष्ट्वा भवानी** यथा तथा उद्रिक्तकामा बभूव ।।२३।।)

**भवेदेतादृशो भर्ता मम चात्र भवे भवे ।**
**इति स्वस्येष्टदेवस्य तुष्टिं चक्रे यथेष्टतः ।।२४।।**

(अन्वयः) अत्र भवे भवे च एतादृशः मम भर्ता भवेत् इति स्वस्य इष्टदेवस्य यथेष्टतः तुष्टिं चक्रे ।

(व्या) 'सर्वाभीष्टप्राप्त्यै हरिप्रार्थनमेव सर्वोत्तममार्गः' इति निश्चित्य, 'एतस्मिन् जन्मनि जन्मनि च एष एव भर्ता भवेत्' इति श्रेष्ठदेवताम् अष्टबाहुनारायणं प्रति तपश्चक्रे ।।२४।।

**काष्ठमौनं समासाद्य श्रेष्ठ सोतिष्ठदत्र च ।**
**अङ्गुष्ठमात्रतः प्रेष्ठ सुष्ठु निश्चेष्टतां गतः ।।२५।।**

**इष्टदैवं प्रति स्वेष्टं याचयंस्तत्र वै स्फुटम् ।**
**इति दृष्ट्वा च तत्कष्टं मामुवाच स विट्ठलः ।।२६।।**

(अन्वयः) हे श्रेष्ठ प्रेष्ठ! काष्ठमौनं समासाद्य सा अङ्गुष्ठमात्रतः अत्र अतिष्ठत् च । तत्र इष्टदैवं प्रति स्वेष्टं स्फुटं याचयन् निश्चेष्टतां गतः इति, तत्कष्टं दृष्ट्वा सः विट्ठलः माम् उवाच ।

(व्या) (अङ्गुष्ठमात्रेण भूमिम् अवलम्ब्य काष्ठमौनेन युक्तः सन्, समाधिं प्राप्य हरिम् उपस्थितः ।।२५।। स्वाभीष्टं हरिं निवेद्य स्थितः । तदा श्रीहरिः परीक्षार्थं गुरुराजं प्रीत्या उवाच ।।२६।।)

**तस्येष्टं कुरु शिष्ट त्वं ममाभीष्टमिदं तव ।**
**मत्प्रेक्षायाः परीक्षार्थं तं पक्षीकृत्य पुत्रक ।।२७।।**

(अन्वयः) हे पुत्रक! तं पक्षीकृत्य मत्प्रेक्षायाः परीक्षार्थं हे शिष्ट! त्वं सत्येष्टं कुरु; इदं तव मम अभीष्टम् (इति उवाच) ।

(व्या) तस्येष्टं कुर्विति माम् उवाच । हरेः परीक्षापेक्षाभावेपि, भक्तानां ज्ञापनानुकूल-परीक्षार्थम् ।।२७।। (हे **शिष्ट!** त्वं **तस्येष्टं कुरु** । **इदं** तस्येष्टकरणं तव त्वया क्रियमाणं

**ममाभीष्टं** जानीहि । इति **तं** दारं **पक्षीकृत्य** मत्प्रेक्षायाः **परीक्षार्थम्** उवाच । **हे पुत्रक** ।)

**मत्वा रमापतिः साक्षात् परिरेभे मुदा तदा ।**
**तं दारं प्रत्युवाचेदं मन्दारवनमध्यगः ॥२८॥**

**(अन्वयः) तदा मन्दारवनमध्यगः रमापतिः मत्वा मुदा साक्षात् परिरेभे । तं दारं प्रति इदम् उवाच ।**

**(व्या)** मां कामरहितं **मत्वा परिरेभे** ॥२८॥ (**तदा रमापतिः** साक्षात् मदुत्तरादिकं विना मन्मुखदर्शनमात्रेण मद्भावं ज्ञात्वा, 'निरुपाधिकदासविषये परीक्षा न युक्ता' इति परीक्षां त्यक्त्वा, **मुदा** 'अयम् एकान्तभक्तः' इति सन्तोषेण **परिरेभे** । किञ्च मां **पक्षीकृत्य तं दारं** प्रति तस्मिन् मन्दारवने उक्तवान् ॥२८॥)

**किं दारं जन्मकामार्तं वृन्दारकगुरुं प्रति ।**
**''भवान्तरे भविष्यन्तेऽभीप्सितं मास्तु तद्व्यथा ॥२९॥**
**सत्यं मयोदितं कान्त तावत्पत्यं तपः कुरु'' ।**

**(अन्वयः) वृन्दारकगुरुं प्रति जन्मकामार्तं किं दारं (प्रत्युवाच) 'हे कान्त! भवान्तरे ते अभीप्सितं भविष्यन्ते; तत् व्यथा मास्तु; मयोदितं सत्यम्; तावत्पत्यं तपः कुरु' ।**

**(व्या)** (कथंभूतं दारम्? वृन्दारकगुरुं प्रति जन्मकामार्तम्; अत एव किं दारम्? देवगुरुत्वेन श्वेतद्वीपे अधिकारं प्राप्य, परमहंसरूपेण ३६०००वर्षपर्यन्तं भूमौ क्लृप्तदेहयुक्तगुरु-विषये जातकामेन आर्तम्; अत एव किं दारम् । पुरुषभोगप्रयोजकअदृष्टहीनस्त्रियम् उद्दिश्य प्रीत्या उवाच । **ते अभीप्सितं** जन्मान्तरे भविष्यदभीप्सितम् । तस्मात् तद्व्यथा मास्तु ॥ भगवदाज्ञया तादृशादृष्टराहित्यं तदानीं() तस्याः । ननु पापकर्मनिमित्तेन । द्वात्रिंशल्लक्षणसम्पन्नानाम् ऋजुपत्नीनां परशुक्लत्रयवर्गस्थानां पापाभावात् ॥) 'पुरुषं वै देवाः पशुमालभन्ते' इत्यादि श्रुत्युक्तरीत्या यज्ञप्रयोजकदेवतासन्निधानरहिते पुरुषे किंपुरुषेति शब्दप्रयोगवत् पुंभोगरहिते जने किन्दारशब्दप्रयोगः ॥२९॥ (**हे कान्त!** दार! **मयोदितं सत्यम्** । उत्तरजन्मनि त्वं क्षत्रियत्वेन जातस्य लातव्यऋजोःपत्नी भविष्यसि । तावत्पर्यन्तं पतिसम्बन्धितपः कुरु । इति हरिरुवाच मन्दरपर्वते ॥३०॥

**इत्युक्तो हरिणा दारो गिरिमूर्धिर्न परात्परम् ।।३०।।**

**शरण्यं शरणं प्राप मां स्मरन् हृदि सर्वदा ।**
**मामपि प्राप्तवान् कामात् कमनीयं त्वमानवम् ।।३१।।**

(अन्वयः) गिरिमूर्धिर्न हरिणा इत्युक्तः दारः परात्परं शरण्यं शरणं प्राप; कमनीयं अमानवं माम् अपि सर्वदा हृदि स्मरन् कामात् मां प्राप्तवान् ।

**''सम्मानय मनस्तेन शमयानङ्गसङ्गमम् ।**
**भवान्तरेऽपि मां धीर तेऽधरामृतमन्वहम् ।।३२।।**

**वितरार्यैतदर्थे च मत्करं शिरसा धरन् ।**
**अहं यास्ये त्वया दत्तविश्वासं सत्यमेव च ।।३३।।**

**कुरु शीघ्रं सुरश्रेष्ठ श्रेयसे मे भवाय च'' ।**

(अन्वयः) हे धीर! मनः सम्मानय । तेन अनङ्गसङ्गमं शमय । भवान्तरे अन्वहं ते अधरामृतं वितर । हे आर्य! एतदर्थे मत्करं शिरसा धरन् च अहं यास्ये । त्वया दत्तविश्वासं च सत्यमेव । मे श्रेयसे भवाय च शीघ्रं कुरु ।

**(व्या)** (स दारः हरेराज्ञां शिरसा दधार । ततश्च गुरुराजसन्निधिं प्राप्य प्रीत्या उवाच ।।३१।। किमिति? **'हे धीर!** मम **मनः सम्मानय** । मां मनसा अङ्गीकुरु तव योग्या उत्तरजन्मनि' इति ।। **तेन** मधुकामजव्यथा नश्यति । उत्तरजन्मनि देहसम्बन्धेनापि मां तोषय ।।३२।। एवं कार्यसिद्ध्यर्थं इदानीं प्रतिबन्धकं अकृत्वा यास्ये । एतच्छ्रुत्वा गुरुराजः शिरसा सम्मतिं सूचयामास[१] । ततः स दारः 'त्वत्सम्मतिम् उत्तरजन्मनि शीघ्रं सत्यं कुरु । हे देवश्रेष्ठ! तेन । मे मोक्षे आनन्दवृद्धिः अत्र भक्तिवृद्धिर्भविष्यति[२] ।'

---

(१) **'मिथुनस्थं पञ्चरूपं ध्यात्वैव पुरुषोत्तमम् ।**
**अत्यागी च स्वभार्याणां मुच्यते नात्र संशयः' इति च । (छां.उ.भा. २.अ.१३खं)**

(२) – प्रागुक्त 'निर्दोषभूता च न मे मृषा वाक्' इति यत् श्रीगुरुराजऋजुस्थत्वमुक्तं तत् 'दत्तविश्वासं सत्यमेव च' इति तया उक्तवाक्येनापि दृढं भवति । 'अशरीरो हि वायुः; वायुपदयोग्याः च' तस्मात् –

**'यावद्विमुच्येत्पुरुषस्तावत्कामा हृदि श्रिताः।**
**चित्ताभावाद्विमुक्तस्य स्युः कामास्तद्गताः कुतः।**

**इत्युक्त्वा प्रययौ दारः कामराहित्यमार्यज (मार्जवम्) ।।३४।।**

**ख्यापयामास लोके मे सर्वत्र सुचरित्रिणः ।।**

(अन्वयः) इत्युक्त्वा दारः प्रययौ; सुचरित्रिणः मे कामराहित्यम् आर्जवं च लोके सर्वत्र ख्यापयामास ।

(व्या) इत्युक्त्वा प्रययौ । स दारः गुरुराजस्य निष्कामत्वम् आर्जवं च लोके पश्यतां ऋषीणां ख्यापयामास ।।

**इमां कथां च ये नित्यं शृण्वन्ति यतयोऽपि तु ।।३५।।**

**लभन्ते कामतः शान्तिं सुत सत्यं मयोदितम् ।।**

(अन्वयः) हे सुत! यतयः अपि ये च इमां कथां तु नित्यं शृण्वन्ति कामतः शान्तिं लभते । मयोदितं सत्यम्[१] ।

---

स्वरूपभूतचित्तेन कामाद्याः स्युः सुखात्मकाः।
दुःखात्मकाः प्राकृता वा मुक्तानां न कथञ्चन' इति ब्रह्मतर्के।

अयं जीवोऽथ मुक्त्यनन्तरमेवाशरीरो भवति। अमृतः कदाऽपि न मृतः। – इति बृहद्भाष्ये शारीरब्राह्मणे उक्त प्रमाणानुसारेण स दारः (ऋजुपत्नी) तु स्वरूपभूतचित्तभूतसुखात्मककामभूता । नतु अनङ्गजकामा

(१) 'सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः ।
विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ।
पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।
नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः' – इति नारदीये । (गी.भा.)

'नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्' (गी.भा.)
परः पराणां पुरुषस्तुष्टो यस्य जनार्दनः ।
स चाप्नोत्यक्षयं स्थानमेतत् सत्यं मयोदितम् – अत्रिः (कृ.म.)
तीर्थकोटिसहस्रैस्तु सेवितैः किंप्रयोजनम् ।
अच्युतानन्तगोविन्दनामोच्चारणभेषजाः ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ।।
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात् परं नास्ति न दैवं केशवात् परम् ।। – व्यासः (कृ.म.)

**(व्या)** दारदर्शनेऽपि कामराहित्यकथाश्रवणफलमाह – **इमामिति ।।** (यतीनामपि नित्य-श्रवणवतां कामतापो न भवति ।।३५।।) इति विप्रश्रोतृकप्रकरणं सम्पूर्णं ।।

**२. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (३६-६१)**

**(व्या)** **'मयोक्तश्लोकपूगेषु'** इत्यारभ्य **'मे सुवाग्धरा'** इत्यन्तं लक्ष्मीपतिनामक-श्रोतृकप्रकरणम् । अत्र तस्य व्याख्यानुज्ञां प्रदाय तत्फलमुक्त्वा तेन ज्ञानलाभसाधनत्वेन स्मर्तव्यं सूर्यनक्षत्रादिगतत्वरूपं दिव्यभाक्तवैभवं, तत्रत्य भगवदनुग्रहेण तैजसानेकदेहप्राप्तिरूपं दिव्य-भागवतवैभवं, सर्वभक्तानुग्राहकत्वं भौमाभौमभाक्तवैभवम्, रुक्मिणीसत्यभामात्मिकायाः रमायाः स्वकीयवागभिमानिरूपत्वं दिव्यभाक्तवैभवं चोच्यते – **मयोक्तेति ।।**

**मयोक्तश्लोकपूगेषु त्य(व)क्तुं योग्यान् पृथक्कुरु ।।३६।।**

**ये लौकिकार्था भासन्ते श्लोकांस्तान् कुलभूषण ।**
**चतुरध्यायगान् साङ्गं गङ्गास्नानफलं तव ।।३७।।**

**मङ्गलायनमाशास्यं निःसङ्गस्य वचो मम ।**

(अन्वयः) हे कुलभूषण! मयोक्तश्लोकपूगेषु ये लौकिकार्थाः भासन्ते तान् श्लोकान् साङ्गं चतुरध्यायगान् पृथक् कुरु । (तेन) गङ्गास्नानफलं तव । निःसङ्गस्य मम वचः आशास्यं मङ्गलायनम् ।

---

उक्तं सर्वेषु शास्त्रेषु तस्माद्ग्राह्यं बुभूषुभिः ।
इदं सत्यमिदं सत्यमिदं सत्यं न संशयः ।
कोटिभिः शपथैश्चापि निर्णीतं देवतागणैः – (बृ.उ.भा.)

'रुद्रे वेदेषु च प्राणः प्रविष्टश्छादितः सदा ।
सत्य इत्युच्यते नित्यं स्वरूपेणामृतः स्मृतः' इति च ।। (बृ.उ.भा. ३.अ.)

ऋतं च स्वाध्यायप्रवचने च कर्तव्यानि । प्रवचनं व्याख्यानम् । यथार्थज्ञानम् ऋतम् । तत्पूर्वकं यथार्थवचनं करणं च सत्यम् ।

'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः ।
ध्यानसत्ये पूज्यपूजा तप इत्यभिधीयते'।। इति शब्दनिर्णये (शिक्षावल्ली)

– इति शपथपूर्वकवचनानि बहुत्र दृश्यते ।

**(व्या)** मयोक्तश्लोकपूगेषु ये लौकिकार्थाः लौकिकफलकाः तान् चतुरध्यायगतान् कुरु । इत्येवं **वक्तुं योग्यान् पृथक्कुरु** । प्रथमाध्यायेन सह अध्यायचतुष्टये; एते लौकिकार्थप्रतिपादकाः एते लौकिकफलकाः; एते त्वलौकिकफलकाः इत्यापाततो न प्रतीयन्ते । इदं पदं पूर्वप्रकरण-सङ्गतत्वेनोपादेयं, इदं पदं तत्सङ्गगत्वेन अनुपादेयम्, इदमुत्तरप्रकरणसङ्गतत्वेनोपादेयमित्यपि आपाततो न प्रतीयन्ते । तान् श्लोकान् तेषामर्थमुक्त्वा एते 'रजतपीठपुरमप्रतिमं'(१/७१) इत्याद्याः लौकिकार्थाः । 'इन्द्रोपि सान्द्रसन्तोषात्'(२/१) इत्याद्याः अलौकिकार्थाः । इत्येवं रूपेण पृथक्कुर्विति भावः ।।३६।।

(**हे कुलभूषण!** इति लक्ष्मीपतेः सम्बुद्धिः । **'साङ्गं गङ्गास्नानफलं तव'** इति तस्य फल-कथनम् । शौचाचारस्नानसङ्कल्पदक्षिणादानपूर्वकं विध्युक्तप्रकारेण सकाले कृतस्नानफलं व्याख्यातु-र्लक्ष्मीपतेर्भविष्यति ।।३७।।) (तत्फलं मङ्गळानाम् अयनं ज्ञानसाधनानां प्रापकम् । **आशास्यम्** अधिकारिभिः अपेक्षणीयम् । **निःसङ्गस्य मम वचः** सत्यं भविष्यति । निःसङ्गस्य मम वचश्च **मङ्गळायनम् आशास्यम्** ।।३७ १/२।।)

**अष्टाध्यायेषु शिष्टानां तुष्टिं कुरु यथेष्टतः ।।३८।।**

**प्रौढिं पश्यामि ते सुष्ठु ममेष्टं शिष्ट साधय ।**
**इति च द्वादशाध्यायान् कुरु शुद्ध(शीघ्रं) बुधाग्रतः ।।३९।।**

**(अन्वयः) अष्टाध्यायेषु शिष्टानां तुष्टिं यथेष्टतः कुरु । हे शिष्ट! ते प्रौढिं पश्यामि । मम इष्टं सुष्ठु साधय । इति द्वादशाध्यायान् च शुद्ध बुधाग्रतः कुरु ।**

**(व्या)** एवं प्रथमाध्यायेन सह **अष्टाध्यायेषु** (५,६,७,८,९,१०,११+१= एवं अष्टाध्यायेषु) अपि । **शिष्टानाम्** अर्थमुक्त्वा **शिष्टानां** शेषादीनां (यथेष्टतः) **तुष्टिं कुरु** ।।३८।। (हे **शिष्ट ममेष्टं सुष्ठु साधय** । **ते प्रौढिं पश्यामि** ।।) **इति** एवं प्रथमाध्यायेन सह द्वादशाध्यायान् (११, १२-२२ इति द्वादशाध्यायान्) **शुद्ध** बुधाग्रतः वृन्दावनाचार्यपुरतः व्याख्याय शिष्टानां **तुष्टिं कुरु** ।। एवं कृते **तव गङ्गास्नानफलं साङ्गं** भवति । अत्र सर्वेष्वध्यायेषु (२२रल्ल) उक्तरीत्या पृथक्करणं व्याख्यानकरणं चावश्यकम् । 'चतुरध्यायगान्' 'अष्टाध्यायेषु' 'द्वादशा-ध्यायान्' इत्युक्त्या अध्यायचतुष्टये (१,२,३,४ इति चतुष्टये) भजनं प्राधान्येनोच्यते । अष्टाध्यायेषु (१,५,६,७,८,९,१०,११ इति अष्टसु) वैभवमुच्यते । द्वादशाध्यायेषु (१,१२,-

१३,१४,१५,१६,१७,१८,१९,२०,२१,२२ इति समाप्तिपर्यन्तं) निदर्शनमुच्यते । इति प्रतिपाद्यत्रयं सूचितं भवति । (प्रथमाध्यायस्य पर्वत्रयस्यापि नान्दीपीठरूपत्वात् न विरोधः । न तस्य त्रिरूपत्वं शंक्यं) **'गङ्गास्नानफलं तव'** इत्युक्त्या सच्छास्त्रस्य गङ्गातुल्यत्वम् । तदर्थावगाहनं गङ्गावगाहनसदृशमिति । व्याख्यातुः गङ्गाप्रसक्तिस्नानफलमस्तीति च सूचितं भवति ।।३९।।

**अहमाकाशगो नित्यं नाकिभिः सह लोकदृक् ।**
**पाकशासनमुख्यानां तोक मे शृणु वैभवम् ।।४०।।**

(अन्वयः) हे तोक! अहं नित्यं नाकिभिः सह पाकशासनमुख्यानां लोकदृक् अकाशगः; शृणु मे वैभवम्[१] ।

**मद्विमानमथाकाशे निमिषार्धेन च द्रुतम् ।**
**विरिञ्चलोकपर्यतं धावतीत्यधिरोप्य माम् ।।४१।।**

(अन्वयः) अथ मद्विमानं माम् अधिरोप्य आकाशे निमिषार्धेन च विरिञ्चलोकपर्यन्तं द्रुतं धावति इति ।

**(व्या)** कथं भवदनुग्रहेण मदीय गङ्गास्नानफलं साङ्गं भवेत्? इत्यत आह – **अहमिति ।।** 'विष्णुपादोद्भवा गङ्गा सत्यलोके, पाकशासनमुख्यानां लोके, नन्दनवने, भूमौ च प्रवहति । तत्र सर्वत्रापीति मद्विमानं सञ्चरति । काश्यादिगते तरङ्गोपेते गङ्गातीरेपि सञ्चरति । त्वदीयस्नानप्रदेशे स्थित्वा त्वया कृतं स्नानं मदन्तर्यामि भगवदर्पितं कृत्वा साङ्गं करोमि' इति भावः ।।

**चक्रवद्भ्रमते तत्र शक्रलोके च पुत्रक ।**
**वक्रबुद्धिहृदः शल्यमिव चङ्क्रमतेनिशम् ।।४२।।**

---

(१) 'द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम् ।
कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ।
भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् ।
स्वजात्याधिक्यदं तेषां तत् तिरोहितवैभवम्' इत्यादि च । (गी.भा.१०/४०)

इमानि कर्माणि रघूत्तमस्य हरेर्विचित्राण्यपि नाद्भुतानि ।
दुरन्तशक्तेरथ चास्य वैभवं स्वकीयकर्तव्यतयानुवर्ण्यते ।। – (म.भा.ता.नि. ४/६५)

**दिक्षु सर्वासु वृक्षेषु नन्दनस्थेषु नन्दन ।**
**स्यन्दनेन चराम्यङ्ग गङ्गातीरे तरङ्गिणि ॥४३॥**

**(अन्वयः) हे पुत्रक! तत्र शक्रलोके अनिशं चक्रवद् भ्रमते । वक्रबुद्धिहृदः शल्यम् इव चङ्क्रमते । हे नन्दन! अङ्ग! सर्वासु दिक्षु नन्दनस्थेषु वृक्षेषु तरङ्गिणि गङ्गातीरे स्यन्दनेन चरामि ।**

**(व्या) 'वक्रबुद्धिहृदः शल्यमिव'** इत्यनेन एतदाख्यानरूपायाः गङ्गायाः आमूलप्रविमर्शनसाधनं त्वदीयं मनः मद्विमानसदृशं । वक्रबुद्धीनां हृदः आख्यानाप्रामाण्यवादिनां मनसः शल्यवद्भविष्यतीति सूचितं भवति ॥४२॥ (**हे अङ्ग! सर्वासु वृक्षेषु** उपरिसमीपे च इत्यर्थः । विपरिणामेन अन्वयः । न केवलं सर्वासु दिक्षु किन्तु नन्दनवनस्थवृक्षसमीपे च । **स्यन्दनेन** विमानेन रथेन च(८/४६) तरङ्गोपेते **गङ्गातीरे** तरङ्गताडिते तीरे इत्यर्थः ॥४३॥)

**(अव)** एवं यमुनास्नानफलमपि भवतीति सूचयितुम् । तज्जनकसूर्यमण्डलस्थितपरमात्मप्रार्थकत्ववैभवमाह – **एवमिति ॥**

**एवं महानुभावोऽहं भानुमण्डलगं हरिम् ।**
**तद्रथस्योपरि प्राप्य प्रार्थयामि तमीश्वरम् ॥४४॥**

**(अन्वयः) एवं महानुभावः अहं भानुमण्डलगं हरिं तद्रथस्योपरि प्राप्य, तम् ईश्वरं प्रार्थयामि ।**

**(व्या)** अनेन बाह्यतमोविनाशकसूर्यमण्डलस्थभगवदाराधकत्वस्मरणेन व्याख्यानप्रतिबन्धकान्तःतमोनिवारकज्ञानरविप्रकाशोपि भविष्यतीति सूचितं भवति ॥ (**अहं महानुभावः** । अधिकसामर्थ्ययुक्तः, भानोः रथस्योपरि प्राप्य, भानुमण्डलनियामकं हरिसमीपं गत्वा, तमीश्वरं प्रार्थयामि

**कमनीयं कामहीनोप्यनिशं भानुमन्वहम् ।**
**मानितस्तेन देवेन मानिन् शृणु हरिप्रियम् ॥४५॥**

**(अन्वयः) हे मानिन्! अहं सदा कामहीनः । तथापि हरिप्रियं भानुम् अनु । देवेन तेन मानितः; कमनीयं (तं स्तौमि) ।**

**(व्या)** अहं सदा **कामहीनः** तथापि **हरिप्रियं भानुम्** अनु । तस्य पश्चाद्भागे स्थित्वा भानुना पूजितः हरिं पश्यन् कमनीयं तं स्तौमि इत्यर्थः ॥४५॥)

(अव) (किंच नानाप्रकारेण आयासं विना सञ्चरामीत्याह – **नानाविधैरिति** ।।)

**नानाविधैरनेकैश्च वाहनैर्वाहकैर्युतैः ।**
**चरामि मारतातं च स्मरामि हृदि सर्वदा ।।४६।।**

(अन्वयः) वाहकैः युतैः नानाविधैः अनेकवाहनैः च चरामि हृदि सर्वदा मारतातं स्मरामि च ।

(व्या) (अहम् **अनेकैः वाहनैः** अश्व-गज-रथ,विमानप्रभृतिवाहनैः । कथंभूतैः? **वाहकैः युतैः** । **चरामि** सर्वलोकान् सञ्चरामि । न तु विषयासक्तबुद्ध्या सञ्चारः इत्याह । **हृदि सर्वदा मारतातं** श्रीकृष्णं **स्मरामि**[१] । 'सञ्चारश्च भक्तजनानुग्रहार्थम्' इति भावः ।।४६।।)

(अव) व्याख्यानप्रतिबन्धकदैतेयविघ्नपरिहाराय प्रागुक्तं व्याख्यानमत्रापि अनुसन्धेयमित्याह – **मर्त्यलोकं त्विति** ।।४७।।

**'मर्त्यलोकं तु हित्वाहं सत्यलोकमितोगमम् ।**
**श्रुत्यभावं कर्तुकामो दैत्यः कश्चिद्धतो मया ।'**
**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।।४७।।**

(अन्वयः) हे बुद्धिमन्! 'मर्त्यलोकं ..... दैत्यः कश्चिद्धतो मया' इति पूर्वं मया प्रोक्तम् अनुसन्धत्स्व ।

**तस्मात्सर्वोत्तमो नित्यं जगतः पतिरप्रतिः ।**
**श्रियः पतिः सुरपतिः स विरिञ्चपतिः स्वयम् ।।४८।।**

(अन्वयः) तस्मात् नित्यं जगतः पतिः अप्रतिः सुरपतिः विरिञ्चपतिः श्रियः पतिः सः स्वयं सर्वोत्तमः ।

(व्या) ''हे लक्ष्मीपते! त्वत्कृतव्याख्यानेन मम जीवोत्तमत्वम् । मदन्तर्यामि विष्णोः सर्वोत्तमत्वम् अस्मत्कृताख्यानोक्तं श्रुत्वा मदन्तर्यामिणः ज्ञानभक्तिवैराग्यादिपुण्यादिरूपकरसमर्पणं

---

(१) **स्मरामि** इत्यनेन श्रीगुरुराजैः सञ्चरणयुक्तोपि श्रीकृष्णोपासनं कृतमिति ध्येयम् । तद्यथा – **उपासनं स्मरणं ध्यानात्मकं चेति, द्विधैव । तत्र स्मरणमेव सर्वदा योग्यम् । ध्यानरूपोपासनमासन एव भवति ।** – भावबोधे (ब्र.सू.भा. ४.१.८)

कुर्वन्तु सज्जनाः'' इति भावः । असुराणां तु दुर्योग्यताबलेन व्याख्यानादि साधनसद्भावेपि सम्यक् ज्ञानं न भविष्यति भावेनाह – **तस्मादिति** ।।४८।। (**स्वयं** = स्वातन्त्र्येण साक्षादेव न तु व्यवधानेन ।।४८।।)

**मयोक्तं सर्वोत्तमत्वं श्रुत्वा सर्वे सुरारयः ।**
**गर्विता वै हरिं नागुः श(शा)र्वं चापि (शर्वस्यापि) गुरुं च माम् ।।**

(अन्वयः) मयोक्तं सर्वोत्तमत्वं श्रुत्वा सर्वे गर्विताः सुरारयः हरिं, शर्वं चापि गुरुं मां च नागुः वै ।

**(व्या) मयोक्तमिति** । सर्वोत्तमो हरिरिति मयोक्तं **सर्वोत्तमत्वं श्रुत्वापि** । **सुरारयः** दुर्जीवाः **गर्विताः सन्तः हरिं** सर्वोत्तमत्वेन च **नागुः**[१] ।।४९।।

**साम्यबुध्या तामसास्ते मेघच्छन्नमिव ग्रहम् ।**
**कामतातं कोमलाङ्गं मानवं मेनिरे हरिम् ।।५०।।**

(अन्वयः) ते तामसाः साम्यबुद्ध्या कामतातं कोमलाङ्गं हरिं ग्रहं मेघच्छन्नम् इव मानवं मेनिरे ।

**(व्या) ते** हरिं **मानवं मेनिरे** । तस्मात् त्वदीयं व्याख्यानं न तेषाम् उपकारकम् ।।५०।। (**ते तामसाः मेघच्छन्नं** सूर्यमिव अज्ञात्वा **कामतातं** मोहककोमलाङ्गं **हरिं** केवल**मानवं मेनिरे** ।।[२]

कर्तव्या हरिगुरुसेवा

**मयोक्तसर्वोत्तमत्वं श्रुत्वा सर्वे हरिप्रियाः ।**
**गुर्वन्तर्यामिणः स्वैरं करं दास्यन्तु भूरिशः ।।५१।।**

---

(१) प्राप्यं प्राप्तं यतो नित्यं पूर्णं सर्वोत्तमं मया ।
अतः परमहंसोहं मदनन्तरमेव तु ।
यतः प्राप्तमिवाशेषं सर्वजीवोत्तमं शुभम् ।
अतो ब्रह्मपदे योग्या जीवा हंसाः प्रकीर्तिताः ।। भाग.(१०/९४/४०)

इति प्रमाणानुसारेण श्रीहर्यनन्तरं वायुः, वायुपदयोग्याः एव उत्तमत्वेन सम्भाव्यम् ।

(२) 'अजातो जातवद्विष्णुरमृतो मृतवत् तथा ।
मायया दर्शयेन्नित्यमज्ञानां मोहनाय च' इति ब्राह्मे ।। भाग.ता.(११/३१/११)

**(अन्वयः) सर्वे हरिप्रियाः मयोक्तसर्वोत्तमत्वं श्रुत्वा गुर्वन्तर्यामिणः भूरिशः स्वैरं करं दास्यन्तु.**

**(व्या) हरिप्रियाः** मत्प्रियाः । (ते **सर्वे** मया प्रतिपादकविष्णुसर्वोत्तमत्वं[(१)] निवृत्तप्रति-बन्धकतया ज्ञात्वा मदन्तर्यामि हयग्रीवाय करं ददातु ।।५१।।)

**ममापि जीवोत्तमत्वं श्रुत्वा सर्वे मम प्रियाः ।**
**गर्वं हित्वा प्रदास्यन्तु गुर्वंतर्यामिणः करम् ।।५२।।**

**(अन्वयः) सर्वे मम प्रियाः मम जीवोत्तमत्वं अपि श्रुत्वा गर्वं हित्वा गुर्वन्तर्यामिणः करं प्रदास्यन्तु ।**

**(व्या)** (तथैव मम जीवोत्तमत्वमपि आख्यानेन श्रुत्वा, ये **मम प्रियाः** मया साकं मुच्यमानाः ते विशेषतः । जगद्गुरौ मध्वे विद्यमाने वादिराजस्वामिभिः किम्? इति गर्वम् अप्राप्यः ममान्तर्यामिणः करं ददतु[(२)] ।।५२।।)

---

(१) 'विष्णोः सर्वोत्तमत्वस्य ज्ञानार्थं शास्त्रमिष्यते ।
अतस्तत्साधकं शास्त्रं दुःशास्त्रं तद्विरोधि यत्' इति ब्रह्माण्डे ।
'विष्णोः सर्वोत्तमत्वं च तद्भक्त्या मोक्ष एव च ।
शास्त्रार्थ इति निर्दिष्टः सर्वशास्त्रार्थनिर्णयात्' इति पाद्मे । (बृ.उ.भा.)

करसमर्पणं तु अधोनिर्दिष्टप्रमाणानुसारेण वैष्णवग्रन्थव्याख्यानं, वैष्णवमन्त्रादिजपनम् इत्यादिः इति ध्येयम् । श्रीगुरुराजकृतहितोपदेशः; श्रीमध्वकृतद्वादशस्तोत्रादीनां भक्त्या पारायणं कर्तव्यमेवेति सम्यगनु-सन्धेयम् ।

'सम्यग् ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च ।
न तस्य किंचिदकृतं कर्तव्यं मुच्यते च सः' ।। इति कर्मतत्त्वे । (शिक्षावल्ली)

(२) 'संसारवृक्षच्छेत्ताहं मत्कीर्तिः पर्वतोपमा ।
अत्युत्कृष्टेन हरिणा पावितोस्मि यतः स्फुटम् ।।
वाजिरूपश्च नेता च वाजिनी सूर्य उच्यते ।
तत्रस्थो भगवान् विष्णुस्सम्प्रोक्तो वाजिनीवसुः ।।
तेनामृतोस्मि द्रविणं नित्यानन्दस्वरूपतः ।
तेनामृतेन सिक्तोहं तेन व्याप्तो यतस्सदा ।
इत्याह मन्त्रदृक् पूर्वं त्रिशङ्कुर्मानवो नृपः' ।। –इति यजुर्विवेके । (शिक्षावल्ली)

**इत्थं सर्वोत्तमत्वं तु श्रुत्वा सर्वेपि सात्त्विकाः ।**
**हित्वा संसृतिमार्गं तु यान्तु विष्णोः सलोकताम् ।।५३।।**

(अन्वयः) इत्थं (श्रीहरेः) सर्वोत्तमत्वं (मम जीवोत्तमत्वं च) श्रुत्वा, सर्वे सात्त्विकाः अपि संसृतिमार्गं हित्वा विष्णोः सलोकतां तु यान्तु ।

**(व्या)** अत्र आख्यानरूपगुरूपदेशव्याख्यानादिकं श्रुत्वा सात्त्विकानां [१]संसृतिनाशः । विष्णुसालोक्यप्राप्तिश्च । उच्यते ५३श्लोके फलरूपेण ।।५३।।

**एवं मया जगत्सर्वं वैष्णवं चास सात्त्विकम् ।**
**आसुरं शार्वमेवास मयोक्तेपि स्वयोग्यतः ।।५४।।**

(अन्वयः) सात्त्विकं जगत् सर्वं एवं मया वैष्णवं च आस । मयोक्ते अपि आसुरं (जगत्) स्वयोग्यतः शार्वमेव आस ।

**(व्या)** (एवं मयेति ।। एवं मदवतारेण सात्त्विकाः तामसाश्च विभक्ताः अभवन्; सात्त्विकाः मामनुसृत्य हरिं शरणं प्रापुः । तामसास्तु मयि द्वेषं प्राप्य विनष्टाः । तथा च सर्वे सात्त्विकाः प्राप्तज्ञाना बभूवुः । असुरास्तु मदुपदेशो कृतेपि शैवादिमार्गम् अवलम्ब्य अवर्तन्त योग्यतः स्वयोग्यतानिमित्तात् । मद्भक्तिः अथवा मयि द्वेषः इति योग्यता- विष्कारप्रयोजकधर्मः इति निर्णीतः ।)

**मद्भक्ताः सुखिनः सन्तु शश्वज्जीवन्तु मत्प्रियाः ।**
**ममाभक्ताः प्रयास्यन्तु तमोन्धं तामसाश्च ते ।।५५।।**

(अन्वयः) मद्भक्ताः सुखिनः सन्तु, मत्प्रियाः शश्वत् जीवन्तु । मम अभक्ताः तामसाः ते च अन्धं तमः प्रयास्यन्तु ।

**(व्या) मम प्रियाः** भगवद्भक्तेषु मदनुग्रहेणैव प्राप्तव्यमोक्षादिफलकाः । तस्मात् त्वत्कृतात् व्याख्यानात् आख्याने मयोक्तं हरेः सर्वोत्तमत्वं श्रुत्वा, अमन्दं मम जीवोत्तमत्वं च श्रुत्वा

---

(१) 'संसृतिः' - । तद्यथा –

विद्यमानवदेवैतद्देहादीशवशे स्थितम् ।
विभाति स्ववशत्वेन सैषा संसृतिरुच्यते ।
तस्मात्तद्विषयं त्यक्त्वा मनो विष्णौ निवेशयेत्' इति हरिवंशेषु ।।

मदन्तर्यामिणः तोषः फलमित्युक्तं भवति ।।५३-५५।। (तस्मात् फलितमाह । मद्भक्ताः विष्णुं ज्ञात्वा सुखी भवन्तु । दीर्घायुषा साधनं कुर्वन्तु । मयि द्वेषिणः विष्णुद्वेषमपि प्राप्य अन्धन्तमः प्रविशन्त्येव इत्यर्थः ।।)

**अहं नक्षत्रमध्यस्थः सुक्षेत्राणि प्रकाशयन् ।**
**तत्क्षेत्रवासिनः सर्वे भिक्षामात्रं ददुश्च मे ।।५६।।**

**(अन्वयः) अहं सुक्षेत्राणि प्रकाशयन् नक्षत्रमध्यस्थः (अस्मि) । सर्वे तत् क्षेत्र-वासिनः मे भिक्षामात्रं च ददुः ।**

**(व्या)** अत्यल्पे मयि कथं भवतामेतादृशी कृपा? इत्याशङ्कां परिहर्तुमाह – **अहमिति ।।** सूर्यमण्डलस्थितस्यापि मम नक्षत्रमण्डलमध्यस्थमिव रुद्रादिष्वन्तर्यामितया स्थितस्यापि त्वदनु-ग्राहकत्वं (युज्यते) । सुक्षेत्राणि सूर्यादीनां **सुक्षेत्राणि प्रकाशयन्** इत्यनेन 'अश्विन्यादिनक्षत्रगतस्य ममानुग्रहात्; मेषादिषु राशिषु सूर्यादीनामिव सञ्चारकाले सुक्षेत्रवासेन एतत्फलम् । तत्फलं भक्तानां भविष्यति । तवापि व्याख्यानप्रतिबन्धकनिवृत्तिर्भविष्यति' इति भावः ।। (तत्क्षेत्रवासिनः सर्वे 'भूयिष्ठां ते नम उक्तिं विधेम' इति न्यायेन केवलं भिक्षां ददुः ।।५६।। )

**इति तेषां वदन्नित्यं तन्मध्यस्थो भवामि च ।**
**मत्तेजसा तिरस्कारः सर्वेषां तेजसामभूत् ।।५७।।**
**यथा सूर्यप्रकाशेन तेजसां च तिरस्कृतिः ।**
**तथा मत्तेजसा सर्वतेजसां च तिरस्कृतिः ।।५८।।**

**(अन्वयः) नित्यं इति तेषां वदन् तन्मध्यस्थः भवामि च; सर्वेषां तेजसां तिरस्कारः मत्तेजसा अभूत् । यथा सूर्यप्रकाशेन तेजसां च तिरस्कृतिः तथा सर्वतेजसां च मत्तेजसा तिरस्कृतिः ।**

**(व्या)** (इति आख्यानोक्तप्रकारेण तेषां नक्षत्रमण्डलस्थजनानां मम महिमानं बोधयन् तेषां नियामकतया वसामि । तेषां नक्षत्रमण्डलवासिनां तेजस्तिरस्कारः अभूत् । सूर्यप्रकाशेन नक्षत्रादि कान्तिः यथा तथेति दृष्टान्तः । सर्वाधिकतेजोबलपूर्णोहमिति भावः[१] ।।५८।।)

---

(१) आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ ।
तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि ।

**स्यात्पश्यतां च नेत्राणि मुष्णन् विष्ण्वाज्ञया सदा ।**
**अहं निषण्णस्तन्मध्ये विषण्णाः सर्व एव ते ।।५९।।**

**इत्थं तैजसदेहानां सन्दोहं सन्ददाति मे ।**
**बुधाग्र्यस्य स्वपादाब्जसेवया वै गदाधरः ।।६०।।**

(अन्वयः) सदा विष्ण्वाज्ञया पश्यतां नेत्राणि च मुष्णन् तन्मध्ये अहं निषण्णः स्यात् सर्व एव ते विषण्णाः । इत्थं तैजसदेहानां सन्दोहं बुधाग्र्यस्य मे गदाधरः स्वपादाब्जसेवया सन्ददाति वै ।

**(व्या)** ('एवं हरेराज्ञया मत्तेजसः आधिक्यं प्रकाशयन् तान् नक्षत्रवासिजनान् अनुगृह्णामि' इति भावः ।।५९।।) **इत्थम्** एवं **तैजसदेहानां** तेजोमयशरीरिणां **सन्दोहं** समूहं सूर्याद्यपेक्षया अतिशयितप्रकाशोपेतम् ।।६०।। ('**बुधाग्र्यस्य** मे **गदाधरः स्वपादाब्जसेवया** सन्तुष्टः सन् संददाति' इति योजना ।।६०।।)

**(व्या)** मदीय वागभिमानिनी रमेति त्वया ज्ञातव्यमिति भावेनाह – **शारदेति ।।**

**शारदा नीरदश्यामा नारदाराधितादरात् ।**
**वेदोदरी श्रीधराज्ञाधारिणी मे सुवाग्धरा ।।६१।।**

(अन्वयः) वेदोदरी श्रीधराज्ञानुसारिणी शारदा नीरदश्यामा नारदाराधिता आदरात् मे सुवाग्धरा.

**(व्या)** वागभिमानित्वात् **शारदा,** भूरूपत्वा**न्नीरदश्यामा**, **दक्षिणा**रूपत्वान्नारदाराधिता = 'नारदः रुग्मिणीं स्तुत्वा पुष्पं पारिजातस्य दत्वा' (म.भा.ता.नि. २०.८२) इत्यादेः । एतादृशी रमा **मे सुवाग्धरा** वागभिमानिनी ।।६१।। लक्ष्मीपतिप्रकरणं सम्पूर्णं ।।

---

आदानात् सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः ।
मुच्यन्ते ऋषयो नित्यं नान्यथा तु कथंचन ।
वायुस्थमाश्रिता देवाः पवमानाभिधं हरिम्।
संसारात् पावयित्वा यन्महानन्दे मिनोत्ययम् ।
पवमानस्ततो विष्णुर्व्याप्तः सर्वासु दिक्षु च ।
– महैतरेयोपनिषद्भाष्ये 'एषः पन्था' इत्यादिवाक्यव्याख्या सन्दर्भे ।

३. विप्रप्रकरणम्।। श्लोकाः (६२-१०२)

(व्या) रथस्योपरि इत्यारभ्य 'खगमुख्यैश्च दैवतैः' इत्यध्यायान्तं विप्रश्रोतृकं तृतीयं प्रकरणं । सर्वदेवोपास्यत्वरूपं दिव्यभाक्तवैभवम् । रामोपेन्द्रानुग्राहपातृत्वरूपं भागवतवैभवं चात्रोच्यते । यद्यपीदं पूर्वमुक्तम् । तथाप्यत्र यौगपद्येन सकलभवनगमनाद्विशेष उच्यते – रथस्योपरीति ।।

**रथस्योपरि तिष्ठन्तमरुणो न्यरुणद्धि माम् ।**
**वरुणं प्रति गच्छन्तं चरणेन विना कृतः ।।६२।।**

**''मात्रा भ्रात्रा विहीनोहं त्राता त्वं मम सर्वदा ।**
**यात्रां न कुरु चात्रापि तिष्ठ रूपान्तरेण च'' ।।६३।।**
**गरुडाग्रज इत्थं मामवदज्जरठाद्य च ।**

(अन्वयः) रथस्योपरितिष्ठन्तं वरुणं प्रति गच्छन्तं माम् अरुणः न्यरुणत् हि । चरणेन विना (प्रार्थनां च) कृतः; हे जरठाद्य! 'मात्रा भ्रात्रा विहीनः अहम्; सर्वदा त्वं मम त्राता; यात्रां न च कुरु; अत्रापि च रूपान्तरेण तिष्ठ' इत्थं च गरुडाग्रजः माम् अवदत् ।

(व्या) जडाद्य जडमतिषु आद्य इति विप्रसम्बोधनम् ।।६४।। (यदा अहं सूर्यरथे स्थितः तदा वरुणलोकगमनाकाङ्क्षिणं मां प्राप्य सूर्यसारथिः अरुणः मां प्रार्थितवान् । मत्समीपे एव रूपान्तरेण वस । अहं पालकरहितः अङ्गवैकल्यवांश्चेति । हे जरठाद्य विप्र! गरुडाग्रजः एवम् अवदत् ।)

**इति तेनोक्त एवाहं कान्त रूपान्तरेण च ।।६४।।**
**वसामि वसुभिः साकं कश्यपात्मजपूजितः ।**
**करटाभः स्वबुद्ध्या त्वं मद्बुद्ध्या श्रेष्ठ एव च ।।६५।।**

(अन्वयः) हे कान्त! इति तेन उक्त एव अहं रूपान्तरेण च वसुभिः साकं कश्यपात्मजपूजितः सन् वसामि. त्वं स्वबुद्ध्या करटाभः. मद्बुद्ध्या श्रेष्ठ एव च.

(व्या) तर्हि (जडाद्यत्वे) तस्य आख्यानोपदेशः कथम्? इत्यत आह – करटाभेति ।। गजाभः ।।६५।। (अहं प्रार्थनामङ्गीकृत्य तन्निकटे रूपान्तरेण अवसम् ।।६२-६४।।)

**वरुणोपि तदाह्वातुमागतो मां प्रति प्रिय ।**
**कान्त रूपान्तरेणापि तद्गेहं गतवानहम् ।।६६।।**

(अन्वयः) हे प्रिय! तदा माम् आह्वातुं वरुणः अपि आगतः; हे कान्त! रूपान्तरेण अपि तद्गेहं अहं गतवान् ।

(व्या) (वरुणः माम् आह्वयामास । रूपान्तरेण तद्गेहं गतवानहम् ।।६६।।)

**यमोपि मां समाह्वातुं स्वयमेवागतो महान् ।**
**''रामस्त्वामीक्षते काममागमिष्यति मत्प्रियः'' ।।६७।।**

**इत्यवोचद्वचः प्राश्वन् काश्वनेच्छारुचिं च माम् ।**
**हरिलाञ्छनसञ्छन्नं शङ्खचक्राङ्कितं भुजे ।।६८।।**

(अन्वयः) महान् यमः अपि मां समाह्वातुं स्वयमेव आगतः । हे प्राश्वन्! काश्वनेच्छारुचिं भुजे शङ्खचक्राङ्कितं हरिलाञ्छनसञ्छन्नं मां च 'मत्प्रियः आगमिष्यति इति रामः कामं त्वाम् ईक्षते' इति वचः अवोचत् ।

(व्या) (**यमः स्वयमेव** आगत्य; यमसभाधिपतिः **रामः त्वाम् ईक्षितुं** भक्तपरवशतया वर्तते इत्युक्त्वा ।।६७।। गुरुराजम् आह्वयामास । **हे प्राश्वन्! हरिलाञ्छनसञ्छन्नं शङ्खचक्राङ्कितं** भुजे । किंच) **काश्वनेच्छारुचिम्** = काश्वनेच्छाः तेषु अरुचिं रुचिरहितं विरक्तमित्यर्थः ।।६७।।

**कान्त रूपान्तरेणापि तद्गेहं गतवानहम् ।**
**शान्तं कान्तं पराक्रान्तं रामं तं सन्नतोस्म्यहम् ।।६९।।**

(अन्वयः) हे कान्त! तद्गेहं रूपान्तरेण अपि अहं गतवान्; (तत्र) शान्तं कान्तं पराक्रान्तं तं रामम् अहं सन्नतः अस्मि.

(व्या) (तदा यमसभां गत्वा श्रीरामचन्द्रं दृष्ट्वा अनमं भक्त्या ।।६९।।)

**इन्द्रोपि सान्द्रसन्तोषादुपेन्द्रस्याज्ञया प्रभुः ।**
**केन्द्रस्थानगते चन्द्रे मुनींद्रं मां समाह्वयत् ।।७०।।**

**कान्त रूपान्तरेणापि तद्गेहं गतवानहम् ।**

(अन्वयः) प्रभुः उपेन्द्रस्य आज्ञया सान्द्रसन्तोषात् इन्द्रः अपि केन्द्रस्थानगते चन्द्रे मुनीन्द्रं मां समाह्वयत्; हे कान्त! रूपान्तरेणापि तद्गेहम् अहं गतवान् ।

**तमुपेन्द्रं चिदानन्दसान्द्रसुन्दररूपिणम् ॥७१॥**

**कन्दाशनेन्द्रवन्द्योहमिन्दिरापतिमव्ययम् ।**
**नतोस्मि तस्य संदृष्टिं सङ्गतोस्मि समागमम् ॥७२॥**

**प्राप्तोस्मि स्वामिनः श्रीनिवासस्य मनसाप्यहो ।**
**पापान्धकारसंरुद्धः कुर्वन् यो दीपमालिकाम् ॥७३॥**

**कोपान्धकारितमुखं भास्करिं च न पश्यति ।**

(अन्वयः) चिदानन्दसान्द्रसुन्दररूपिणं कन्दाशनेन्द्रवन्द्यं इन्दिरापतिम् अव्ययं तम् उपेन्द्रं नतः अस्मि; तस्य संदृष्टिं सङ्गतः अस्मि; स्वामिनः श्रीनिवासस्य मनसा अपि समागमं प्राप्तः अस्मि; अहो. 'यः दीपमालिकां कुर्वन् पापान्धकारसंरुद्धः च कोपान्धकारितमुखं भास्करिं न पश्यति' ।

(व्या) (इन्द्रसभानायकः उपेन्द्रः; **उपेन्द्राज्ञया** इन्द्रोपि गुरुराजं समाह्वयत् ॥७०॥ गुरुराजः इन्द्रगृहं गत्वा उपेन्द्रं भक्त्या ननाम ॥७१॥ अहं कन्दाशनवन्द्यः मुनिश्रेष्ठः; तस्माद्भक्त्या उपेन्द्रस्वामिकृपाकटाक्षविषयः अभूवम् ॥७२॥ **मनसा श्रीनिवासस्य** उपेन्द्रस्य उपासनाम् अकरवम् । यस्मै परमात्मने दीपमालिकां प्रज्वाल्य पापिष्ठोपि यमयातनां नैव प्राप्नोति । तादृशपरमात्मानं शरणं प्राप ॥७३ १/२॥

**तदैव मां समाह्वातुं धनदोपि समागतः ॥७४॥**

**"सदैव मे गृहावासं विबुधेन्द्र कुरु प्रिय" ।**
**इति मामुक्तवान् भक्त्या शक्त्या हस्तं प्रगृह्य मे ॥७५॥**

**स्वगृहं प्रापयामास प्रीत्या विप्र न संशयः ।**
**कान्तरूपान्तरेणापि तद्गेहं गतवानहम् ॥७६॥**

(अन्वयः) तदा एव धनदः अपि मां समाह्वातुं समागतः; हे विप्र! 'हे विबुधेन्द्र! प्रिय! मे गृहावासं सदा एव कुरु' इति मां उक्तवान् । भक्त्या शक्त्या मे हस्तं

प्रगृह्य स्वगृहं प्रीत्या प्रापयामास; न संशयः । हे कान्त! रूपान्तरेण अपि तद्गेहं अहं गतवान्.

(व्या) (तदा **धनदः** विनयेनागत्य ।।७४।। सर्वदा तस्य भवने वासार्थम् आह्वयामास । भक्त्या गुरुराजहस्तं प्रगृहीतवान् ।।७५।।) (कुबेरगृहं रूपान्तरेण गतवान् ।।७६।।)

**तदैव शूली शिरसि त्रिशूली हस्ते गले सक्तनृरुण्डमाली ।**
**दलीकृतान्धश्च शिलीमुखेषु हालाहली गलमध्ये महात्मा ।।७७।।**

**श्मशानवासी धृतभस्मराशिर्भस्मीकृतत्रिपुरः पौरुषेण ।**
**भस्मासुराज्जातभयी पिनाकी नाकीश्वरं मां समुपाजगाम ।।७८।।**

(अन्वयः) तदा एव शिरसि शूली हस्ते त्रिशूली गले सक्तनृरुण्डमाली शिलीमुखेषु दलीकृतान्धः च गलमध्ये हालाहली स्मशानवासी धृतभस्मराशिः पौरुषेण भस्मीकृतत्रिपुरः भस्मासुरात् जातभयी पिनाकी महात्मा नाकीश्वरं मां समुपाजगाम.

(व्या) **शिरसि शूली** = शिरसि वेदनावान्, हस्ते त्रिशूलायुधवान्, गले सक्ता नृरुण्डमाला अस्यास्तीति तथोक्तः । **शिलीमुखेषु** बाणेषु सत्सु । **दळीकृतः** संहृतः अन्धकारः येन सः । **गलमध्ये हालाहली** विषवान् ।।७७।।

**गङ्गाधरो मङ्गलनाम मूर्धिर्न ध्यानान्तरङ्गी ।**
**सर्वलिङ्गान्तरस्थः (स्वार्धांग्या च सार्धं) ।।७९।।**

**उत्तुङ्गकैलासकृताङ्गवासो निःसङ्गिनं मां त्वागतः स्वागतोक्त्या ।।८०।।**

**आह्वयामास मां प्रीत्या मापतेः प्रियमुत्तमम् ।**
**कान्त रूपान्तरेणापि तद्गेहं गतवानहम् ।।८१।।**

(अन्वयः) मूर्ध्नि गङ्गाधरः मङ्गलनामः ध्यानान्तरङ्गी (श्रीरामध्यानान्तरङ्गी) सर्व-लिङ्गान्तरस्थः स्वार्धांग्या च सार्धम् उत्तुङ्गकैलासकृताङ्गवासः तु आगतः स्वागतोक्त्या मापतेः प्रियम् उत्तमं निःसङ्गिनं मां प्रीत्या आह्वयामास । हे कान्त! रूपान्तरेण अपि तद्गेहम् अहं गतवान् ।

(व्या) स्पष्टम् ।।७८-७९।। (उन्नतकैलासशिखरे वासवान् मां निरभिमानिनं) **स्वागतो-**

क्त्या आह्वयामासेत्यन्वयः ।। (आह्वयामासुरिति ।। लक्ष्मीपतेः प्रियं स्वरूपोत्तमं माम् आह्वयामास शिवः । अहं रूपान्तरं प्राप्य तद्गेहं गतवान् ।।८१।।)

**एवं सर्वेपि देवाश्च कालेनैकेन मां तदा ।**
**आह्वयामासुरायान्तमगमं बहुरूपकैः ।।८२।।**

(अन्वयः) एवं सर्वेपि देवाः च आयान्तं मां तदा कालेन एकेन आह्वयामासुः । (अहमपि) बहुरूपकैः अगमम् ।

(व्या) (एवं प्रधानदेवाः पूर्वोक्ताः स्वर्गं प्रति आयान्तं मां दृष्ट्वा युगपत् आह्वयामासुः । बहुरूपाणि स्वीकृत्य, अहं युगपत् तेषां सर्वेषां सत्कारं स्वीकृतवान् इति भावः ।।)

**भस्मराशिरिति प्रोक्ते धृतेत्युपपदेन च ।**
**साकं शोकविहीनेन कृतभस्मेति चोच्यते ।।८३।।**

**तालपत्रे तथा विप्र लेखनं नैव कारय ।**

(अन्वयः) धृतेत्युपपदेन साकं भस्मराशिः इति च प्रोक्ते शोकविहीनेन 'कृतभस्मः' इति च उच्यते । हे विप्र! तालपत्रे तथा लेखनं नैव कारय ।

(व्या) धृतभस्मराशिरित्यत्र कृतभस्मेत्युक्तं समीकरोति – भस्मेति ।।८३।। (प्रमादो न कर्तव्यः । ताळपत्रे शुद्धपाठं लेखय इति भावः ।)

(व्या) मनसः एकत्र हरिचरणादौ अवस्थितिसाधनत्वेन स्मर्तव्यमाह – लोकेति ।।

**लोकवार्तां त्यज त्वं तूलूखले बद्धगोपकम् ।।८४।।**

**स्मर क्षिप्रप्रसादं तु स करिष्यति दारकः ।**
**द्वारकापतिरेवायं मद्बृन्दावनमार च ।।८५।।**

(अन्वयः) लोकवार्तां त्वं त्यज; उलूखले बद्धगोपकं तु स्मर; स दारकः क्षिप्रप्रसादं तु करिष्यति; अयं द्वारकापतिरेव मद्बृन्दावनम् आर च ।

(व्या) मातुः तोषणाय (दारकः =) उलूखले बद्धत्वेन स्मृतो बालरूपो हरिः क्षिप्रप्रसादं करिष्यति; दारकत्वात् । तेन मनोपि एकत्र हरिचरणादौ निबद्धं भविष्यति इति भावः ।। (अयं

दामोदरः कुत्रेत्यत आह) सोऽपि वृन्दावनस्थत्वेन ध्येयः इति भावेनाह – **द्वारकेति ।। आर प्राप** ।।८५।।

**नीलात्मकस्तदैवाग्निः कालाग्निरिव लोकहा ।**
**''ममालयं समागच्छ मां पालय सुशील भो'' ।।८६।।**

**इत्युवाच स तेजस्वी तेजोरूपं च मां प्रति ।**
**कान्तरूपान्तरेणापि तद्गेहं गतवानहम् ।।८७।।**

(अन्वयः) तदा एव नीलात्मकः अग्निः कालाग्निः इव लोकहा, स तेजस्वी तेजोरूपं मां प्रति च 'भो सुशील! मम आलयं समागच्छ; मां पालय' इति उवाच । हे कान्त! रूपान्तरेण अपि तद्गेहं अहं गतवान् ।

(व्या) **नीलात्मकः** = रामावतारकाले नीलनामककपिरूपेणोत्पन्नः ।।८६-८७।।

**तदैव निर्ऋतिः प्राप्तो वररुचिरुवाच सर्वदा ।**
**वायुप्रभृतिभिः सार्धं स्वैरं विहर मद्गृहे ।।८८।।**

(अन्वयः) तदा एव वररुचिः निर्ऋतिः प्राप्तः सन् उवाच । 'सर्वदा वायुप्रभृतिभिः सार्धं मद्गृहे स्वैरं विहर' ।

(व्या) (पदार्थः स्पष्टः । निर्ऋति पाठः । 'सर्वदा मद्गृहे विहर' इति अन्वयः ।।८८।।)

**इत्युक्तवन्तस्ते सर्वेऽप्याह्वयामासुरञ्जसा ।**
**तत्तद्रूपान्तरैरेव तत्तद्गेहमगां तदा ।।८९।।**

(अन्वयः) इत्युक्तवन्तः ते सर्वेपि अञ्जसा आह्वयामासुः; तत्तत् रूपान्तरैः एव तत्तद् गेहं तदा अगाम् ।

(व्या) (यथा निर्ऋतिः तथा **सर्वे** दिक्पालाः **आह्वयामासुः** । तत्तद्गृहयोग्यरूपं स्वीकृत्य तेषां पूजां स्वीकृतवानित्यर्थः ।।८९।।)

**व्यञ्जनस्याधिकत्वेन न छन्दस्य(स्ये)तिदूषणम् ।**
**स्वच्छन्दवृत्तेर्मम कश्छन्दोभङ्ग एव च ।।९०।।**

**(अन्वयः) व्यञ्जनस्य अधिकत्वेन न छन्दस्य अतिदूषणम् । स्वच्छन्दवृत्तेः मम कःछन्दोभङ्गः एव च ।**

**(व्या)** (**व्यञ्जनस्य** । 'वररुचिरुवाच सर्वदा' इत्यत्र व्यञ्जनाक्षरस्य ।।९०।। **स्वेच्छा-नियतस्य** = हर्याज्ञानुसारेण सर्वदा वर्तमानस्य ऋजोर्मम काव्ये छन्दोभङ्गदोषः नास्ति । 'न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' इत्युक्तरीत्या समाधानं ज्ञेयः ।।९०।।

**इत्थमेवाष्टदिक्पालैः स्पष्टं सम्प्रार्थितोस्म्यहम् ।**
**हृष्टरूपान्तरैरेव शिष्ट यामि दिशो दश ।।९१।।**

**(अन्वयः) इत्थं एव अष्टदिक्पालैः स्पष्टम् अहं सम्प्रार्थितः अस्मि; हे शिष्ट! हृष्टरूपान्तरैः एव दश दिशः यामि ।**

**(व्या)** (**इत्थमेव अष्टदिक्पालैः अहं प्रार्थितः** इति पुनर्वचनं स्वस्य देवाद्युपास्य ऋजुत्वनिर्णयाय ।। **हे शिष्ट!** योगजशक्त्या आयासं विना **बहुरूपैः** दशदिक्षु विद्यमानभक्तगेहानि गच्छामि इत्यर्थः ।।९१।।)

**(अव)** अग्नेर्नीलात्मकत्वस्मरणेन अध्यायादौ सूचितस्य अग्न्युपद्रवस्य स्वाभिमतगेहे शमनं सूचितम् । तद्वन्नीलमेघसदृशस्य चन्द्रमण्डलमध्यस्थवामनस्य स्मरणमपि सिंहावलोकनन्यायेन स्मारयितुमाह – **मूलरूपेणेति** ।।९३-९४।।

**मूलरूपेण बालार्कसदृशं कमलेश्वरम् ।**
**नीलमेघप्रतीकाशं लोकदृष्ट्या महाबलम् ।।९२।।**

**समयेन दृढं बद्ध्वा कमनीयं च मानवम् ।**
**शमनं तन्मनःकामं वामनं तं नमाम्यहम् (नतोस्म्यहम्) ।।९३।।**

**(अन्वयः) मूलरूपेण बालार्कसदृशं कमलेश्वरं नीलमेघप्रतीकाशं लोकदृष्ट्या महाबलं कमनीयं समयेन दृढं बद्ध्वा तन्मनःकामं शमनं तं मानवं वामनं नतः अस्मि.**

**(व्या)** कुजनाशङ्कयाजातं वृजिनं पापम् । तत्परिहारकम् (१/८२ उक्तम्) ।।९५।। (तथा मानवाकारेण प्रतीतं मानवानां मनःकामं शमयतीति **शमनं** । अभीष्टदायकं वामनस्वामिनं **नमामि** ।)

**चन्द्रमण्डलगं विष्णुमिन्द्राण्याखण्डलार्चितम् ।**
**सान्द्रं कमण्डलुधरं चोपेन्द्रं चाण्डलग्नकम् ॥९४॥**

**भजामि भजनीयं तं भुजगेश्वरशायिनम् ।**
**कुजनाशङ्कया जातवृजिनार्तिहरं च मे ॥९५॥**

(अन्वयः) चन्द्रमण्डलस्थं सान्द्रं कमण्डलुधरम्, इन्द्राण्याखण्डलार्चितं विष्णुम् अण्डलग्नकम् उपेन्द्रं, मे कुजनाशङ्कयाजातवृजनार्तिहरं च, तं भजनीयं भुजगे-श्वरशायिनं भजामि ।

**(व्या)** (**चन्द्रमण्डल**मध्यस्थं हयग्रीवं नमामि । अमृतपूर्ण**कमण्डलु**धारिणं धन्वन्तरिं च नमामि । **अण्डलग्नकम्** अनन्तासने श्रीभागे विराजमानम् उपेन्द्रं नमामि । तथा शेषशायिनं नमामि । स च शेषशायी कुजनोपद्रवम् अप्रामाणिकनिन्दां परिहृतवान् । आख्याने अप्रामा-णिकशङ्काकर्तॄन् नाशयित्वा, भक्तजनान् योजयामास । दुर्जननिन्दया प्रसक्तमनःखेदं च स्वदर्शनेन निराचकारेति भावः । धन्वन्तरिश्च शिशुपालापराधेन प्राप्तं दुःखं वरदानेन परिहृतवान् । एवम् उपकारिरूपजातं समयेन दृढं बद्ध्वा नमामीति भावः ।।९५।।)

**(अव)** सर्वदेवोपास्यत्वलिङ्गं ब्रह्मवाय्वोरिव स्वस्यापि सूचयितुमाह – **मयीति ॥**

**मयि ब्रह्मा च वायुश्च वर्तते सर्वदापि हि ।**
**यावन्मम विमुक्तिः स्यात्तावत्पर्यन्तमेव च ॥९६॥**

**अतो मया यदुक्तं तु तत्सर्वं युज्यते मयि ।**
**अधिकारिषु सर्वेषु चोत्तमोहं न संशयः ॥९७॥**

(अन्वयः) यावत् मम विमुक्तिः स्यात् तावत्पर्यन्तमेव च मयि ब्रह्मा च वायुः च सर्वदा अपि वर्तते हि[१]; अतः मया यदुक्तं तु तत्सर्वं मयि युज्यते; सर्वेषु

---

(१) 'अन्नाभिमानी ब्रह्मैव प्राणो वायुरुदाहृतः ।
अन्योऽन्यानुप्रविष्टौ तौ सर्वदैव सुसंस्थितौ । .....
अन्योऽन्यानुप्रवेशेन ब्रह्मवाय्वोर्विशेषतः ।
प्रयोजनं कस्य भवेदिति तं प्रतृदोऽब्रवीत् ।
ब्रह्मा निवेशनीयः स्याद्वायुश्चास्य रतिप्रदः ।

**अधिकारिषु च अहम् उत्तमः; न संशयः ।**

(व्या) ब्रह्मवाय्वोरेवावस्थानेन तदवराणां सरस्वत्यादीनाम् अभावसूचनेन ऋजुत्वं सूचितं भवति । तेन ब्रह्मवाय्वोरिव सर्वदेवोपास्यत्वं युक्तमिति भावः ।।९६-९८।। (यस्मादहं ऋजुः यस्माद्ब्रह्मवायू मयि विशेषावेशरूपेण वर्तेते । अतः अत्रोक्तं सर्वं वैभवं मयि युज्यते । तयोरावेशः स्नेहप्रयुक्तः । अतः मम सकाशात् तयोः यावन्मुक्तिः स्यात् तावत्पर्यन्तं तौ स्नेहेण मयि वर्तेते । यथा ब्रह्मवायौ श्रीराघवेन्द्रस्वामिषु वायुदेवस्य आवेशवशात् तस्य चरित्रोक्तं सर्वं युज्यते । 'प्रियव्रतकृतं कर्म को नु कुर्याद्विनेश्वरम्' इति न्यायात् । अत्र तु सदातनवैभवम् । कुतः? अधिकारिषु मम सर्वोत्तमत्वात्[१], ऋजुत्वात् । 'इयदामननात्' इति सूत्रोक्तदिशा स्पष्टमेतत् ।।९७।।)

**इदं सर्वेपि जानन्ति देवाश्च ऋषयस्तथा ।**
**गन्धर्वा अपि सर्वेपि दानवा मानवाश्च न ।।९८।।**

---

**'अतः प्रयोजनं तुल्यमन्योऽन्यात्मप्रवेशनात्' इति सन्धाने । –** बृहदारण्यकभाष्यम् सप्तमेध्याये

* 'इयदामननाधिकरणे' तत्वप्रकाशिकायां 'प्राणस्य सर्वोत्तमत्वे परमात्मना भेदानुपपत्तिरिति चेन्न' इत्यत्र सर्वशब्दव्याख्यानसन्दर्भे – **सर्वशब्दस्य सङ्कुचितार्थत्वात्; ... सर्वेभ्यः प्राणस्य, तस्माच्च विष्णोरुत्तमत्वं छन्दोगश्रुतावुक्तमतो विष्णुव्यतिरिक्तसर्वार्थत्वं श्रुतेः स्यान्नान्यथेति भावः । अतोऽधिकारिणां प्राणावसानत्वात्स एव सर्वगुणोपास्तियोग्य इति सिद्धम् ।** – इति श्रीटीकाकृत्पादैः अधिकारिणामवधिः सूचितः । अत्र 'अधिकारिषु सर्वेषु चोत्तमोऽहं न संशयः' इत्यनेन श्रीगुरुराजैः स्वस्य प्राणत्वं सूचितं भवति ।

* अत्रैव – **'ननु महतां गणनापङ्क्तौ स्यादपि कस्यचिदश्रद्धेयस्यानुक्तिः । सर्वाधिकारिभ्योऽप्युत्तमस्यावश्यापेक्षितस्य कथमनुक्तिः? तस्मात् प्रकृतेऽनुक्तिरेव बलीयसि' इति चेत्सत्यम् । परमाप्ततमेन व्यासेनैव सर्वोत्तमत्वस्थापकतयाऽत्यावश्यकस्य हरेः कैलासगमनं लीलेत्यर्थस्यासुरजनमोहनार्थमनुक्तिदर्शनेन सति कस्मिंश्चित्कारणे उत्तमस्याप्यनुक्तिसम्भवादिति भावेनोक्तम् – अनुक्तेदुर्बलत्वादिति''** – इति श्रीगुरुराजैः गुर्वर्थदीपिकायाम् अनुक्तिकारणमपि समर्थितम् ।

(१) विष्णुरहस्ये श्रीहयग्रीववचनं ब्रह्माणं प्रति –

**'सर्ववर्णाश्रमाचाराः सर्वे देवाः प्रकीर्तिताः ।**
**वेदेषु चाथ तन्त्रेषु ते मुख्याह्यधिकारिणः ।।**
**तेषु सर्वेष्वपि भवान् मुख्यतः सर्वसारवित् ।**
**अधिकारी मुख्यतमः सर्वेपि तदनन्तरम् ।। –** (७अध्याये १५-१६)

**(अन्वयः) सर्वे देवाः च तथा ऋषयः गन्धर्वाः अपि इदं जानन्ति । सर्वे दानवाः मानवाः अपि च न ।**

(व्या) इदं 'लातव्यावताररहस्यम् । हयग्रीवावतारः प्रतिमारूपेण । लातव्यस्य ब्रह्म-वायुभ्याम् अधिकारदानम्' इत्यादि रहस्यम् । **सर्वे देवा जानन्ति** । 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः' (गी.ता.) इति सर्वदेवानाम् अपरोक्षज्ञानित्वात् । **ऋषयोपि** त्रिकाल-दर्शित्वात् । **गन्धर्वा अपि** केषाञ्चित् ऋषिसमत्वात् । इतरेषां देवभृत्यत्वनिमित्तेन उत्तमानां सम्बन्धात् ते अपि जानन्ति । अनपरोक्षित्वात् **मानवा न जानन्ति** । विपरीतस्वरूपत्वात् **दानवा** नैव जानन्ति । 'तस्मात् ते गुरुराजऋजुत्वविषये गुरूपदेशविरहदशायाम् अविश्वासं कुर्वन्ति' इति भावः ।।९८।।)

**सर्वलिङ्गान्तरस्थश्च मयोक्तं त्यज्यते त्वया ।**
**मयानुक्तमपि स्वार्धाङ्ग्या च सार्धं तु गृह्यते ।।९९।।**
**उक्तमेव तु वक्तव्यमनुक्तं न कदाचन ।**
**मत्सत्रभोजनं भुक्त्वा मदुक्तं त्यक्तवानसि ।।१००।।**

**(अन्वयः) मया उक्तं 'सर्वलिङ्गान्तरस्थः' च त्वया त्यज्यते; मया अनुक्तमपि 'स्वार्धांग्या च सार्धं' तु गृह्यते । उक्तं एव तु वक्तव्यम् अनुक्तं कदाचन न । मत्सत्रभोजनं भुक्त्वा मदुक्तं त्यक्तवान् असि ।**

(व्या) **सर्वलिङ्गान्तरस्थः** इत्यत्र (८/८०) त्यक्तं समीकरोति – **सर्वेति** ।। ('मन्त्र-तुल्यत्वात् ग्रन्थस्य आनुपूर्वी व्यत्यासेन मन्त्रत्वहानिः स्यात् । क्रमव्यत्यासेन वेदस्य अवेदत्वमिव स्यात्' इति भावः । 'अग्निमीळे' इत्यस्य 'वह्निमीळे' इति व्यत्यासे कृते तस्य पाठस्य मन्त्रफलं नश्यति । तस्मादुक्तमेव वक्तव्यम् । स्वप्ने अनुक्तं नैव लेखनीयम् । किञ्च कृतघ्नता स्यात् । मठे भोजनं कृत्वा, तद्विरोधिकार्ये कृते सति गुरुद्रोहः सम्भवति । अप्रमादः अवश्यकः इति भावः ।।१०१।।)

**मया द्विमुखतश्चोक्तं सुमुख प्राग्द्विधाकृतम् ।**
**इदानीं मुख्यमेवोक्तं एकेनैव मुखेन तु ।।१०१।।**

**(अन्वयः) हे सुमुख! प्राग्द्विधाकृतं च मया द्विमुखतः उक्तम्; एकेनैव मुखेन इदानीं तु मुख्यमेव उक्तम् ।**

**(व्या)** (ननु पूर्वं २/५० श्लोके 'इतः परं पारिबर्हं गर्हितं दातुमर्हसि । न मे'ति द्विप्रकारेण लेखनेपि कुतः न भवद्भिः समीकृतम्? इत्यत आह ।।) **प्राक् ।** द्वितीयाध्याये 'इतः परं पारिबर्हम्' इत्यत्र (मयैव) **द्विधा** प्रतिपादितम् । अत्र **तु एकेनैव** मुखेनोक्तम् । तस्मादत्र द्विधा न वक्तव्यम् ।।१०१।।

**अनेकमुखसम्पन्नः मु(सु)खमेवानुभूयते ।**
**मखैरपि दुरापन्नं खगमुख्यैश्च दैवतैः ।।१०२।।**

**(अन्वयः) (अहं) अनेकमुखसम्पन्नः, खगमुख्यैः च दैवतैः मखैरपि दुरापन्नं मुखमेवानुभूयते ।**

**(व्या)** अहम् **अनेकमुखसम्पन्नः** । तस्मात् प्राक् (मुखाभ्यां द्वाभ्यां) द्विधा (इतःपरं पारिबर्हमिति पद्यं) द्विधा प्रतिपादितं मया । उपदेशकाले यन्मुखं दृश्यते त्वया अनुभूयते दृश्यते तत् **मखैः** यज्ञैरपि **दुरापन्नम्** = ज्ञातुं न शक्यम् । किन्तु **खगमुख्यैः दैवतैः** ज्ञायते । तत् (तदेव) त्वयापि ज्ञायते ('यदेव मुखं तपसापि अन्येषां दुरापन्नम् । तदेव त्वया मदनुग्रहेण अनुभूयते । तस्मान्नोदासीनं कुरु । तादृशमुखात् निःसृतानि पदानि मान्यानि' इति भावः ।) ।।१०२।।

**एतत्सर्वं स्वाप्रपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

**(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्रपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।**

**(व्या)** (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

।। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे अष्टमाध्यायः समाप्तः ।।

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं

च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक-ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य-जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितब्राह्मण-
स्वाप्नवृन्दावनाख्यानव्याख्याने अष्टमाध्यायः समाप्तः ।।
।। श्रीकृष्णार्पणमस्तु ।।

# ०९-०००-नवमाध्यायः

॥ अथ नवमाध्यायः ॥

**(व्या)** श्रीगुरुभ्यो नमः ॥ हरिः ओं ॥ पूर्वाध्याये वक्तृश्रोतृप्रसक्तीनामानुकूल्यकथनेन व्याख्यानानुज्ञाप्रदानेन च सर्वदेवोपास्यत्वकथनेन च आप्तिमूलत्वं युक्तिमूलत्वमप्युपपादितम् । अत्र श्रुतिमूलत्वोपपादनाय **हनुमद्भीमसादृश्यं**, सर्वदेवोपास्यत्ववत् गरुडोत्तमत्वे सति भगवद्भक्तत्वरूपयुक्तिमूलत्वोपपादनाय **अमृतप्राशनम्,** तदनन्तरं **गन्तव्यदेशगमनम्,** तत्र अनन्तासनस्थभगवद्रूपेण स्वेन सह समागतभगवद्रूपस्य एकीभावदर्शनरूपवैभवम्, एवं श्रुतियुक्त्यादिमूलकत्वात् **कृतेः देवपूज्यत्वम्,** न केवलं हनुमदादिअवतारसादृश्यम् किन्तु **ब्रह्माण्डपरिमितवायुरूपसादृश्य**मप्यस्तीति सूचयितुम् **अणिमादिद्यष्टैश्वर्यकथनम्,** यतित्वमात्रेण मध्वदृष्टान्तस्य कथितत्वेपि भाव्यत्यन्तसादृश्यं वक्तुं **मणिमन्निग्रहः** । **लक्षणतोऽपि मध्वसादृश्यं** सूचयितुम् **अस्थिलक्षणम्** । **भीमसेनसादृश्यं** स्पष्टमुपपादयितुं **पयोनिधौ देहत्यागः** । बादरायणसेवनं च । भीमवत् बहुशः दारेभ्यः द्रव्यप्रदानम् । **हंसमन्त्रजप्तृत्वेन** तदुपदेशयोग्यत्वेन **वायुसादृश्यम्** । प्रसङ्गात् हंसमन्त्रस्य अभेदपरत्वं जानतां अन्धन्तमःप्राप्तिः; तज्जपशालिनः हरिदर्शनादिना निखिलाभीष्टप्राप्तिः । श्रीमदाचार्यवत् हृद्गतत्वेन बादरायणोपासनम् । चन्द्रमण्डलमध्यस्थहयवदनस्यापि हृद्गतत्वेन स्मर्तव्यम् । श्रीमध्वाचार्यवत् वेङ्कटाद्रिस्थितभगवद्रूपोपासकत्वम् । त्रिविक्रमोत्सवसमये विप्रदत्तपूजास्वीकारश्च उच्यते ।

## १. विप्रप्रकरणम्॥ श्लोकाः (१ऽ५०)

**(व्या)** **'हनूमान्'** इत्यारभ्य **'विश्वासं कुरु सर्वथा'** इत्यन्तं विप्रश्रोतृकप्रकरणम् । अत्र हनूमन्नमनं भौमभाक्तलौकिकवैभवं भगवत्कारितत्वात् भागवत्वाच्च । तत्समीपकाले कृतेः देवपूज्यत्वम्, दिव्यभाक्तवैभवम्, अणिमाद्यष्टैश्वर्यं, ब्रह्माण्डविग्रहवायोः सादृश्यनिरूपकत्वात् दिव्यभाक्तवैभवम्; तथा मणिमन्निग्राहकत्वादिकम् । श्रीमदाचार्यसादृश्यवत् घटकत्वात् भौमभाक्तवैभवम् । क्षीरसमुद्रे देहत्यागादिकं भीमसादृश्यघटकत्वात् भौमभाक्तवैभवमुच्यते ।

**हरिः ओं ॥**

**हनूमान् बहुनामायं न्यहनद्गहनादरी ।**
**सहनामा मदारूपो महानाम्नि महोत्सवे ॥१॥**

**(अन्वयः) अयं हनूमान् बहुनामा सहनामा मदारूपः महानाम्निमहोत्सवे गहनादरी न्यहनत् ।**

**(व्या)** 'हनूमान् भीम आनन्द' इत्यादि **बहुनामा** । **न्यहनत्** राक्षसादीन् **गहनादरी** गम्भीरआदरवान् । 'सह ओजो बलमित्याचक्षते' इति श्रुत्युक्ता (पैङ्गिश्रुतिः - ब्र.सू.भा. २.३.९) **सहनामा** । महान्तिनामानि यस्मिन् **महोत्सवे** । सः । तस्मिन् यज्ञविशेषे (यज्ञविशेषे इत्यस्य रणयज्ञविशेषे इत्यर्थः) **मदारूपः** = आनन्देन पूर्णं (आपूर्णं) रूपं यस्य सः ।।१।।

**नमामि तं महात्मानं हनूमन्तमथाहवे ।**
**न्यहनद्यो महारक्षो ह्यक्षं त्वक्षयविक्रमः ।।२।।**
**रेमे सेवासु निरतो कामेन रहितः सदा ।**
**यस्य नाथः प्रसन्नात्मा ददौ स्वात्मानमेव च ।।३।।**

**(अन्वयः) अक्षयविक्रमः यः तु आहवे महारक्षः अक्षं न्यहनत् कामेन रहितः सदा सेवासु निरतः (सन्) रेमे; यस्य नाथः प्रसन्नात्मा (सन्) स्वात्मानमेव च ददौ; तं महात्मानं हनूमन्तं नमामि ।**

**(व्या)** (**तं हनुमन्तं महात्मानं** अहं **नमामि** । **यो** हनूमान् **अक्षयविक्रमः** । अक्षनामकं रक्षः **न्यहनत्** । अक्षमारकत्वं महागुणः इति भावः)।।२।। **रेमे इति** ।। **सेवासु** रामसेवासु **निरतः** सन् रेमे । **अक्षयविक्रमः** = क्षयरहितपराक्रमशाली । **अक्षं** तन्नामकं रावणात्मजम्[१]

(१) अनौपमं हरेर्बलं निशम्य राक्षसाधिपः ।
कुमारमक्षमात्मनः समं सुतं न्ययोजयत् ।। .......
स मण्डमध्यगासुतं समीक्ष्य रावणोपमम् ।
तृतीय एष चांशको बलस्य हीत्यचिन्तयत् ।।
निधार्य एव रावणः स राघवस्य नान्यथा ।
यदीन्द्रजिन्मया हतो न चास्य शक्तिरीक्ष्यते ।।
अतस्तयोः समो मया तृतीय एष हन्यते ।
विचार्य चैवमाशु तं पदोः प्रगृह्य पुप्लुवे ।।
स चक्रवद्भ्रमातुरं विधाय रावणात्मजम् ।
अपोथयद्धरातले क्षणेन मारुतीतनुः ।। – (म.भा.ता.नि. ७/२४, २६-२९)
– इति अक्षकुमारस्य बलं दर्शितम् । तस्य निग्रहं तु हनूमता एव शक्यम् । तस्य सादृश्यमत्र ध्येयम् ।

न्यहनत् । **यस्येति** ।। **यस्य** हनुमतः **नाथः** रामः **प्रसन्नात्मा** प्रसन्नमनस्कः सन् आत्मानं **ददौ;** 'आलिङ्गनं ददौ' इति भावः[१] । तं हनुमन्तं **नमामि** । ऋजुत्वेन साम्येपि कल्पाधिक्यात् प्रणामो युक्तः ।।२-३।।

**तद्वन्ममापि कामेन हीनस्य मनसाप्यहो ।**
**नाथो ह्यात्मानमेवासौ हयग्रीवो ददौ मुदा ।।४।।**

**परिरम्भणव्याजेन मन्दरे गुणवारिधिः ।**
**गणयन् स तु तं दारं उद्दिश्य मम सद्गुणान् ।।५।।**

**(अन्वयः) तद्वत् मनसा अपि कामेन हीनस्य मम अपि नाथः असौ हयग्रीवः मन्दरे तं दारमुद्दिश्य मम सद्गुणान् गणयन् परिरम्भणव्याजेन आत्मानं एव मुदा ददौ हि । स तु गुणवारिधिः । अहो!**

**(व्या)** (**तद्वदिति** ।। यथा हनुमतः तथा निष्कामस्य **ममापि हयग्रीवा**भिन्नो अष्टभुज-नारायणः आत्मानमेव ददौ; एवं हनुमत्सादृश्यं प्रतिपादितम् ।।४।। आत्मदानं कथं कुत्र? इत्यत आह – **परिरम्भणेति** ।।) **तं दारं=** मन्दरपर्वते अष्टभुजं परमात्मानं प्रति तपन्तं दारम् उद्दिश्य । **मम सद्गुणान्** वैराग्यादिकान् **गणयन्** सन् **परिरम्भणव्याजेन** हयग्रीवात्मको हरिः स्वात्मानं ददौ ।। (एवं रामः यथा हनुमन्तम् आलिङ्गितवान्, तथा अष्टभुजहरिः मां आलिङ्गित-वान् इति हनुमत्सादृश्यमुपपादितम् ।)

---

(१) अतो हनूमान् पदमेतु धातुर्मदाज्ञया सृष्ट्यवनादिकर्म ।
मोक्षं च लोकस्य सदैव कुर्वन्मुक्तश्च मुक्तान् सुखयन् प्रवर्तताम् ।।
भोगाश्च ये यानि च कर्मजातान्यनाद्यनन्तानि ममेह सन्ति ।
मदाज्ञया तान्यखिलानि सन्ति धातुः पदे तत्सहभोगनाम ।।
एतादृशं मे सहभोजनं ते मया प्रदत्तं हनुमन् सदैव । (अ.८/२४०-२४२)

को न्वीश ते पादसरोजभाजां सुदुर्लभोर्थेषु चतुर्ष्वपीह ।
तथापि नाहं प्रवृणोमि भूमन्भवत्पदाम्भोजनिषेवणादृते ।।
यस्ते कथासेवक एव सर्वदा सदा रतिस्त्वय्यचलैकभक्तिः ।
स जीवमानो न परः कथंचित्तज्जीवनं मेस्त्वधिकं समस्तात् ।।
प्रवर्धतां भक्तिरलं क्षणे क्षणे त्वयीश मे ह्रासविवर्जिता सदा ।
अनुग्रहस्ते मयि चैवमेव निरूपधौ तौ मम सर्वकामः ।। (म.भा.ता.नि. ८/ २४३, २४६, २४७)

**अहं राजाधिराजश्चाप्येतदुत्तरजन्मनि ।**
**भवामि स भवानीव मां तु यास्यति या पुरा ।।६।।**

(अन्वयः) एतत् उत्तरजन्मनि अहं राजाधिराजः अपि च भवामि; स पुरा या भवानि इव मां तु यास्यति ।

(व्या) (भीमसादृश्यमपि वर्तते इति उत्तरश्लोके वक्ति । यथा प्रधानवायुः राजा बभूव । तथा अहमपि उत्तरजन्मनि राजा भवामि । तदा काळी द्रौपदी वा भीममिव पूर्वोक्तः दारः **मां** वरिष्यति ।।६।।)

**मन्दरे सुन्दरं मां तु दृष्ट्वा कन्दर्पमोहिता ।**
**इन्दिरापतिमाराध्य वरदं प्राप तद्वरम् ।।७।।**

(अन्वयः) मन्दरे सुन्दरं मां तु दृष्ट्वा कन्दर्पमोहिता (सन्) वरदं इन्दिरापतिं आराध्य तद्वरं प्राप.

(व्या) (**मन्दरे इति** ।। या पूर्वजन्मनि मां दृष्ट्वा कामग्रस्ता सती । अष्टभुजनारा-यणाराधनेन प्राप्तवरा च बभूव ।।७।।)

**सा गमिष्यति मां तस्मिन् जन्मनि प्रियवादिनी ।**
**साधिनी स्वमनोरथ्यं सारसौन्दर्यसारतः ।।८।।**

**कनकाम्बरसंवीता मणिकाशितभूषणा ।**
**गणिका जातिकां त्वक्त्वा झणिकारवनूपुरा ।।९।।**

(अन्वयः) सा तस्मिन् जन्मनि स्वमनोरथ्यं साधिनी प्रियवादिनी गणिकाजातिकां त्यक्त्वा कनकाम्बरसंवीता मणिकाशितभूषणा झणिकारवनूपुरा (सन्) सार-सौन्दर्यसारतः मां गमिष्यति ।

(व्या) (**सा** पुनर्भूवलये जाता सति मां पत्नीभावेन आ**गमिष्यति** । प्रियवचनादि-कल्याणगुणैः श्रेष्ठसौन्दर्यातिशयैश्च स्वाभीष्टं सर्वं मया सम्पादयति ।।८।। तदा सा **गणिका-जातिकाम्** अप्सरानामकदेवजातिं त्यक्त्वा, मनुष्यत्वेन जाता सति सुवर्णाम्बरआभरण-प्रकाशनूपुरादिरवैः युक्ता मनोहरा भविष्यति द्रौपदी इव इति भावः ।।९।।)

**दाराः पुंसीति वश्चार इति नो शाब्दिकैर्वृतः ।**
**उदारकामहीनस्य स दारः पुरुषो यथा ॥१०॥**

**इत्यभिप्रायतोप्येकवचनेपि प्रयोजितः ।**
**दारशब्दः परैरुक्तदोषोपि मम नास्त्यतः ॥११॥**

(अन्वयः) 'दाराः पुंसि' इति शाब्दिकैः वः चारः न वृतः. 'उदारकामहीनस्य यथा पुरुषः स दारः' इति अभिप्रायतः अपि एकवचने दारशब्दः अपि प्रयोजितः. अतः परैरुक्तदोषः अपि मम नास्ति.

**(व्या)** दारशब्दस्य बहुवचनान्तत्वात् एकवचनप्रयोगः कथम्? इत्याशङ्क्य परिहरति – **दाराः इति ॥ दाराः पुंसीति शाब्दिकैर्वृतः, वश्चारः** = वः युष्माकम्, चारः बन्धनरूपः नियमः । 'बन्धनं प्रसितिश्चारः' इत्यमरः । अत्र अस्माभिः **नो वृतः** नाङ्गीकृतः । तदनङ्गीकारे किं प्रयोजनम्? उदारकामरहितत्वरूपं पुरुषसादृश्यं सूचयितुं नित्यं बहुवचनस्य एकवचनतया प्रयोगः । अतः **'परैरुक्तदोषः मम नास्ति'** इत्यनेन अन्यैरेवं प्रयोगे कृते दोषोऽस्तीति भावः।

**एधमानद्विडप्येतत्कृतवान् देवराडसौ ।**
**मां प्रौढभक्तिसम्पूर्णमारोप्य गरुडोपरि ॥१२॥**

**जगाम निमिषार्धेन मेरुमूर्ध्नि स्वमन्दिरम् ।**

**(अन्वयः) एधमानद्विट् आसौ देवराट् अपि एतत् कृतवान्; प्रौढभक्तिसम्पूर्णं मां गरुडोपरि आरोप्य निमिषार्धेन मेरुमूधिर्न स्वमन्दिरं जगाम.**

**(व्या) एधमानद्विट्**[१] स्वयोग्यताधिकफलाभिवृद्धिकामानाम् अधिकसाधनपराणां च द्विट् द्वेषी; **असौ देवराट्** = देवानां राजा, ब्रह्मरुद्रेन्द्रस्वामी **एतत्** वक्ष्यमाणं **कृतवान्** । **(प्रौढभक्तिसम्पूर्णं =)** प्रौढाः रुद्रापेक्षया अधिकाः भक्तयः ताभिः सम्पूर्णम् ॥ (मेरुपर्वतोपरि-विद्यमानस्वमन्दिरं प्रतिनिमिषार्धेन जगाम । तस्मात् प्रदेशात् मया साकं मन्दरपर्वतोपरिविद्यमानं स्वस्य सुन्दरं विग्रहम् अष्टभुजनारायणरूपं प्रति जगाम ॥१३॥)

---

(१) एधमानद्विडित्येव विष्णोर्नाम हि वैदिकम् ।
स्वयोग्यताया अधिकं धर्मज्ञानादिजं फलम् ॥
भीष्मद्रोणाम्बिकेयादेः पार्थेष्वेव निधापितुम्। (म.भा.ता.नि. २२/३५-३६)

**तस्मान्मन्दरगं प्राप सुन्दरं स्वस्य विग्रहम् ॥१३॥**

**तस्मादपि ययौ श्वेतद्वीपं मामधिरोप्य च ।**
**पीताम्बरधरः स्रग्वी श्रीपतिः श्रेयसांपतिः ॥१४॥**

(अन्वयः) तस्मात् मन्दरगं सुन्दरं स्वस्य विग्रहं प्राप । तस्मात् अपि पीताम्बरधरः स्रग्वी श्रेयसां पतिः श्रीपतिः मां अधिरोप्य श्वेतद्वीपं च ययौ.

(व्या) (तस्मात् मन्दरपर्वतादपि श्रीहरिः मया साकं गरुडोपरिश्वेतद्वीपं प्राप । कथम्भूतः? पीताम्बरधरः, स्रग्वी = वनमालाधरः । जीवानां निखिलश्रेयसां पतिरिव दाता ॥१४॥)

**श्वेतद्वीपादपि प्राप प्लक्षद्वीपं सुपावनम् ।**
**अपांपतेश्चोपकण्ठे विपतेश्चावरोप्य माम् ॥१५॥**
**गरुत्मानं समाहूय मानयन्निदमब्रवीत् ।**
**मघोनामृतमानीय मामकस्य मुनेर्दिश ॥१६॥**

(अन्वयः) श्वेतद्वीपात् अपि सुपावनं प्लक्षद्वीपं प्राप । मां च अपांपतेः उपकण्ठे च विपतेः अवरोप्य, गरुत्मानं समाहूय मानयन् इदं 'मघोना अमृतं आनीय, मामकस्य मुनेः दिश' मानयन् अब्रवीत्.

(व्या) (श्वेतद्वीपात् । प्लक्षद्वीपं प्राप ॥) अपांपतेः समुद्रस्य । उपकण्ठे समीपे । विपतेः गरुडात् ॥१५॥ मघोना[(१)] = इन्द्रेण । अमृतं (आनीय मद्भक्तस्य यतेः दिश । देहि इत्युवाच श्रीहरिः ॥१६॥)

**इत्युक्तः स तु नत्वा च वैनतेयो विहायसा ।**
**गत्वा स्वर्गपतेस्तच्च ह्यमृतं प्राप सत्वरः ॥१७॥**

---

(१) * यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय ।
इन्द्रो विदे तमु स्तुषे वशी हि शक्रः ॥ ५ ॥

'मघोनां यशस्विनां महत्तमः' इति कर्मनिर्णये ।

* इन्द्रो मघानि दयते विषह्येन्द्रं वाजस्य जोहुवन्त सातौ ।
कीरिश्चिद्धि त्वामवसे जुहावेशानमिन्द्र सौभगस्य भूरेः ॥ (ऋ. ७.२१.७)

मघानि मंहनीयानि धनानि – इति तत्रैव सायणः ।

**आदाय गरुडः प्रौढः चोड्डीयोड्डीय पक्षिराट् ।**
**आढकेन मितं षोढाप्ररूढं पौरुटस्थितम् ॥१८॥**

**पाययामास मां पापरहितं पिहितं करे ।**
**स्थापयामास पादाग्रे श्रीपतेः शेषितं च यत् ॥१९॥**

(अन्वयः) इत्युक्तः सः वैनतेयः तु नत्वा विहायसा स्वर्गपतेः सत्वरः गत्वा अमृतं प्राप हि । प्रौढः पक्षिराट् गरुडः चोड्डीयोड्डीय आढकेन मितं षोढाप्ररूढं पौरुटस्थितं तच्च आदाय, पापरहितं मां करे पिहितं पाययामास । यत् शेषितं च श्रीपतेः पादाग्रे स्थापयामास ।

**(व्या) विहायसा** = आकाशमार्गेण ॥१७॥ **उड्डीयोड्डीय** आकाशमार्गेणोत्पत्त्योत्पत्य । **आढकेन** –

**शतयोजनविस्तीर्णमुन्नतं तु सहस्रकम् ।**
**आढकस्य प्रमाणं तु देवमानेन निर्मितम् ॥**

इति ज्योतिःशास्त्रोक्तेन **मितं** गणितम् । षोढाषड्विधतया प्ररूढम् । **पौरुटस्थितं** सुवर्णमयपात्रस्थितम् ॥१८॥ **करे पिहितं** आच्छादितम् = भगवन्निवेदितं मां पाययामास । **शेषितम्** = उर्वरितं, **श्रीपतेः पादाग्रे स्थापयामास** ॥१९॥ (इतरत् स्पष्टम्) ॥१९॥

**दिव्यं तदपि गोविन्दो गोदोहनकरेण च ।**
**मां गोसवे गोसवे च पाययामास नेतरम् ॥२०॥**

(अन्वयः) तत् दिव्यम् अपि गोविन्दः गोदोहनकरेण च गोसवे गोसवे च मां पाययामास न इतरम् ।

**(व्या) तदपि** अमृतम् **गोविन्दः** अन्यान् न पाययामास । **गोदोहनकरेण गोसवे गोसवे** = गौर्वाक् तत्सम्बन्धी सवः यज्ञः तस्मिन्, प्रतिप्राणाग्निहोत्रसमये इति यावत् । मामेव **पाययामास** ॥२०॥

**ममामृतप्राशनं च ये शृण्वन्ति नरा भुवि ।**
**अमृतप्राशनं कृत्वा त्वमृतत्वं भजन्ति ते ॥२१॥**

**(अन्वयः) ये नराः भुवि मम अमृतप्राशनं च शृण्वन्ति ते तु अमृतप्राशनं कृत्वा अमृतत्वं भजन्ति ।**

**(व्या)** अमृतप्राशनकथाश्रवणफलमाह **ममामृतप्राशनमिति ।।** (श्लोकार्थः स्पष्टः)।।२१

**प्लक्षद्वीपादपि प्राप प्लवमान इतस्ततः ।**
**उपप्लाव्यं तदा विष्णुरपप्लवविवर्जितः ।।२२।।**

**(अन्वयः) तदा इतस्ततः प्लवमानः अपप्लवविवर्जितः विष्णुः प्लक्षाद्वीपात् अपि उपप्लाव्यं प्राप ।**

**(व्या) उपप्लाव्यं** स्थळविशेषम् **अपप्लवविवर्जितः** अपप्लवो मज्जनम् । अभिमतकार्यहानि-रिति यावत् । **तद्रहितः** ।।२२।।

**तदनन्तरमन्विच्छन्ननन्तासनमेव च ।**
**अनन्तशयनं द्रष्टुमनन्तो यो गुणैरपि ।।२३।।**

**(अन्वयः) तदनन्तरं यः गुणैः अपि अनन्तः (तं) अनन्तशयनं द्रष्टुं च अनन्तासनं एव अन्विच्छन् ।**

**(व्या) तदनन्तरमिति ।। तदनन्तरम्** उपप्लाव्यगमनानन्तरम् **अनन्तशयनं** शेषशायिनं स्वात्मकं **द्रष्टुम्** ।। (अनन्तासनाख्य मुक्तधाम **अन्विच्छन् यो गुणैरपि अनन्तः** । प्रत्येकम् अनन्तगुणात्मकअसंख्याकगुणवान् । सः हरिः ।।२३।।)

**अनन्तपदमासाद्य चानन्तोपरि संस्थितः ।**
**अनन्तशयनं प्राप ह्यनन्तासनगं हरिम् ।।२४।।**

**(अन्वयः) अनन्तोपरि संस्थितः (सः विष्णुः) अनन्तपदम् आसाद्य अनन्तासनगं हरिम् अनन्तशयनं प्राप ।**

**(व्या)** (**अनन्तोपरिसंस्थितः** गरुडोपरिस्थित्वा, **अनन्तपदमासाद्य** आकाशमार्गं प्राप्य, **अनन्तशयनं हरिं प्राप** । कथम्भूतम्? **अनन्तासनगं** शेषासनस्थं **हरिं** = पापनाशकं अनन्तशयननामकं प्राप इत्यर्थः ।।२४।।

**तेनैकीभूय कालेन नानात्वं मयि नास्ति च ।**

**इति नो दर्शयामास नेत्रयोरपि मानव ॥२५॥**

(अन्वयः) हे मानव! तेन एकीभूय मयि कालेन नानात्वं च नास्ति इति नः नेत्रयोः अपि दर्शयामास[१] ।

(व्या) **तेन** अनन्तासनस्थेन हरिणा **एकीभूय** अभेदसमानाधिकरणं संश्लेषं प्राप्य, **मयि नानात्वं नास्तीति नेत्रयोः** बाह्यचक्षुषोरपि **दर्शयामास** ॥२५॥ (हे मानव! इति विप्र-सम्बुद्धिः ॥)

दिवि देवोत्तमैः कृत आख्यानोत्सवम्

**इन्द्राणी मां समानीय चेन्द्रेण सह मन्दिरम् ।**
**उपेन्द्रोऽपि तदा चाप्तश्चेन्द्रेण सह चेक्षितुम् ॥२६॥**

**भद्रादेवीसमायुक्तः सुभद्रार्थं तदैव माम् ।**
**भद्रासने समारोप्य भद्रामारार्तिकां व्यधात् ॥२७॥**

(अन्वयः) इन्द्रेण सह इन्द्राणी मां मन्दिरं समानीय, तदा एव सुभद्रार्थं मां भद्रासने समारोप्य भद्राम् आरार्तिकां व्यधात्; भद्रादेवी समायुक्तः उपेन्द्रः अपि तदा इन्द्रेण सह ईक्षितुं तदा च आप्तः ।

(व्या) कृतेर्देवपूज्यत्वमाह – **इन्द्राणीति ॥ भद्रादेवी** उपेन्द्रभार्या (**इन्द्रेण सह इन्द्राणी मां मन्दिरं समानीय** यदा स्थितः । **तदा इन्द्रेण सह ईक्षितुम् उपेन्द्रोऽपि भद्रादेवीसमायुक्तः** सन् आप्तः आगतः । तदा **इन्द्राणी सुभद्रार्थं मां भद्रासने समारोप्य भद्राम् आरार्तिकां व्यधात्** ॥२७॥

---

(१) ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ॥ ॐ अपि चैवमेके ॐ ॥ (३/२/११-१३) – इति न स्थानतोधिकरणे भगवद्रूपाणाम् अभेदः समर्थितः । तत्र 'प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः' (१.९.४३) इति भागवतस्थ भीष्मवाक्येन ''**प्रतिदृशं दृशं दृशं प्रति मां प्रति प्रत्ययं वर्तत इति नैकधा बहूनामाभिमुख्येन स्थितं अर्कमिव त्वामप्येकं समधिगतोऽस्मी**ति वार्थ इत्यर्थः'' (वाक्यार्थमुक्तावली) इति ईश्वररूपाणामभेदः निर्णीतः तद् द्रष्टव्यम् ।

इह तु तस्मिन् अभेदविषये श्रीगुरुराजैः स्वानुभूतप्रत्यक्षदर्शनमपि कथितं द्रष्टव्यम् ।

**आरुन्धतीसमायुक्ता वृन्दावनकृतिं त्विमाम् ।**
**स्वमन्दिरे समादाय चेन्द्रेण सह चार्चयत् ॥२८॥**

(अन्वयः) इमां वृन्दावनकृतिम् अरुन्धतीसमायुक्ता स्वमन्दिरे समादाय इन्द्रेण सह च अर्चयत् ।

**(व्या)** (**अरुन्धतीसमायुक्ता** सती इन्द्राणी **इमां वृन्दावनकृतिं स्वमन्दिरे समादाय इन्द्रेण सह** अक्षताकुङ्कुमादिभिः **अर्चयत्** ॥२८॥) ॥२७-२८॥

**एवं सर्वाश्च देव्यस्ताः पतिभिः सह मन्दिरम् ।**
**मां समानीय चानर्चुर्वृन्दावनकृतिं त्विमाम् ॥२९॥**

(अन्वयः) एवं सर्वाः च ताः देव्यः पतिभिः च सह मां (स्वमन्दिरे) मन्दिरं समानीय इमां वृन्दावनकृतिं तु (मां सह) आनर्चुः ।

**(व्या)** (**एवमिति** ॥ यथा इन्द्राणी तथा इतराः दिक्पालपत्न्यः[१] **मां** स्वमन्दिरं प्रति

---

(१) सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयाञ्चकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥ सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैनां मृत्युमत्यवहत् ॥ स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ बृ.उ.उद्गीथब्राह्मणम्१०-१३॥

स वायू रुद्रशक्रादेर्वासुदेवबलाश्रयः ।
विमोच्य पापसङ्घात्तं दिशामन्तेष्वथाक्षिपत् ।
उन्मुच्य मृत्योस्तांश्चैवाधोर्ध्वलोकेषु चावहत् ।
अग्निर्नासिक्यवायुश्च दिक्पा इन्द्रादयोऽखिलाः ।
सूर्यः सोमश्च रुद्रश्च तेनैव स्वपदे स्थिताः । – बृहदारण्यकोपनिषद्भाष्यम् (उद्गीथब्राह्मणे)

तत्रैव – "तासां पापमपहत्य किमकरोद्वायुरित्यत आह – सा वा इति ॥ ... ऊर्ध्वलोकमवहत् प्रापितवान् । सः वायुः प्रथमां पूर्वमुद्गातृतया वाचमेव वाङ्मानिनमग्निमेवात्यवहत् । 'मृत्युम्' इति शेषः । मृत्युमत्यमुच्यत । पापमृत्युमुक्ता सा वाक् यदा तदा सोऽग्निरभवत् अग्निलोकाधिपतिरभवत् । स्वपदे स्थितः स्वव्यापारं करोतीत्याह – सोऽयमिति ॥ परेण = मुख्यवायुना ॥ – इति श्रीभावबोधकाराः खण्डार्थे ।

एवमेव सर्वदिक्पालानां वायुकृतअनुग्रहं तत्रैव द्रष्टव्यम् । तत्खण्डार्थे अग्रे – **अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तूयात्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय**

**समानीय** । **पतिभिः सह मां इमां** वृन्दावनकृतिं च **आनर्चुः** ।।२९।।)

**तस्मात् स्वमन्दिरे सर्वे वृन्दावनकृतेः परम् ।**
**प्रकुर्वन्त्व(न्त्य)र्चनं सम्यगारात्र्या च समन्वितम् ।।३०।।**

(अन्वयः) तस्मात् सर्वे स्वमन्दिरे परं वृन्दावनकृतेः अर्चनं सम्यगारात्र्या च समन्वितं प्रकुर्वन्तु.

**(व्या)** (तस्मात् सर्वे मानवाः वृन्दावनकृतेः) **परम् अर्चनं प्रकुर्वन्तु** ।।३०।। (**परं सम्यक्** भक्तिपूर्वकम् **आरात्र्या च समन्वितम्**; 'अर्चनमि'त्यस्य विशेषणम् ।।३०।।)

**मद्वृन्दावनमेवात्र सद्वृन्दावनमेव हि ।**
**तद्वृन्दावनगः श्रीशः सद्वृन्दावनगः सदा ।।३१ए।।**

(अन्वयः) अत्र मद्वृन्दावनं एव सद्वृन्दावनं एव । तद् वृन्दावनगः श्रीशः सदा सद्वृन्दावनगः । हि ।

**(व्या) सद्वृन्दावनं** सत्समूहपालकं **मद्वृन्दावनम्** । तद्गतः **श्रीशः** । सत्समूहपालने स्थितः ।।३१।। (**हीति** प्रमाणप्रसिद्धिं सूचयति । यस्मात् वादिराजवृन्दावनं कलौ मुक्तियोग्यजनानाम् अभीष्टं ददातु इति अधिकृतम्, तस्मात् मद्वृन्दावनान्तर्यामी हयवदनः मम भक्त्या वशीकृतः स्वयमेव सद्वृन्दपालनकार्ये स्थितः । 'मदनुग्रहार्थम्' इति भावः ।।३१।।

**येन वृन्दावनाख्यातिर्जाता चात्र दिने दिने ।**
**तस्मै नन्दन (चानन्द) धान्यं वा धनं वा किं न दीयते ।।३१।।**

---

**मृत्योऽर्मामृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मां कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मां कुर्वित्येवैतदाह ।।२८।।'** इति मन्त्रार्थव्याख्यानसन्दर्भे –

**"अथेति महिमान्तरोक्तिप्रारम्भे । अतः उद्गानेन निर्विघ्नं यज्ञसमापकत्वात् । पवमानानामेव = मुख्यवायुत्वयोग्यानामेव । अभ्यारोहः मुक्तौ सर्वाधिक्यारोहणम् । स्वसहमुक्तसर्वपूज्यत्वं भवतीति यावत् । 'सर्वेऽस्मै देवा बलिमावहन्ति' (तै.उ. १-५-३) इति श्रुतेः ।"** – इति पवमानशब्देन, प्रस्तोता-शब्देन मुख्यवायुपदयोग्यानां ग्रहणमुक्तं श्रीभावबोधकारैः । तस्मात् भाविसमीराणां गुरुराजाणाम् एतादृशदिक्पाल-पूज्यत्वरूपवैभवं युक्तं भवति । तदेव अत्र आख्याने प्रतिपादितमिति ज्ञेयम् ।

(अन्वयः) हे नन्दन! अत्र दिने दिने येन वृन्दावनाख्यातिः जाता तस्मै च धान्यं वा धनं वा किं न दीयते?

(व्या) येनेति ।। न दीयते किम्? दीयते एव ।।३१।। (वृन्दावनाख्यातिः वृन्दावना-ख्यानं येन द्वारभूतेन जातम् । वृन्दावनस्य आ सम्यक् ख्यातिः प्रसिद्धिः येन विप्रेण जाता इति वा । तस्मै विप्राय । किञ्चिद्दानमपि बहुपुण्यफलकमित्यर्थः ।।३१।।)

श्रीगुरुराजरु तिळिसिद तम्म अणिमादि सिद्धिगळ महत्व

**मद्दोर्दण्डेन चोर्ध्वाण्डं दक्षिणेन गुणिन् स्पृशे ।**
**सव्येनाधस्थमप्यस्मिन् लोके पावकवज्ज्वलन् ।।३२।।**

**त्रसरेणुरजस्थाणुः परमाणुरहं भजे ।**

(अन्वयः) हे गुणिन्! मद्दोर्दण्डेन च ऊर्ध्वाण्डं दक्षिणेन अधस्थमपि सव्येन अस्मिन् लोके पावकवज्ज्वलन् स्पृशे । त्रसरेणुरजस्थाणुः परमाणुः अहं भजे ।

(व्या) अष्टैश्वर्यमाह[१] – मद्दोर्दण्डेनेति ।। ३२।। (एकेन हस्तेन ऊर्ध्वाण्डं स्पृशामि । सव्यहस्तेन अधराण्डं स्पृशामि । अस्मिन् लोके पावकवज्ज्वलन् त्रसरेणु रजःस्थ परमाणौ स्थितः सन् भसे प्रकाशे इति योजना ज्ञेया ।।३२ १/२।।) त्रसरेणुः त्र्यणुकः । तद्रजस्थश्च परमाणुः । तद्वत् अहं भजे(से) प्रतीतो भवामि ।

**पारिमाण्डिल्यवत्सौक्ष्म्यं शाण्डिल्यो वेत्ति शौण्डिलः ।।३३।।**

---

(१) सिद्धयोष्टादश प्रोक्ता धारणायोगपारगैः ।
तासामष्टौ मत्प्रधाना ता एव गुणहेतवः ।। – (भाग.ता.नि. ११/१५/३)
'सर्वाधिका अणिमाद्या विष्णोर्नान्यस्य कस्यचित् ।
स्वाभाविका विरिञ्चस्य तत्प्रसादात् पराधिकाः' इति स्वाभाव्ये ।।
'गुणभूतानामन्यासामपि सिद्धीनां ता एव हेतवः ।' (भाग.ता.नि. ११/१५/३)
'यतो निःसीमकास्तेषां देवानामष्टसिद्धयः ।
अतोष्टादशसिद्धीनां तदन्तर्भाव इष्यते ।
देवेष्विन्द्रेशवायुश्रीविष्णूनामुत्तरोत्तरम् ।
सिद्धयः परिपूर्णास्तु विष्णोरेकस्य नान्यगाः' इत्यैश्वर्ये ।। (भाग.ता.नि. ११/१५/६)

**(अन्वयः) शौण्डिलः शाण्डिल्यः पारिमाण्डिल्यवत् सौक्ष्म्यं वेत्ति ।**

(व्या) **शौण्डिलः** कुशलः । **शाण्डिल्यः** भक्तविशेषः । **पारिमाण्डिल्यवत्** = अणुपरिमाणवत् । मदीयं तत्वं **वेत्ति** ।।३३।। (अणुपरमाणुसदृश अणु(सूक्ष्म)परिमाणयुक्तं इत्यर्थः । मदीयं **तत्वं** = मम स्वरूपसामर्थ्यम् ।।३३।।)

**मेरुवद्गुरुभारोहं तूलवल्लघुतां व्रजे ।**
**व्यापकश्चाकाशवच्च भागशो योगतोऽभवम् ।।३४।।**

**(अन्वयः) योगतः अहं मेरुवत् गुरुभारः । तूलवत् लघुतां व्रजे । आकाशवत् व्यापकः च भागशः अभवम् ।**

(व्या) **(मेरुवदिति ।।) भागशः** अंशतः (**भागशः आकाशवत् व्यापकश्च** अव्याकृताकाशभागेपि व्यापको भवेयम् इत्यर्थः । कस्यापि जीवस्य यावदव्याकृताकाशान्तव्याप्त्यभावात् । श्रीदेवीमात्रस्य तादृशव्याप्तिसद्भावात्) **योगतः** योगप्रभावेण । एकेन अंशेन व्यापिकः । एकेन अंशेन अणुश्च अभवम् ।।३४।। (**योगतः** इति पदं स्थानत्रयेपि अन्वेति । योगसामर्थ्येन मेरुवत् **गुरुत्वं** प्रकटीकरोमि । योगसामर्थ्येन तूलवत् **लघुत्वं** प्रकटीकरोमि । योगसामर्थ्येन आकाशवत् भागशः (अव्याकृताकाशैकदेशे) **व्यापकत्वं** प्रकटीकरोमीत्यर्थः । लडर्थे लङ् ।।३४।।[१])

**मद्योगबलतो नानादेहगो भोगवानहम् ।**
**सौभरिर्यद्वदभ्राभो मद्वत्को भ्राजतेऽधुना ।।३५।।**

**(अन्वयः) मद्योगबलतः सौभरिः यद्वत् अभ्राभः (तद्वत्) नानादेहगः भोगवान् अहं. मद्वत् कः अधुना भ्राजते.**

(व्या) एक एव **सौभरिः योगबलतः** अंशतः **नानादेहगतः** । तद्वत् अहमपि **नाना-**

---

(१) तथाहि मध्वविजये श्रीमदाचार्यैः प्रदर्शितअणिमादिसिद्धिविषयाः –

**आश्वस्तौ शुचिहृदिमावनूनमानावुद्धर्तुं समगददङ्गुलिं धरास्थाम् ।**
**सङ्गृह्य प्रसभरसादपिप्रयत्तौ सामर्थ्यं ययतुरिमौ न कम्पनेस्याः ।।२९।।**
**निर्यत्नं वटुमधिरुह्य मन्दहासी स प्रायादिह परितो नृसिंहगेहम् ।**
**ऐश्वर्यैरिति लघिमादिकैरुपेतो मध्वोऽभूत् त्रिभुवनचित्ररत्नराजः ।।३०।।**

**देहगतः** । सौभरेर्नानादेहगतत्वं कथम्' इत्यत आह – **अभ्राभ इति ॥** 'यथा एक एव आकाशः अंशतः नानादेहगतः, तथा सौभरिः नानादेहगः, तद्वदहमपि नानादेहग इत्युक्त्या सौभरेः सर्वसाम्यं वारयितुम्' आह – **मद्वदिति ॥** नानादेहगतत्वेन सादृश्येन सत्यपि, उक्त-वक्ष्यमाणानेकवैभववत्वेन पूर्णसादृश्यवान् न कोपीत्यर्थः ॥३५॥

**अणिमाद्यष्टाङ्गयोगं मणिमान् दुष्टराक्षसः ।**
**फणिना मानितं दष्टन् तत्पादाङ्गुष्ठतो हतः ॥३६॥**

**(अन्वयः) फणिना मानितम् अणिमाद्यष्टाङ्गयोगं मणिमान् दुष्टराक्षसः दष्टन् तत्पादा-ङ्गुष्ठतः हतः ।**

**(व्या)** मणिमन्निग्राहकत्वेनापि आचार्यसादृश्यमाह – **अणिमेति ॥** दुष्टराक्षसः मणिमान् । अणिमाद्यष्टाङ्गयोगं (अणिमादयः अष्टाङ्गयोगाः यस्य सः तं) **फणिना** शेषेन मानितं श्रीमध्वाचार्यं **दष्टन्** सन् दंशनं कुर्वन् सन्, **तत्पादाङ्गुष्ठतः हतः** (म.वि.३/४०) ॥३६॥

**तद्वत्साष्टाङ्गयोगेन मया वादेन चाहतः ।**
**मायावादिमताचार्यः पूर्वं क्रोधवशाधिपः ॥३७॥**

**(अन्वयः) साष्टाङ्गयोगेन मया पूर्वं क्रोधवशाधिपः मायावादिमताचार्यः वादेन च आहतः ।**

**(व्या) तद्वत्** आचार्यवत् अणिमादिअष्टाङ्गयोगसहितेन **मया पूर्वं** क्रोधवशानां राक्षसानां अधिपः । अनन्तरं **मायावादिमताचार्यः**[(१)] मणिमान् सर्पत्वदशायां पादेन संहृतः । मायावादि-मताचार्यत्वदशायां वादेन **आहतः** निगृहीतः ॥३७॥

**तस्मादाचार्यवर्येषु मताचार्याः सुरोत्तमाः ।**
**आचार्येष्वपि तेष्वत्र मध्वाचार्यः परो मतः ॥३८॥**

---

(१) मायावादी हि मिथ्याज्ञानी । स एव प्रथमतः निराकरणीयः ।

* **'मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूँरधूनुथा' (ऋ.सं.८-१४-१४) इति श्रुतिश्च ॥** इति ब्र.सू.भा. (३.४.४१)

तत्रैव भावदीपे श्रीमद्राघवेन्द्रश्रीमच्चरणाः – **मायाभिः कुविद्याभिः । उत्सिसृप्सतः उत्तमत्वं प्राप्तुमिच्छतः । द्यां स्वर्गं आरुरुक्षतः आरोढुमिच्छतः अवधूनुथः अन्धे तमस्यवाक्षिप इति ॥**

**(अन्वयः) आचार्यवर्येषु सुरोत्तमाः मताचार्याः । अत्र तेषु अचार्येषु अपि तस्मात् मध्वाचार्यः परः मतः ।**

**(व्या)** 'तस्मात् मणिमन्निग्राहकत्वात् मध्वाचार्यः परो मतः'[(१)] इत्यन्वयः । **मताचार्याः** (मध्वमतव्याख्यानकर्तारः) टीकाचार्यप्रभृतयः **सुरोत्तमाः** देवोत्तमाः ।।३८।। (तस्मात् मायावादिमतस्य वादेन निराकरणादेव मताचार्याः मध्वमतव्याख्यानकर्तारः पद्मनाभतीर्थ, पण्डिताचार्य, जयतीर्थादयः **आचार्यवर्येषु** मुक्तियोग्यआचार्याणां मध्ये **सुरोत्तमाः** देवश्रेष्ठाः दानवमतनिराकरणे देवानामेव शक्तत्वात् । तादृशदेवावतारभूताचार्येष्वपि मध्ये **मध्वाचार्यः परः** भाष्यादिकरणेन मायावादिमतस्य मायावादिमताचार्यस्य च सर्वात्मना ध्वंसनात् उत्तमोत्तमः इत्यर्थः[(२)] । 'दुर्मतस्थापने दानवः शक्तः दुर्मतविध्वंसनेन सन्मतस्थापने देवश्रेष्ठः मध्व एव शक्तः' इति भावः । 'अहमपि तद्वत् शक्तः' इत्यन्वयः ।।३८।।)

**वेदेषु सर्वेषु हरिः सुरोत्तमः पूर्वेष्वथाचार्यमतेषु तन्मतम् ।**
**गुरुष्वपीह प्रवरेषु गौरवात् पूर्णप्रज्ञः सर्वशास्त्रेषु तद्वाक् ।।३९।।**

**(अन्वयः) अथ पूर्वेषु आचार्यमतेषु तन्मतं (श्रेष्ठः) । वेदेषु सर्वेषु हरिः सर्वोत्तमः. इह प्रवरेषु गुरुषु अपि गौरवात् पूर्णप्रज्ञः (श्रेष्ठः) । (तथा) सर्वशास्त्रेषु तत् वाक् (वाणी श्रेष्ठः).**

**(व्या)** (सर्वेषु वेदेषु हरिरेव सुराणां नायकः सेव्यदेवेषु उत्तमः इति पूर्वाचार्याणां पद्मनाभतीर्थादीनां मतम् । गौरवं निमित्तीकृत्य प्रवरेषु गुरुषु । सेवकअध्यापकेषु मध्ये पूर्णप्रज्ञः प्रवरः । सर्वशास्त्रेषु स एव पूर्णप्रज्ञः । तस्य वचनमेव सिद्धान्तः ।।३९।।)

---

(१) अग्रे निधाय मणिमन्तमजेयमुग्रं शम्भोर्वराद्विविधशस्त्रमहाभिवृष्ट्या ।
तान्सर्वराक्षसगणान्मणिमत्समेतान् भीमो जघान सपदि प्रवरैः शरौघैः ।।

अवध्यांस्तान् क्षणेनैव हत्वा भीमो महाबलः ।
रणे क्रोधवशान्सर्वानतिष्ठद्गिरिमूर्धनि ।।
ते हता भीमसेनेन प्रापुरन्धं तमोऽखिलाः ।
हतः सौगन्धिकवने मणिमांश्च पुनः कलौ ।
जातो मिथ्यामतिं सम्यगास्तीर्याप तमोऽधिकम् ।। –म.भा.ता.नि.(२२/३१३-३१५)

(२) * मायावादतमोव्याप्तमिति तत्त्वदृशा जगत् ।
भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेः सदा ।। – उपाधिखण्डनम् ।

**ममास्थिजातान्यपि तस्थिवांसि चक्राङ्कितान्येव क्रमन्ति विष्णुम् ।।४०।।**

**तत्पादजांभस्सु सुपावितानि यद्वेह (यद्देह)(यद्येव) मां तत्पदकं नयन्ति ।।४१।।**

(अन्वयः) (हे विप्र!) मम अस्थिजातानि अपि तस्थिवांसि (श्रीहरेः) चक्राङ्कितानि विष्णुं एव क्रमन्ति । तत् (श्रीहरेः) पादजांभस्सु सुपावितानि यदि मां तत्पदकं नयन्ति.

(व्या) यथा श्रीमदाचार्यास्थिलक्षणं तथा ममाप्यस्थिलक्षणमिति ज्ञापयितुमाह – **ममास्थि -जातानीति** ।।४०।। (तानि स्थिराणि, मम तपोबलेन विष्णुचक्राङ्कितचिह्नितानि; तानि विष्णुसेवां प्रति मां प्रेरयन्ति; विष्णुपूजनाय बहु अनुकूलानीति यावत् । हरिसन्निधान-युक्ततीर्थक्षेत्रादिषु सञ्चारेण हरिपादतीर्थप्राशनेन च तानि परमपावितानि; तानि तद्विशिष्टदेहिनं मां हरिपादपूजनार्थमेव नयन्ति ।।४१।।[१])

---

(१) तान्येवास्थिषु मज्जासु पर्वस्वपि च सर्वशः ।
परज्ञानात्तु पर्वाणि विष्णो रूपाणि तानि हि ।।
अस्थानान्मदनाच्चैव ह्यस्थिमज्जाभिधानि च ।
व्यक्तिर्मज्जासु तस्यैव प्राणो मज्जासु संस्थितः ।।
मज्जैव रेतो भवति रेतसिस्थो विशेषतः ।
प्राणस्तेन हि तद्रेतोयुक्तं प्राणेन सर्वदा ।।
यदि प्राणो न तद्रेतो न गर्भत्वं व्रजेत् क्वचित् ।
विशेषप्राणसम्बन्धवर्जितान्यत एव हि ।।
न मांसादीनि गर्भत्वं यान्त्यतः स हि रेतसि ।
विशेषेण स्थितः प्राणः प्राणे चैव विशेषतः ।
स्थितो नारायणो देवस्तस्मान्मज्जासु च स्थितः ।। इति च । – ऐतरेयोपनिषद्भाष्ये ।

* द्वात्रिंशल्लक्षणैः सम्यग् युक्ता वायुत्वयोग्यकाः ।
नियमेनैव विष्णोस्तु प्रादुर्भावा विशेषतः ।
सहस्रारेण चक्रेण चिह्निता दक्षिणे करे ।
गदयाष्टाश्रया चैव शतावर्तेन कम्बुना ।
वामे करे तथाब्जेन सहस्रदलशोभिना । – बृहदारण्यके उद्गीथब्राह्मणे

* तदस्यप्रियमभिपाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य सहि बंधुरित्था विष्णोः पदे परमे मध्व उत्सः ।। इति ऋक् ।

**भुजास्थिनी शङ्खचक्रे सुवृत्ते जान्वस्थिनी पद्मगदे च जाते ।**
**उरोस्थि तन्मूर्तिरूपं प्रजातं शिरोस्थि नारायणमुद्रितं च ।।४२।।**

**दन्तास्थि तत्पादपद्मं च जातं वृन्तास्थि तच्छार्ङ्गधनुश्च जातम् ।**
**कर्णास्थि तद्बाणरूपं प्रजातं पादास्थि दामोदरपादपार्श्वम् ।।४३।।**

(अन्वयः) भुजास्थिनी शङ्खचक्रे सुवृत्ते, जान्वस्थिनी पद्मगदे च जाते । उरोस्थि तन्मूर्तिरूपं प्रजातं, शिरोस्थि नारायणमुद्रितं च; दन्तास्थि तत्पादपद्मं च जातम् । वृन्तास्थि तच्छार्ङ्गधनुश्च जातम् । कर्णास्थि तद्बाणरूपं प्रजातम् । पादास्थि दामोदरपादपार्श्वम् ।

(व्या) भुजास्तीनीति ।। शङ्खचक्रे जाते; शङ्खचक्राङ्किते जाते; पद्मगदे च जाते; तदङ्किते जाते; उरोस्थि तन्मूर्तिरूपम् = तत्प्रतिमासदृशम् ।।४२।। दन्तास्थि पादपद्मसदृशं जातम्; वृन्तास्थि शार्ङ्गधनुश्च = तच्चिह्नितं जातम् ।।४२ १/२।। कर्णास्थि = तद्बाणरूपं तच्चिह्नितं जातम् । यत् पादास्थि दामोदरपादपार्श्वं प्रापयामास ।

**सदा च मां प्रापयामास शीघ्रं कदापि संसारगतिं ददाति ।**
**न मे पदं तस्य महात्मनः प्रभोः ।।४४।।**

(अन्वयः) सदा मां च तस्य महात्मनः प्रभोः पदं शीघ्रं प्रापयामास । कदापि संसारगतिं मे न ददाति ।

(व्या) तत् । मे संसारगतिं न ददाति । किन्तु तस्य विष्णोः पदमेव ददाति ।।४४।।

**इत्थं तु सर्वाण्यस्थीनि विष्णोश्चक्राङ्कितानि च ।**
**जातानि जननाद्यं च नाशयन्ति मम श्रमम् ।।४५।।**

(अन्वयः) इत्थं सर्वाण्यस्थीनि तु विष्णोश्चक्राङ्कितानि जातानि च । मम जननाद्यं श्रमं[१] च नाशयन्ति ।

---

(१) 'इच्छतो विष्णुयजनं ब्रह्मणः साधनास्मृतेः ।
श्रमात्तापाच्च देहं तं त्यक्तुमिच्छा बभूव ह ।
इच्छया चाप्युदक्रामत्प्राणैः सह पितामहः ।
यशोवीर्यनिमित्तत्वात्प्राणास्तन्नामकाः स्मृताः ।

(व्या) (इत्थमिति ।। एवं मम सर्वाणि अस्थीनि विष्णोः चक्रचिह्नयुक्तानि जातानि मम तपः प्रभावेण । अत एव जननाद्यं मम श्रमं[(१)] नाशयन्ति ।।४५।।)

श्रीभीमसेनदेवर सादृश्य

**हे मुग्ध विप्र दधिदुग्धपयोनिधौ च**
**हरेस्तु पदमेव सुभक्तिपाशैः ।**
**दग्ध्वा कलेवरमिदं सकलाधिव्याधि-**
**ग्रस्तं च योगबलतः प्रवसामि पार्श्वे ।।४६।।**

(अन्वयः) हे मुग्ध! विप्र! दधिदुग्धपयोनिधौ सकलाधिव्याधिग्रस्तं इदं कलेवरं च योगबलतः दग्ध्वा हरेः पदम् एव तु सुभक्तिपाशैः बद्ध्वा पार्श्वे प्रवसामि.

(व्या) भीमसादृश्यम् उपपादयितुमाह – **हे मुग्धेति** ।। सान्द्रत्वेन दधिसादृश्ययुक्तदुग्ध-

---

अत्यल्पे चापि सञ्जाते श्रमेऽपि न तदिच्छया ।
तापे प्राणा निःसरन्ति सा च क्रीडा विभोः स्मृता । – (बृ.उ.भा. अश्वमेधब्राह्मणे)

(१) श्रमशब्दः –

'शक्तिविस्रंसने चापि शयने चापि कीर्तितः ।
श्रमशब्दो हरेर्नैव शक्तिविस्रंसनं क्वचित् ।
अतो हरेः श्रमो नाम शयनं सम्प्रकीर्तितम्' इति ब्रह्मतर्के । – अश्वत्थब्राह्मणे (बृ.उ.भा.)

अपि तु श्रमराहित्यं हि वायोरुच्यते (वायुशब्देन वायुपदयोग्या अपि ज्ञेयाः) – बृ.उ.भाष्ये –

वेदप्रवृत्तिकृद्धीन्द्रस्तेऽधिदैवे च पस्पृधुः ।
अहं श्रेयानहं श्रेयानिति तानब्रवीद्धरिः ।
स्वकर्म यस्त्वविश्रान्तं कुर्याच्छ्रेयान्स वः स्मृतः ।
इति श्रुत्वा ततश्चक्रुः कर्म स्वं स्वमनारतम् ।
तानेताञ्छ्रमरूपेण प्राप ब्रह्मा प्रजापतिः ।
श्रान्ताः स्वं भगवत्कर्म न शेकुः सर्वदेवताः ।
वायुं तु समशक्तित्वान्नाप ब्रह्मा प्रजापतिः ।
तेनासौ भगवत्कर्म सर्वं च कृतवान्सदा ।
श्रमात्पापात्मको मृत्युर्भगवत्कर्मवर्जनात् ।
अन्यान्देवानवापाशु नैव वायुं कदाचन । – (सप्तान्नब्राह्मणे)

पयोनिधौ । **सकलाधिव्याधिग्रस्तम्** आधिव्याधिग्रस्तशरीरसदृशम्, सकलाधिऽ व्याधयो ग्रस्ताः अपहृताः येन सः इति वा, तथोक्तम् ।।४६।। (तादृशं स्थूलशरीरं योगबलेन परित्यज्य श्वेतद्वीपे श्रीहरिसमीपे वसामि ।।४६।।)

**(अव)** तत्र दृष्टान्तमाह – **यथेति** ।।

**यथा दुर्योधनकृतं दग्ध्वा जतुगृहं पुनः ।**
**द्वैपायनस्य पार्श्वेपि ह्युवास कुरुनन्दनः ।।४७।।**

(अन्वयः) यथा दुर्योधनकृतं जतुगृहम् अपि कुरुनन्दनः दग्ध्वा, पुनः द्वैपायनस्य पार्श्वे उवास हि ।

**(व्या)** (यथा भीमसेनः जतुगृहं दग्ध्वा, श्रीवेदव्यासं सन्ददर्श तथा ।।४७।।)

**उदारगुणसम्पन्नः सदारश्च भवान्तरे ।**
**वृन्दावनगुरोराज्ञां मन्दारवनगस्य मे ।।४८।।**

**दिव्यरागान्वितग्रीवो द्रव्यरागविवर्जितः ।**
**करादागतवित्तानि सदारेभ्योददां सदा ।।४९।।**

**वैराग्यगुणसम्पन्नः सदा राज्यपराङ्मुखः ।**
**एष्यच्च निश्चितं सर्वमतीतत्वेन भण्यते ।**
**प्रेष्य सत्यं मया प्रोक्तं विश्वासं कुरु सर्वथा ।।५०।।**

(अन्वयः) भवान्तरे उदारगुणसम्पन्नः (अहं) सदारः च (सन्) मे वृन्दावनगुरोः मन्दारवनगस्य (श्रीहरेः) आज्ञां (अहं) पालितवान्, सदा राज्यपराङ्मुखः दिव्यरागा-न्वितग्रीवः द्रव्यरागविवर्जितः वैराग्यगुणसम्पन्नः करात् आगतवित्तानि सदा सदारेभ्यः अददाम् । एष्यत् सर्वं च निश्चितं यत् (तत्) अतीतत्वेन भण्यते । हे प्रेष्य! मया प्रोक्तं सत्यं एव; (तत्र) सर्वथा विश्वासं कुरु ।

**(व्या) उदारेति ।। अहं भवान्तरे** जन्मान्तरे **सदारः** सकलत्रः सन् **मे वृन्दावनगुरोः मन्दारवनगस्य** हरेः **आज्ञां** पालितवान् ।। **सदारेभ्यो** गृहिभ्यः ।। (**दिव्यरागान्वितग्रीवः** उत्कृष्टवर्णविशिष्टकण्ठवान् सुन्दरः इत्यर्थः । उत्कृष्टस्वरयुक्तकण्ठः दिव्यस्वरेण वेदादिपारायणकर्ता

इत्यर्थः । अथवा हरिनिर्माल्यरक्तगन्धलिप्तकण्ठः इति वा । तथापि द्रव्येषु शब्दादिषु, रजत-सुवर्णमयधनेषु वा । **रागविवर्जितः** कामहीनः । **करात्** प्राप्तधनानि वसिष्ठसदृशतपोनिरत-गृहस्थब्राह्मेभ्यः । सर्वदा दानं करोमीत्यर्थः ।।) **सदा राज्यपराङ्मुखः** दुष्टनिग्रहादिना राज्यपरि-पालकोपि तत्पराङ्मुख इव विरक्तत्वात् ।। कथमाचार्यनिगृहीतस्य सर्पादिरूपिणो मणिमतः तदैव भवन्निगृहीतत्वम्? इत्यत आह – **एष्यत् त्विति (एष्यच्च इति)**।। सर्वम् उक्तं वक्ष्यमाणं च एष्यत् तु निश्चितं यत्तदतीतत्वेन भण्यते[१] । अनेन 'स्वकीयमणिमन्निग्राहकत्वादिकम् आगामिकल्पे वायुत्वदशायाम्, वृन्दावनाचार्यस्य यतित्वादिकं च जन्मान्तरे'त्यादि ज्ञातव्यम् ।। (**हे प्रेष्य!** द्विज! **मया प्रोक्तं सत्यम्** । ऋजोर्वाक्यस्य अनृतत्ववैफल्यादिदोषरहितत्वात् । तस्मात् **सर्वथा** अञ्जसा **विश्वासं कुरु** ।।५० १/२।।) इति विप्रश्रोतृकप्रकरणम् ।।

**२. लक्ष्मीपतिप्रकरणम् ।। श्लोकाः (५१-७५)**

**(व्या) 'इत्थं ब्राह्मणमुख्येन'** इत्यारभ्य **'आख्यानं शोकनाशनम्'** इत्यन्तं लक्ष्मीपति-श्रोतृकं प्रकरणम् ।

पूर्वप्रकरणे हनुमद्भीममध्वसादृश्यकथनेन **श्रुतिमूलत्वम्** । गरुडोत्तमत्वे सति भगवद्भक्ति-रूप**युक्तिमूलत्वं** अस्याः कृतेः सूचितम् । एवं श्रुतियुक्तिमूलत्वात् उपादेयस्यास्य 'आख्यानस्य अर्थकथनं त्वया कर्तव्यम्' इति उक्त्वा, तत्साधनत्वेन ज्ञातव्यं हंसरूपिणः परमात्मनः वक्तृत्वं, विरिञ्चिसहितस्य स्वस्य श्रोतृत्वम्, तथा बादरायणस्य वक्तृत्वम्, श्रीमदाचार्येण सह स्वस्य श्रोतृत्वम्, अभेदजयसाधनत्वेन मधुहननोपयुक्तधनुर्बाणासिदर्शनं च अत्रोच्यते । हंसमुखतः श्रवणम्, हंसमन्त्रजप्तृत्वम्, बादरायणनमनं भौमभागवतालौकिकवैभवम् । विरिञ्चिसाहित्यम् आनन्दमुनिसाहित्यं च भौमभाक्तलौकिकवैभवमिति ज्ञातव्यम् ।।५१।।

**इत्थं ब्राह्मणमुख्येन श्रुत्वा वै गुणवैभवम् ।**
**गणयत्स्वपि देवेषु भण सत्सु च मामिह ।।५१।।**

**(अन्वयः) इत्थं ब्राह्मणमुख्येन (मम) गुणवैभवं श्रुत्वा देवेषु गणयत्सु अपि इह च सत्सु भण ।**

---

(१) 'एष्यच्च निश्चितं यत्तदतीतत्वेन भण्यते ।
चक्रवत्परिवृत्तेर्वा दुष्टानां मोहनाय वा' इति नारदीये ।। भाग.ता.नि. ३.३.२५

(व्या) (इत्थं एवं प्रकारेण ब्राह्मणमुख्येन विप्रमुखोद्भवेन निमित्तेन मम गुणवैभवं श्रुत्वा, कृतश्रवणेषु) देवेषु मदीयगुणवैभवं गणयत्सु सत्सु इह भूलोके सत्सु शेषादिषु भण' इत्युक्त्या, 'देवगणेन मम वैभवगणनकाले तवापि वैभवविभजनादिना तद्गणनेच्छा जायते । तदा त्वया ज्ञातं सत्सु वक्तव्यम्' इत्युक्तं भवति ।।५१।। (सत्सु मां भण ।।)

**अहं शुभोदसागरेन्वहं विभोर्हि वासरे ।**
**सुहंसरूपिणो हरेर्गृहं सरामि रेरमम् ।।५२।।**

(अन्वयः) रे (हे अरे! लक्ष्मीपते!) शुभोदसागरे अन्वहं विभोः वासरे हि सरामि । सुहंसरूपिणः हरेः गृहम् अरमम् ।

(व्या) अहमिति ।। शुभोदसागरे शुद्धोदकसमुद्रे अन्वहं प्रतिदिनम् । विभोर्हि वासरे एकादश्याम् । अरे लक्ष्मीपते ।।५२।। (हंसनामकहरेर्गृहं प्रति सरामि । तत्र ......... ............... सुखी भवामि । लडर्थे लङ् । रमं मनोहरं गृहं इति वा अन्वयः ।।)

**कारितुं सर्वभृत्यैश्च तारितुं भवसागरात् ।**
**स्मारितुं सर्वश्रेयांसि प्रेरितुं सर्वशः सुरान् ।।५३।।**

(अन्वयः) भवसागरात् तारितुं सर्वभृत्यैः च कारितुं सर्वश्रेयांसि स्मारितुं सर्वशः सुरान् प्रेरितुं (अहं एतत्कर्म करोमि) ।

(व्या) सर्वभृत्यैः कर्तव्यं साधनं कारितुम्, तान् भवसागरात् तारयितुम्, सर्वाणि श्रेयांसि हरिनामादीनि स्मारयितुम्, सर्वान् सुरान् प्रेरयितुम् अहमवेदं करोमि ।।५३।।

**अहं ममेत्यहङ्काररहितो वै हरेरिह ।**
**करोम्यहरहः कर्म हंसोऽहं सरहस्यकृत् ।।५४।।**

(अन्वयः) 'अहं मम' इति अहङ्काररहितः हंसः सरहस्यकृत् अहं इह अहरहः हरेः कर्म करोमि, वै ।

(व्या) इदं (केवलं) मदीयमेवेत्यहङ्काररहितः[१] मुख्यस्वातन्त्र्याभिमानरहितः इति यावत् ।

---

(१) अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ।। – (भाग.)
अहङ्कारस्य सकाशाद्दृश्यन्ते । नात्मनः स्वतः ।

**हरेः** हंसरूपिणो **हरेः** प्रीत्यर्थं **हंसः**[1] परमहंसः यत्याश्रमस्थः **अहं सरहस्यकृत्** गोप्यरहस्यकृत् गोप्यसहितस्य कृत् कर्ता अहरहः कर्म करोमि । श्वासरूपहंसमन्त्रजपं करोमीति भावः ।।५४।।

**हंसोऽपि हंसवाहस्य सुयशं ज्ञानमुत्तमम् ।**
**संसारोत्तारणांशं च मामपि प्राक् शशंस ह ।।५५।।**

(अन्वयः) हंसः अपि हंसवाहस्य मां अपि च सुयशम् उत्तमं ज्ञानं संसारोत्तारणांशं च प्राक् शशंस । ह ।

(व्या) **हंसोऽपि** हंसनामकपरमात्मापि **सुयशं** सुयशःसाधनम् **उत्तमं ज्ञानम् संसारोत्तारणांशं** मोक्षैकदेशरूपम् **प्राक् शशंस** ।।५५।। ('**हंसवाहस्य** चतुर्मुखस्य **मामपि** ममापि मां उद्दिश्यापि मोक्षप्रापकम् उपदेशं कृतवान्' इत्यर्थः । अनेन विरिञ्चिसाम्यत्वमुक्तं भवति ।।५५।।)

**कंसारिः श्वेतवाहस्य संसारं नाशयेद्यथा ।**
**कांस्यं कांस्यस्य कर्तेव संशोधयति चोद्धवम् ।।५६।।**

(अन्वयः) यथा कांस्यस्य कर्ता कांस्यम् इव, कंसारिः यथा श्वेतवाहस्य संसारं नाशयेत् । कंसारिः उद्धवं च संशोधयति; (तथा मां प्रति शशंस).

(व्या) श्वेतवाहस्य अर्जुनस्य कंसारिः कृष्णः; (यथा कृष्णः अर्जुनस्य संसारं गीतोपदेशेन नाशयेत् नाशितवान्) यथा उद्धवं संशोधयति (यथा उद्धवगीतोपदेशेन एकादशस्कंधभागवते उक्तरीत्या उद्धवं पवित्रं चकार । यथा वा कांस्यस्य कर्ता कांस्यं संशोधयति) तथा मां प्रति शशंस ।।५६।।

**स देवो वरदो मह्यं कदा चेह समागतः ।**
**इति मामुक्तवान् सक्तं(सूक्तं) स्वपादे चापदात्यजत् ।।५७।।**

---

'अहङ्कारात्तु संसारो भवेज्जीवस्य न स्वतः ।
कुतश्चिदानन्दतनोः स्वरूपेच्छायुतस्य सः' इति तन्त्रभागवते ।। (भाग.ता. ११.२८.१६)

(१) श्रीगरुड उवाच ।
के हंसाः कः परो हंसः के च पारावता गणाः । ......
श्रीभगवानुवाच ।...
परो हंसोहमेवैको हंसा ब्रह्माण एव तु । – (भाग.ता.नि.१०/९४)

(अन्वयः) वरदः सः देवः 'कदा च इह समागतः' इति मां उक्तवान्; स्वपादे सक्तं मह्यं आपदा च अत्यजत् ।

(व्या) (सः देवः हंसरूपी हरिः मधुरवाण्या मां सम्भाष्य कदा च इह प्राप्तोसि इति कुशलं पृष्ट्वा, तत्पादे भक्त्या पतितं माम् उद्धृत्य रक्षितवान् । मम अहितं कल्यादिकम् अत्यजत् ।।५७।।)

**अहमानन्दमुनिना सदानन्दप्रसङ्गिना ।**
**सह नानाविधा श्रीनाथस्य गीताः स्मराम्यहो ।।५८।।**

**तद्दर्शनोद्बुद्धहृद्यसंस्कारः शुद्धसात्विकः ।**
**बद्धसौहृदतत्पादपद्मेऽहं पतितोऽस्म्यहो ।।५९।।**

(अन्वयः) सदानन्दप्रसङ्गिना आनन्दमुनिना सह अहं नानाविधाः श्रीनाथस्य गीताः स्मरामि; अहो! तद्दर्शनोद्बुद्धहृद्यसंस्कारः[१] शुद्धसात्विकः अहं बद्धसौहृदतत्पादपद्मे पतितः अस्मि; अहो!

(व्या) अहमिति ।। सदानन्दो हरिः, तत्प्रसङ्गिना (= हरिविषयकप्रवचनशीलेन) (तेन सह स्थित्वा, नानाविधमूलग्रन्थश्लोकस्थहरिगुणान् चिन्तयामि ।।५८।। शुद्धस्नेहेन मध्वमुनिं नमस्करोमि ।।५९।।)

**तेन साकं बदरिकाश्रमं शोकविनाशकम् ।**

---

(१) (अत्र इदमवधेयम् – दर्शनविषयः श्रीमदाचार्यैरुक्तः ध्येयः ।)

सर्वस्य निर्णयसुवाक्यसमुद्धृती तु स्वाध्याययोर्हरिपदस्मरणेन कृत्वा ।
आनन्दतीर्थवरनामवती तृतीया भैमी तनुर्मरुत आह कथाः परस्य ।। (म.भा.ता.नि.३/८)

* **'यदीमिति ।। यदीं य एव प्रदिवः प्रकृष्टप्रकाशरूपो मध्वः आनन्दतीर्थाख्यो मातरिश्वा वायुर्गुहासन्तं जीवेश्वरैक्यं वदद्भिर्गूहितं सन्तं हरिम् आधवे आसमन्तात् पतित्वे मथायति मथ्नाति शास्त्रेण विचार्य निश्चाययतीति भावः ।'** – इति छान्दोग्यभाष्यटिप्पण्यां पदार्थकौमुद्यां श्रीवेदेशतीर्थाः ।

* **मध्वेति ।। विष्ण्वाद्यखिलतत्वप्रकाशकरी मध्वाख्यदुग्धाब्धिव्याख्येन्दूदिता ग्रन्थाख्यकौमुदी सज्जनाख्य-कुमुदानामानन्ददायिनी भूयादित्यशेषमतिमङ्गलम् ।।** – इति तत्वप्रकाशिकावाक्यार्थमञ्जरी टिप्पण्यां श्रीशर्कराश्रीनिवासतीर्थाः । * दर्शनम् = नयन्, स्वप्नः, बुद्धिः, धर्मः, (दृश्यते यथार्थतत्वमनेनेति), शास्त्रम् - इति मेदिनी ।

**तत्रापि दृष्ट्वा श्रीवासं सर्वसिद्धसुसेवितम् ।।६०।।**

**शुकस्य जनकं वै वासिष्ठकृष्णं नतोऽस्म्यहम् ।।६१।।**

(अन्वयः) तेन साकं शोकविनाशकं बदरिकाश्रमं (प्राप्य), तत्र सर्वसिद्धसुसेवितं श्रीवासं दृष्ट्वा, शुकस्य जनकं वासिष्ठकृष्णं अहं नतः अस्मि वै.

**(व्या)** ('श्रीमदाचार्येण **साकं** बदरीं प्राप्य वेदव्यासस्वामिनं पश्यामि ।।६०।। शुकपितरं श्रीवेदव्यासं नमामि । ततश्च मध्वमुनिना साकं स्थित्वा व्यासोक्तं वागमृतं पिबामि' इति योजनीयः ।।६१।।)

श्रीगुरुराजैः कृत मधुसूदनायुधदर्शनम्

**अहं घनोदकं चापि ह्यतिलङ्घ्य महाध(घ)नम् ।**
**धनूरत्नं च पश्यामि पुरा मधुविभेदनम् ।।६२।।**

(अन्वयः) अहं महाधनं घनोदकं च अपि अतिलङ्घ्य पुरा मधुविभेदनं धनूरत्नं च पश्यामि; हि ।

**(व्या)** (महाधनम् उत्तमनिधिरूपम् । [१]महाघनमिति पाठे कठिणतरत्वेन अभेद्यमित्यर्थः महाधनमित्येव वृं. पाठः ।। हयग्रीवावतारे मधुनामकदैत्यहनने साधनभूतं धनुःश्रेष्ठम् अनन्तासने पश्यामीत्यर्थः) ।।६२।।

**बाणं च शाणसंयोगान्निशितं द्युमणिप्रभम् ।**
**पश्यामि गुणसम्बद्धं शार्ङ्गिणः करभूषणम् ।।६३।।**

(अन्वयः) शार्ङ्गिणः करभूषणं द्युमणिप्रभं गुणसम्बद्धं शाणसंयोगान्निशितं बाणं च पश्यामि.

**(व्या)** शार्ङ्गधनुषिस्थितं **द्युमणिप्रभं** सूर्यप्रकाशोपेतं बाणं च पश्यामि । कथम्भूतम्?

---

(१) घनोदकं तद्विगुणं तदन्ते धाम मामकम् ।
यत्तद्दृष्टं त्वया पार्थ तत्र मुक्तैरजादिभिः ।
सेव्यमानः स्थितो नित्यं सर्वैः परमपूरुषः ।। (म.भा.ता.नि. २१/४५)

इति निर्णयवाक्यानुसारेण घनोदकान्ते अनन्तासनं वर्तते । उपरितनश्लोकेषु निर्णये वर्णितानुसारेण श्रीहरेः व्याप्तत्वमपि ज्ञेयम् । तत्रापि श्रीहरिदर्शनं कर्तुं शक्तानां श्रीगुरुराजानां सामर्थ्यमपि स्मर्तव्यम् ।

**शाणसंयोगात् निशितम्** । पुनः कथंभूतम्? **गुणसम्बद्धम्** ज्यासम्बद्धम् । **शार्ङ्गिणः** हरेः **कर-भूषणं** च ।। तादृशं बाणं पश्यामि ।।६३।।

**प्रासं च भासमानं तं न्यासकर्मणि कोविदः ।**
**पश्यामि श्रीपतेर्दास्यात् सोऽहंभावविवर्जितः ।।६४।।**

(अन्वयः) न्यासकर्मणि कोविदः श्रीपतेः दास्यात् सोहंभाववर्जितः (अहं) तं भासमानं प्रासं च पश्यामि.

**(व्या) न्यासकर्मणि कोविदः** तत्वन्यासमातृकान्यासादि न्यासमन्त्रानुसारितन्त्रविन्यास-चतुरः परमहंसः **अहं श्रीपतेः** आयुधं **प्रासं च पश्यामि** । न्यासोपि[१] रक्षार्थं नियुज्यमानआयुधः; 'न्यासोपि रक्षार्थं नियुज्यते' इति सादृश्यात् तत् स्मृतिः । एतादृशअद्भुतवस्तूनां दर्शनं भवतः केन पुण्येन प्राप्तमिति चेदाह – **सोहंभावविवर्जितः । श्रीपतेर्दास्यादिति** ।। निरहङ्कारेण हरि-भक्तो भूत्वा, योग्यताप्रभावात् संसिद्धः हरिमन्दिरे विद्यमानवस्तून्यपि पश्यामीति भावः । एतत्सर्वं ऋजुत्वोपपादकम् ।।६४।।

अभेदोपासकानां गतिनिरूपणम्

**अहं ब्रह्मास्म्यहं ब्रह्मास्मीति यो वक्ति हिंसकः ।**
**स्वहिंसां ब्राह्मण ब्रह्मण्यारोपयति नान्यथा ।।६५।।**

(अन्वयः) हे ब्राह्मण! 'अहं ब्रह्मास्मि, अहं ब्रह्मास्मि' इति यः हिंसकः वक्ति (सः) स्वहिंसां ब्रह्मणि आरोपयति न अन्यथा.

**(व्या) अहमिति ।।** हंसमन्त्रघटकसोऽहंशब्देन भ्रमवतामनिष्टमाह – **अहं ब्रह्मास्मीति** ।। (स्वकृतब्रह्महत्यादिनीचव्यापारान् **ब्रह्मण्यारोपयति** ब्रह्माहं इति चिन्तनात् । मत्कृतं ब्रह्मकृतं भवति ।।६५।।)

**ब्रह्महिंसात्मकस्यास्य महाब्रह्महतिः सुत ।**
**भवत्येवान्धतामिस्रे पतत्येव न संशयः ।।६६।।**

---

(१) व्यासः :
इदं ज्ञानं हरेः पूजा हरेरेवोदितं सदा ।
हर्यधीनं च सर्वत्रेत्येवं न्यासो हरौ स्मृतः ।। इति न्यासो वा ।। –(भागवतएकादशतात्पर्य १९/१)

**सामान्यब्रह्महत्यस्य प्रायश्चित्तं श्रुतौ स्मृतौ ।**
**न विद्यते द्विजश्रेष्ठ महाब्रह्महतेः किमु ।।६७।।**

(अन्वयः) **हे सुत! अस्य ब्रह्महिंसात्मकस्य महाब्रह्महतिः भवति एव । अन्धतामिस्रे पतति एव; न संशयः । हे द्विजश्रेष्ठ! श्रुतौ स्मृतौ सामान्यब्रह्महत्यस्य प्रायश्चित्तं न विद्यते; महाब्रह्महतेः किमु?**

(व्या) ब्रह्माभेदानुसन्धानं **महाब्रह्महतिः**[१] । 'ये के चात्महनो जनाः' इत्यादिवत् ।।

(**सुरा हरेर्गुणाः प्रोक्ता मे स्युरिति चिन्तनम् ।**
**सुरापानमिति प्रोक्तं तन्न कुर्यात्कथं कथञ्चन ।।**
**ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनम् ।**
**समुद्दिष्टा तां न कुर्यात् कथञ्चन ।। भाग.ता. ११/२१/४२**

इत्यत्र विद्यमान ब्रह्मणः जीवेन अभेदचिन्तनमपि उपलक्ष्यते ।।६६।।)

द्विजः श्रेष्ठः यस्मात् सः तथा तस्य लक्ष्मीपतेः सम्बुद्धिः ।।६७।। (सामान्यब्राह्मण-हननस्यापि श्रुतिस्मृतिषु प्रायश्चित्तं नोक्तम् । तत्पापस्य अतिविरुद्धत्वज्ञापनार्थं लिङ्गव्यत्ययेन हतस्य इति पदम् । परब्रह्माभेदचिन्तनरूपअसाधारणब्रह्महत्यायाः हरिवायुप्रसादं विना अन्य प्रायश्चित्तादिकं नास्तीति किमु वक्तव्यमिति भावः ।।६७।।)

**वक्तव्यं तत्र कर्तव्यं तत्र नास्ति बहिष्कृतिः ।**
**सुविस्तृतेन्धतामिस्रे पतन्त्येतन्मताश्रिताः ।।६८।।**

(अन्वयः) **किमु तत्र वक्तव्यं किमु तत्र कर्तव्यं बहिष्कृतिः नास्ति; एतत् मताश्रिताः सुविस्तृते अन्धतामिस्रे पतन्ति.**

(व्या) **किमु तत्र वक्तव्यम्? किमु तत्र कर्तव्यम्? बहिष्कृतिः नास्ति** । ब्रह्महत्यापरि-

---

(१) आत्मब्रह्मादयः शब्दाः साक्षात् पूर्णाभिधायिनः ।
जन्मादिकारणं ब्रह्म लक्षितं च ........ । (ईक्षत्यधिकरणअनुव्याख्याने)

* 'अहं ब्रह्मास्मि' 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' 'योऽसावादित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि' इत्यादि तु अन्तर्याम्यपेक्षया । 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः'; 'अः इति ब्रह्म तत्रागतमहमिति तस्योपनिषदहमिति'; अहंनामा हरिर्नित्यमहेयत्वात् प्रकीर्तितः । – (विष्णुतत्वविनिर्णयप्रथमपरिच्छेदः)

हारः असाध्यः । तस्मात् एतन्मताश्रिताः अद्वैतमतमाश्रित्य 'अहं ब्रह्मास्मि' इत्युपासकाः अपरिहार्यमहाब्रह्महत्यादोषेण पीडिताः । सुविस्तृते सप्तकोटियोजनविशाले अतिगम्भीरे अन्धन्तमसि पतन्ति ।।६८।।

**तस्मात्सोहंभावयुक्ते महत्पापं भवेद्ध्रुवम् ।**
**महापापगतिं याति स हाहेति वदन् सदा ।।६९।।**

(अन्वयः) तस्मात् अहम्भावयुक्ते महत्पापं भवति; सः ध्रुवं महापापगतिं याति; (तत्र) सदा हाहा इति वदन् (कष्टम् अनुभुङ्क्ते).

(व्या) तस्मात् ब्रह्माभेदचिन्तके पुरुषे अपरिहार्यपापं भवत्येव । सः महापापगतिं तमोद्वारं याति । तत्र प्रलयपर्यन्तं सदा हाहा इति वदन् पञ्चेंद्रियैः कष्टं अनुभुंक्ते ।।६९।।

**सोऽहंभावान्मोक्षमाप्नोषि जीव तस्मादन्धं याति तामिस्रमेव ।**
**दासोऽहं मामुद्धरस्वेति हन्त चान्धन्तमो नैव यातीति कामम् ।।७०।।**

(अन्वयः) हे जीव! सोहम्भावात् मोक्षं आप्नोषि. तस्मात् अंधं तामिस्रं एव याति; हन्त! 'अहं दासः मामुद्धरस्व' इति इह कामं (याति) अन्धं तमः नैव याति ।

(व्या) **हे जीव! सोहं** उपासनया **मोक्षम् आप्नोषि** । महाप्रळये तमोद्वारदेशादधः क्षिप्तः अन्ध**न्तामिस्रमेव** याति भवान् । तादृशदुर्मोक्षं भविष्यत्येव । '**अहं दासः इह** = अधिकारिवर्गे हे प्रभो! **मां** संसारात् **उद्धरस्व**' इति यो हरिं गुरुराजोक्तरीत्या भजति, सः सर्वथा अन्धन्तमः नैव याति इति सिद्धान्तः ।।७०।।

**प्रार्थय प्रार्थ्यमानं तं सार्थीकुरु मनोरथम् ।**
**कार्तस्वरतरं चार्थ्यं पदमारोह तद्धरेः ।।७१।।**

(अन्वयः) प्रार्थ्यमानं तं प्रार्थय; मनोरथं सार्थीकुरु; तत् हरेः कार्तस्वरतरं अर्थ्यं पदं च आरोह ।

(व्या) (ब्रह्मरुद्रादिभिः **प्रार्थ्यमानं तं** पुरुषोत्तमं त्वं **प्रार्थय** । तव **मनोरथं सार्थीकुरु** । अभीष्टं लभस्व । **तद्धरेः कार्तस्वरतरं** सुवर्णवत्प्रकाशमानम् **अर्थ्यं** परमपुरुषार्थरूपं **पदम् आरोह** = वैकुण्ठं गच्छ); 'तद्विष्णोः परमं पदम्' इति श्रुतेः ।।७१।।

**हे भेदवादिंस्तव भेदसिद्ध्यै सत्यं हि दैत्यादि वदस्व मानम् ।**
**तदैक्यवादं जहि योहमस्मि ब्रह्माहमस्मीति कुवादिनोक्तम् ।।७२।।**

(अन्वयः) हे भेदवादिन्! तव भेदसिद्ध्यै दैत्यादि मानं सत्यं हि वदस्व; तत् कुवादिनोक्तं यः 'अहमस्मि, ब्रह्माहमस्मि' इति ऐक्यवादं तत् जहि ।

(व्या) हे भेदवादिन्! लक्ष्मीपते! तव सिद्धान्तभूतजीवब्रह्मभेदसाधनार्थं वेदादिमानं सत्यं वदस्व ।

'ऋग्यजुःसामाथर्वांश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।'

इत्युक्तवेदादिप्रमाणं सत्यमिति प्रथमं साधय । 'यदि वेदादिप्रमाणं मिथ्या स्यात्तर्हि तादृश अविद्यमान(बाधित)प्रमाणेन किमपि न सिद्ध्यति । ऐक्यमपि सिद्ध्यति । असतः साधकत्वा-भावात् । प्रमेयसिद्धिरावश्यकी । तस्मात् उभाभ्यां प्रमाणसत्यत्वम् अवश्यमङ्गीकर्तव्यम्' इति प्रथमं प्रमाणसत्यत्वं स्थापय । 'प्रमाणस्य मिथ्यात्वे बाध्यत्वे तादृशबाध्यप्रमाणप्रतिपादित-विषयस्यापि (भेदस्यापि) बाध्यत्वप्रसङ्गात् सत्यभेदसाधनात् प्रागेव भेदप्रतिपादकप्रमाणस्य सत्यत्वं स्थापनीयम्' इति वा ।।

'दैत्यादि' इति पाठे दैत्यादिमानं पूर्वदेवाः इति प्रसिद्धदैत्यानामपि आदौ विद्यमानम् अतिप्राचीनम् अनादिवेदरूपं मानं प्रमाणम् इत्यर्थः । तत् सत्यं वदस्व । दैत्यादिभिः अङ्गीकृतं वेदरूपं प्रमाणं इति वा । तदनन्तरं तदैक्यवादं दैत्यैः अङ्गीकृतम् अद्वैतवादं खण्डय । ऐक्यस्य सत्यत्वे द्वैतप्राप्तिः । ऐक्यस्य असत्यत्वे ऐक्यविरोधिद्वैतस्य सत्यत्वम् इत्यादि प्रकारेण खण्डय । 'अहमस्मि; सोहमस्मि; अहं ब्रह्मास्मि' इति यो वादः कुवादिनोक्तः आपातार्थाश्रयेण तं जहि । 'त्वं चण्डालः' इत्यादिरीत्या युक्तिमल्लिकोक्तप्रकारेण खण्डय इत्यर्थः ।।७२।।)

**जित्वा चाभेदवादं तं दत्वा शिष्येषु सन्मतिम् ।**
**श्रुत्वा च गुरुणा तत्वं गत्वा च हरिमन्दिरम् ।।७३।।**

(अन्वयः) तम् अभेदवादं च जित्वा, शिष्येषु सन्मतिं दत्वा, गुरुणा च तत्वं श्रुत्वा, हरिमन्दिरं च गत्वा ।

**तत्रापि सच्चिदानन्दरूपं पश्य हरेरपि ।**
**स्मराभेदजयं चापि यत्फलं हरिदर्शनम् ।।७४।।**

(अन्वयः) तत्रापि हरेः सच्चिदानन्दरूपम् अपि पश्य । अभेदजयं च यत् फलं हरिदर्शनं च अपि स्मर ।

(व्या) (जित्वेति स्पष्टार्थः ।।७३।।) रूपं पश्य हरेरपि इत्यादि ।। उत्तमफलम् । तत् योग्यकालान्तरे भविष्यतीति भावः । 'एष्यत् तु निश्चितम्' इति प्रागुक्तेः[१] ।

(व्या) (अद्वैतखण्डनस्य द्वैतबोधनस्य च महाफलसाधनत्वादहमपि हरेराज्ञया[२] तत्कार्यं

---

(१) अभेदज्ञानिनां दोषः कीदृशः स्यादितीरिते ।
प्राह यस्मात् परस्वानां हर्ता राज्ञा निहन्यते ।
किमु राज्ञोपहर्तैवं ब्रह्मस्तेनो निहन्यते ।
सर्वेषां शास्तृ यद्ब्रह्म तत्स्वरूपतया स्मरन् ।
ब्रह्मस्तेनो निहन्येत तमस्यन्धे सदैव हि ।
दोषा ह्यज्ञानपूर्वास्तु बध्वा पुरुषमीशितुः ।
विष्णोर्हर्तेति बाधन्ते चाभिमानकृतास्पदम् ।
ततो विचारयंत्येनं देवता हरिणा सह ।
नाहं विष्णुर्न स्वतन्त्रो न च पूर्णगुणोस्म्यहम् ।
मम स्वामी हरिर्नित्यं स्वतन्त्रः पूर्णसद्गुणः ।
एवं दार्ढ्यं शपथवद्यदा कुर्यादयं तदा ।
जीवन्नेव न तापी स्यादन्तरानन्दभोगतः ।
तदा तेभ्यो मोचयित्वा हत्वा मिथ्याभिशंसिनः ।
स्वकीयं कुरुते विष्णुरन्यथा तैस्सह प्रभुः ।
तमस्यन्धे पातयति महाकारागृहोपमे ।
महान्धे वा पातयति हस्तच्छेदादिसंमिते ।
ततोधरे वा तद्योग्यं दृढाभेदं वधोपमे ।
तस्मादाचार्यतो ज्ञात्वा विष्णोर्भेदेन पूर्णताम् ।
उपासीत ततो मुक्तिं याति नास्त्यत्र संशयः '

– इत्यादि सामसंहितायाम् । (छान्दोग्यभाष्यम् ६अ.ख.१६)

(२) 'अदृष्टेर्जीवपरयोर्भेदस्याप्नोति संसृतिम् ।
अभेदनिश्चयाद्याति तमो नास्त्यत्र संशयः' इति च (भाग.ता.नि. ७.६.२७)

करोमीत्याह – अहं घनोदकमिति ॥

**अहं घनोदकं तीर्त्वा मनोवेगेन मानव ।**
**करोमि ब्राह्मणमुखादाख्यानं शोकनाशनम् ॥७५॥**

(अन्वयः) हे मानव! अहं मनोवेगेन[१] घनोदकं तीर्त्वा ब्राह्मणमुखात् शोकनाशनं आख्यानं करोमि.

(व्या) अनन्तासने हरेर्लोके स्थितोऽप्यहं घनोदकं तीर्त्वा, मनोवेगेन सोदामठं प्राप्य, भक्तानां शोकनाशनम् आख्यानं विप्रमुखात् प्रकाशयामि ॥७५॥

---

* 'अभेदमीशरूपाणां भेदं जीवेशयोरपि ।
यः पश्येत्स्थिरया बुध्या भक्तिमान्स विमुच्यते' – इति भविष्यत्पुराणे । (बृ.उ.भा. प्राजापत्य)

* नन्वभेददर्शिनां तमःप्राप्तिः फलम् किन्तु भेदाभेददर्शिनामप्यस्ति इति सुनिर्णीतं श्रीमदाचार्यैः बृहदारण्योपनिषद्भाष्ये प्राजापत्यब्राह्मणे । तद्यथा –

'ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः ।
शास्त्रतत्त्वमविज्ञाय तथावादबला जनाः ।
कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ।
तेषां तमःशरीराणां तम एव परायणम् ।' ....
'जीवाभेदं तथाऽभेदं जगता ये विदुः प्रभोः ।
तेऽपि यान्ति तमो घोरमधरं ब्रह्मतस्कराः ।
भेदाभेदं विदुर्ये च जीवैस्तु जगताऽपि वा ।
परस्य ब्रह्मणो यान्ति तमस्तेऽप्युत्तरं सदा ।
अभेदज्ञाः प्रकृत्याऽपि भेदाभेदविदस्तथा ।
तेऽपि यान्ति तमो घोरमधरं चोत्तरं क्रमात् ।
तस्मात्सर्वोत्तमं विष्णुं पूर्णसर्वगुणोच्छ्रितम् ।
विजानीयाद्विमुक्तयर्थं सर्वतश्च विलक्षणम् । ... इति च बृहद्भाष्ये प्राजापत्यब्राह्मणे

(१) 'मनोजवं मारुततुल्यवेगं...' इति श्रीवायुलक्षणमपि सूचितं भवति ।

**३. विप्रप्रकरणम्।। श्लोकाः (७६-१०१)**

**(व्या) 'अहमाकाशमार्गेण'** इत्यारभ्य अध्यायान्तं **'त्वादृशोपि न विद्यते'** इत्यन्तं विप्रश्रोतृकप्रकरणम् ।। पूर्वप्रकरणे 'यत्फलं हरिदर्शनम्' इत्यनेन लक्ष्मीपत्याख्यपुरुषस्य भगवद्दर्शनमुक्तम् । ततोप्यधिकस्य विप्रस्य भगवद्दर्शनं ततः प्राक्तनं ततोप्यतिशयितमिति द्योतयितुं सोपानारोहणन्यायेन सूर्यमण्डलस्थहरेः हृत्पद्मगतहरेः बादरायणात्मकत्वेन चन्द्रमण्डलस्थ हयवदनात्मकत्वेन च दर्शनं भविष्यतीति कथयितुं स्वस्य बादरायणहयवदनवेङ्कटेशदर्शनरूपं भौमभागवतालौकिकवैभवं, त्रिविक्रमोत्सवदर्शनं च तादृशं विप्रपूज्यत्वरूपं भौमभाक्तवैभवं चात्रोच्यते – **अहमिति ।।**

**श्रीगुरुराजैर्निरूपितहृदयस्थश्रीहरिस्वरूपविवरणम्**

**अहमाकाशमार्गेण नाकीशमगमं हरिम् ।**
**लोकेशं पश्य दास त्वं तोकावश्यं हृदि स्थितम् ।।७६।।**

**(अन्वयः) हे दास! आकाशमार्गेण अहं नाकीशम् अगमम्; हे तोक! त्वं हृदिस्थितं लोकेशं अवश्यं पश्य.**

**(व्या) नाकीशं**[१] बादरायणम् । 'नाकीशमित्थं सुत सत्यमेव' (२/४१) इति प्रागुक्तेः 'वेदेशं तु न जानाति' इति वक्ष्यमाणोक्तेश्च (९/८४) ।।७६।।

**नीवारशूकवत् तन्वी पीता भास्वत्यणूपमा ।**
**तस्याः शिखाया मध्ये च य आत्मा संव्यवस्थितः ।।७७।।**

(अन्वयः) नीवारशूकवत् पीता भास्वत् तन्वी अणूपमा तस्याः शिखायाः मध्ये च यः आत्मा संव्यवस्थितः.

**(व्या)** या नाडी नीवारधान्यस्य अग्रभागवत् सूक्ष्मा, पीता भास्वती, अणूपमा तस्याः ऊर्ध्वभागे हृदयप्रकाशमध्ये यः परमात्मा साक्षात् स्वरूपभूतस्वप्रकाशेन सन्दृश्यते[२] ।।७७।।

---

(१) अत्र नाकीशपदेन – **'नाकं न विद्यते अकं दुःखं सुखाभावो वा यस्मिंस्तन्नाकम्'** इति श्रीवेदेशीय-छान्दोग्यखण्डार्थे; **'असुखवर्जनात् पूर्णानन्दस्वरूपत्वाद्वा नाकमिति'** इति श्रीराघवेन्द्रश्रीमच्चरणोदित-खण्डार्थे सूचितार्थेन श्रीहरिरूपमेव ज्ञेयम् ।(छां.उ. अ२.खं.१०.मं.५)

(२) इडा च पिङ्गला चैव वज्रिका धारिणी तथा ।

**तं पश्य हृदयाकाशे महाकाशे यथा रविम् ।**
**कोटिसूर्यप्रतीकाशं चन्द्रकोटिविकासितम् ।।७८।।**

(अन्वयः) महाकाशे यथा रविं (तथा) हृदयाकाशे सूर्यकोटिप्रतीकाशं चन्द्रकोटि-विकासितं तं पश्य ।

(व्या) (तं पश्य । हृदयाकाशस्य सूक्ष्मत्वेपि महाकाशे रविरिव हृदयाकाशेपि विशाल-रूपेण योगैश्वर्येण दृश्यते । कोटिसूर्यप्रकाशः सः हरिः तथापि तापो नास्ति । चन्द्रकोटि-सुशीतलविकसितकान्तिमान् । तथापि शैत्यादि पीडा नास्ति । तादृशजीवप्रेरकहरिरूपं पश्य इत्यर्थः ।।७८।। एतदपि भाविजन्मन्येवेति अहमाकाशमार्गेण इत्यनेन श्लोकेन सूचितं भवति ।।७८।।)

**त्वत्सकाशाद्भिन्नमेव तत्सकाशादिदं जगत् ।**
**कासारे च यथा भातमाकाशं चोपरिस्थितम् ।।७९।।**
**तथा त्वद्धृदयाकाशे भातं सूर्यान्तरे स्थितम् ।**

(अन्वयः) त्वत् सकाशात् भिन्नं एव; तत् सकाशात् इदं जगत् (भिन्नं एव) यथा कासारे भातं च उपरिस्थितं आकाशं च (भिन्नं एव) तथा त्वत् हृदयाकाशे सूर्यान्तरे स्थितं भातम् ।

(व्या) (हरेः रूपं जीवाकारसदृशाकारेण दृश्यते । तथापि प्रकाशवैशिष्ट्येन स च भिन्न एवेति जानीहि इत्याह – त्वत्सकाशादिति ।।) यथा कासारे सरसि भातं प्रतिबिम्बत्वेन प्रतीतम् आकाशम्, उपरिस्थितं च (आकाशं) परस्परं भिन्नं तथा प्रतिबिम्बरूपात् त्वत्तः भिन्नं हरिं पश्येत्यन्वयः[१] ।।७९-८०।।

---

सुषुम्नायाश्चतुर्दिक्षु वज्रिकाद्यासु तत्र च ।
चतुर्मूर्तिः स भगवान् हृदये संव्यवस्थितः ।
द्वासप्ततिसहस्राणि नाड्योन्यास्तु प्रधानतः ।
बृहतीसहस्रस्पर्शानामृचां वाच्योत्र केशवः ।
रूपाणां लक्षणं तेषां रहस्यत्वान्न कथ्यते ।
विष्णुना ब्रह्मणे प्रोक्तं ग्रन्थसङ्कोचतस्तथा ।। – (तन्त्रसारसङ्ग्रह ४)

(१) ब्रह्मसूत्रभाष्ये अंशाधिकरणे श्रीमदाचार्यैः निरूपितबिम्बरूपवैचित्र्यम् अत्रावधेयम् – तद्यथा ।
**‘रूपं रूपं प्रतिरूपो बभूव’ इति प्रतिबिम्बत्वाच्च न साम्यम् ।**

**किरीटहारकेयूरसुरन्मकरकुण्डलैः ॥८०॥**

**विराजन्तं हरिं पश्य नेत्रयोरतिसुन्दरम् ।**

(अन्वयः) **नेत्रयोः किरीटहारकेयूरसुरन्मकरकुण्डलैः अतिसुन्दरं विराजन्तं हरिं पश्य.**

(व्या) (किरीटाद्यलङ्कारैरपि जीववैलक्षण्यं जानीहीत्याह – **तथेति** ॥ त्वद्धृदयाकाशे दृष्टैव मूर्तिः सूर्यमण्डले स्थित्वा । तत्र किरीटादिआभरणानि दृश्यन्ते । तादृशालङ्कारयुक्तमूर्तिं पश्य । 'सूर्यमण्डलवर्तिर्नारायणः इदानीं मद्धृदये मयि प्रसन्नः दृश्यते' इति निश्चयं कुरु[१] ॥८०॥)

**शङ्खचक्रगदापाणिं नारायणमरिन्दमम् ॥८१॥**

**सरोजासनमध्यस्थमरुणेनादरार्चितम् ।**

(अन्वयः) **अरुणेन आदरार्चितम् अरिन्दमं सरोजासनमध्यस्थं शङ्खचक्रगदापाणिं** (पश्य).

(व्या) (ज्ञाननेत्रयोः **अतिसुन्दरं** शङ्खचक्रगदापद्मधारिणं सूर्यबिम्बमध्ये कमलासने तिष्ठन्तं नारायणं पश्य ॥) (**सरोजासनेति** ॥ हे विप्र! कमलषण्डमध्ये निषण्णम् अरुणेन सूर्यसारथिना भक्त्या पूजितं सूर्यान्तर्यामिणम् अलङ्कृतं हरिं पश्य । त्वद्धृदये दृष्टजीवदेहसदृशमूर्तिं पश्य ।

---

वाराहे च –

'द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः ।
प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च ॥
प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः ।
प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु' इति ॥

अपि च न्यायविवरणे – **न च ब्रह्माद्यानन्दवैचित्र्ये बिंबभूतविष्णवानन्दवैचित्र्यम् । आदित्यादिवदाधिक्यात् । न हि सूर्यकान्तप्रतिबिंबस्याग्निजनकत्वशक्तिर्न जलगतस्येत्येतावता सूर्यवैचित्र्यम् । आधिक्यं हि तत्र निमित्तम् । सूर्यचन्द्रादिप्रतिबिम्बं विनान्यत्र तथा विशेषादृष्टेः ॥ न च नानाभावाद्विष्णोश्चित्तप्रतिबिम्बरूपता । आधिक्यादेव । प्रतिबिम्बे हि दोषाश्च प्रतीयन्ते । अतो हि श्रुतिः प्रतिषेधति 'नेदं यदिदमुपासते' इति** ॥ – (तृतीयाध्याये द्वितीयपादे)

एवं श्रीगुरुराजर सन्निधानं वृन्दावने, वेदनिधौ, विप्रे भक्तसमूहेऽस्तीति ज्ञेयम् ।

(१) 'एष्यत्तु निश्चितं तत् अतीतत्वेन भण्यते' इति यत्प्रागुक्तं तदत्र अनुसन्धेयम् । विप्रः अत्रोक्तप्रकारेण श्रीहरिदर्शनं स्वहृदये करोतीति मन्तव्यम् ।

तयोरभेदं जानीहि[१] ।।८१ १/२।।)

**आदित्यादिषु च स्थित्वा द्योतकोसौ प्रति प्रति ।।**

**स यश्चायं पुरुषे यो रविमण्डलमध्यगम् ।।८२।।**

**तमेकं पश्य देवेशं दास त्वं हृदि संस्थितम् (दास त्वद् हृदि) ।**

(अन्वयः) हे दास! 'स यश्चायं पुरुषे' (इति श्रुत्या) यः रविमण्डलमध्यगं त्वत् हृदि संस्थितं देवेशं तम् एकं (अभिन्नत्वेन) पश्य.

(व्या) जीवब्रह्मणोः भेदबोधकश्रुतिवचनमुदाहरति – **स यश्चायं पुरुषे इति ।।** पुरुषा-ध्यधिकरणकस्य पुरुषाद्यभेदसम्भवादिति भावः ।।८२।। ('स यश्चायं पुरुषे यश्चासौ आदित्ये' इति श्रुत्या यः ज्ञानेन जागरूकः सन् । रविमण्डलमध्यगं तं देवेशं हृदि संस्थितं पश्य । त्वं दासः इति स्पष्टं भविष्यति । रविमण्डलस्थहृत्स्थरूपयोरैक्यमपि स्फुटीभवति[२] ।।८२ १/२।।

**एवं मदुपदेशेन को देशो ज्ञानगोचरः ।।८३।।**

**वेदेशं तु न जानाति तं वदस्वाद्य नन्दन ।**

(अन्वयः) हे नन्दन (विप्र)! एवं मदुपदेशेन को देशः ज्ञानगोचरः वेदेशं तु न जानाति ।

---

(१) स एवादित्यसंस्थश्च स ह्यादिर्जगतो विभुः ।।
ततश्च सर्वभूतेषु जीवानां विनियामकः ।
स एवादित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः ।।
स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः ।
सङ्कर्षणो वासुदेव इत्येकः स चतुर्विधः ।।
प्रतिपूरुषमेतस्मात् स्थितो विष्णुर्नियामकः । – इति ऐतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके ।

(२) ''स यश्चायं पुरुषे, यश्चासावादित्ये'' इत्यधिकरणत्वेन भेद एव जीवस्य परमादुक्तः । 'एतस्मिन्नदृश्येनात्म्येनिरुक्तेनिलयनेभयं प्रतिष्ठां विन्दते', 'एतमानन्दमयमात्मानमुपसङ्क्रामति', 'सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता', 'एतमानन्दमयमात्मानमुपसङ्क्रम्य। इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्'' इत्यादिना मुक्तस्यापि भेद एवाभ्यस्यते । ''अथ सोभयं गतो भवति'' इति मुक्तिप्रस्तावात्। ''सैषानन्दस्य मीमांसा'' इति मुक्तानन्दो मीमांस्यते ।

– इति तैत्तिरीयोपनिषद्भाष्ये द्वितीयावल्ली

(व्या) हे नन्दन! विप्र! एतादृशमदुपदेशेन ज्ञानगोचरः को देशः = को वा देशः वासभूमिः यस्य सः । कुत्रापि क्षेत्रे वर्तमानो अधिकारी भवान् इति को वा; वेदेशं बादरायणं न जानाति । भवान् इतरो वा, स कः? तं वदस्व । मदुपदेशेन वेदप्रतिपाद्यनारायणदर्शनं बादरायणदर्शनं च भवतः इतरस्याप्यधिकारिणः स्यादेव । भवान् वा इतरो वा यत्र क्वच न तिष्ठतु । ज्ञानगोचरः मम ज्ञानविषयः कृपापात्रभूतः अथवा को देशः अधिकारिणः अज्ञानगोचरः भवति । को वा पुरुषः वेदेशं तु न जानाति । तं वदस्व इति योजना ज्ञेयम् ।।८३।।) एवं मदुपदेशेन वेदेशं बादरायणं कः न जानाति । तं वदस्वेत्यनेन उपदेशप्राबल्येन क्षिप्रमपरोक्षं भवतीति(१) भावः ।।८३ १/२।।

**कन्दाशनेन्द्रोहं चन्द्रान्तर्यामिणं हरिम् ।।८४।।**

**सन्दृश्याम्यत्र सान्द्रेण नन्द(सान्द्रेणानन्दे)नैवाशु नन्दितः ।**

(अन्वयः) हे ब्रह्मन्! कन्दाशनेन्द्रः अहं चन्द्रान्तर्यामिणं हरिम् अत्र सन्दृश्यामि. सान्द्रेण नन्दनैः एव आशु नन्दितः (भवामि).

(व्या) (हे ब्रह्मन् विप्र अहं कन्दाशनेन्द्रः मुनिश्रेष्ठः । यतो चन्द्रान्तर्यामिणं चन्द्र इव शुभ्रवर्णोपेतं हयग्रीवस्वामिनं साक्षात् पश्यामि । सान्द्रेण नन्देन आनन्देन आशु नन्दित एव भवामि ।)

**तं दृष्ट्वानन्तमव्यक्तं शीतांशुकरमच्युतम् ।।८५।।**

**अमृताक्तकरान् लोके विकिरन्तं मुरान्तकम् ।**
**भजामि कामजामार्तिं त्यजामि करजात मे ।।८६।।**

**सृजामि वाचोजालानि तज्जातगुणजानि च ।**

(अन्वयः) अनन्तम् अव्यक्तम् अमृताक्तकरान् लोके विकिरन्तं शीतांशुकरम् अच्युतं

---

(१) 'यथाप्सु लवणं व्याप्तं रसदृष्टौ न दृश्यते ।
एवं चेतनगो विष्णुस्तद्भिन्नोपि न दृश्यते ।
कथं स ज्ञायते विष्णुर्भिन्न इत्यत्र चाब्रवीत् ।
यथैवान्योपदेशेन बद्धाक्षः स्वगृहं व्रजेत् ।
तथाचार्योपदेशेन भिन्नमीशं व्रजेत्पुमान् ।।' – इति छान्दोग्योपनिषद्भाष्ये ।

**मुरान्तकं तं दृष्ट्वा भजामि; हे करजात! मे कामजाम् आर्तिं त्यजामि; वाचोजालानि सृजामि ।**

(व्या) स्वस्य हयवदनदर्शनकथनेन । तत् ज्ञातुः तत् ध्यातुः तवापि दर्शनं भविष्यतीति भावः ।।८२১८७।। अनन्तम् अव्यक्तम् । चन्द्र इव प्रकाशयुक्तं तं दृष्ट्वा ।।८५।। पुनः कथंभूतम् अमृतस्राविकरात् हस्तात् लोके प्रकाशं विकिरन्तं निखिललोकान् प्रकाशयन्तं इत्यर्थः । मुरान्तकं पापनाशकम् । मुरान्तककृष्णाभिन्नं भजामि । हे करजात! शिष्य! हयग्रीवस्वामिदर्शनेन कामजाम् आर्तिं भक्त्युद्रेकेण 'कदाचिद्रक्ष्यामि चक्षुषा' इत्याकारका तं कं() त्यजामि । क्षुद्रकामजस्यार्तेः ऋजूनामभावात् ।।८६।। तदनन्तरं तज्जातानां मत्साद्यनन्ताविर्भावानां गुणप्रतिपादकानि स्तोत्ररूपवाचोजालानि[१] सृजामि । तानि वचांसि तत्प्रेरणयैव जातानि ।।८६ १/२।।

**अहं सप्तसमुद्रेषु सप्तद्वीपेषु सञ्चरन् ।।८७।।**

---

(१) 'गुणप्रतिपादकानि वाचाजालानि सृजामि' इत्यत्र किमर्थं वाचोजालानि? अत्र यत् कार्याधिकरणे तत्वप्रकाशिकायामुक्तप्रमेयं तत्रैव श्रीगुरुराजैः गुर्वर्थदीपिकायां सूचितमपि अनुसन्धेयम् । तद्यथा –

(त.प्र.) **न चालौकिकगुणाप्रतीतिर्दोषः । इन्द्रादाविवोपदेशोपपत्तेः ।**

**(गुर्वर्थदीपिका) – वस्तुगत्या अलौकिकानामेव गुणानां लौकिकतया ध्यानं क्रियत इति शङ्कां वारयति** न चेति । इन्द्रादाविवेत्यस्य **अलौकिकादाविन्द्रादयो यथा गुरूपदेशाज्ज्ञायन्ते तथा अलौकिकगुणानामपि प्रतीतिरित्यर्थः ।**

* **(भावदीपः) इन्द्रादाविवेति ।। शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गत इत्यभिमानि-नयानुव्याख्यासुधयोरुक्तरीत्या 'यः सहस्राक्षः स इन्द्रः । यः पाशहस्तः स वरुणः' इत्यादौ वाक्यार्थ-मर्यादयोपस्थिते वस्तुनीन्द्रादिशब्दव्युत्पत्तिवदनुकूलवेदनीयो भगवद्गुणो यः स आनन्द इति साक्षात्कृत-भगवद्गुणानां विदुषाम् उपदेशेनोपस्थितौ तत्र तत्पदशक्तिग्रहोपपत्तेरित्यर्थः । 'युज्यते चोपदेशतः' इत्यनुव्याख्यानसुधायां तथैवोक्तेः ।**

अतः श्रीगुरुराजकृतस्तोत्ररूपवाचोजालानि भगवद्गुणोपसंहारानुकूलानि, ध्यानोपयोगीनि । ध्यानं तु श्रीगुरुराजैः गुर्वर्थदीपिकायां "**एवं च ध्यानं नाम सर्वज्ञगुरूपदेशेन स्वस्वबिम्बमूर्तिं ज्ञात्वाऽव्यक्त-स्वभावायास्तस्या एव साक्षाद्ध्यानेऽसामर्थ्यात्तादृशीं काञ्चन मनोमयीं प्रतिमां विधाय तामेव मनसा निरन्तरं पश्येत् । तदन्तरीदृश्यलौकिकी भगवन्मूर्तिरस्तीति निरन्तरस्मरणं तस्मिन्भगवत्य-लौकिकस्वयोग्यगुणानामपि यौगपद्येन निरन्तरानुस्मरणं ध्यानमुच्यते ।**' इति विवृतम् ।

(अन्वयः) अहं सप्तसमुद्रेषु सप्तद्वीपेषु सञ्चरन् तज्जातगुणजानि च (वाचोजालानि सृजामि).

(व्या) (अहं सप्तसमुद्रेषु । लवणेक्षुसुरासर्पिदधिक्षीराम्बुशम्बरमिति प्रसिद्ध सप्त समुद्रेषु । सप्तद्वीपेषु जंबू,प्लक्ष, शाल्मली, कुश, क्रौञ्च, शाक, पुष्करद्वीपेषु हरिसेवार्थं सञ्चरामि । तज्जातगुणजानि हरिनिर्मितगुणत्रयजन्यानि स्थानानि । सप्त द्वीपेषु सप्त समुद्रेषु सञ्चरन् वाचोजालानि स्तोत्ररूपाणि । विप्रस्वप्ने प्राप्य आख्यानरूपाणि सृजामीति वा ।।८७।।)

**सप्तस्वपि पर्वतेषु सप्तसप्तिरथेपि च ।**
**सप्तलोकेषु नित्यं च सप्तर्षितुषितार्पितैः ।।८८।।**

**सप्तमीमिश्रिताश्विन्यां सप्तकाञ्चनभूषणैः ।**
**अलङ्कृतः कलङ्केन हीनैः सम्राडिव प्रिय ।।८९।।**

(अन्वयः) हे प्रिय! सप्तसु पर्वतेषु अपि, सप्तसप्तिरथे अपि च (सञ्चरन्). नित्यं सप्तलोकेषु च सप्तर्षितुषितार्पितैः सप्तकाञ्चनभूषणैः अलङ्कृतः (अहं) कलङ्केन हीनैः सम्राडिव (सञ्चरन्);

(व्या) सप्तस्वपीति ।। तुषितार्पितैः देवसमर्पितैः ।।८८।। सप्तमीमिश्रिताश्विन्यां रथसप्तम्याम् ।।८९।। (सप्तस्वपि पर्वतेषु = सप्त कुलाचलपर्वतेषु । सप्त सप्तयः तुरगाः सप्त तुरगोपेत सूर्यरथेपि च । भूलोक, भुवर्लोक, सुवर्लोक, महोलोक, जनोलोक, तपोलोक, सत्यलोकाख्य सप्तलोकेषु सप्तर्षिदेवगणैः समर्पितालङ्कारैः कलङ्करहितैः सप्तविधकाञ्चनभूषणैः अलङ्कृतः सन् रथसप्तम्यां सूर्यरथे स्थित्वा सम्राडिव सञ्चरामि । हे प्रिय विप्र ।।८९।। )

**वेङ्कटाद्रौ शङ्खभेरीनादं श्रुत्वागमं हरिम् ।**
**जनार्दनं जनानां तु जननार्दनकारिणम् ।।९०।।**
**जनित्रं ब्रह्मणः कञ्जनेत्रं जनमनोत्सवम् ।**
**दृष्ट्वा हृष्टो भवाम्यष्टतिथिषु श्रेष्ठभाजनैः ।।९१।।**

(अन्वयः) (हे विप्र!) वेङ्कटाद्रौ शङ्खभेरीनादं श्रुत्वा अगमम्; ब्रह्मणः जनित्रं हरिं जनानां जननार्दनकारिणं जनार्दनं तु कञ्जनेत्रं जनमनोत्सवं दृष्ट्वा, अष्टतिथिषु हृष्टः भवामि.

(व्या) **वेङ्कटाद्रौ** पूजाकाले **शङ्खभेरीध्वनिं श्रुत्वा** संसारे पुनर्जन्मनाशकं जनार्दननामकं श्रीनिवासं प्रति यात्रां करोमि ।।९०।। (**ब्रह्मणः जनित्रं** जनकं पुण्डरीकाक्षं भक्तजनानाम् आनन्दप्रदं वेङ्कटेशं दृष्ट्वा हृष्टो भवामि ।।) **अष्टतिथिषु** = अष्टम्यादि पौर्णिमान्तेषु अष्टतिथिषु ।।९१।।

**पौरुटैर्दत्तमृष्टान्नं शिष्टैः सह मठाधिपैः ।**
**अश्नामि कृत्वा स्नानानि सुस्वनोर्जितसंस्तवैः ।।९२।।**

(अन्वयः) **सुस्वनोर्जितसंस्तवैः पौरुटैः (श्रेष्ठभाजनैः) दत्तमृष्टान्नं मठाधिपैः शिष्टैः सह स्नानानि कृत्वा अश्नामि.**

(व्या) (श्रेष्ठभाजनैः सुवर्णनिर्मितैः पात्रविशेषैः करणविशेषैः **दत्तं** श्रीकृष्णनिवेदितान्नं **शिष्टैः मठाधिपैः सह** अष्टमठाधिपतिभिः साकं **स्नानानि** मध्वसरोवरे वारुणाघमर्षणमृत्तिकागोमय-भस्मस्नानादिबहुविधस्नानानि **कृत्वा अश्नामि** ।। **सुस्वनोर्जितसंस्तवैः** दत्तमन्नमित्यन्वयः । 'स्तोत्रपूर्वकं समर्पितम्' इत्यर्थः ।।९२।। )

**श्रुत्वा प्रश्नानि तेषां च कात्स्न्र्यद्वै वच्मि तद्गुणान् ।**
**अहं तैः सहितोऽप्यत्र चागतो यतिभिः कृतिन् ।।९३।।**

(अन्वयः) **हे कृतिन्! तेषां प्रश्नानि च श्रुत्वा तद्गुणान् कात्स्न्र्यत् वच्मि वै; तैः यतिभिः सहितः अहं अत्र अपि च आगतः (अस्मि).**

(व्या) **तेषाम्** अष्टमठाधिपतीनां तत्वविषयक**प्रश्नानि श्रुत्वा कात्स्न्र्यात्** साकल्येन **तद्गुणान् वै वच्मि** । विकल्पपूर्वकम् उत्तरं स्फोरयामि । तदनन्तरं तान् सोदापुरगमनाय मतियुक्तान् करोमि । **हे कृतिन्!** भाविविद्वन् विप्र! अहं तैः मठाधिपतिभिः यतिभिः सह अत्र **चागतो**ऽस्मि । सोदापुरीं प्राप्तोऽस्मि ।।९३।।)

**द्रष्टुं त्रिविक्रमस्यापि रथोत्सवमथो हरेः ।**
**त्रिकोटियतिभिः साकं अटामि मम सेवकैः ।।९४।।**

(अन्वयः) **हरेः त्रिविक्रमस्य अपि रथोत्सवं द्रष्टुं मम सेवकैः त्रिकोटियतिभिः साकं अटामि.**

(व्या) (**त्रिकोटियतिभिः साकं** त्रिविक्रमरथोत्सवं द्रष्टुं प्राप्तोस्मि ।।९४।।)

**मठेपि तव हे तोक रटामि परमार्थकम् ।**
**मृष्टान्नं देहि तेषां च मृष्टकाञ्चनभूषणैः ।।९५।।**

(अन्वयः) **हे तोक! तव मठे अपि परमार्थकं रटामि; तेषां च मृष्टान्नं देहि ।**

**(व्या)** (**तव मठे** सोदामठेपि परमात्मस्वरूपं तान् प्रति बोधयामि । तेभ्यः 'यतौ दत्त-मनन्तकम्' इति वचनात् किञ्चिदन्नं देहि । अनेन विप्रस्य भावियतित्वं सूचयति ।।९५।।)

**नष्टकामं मामपि त्वं सुष्ठु पूजय पुत्रक ।**
**हे शिष्ट श्रेष्ठपूजां मे स्पष्टं कुरु हरेरपि ।।९६।।**

**इष्टं यथेष्टतः पुत्र नष्टं चापि ददाम्यहम् ।**

(अन्वयः) **हे पुत्रक! नष्टकामं मां अपि मृष्टकाञ्चनभूषणैः त्वं सुष्ठु पूजय; हे शिष्ट! मे हरेः अपि श्रेष्ठपूजां स्पष्टं कुरु; हे पुत्र! इष्टं नष्टं च यथेष्टतः अहं ददामि ।**

**(व्या)** (मां स्वरूपोद्धारकं विशेषतः पूजय ।।) **हे शिष्ट! 'श्रेष्ठपूजां मे स्पष्टं कुरु हरेरपि'** इत्यनेन 'यथा भगवत्पूजनं तथा मत्पूजनम्; हरेः हनुमतोऽपि स्पष्टं पूजनं कर्तव्यम्' इत्यपि उक्तं भवति ।।९६-१००।। (अहं च तवेष्टप्राप्तिं साधयामि । चोरादिभिः नष्टं चापि पुनः प्रापयामि ।) (हरिः = कपिः, कपिरूपो हनूमान्)

**निष्टप्तकटके श्रेष्ठकटकं चापि कुण्डले ।।९७।।**

**तटित्प्रभे पादपीठे शिष्टे मयि मठागते ।**
**देहि ते हितसिद्ध्यर्थं को हि मे त्वां विनेह च ।।९८।।**

(अन्वयः) **मठागते शिष्टे मयि ते हितसिद्ध्यर्थं तटित्प्रभे पादपीठे निष्टप्तकटके श्रेष्ठकटकम् अपि कुण्डले च देहि; त्वां विना इह च मे कः? हि.**

**(व्या)** (कटककुण्डलादिसुवर्णाभरणानि समर्प्य मां पूजय । अनेन सम्पद्वृद्धिर्जायते इत्युपदिशति ।।९७।। **तटित्प्रभे इति ।।** 'यथा यथा त्वया मम पूजा क्रियते तथा तथा फलवृद्धिर्दृश्यते' इति भावः । **'मठागते मयि'** इत्यनेन रूपविशेषेण ममागमनं विज्ञातं भवतीति सूचितं भवति । **को हि मे त्वां विना इह चे**ति अनुनयविशेषः प्रीत्या क्रियते । त्वां विना मम हितवान् पूजकः कः । त्वमेव मम श्रेष्ठपूजकः इत्यर्थः ।।९८।।

**हितवान् देहिनां मध्ये जहि ते चाहितामपि ।**
**एवं ममाज्ञां प्राज्ञाद्य कुरु चाज्ञानबन्धनम् ॥९९॥**
**निराकुरु तव ज्ञानं जायते ज्ञानिषूत्तमम् ।**

**(अन्वयः) हे प्राज्ञ! देहिनां मध्ये ते हितवान् मम आज्ञाम् अद्य कुरु; एवं ते अहितामपि च जहि; अज्ञानबन्धनं च निराकुरु; ज्ञानिषु उत्तमं ज्ञानं तव जायते ।**

**(व्या)** मम हितकरणेन **ते अहितां जहि** = अनिष्टं पापादिकं शत्रुं च निराकुरु । **अहितामि**ति स्त्रीलिङ्गपदेन विप्रस्यैव तादृशशत्रुनिबर्हणशक्तिर्भविष्यतीति ज्ञापयति । **हे प्राज्ञाद्य! एवं ममाज्ञां कुरु** । ततश्च **अज्ञानबन्धनं निराकुरु** ॥९९॥ **तव ज्ञानिषु** मध्ये **उत्तमं ज्ञानं जायते** ।

**अतस्त्वत्सदृशो नास्ति यतिषु प्रेष्ठ मादृशः ॥१००॥**
**कीदृशोस्मद्गुणो लोके त्वादृशोपि न विद्यते ॥१०१॥**

**(अन्वयः) हे प्रेष्ठ! अतः यतिषु त्वत् सदृशः नास्ति; मादृशः (नास्ति); त्वादृशः अपि लोके न विद्यते; अस्मद्गुणः कीदृशः (लोके तादृशः न विद्यते)?**

**(व्या)** अतः तवावतारकाले **त्वत्सदृश** एव यति**र्नास्ति । हे प्रेष्ठ! मादृशः** नास्तीति किमु वक्तव्यम् ॥ **त्वादृशोपि** ज्ञानी भूलोके दुर्लभः । **अस्मद्गुणः** ज्ञानी कथं वा वर्तेत? ॥१०१॥ इति विप्रप्रकरणं सम्पूर्णं ॥

**एतत्सर्वं स्वाप्रपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

**(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्रपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।**

**(व्या)** (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

।। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे नवमाध्यायः समाप्तः ।।

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्तिः, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः)

अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक-ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य-जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**।।इति श्रीस्वाप्नवृन्दावनाख्यानव्याख्याने नवमाध्यायः समाप्तः ।।**

**।। श्रीवादिराजगुर्वंतर्गतमध्वेशाभिन्नकृष्णार्पणमस्तु ।।**

## १०-०००- दशमाध्यायः

(व्या) श्रीगुरुभ्यो नमः ।। हरिः ओं ।। पूर्वाध्यायेषु स्वस्य सर्वदेवोपास्यत्वम्, हनुमदादिसादृश्यम्, भगवदुपासकत्वं चोक्तम् । स्वप्रतीकरूपे वृन्दावने सर्वदेवतासन्निधानम्, हनुमदादिमूर्त्युपेतत्वम्, पञ्चरूपिणो हरेः सन्निधानम्, स्वस्य ब्रह्मत्वसमये वायुभावयोग्येन साहित्यम्, रुद्रादिभावयोग्यैरुपास्यत्वं चोच्यते अनेनाध्यायेन ।

### १. विप्रप्रकरणम् ।। श्लोकाः (१-१२)

**'गणैः'** इत्यारभ्य **'तवायुर्वृद्धये वयं कुर्मः'** इत्यन्तं विप्रश्रोतृकप्रकरणम् । अत्र भाविरुद्रपदकृतकिरीटसमर्पणरूपभौमालौकिकभाक्तवैभवम्, दीपावलिभिः पुष्पावलिभिः वृन्दावनस्य पैलादिपूज्यत्वरूपतादृशवैभवम्, विप्रस्य आयुर्वृद्धिकारणानुऽ ग्रहकर्तृत्वरूपं भौमलौकिकभाक्तवैभवं चोच्यते – **गणैः स नारायणभूत इति ।।**

**हरिः ओं ।। गणैः स नारायणभूतनाथः समन्वितः कर्णविकर्णसञ्ज्ञैः ।**
**महामणीनां बहुलैः सुकीर्णं मौलिं ददौ मे शिरसि स्थिरोभूत् ।।१।।**

(अन्वयः) सः नारायणभूतनाथः कर्णविकर्णसञ्ज्ञैः गणैः समन्वितः (सन्) महामणीनां बहुलैः सुकीर्णं मौलिं मे शिरसि ददौ; स्थिरः अभूत् ।

(व्या) **कर्णविकर्ण**नामकैः **गणैः** भूतगणैः **समन्वितः सः** पूर्वाध्यायान्ते सूचितः नारायणभूतनाथः नारायणनामकः भूताधिपतिः **महामणीनां बहुलैः सुकीर्णं** खचितं **मौलिं** किरीटं **मे शिरसि ददौ**, समर्पितवान् । मत्सेवार्थं **स्थिरः अभूत्** ।।१।।

**कुबेरकोशादानीतं शोकापनुदकामदम् ।**
**दत्तवान् वित्तहीनं मे भूतनाथः प्रतापवान् ।।२।।**

**कुबेरो दत्तवान्नारायणभूतस्य हस्तके ।**
**सोपि मे शिरसि प्रोतं चकार शृणु पोतक ।।३।।**

(अन्वयः) हे पोतक! शृणु; प्रतापवान् भूतनाथः शोकापनुदकामदं कुबेरकोशात् आनीतं वित्तहीनं मे दत्तवान्; कुबेरः नारायणभूतस्य हस्तके दत्तवान्; सः अपि मे शिरसि प्रोतं चकार.

**(व्या)** कुत आनीतम्? कीदृशं किरीटं दत्तवान्? इत्यत आह – **कुबेरेति ।। शोकापनुदकामदं** शोकम् अपनुदति कामदश्च, तम् । **वित्तहीनं** क्रयहीनं दत्तवान् ।।२।। न बलात्कारेण कुबेरकोशादानीतमित्याह – **कुबेरेति ।। कुबेरो** नारायणस्य **हस्तके** मौलिं **दत्तवान्** । **सः मच्छिरसि प्रोतं चकारे**त्युक्त्या नारायणभूतस्यैव तत्पुण्यं न कुबेरस्येति प्रतीयते । अत अह – **सोऽपि** । कुबेरोपि मे शिरसि प्रोतं चकार । अनेन कुबेरनारायणभूतयोः तत्पुण्यमित्युक्तं भवति । **स्वोत्तमभूतनाथद्वारा समर्पितत्वस्य कथितत्वात् कुबेरसखित्वे सति भूतनाथत्वकथनेन भाविरुद्रभावयोग्यत्वं सूचितं भवति** ।।३।।

**अथ भूतराजमन्त्रः ।।**

अस्य श्रीभूतराजमहामन्त्रस्य वादिराजः ऋषिः । अनुष्टुप् छन्दः । भूतनाथान्तर्गत लक्ष्मीनृसिंहोदेवता । ''ओं रं भूतराजाय वादिराजप्रियाय नारायणाय हुं फट् स्वाहा' इति प्राणायामं कृत्वा ।

ओं रं हृदयाय नमः । ओं भूतराजाय शिरसे स्वाहा । ओं वादिराजप्रियाय शिखायै वषट् । ओं नारायणाय कवचाय हुम् । ओं हुं फट् नेत्रत्रयाय वौषट् । ओं स्वाहा अस्त्राय फट् ।।

अथ ध्यानम् –

रक्तं विचित्रवसनं मणिकुण्डलाढ्यं बन्धूकपुष्पसदृशाधरपाणिपादम् ।
उद्यद्दिनेशकिरणारुणदेहभाजं नारायणं नमत चापशरान् दधानम् ।।

गणैस्स नारायणभूतनाथः समन्वितः कर्णविकर्णसञ्ज्ञैः ।
महामणीनां बहुलैःसुकीर्णं मौलिं ददौ मे शिरसि स्थिरोभूत् ।।

अलघुमहिमराजाद्वादिराजार्यपादाम्बुजगतमधुमाद्यच्चञ्चरीकायमानम् ।
अकुटिलहरिधर्मानुष्ठितिप्राप्तभावित्रिनयनपादभाजं भूतनाथं नतोस्मि ।। अथ मन्त्रजपः ।।

**विप्रापहार्यं ते पुत्रचरणाद्रौप्यभूषणम् ।**
**नारायणेनापहृतं भूतेनाकार्यकारिणा ।।४।।**

**अन्वयः – हे विप्र! ते पुत्रचरणात् अपहार्यं रौप्यभूषणं अकार्यकारिणा नारायणेन भूतेन अपहृतम् ।**

(व्या) नारायणभूतकृतां तज्जातिचेष्टामाह – विप्रेति ।। हे विप्र! ते पुत्रचरणात् अपहार्यं पूर्वकर्मानुसारेणापहार्यत्वेन क्लृप्तं रौप्यभूषणम् अकार्यकारिणा भूतेन अपहृतम् ।।४।।

**अतश्च त्रिगुणं दत्तमेकैकचरणस्य मे ।**
**दुर्वर्णं कारय क्षिप्रं तेन ते पुत्रभूषणम् ।।५।।**

(अन्वयः) अतः मे एकैकचरणस्य च त्रिगुणं दुर्वर्णं दत्तम् । तेन क्षिप्रं ते पुत्रभूषणं कारय ।

(व्या) तत् खेदपरिहारकत्वेन स्वानुग्राहकत्वमाह – अतश्चेति ।। अतः नारायण-भूतापहृतरौप्यभूषणतः त्रिगुणं दुर्वर्णं रजतम् । एकैकचरणस्य मे मया दत्तं तेन रजतेन ते तव पुत्रभूषणं कारय ।।५।।

**तस्मान्न चिन्ता कार्या मत्पुत्रचिन्तामणिं भज ।**
**कान्तारे च यथैकान्ते स्वकान्तं भजते सती ।।६।।**

(अन्वयः) तस्मात् न चिन्ता कार्या; यथा कान्तारे एकान्ते च सती स्वकान्तं भजते तथा मत्पुत्रचिन्तामणिं भज ।

(व्या) तस्मादिति ।। भूतापहृतत्वात् चिन्ता न कार्या । ततोऽप्यधिकस्य दत्तत्वात् । अयं रुद्रपदयोग्यो न वेति चिन्ता न कार्या इति वा । एवं रुद्रपदयोग्यस्य इन्द्रपदयोग्येन विप्रेण ज्ञातव्यत्वमुक्त्वा तदुत्तमवायुपदयोग्यस्य भजनीयत्वमाह – मत्पुत्रेति ।। कान्तारे अरण्ये एकान्ते सती पतिव्रता(पार्वती) यथा स्वकान्तं भजते । यद्वा सती पार्वती कान्ताराख्य-केरळदेशगतक्षेत्रमध्ये (कान्तारे इळावृतदेशस्थ अरण्ये) स्वकान्तं शिवं यथा भजते तथा परमादरेण मत्पुत्रचिन्तामणिं मत्पुत्रो वेदवेद्यो मुनिः, स एव चिन्तामणिः तं भज ।

यद्वा पुत्रचिन्तामणिं भजेत्यनेन भूतनाथस्य चिन्तामणित्वेन भजनीयत्वमुच्यते । भूतभाव-मात्रेण न्यूनता शङ्का न कार्येति सूचयितुं दृष्टान्तमाह – कान्तारेति ।। यथा एकान्ते –

वैजयन्तिसमासीनम् एकान्ते चतुराननम् ।
विष्णोर्विविदिषुस्तत्वं पर्यपृच्छत् सदाशिवः'

इत्यत्रोक्ते वैजयन्ताख्यब्रह्मसदनगते एकान्ते सती पार्वती यथा स्वकान्तं भजते ।

ब्रह्मपरिवारत्वेन स्वकान्तत्वेन च भजते तथा त्वमपि मत्पुत्रचिन्तामणिं भूतनाथं **कान्तारे** 'अश्वत्थचूते'त्युक्तकदलीवने मत्परिवारत्वेन त्वदुत्तमत्वेन च भज । यथा 'यक्षरूपः प्रादुरभूदुमा शिवसमन्वितः' इत्याचार्योदाहृतस्मृत्युक्तस्य हरेः । 'पिशाचचर्यामाचरद्रुद्रो वै विष्ण्वनुज्ञया' इत्युक्तस्य हरस्य न्यूनता नास्ति । तस्मादयं रुद्रपदयोग्यो न वेति चिन्ता न कार्या इति भावः[१] ।।

**शैलराजसुता पैलमुनिमाह च सादरम् ।**
**कैलासशिखरे रम्ये तैलदीपावलिं कुरु ।।७।।**
**इत्युक्तः सोऽपि प्रत्युक्तिमवदद् द्विजपुङ्गवः ।**
**करोमि वृन्दावनाग्रे कन्दाशनवरस्य मे ।।८।।**

**(अन्वयः) शैलराजसुता सादरं 'रम्ये कैलासशिखरे तैलदीपावळिं कुरु' इति पैलमुनिं आह च; इत्युक्तः सः द्विजपुङ्गवः अपि मे कन्दाशनवरस्य वृन्दावनाग्रे करोमि' इति प्रत्युक्तिम् अवदत् ।**

**(व्या) शैलेति ।।** उपस्थितपार्वतीपैलसंवादेन सूचितं रुद्रोत्तमत्वं ज्ञापयितुं पैलादिऋषि-पूज्यत्वरूपभौमलौकिकभाक्तवैभवमाह – **शैलराजेति ।।** (पैलस्य प्रारब्धमर्दनाय पार्वती पैलं प्रति कैलासशिखरस्य दीपालङ्कारं कुर्विति उपायमाह) ।। **इत्युक्त इति ।। कन्दाशनवरस्य मे** मुनिवरस्य मे मत्सकाशाद्वरस्य वादिराजमुनेः **वृन्दावनाग्रे दीपावलिं करोमीति प्रत्युक्ति-मवदत्** । **'मे वरस्य'** इत्युक्त्या स्वाविष्टशेषोत्तमत्वम्, प्रत्युक्त्या रुद्रोत्तमत्वं च[२] सूचितं भवति ।।८-९।।

**अव्यग्रश्चाग(ग्र)तः शीघ्रं पैलः कैलासपर्वतात् ।**
**तैलं गोघृतमादाय शैलं वृन्दावनं मम ।।९।।**

**(अन्वयः) अव्यग्रः पैलः तैलं गोघृतं च आदाय कैलासपर्वतात् अत्र शैलं मम वृन्दावनं शीघ्रम् आगत ।**

---

(१) **वैजयन्ते समासीनमेकान्ते चतुराननम् ।**
**विष्णोर्विविदिषुस्तत्वं पर्यपृच्छत् सदाशिवः ।।** – (तलवकारोपनिषद्भाष्यम्)

(२) पैल इत्याद्याविष्टदेवानां श्रीमदाचार्याः स्वकृतग्रन्थे निर्णीतवन्तः । तद्यथा –
**शेषोऽथ पैलं मुनिमाविशत्तदा वीशस्सुमन्तुमपि वारुणिं मुनिम् –** (म.भा.ता.नि. १०/७४)

(व्या) (न केवलमुक्तवान् । किन्तु अव्यग्रः सन् चित्तविक्षेपहीनः सन् पैलः कैलासपर्वतात् शीघ्रम् आगतः । तैलं गोघृतमादाय मम शैलं शिलानिर्मितं वृन्दावनं प्रति आगतः ।।९।।)

**चकार दीपावलिभिः पापावलिविनाशनम् ।**
**ववर्ष पुष्पावलिश्च मधुपावलिसंयुताः ।।१०।।**

(अन्वयः) पापावलिविनाशनं दीपावलिभिः चकार; मधुपावलिसंयुताः पुष्पावलिः च ववर्ष ।

(व्या) (दीपावळिभिः स्वपापावळिविनाशनं चकार । मधुपावळिसंयुताः सुगन्ध-विशिष्टाः पुष्पावळीः ववर्ष च ।।१०।।)

**एवं सर्वेपि ऋषयो वर्षे वर्षे समावृताः ।**
**चक्रुः सर्षपमात्राणि दुष्कृतानि प्रहर्षिताः ।।११।।**

(अन्वयः) एवं सर्वे ऋषयः अपि वर्षे वर्षे प्रहर्षिताः समावृताः (सन्तः) दुष्कृतानि सर्षपमात्राणि चक्रुः ।

(व्या) (न केवलं पैलः सर्वे ज्ञानिनः वर्षे वर्षे प्रहर्षविशिष्टाः सन्तः वृन्दावनं प्रति समावृताः भक्त्या प्राप्ताः । कर्तरि क्तः । शिष्यसमावृताः ऋषयः एवम् आगताः इति वा । स्वदुष्कृतानि प्रारब्धपापानि सर्षपपरिमितानि चक्रुः । मम सेवया ।।११।।)

**कायः सन्निहितापायः प्रायः श्रेयस्करस्तथा (रो मम)।**
**वायुप्रवेशनोपायं तवायुर्वृद्धये वयम् ।।१२।।**

(अन्वयः) हे विप्र! सन्निहितापायः तव कायः प्रायः मम श्रेयस्करः; वयं तव आयुर्वृद्धये वायुप्रवेशनोपायं (कुर्मः) ।

(व्या) 'मत्पुत्रचिन्तामणिं भज' इत्यनेन वायुभावयोग्यस्य च रुद्रभावयोग्यस्य च भजनीयत्वमुक्तम् । किं तद्भजनफलमित्यत आह – काय इति ।। तव कायः । सन्निहितापायः समीपे प्रसक्तं मृत्युः यस्य सः । तवापमृत्युं परिहृत्य आयुर्वृद्धये । वयं वायुप्रवेशनोपायं कुर्मः । 'वायुपदयोग्यस्य भजनं कारयित्वा, वायुप्रसादमुत्पाद्य, रुद्रपदयोग्यस्य भजनं कारयित्वा रुद्रप्रसादं चोत्पाद्य, मृत्युं परिहृत्य वायुप्रवेशनोपायं कुर्मः' इति भावः ।।१२।। विप्रश्रोतृकप्रकरणं सम्पूर्णम् ।।

२. लक्ष्मीपतिप्रकरणम् ।। श्लोकाः (१३-१६ १/२)

(व्या) 'कूर्मावतारेण' इत्यारभ्य 'शतानन्दस्य लोकेपि सदानन्दविवर्धकः' इत्यन्तं लक्ष्मीपतिश्रोतृकप्रकरणम् ।। 'सुरश्चायं समुद्धृतः' इत्युक्त्या न विप्रश्रोतृकमिति ज्ञायते । अत्र प्रागुक्तापमृत्युपरिहारकत्वं सदृष्टान्तमुक्त्वा वक्ष्यमाणगूढार्थपद्यार्थानां कथनानुकूलसामर्थ्यमुत्पादयितुं तदीयव्याख्यानादश्रवणजन्यसन्तोषकथनेन दूरस्थश्रवणेन मत्सामर्थ्यरूपं भौमभाक्तवैभवमुच्यते – कूर्मावतारेणेति ।।

**कुर्मः कूर्मावतारेण पूर्णाशाः पूरिताशिषः ।**
**सुपर्वाणः सुपर्णेन कार्द्रवेया न चोद्धृताः ।।१३।।**

(अन्वयः) कूर्मावतारेण सुपर्वाणः पूर्णाशाः पूरिताशिषः (यथा) कार्द्रवेयाः सुपर्णेन च न उद्धृताः ।

(व्या) यथा अमृतमथनसमये कूर्मावतारेण हरिणा सुपर्वाणो देवाः पूर्णाशाः पूरिताशिषः 'पूर्णाशाश्च ते आपूरिताशाश्चे'ति विग्रहः । यथा सुपर्णेन गरुडेन कार्द्रवेयाः वासुकिप्रभृतिसर्पाः उत् ऊर्ध्वं न हृताः ।।१३।।

**तथा तथा सुतश्चायं कृतात्कृच्छ्रात् समुद्धृतः ।**
**तस्माद्वृथा कृतिश्चेयं मत्कृता मास्तु ते सुत ।।१४।।**

(अन्वयः) तथा तथा अयं सुतः च कृतात् कृच्छ्रात् समुद्धृतः; तस्मात् अयं कृतिः च मत्कृता । हे सुत! ते वृथा मा अस्तु ।

(व्या) तथेति ।। तथा तथा अयं विप्रः कृतात् स्वप्रारब्धकृतात् कृच्छ्रात् मृत्युरूपात् समुद्धृतः । 'मदनुग्रहेण परिहृतमृत्युः पूर्णाशश्च भविष्यति' इति भावः । हे सुत! लक्ष्मीपते तस्मादियं कृतिः मत्कृता । 'कृतिकालेष्वबोधिकापि तवाभिमतार्थबोधिकाऽस्तु' इति भावः ।

**तस्माद्वृन्दावनं(श्रीमद्वृन्दावनं) भूमौ सोमवद्रञ्जनं दिशः ।**
**को महान्न स्तुतिं कुर्यान्नो मनःप्रियकारकः ।।१५।।**
**को महान् दर्शनं नैव कुर्यान्मूढं विना मम ।**

(अन्वयः) तस्मात् भूमौ वृन्दावनं दिशः सोमवत् रञ्जनं, नः मनःप्रियकारकः कः महान् स्तुतिं न कुर्यात्? मूढं विना कः महान् मम दर्शनं एव न कुर्यात्?

(व्या) श्रीमदिति ।। सोमवत् तापपरिहारकस्य वृन्दावनस्य स्तुतिं नः मनः प्रियकारकः महान् कः स्तुतिं न कुर्यात्? सर्वोपि कुर्यादेव । एवं 'त्वया व्याख्यानरूपा स्तुतिः कर्तव्या' इति किमु वक्तव्यम्' इति भावः ।।१५।। (तथैव मूढं विना अन्यमतस्थजनसम्बन्धेन विपरीत-ज्ञानसंशयज्ञानाभावैः नष्टचित्तं विना महान् मध्वमतज्ञः कः मम दर्शनं वृन्दावनस्थ मम पूजनादिकं नैव कुर्यात्? तस्मात् त्वमपि त्वयि विद्यमानपूजासाधनेन मां सेवस्वेति भावः ।।)(१)

**हे नन्दन तव व्याख्यानादः कन्दाशनस्य मे ।।१६।।**

**शतानन्दस्य लोकेपि सदानन्दविवर्धकः ।**

(अन्वयः) **हे नन्दन! तव व्याख्यानादः कन्दाशनस्य मे शतानन्दस्य लोकेपि सदानन्दविवर्धकः (अस्ति) ।**

(व्या) (हे नन्दनेति ।। हे लक्ष्मीपते । व्याख्यानमेव । त्वत्कर्तृकप्रधानपूजनं मम ।) अत्यल्पोहम् । मदीयव्याख्यानादः सत्यादिलोकस्थस्य तव कथं तोषक इत्यत आह – हे नन्दनेति ।। त्वदीयसामर्थ्यस्याल्पत्वेपि मदीयदूरस्थश्रवणादिसामर्थ्यस्य अत्युत्तमत्वात् त्वत्कृत-

---

(१) अम्भस्तु यद्रेत उदारवीर्यं सिद्ध्यन्ति जीवन्त्युत वर्धमानाः ।
लोकास्त्रयोऽथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ।। ३३ ।। (भागवतम्)

'सूर्यसोमयमेन्द्रादीनृतेऽन्ये लोकपा अपि ।।
अद्भिर्जीवन्ति सोमाच्च महेन्द्रादीनृतेऽखिलाः ।
अपां सोमस्य चेन्द्राद्याः सर्वे वै जीवनप्रदाः' इति च ।। ३३ ।। भाग.ता.नि. ८/४/३३

* **'विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोभिधः ।**
**तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ।। (सोमवत् रञ्जनं अन्नदेवता ) षट्प्रश्न (५)**

* **सोमः सौम्यरूपत्वात् पवमानश्च पावनात् –** ऐतरेयोपनिषद्भाष्यम् ।
**सौम्यत्वात् सोमनामासौ सोममण्डलगः सदा** – गी.ता. १५/१३

* **'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः ।**
**यो देवानां देवतमो जनित्रो वायोस्तस्मै सोममेभ्यो जुहोमि' ।।**

**'एवं वायोः पितरं विष्णुमेव यजन्ति देवैः सह ये कृते जनाः ।**
**एवं त्रेतायां केचिदन्ये पृथक् तानिष्ट्वा विष्णावर्पयन्ते न चान्ये' ।।**

**– आथर्वणोपनिषद्भाष्यम् १.खं. १ मं**

व्याख्यानादश्रवणेन मम सन्तोषो युक्त इति भावः[१] ।। **लक्ष्मीपतिश्रोतृकप्रकरणं सम्पूर्णम् ।।**

**३. विप्रप्रकरणम्।। श्लोकाः (१७-४३)**

**(व्या) 'अहमानन्दमुनिना'** इत्यारभ्य **'यो हंसरूपी न्यरुणत्पयोब्धौ'** इत्यन्तं विप्र-श्रोतृकं प्रकरणम् । अत्र वृन्दावनसमीपे कालविशेषे हयवदनबादरायणयोः सहावस्थानरूपं भौमभागवतवैभवम्, हनुमदादिसाहित्यरूपं, भौमभाक्तवैभवम्, स्वाप्नपद्यार्थबोधकपुरुषपोषणरूपम्, भौमभाक्तवैभवम्, वृन्दावने ब्रह्मादिनिखिलदेवतासन्निधानरूपं भाक्तवैभवम्, धवळगङ्गायां स्वानुग्रहेण हंसादिसन्निधानरूपं भाक्तवैभवं चोच्यते ।।

**'अहमानन्दमुनिना सदानन्दप्रसंगिना ।।१७।।**

**सह नानाविधागाथाः श्रीनाथस्य स्मराम्यहो ।**

**तद्दर्शनोद्बुद्धहृद्यसंस्कारः शुद्धसात्विकः ।।१८।।**

**धसौहृदतत्पादपद्मेहं पतितोस्म यहो ।**

**तेन साकं बदरिकाश्रमं शोकविनाशकम् ।।१९।।**

**शुकस्य जनकं वै वासिष्ठकृष्णं नमाम्यहम् ।'**

**इति पद्यत्रयं त्रायन् त्यक्तवानसि विप्रक ।।२०।।**

**आकरस्थं लेखनं च कारय प्राङ्मयेरितम् ।**

(अन्वयः) हे विप्रक! 'अहमानन्दमुनिना ..... नमाम्यहं' इति पद्यत्रयं त्यक्तवान् असि । त्रायन् च प्राक् मयेरितम् आकरस्थं लेखनं कारय ।

**(व्या) अहमानन्दमुनिना** इत्यादि पद्यत्रयं पूर्वाध्यायगतं विस्मृतम् । पुनस्तत्रैव लेखनीयमित्याह – **अहमिति ।। 'पद्यत्रयम् त्रायन्** पालयन् सन् **लेखनं कारये'**त्यन्वयः । त्राणं च विस्मरणम् ।।२०।।

---

(१) व्याख्यानादः –

'मुक्तिर्ज्ञात्वापि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोधिकम् ।
मुक्तौ सुखं तत् पठतस्ततोप्यधिकमिष्यते ।
व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् ।
ततोधिकं तु देवानां मुख्यव्याख्याकृतो यतः' इति च ।। (गी.ता. १८/७२)

इति प्रमाणानुसारेण व्याख्यातुः यत्फलं श्रूयते तदत्र अवधेयम् ।

**महीजश्चामहीजश्च सहोषतुरहो रहः ॥२१॥**

**हे वीरराहो हेवीरराहितारहिताश्चये ।**

**पद्यस्यास्यार्थसारं तु नद्यः परमपावनाः ॥२२॥**

**उद्यन्तमिव चादित्यं खिद्यन्ते तामसाश्चये ।**

**(अन्वयः) महीजः च अमहीजः च सह (अ)रहः ऊषतुः; अहो! हे वीरराहो हे अवीरराहिता ये रहिताः चये । यथा परमपावनाः नद्यः च उद्यन्तम् आदित्यम् इव; अस्य पद्यस्य अर्थसारं तु तामसाः चये खिद्यन्ते ।**

**(व्या)** 'पूर्वाध्याये पद्यत्रयमिदमत्यावश्यकं हयवदनस्य धनुराद्यायुधदर्शनकथनसमये पद्यत्रयोक्त्या हयवदनबादरायणयोः सामानाधिकरण्यस्य सूचनार्थत्वात्' इति मनसि निधाय । अत्र हयवदनबादरायणयोः सामानाधिकरण्यमाह – **महीजः** शुद्धशिलासन्निहितो द्वैपायनः, **अमहीजः** धातुमयप्रतिमासन्निहितो हयवदनः । तौ सह एकत्र **ऊषतुः** । **हे वीरराहो!** अवीराणां राहो । वीराणां पण्डितंमन्यमानानां राहो इति वा । **हे अवीरराहित!** विः परमात्मा ईरः समीरः, तौ न विद्यते येषां ते अवीराः । 'हरिवायुप्रेरणया इदं कार्यम् इत्थं भविष्यति' इति ज्ञानरहिता इति यावत् । तेषां रं रमणं सुखम् । तस्य अहित । **हे विप्र** । **चये** समूहे । अरहिताः । अरेषु छिद्रेषु हिताः निहिताः । अराः दोषाः हिताः इष्टाः येषामिति वा । अः पुराणर्षिर्व्यासः । तद्रहिता तत्प्रतीकरहिता इति यावत् ॥२१ १/२॥ अस्य पद्यस्य अर्थसारं हयवदनबादरायण (श्रीकृष्णस्य) सामानाधिकरण्यरूपं प्रति **खिद्यन्ते** शोचन्ति; **चये**= जनसमूहे तामसाः अन्धकारकामाश्चोरादयः परमपावनाः नद्यः नदीः प्रति; उद्यन्तम् आदित्यं प्रति च; यथा खिद्यन्ते । तथा ॥२२ १/२॥

**एतत्पद्यद्वयस्यापि शक्यार्थः केन हीयते ॥२३॥**

**सोपि मत्सदृशो बुद्ध्या प्रायः श्रेयस्करो मम ।**

**(अन्वयः) एतत् पद्यद्वयस्य शक्यार्थः अपि केन ईयते हि; सः अपि बुद्ध्या मत् सदृशः; प्रायः मम श्रेयस्करः ।**

**(व्या)** एतत्पद्यद्वयस्य **शक्यार्थः** प्रतिपाद्यार्थः **केन** केनचित्पुरुषेण **ईयते हि?** ज्ञायते हि । **सोपि** शक्यार्थज्ञोपि । मम बुद्ध्या मदत्तया मद्विषयिण्या बुद्ध्या, **मत्** मदनुग्रहात् **सदृशः**

दृशा ज्ञानेन सहितस्य विप्रस्य (षष्ठी एक) । **प्रायः श्रेयस्करः** (सदृशः विप्रस्य । **प्रायः श्रेयस्करः** इत्येतद्विशेषणं यत्पुरुषविषयकमिति नाम्ना नोक्तम् । समुदायैकवचनमित्यङ्गीकारे लक्ष्मीपत्यादयः एतत्पद्यद्वयार्थस्य ज्ञातारः । ते प्रायः विप्रस्य एष्यत् महत्वं ज्ञात्वा तं प्रति उपकारमेव कुर्वते । कदाचित् मानुषबुद्ध्या अपकारमपि कुर्वन्तीति प्रायः पदम् ।।) । अत्र सदृक्शब्दस्य षष्ठी विभक्तिः सदृशः इति भवति ।।२३ १/२।।

**द्वारैश्चतुर्भिः परितो विभाति वृन्दावनं मन्दरसन्निभं मे ।।२४।।**

**वृकोदराचार्यहनूमतां च ममापि सन्मूर्तिभिरन्वितैश्च ।**

**(अन्वयः) मन्दरसन्निभं मे वृन्दावनं चतुर्भिः द्वारैः च परितः विभाति; वृकोदराचार्यहनूमतां मम अपि च सन्मूर्तिभिः अन्वितैः च ।**

**(व्या)** वृन्दावनस्य हनुमदादिमूर्तिसाहित्यरूपवैभवमाह – **द्वारैरिति ।।** तस्य मनसि वृकोदरादिमूर्त्युपेतद्वारचतुष्टयसहितवृन्दावनं विभाति स्फुरति ।।२४।। (अत्र शिन्नसूरिकृत-वृन्दावनवर्णनं ज्ञातव्यम् । ''दक्षिणेन हनुमता, पश्चिमे वृकोदरेण, उत्तरे मध्वगुरुणा, पूर्वभागेन स्वेन वादिराजेन अलङ्कृतवृन्दावनं मदनुग्रहेण विप्रस्य मनसि भवति'' इति पूर्वेण अन्वयः ।।२४ १/२।।)

**कीटं वासिष्ठकृष्णोयं यथा पुष्णाति पूरुषम् ।।२५।।**

**पटुं स्वाप्रान् स्फुटं वक्तुं श्लोकान् पुष्णाम्यहं तथा ।**

**(अन्वयः) यथा अयं वासिष्ठकृष्णः कीटं पुष्णाति तथा अहं स्वाप्रान् श्लोकान् स्फुटं वक्तुं पूरुषं पुष्णामि ।**

**(व्या)** तदपि मदनुग्रहेणेत्याह – **कीटमिति ।।** यथायं महीजपदोक्तः वासिष्ठकृष्णद्वैपायनः कीटं पुष्णाति तथा अहं स्वाप्रान् श्लोकं श्लोकान् स्फुटं यथा भवति तथा वक्तुं कञ्चनपुरुषं पुष्णामि । पालयामि ।।२५ १/२।। नद्य इति विभक्तिव्यत्ययेन, 'श्लोकमिति' पाठे वचन-व्यत्ययेन, मणिव्यत्ययन्यायेन, बादरायणप्रतीकस्थानव्यत्ययोपि अभिमत इति सूचितं भवति ।।

**वृन्दावने च देवानां वृन्दाः सन्तीह नन्दन ।।२६।।**

**मुकुन्दपादपद्मं ते विन्दन्त्यनिशमञ्जसा ।**

(अन्वयः) हे नन्दन! इह वृन्दावने च देवानां वृन्दाः सन्ति; ते अनिशं मुकुन्दपादपद्मं अञ्जसा विन्दन्ति ।

**ब्रह्मा ब्रह्मभवः शक्रो वक्रतुण्डः सुरेश्वरः ॥२७॥**

**गरुडः शेषभाष्यज्ञः सशेषः(सशिष्यः) सोमभास्करौ ।**
**मित्रावरुणकारुण्यविषयाश्च विशेषतः ॥२८॥**

(अन्वयः) ब्रह्मा ब्रह्मभवः गरुडः भाष्यज्ञः सशेषः शेषः शक्रः सुरेश्वरः वक्रतुण्डः सोमभास्करौ विशेषतः मित्रावरुणकारुण्यविषयाः च ।

(व्या) वृन्दावने सकलदेवतासन्निधानमाह – **ब्रह्मेति** ॥ (वृन्दावने शिन्नसूरिस्तोत्रोक्त-रीत्या श्रीहरिमूर्तयोपि सन्तीति ज्ञातव्यम् । वृन्दावनदक्षिणभागे रामः, वृन्दावनस्य पश्चिमभागे कृष्णः, वृन्दावनस्य उत्तरपार्श्वे वेदव्यासः, वृन्दावनस्य पूर्वभागे हयवदनः, वृन्दावनस्य पुरतः व्यासरूपी हरिः । मत्स्यः कूर्मः वराहः पुरतो दक्षिणेस्थितउपवृन्दावने । नारसिंहः (ममता) पृष्ठतः दक्षिणे स्थित उपवृन्दावने । भार्गवराघवौ उत्तरे पृष्ठतः स्थित उपवृन्दावने । कृष्णबुद्ध-कल्कयः उत्तरे पुरतः स्थित उपवृन्दावने । स्तोत्रे उक्तक्रमानुसारेण सन्तीति ज्ञातव्यम् ।

वेङ्कटेशबिन्दुमाधवबदरीनारायणादिभगवद्रूपाण्यपि वृन्दावने सन्तीति ज्ञातव्यम् । किंच चतुर्मुखादिदेवानां बिंबरूपभगवद्रूपाणि सन्तीति ज्ञातव्यम् । अत एव ते देवाः चतुर्मुखादयः अत्र सन्तोषेण वर्तन्ते । यस्मादनिशम् अञ्जसा स्वोपाद्य मुकुन्दपादपद्मं पश्यन्ति । तस्मात् ते सर्वे अत्र रूपान्तरेण वृन्दावने तिष्ठन्ति । के ते इत्यत आह – ब्रह्मेति ॥) **ब्रह्मा । ब्रह्मभवः शिवः । वक्रतुण्डः** विघ्नेशः । **सुरेशः** सेनापतिः (स्कन्दः) **शेषश्चासौ भाष्यज्ञश्चे**ति विशेष्य-पूर्वपदम् । **सशेषः** सशिष्यः ॥२७ १/२॥ (सोमभास्करौ चन्द्रसूर्यौ) मित्रावरुणकारुण्यविषयाः मित्रः मित्रनामकसूर्यः प्रसिद्धसूर्यस्य भास्करशब्देन उक्तत्वात् । वरुणः अपां पतिः । तयोः कारुण्यविषयाः केचिद्देवाः ॥२८॥

**सुत्रामशरणं प्राप्ताः पूषा पिष्टादनस्तथा ।**
**एते चान्ये च बहवो बहुमानपुरस्सराः ॥२९॥**

**कुहुयोगे च सुहुतमग्निं कृत्वा धनं ददुः ।**
**ब्राह्मणेभ्यश्च सौपर्णश्रुतिज्ञेभ्यश्च पर्वणि ॥३०॥**

**(अन्वयः) सुत्रामशरणं प्राप्ताः तथा पिष्टादनः पूषा एते च अन्ये च बहुमानपुरस्सराः बहवः कुहुयोगे पर्वणि च अग्निं सुहुतं कृत्वा सौपर्णश्रुतिज्ञेभ्यः च ब्राह्मणेभ्यः च धनं ददुः.**

**(व्या) सुत्रामशरणं** इन्द्रसदनं प्राप्ताः केचनदेवाः ।। (सूर्यलोकादागतदेवाः । वरुणलोकादागतदेवाः । स्वर्गलोकादपि आगताः केचनदेवाः इत्यर्थः) अदन्तत्वात् **पिष्टादनः** पूषा तन्नामक सूर्यः ।।२९।। **कुहुयोगे** दर्शजन्मर्क्षव्यतीपातादि दुर्योगे तद्दोषशांत्यर्थं वृन्दावनसमीपे अग्निं सुहुतं कृत्वा ।

**विष्णोः प्राणो अजनिष्ट प्राणादिन्द्रोरविर्विधुः ।**
**लयोप्येतादृशस्तेषां पूर्वः पूर्वो गुणाधिकः ।।**

इति ऋग्भाष्योदाहृतवायूत्कर्षप्रतिपादकसौपर्णश्रुतिज्ञेभ्यः ब्राह्मणेभ्यः धनं ददुः[१] ।।३०।।

---

**(१) ''अनन्तादवरेशाना तस्याः प्राणस्ततश्च वाक् ।**
**तस्या रुद्र उमा तस्मादिंद्रस्तस्यास्ततोपरे'' । सौपर्णश्रुतिरित्याह (ऋग्भाष्ये)**

**''देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।**
**ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथात्र च ।।**
**ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।**
**पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ।।**
**ब्रह्मवायू गिरौ वीन्द्रशेषरुद्राश्च तत्स्त्रियः ।**
**शक्रकामौ कामपुत्रमनुदक्षाङ्गिरःसुताः ।।**
**तद्वच्छची रतिः सूर्यसोमधर्मादितस्त्रियः ।**
**प्रधानमरुतो वारिपतिरग्निश्च मारुताः ।।**
**निर्ऋतिः स्त्रियश्च सूर्यादेरश्विनावितरे तथा ।**
**अनन्तकोटिशतकदशार्द्धार्द्यंशतः क्रमात् ।।**
**ज्ञानभक्तिबलैश्वर्यपूर्वाखिलगुणैरपि ।**
**मुक्तावपि क्रमो ह्येष देवता उदिता इमाः''**
**देवतातारतम्यं च सर्वोत्कृष्टं च केशवम् ।**
**ज्ञात्वैव मुच्यते ह्यस्मान्नान्यथा तु कथञ्चन – पैङ्गिश्रुतिः (ऋग्भाष्य)**

*** ।। ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ ।। ४.३.१० ।।**

**'ते ह ब्रह्माणमभिसम्पद्य यदैतद्विलीयतेऽथ सह ब्रह्मणा परमभिगच्छन्ती'ति सौपर्णश्रुतेर्महाप्रलये तदध्यक्षेण ब्रह्मणा सह गच्छन्ति ।।** – इति अत्रस्थसौपर्णश्रुतिज्ञेभ्यः अपि ध्येयम् ।

**ब्रह्मणा सह पुण्याहे सस्नुर्धवलवारिणि ।**
**करं स्वैरं विरिञ्चादिक्रभवो रत्नसञ्चयान् ।।३१।।**

**वृन्दावने च ववृषुः हर्षपूर्णाः सहस्रशः ।**

(अन्वयः) ब्रह्मणा सह पुण्याहे धवलवारिणि सस्नुः । विरिञ्चादिक्रभवः स्वैरं करं हर्षपूर्णाः सहस्रशः रत्नसञ्चयान् वृन्दावने च ववृषुः ।

**(व्या)** तथा '**पुण्याहे पुण्यदिने धवलवारिणि सस्नुरि**'त्यनेन तस्मिन् दिने धवल-गङ्गाजले निखिलदेवतासन्निधानं सूचितं भवति ।।३० १/२।। (तथा **विरिञ्चादिक्रभवः** = चतुर्मुखादिदेवाः सहस्रशः **रत्नसञ्चयान् वृन्दावने** वृन्दावनसमीपे । **स्वैरं करं** दक्षिणारूपेण हर्षपूर्णाः सन्तः ववृषुः ।।३१ १/२।।) विरिञ्चस्याधिकत्वेपि वृन्दावनस्थ विष्णोः करसमर्पणं तु निर्माल्यधारणं च युक्तमेव । समेष्वपि प्रेमातिशयेन रत्नादिप्रदानं युक्तम् । धवलगङ्गास्नानं तु विरिञ्चस्य श्रीमदाचार्यकृतगङ्गास्नानवत् तीर्थस्य माहात्म्याधिकोत्पादनार्थमिदं मन्तव्यम् । तद्गतलक्ष्म्यत्मकजले । भगवदात्मकजले च भक्तिर्युक्ता[१] ।।३१ १/२।।

**विष्णोर्निर्माल्यमालाश्च बालसूर्यामलप्रभाः ।।३२।।**

**बालव्यजनसंवालाः काले दध्रुर्गले कुहोः ।**

(अन्वयः) बालव्यजनसंवालाः बालसूर्यामलप्रभाः विष्णोः निर्माल्यमालाः कुहोः काले गले दध्रुः ।

---

* 'तस्माद्विष्णोर्वशे सर्वे यथेष्टमुपभोगिनः।
मुक्ताः सदा तारतम्यात्तिष्ठन्त्याब्रह्मणोऽखिलाः' - इति हयग्रीवसंहितायाम् ।

इति बृहदारण्यकोपनिषद्भाष्ये मैत्रेयीब्राह्मणे सूचिततारतम्यज्ञानिनः अपि ग्राह्याः ।

(१) ।। ॐ विकारावर्ति च तथा हि दर्शयति ॐ ।। ४.४.२० ।।

विकारावर्तिव्यापारो मुक्तानां न विद्यते । 'इमं मानवमावर्तं नाऽवर्तन्त' इति श्रुतिः । वाराहे च–

'स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम् ।
बलिं हरन्ति मुक्ताय विरिञ्चाय तु पूर्ववत् ।।
सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः ।
न विकाराधिकारस्तु मुक्तानामन्य एव तु ।
विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुने'ति ।।

(व्या) **विष्णोः इति** । बालव्यजनेन संवलनं यासां ताः । **बालव्यजनसंवालाः** । बालसूर्यामलप्रभाः । **निर्माल्यमालाः** (पूर्वोक्त कुहुयोगे) गले दध्रुः ॥३२ १/२॥

**सिनीवाल्यादियोगेपि निमील्याक्षीणि काणवत् ॥३३॥**

**संनिलीनाः पलायन्ते शरणं करुणार्णवम् ।**
**मग्नास्ते मत्सरःश्रेष्ठे भग्नपापा बभूविरे ॥३४॥**

(अन्वयः) **सिनीवाल्यादियोगे अपि काणवत् निमीलिताक्षीणि सन्निलीनाः सन्तः करुणार्णवं शरणं पलायन्ते. मत् सरःश्रेष्ठे भग्नपापाः बभूविरे ।**

(व्या) सिनीवाल्यादीति ॥ जन्मर्क्षस्य सिनीवाल्यादि योगेपि । तद्दोषशांत्यर्थम् अक्षीणि निमील्य सन्निलीनाः सन्तः करुणार्णवं वृन्दावनस्थहयग्रीवं शरणं रक्षकं प्रति पलायन्ते (धावन् आगच्छन्ति) । उपरागादिसमये स्वजन्मर्क्षयोगे चन्द्रादिदर्शने पातक्याधिक्यं भविष्यतीति नेत्र-निमीलनादेर्युक्तत्वमिति भावः ॥३४-३६॥ (वृन्दावनस्थ वादिराजहयग्रीवौ नत्वा । निर्माल्य-मालाः स्वीकृत्य । ताः धृत्वा, धवळगङ्गायां स्नात्वा, दुर्योगप्राप्तपापं त्यक्त्वा, हयग्रीवं त्रिविक्रमं च शरणं गच्छतीति भावः[१] ॥३४॥

**अग्निं हुत्वा च विधिवज्जामदग्निं ववन्दिरे ।**
**वृन्दावनगतं देवास्त्विंदिरापतिमव्ययम् ॥३५॥**
**मन्दाकिन्या जनिं विष्णुं पुनरेव ववन्दिरे ।**
**तमनुज्ञाप्य देवेशाः स्वर्गं यान्ति सुमानिताः ॥३६॥**
**पुनरायान्ति योगेषु पुण्येषु शृणु नन्दन ।**

(अन्वयः) **देवाः तु विधिवत् अग्निं हुत्वा च वृन्दावनगतं इन्दिरापतिम् अव्ययं जामदग्निं ववन्दिरे; मन्दाकिन्या जनिं विष्णुं एवं पुनः ववन्दिरे; देवेशाः तम् अनुज्ञाप्य सुमानिताः स्वर्गं यान्ति; पुण्येषु योगेषु पुनः आयान्ति; हे नन्दन शृणु ।**

---

(१) अत्राधोनिर्दिष्टभागवतवाक्यानुसन्धानमपि स्मर्तव्यम् । तद्यथा –

**अथानघाङ्घ्र्योस्तव कीर्तितीर्थयोरन्तर्बहिःस्नानविधूतपाप्मनाम् ।**
**भूतेष्वनुक्रोशसुसत्ववशीलिनां स्यात्सङ्गमोऽनुग्रह एव नस्तव ॥**

तत्रैव श्रीमदचार्याः '**अङ्घ्र्योर्जातयोः कीर्तितीर्थयोः**' इति भागवततात्पर्यनिर्णये ।

(व्या) तदनन्तरं होमं कृत्वा, पुनः त्रिविक्रमं नमस्कृत्य तत्प्रसादं प्राप्य स्वर्गं गच्छन्ति ।।३६।। (**पुनरिति ।।** ज्ञातमाहात्म्याः देवाः पुण्ययोगेषु महोदयार्धोदयादि कालेषु धवळ-गङ्गास्नानार्थमागच्छन्ति ।।)

**एवं धवलगङ्गा मे विधुवद्धवला भुवि ।।३७।।**

**प्रवालमणिसोपानत्रिवळीशयुता बभौ ।**

(अन्वयः) **एवं मे धवलगङ्गा विधुवत् धवला प्रवालमणिसोपानत्रिवळीशयुता भुवि बभौ ।**

(व्या) धवळगङ्गायामपि निखिलदेवता सन्निधानादिवैभवमाह – **एवमिति ।।** 'एवं ब्रह्मणा सह पुण्याहे सस्नुर्धवलवारिणि' इत्युक्तप्रकारेण विरिञ्चादि ऋभुगणसहिता, लोकान्तरे प्रवाल-मणिसोपाना त्रिवलीशयुता शिवयुक्ता सती, **भुवि बभौ** । (अथवा) 'वृन्दावने च ववृषुः' इत्युक्तानां रत्नसञ्चयानाम् अदृश्यत्वमिव धवलगङ्गातीरगतानां प्रवालमणिसोपानादीनां मर्त्या-दृश्यत्वमिति वा ज्ञातव्यम् ।।

**देवैर्निरन्तराक्रान्ता मन्वन्तरशतान्तरा ।।३८।।**

**तन्वन्तरातिरिक्ता च धन्वन्तरिकृतान्तरा ।**

(अन्वयः) **देवैः निरन्तराक्रान्ता मन्वन्तरशतान्तरा तन्वन्तरातिरिक्ता धन्वन्तरि-कृतान्तरा च ।**

(व्या) **देवैरिति ।।** (**निरन्तराक्रान्ता** सर्वदा देवताभिः **सेविता** । अथवा तत्सन्निधान-सहिता) **मन्वन्तरशतान्तरा** । मन्वन्तराणाम् ऋगादिमन्त्रविशेषाणां शतम् अन्तरे यस्याः सा ।

> **'ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः ।**
> **अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।।' इतिवत् ।**

(सर्ववेदाभिमानिभिः व्याप्ता) ।।३८।। **तन्वन्तरातिरिक्ता** = तन्वन्तरेण शरीरान्तरेण (जनाः) अतिरिक्ताः रहिताः यया सा । धवळगङ्गायां स्नाने कृते 'न पुनर्जायते भुवि' इत्युक्तं भवति (पुनर्जन्मनाशिनीत्यर्थः) । **धन्वन्तरिकृतान्तरा** = धन्वन्तरिरूपे भगवति कृतम् आन्तरं मनो यस्याः सा । (अथवा धन्वन्तरिनामकहरिणा कृतम् उषितं वासार्थं कृतम् अन्तरं मध्यभागः यस्याः सा धन्वन्तरिसन्निधानविशिष्टा) ।

**स्नानार्थं गच्छतां स्नायुबन्धनादिविनाशनम् ।।३९।।**

**शिश्नात्कृतैनसां नाशं करोति प्रश्नमात्रतः ।**

**(अन्वयः) स्नानार्थं गच्छतां स्नायुबन्धनादिविनाशनम्; प्रश्नमात्रतः शिश्नात् कृता एनसां नाशं करोति ।**

**(व्या)** अत एव रोगाद्यनिष्टनिर्वृत्तिर्भविष्यतीत्याह – **स्नानार्थमित्यादि ।।** एनसां पापानाम् ।।३९-४१।। ('स्नानार्थम् उद्युक्तानामपि वायुरोगाः निवर्तन्ते, स्नानाय देहानुकूल्यं भविष्यति' इति भावः ।।) (**शिश्नादिति ।।** तत्रापि अष्टविधमैथुनजातदोषान् पाणिमैथुनादिप्राप्तदुराचारान् । कामुककथानका कादम्बर्यादिपाठप्राप्तपापादिकं परिहृत्य । **प्रश्नमात्रतः** 'निराधारो हारोदिमिकस्य पुरस्तात्' 'त्वां विना का वा गतिः स्यात्?' इत्यादि प्रश्नरूपप्रार्थनामात्रेण । अथवा 'धवळगङ्गायाः महिमानं वर्णय' इति गुरुं प्रति प्रश्नमात्रेण पापं दूरीकृत्य चित्तशुद्धिं प्रापयतीत्यर्थः । एवं गुरुराजतपस्यया प्राप्तमहिमोपेता धवळगङ्गा ।)[१].

**एवं विधास्मत्कृतवैभवान्विता भूदेवदेवैर्नरदेवपूजिता ।**
**कृतान्तमार्गं त्ववगाहनोत्सुकान् सन्तारयत्येव हरेः सुतान्विता ।।४०।।**

**(अन्वयः) एवं विधा अस्मत्कृतवैभवान्विता भूदेवदेवैर्नरदेवपूजिता हरेः सुता अवगाहनोत्सुकान् कृतान्तमार्गं एव सन्तारयति.**

**(व्या) भूदेवदेवैः** ब्राह्मणोत्तमैः **कृतान्तमार्गं** यममार्गम् (ब्राह्मणैः देवैः क्षत्रियैश्च पूजिता **हरेः सुतान्विता** गङ्गासन्निधानयुक्ता । अघमर्षणपूर्वकस्नानादिना सेवतः अधिकारिणः पापात् **सन्तारयति** ।।४०।।)

---

(१) प्रश्नमात्रतः इत्यनेन –

* **पृश्निर्वेदः प्रश्नयोग्यः पृश्निमाता हरिस्ततः ।**
**ज्ञेयस्तस्यापि विज्ञाता मरुतश्चेत् सुता गिरः । (ऋग्भाष्य सूक्त ३८)**

* तथा हि ब्रह्मसूत्रभाष्यम् – १/४/७ ।। **ओं त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ओं ।। भाष्यत्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च । 'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते'। इति वचनान्न विरोधः ।।**

– अनेन प्रश्नेन = तत्वार्थे कृतप्रश्नेन इत्यर्थे ब्रह्मजिज्ञासुभिरित्यपि ग्राह्याः ।

**एतच्चित्रं कलिमलैः कलुषीकृतमानसाः ।**
**न जानन्ति नराः सर्वे कलौ भूतलवासिनः ॥४१॥**

**(अन्वयः) कलौ कलिमलैः कलुषीकृतमानसाः भूतलवासिनः सर्वे नराः एतत् चित्रं न जानन्ति ।**

**(व्या) एतत् चित्रम्** । एतादृशअद्भुतमहिमानं धवळगङ्गाया इति शेषः । कलिकाल-सम्बन्धिमिथ्याज्ञानादिभिः कलुषीकृताः सर्वे भूतलवासिनः नराः कलिकाले **न जानन्ति** । कृतादिषु युगेषु प्रतिबन्धकाभावात् जानन्ति । देवत्वयोग्याः ऋषित्वयोग्याश्च कलावपि क्वचित् प्रतिबन्धकरहितकाले गुरुप्रसादेन जानन्ति[१] ॥४१॥

**एवं मद्वृन्दावनस्य सद्वृन्दा एव भूतले ।**
**जानन्त्यनन्तमाहात्म्यं नेतरे पापपूरुषाः ॥४२॥**

**(अन्वयः) भूतले सद्वृन्दा एव वृन्दावनस्य अनन्तमाहात्म्यं एवं जानन्ति । इतरे पापपूरुषाः न.**

**(व्या)** एवं गुरुराजवृन्दावनस्य माहात्म्यम् अनन्तम् । तादृशमाहात्म्यं **सद्वृन्दाः** सतां प्रशस्तकर्मणां वृन्दानि येषां ते । 'प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते' (गी. १७/२६) इति वचनात् उदारकर्मयुक्तमुक्तियोग्यजना एव भूतले जानन्ति । ये इतरे न जानन्ति । ते **पापपूरुषाः** दैत्यादयः पापप्रतिबद्धमन्दाधिकारिणाः वा ॥४२॥)

**(व्या)** यथा शुद्धोदकसमुद्रे हयग्रीवात्मकस्य हंसरूपिणो हरेः सन्निधानम्, तथा धवळ-गङ्गाजले सन्निधानमिति ज्ञापयितुमाह – **अहमिति** ॥

**अहं नमामीह महानुभावं हयास्यरूपं हयमाप्तहारम् ।**
**मया सहैवाशु च हंसवाहं यो हंसरूपी न्यरुणत्पयोब्धौ ॥४३॥**

---

(१) 'प्राकृतैर्दृश्यमानं तु न द्रवं तीर्थमुच्यते ।
देवाश्च न शिलामात्राः किन्तु तत्रान्तरस्थिताः ।
गुरूपदेशं तु विना न ते दृश्याः कथञ्चन ।
न ज्ञायते च तद्रूपमन्यथाज्ञानिनां च ते ।
कोपाच्छापं प्रयच्छन्ति तस्माद्गुरुमुपाव्रजेत् ।
तस्मात्तीर्थानि देवाश्च नित्यं विद्वत्सु संस्थिताः' इति गारुडे ॥ – भाग.ता. १०.७२.१३

**(अन्वयः) इह महानुभावम् आप्तहारं हयास्यरूपं हयं अहं नमामि; यः हंसरूपी हंसवाहं मया सह एव आशु च पयोब्धौ न्यरुणत् ।**

**(व्या) इह** = धवळगङ्गाजले सन्निहितं हयवदनात्मकं हंसरूपिणं परमात्मानं नमामि ।। (**आप्तहारं** हारैः अलङ्कृतं **हयं** हयरूपं हयास्यं हयवदनरूपिणं च अहम् इह अस्मिन् धवळगङ्गा-जले सन्निहितत्वान्नमामि । कथम्भूतः यः स्वहंसरूपेण[१] चतुर्मुखं मां च आशु च शुद्धोदकसमुद्रे योजयित्वा आवाभ्यां तत्वम् उपदिदेश[२] । तम् अस्मिन् तीर्थे स्तौमि इत्यर्थः ।।४३।।)

---

(१) **एवं ते हंसरूपेण विष्णुना देवतागणाः ।**
**ब्रह्माद्या बोधिताः सर्वे तथा ज्ञात्वा परं गताः ।**
**साक्षाद्विष्णुर्हंसरूप उक्त्वैवं तु दिवौकसाम् ।**

– इति **बृहद्भाष्ये सप्तान्नब्राह्मणे** हंसरूपिणा हरिणा यदुपदेशं कृतं तद्वदिति इहापि ध्येयम् । अपि च **महैतरेयोपनिषदि द्वितीयप्रघट्टके द्वितीयाध्याये** वायोरपि हंसरूपं श्रीमदाचार्यैः कथितम् –

**विष्णुं हंसस्वरूपिणम् अनुष्टुभं चर्चूर्यमाणं पुनः पुनर्वदन्तं परमेश्वरं ददृशुश्च ।**
**मेघसंस्थं हंसरूपं तं विष्णुं परमेश्वरम् ।**
**विरिञ्चशिवपूर्वेभ्यो नृसिंहानुष्टुभं पराम् ।।**
**उच्चारयन्तमर्थांश्च व्याचक्षाणं समन्ततः।**
**ददृशुर्मुनयो दिव्या आचार्यं ब्रह्मशर्वयोः ।।**
**एवं वायुं च ददृशुस्तत्र हंसस्वरूपिणम् ।**
**शिवादिभ्यो व्याहरन्तं तामेवानुष्टुभं पराम् ।। इत्यादि च ।।**

**वागाख्यायामनुष्टुभ्युच्चार्यमाणायां हि मुनयो विष्णुं ददृशुः । अतो ब्रह्मादयोऽपि विष्णोः सकाशादनुष्टुभर्थं सर्वदा कृण्वन्तीति विज्ञायतेऽतोऽनुष्टुबेव च्छन्दसां वरेति चोक्तं भवति ।**

(२) तथाहि विष्णुरहस्ये तृतीयाध्याये श्रीमद्भगवद्वचनम् –

**कदा चिन्तयाविष्टः स ब्रह्मा चिन्तयच्चिरम् ।**
**कथं सर्वज्ञतां यामि सृष्टौ शक्तिः कथं भवेत् ।। ....**
**ततो हयास्यरूपेण तत्समीपे तदैव तु ।**
**आविर्भूतस्ततो मां स दृष्ट्वाश्चर्यस्वरूपिणम् ।।**
**विस्मितः प्रेक्षमाणो मां किञ्चिन्नैवाभ्यपद्यत ।**
**तत्रागमत् तदा सूत्रनामा प्राणस्तदैव हि ।।**
**ततस्तौ कृपया वीक्ष्य परामृश्यश्च बाहुभिः ।**
**त्वच्चिन्तापरिहाराय विष्णुरेवाहमागतः ।।**

### ४. लक्ष्मीपतिप्रकरणम् ।। श्लोकाः (४४-६०)

(व्या) शाल्मलीद्वीपमित्यारभ्य 'सर्वाभीष्टं ददामि ते' इत्यन्तं लक्ष्मीपतिश्रोतृक-प्रकरणम् । पूर्वप्रकरणान्तोक्तपयोब्धिसमीपस्थशाल्मलीद्वीपे सुमालिना स्तुत्यत्वरूपं भौमभाक्त-लौकिकं वैभवम् । पूर्वाध्यायोक्तचक्राङ्कितत्वादिना श्रीमध्वाचार्यसादृश्यं स्फुटीकर्तुं पावन-(वानरयूथप)दर्शनादिरूपं भौमभाक्तालौकिकवैभवं चोक्त्वा, पूर्वप्रकरणोक्तरीत्या वृन्दावने सकल -देवतानां च सन्निधानरूपमाहात्म्यं श्रुत्वा । 'सर्वबुधान् प्रति वद' इत्युक्त्या, 'वृन्दावनं कारयित्वा तत्र मां भज' इत्युक्त्वा(क्त्या), 'सर्वाभीष्टं ददामि ते' इत्युक्त्या, तस्य सर्वाभीष्ट-प्रदत्वरूपं भौमलौकिकभाक्तवैभवमुच्यते । 'कृत्वा वृन्दावनं च' इति प्राक् श्लोकद्वितयेन चेति वक्ष्यमाणसमाख्यया व्यासराजाख्यभक्तस्येत्यत्रोक्त(१०/११६) समानार्थकेन लक्ष्मीपतिसमा-नार्थकेन च । मनुजाधिपशब्देन सम्बोधनाच्च लक्ष्मीपतिश्रोतृकमेवेदं प्रकरणमिति ज्ञातव्यम् ।। शाल्मलीत्यादि ।।

**शाल्मलीद्वीपमाश्रित्य सुमालीतिबलाधिकः ।**
**निर्मलाख्यातलावण्यं बालातपसमप्रभम् ।**
**पप्रच्छ स तु मां दृष्ट्वा विच्छिन्नत्रिपुरः पुरा ।।४४।।**

(अन्वयः) शाल्मलीद्वीपम् आश्रित्य सुमालि इति बलाधिकः निर्मलाख्यातलावण्यं बालातपसमप्रभं मां दृष्ट्वा स तु पुरा विच्छिन्नत्रिपुरः पप्रच्छ ।

---

इति श्रुत्वा ततो ब्रह्मा प्रणनाम स दण्डवत् ।
ततः प्राणोऽपि तत्पत्न्यौ सर्वे नेमुः पुनः पुनः ।।
लक्ष्मीरप्यभवत् तत्र सदा मत्सेवने रता ।
ब्रह्माणमुपवेश्याग्रे पृष्ठतोऽन्यान्निवेश्य च ।
वेदांश्चैवोपवेदांश्च सर्वानध्यापयङ्क्रमात् ।
ऋचो यजूंषि सामानि तथाथर्वाङ्गिरांसि च ।।
आयुर्वेदं धनुर्वेदं गान्धर्वं चार्थशास्त्रकम् ।
चतुर्णामुपवेदांश्च ततोऽङ्गानि पृथक् पृथक् ।।
शिक्षा कल्पो निरुक्तं च छन्दो व्याकरणं तथा ।
ज्योतिषं चेति षट् प्रोक्तान्यङ्गानि विधिवन्मया ।।

तदनन्तरं तान् प्रविश्य श्रीभगवान् अनुग्रहं कृतवान् इति तत्र श्रूयते । इमा विद्याः श्रीगुरुराजैरपि अधीतानि इति 'लक्षालङ्कारे' प्रपञ्चितम् । तैः तत्र प्रदर्शितामोघव्याख्यानोदाहरणानि द्रष्टव्यानि ।

**(व्या)** (सुमालीनामकराजा शाल्मलीद्वीपे गुरुराजं दृष्ट्वा पप्रच्छ । कथम्भूतं) निर्मलं स्वच्छम् आख्यातं सम्यक्प्रसिद्धं सिद्धं लावण्यं सौन्दर्यं यस्य सः तं, **पप्रच्छेति** ।।४४।। (**बालातपसमप्रभम्** बालसूर्यप्रभासदृशकान्तियुक्तम् । किमिति पप्रच्छ । विकल्पानाह – **विच्छिन्नेत्यादिना** ।। हे गुरो! त्वं पुरा **विच्छिन्नत्रिपुरः रुद्रो वा** । विच्छिन्नानि त्रिपुराणि येन सः । भवान् त्रिपुरदाहकरुद्रो वा इति प्रश्नः)[१] ।

**रुद्रो वाभद्रहीनोसि सुपर्णो वार्णवातरः ।**
**शेषो वा दोषहीनोसि वायुर्वापायदूरगः ।।४५।।**

(अन्वयः) **रुद्रः वा अभद्रहीनः असि सुपर्णः वा अर्णवातरः शेषः वा दोषहीनः असि वायुः वाअपायदूरगः असि ।**

**(व्या) अभद्रहीनोसि** = नरशिरः कपालादि अभद्रहीनः । **अर्णवान्** आ सम्यक् तरतीति अर्णवान् तरः । **शेष** इति । अपायो दूरगो येन सः ।।४५।। (दोषहीनत्वात् भवान् न सुपर्णः नापि शेषः । द्वात्रिंशल्लक्षणयुक्तत्वात् अपायरहितआखणाश्मसमदेहयुक्तवायुर्वा इति प्रश्नः ।।)

**इन्द्रो वा सान्द्रसन्तोषी चन्द्रो वामन्दतोषकः ।**
**कामो वा त्वं च रामाणां मोहनं रूपमाश्रितः ।।४६।।**

(अन्वयः) **इन्द्रः वा सान्द्रसन्तोषी, चन्द्रः वा अमन्दतोषकः, कामः वा त्वं रामाणां मोहनं रूपम् आश्रितः च ।**

**(व्या) (इन्द्र** इति वक्तुं न शक्यते सान्द्रनिर्दुःखसुखभोक्तृत्वात् । **चन्द्र** इति वक्तुं न शक्यते । तस्मादपि अधिकाह्लादकारित्वात् । सुरूपित्वात् **कामो वा** ।।४६।।)

**सूर्यो वा शौर्यसम्पन्नो ऋषिर्वापरुषवाचकः ।**
**धनदो धनिनां श्रेष्ठो महाधनविभूषणः ।।४७।।**

---

(१) प्लक्षद्वीपस्यवर्णनं पुराणेषु बहुत्र दृश्यते । उदाहरणार्थे तद्यथा –

**जम्बूप्लक्षादयो द्वीपाः शाल्मलिश्चापरो द्विज ।**
**कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ।। –** (२/५)
**चतुर्थः पर्वतो द्रोणो यत्र सा वै महौषधिः ।**
**विशल्यकरणी चैव मृतसञ्जीविनी तथा ।। – (प्लक्षद्वीपे लभ्यमुख्यौषधीः)**

**(अन्वयः) सूर्यः वा शौर्यसम्पन्नः, ऋषिः वा अपरुषवाचकः, धनिनां श्रेष्ठः धनदः वा महाधनविभूषणः.**

**(व्या) काम इति।। अपरुषवाचकः** = मृदुभाषणः।। शौर्ययुक्तत्वात् **सूर्यो वा** । मृदुभाषित्वात् **ऋषिर्वा** नारदो वा । महाधनयुक्तत्वात् अच्छिद्रज्ञानभक्तिरूपपूर्णसम्पद्युक्तत्वात् **कुबेर** इति वक्तुं न शक्यते(१) ।।४७।।)

**वरुणः करुणासक्तः त्वं कविः कोविदेश्वरः ।**
**अथवा वादिराजाख्यो वागीशकरजातकः ।।४८।।**

**(अन्वयः) वरुणः वा करुणासक्तः, त्वं कविः कोविदेश्वरः अथवा वागीशकरजातकः वादिराजाख्यः.**

**(व्या)** (करुणायुक्तः **वरुणो वा** । करुणायुक्तो वर्तसे इति छेदे वरुणः पाशयुक्तः कठिणस्वभावकः; त्वं तु करुणापूर्णः । अतः वरुणो न इत्यर्थः । **कोविदेश्वर**त्वात् शुक्रो वा । अथवा वागीशतीर्थकरकमलसञ्जातवादिराजमुनिर्वा ।।४८।।)

**(अव)** (उत्प्रेक्षालङ्कारेण स्तुत्वा । प्रधानदेवानां गुणाः विना दोषम् आधिक्येन त्वयि सन्तीति प्रदर्श्य । इदानीं स्वस्य ज्ञानित्वं सूचयितुं तत्स्वरूपं कथयित्वा तन्नाम निर्वक्ति – **वादीभ इति** ।।)

**वादीभमृगराजत्वाद्वादिराजाभिदा तव ।**
**हयग्रीवाराधकत्वात्प्राग्र्यान् लोकांस्तथा गतः ।।४९।।**

**(अन्वयः) वादीभमृगराजत्वात् वादिराजाभिदा तव; तथा हयग्रीवाराधकत्वात् प्राग्र्यान् लोकान् गतः (असि) ।**

**(व्या)** (वादिगजानां मृगराज इव वादिराजः = दुर्वादिनाशकः इत्यर्थः । वादिनां राजत्वात् तत्कार्यं शक्यते इति सोप्यवयवार्थः ग्राह्यः । तत्वनिर्णयवत्सु श्रेष्ठत्वात् हयग्रीवाराधनेन सिद्धिं प्राप्य द्वीपान्तरे वर्तमानान् पुण्यप्राप्यलोकान् इच्छया आगतोसि ।। इति स्तुतिः ।।४९।।)

---

(१) एवं सदासङ्ख्यसुखैश्च संयुतो मखैर्दुरापैः खगमुख्यदैवतैः ।
दुःखैरसम्भिन्नतरैश्च शश्वत् प्रमोदते देववरो मयि प्रभुः ।।' (आख्या ४/१०)

**व्याघ्रचर्मापि सन्मानं चाग्रपूजां चकार ते ।**
**इमां कथां काव्यकर्ता काव्योऽपि व्याजहार च ।।५०।।**

**श्राव्यं पापविनाशाय न व्याजान्न च हास्यतः ।**

(अन्वयः) व्याघ्रचर्मा अपि ते सन्मानं अग्रपूजां च चकार; इमां श्राव्यं कथां च काव्यकर्ता काव्यः अपि न व्याजात् न हास्यतः च (किन्तु) पापविनाशाय व्याजहार ।

(व्या) **व्याघ्रचर्मा** शिवः ।। (ऋजुत्वादेव शिवेन पूजितोसि । सर्वदेवश्रेष्ठत्वादेव तत्सभायां तवैव अग्रपूजा तेन कृता । एतत् सर्वं **काव्यः** शुक्राचार्योपि **काव्यकर्ता** अस्मद्राजसभायां पद्यं रचयित्वा पपाठ । **काव्ये**पि इति पाठे शुक्रादन्यः पद्यकर्ता ।। **श्राव्यम्** इति क्रिया-विशेषणम् । तच्च पद्यं श्राव्यं यथा भवति तथा **व्याजहार** । ''स्वोत्तमानां गुणकथनरूपत्वात् तच्च श्रवणं पापनाशकमभूत् । 'साहित्यसेवा कार्या, भाषा सेवा कार्या' इत्यादि व्याजेन वा, हास्यतः अन्यप्रहसनोद्देशेन वा उपचारार्थं वा न कृतं तत्पद्यम् । तस्मात् तत्काव्योक्तं सर्वं तथ्यमेव'' इति भावः ।)

**इति तेनोदितं श्रुत्वा कृत्वा तस्याप्यनुग्रहम् ।**
**स्मृत्वा हरेश्च माहात्म्यं पृक्त्वानन्दजलैर्भुवम् ।।५१।।**

**ततश्च पावनान् वानप्रस्थान् वानरयूथपान् ।**
**वनराजिषु पश्यामि वनजान् मनुजाधिप ।।५२।।**

(अन्वयः) हे मनुजाधिप! इति तेन उदितं श्रुत्वा, तस्यापि अनुग्रहं कृत्वा, हरेः माहात्म्यं च स्मृत्वा, भुवम् आनन्दजलैः पृक्त्वा ततः वानप्रस्थान् पावनान् वानरयूथपान् वनजान् वनराजिषु पश्यामि.

(व्या) राज्ञा एवं स्तुतः, तस्याप्यनुग्रहं कृत्वा । ''न तादृशीप्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात्'' इति न्यायेन ''नानिर्धारितस्वरूपस्य प्रणामो युक्तः'' इति ज्ञानपूर्वकं सम्यग्विचार्य शिवपूज्यत्वादिलक्षणैः वादिराजगुरुऋजुत्वं ज्ञात्वा स्तोत्रकर्तारं राजानम् अनुग्राह्य, स्वमहिमाकारणीभूतहरेः माहात्म्यं स्मृत्वा, आनन्दबाष्पैः भुवं सेचयित्वा, ततश्च पावनान् पश्यामीति योजना ।।५१।।) **तत इति** ।। **ततः** (सुमालिराज्ञः वरदानानन्तरम्) **पावनान्** परिशुद्धान् पवनसम्बन्धिन इति वा, तान् । **हे मनुजाधिप!** लक्ष्मीपते ।।५२।।

**तन्मतं शृणु कल्याण पुण्यात्पुण्यतमं महत् ।**
**नारायणो गुणनिधिः वाणीपतिमभाषत ।।५३।।**

(अन्वयः) हे कल्याण! महत् पुण्यात् पुण्यतमं तन्मतं शृणु । गुणनिधिः नारायणः वाणीपतिम् अभाषत ।

(व्या) **तन्मतं** पावनानां मतं **शृणु । नारायणः वाणीपतिं** प्रति यदभाषत तदेव तन्मतम् ।।५३।।

**श्रीमन्मध्वमतं दिव्यं मद्भक्तेनोद्धृतं सुत ।**
**मत्सर्वोत्तमतामुक्त्वा युक्तिमालाभिरञ्जसा ।।५४।।**

(अन्वयः) हे सुत! मद्भक्तेन युक्तिमालाभिः अञ्जसा मत् सर्वोत्तमताम् उक्त्वा दिव्यं मध्वमतम् उद्धृतम् ।

(व्या) नारायणोक्तमाह – **श्रीमदिति ।। ऋते** वेदे । 'ऋतो ऋग्वेद वाच्यत्वात्' इत्युक्तेः ।।५५।। **मध्वमतं दिव्यं मद्भक्तेन** तेन उद्धृतत्वात् । (**हे सुत** चतुर्मुख! **श्रीमन्मध्वमतं दिव्यं** ज्ञानमोक्षादिफलप्रदम्, **मद्भक्तेन** आनन्दतीर्थमुनिना **युक्तिमालाभिः अञ्जसा मत्सर्वोत्त-मतामुक्त्वा, उद्धृतं** वेदादिप्रमाणैः पूर्वं यथा अवर्तत तथा प्रतिपादितम् । न तु निर्मितम् ।।५४।।)

**व्यासात्मना मया पूर्वं यदुक्तं सर्वमेव तत् ।**
**जगत्सत्यत्वादिकं च तात्पर्यविषयं ऋते ।।५५।।**
**तत्समर्थितमेवादौ समर्थेन महात्मना ।**

(अन्वयः) व्यासात्मना मया पूर्वं जगत्सत्यत्वादिकं तत् ऋते तात्पर्यविषयं च यदुक्तं तत् सर्वं एव समर्थेन महात्मना आदौ समर्थितम् ।

(व्या) मत्सर्वोत्तमत्वप्रतिपादकत्वात् । व्यासरूपेण मदुक्तार्थस्थापकत्वाच्चेति भावः ।। (**व्यासात्मना** मया ब्रह्मसूत्रभारतभागवतादिषु पूर्वं द्वापरान्ते यदुक्तं पञ्चभेदतारतम्यविष्णूत्तमत्वा-दिकं **जगत्सत्यत्वादिकं च तत्सर्वं तात्पर्यविषयम् । ऋते** रामप्रीत्यर्थं वेदे एव पारमार्थिकत्वेन रूपेण महातात्पर्यविषयत्वेन निश्चितमिति समर्थयित्वा अनुव्याख्यानदशोपनिषद्भाष्यादिषु प्रदर्श्य **आदौ महात्मना समर्थितम्** । आनन्दतीर्थनामकमहत्तत्वाभिमानिनः अवतारे निर्णीतम् ।।)

**प्राप्य तत्र कृतार्थत्वं व्यर्थीकृत्य सुदुर्मतम् ।।५६।।**

**मत्समीपमिहागन्ता वृन्ताद्यस्थीनि तस्य च ।**
**चक्रशङ्खाद्यायुधैश्चाथाङ्कितानि महात्मनः ।।५७।।**

(अन्वयः) तत्र कृतार्थत्वं प्राप्य सुदुर्मतं व्यर्थीकृत्य इह मत् समीपं आगन्ता. अथ महात्मनः तस्य च वृन्ताद्यस्थीनि चक्रशंखाद्यायुधैः च अंकितानि.

**(व्या) तत्र कृतार्थत्वम्** उद्देश्य पूर्तिं ३७ग्रन्थकरणेन प्राप्य । **सुदुर्मतं** मायावादं शिष्यैरनुपादेयमिति प्रदर्श्य, **इह मत्समीपम् आगन्ता** । देवप्राप्यबदरीनारायणसामीप्यं प्राप्नोति । **तस्य च वृन्तादि अस्थीनि** शङ्खचक्रादिविष्णुचिह्नविशिष्टानि अभूवन् । तपो महिम्ना ।।५७।।)

**तस्मात् तन्मतमेवाग्र्यं ग्राह्यं सर्वबुधैरपि ।**
**प्राग्र्यं लोकमवाप्नोति तन्मते चाग्रहान्वितः ।।५८।।**

(अन्वयः) तस्मात् सर्वबुधैः अपि अग्र्यं तन्मतं एव ग्राह्यम् । तन्मते आग्रहान्वितः प्राग्र्यं लोकं अवाप्नोति च ।

**(व्या) तस्मात्** सिद्धस्य तस्य मतमेव श्रेष्ठम् । तन्मतानुष्ठानेन अधिकारिणः श्रेष्ठं जीवन्मुक्तलोकान् प्राप्नुवन्ति[१] ।।५८।।

**इति ब्रह्माणमुद्दिश्य गुणवारिधिरब्रवीत् ।**
**शृणु सत्यं मया प्रोक्तं भण सर्वबुधान् प्रति ।।५९।।**

(अन्वयः) गुणवारिधिः ब्रह्माणम् उद्दिश्य इति अब्रवीत्; मया प्रोक्तं सत्यम्; शृणु; सर्वबुधान् प्रति भण ।

---

(१) 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा ।।
स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ।।' – म.भा.ता.नि. (२/७१-७२)

* 'अन्ते सिद्धस्तु सिद्धान्तः मध्वस्यागम एव हि' – इति युक्तिमल्लिकायाम् । तथा च श्रीमदनुव्याख्यानम् – (३.१.श्लो१३७) – अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि । तावदेवेश्वरो नाम ..' इति । तथा च द्वादशस्तोत्रम् – 'बहुचित्रजगद्बहुधा करणात् परशक्तिरनन्तगुणः परमः' इति ।

**(व्या)** 'एवं श्रीनारायणः ब्रह्माणं प्रति उक्तवान् । तदेव वानरयूथपानां मतम् । एवमेव मया प्रोक्तमपि गुरुराजऋजुत्वम् । मध्वसाम्यादिकं सत्यमिति शृणु । श्रुत्वा अधिकारिभ्यः कथय । यतः ममाप्यस्थीनि चक्रशङ्खादिचिह्नितानि' इति गुरुराजवचनं लक्ष्मीपतिं प्रतीति ज्ञातव्यम् ॥५९॥ लक्ष्मीपते! मयोक्तं श्रीमदाचार्यसाम्यं सत्यमिति गुरुराजवचनम् ॥५९॥

**कृत्वा वृन्दावनं तत्र फलं भावय मां विभुम् ।**
**अहं वृन्दावने स्थित्वा सर्वाभीष्टं ददामि ते ॥६०॥**

**(अन्वयः) वृन्दावनं कृत्वा तत्र फलं विभुं मां भावय; अहं वृन्दावने स्थित्वा ते सर्वाभीष्टं ददामि ।**

**(व्या)** (**कृत्वा वृन्दावनं** = सज्जनसमाजे, योग्यक्षेत्रे मम वृन्दावनं कृत्वा । **तत्र वृन्दावने मां विभुम् फलं** फलदातारं **भावय** ध्यानं कुरु । अहं त्वया प्रतिष्ठितवृन्दावने आगत्य **स्थित्वा** तवेष्टानुसारेण फलं ददानीति भावः । न केवलं इतरेषां तवापि फलं ददामीत्याह – **अहमिति** ॥ 'योग्येषु मन्महिमा प्रकाशकाय तुभ्यं सर्वाभीष्टम् अपरोक्षज्ञानमपि ददामि' इत्यर्थः[१] ॥६०॥ इति लक्ष्मीपतिश्रोतृकं चतुर्थप्रकरणं सम्पूर्णम् ॥)

### ५. विप्रप्रकरणम्॥ श्लोकाः (६१-९७)

**(व्या)** **'इदं ममात्मजे'** इत्यारभ्य **'प्रणमेत भक्त्या'** इत्यन्तं विप्रश्रोतृकपञ्चमं प्रकरणम् । अत्र पूर्वप्रकरणोक्तभगवत्पादसदृशपुत्रकत्वम्, सतां सर्वाभीष्टप्रदत्वम्, सर्वाभीष्टप्रदत्वेन स्वात्म-सदृशपुत्रकत्वम्, आत्मवृन्दावनगतमृत्तिकाया बहुरोगनिवारकत्वम्, कृतिपठनस्य सर्वपापनिवारकत्वं चेत्यादि भौमभाक्तलौकिकालौकिकवैभवम्, वृन्दावने पञ्चरूपात्मकस्य हरेः सन्निधानरूपं भौमभागवतवैभवं चोच्यते – **इदमिति** ॥

**इदं ममात्मजे सर्वं वेदवेद्ये तपोनिधौ ।**
**वक्तव्यं पुरतः स्थित्वा निःशङ्कः सन् सदा द्विज ॥६१॥**

---

(१) अपरोक्षदृशा युक्ता सा पूर्णेत्यभिधीयते ।
अपरोक्षदृशिश्चापि महाचार्योक्तदर्शनम् ।
सोपि यन्मोक्षनियतं मनसा समुदीरयेत् ।
तस्य दर्शनतो याति मुक्तिं नास्त्यत्र संशयः । (बृ.उ.भा. सप्तान्न ब्राह्मण)

**(अन्वयः) हे द्विज! (त्वं) सदा निःशङ्कः सन् स्थित्वा, मम आत्मजे तपोनिधौ वेदवेद्ये इदं सर्वं पुरतः वक्तव्यं (इति बुधान् प्रति भण) ।**

**(व्या)** हे द्विज! (विप्र) त्वं **सदा निःशङ्कः** सन् **स्थित्वा** स्थिरो भूत्वा **मम आत्मजे तपोनिधौ वेदवेद्ये इदं** पूर्वप्रकरणोक्तं **सर्वं** श्रीमदाचार्यलक्षणं, **पुरतः** भाविकल्पे(१) नारायणेन वक्तव्यम् । इति बुधान् प्रति भण ।।६१।। (अत्र **'द्विज'** इति सम्बोधनेन विचित्राज्ञा मूकस्य दीयते । तेन ज्ञायते एतत्कार्यं वृन्दावनाचार्यनामके द्वितीयजन्मनि एतत्कार्यं भवितव्यमिति ।। तथा चायमर्थः – हे द्विज! त्वम् उत्तरजन्मनि वेदवेद्यवृन्दावनसमीपं गत्वा सदा निःशङ्कः सन् स्थित्वा इदं पूर्वोक्तं मम ऋजुगणाग्रणीत्वादि महिमानम् । वृन्दावनाख्यानमिति यावत् । ममात्मजे वेदवेद्ये वक्तव्यम् । बुधान् प्रति प्रवचनरूपेण मम महिमानम् उक्त्वा । एवमेव महिमापूर्णः वेदवेद्योपीति तद्विषये अपि वदेत् । एवं ऋजुद्वयसेवा त्वया कृता भवतीति भावः ।।६१।।)

**विप्र त्वं तव पुत्रं तु मम नाम्ना समाह्वय ।**
**सुप्रीतत्वं तु विज्ञाय मयि सर्वं समर्पय ।।६२।।**
**कामधेनुर्यथापूर्वं सर्वाभीष्टफलप्रदा ।**
**तथा कलौ वादिराजश्रीपादोभीष्टदः सताम् ।।६३।।**
**अदृश्य एव सर्वेषां सर्वाभीष्टफलप्रदः ।**

**(अन्वयः) हे विप्र! त्वं तव पुत्रं तु मम नाम्ना समाह्वय; सुप्रीतत्वं तु विज्ञाय सर्वं मयि समर्पय । कामधेनुः यथापूर्वं सर्वाभीष्टफलप्रदा तथा कलौ वादिराजश्रीपादः सतां अभीष्टदः, सर्वेषाम् अदृश्य एव सर्वाभीष्टफलप्रदः (इति स्तोत्रं कुरु) ।**

**(व्या) विप्रेति ।। हे विप्र! तव पुत्रं मम नाम्ना** वादिराजेति नाम्ना तत्समानार्थकेन

---

(१) 'यथैव नियमः काले सुरादिनियमस्तथा ।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति'
'यथापूर्वम्' इति दर्शनात् ।
'अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' इति स्मृतेश्च ।। – (ब्र.सू.भा. १/३/२८)

**समाह्वय** । वेदवेद्यस्य वायुत्वसमये इन्द्रपदयोग्यस्य तव पुत्रं पुत्रतुल्यं शेषम् मम नाम्ना प्राण इति नाम्ना समाह्वयेति वा । 'नागाह्वयः पण्डितोहमित्यत्र तस्य प्राणनामकत्वस्य वक्ष्यमाण-त्वात् । (अथवा) मम पुत्रं वेदवेद्यं तव नाम्ना मम ब्रह्मत्वसमये त्वदीयेनेन्द्रनाम्ना समाह्वय । 'इन्द्रशब्दोदितो वायुः सभाज्यः सोमभुक्पुरा' इति छान्दोग्यभाष्योक्तेः । 'यस्माद्वायुपदे योग्याः बहवस्त्विन्द्रनामकाः । इन्द्रे बलं ददानि' इत्यादि श्रुत्यनुसारेण समाह्वय । इदानीमपि तव नाम्ना । 'विश्वो वायुः प्रियः यस्य इति, विश्वप्रियनाम्ना भक्त्यादिना आह्वयेति भावः ।। (अथवा सार्धैकश्लोकात्मकमेव मन्त्रं पठ । वादिराजवृन्दावनं गत्वा –

**'कामधेनुर्यथापूर्वं सर्वाभीष्टफलप्रदा ।**
**तथा कलौ श्रीवादिराजश्रीपादोभीष्टदः सताम् ।**
**अदृष्ट एव सर्वेषां सर्वाभीष्टफलप्रदः ।।'**

इति स्तोत्रं कुरु ।।६२।।६३ १/२।।

**इदं तु वेदवेद्याख्यश्रीपादस्य सुतस्य मे ।।६४।।**

**वक्तव्यं तत्र गत्वा तु नात्र कार्याविचारणा ।**

**(अन्वयः) मे सुतस्य वेदवेद्याख्यश्रीपादस्य इदं तु तत्र गत्वा तु वक्तव्यं; अत्र विचारणा न कार्या ।**

**(व्या) इदं त्विति ।। इदं** 'कामधेनु'रिति पद्यं **मे सुतस्य** = वेदवेद्यश्रीपादस्य । अनेन–

**कामधेनुर्यथा पूर्वं सर्वाभीष्टफलप्रदा ।**
**तथा कलौ वेदवेद्यश्रीपादोभीष्टदः सताम् ।।'**

इति वक्तव्यमिति सूचितं भवति । वेदवेद्यश्रीपादेत्यनेन ऊह्यमानपदसूचनं कृतं भवति । **तत्र गत्वा वक्तव्यमि**त्यनेन 'मद्वृन्दावनसमीपे वादिराजश्रीपादोभीष्टदः सतामिति वक्तव्यम् । तद्वृन्दावनसमीपे तु वेदवेद्यश्रीपादोभीष्टदः सतामिति वक्तव्यम्' इति सूचितं भवति ।। (इदं तु । इदमेव सार्धैकपद्यं तत्र गत्वा तु तस्य वृन्दावनसमीपं गत्वैव मे सुतस्य वेदवेद्याख्यश्रीपादस्य पुरतः वक्तव्यम् । नात्र कार्या विचारणा । गुरुराजविषये कृतं स्तोत्रं वेदवेद्यविषये कथं प्रयोक्तव्यमिति शङ्का न कार्येति भाव । 'श्रीपादस्य' इति हेतुगर्भवचनात् । समानानां स्तोत्रे समानानाम् अधिकारः अस्त्येव । रुद्रस्तोत्रेण शेषस्तुतेः क्रियमाणत्वाच्च । किंच 'तथा कलौ

वादिराजः श्रीपादः परमहंसगुरुः यस्य सः वेदवेद्यः । सतां अभीष्टदः इति 'वादिराजश्रीपाद'पदस्य बहुव्रीहिवृत्त्या अर्थस्य शक्यत्वाच्च । एवं एकेनैव मन्त्रेण द्वयोः पूजा कार्येति विधत्ते । तेनैव मन्त्रेण श्रीवेदवेद्यमपि सेवस्व इत्याह कामधेनुरिति ।।)

('कामधेनुर्यथापूर्वं सर्वाभीष्टफलप्रदा ।
तथा कलौ वादिराजश्रीपादोभीष्टदः सतां'
'कामधेनुर्यथापूर्वं सर्वाभीष्टफलप्रदा ।
तथा कलौ वेदवेद्यश्रीपादोभीष्टदः सतां'
'यावज्ज्ञानं चास्ति मे वासुदेवे ।
तावत् ज्ञानं वायुदेवस्य चास्ति ।
यावत् ज्ञानं वायुदेवस्य चास्ति ।
तावत् ज्ञानं चास्ति वै तत् ऋजूनाम्' इदक्के आधारवागिरुवुदु.)

(अव) नात्र कार्या विचारणेत्युक्तमुपपादयति – **भारतीत्यादि** ।।६५।।

**भारतीपतिवद्भाति भारतार्थप्रकाशनात् ।।६५।।**

**भारतार्थप्रकाशत्वात् तत्कर्तृसदृशो हि सः ।**
**तत्कर्तृसदृशत्वात् तु तद्वत्पूज्यो गुरुः सताम् ।।६६।।**

(अन्वयः) भारतार्थप्रकाशनात् भारतीपतिवत् भाति; सः भारतार्थप्रकाशत्वात् तत्कर्तृसदृशः हि । तत्कर्तृसदृशत्वात् सतां गुरुः तु, तद्वत् पूज्यः ।

(व्या) लक्षणसाम्यं द्योतयति **भारतीपतिवदिति** । अयमर्थः – सः वादिराजगुरुः **भारतार्थप्रकाशनात्** लक्षालङ्कारे भारततात्पर्यस्य प्रकाशनात् **भारतीपतिवद्भाति** = मध्वगुरुवद्भाति ।।६५।। भारतार्थप्रकाशत्वात् भारतार्थस्य प्रकाशः ज्ञानं यस्य सः, तस्य भावः । तस्मात् भारतस्य निर्णीतार्थस्य ज्ञानयुक्तत्वात् तत्कर्तृसदृशः भारतनिर्णयकृत् सदृशः । एवं निर्णयकर्तृसदृशऋजुत्वात् सतां गुरुः वादिराजः तद्वत्पूज्यः ।।६६।। एवमेव वेदवेद्यपक्षे । **सः वेदवेद्यः** भारतस्य अर्थप्रकाशनात् निर्णयलक्षालङ्कारयोः तात्पर्यविवरणात् भारतीपतिवद्भाति । सर्वज्ञाचार्य इव प्रकाशते । तथा च । भारतार्थस्य प्रकाशः यस्य सः तस्य भावः । तस्मात् व्याख्यानोपयोगी यावद्भारतार्थज्ञानवत्वात् तत्कर्तृसदृशः निर्णयलक्षालङ्कारकर्तृसदृश एव । एवं च । तत्कर्तृसदृशत्वात्

ज्ञाने निर्णयलक्षालङ्कारकर्तृसमत्वात् । **सतां गुरुः** रुद्रादीनां गुरुः वेदवेद्यः । **तद्वत्पूज्यः** मध्व-वादिराजवत्पूज्यः ।।६६।।

**पूज्यत्वान्नित्यमेवात्र वृन्दावनगतं पतिम् ।**
**पूजयित्वा महात्मानं महाभारतकीर्तनैः ।।६७।।**

(अन्वयः) **नित्यमेव अत्र पूज्यत्वात् वृन्दावनगतं पतिं महात्मानं महाभारतकीर्तनैः पूजयित्वा,**

**(व्या) पूज्यत्वात्** श्रीमध्ववत्पूज्यत्वात् **अत्र वृन्दावनगतं पतिं महात्मानम्** ऋजुस्थत्वेन ज्ञात्वा **पूजयित्वा** महाभारतपारायणेन सेवां कृत्वा, वादिराजगुरुं वेदवेद्यगुरुं च तोषयित्वा ।।६७।।

**ततोस्मत्तः सन्ततिं वा सर्वेष्टं वा तदाहरेत् ।**
**इदं तु सन्तं सन्तत्या त्वामुद्दिश्य तथोक्तवान् ।।६८।।**

(अन्वयः) **तदा ततः अस्मत्तः सर्वेष्टं वा सन्ततिं वा आहरेत् । इदं तु सन्तत्या सन्तं त्वाम् उद्दिश्य तथा उक्तवान् ।**

**(व्या) ततः** वेदवेद्यात् **तत् आहरेत्** = सम्पादयेत् । **सन्तत्या** दण्डसन्तत्या । **सन्तं** यतिरूपेण उत्पन्नम् । त्वां प्रति उक्तवान् । यतिजन्मनि प्रागुक्तमिदमनुसन्धेयमिति भावः ।। (ततः सेवानन्तरम् अस्मत्तः वादिराजगुरोः सकाशात् वेदवेद्यगुरोः सकाशात् वृन्दावनस्थ कृष्णादिभगवद्रूपाणां सकाशात् तदा तैः वरप्रदानकाले सन्ततिं सन्तानं गृहस्थजन्मनि । सच्छिष्यं यतिजन्मनि । भावप्रधाननिर्देशे सन्ततित्वं अस्मद्वंशे करकमलसञ्जातत्वम् । सर्वेष्टं वा । दिग्विजयअपरोक्षज्ञानादि अभीष्टं वा । **आहरेत्** सम्पादयेत् ।। **इदं त्विति ।।** हे विप्र! इदं तु हितवचनम् सन्तत्या सन्तं मन्नामयुक्तपुत्रसहितम्, अथवा वराहतीर्थादि शिष्यसन्ततियुक्तम्, अथवा मत्सन्ततौ प्राप्तं त्वामुद्दिश्य तथा ऋजुगुर्वोः आवयोः सेवा भवत्साधनार्थं आवश्यकीति उक्तवान् ।। न हि नीचसेवया आनन्दोन्नाहो भवति । नापि सन्निहितगुरुं परित्यज्य अन्यसेवा उचिता । तत्रापि स्वमठीयसमनुग्राहकऋजुगुरुं परित्यज्य हीनाश्रयणस्य अन्याय्यत्वाच्च जन्मान्तरे एडमूकजन्मनि पौराणिकाचार्यजन्मनि च तत्सेवायामेव अभ्यस्तसंस्कारत्वाच्च गुरुराजवेदवेद्यसेवैव तस्य परमसाधनमिति भावः[१] ।।६८।।)

(१) 'सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः ।

**पूजनीयो गुरुर्नित्यं सर्वाभीष्टमभीप्सुना ।**
**इमामस्मत्कृतिं विद्याद्यो विद्यात् त्वत्कृतिं नरः ।।६९।।**

**स याति निरयं घोरं मृषात्वगतिरीदृशी ।**

(अन्वयः) सर्वाभीष्टमभीप्सुना गुरुः नित्यं पूजनीयः; इमां अस्मत् कृतिं विन्द्यात् । यः त्वत् कृतिं विद्यात् सः घोरं निरयं याति; मृषात्वगतिः ईदृशी ।

**(व्या)** ('गुरुप्रसादो बलवान्' इति प्रमाणसद्भावात् सर्वाभीष्टं सुग्रीवार्जुनादिवत् **सर्वाभीष्टं** प्राप्तुम् इच्छायुक्तेन त्वया गुरुः वादिराजगुरुः[१] वेदवेद्यगुरुश्च पूजनीयः । गुरुपूजैव तव मुख्य-साधनम् । 'पूजनीयो गुरुर्नित्यम्' इति सर्वाधिकारिणामपि एवमेवेति सामान्यन्यायोपन्यासो वा ।। एतदाख्यानस्य उपादेयत्वसिद्ध्यर्थमाह **इमामिति ।। इमां कृतिं अस्मत्कृतिं विद्यात्** । वादिराजगुरुणा उपदिष्टमिति जानीयात् । यो नरः इमां त्वत्कर्तृककृतिरिति जानाति सः घोरनरकं याति[२] । तादृशज्ञानस्य अनृतविषयकत्वात् गुरुराजद्रोहरूपत्वात् दुष्फलं युक्तमेव ।।६९।।)

---

यद्गुरुः सुप्रसन्नः सन् दद्यात् तन्नान्यथा भवेत् ।।
तथाप्यनादिसंसिद्धो भक्त्यादिगुणपूगतः ।
लभेद्गुरुप्रसादं च तस्मादेव च तद्भवेत्' इति ।।
'भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् ।
दद्याच्छमदमादिश्च तेन चैते गुणाः पुनः ।।
तैस्सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेत्' इति च नारायणतन्त्रे ।।– (ब्र.सू.भा. ३.३.५१)
'साधनेभ्योधिका भक्तिर्नैवान्यत् तादृशं क्वचित् ।
भक्तिश्चैव हरावेव मुख्यान्यत्र यथाक्रमम् ।
स्वाधिका त्वेव सर्वत्र स्वोत्तमेषु क्रमेण च ।।
अनुवर्तते च सा भक्तिर्मुक्तावानन्दरूपिणी ।
तत्पूर्वकोपासनैवं कर्तव्या मुक्तये गुणैः ।।' –ताद्विद्याधिकरणे अनुव्याख्याने

(१) 'ऋषिभ्यस्तूत्तमा देवा देवेभ्यो वायुरुत्तमः ।
वायोश्च भगवान् विष्णुर्न तस्मादुत्तमो गुरुः' इति आचार्यसंहितायाम् ।

(२) 'भिन्नस्याभेदतो दृष्टिरपि भेददृशिर्मता ।
वस्तुयाथात्म्यतस्तस्य भिन्नत्वादिति सूरिभिः ।
अन्यथाज्ञानमेवातो भेदज्ञानं विनिन्दितम् ।
न विद्यमानभेदस्य दर्शनं निन्दितं क्वचित् ।

**कुष्ठापस्मारलूतान् तान् बालस्फोटादिकान् बहून् ॥७०॥**

**मृत्तिका नाशयत्येव वृन्दावनगता मुनेः ।**

(अन्वयः) हे मुने! (विप्र) कुष्ठापस्मारलूतान्तान् बालस्फोटादिकान् तान् बहून् (मम) वृन्दावनगता मृत्तिका एव नाशयति ।

**(व्या)** वृन्दावनगतायाः मृत्तिकायाः सर्वरोगनिवारकत्वमुपपादयितुं स्वपूज्यहयवदनसन्निधान-माह – **मयेति** ॥७१॥

**मया सम्पूज्यमानः सन् हयास्यः पुरुषोत्तमः ॥७१॥**

**लक्ष्म्या सार्धं सुरैः सर्वैरत्र सन्निहितः स्वयम् ।**

(अन्वयः) हयास्यः पुरुषोत्तमः मया सम्पूज्यमानः सन् स्वयं लक्ष्म्य सर्वै सुरैः सार्धं अत्र सन्निहितः ।

**(व्या)** (वृन्दावनमृत्तिका इतरासाध्यरोगपरिहारिका । यतः अहं वृन्दावने सन्निहितः । मदनुग्रहार्थं श्रीहयग्रीवः लक्ष्म्या साकं ब्रह्मादिदेवैः साकं वृन्दावने सन्निहितः । **हे मुने** इति सम्बुद्धिः[१] ॥)

---

शिला देवा इति ज्ञानं देवोऽस्मीति तु या दृशिः ।
उत्तमस्याधमत्वेन नीचस्योच्चतया दृशिः ।
असमस्य समत्वेन समस्यासमदर्शनम् ।
द्रवं तीर्थमिति ज्ञानं देहोऽहमिति या मतिः ।
असद्भार्यादिषु स्वीयदर्शनं चैवमादिकम् ।
भेदज्ञानमिति प्रोक्तं या चान्याऽप्यन्यथामतिः ।
तस्मात्तदपहानाय संसेव्या गुरवो वराः ।
तत्रस्था देवताः सर्वाः प्रीयन्ते गुरुपूजया ।
नैवान्यथैषां प्रीतिः स्याद्गुरूक्तिमपहाय तु ।
तस्मात्पूजाविशेषेण सतां कार्या नृणां सदा ।
भक्तिस्तु तारतम्येन विशिष्टे त्वधिका भवेत्' इति स्कान्दे ॥ – भाग.ता.नि. १०.७२.१३

(१) प्रकृतौ महतः स्रष्टा परमः पुरुषोत्तमः ।
तदेव वासुदेवाख्यं महत्तत्त्वनियामकम् ॥ (भाग.ता. ३/२७/२०)

**इमां कृतिं शिलायां तु लेखयित्वा ममाग्रतः ।।७२।।**

**स्थापयेदत्र तां दृष्ट्वा सन्तः सन्तोषमाप्नुयुः ।**

(अन्वयः) मम अग्रतः इमां कृतिं शिलायां तु लेखयित्वा स्थापयेत्; तां अत्र दृष्ट्वा सन्तः सन्तोषम् आप्नुयुः(१).

**इमां कृतिं नरो यस्तु स्वाप्नीं मन्दस्य बुद्धिदाम् ।।७३।।**

**पठित्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।**

(अन्वयः) मन्दस्य बुद्धिदां इमां स्वाप्नीं कृतिं यः नरः तु पठित्वा सर्वपापेभ्यो मुच्यते; अत्र संशयः न(२).

(व्या) इमामिति ।। इमां कृतिमित्यनेन –

'पञ्चवृन्दावने पुण्ये पञ्चरूपात्मको हरिः ।
पञ्चीकृत्यस्वरूपाणि नित्यं सन्निहितः स्वयम् ।।'

---

– अनुग्रहार्थं च महत्तत्वाभिमानिनः श्रीगुरुराजस्य वृन्दावने श्रीहरिः विराजते; श्रीगुरुराजाः श्रीहरेः पुत्रत्वेन सन्ति इति स्मर्तव्यम् ।

* **सर्वे देवपदे योग्याः सायुज्यं स्वोत्तमेष्वथ ।**
  **सम्प्राप्य ब्रह्मणा सार्धं प्राप्नुयुः पुरुषोत्तमम् । (बृ.उ.भा. षडाचार्यब्राह्मणम्)**

* **.............. जीवस्तमन्यं ज्ञात्वा विमुच्यते ।**
  **जीवादन्यः स्वतन्त्रोयं यतोतः पुरुषोत्तमः ।'**

– 'सर्वैः देवैः साकं श्रीहरिः मम वृन्दावने विराजते' इति सूचितत्वेन तेषां सर्वेषां एकत्रावस्थानेऽपि भिन्नाः एव नतु ऐक्यत्वेन सन्ति इति भेदः तारतम्यमपि सूचितं भवति ।

* **'नान्यैर्देवैर्हरिं पश्येज्ज्ञानरूपेण वायुना ।**
  **ब्रह्मणा परमज्ञानरूपेण हरिणा तथा ।**
  **प्रसन्नेनैव तं पश्येदन्येनुज्ञाप्रदायिनः ।।' इति च । – (आथ.उ.भा. ५ने खण्ड)**

(१) **देवाश्च न शिलामात्राः किन्तु तत्रान्तरस्थिताः ।**
**गुरूपदेशं तु विना न ते दृश्याः कथञ्चन ।** – भाग.ता.(११/७२/१३)

(२) अत्र श्लोकद्वये 'पठित्वा' 'अर्थं बुद्ध्वा' 'अनुवक्ता' इत्यनेन सूचित अधिकारितारतम्यमपि यत् व्याख्याने प्रतिपादितम्, तत् ज्ञेयम् ।

इति पद्यम् । वेदनिधिना शिलायां लेखनीयमिति सूचयति ॥

**अर्थं बुध्वा कृतेरस्याः सर्वेष्टं लभते नरः ॥७४॥**

**योऽनुवक्ता कृतिमिमां मम तोषस्य भूरसौ ।**

**(अन्वयः) अस्याः कृतेः अर्थं बुध्वा नरः सर्वेष्टं लभते; यः इमां कृतिम् अनुवक्ता असौ मम तोषस्य भूः ।**

**(व्या)** स्पष्टत्वात् श्रीव्याख्यानं नास्ति । परं तु फलतारतम्यं मनसि निधातव्यम् । बुद्धिमान्द्यरहितानां शुद्धान्तःकरणयुक्तानां गुरुराजमहिमाज्ञानिनां कृतिलिखितशिलादर्शनमात्रेण सन्तोषः । गुरुप्रसादेन पुण्यप्रचयप्राप्तिरिति लक्षणया अर्थः । अपरोक्षज्ञानिनामपि आनन्दोद्रेक-कारणीभूतपुण्यप्राप्तिरित्यर्थः । मन्दबुद्धीनां तु कृतिपठनेन पापनिवृत्तिद्वारा बुद्धिविकासप्राप्तिः । सद्गुरुप्राप्त्या स्वयोग्यमाध्वतत्वज्ञानलाभः इत्यर्थः । परोक्षज्ञानवताम् अर्थज्ञानेन कृतिश्रवण-मननरतानां तु गुरुराजप्रसादेन ध्यानद्वारा सर्वेष्टलाभः । समग्रचित्तशुद्धिः अपरोक्षज्ञानप्राप्तिश्च लाभशब्देन ग्राह्यः । योग्याधिकारिणः उद्दिश्य कृतिव्याख्यानकार्ये रतानां महात्मनां तु गुरुराजपरमप्रसाद एव महाफलम् । तेषु आवेशरूपेण स्थित्वा, गुरुराज एव तद्योग्यसाधनजातं कृत्वा तं संसारसागरादुद्धरतीत्यर्थः । **अनुवक्ता** अनुवादकर्ता वेदप्रमाणैः ऋजुत्वं साधयित्वा व्याख्यानकर्ता इत्यर्थः[१] ॥७५॥

**ख्यातिं कुरुष्वाल्पमते मम कीर्तिं नरेष्वपि ॥७५॥**

**मा छादय शुभां शक्तिं मम ख्यातिं शुभेष्वपि ।**
**त्वां भक्तिमन्तं विप्रेंद्र() न मुंचामि कदाचन ॥७६॥**

---

(१) पञ्चप्राणादिषु संस्थितमुद्गीथोपासनेन साधकः सर्वेष्टमाप्नुयात् इति श्रीमदाचार्यैः छान्दोग्यभाष्ये अधो निर्दिष्टप्रमाणमूलकेन समर्थितम् । अत्र श्रीगुरुराजवृन्दावने पञ्चप्राणरूपके श्रीगुरुराजे पञ्चरूपात्मकहरिः सन्निहितः विराजते । तत्रस्थहरिपूजनेन 'सर्वेष्टं लभते नरः' इति यत् श्रीगुरुराजैः उपरिश्लोके कथितं तत् समञ्जसमेव ।

'उद्गीथाक्षरगं चैव प्राणादिषु च संस्थितम् ।
आशीः समृद्धिहेतुष्वप्यखिलेषु व्यवस्थितम् ।
एकमेव हरिं वेद यः स सर्वेष्टमाप्नुयात्' इति च । – छां.उ.भा. १/३/३

**(अन्वयः) हे अल्पमते! मम कीर्तिं नरेषु अपि ख्यातिं कुरुष्व. शुभेषु शुभां मम ख्यातिं शक्तिं मा छादय. विप्रेंद्रं भक्तिमन्तं त्वां कदाचन न मुंचामि.**

**(व्या) 'अल्पमते** इति सम्बुद्धिः अधिकारिषु गुरुराजख्यातिविस्तारेण अल्पमतिरपि अनल्पमतिर्भविष्यति' इति सूचनार्थम् । 'योग्यपदेशकार्ये इदं गुरुराजमहिमारहस्यं न वक्तव्यमिति लोभो न कार्यः' इति भावः । 'कृतेः शुभां शक्तिं तत्र प्रतिपादित मम ख्यातिं च माहात्म्यं च न आच्छादय' इत्यन्वयः ।। 'हे विप्रेन्द्र' इति भविष्यत्कालीनमहिमायुक्तस्य सम्बुद्धिः । 'मद्भक्तं त्वामाविश्य जन्मजन्मसु तिष्ठामि । अनुगृह्णामि च' इत्यर्थः ।।७६।।)

**सेवस्व मम पादाब्जं नित्यं भारतकीर्तनैः ।**

**भुक्तिं मुक्तिं ततो दद्यां वचनं मम विश्वसीः ।।७७।।**

**आचार्यत्वं वृणीष्व त्वं मम पुत्रेण धीमता ।**

(अन्वयः) नित्यं भारतकीर्तनैः मम पादाब्जं सेवस्व; ततः मम वचनं विश्वसीः भुक्तिं मुक्तिं दद्याम्; धीमता मम पुत्रेण त्वम् आचार्यत्वं वृणीष्व ।

**(व्या) सेवस्वेति**[१] ।। **भुक्तिमिति** ।। **धीमता मम पुत्रेण आचार्यत्वं वृणीष्व** । 'पुत्रेण वेदवेद्येन तिमिरं समरे'त्यादिना (२१/९२) वक्ष्यमाणम् आचार्यत्वं वृणीष्वेति भावः ।।७७।।

**पञ्चवृन्दावने पुण्ये पञ्चरूपात्मको हरिः ।।७८।।**

**पञ्चीकृत्य स्वरूपाणि नित्यं सन्निहितः स्वयम् ।**

---

(१) 'सेवस्व मम पादाब्जम्' इत्यनेन पूज्यपूजकभावरूपभेदः अपि ग्राह्यः । तद्यथा – श्रीमद्भागवते (३.१०.३३)–

* स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ।।' इति ।

स्वरूपेण मयोपेतं हृदिस्थं जीवरूपं हि परमेश्वरसहितं भवति ।

'त्यक्त्वा देहाद्यात्मभावं जीवरूपे हृदि स्थिते ।
दृष्ट्वात्मभावं तं चापि हरिपादाब्जसंस्थितम् ।
यदा पश्यत्यापरोक्ष्यात् तदा मुक्तिं व्रजत्यसौ' इति दत्तात्रेययोगे ।।

– इति तत्रैव श्रीमदाचार्याः निर्णये ।

**(अन्वयः) पुण्ये पञ्चवृन्दावने पञ्चरूपात्मकः हरिः स्वरूपाणि पञ्चीकृत्य नित्यं स्वयं सन्निहितः(१) ।**

---

(१) परमात्मा तु विशेषतः वायौ पञ्चधाऽवस्थितः इति श्रीमदाचार्यैः निर्णयं कृतम् । तद्यथा –

**'स एव तु पुनर्वायौ पञ्चधाऽवस्थितः प्रभुः ।**
**प्राणादिरूपे वसति ह्यनिरुद्धादिरूपवान् ।।**

**अनिरुद्धः स प्रद्युम्नस्तथा सङ्कर्षणः प्रभुः ।**
**वासुदेवो नारायणः पञ्चरूप इति क्रमात् ।।**

**पञ्चरूपोऽपि भगवान्यस्माद्वायौ विशेषतः ।**
**स्थितस्तेन च खादिभ्यो वायुरेव विशिष्यते ।।' ऐतरेयोपनिषद्भाष्ये ।**

* तथा पञ्चरूपो वायुः सर्वनियामकः सन् वर्तते । तद्यथा –

**'प्राणादिपञ्चरूपो यो वायुः सर्वनियामकः ।**
**नियन्ता परमो विष्णुर्वायोस्तस्यापि सर्वदा ।' (उषस्त्यब्राह्मणे बृ.उ.भाष्ये)**

* छान्दोग्यभाष्ये लोकेषु, वृष्टौ, अप्सु, ऋतुषु, पशुषु, इन्द्रियेषु पञ्चरूपिपरमात्मोपासनम् विवृतम् । तदत्र द्रष्टव्यम् । श्रीगुरुराजाणां वृन्दावनेऽपि तत्प्रकारेण उपासनं कर्तव्यम् । यतः प्रथमाध्याये – 'मन्दरो हिमवानद्रि ...' इत्यादिना ब्रह्माण्डे स्थितसर्वक्षेत्रपर्वतादीनां वृन्दावने सन्निधानमस्तीति कथितम् ।

* अनेन यत् पञ्चरूपी परमात्मस्योपासनम् उपनिषदादिषु कथितं तदप्यत्र गुरुराजवृन्दावनस्थपञ्चरूपी गुरुराजान्तर्गतपञ्चरूपिहर्योपासने स्मर्तव्यम् अनुसन्धेयं च ।

* **'जीवादन्यत् परं ब्रह्म पञ्चरूपं च ये विदुः ।**
**सन्तस्त इति विज्ञेया मोक्षयोग्या हि ते ध्रुवम् ।। –** तैत्तिरीयोपनिषत् द्वितीयावल्ली ।

* **'पञ्चभूतात्मकत्वेन समता सर्ववस्तुषु ।**
**हरिसन्निधिवैशेष्याद्विशेषश्च महान् सदा' इति वैशेष्ये ।।** ..............

**'यद्यद्धरेः सन्निहितं तत्तच्छुद्धतरं मतम् ।**
**स्वतः शुचितमो विष्णुः सान्निध्यं च स्वभावतः' इति च ।।** भागवततात्पर्ये (११/२१/३,६)

* **'भुङ्क्ते यदखिलान् स्पर्शानास्पर्शो विष्णुरुच्यते ।**
**तस्य प्रकाशकं नित्यं नमस्ये प्राणमेकलम् ।।**
**प्राणस्यैव मनो नित्यं वासुदेवं प्रकाशयेत्' – इति वायुप्रोक्ते ।।** (भाग.ता. ११/२१/३८

* **भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।**
**स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ।। –** भागवतम् (११/४/३)

**इति जानन्ति ये मर्त्याः प्रपञ्चे सर्व एव तु ।।७९।।**
**पञ्चभूतानि हित्वा तु पञ्चत्वं न व्रजंति ते ।**

(अन्वयः) प्रपञ्चे ये मर्त्याः इति जानन्ति ते सर्व एव तु पञ्चभूतानि हित्वा पञ्चत्वं न व्रजन्ति ।

**(व्या) पञ्चरूपात्मकः** अनिरुद्धादिपञ्चरूपात्मकः ।।७८ऽ८४।। (पञ्चवृन्दावनस्थ अनिरुद्धादिरूपिहरेरुपासनया अपरोक्षज्ञानद्वारा मुक्तिरेव भविष्यतीत्याह(१) **पञ्चभूतानीत्यादिना** ।।)

**पञ्चवृन्दावनं चात्र यो वा कारयिता मम ।।८०।।**
**पञ्चाशद्युगपर्यन्तं विष्णोर्लोके महीयते ।**

(अन्वयः) अत्र च मम पञ्चवृन्दावनं वा यः कारयिता (सः) पञ्चाशत् युगपर्यन्तं विष्णोः लोके महीयते(२) ।

**पञ्चपुत्रा भविष्यन्ति पञ्चाननसमप्रभाः ।।८१।।**
**पञ्चायुधधरस्याथ भक्ता एव भवन्ति ते ।**

---

तत्रैव श्रीमदाचार्याः भागवततात्पर्यनिर्णये –

'विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाण्यतो विदुः ।
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ।
तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यते' इति माहात्म्ये ।

* ........अस्य पञ्चानां देवतां हरिम् ।
नारायणं वासुदेवं तथा सङ्कर्षणं विभुम् ।
प्रद्युम्नं चानिरुद्धं च स्मरतो नित्यमेव तु ।
सवनत्रयं तथा पूर्वमुत्तरं चेति पञ्चकम् ।
यज्ञे मध्यं शिरः पक्षौ पुच्छं पशुषु पूरुषे ।
चतुर्दिशं तथा मध्यमिति सर्वत्र पञ्चकम्' इति च ।। – बृ.उ.भा. अव्याकृतब्राह्मणे

(१) 'मातापितृभ्यामन्नेन तयोः पूर्वेण कर्मणा ।
जन्यस्य कर्मणा चैव साध्यः पञ्चभिरेव तु ।
एवं हि प्राणिनोऽन्येपि जायन्ते नात्र संशयः । – इति माहात्म्ये – बृ.उ.भा. अव्याकृतब्राह्मणे

(२) सकृदभ्यर्च्य गोविन्दं बिल्वपत्रेण मानवः ।
मुक्तिभागी निरातङ्की विष्णुलोके महीयते ।। – कृष्णामृतमहार्णवम् ११।।

(अन्वयः) पञ्चाननसमप्रभाः पञ्चपुत्राः भविष्यन्ति; अथ ते पञ्चायुधधरस्य भक्ताः एव भवन्ति ।

**पञ्चभक्षसमायुक्तं पञ्चामृतसमन्वितम् ।।८२।।**
**पञ्चखर्जूरसंयुक्तं नैवेद्यं विनिवेदयेत् ।**

(अन्वयः) पञ्चभक्षसमायुक्तं पञ्चामृतसमन्वितं[१] पञ्चखर्जूरसंयुक्तं नैवेद्यं विनिवेदयेत् ।

**पञ्चम्यां च तिथौ नित्यं पञ्चपर्वसु पूजयेत् ।।८३।।**
**धूपैर्दीपैस्तथा माल्यैर्गन्धैर्दूर्वाक्षतादिभिः ।**

(अन्वयः) धूपैः दीपैः तथा गन्धैः दूर्वाक्षतादिभिः माल्यैः (सह) पञ्चम्यां तिथौ नित्यं पञ्चपर्वसु च पूजयेत्[२] ।

**एवं सम्पूज्यमानोहं दद्यां वरमनुत्तमम् ।।८४।।**

(अन्वयः) एवं अहं सम्पूज्यमानः (सन्) अनुत्तमं वरं दद्याम् ।

**(व्या)** (अथ पञ्चवृन्दावनोपासना अन्या उच्यते – **पञ्चवृन्दावनमिति ।।** पञ्चवृन्दावनात्मकतया गुरुराजवृन्दावनं कारयित्वा, गुरुराजभक्तैः सोदादिमठाधीशैः तत्प्रतिष्ठाप्य, प्रतिदिनं षोडशोपचारपूजादिभिः पूजयित्वा, पञ्चम्यां विशेषतः प्रातः-सङ्गव-मध्याह्न-पूर्वाह्न-अपराह्न-समाप्तिरूपपञ्चपर्वसु । यावद्दिनं इति यावत् । कृतिव्याख्यान-भारतपारायणादि-पूजाविशेषेण आराधयित्वा । गुरुराजान्तर्यामिणं हरिं तोषयेत् । एवं पूजितः गुरुराजः अधिकार्यभीष्टवरं दद्यादेव । तत्प्रसादसूचकतया भूलोके गृहस्थाधिकारिणः पञ्चविष्णुभक्तपुत्राः भविष्यन्ति । यतिरूप-अधिकारिणः पञ्चेन्द्रियशुद्धिः, पञ्चकोशशुद्धिः । मनबुद्धिचित्तअहङ्कारचेतनादिशुद्धि-

---

(१) पञ्चामृतम् –

**दुग्धं सशर्करं चैव घृतं दधि तथा मधु ।**
**पञ्चामृतमिदं प्रोक्तं विधेयं सर्वकर्मसु' – (शब्दकल्पद्रुमकोषः)**

(२) तन्त्रसारसङ्ग्रहे प्रथमाध्याये –

**धूपदीपौ ततो दत्वा नैवेद्यं मूलमन्त्रतः ।**
**अनेन क्रमयोगेन जुहुयात्संस्कृतेऽनले ।। (६५)**

रूपपश्वपुत्राः भविष्यन्ति । निष्कामिगृहस्थस्यापि एते अभीष्टाः भविष्यन्ति । मरणानन्तरं विष्णोर्लोके उपेन्द्रलोके स्वर्गे पञ्चाशन्महायुगावसानपर्यन्तमुषित्वा पुनः योगिकुले जायते । पुनः ज्ञानभक्तिवैराग्यवृद्धिद्वारा अपरोक्षज्ञानी भवति । एवं च गुरुराजाराधनं मुक्तिमार्गप्रापकमित्यर्थः ।।८४।।)

**अहं क्षुधातुरो भूत्वा नैवेद्यं नोक्तवान् मुनिः ।**
**एतत् ते किञ्चिदाख्यातं भक्तत्वात् त्वद्विभूतये ।।८५।।**

**श्रुत्वा त्वन्मुखतः सन्तः सर्वे यान्तु स्वभीप्सितम् ।**

(अन्वयः) अहं क्षुधातुरः भूत्वा नैवेद्यं न उक्तवान्; ते भक्तत्वात् त्वत् विभूतये एतत् किञ्चित् आख्यातम्; सर्वे सन्तः त्वन्मुखतः श्रुत्वा स्वभीप्सितं यान्तु.

(व्या) (हयग्रीवप्रसादेन गुरुराजः सत्यकामः पूर्णकामश्चेति ज्ञानं गुरुराजाराधकानां अङ्गधर्मः इति सूचनाय **अहमिति** ।। अधिकारिणां वैभवसिद्ध्यर्थमेव पञ्चभक्ष-पञ्चामृतादिभिः सेवा विधीयते । 'सेवानुरूप उदयो न परावरत्वम्' इति भागवतसप्तम, तथा दशमोक्तन्यायात् (७/९/२७; १०/३०/२०)। **त्वद्विभूतये** तव भविष्यदैश्वर्यसिद्ध्यर्थं मोक्षे आनन्दोन्नाहाय च ।।८५।। **एतत्सर्वं** कृति महिमानं, गुरुराजोपासनाविधानं च सन्तः त्वन्मुखतः वृन्दावना-चार्यजन्मनि श्रुत्वा, सात्विकाभीष्टानि प्राप्नुयुः । तदनन्तरं एषा कृतिः वादिराजगुरुसेवाप्रकारश्च लोके ख्याता भवन्तीति भावः । तावत्पर्यन्तं व्याख्यातृगुर्वभावादप्रसिद्धाकृतिर्वर्तते इति भावः ।)

**इदं ममात्मजे सर्वं वेदवेद्ये तपोनिधौ ।।८६।।**

**वदस्व मद्दयासिन्धौ हयग्रीवतपोनिधौ ।**

(अन्वयः) ममात्मजे तपोनिधौ वेदवेद्ये मद्दयासिन्धौ हयग्रीवतपोनिधौ इदं सर्वं वदस्व ।

(व्या) **एवमिति** ।। **'एवं सम्पूज्यमानोहं दद्यां वरमनुत्तमम्** इत्याद्युक्तं वरप्रदत्वादिकं सर्वं **तपोनिधौ ममात्मजे** वेदवेद्ये च वर्तते' इति **मद्दयासिन्धौ** पुरुषविशेषे **हयग्रीवतपोनिधौ** जायमाने सति तं प्रति वदस्व, भक्तान् प्रति वदस्व ।। (हयग्रीवसन्निधौ ख्यापय, तेन पुण्यवृद्धिर्भवितेति भावः । अथवा एतत्सर्वं मम महिमानं, **ममात्मजे** मत्साक्षात् शिष्यभूते

वेदवेद्ये च त्वया तस्मिन् अङ्गीकृतमत्साम्यं ज्ञात्वा वदस्व; कृतिव्याख्यानं ख्यापय । कदेत्यत आह – **मद्दयेति ।।** मम दयानामकचन्द्रस्य सिन्धुरिव विद्यमानहयग्रीवनामक, मत्कारुण्येन अभिवृद्धज्ञाने, मुनौ मद्वृन्दावनं यदा प्राप्नोति तदा कृतिप्रवचनेन मन्महिमानं प्रकाशय इत्यर्थः ।।

**नैवेद्यार्थं मया प्रोक्तं विशेषतिथिपर्वसु ।।८७।।**
**आच्छादितं च तत्पद्यं त्वयादुर्मतिसत्तम ।।८८।।**

(अन्वयः) हे अदुर्मतिसत्तम! विशेषतिथिपर्वसु नैवेद्यार्थं मया (यत्) प्रोक्तं तत् पद्यं च त्वया आच्छादितम्(१) ।

**स च दास्यति नैवेद्यं यो वृन्दावनकृत्स्वयम् ।।८९।।**
**वृन्दावनगतादेवास्तस्य तुष्टा भवन्त्यहो ।**

---

(१) नैवेद्यं तु कोषे –

'निवेदनीयं यद्द्रव्यं प्रशस्तं प्रयतं तथा ।
तद्भक्ष्यार्हं पञ्चविधं नैवेद्यमिति कथ्यते ।।
भक्ष्यं भोज्यश्च लेह्यश्च पेयं चोष्यश्च पञ्चमम् ।
सर्वत्र चैतन्नैवेद्यम् आराध्यस्य निवेदयेत् ।। – इति वाचस्पत्ये

* नैवेद्यस्य निवेदनफलं कालं तु वाचस्पत्ये –

नैवेद्येन भवेत् स्वर्गं नैवेद्येनामृतं भवेत् ।
धर्मार्थकाममोक्षाश्च नैवेद्येषु प्रतिष्ठिताः ।।
सर्वयज्ञफलं नित्यं नैवेद्यं सर्वतुष्टिदम् ।
ज्ञानदं मानदं पुण्यं सर्वभोग्यमयं तथा ।
मनसापि महादेव्यै नैवेद्यं दातुमिच्छति ।
यो नरो भक्तियुक्तः सन् दीर्घायुः स सुखी भवेत् ।
महामायां कदा देवीमर्चयिष्यामि भक्तितः ।
नानाविधैस्तु नैवेद्यैरिति चिन्ताकुलस्तु यः ।
स सर्वकामान् सम्प्राप्य मम लोके महीयते ।' – इति कालिकापुराणे ६६/७०

अर्वाक् विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते ।
विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ।
पञ्चरात्रविदो मुख्या नैवेद्यं भुञ्जते सुखम् । – इति गरुडपुराणे – इति कथितम् ।

(अन्वयः) यः वृन्दावनकृत् सः नैवेद्यं च स्वयं दास्यति; तस्य वृन्दावन-गतादेवाः तुष्टाः भवन्ति; अहो!

(व्या) वृन्दावनमिति ।। (पञ्चखर्जूरसंयुक्तं नैवेद्यं विनिवेदयेत् । पञ्चम्यां च तिथौ नित्यं पञ्चपर्वसु पूजयेत् इति पद्यं विप्रेण आच्छादितम् । परस्मिन् दिने स्वप्ने विप्रम् 'अदुर्मतिसत्तम' इति उद्बोध्य गुरुराजः पुनः विप्रेण विस्मृतश्लोकहृदयं विस्तारयति – स चेति ।। यः मत्प्रीत्यै वृन्दावनकृत् । स च भक्तः नैवेद्यं स्वयं दास्यति । न हि भक्तः स्वगुरौ अनादरणं करोति । एवं नैवेद्यसमर्पणे कृते सति । वृन्दावनस्थलक्ष्मीहयग्रीवादिदेवाः तस्मिन् विषये प्रसीदन्त्येव इत्यर्थः ।।९८ १/२।।

**अहं क्षुधातुरो भूत्वा नैवेद्यं नोक्तवान्मुने ।।९०।।**

**पीत्वा चामृतमेवात्र देवैः सह चराम्यहम् ।**

(अन्वयः) हे मुने! अहं क्षुधातुरः भूत्वा नैवेद्यं न उक्तवान्; अमृतमेव च पीत्वा देवैः सह अहम् अत्र चरामि ।

**दीपार्थं नोक्तवान् दीपं तेजोमयसुविग्रहः ।।९१।।**

(अन्वयः) दीपार्थं दीपं न उक्तवान्; (यतः) अहं तेजोमयसुविग्रहः ।

**गन्धार्थं नोक्तवान् गन्धं दिव्यगन्धसुविग्रहः ।**
**माल्यार्थं नोक्तवान्माल्यं दिव्यमन्दारमाल्यवान् ।।**

**चामरार्थं मया नोक्तं दिव्यचामरवीजितः ।**

(अन्वयः) गन्धार्थं गन्धं न उक्तवान् (यतः) दिव्यगन्धसुविग्रहः. माल्यं माल्यार्थं न उक्तवान् (अहं) दिव्यमन्दारमाल्यवान्. चामरार्थं मया न उक्तं (अहं) दिव्यचामरवीजितः.

**व्यजनार्थं मया नोक्तं दिव्यव्यजनवीजितः ।।९३।।**

**छत्रार्थं तु मया नोक्तं दिव्यछत्रविभूषितः ।**
**भूषणार्थं मया नोक्तं दिव्यभूषणभूषितः ।।९४।।**

**वाहनार्थं मया नोक्तमहं दिव्यविमानगः ।**

(अन्वयः) व्यजनार्थं मया न उक्तं दिव्यव्यजनवीजितः; छत्रार्थं तु मया न उक्तं दिव्यछत्रविभूषितः; भूषणार्थं मया न उक्तं दिव्यभूषणभूषितः; वाहनार्थं मया नोक्तं अहं दिव्यविमानगः ।

**भोगार्थं तु मया नोक्तं दिव्यभोगसुभोगवान् ॥९५॥**

**भवतामेव कर्तव्यं मम पादाब्जपूजनम् ॥९५ १/२॥**

(अन्वयः) भोगार्थं तु मया न उक्तं दिव्यभोगसुभोगवान्. भवतां मम पादाब्जपूजनं एव कर्तव्यम् ।

(व्या) (अहमिति ॥ यथा भगवान् 'स्वे महिम्नि प्रतिष्ठितः' सर्वविषयेषु अन्यनिरपेक्षः । तथा ऋजवोऽपि भगवदनुग्रहेण सदा अन्य निरपेक्षाः[१] । तत्रापि ऋजुगणाग्रणीः ब्रह्मवाय्वाविष्टः वादिराजमुनिः अनितरसाधारणतया पूर्णमाहात्म्यवान् दिव्यसुभोगवांश्च । तस्मात् पूजा-विधानादिकमत्रोक्तं सर्वं पूजकानाम् अधिकारिणां तत्तद्योग्यवैभवसिद्ध्यर्थमेव कृपया उपदिष्टमिति मन्तव्यम् ॥९५ १/२॥)

**एवं निशम्य मम वैभवमत्र नित्यं वृन्दावने सकलदैवतसन्निधाने ।**
**नानाघराशिशमनेतिसुपापिनां च मूर्तिं भजन्तु मम नित्यमथेष्टभाजः ॥९६॥**

(अन्वयः) एवं मम वैभवं निशम्य, अथ अत्र नित्यं सकलदैवतसन्निधाने (मम) वृन्दावने अतिसुपापिनां च नाना अघराशिशमने मम मूर्तिं भजन्तु इष्टभाजः (भवन्तु).

---

(१) ज्ञानद्युतेर्देवनामा स्थितो देवेषु केशवः ।
गां धारयंश्च गन्धर्वो गन्धर्वेषु व्यवस्थितः ।
माननान्मानुषो नाम मानुषेषु स्थितो हरिः ।
पालनात्पितृनामाऽसौ पितृष्वेव व्यवस्थितः ।
रतेः प्राणेऽसुराख्यश्च सोऽसुरेषु व्यवस्थितः।
एवं पञ्चजनेषुस्थो हरिः पञ्चजनाभिधः । – इति महैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके सप्तमोऽध्यायः
('देवगन्धर्वनृपितृदैत्याः पञ्चजनाभिधाः' – इति ऋग्भाष्ये मं.४८४)

(व्या) (एवमिति ।। पूर्वोक्तप्रकारेण सकलदैवतसन्निधानयुक्ते **मम वृन्दावने मम नित्यं** नियमेन व्यज्यमानं **वैभवं निशम्य** त्वया श्रुत्वा तच्छिष्यैः श्रुत्वा वा; अथ मयि भक्ताः सन्तः **अतिसुपापिनां च नाना अघराशिशमने,** तादर्थ्ये सप्तमी, स्वस्य स्वेषां वा पापपरिहारार्थं **मम मूर्तिं भजन्तु** । वृन्दावनरूपप्रतिमां सेवन्ताम् । अथ क्षिप्रमेव इष्टभाजः भवन्तु इति शेषः । यथायोग्यं सेवानुसारेण इष्टप्राप्तिर्भविष्यत्येव इति भावः[१] ।।९६।।

**वृन्दावनं सकलदिग्गतसज्जनानां वृन्दावनं परमपावनमत्र नित्यम् ।**
**मन्दाकिनीजनकदेवसदायनं तत् कन्दाशनायनमिदं प्रणमेत भक्त्या ।।९७।।**

**(अन्वयः) नित्यं सकलदिग्गतसज्जनानां वृन्दावनं परमपावनम्; अत्र मन्दाकिनी-जनकदेवसदायनं तत् कन्दाशनायनम्, इदं वृन्दावनं भक्त्या प्रणमेत ।**

(व्या) (**वृन्दावनं** = इदं पञ्चवृन्दावनं सकलदेशगतसात्विकानां वृन्दावनं वृन्दस्य अवनं यस्मात् तत् = सज्जनसमुदायरक्षकम्; नित्यं रक्षकम् । अत्र **परमपावनम्** = अव्यभिचरितफलप्रदं भूलोके भरतखंडे पापपरिहारकक्षेत्रेषु श्रेष्ठम् ।।) मन्दाकिनीजनकदेवस्य हयवदनस्य (सदायनम्=) सर्वदा अयनम् । कन्दाशनस्य बादरायणस्य अयनम् । इदं वृन्दावनं **भक्त्या प्रणमेत्**[२] ।।९७।। इति विप्रप्रकरणं सम्पूर्णम् ।।

---

(१) **पतिः सोमो वरुणस्याप्यथाग्नेः पतिः सूर्यस्तावुभौ तुल्यवीर्यौ ।**
**सूर्याचन्द्रमसोः पतिरिन्द्रोऽस्य रुद्रः पतिर्ब्रह्मा पतिरस्यापि विष्णुः ।।**
**पतिर्मुक्तेर्वासुदेवोऽथ दृष्टेर्ब्रह्मा विद्यायाः शर्व इन्द्रः क्रियायाः ।**
**क्रियांशानामधिपा अन्यदेवास्तथा फलानामपि मुक्तिमार्गे ।।**
**यथायोग्यं स्वेन्द्रियप्रेरकाश्च ततः पूज्या देवता मुक्तिकामैः । – ऋग्भाष्ये (मं २६८)**

इति श्रीमदाचार्यैः देवताः पूज्याः इति कथितम् । अत्र वृन्दावने सकलदेवतासन्निधानात् तत्र कृतसेवा सकलेष्टप्रदा इति निश्चेतव्यम् ।

(२) इह श्रीगुरुराजैः सूचितवृन्दावनसेवा, तन्निवेदितनैवेद्यस्वीकारः, वृन्दावनाख्यानपारायणं, श्रवणं इत्यादि तु आहाररूपेण अस्माकं श्रेयः ददात्येव । तद्यथा –

**'गुरोर्विद्याहृतिर्या तु स आहार इति स्मृतः ।**
**तच्छुद्धौ ज्ञानशुद्धिः स्याज्ज्ञानशुद्धौ स्थिरा स्मृतिः ।**
**स्मृतिस्थैर्ये त्वापरोक्ष्यं हरेर्मोक्षस्ततो भवेत्' इति साधननिर्णये ।।** – इति छान्दोग्यभाष्ये ।

* **''आहारशुद्धौ सत्त्वशुद्धिः''इत्यादौ यदि ''रस्याः स्निग्धाः'' इत्यादिना निरूपित एवाऽहारो भवेत्**

## ६. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (९८-१०४)

(व्या) 'मद्दत्तपुत्रम्' इत्यारभ्य 'तद्वरं प्राप्नुवन्तु ते' इत्यन्तं लक्ष्मीपतिनामकश्रोतृकं षष्ठं प्रकरणम् ।। पूर्वप्रकरणे –

इदं ममात्मजे सर्वं वेदवेद्ये तपोनिधौ ।
वक्तव्यं पुरतः स्थित्वा निःशङ्कः सन् सदा द्विज ।।६१।।..........
इदं तु वेदवेद्याख्यश्रीपादस्य सुतस्य मे ।।६४।।
वक्तव्यं तत्र गत्वा तु नात्र कार्याविचारणा ।..............
इदं ममात्मजे सर्वं वेदवेद्ये तपोनिधौ ।।८६।।
वदस्व मद्दयासिन्धौ हयग्रीवतपोनिधौ ।

इत्यादेः अभिमतार्थप्रतीतेः । तदर्थकथनानुकूलसामर्थ्यप्रदानादिना तदनु ग्राहकत्वरूप-भौमलौकिकभाक्तवैभवमत्रोच्यते – **मद्दत्तपुत्रमिति** ।।

**मद्दत्तपुत्रं मत्पुत्रं मज्जीवितकलत्रिणम् ।**
**मत्प्रसादाप्तवृत्तिं (प्रसादात्प्रवृत्तिं) तं मा त्यज त्वं स मामकः ।।९८।।**

**अयं तु ब्राह्मणः शुद्धः सत्यवादी जितेन्द्रियः ।**
**अस्य स्वप्ने मया प्रोक्तं विश्वासान्नात्र संशयः ।।९९।।**

(अन्वयः) मत्‌दत्तपुत्रं मज्जीवितकलत्रिणं मत्प्रसादात् आप्तवृत्तिं तं मत्पुत्रं त्वं मा त्यज. सः मामकः. अयं ब्राह्मणः तु शुद्धः सत्यवादी जितेंद्रियः (च). (तस्य) विश्वासात् (एव) अस्य (विप्रस्य) स्वप्ने मया प्रोक्तं. अत्र न संशयः.

(व्या) पुत्रप्राप्तियोग्यजन्मनि मद्दत्तपुत्रम् । मत्पुत्रम् । मज्जीवितकळत्रिणम् । मत्प्रसादाप्तवृत्तिम् । मा त्यज[१] ।।९८-९९।।

---

तदाऽऽहारशुद्ध्याऽन्तःकरणशुद्ध्युपपत्तावपि तन्मात्रेण ध्यानापरपर्यायं स्मृतिस्थैर्यमुच्यमानमनुपपन्नं स्यादिति भावेनाऽऽहारशब्दार्थं वदंस्तद्वाक्यं प्रमाणेनैव व्याचष्टे– गुरोरिति ।। विद्याहृतिः शास्त्रश्रवणम् । ज्ञानशुद्धिः मनःशुद्धिः । अनेन सत्त्वशब्दो ज्ञानपर इत्युक्तं भवति । स्थिरा स्मृतिर्ध्यानम् ।।

(१) 'उत्तमा अपि देवेशा अवरान्विदुषो नृणाम् ।
पूजायै सम्प्रयच्छन्ति परोक्षत्वप्रिया यतः ।
तेषु स्थित्वा स्वयं पूजां गृह्णन्त्यनुपमां सदा ।

**वेदवेद्य वदस्व त्वमागतेषु जनेष्विह ।**
**ब्राह्मणस्वाप्रपद्यार्थं प्रसिद्ध्यर्थं ममात्र च ॥१००॥**

(अन्वयः) **हे वेदवेद्य! इह आगतेषु जनेषु त्वं अत्र च मम प्रसिद्ध्यर्थं ब्राह्मणस्वाप्रपद्यार्थं वदस्व ।**

(व्या) हे वेदवेद्येति लक्ष्मीपतिसंबोधनम् । तस्य व्यासशब्दपर्यायत्वात् । वेदवेद्यमुनिपरत्वे अत्र संशयो न कर्तव्यः इति कथनात् ॥१००॥

**शिलास्थां कुरु विप्रस्य वचनान्नात्र संशयः ।**
**आचार्यत्वं मया दत्तं त्वया चापि प्रदीयताम् ॥१०१॥**

(अन्वयः) **विप्रस्य वचनात् शिलास्थां कुरु; मया दत्तं आचार्यत्वं च त्वया अपि प्रदीयताम् ।**

(व्या) शिलास्थामिति ॥ शिलास्थां कुरु विप्रस्य वचनात् । शुद्धशिलाविषयत्वेन ख्यातां कुरु । व्यासस्य । आचार्यत्वप्रदानं[१] तु वृन्दावनाचार्यत्वख्यापकत्वेन ॥१०३॥ लक्ष्मीपतिप्रकरणं सम्पूर्णम् ॥

**सम्भावनार्थं विप्रस्य शृणुष्व वचनं मम ।**
**ब्राह्मणश्चाल्पसन्तोषी मम सन्तोषभूरयम् ॥१०२॥**

(अन्वयः) **विप्रस्य सम्भावनार्थं मम वचनं शृणुष्व; अयं ब्राह्मणः अल्पसन्तोषी मम सन्तोषभूः[२] ।**

---

ज्ञानानि च प्रयच्छन्ति तस्मादेवंविदा सदा ।
पूजिताः स्युः सुरवराः सब्रह्माणः सकेशवाः' इति वामने ॥ – (भाग.ता. १०.७२.१३)

इति श्रीमदाचार्यैः निर्णीतम् इह स्मर्तव्यम् । अत्र श्रीगुरुराजैः वृन्दावनाचार्यरूपेण प्रेषितगुरुः स्वयम् इन्द्रपदयोग्यः इति तु विशेषः । आख्याने यदा 'विप्रं वा वृन्दावनाचार्यं वा वेदनिधिं वा मद्भक्तं वा सेवस्व' इति श्रूयते सर्वत्रापि इदं प्रमेयं अनुसन्धेयम् ।

(१) तदानीन्तनगृहस्थपण्डितेषु लक्ष्मीपतेः मुख्यत्वात् श्रेष्ठत्वाच्च तेनाऽपि गुरुणा वृन्दावनाचार्यस्य दत्ताचार्यत्वं स्वीकर्तव्यम् । तेन स्वीकृते सति सर्वेऽपि अङ्गीकुर्वन्ति इति हार्दम् । अत्र गुरुरेव शिष्यस्य प्रशंसनं तु गुरुशिष्यभावरक्षणार्थमपि इति मन्तव्यम् ।

(२) **अल्पसन्तोषी** इत्यनेन ब्राह्मणः यदृच्छालाभसन्तृप्तः इति सूचितं भवति । यदृच्छालाभसन्तृप्तो हि

**एवं वृन्दावनाख्यानं श्रुत्वा सुजनवृत्तयः ।**
**यात्रां कुर्वन्तु मद्भक्ता य यच्छन्तु सदुपायनम् ॥१०३॥**
**याचयन्तु[१] वरं तस्मात्तद्वरं प्राप्नुवन्तु ते ॥१०४॥**

**(अन्वयः) सुजनवृत्तयः एवं वृन्दावनाख्यानं श्रुत्वा मद्भक्त्या यात्रां कुर्वन्तु; सदुपायनं यच्छन्तु । तस्मात् वरं याचयन्तु । ते वरं प्राप्नुवन्तु ।**

**(व्या)** (ततश्चायं प्रकरणार्थः – हे वेदवेद्यनामकलक्ष्मीपते! त्वं विप्रं परित्यज्य अन्यत्र न याहि । स च विप्रः अनेकजन्मसु मद्भक्तः । मया बहुप्रकारेण पोषितः । अत एव तस्य स्वप्ने एव अहं कृतिं वक्ष्ये । त्वं तु न मत्सरं कुरु । तेन उपदिष्टः सन् कृतिं तेन उपदेशेन लब्धसज्जनेभ्यो कृतिं बोधय । त्वत्प्रवचनेन कृतेः ख्यातिर्भविष्यति । वृन्दावनं प्रति यात्रिक-जनाश्च उपसर्पन्तु इति फलितार्थः । एतेन लक्ष्मीपतिकालादारभ्य कृतिपठनं, वृन्दावनसेवार्थं यात्रा इत्यादिकं बहुफलप्रदमिति सर्वसज्जनेषु ख्यातिः विस्तारो जायते इति सूचितं भवति ॥)

**७. विप्रप्रकरणम्॥ श्लोकाः (१०५-११० १/२)**

**(व्या) 'नैवेद्यं मृष्टमन्नं मे'** इत्यारभ्य **'यतस्तद्देहगो ह्यहं'** इत्यन्तं सप्तमं विप्रश्रोतृकं प्रकरणम् ॥ पूर्वप्रकरणे आचार्यवर्यत्वं त्वया ख्यापनीयमित्युक्तम् । जन्मान्तरे ख्यापनं कथम्? सोयमिति प्रत्यभिज्ञाया अभावात्, त्याशङ्कां वारयितुं विप्रानुग्राहकत्वरूपं भौमभाक्तवैभव-मत्रोच्यते ।

---

भगवति निश्चाश्चल्यभक्तिमान् भवति । तद्यथा – 'यदृच्छालाभसन्तृप्तिः निश्चाश्चल्यं भवेत् त्वयि' इति प्रार्थनादशकस्तोत्रे श्रीगुरुराजैरुक्तम् । विश्वप्रियविलासेऽपि वृन्दावनाचार्याणां वैराग्यातिशयो निरूपितः । तत्तत्र द्रष्टव्यम् ।

(१) प्रार्थितः एव गुरुः विद्यां योग्यस्वशिष्येभ्यो दानं करोति । न तु स्वेच्छया । तस्मादत्रापि 'वरं याचयन्तु' इति विधिरूपेण सूचितमिति ध्येयम् । श्रीनारायणोऽपि ब्रह्मादिदेवतैः प्रार्थितः सन्नेव तत्वोपदेशं कृतवान् । तद्यथा –

**'प्रादुर्भूतो हरिर्व्यासो विरिञ्चभवपूर्वकैः ।**
**अर्थितः परविद्याख्यं चक्रे शास्त्रमनुत्तमम्** ॥ (ब्र.सू.भा.)

**'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न पराङ्गतिम्'** – (गीता. १६/२३)

**नैवेद्यं मृष्टमन्नं मे यावन्न क्रियते द्विज ॥१०५॥**
**तावत्कुरुष्व त्वं नक्तव्रतं निरशनं मम ।**
**भुंक्ष्व विप्र प्रसन्नोस्मि व्रतादनशनात् तव ॥१०६॥**
**व्रतेनानेन निष्पापस्त्वमभूर्नात्र संशयः ।**

(अन्वयः) हे द्विज! मे मृष्टमन्नं नैवेद्यं यावत् न क्रियते, तावत् (पर्यन्तं) त्वं मम (मदर्थं) निरशनं नक्तव्रतं कुरुष्व । हे विप्र! (अद्य मे मृष्टान्नं नैवेद्यं अर्पितं) तव अनशनात् व्रतात् (अहं) प्रसन्नः अस्मि । (अद्य मम प्रसादं त्वं) भुङ्क्ष्व । अनेन व्रतेन त्वं निष्पापः अभूः; अत्र न संशय ।

**(व्या)** (हे विप्र! तव परमहंसत्वदशायां । मम वृन्दावनस्य दिव्यसंस्कृतनैवेद्यान्न-व्यवस्थापर्यन्तं **त्वं नक्तव्रतं**[(१)] चर । ततश्च द्वादशाब्दिकनिरशनव्रतमेव समाचर । केवल दधिमिश्रितलाजभक्षणादि उपहारमात्रेण देहधारणं कृत्वा तपः कुरु । तादृशनित्योपवासव्रतेन तव प्रारब्धपापं विनष्टं भवति ।)

**मम मन्त्राधिकारोभूत् तव पापक्षये सति ॥१०७॥**
**इतःपरं गृहाण त्वं मनुं दिव्यमनुत्तमम् ।**
**दास्यामि मम पादाब्जगतिं तव न संशयः ॥१०८॥**

---

(१) नक्तव्रत एन्दरे रात्रिभोजनव्रत –

**नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः ।**
**यतिश्च विधवा चैव कुर्यात्तु सदिवाकरम् ॥**
**सदिवाकरं तु तत्प्रोक्तं अन्तिमे घटिकाद्वये ।**
**निशानक्तं तु विज्ञेयं यामार्द्धे प्रथमे तत्' – स्मृत्यन्तरे (वाचस्पत्यं)**

एंब प्रमाणदिन्द यतिगळाद कारण सूर्यनिद्रागले अन्दरे सुमारु ४.३० गंटे सायङ्कालक्के भिक्षास्वीकार माडुत्तिद्दरु एन्दर्थ. अदु हेगेन्दरे दधिमिश्रितवाद ओन्दु हिडि अरळिन सेवने.

ई नक्तव्रतवादरू विष्णुपूजाङ्गवेन्दु –

**मार्गशीर्षे सिते पक्षे प्रतिपदुदया तिथिर्भवेत् ।**
**तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं प्रपूजयेत् ॥'**

एन्दु वराहपुराण हागू अन्यव्रतपद्धतिगळल्लिदे एन्दु वाचस्पत्यकोश उल्लेखिसिदे.

**(अन्वयः) तव पापक्षये सति मम मन्त्राधिकारः अभूत् । इतःपरं त्वं दिव्यं अनुत्तमं मनुं गृहाण । तव मम पादाब्जगतिं दास्यामि; न संशयः ।**

**(व्या)** (ततश्च मन्मन्त्रजपस्य सिद्धिर्जायते । मत्स्वरूपज्ञानं व्यक्तं भविष्यति[१] ।।१०८।।)

**मा त्यज त्वं हि विप्रेंद्र नित्यं भारतकीर्तनम् ।**

**चामरं वीजय त्वं हि मम वृन्दावने सदा ।।१०९।।**

**(अन्वयः) हे विप्रेन्द्र! नित्यं भारतकीर्तनं हि त्वं मा त्यज । सदा मम वृन्दावने चामरं हि त्वं वीजय ।**

**(व्या)** चामरसेवया भारतकीर्तनेन[२] च मां सन्तोषय । सदा प्रतिदिनम् ।।१०९।।

---

(१) 'मन्त्राधिकारार्थं उपरि नक्तव्रतं कुरु इति आज्ञापितम्' इत्यपि ध्येयं भवति । यतः मन्त्राधिकारः न सर्वेषाम् । प्रसङ्गेन विष्णुरहस्ये 'मन्त्राः अधिकारयुता भक्तैः उपास्या भवति' इति यत् कथितं तदप्यत्र स्मर्तव्यम् । तथाहि –

स्वस्ववर्णाश्रमाचारैः दुराचारविवर्जितैः ।
एते मन्त्रा उपास्या स्युरन्यथा न फलप्रदाः ।।
परदारपरद्रव्यदुष्प्रतिग्रहवर्जितैः । एते मन्त्राः ....
अग्निहोत्ररता येऽत्र वेदाध्यायरताश्च ये । एते मन्त्राः ...
हिंसायां विमुखा ये तु जितश्वासा जितेन्द्रियाः । एते मन्त्राः ...
स्वस्थ चित्तैर्ध्यानपरैः निक्रोधैरतिथिप्रियैः । एते मन्त्राः ...
विष्णुभक्तिर्दृढा येषां दाने चित्तं सदैव तु । एते मन्त्राः ...
ईश्वरार्पित सर्वस्वा न्यायागतधनाश्च ये । एते मन्त्राः ... – (अध्याय ९ श्लो.३२-३८)

(२) स्वयं नारायणो देवैर्ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ।
चकार पञ्चमं वेदं महाभारतसंज्ञितम् ।। इति ब्रह्माण्डे (गी.भा. उपोद्घाते)
भारतं चापि कृतवान् पञ्चमं वेदमुत्तमम् ।
दशावरार्थं सर्वत्र केवलं विष्णुबोधकम् ।।
परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं तु यत् ।। इति स्कान्दे ।।
एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते ।

**आदिपर्वं वदस्व त्वमनुक्रमणिकां विना ।**
**वेदवेद्यस्य पादाब्जान्निसृतं तीर्थमुत्तमम् ।।११०।।**

**मम पादोदकं विद्धि यतस्तद्देहगो ह्यहम् ।।**

(अन्वयः) **अनुक्रमणिकां विना आदिपर्वं त्वं वदस्व. वेदवेदस्य पादाब्जात् निःसृतं उत्तमं तीर्थं मम पादोदकं विद्धि यतः अहं तद्देहगः हि.**

**(व्या)** निरशनव्रतचामरवीजनादिना अत्रोक्तेन 'सोऽयमित्यनुमितिसम्भवेन ख्यापनं नानुपपन्नमिति भावः ।। (विप्रप्र. सम्पूर्णम्।।) अनुक्रमणिकापर्वणि सम्पूर्णभारतकथासङ्क्षेपो वर्तते । त्वं तु विस्तृतकथामेव पठ । यथा मां भजसे । तथा वेदवेद्यगुरुमपि बहु मन्यस्व । तत्पादोदकं प्रीत्या पिब । अहमेव वेदवेद्ये स्थित्वा त्वामनुगृह्णामि ।। इत्यादिकं सर्वं विप्रस्य भविष्यजन्माचरणं वर्णितमस्ति । एतेन तस्य जातिस्मृतिः 'जन्मान्तरे एडमूकोहमभूवम् । इदानीं गुरुराजप्रसादेन कृतिख्यापनादिकार्यसिद्ध्यर्थं जातोस्मि' इत्यादिस्मृतिर्जायते । उग्रतपसा गुरुराजमन्त्रसिद्धिर्भवति । तादृशवृन्दावनाचार्याणां उपदेशेन लक्ष्मीपत्यादयः वृन्दावनकृत्यर्थं ज्ञात्वा योग्योपदेशेन प्रचारयिष्यन्तीति सूचितो भवति ।।११०)

**८. वेदवेद्यप्रकरणम्।। श्लोकाः (१११-११८ १/२)**

**(व्या)** **'वेदवेद्य जयस्व त्वम्'** इत्यारभ्य **'स्वप्ने च मम वाग्भूतिविलासस्याश्रयं परम्'** इत्यन्तं वेदवेद्यमुनिश्रोतृकं प्रकरणम् अष्टमम् । वेदवेद्यपादोदकं मम पादोदकं विद्धीति पूर्वप्रकरणोक्तमुपपादयितुं वेदवेद्यस्य विप्रानुग्राहकत्वेन स्वसादृश्यरूपं वैभवमत्रोच्यते वेदवेद्येति ।।

**वेदवेद्य जयस्व त्वं दुर्मतं दुर्मतीरितम् ।।१११।।**

**मध्वराद्धान्तोक्तपद्यैः मत्कृताभिश्च सूक्तिभिः ।**

(अन्वयः) **हे वेदवेद्य! मध्वराद्धान्तोक्तपद्यैः मत्कृताभिः सूक्तिभिः च दुर्मतीरितं दुर्मतं त्वं जयस्व ।**

---

दुर्विज्ञेयमतस्सर्वैर्भारतं तु सुरैरपि ।।
**स्वयं व्यासो हि तद्वेद ब्रह्मा वा तत्प्रसादतः । (म.भा.ता.नि.)**
इति श्रीमन्महाभारतस्योत्तमत्वं श्रीमदाचार्यैः तत्र तत्र वर्णितमत्र स्मर्तव्यम् ।

**(व्या) मध्वराद्धान्तोक्तपद्यैः** अनुव्याख्यानादिभिः । **मत्कृताभिः सूक्तिभिः** । यथा मया लातव्यत्वदशायां युक्तिमल्लिकादिका कृता तथा त्वयापि लातव्यत्वदशायां कर्तव्या । यथा अनुव्याख्यानादिकमाचार्यैः कृतं तथा त्वयापि वायुत्वदशायां कर्तव्यम् इति सूचयितुमेतदुक्तम् । **दुर्मतीरितं** मणिमदादिभिरीरितं मतं **जयस्व** ।।१११ १/२।।

**वेदवेद्य मम वेद कोविदः कोविदत्वमिह को नरो भुवि ।।११२।।**

**(अन्वयः) हे वेदवेद्य! इह भुवि वेदकोविदः मम कोविदत्वं कः नरः वेद ।**

**(व्या) वेदवेद्य ममेति ।। हे वेदवेद्य!** भुवि वेदकोविदः (वेदार्थकुशलः) मम कोविदत्वं त्वां विना अन्यः को वेद? न कोपीत्यर्थः ।।११२।।

**त्वन्मुखेन तु जयामि मायिनं प्रीणयामि कमलापतिं हरिम् ।**
**वेदवेद्य तव वेद कोविदः कोविदत्वमिह को नरो भुवि ।।११३।।**

**(अन्वयः) मायिनं त्वन्मुखेन तु जयामि कमलापतिं हरिं प्रीणयामि; हे वेदवेद्य! वेदकोविदः तव कोविदत्वं इह भुवि कः नरः वेद?**

**(व्या) त्वन्मुखेन तु मायिनं जयामि** । मम वायुत्वदशायां वादिराजत्वेनोत्पन्नस्य तव मुखेन मायिनं जयामि(१) । मम विरिञ्चत्वदशायां श्रीमदाचार्यरूपेणोत्पन्नस्य तव मुखेन मायिनं मणिमदादिकं जयामि । **कमलापतिं हरिं प्रीणयामि** ।। स्वकीयवेदकोविदत्वाभिज्ञाता उत्तमेष्वस्ति समेष्वस्ति । अत्र समत्वमेव ज्ञातव्यमिति भावेनाह – **वेदवेद्येति ।। हे वेदवेद्य!** तव वेदकोविदत्वं भुवि मां विना अन्यः वेदकोविदः नरः को वेद? ।। उभयत्रापि **भुवि (नरः)**

---

(१) **यः सर्वजीवनविबोधविचेष्टितेशो देव्याश्च वाङ्मयतनोरखिलार्चितायाः ।**
**नातः सदा हरिमहागुणदृष्टितृप्तस्तस्मै नमो भगवते परमानिलाय ।।**
**यो वै पुरा जगति शार्ङ्गभृतामुना च देवेन भीमगदया हतबाहुवीर्याः ।**
**देवद्विषां मतिरभून्मनुजेषु तेषां वाग्योधनेन भगवद्गुणदूषणाय ।।**
**संरम्भतः श्रुतिषु विष्णुपरासु गूढाद्विद्वेषतः परगुणेषु महत्सु गाढात् ।**
**वेदान्तवादकपटैरतिदुष्टवाचां मायाविनां निरसने स कृतावताराः ।।**

– इति तत्वप्रदीपे श्रीत्रिविक्रमपण्डिताचार्याः श्रीमदाचार्याणां ‘मायाविनां निरसने कृतावताराः’ इति स्तवनेन मायावादिनिरसनमेव श्रीमदाचार्याणाम् अवतारस्य मुख्यप्रयोजनमित्युक्तं भवति । अतः अत्र ‘जयामि मायिनम्’ इत्यनेन स्वस्य भाविवायुत्वं सूचयति इत्यपि ग्राह्यम् ।

इत्यनेन दिवि ब्रह्मवायुप्रभृतीनां स्वकीयगुणाभिज्ञत्वमस्तीति सूचितं भवति । ''यो यत्समः स तद्गुणाभिज्ञः । यो यदवमः न स सम्यक् तद्गुणाभिज्ञः'' इति न्यायेन उभयोः परस्परं साम्यमुक्तं भवति ॥११३ १/२॥

**जय मदान्धपरवादिदन्तिनं सिंहविक्रम मदीरितयुक्तिभिः ।**
**कुरु सुमध्वसमयस्य निर्णयं मत्प्रसादविभवाप्तसुमत्या ॥११४॥**

**तोषयस्व सुजनांश्च मायिनः खेदयस्व परमात्मभाविनः ।**

(अन्वयः) (हे वेदवेद्य!) **सिंहविक्रम मदीरितयुक्तिभिः मदान्धपरवादिदन्तिनं जय । मत्प्रसादविभवाप्तसुमत्या सुमध्वसमयस्य निर्णयं कुरु; सुजनांश्च तोषयस्व । परमात्मभाविनः मायिनः खेदयस्व ।**

(व्या) **मत्प्रसादविभवाप्तसुमत्या** मत्प्रसादरूपेण आप्तया सुमत्या **सुजनान् तोषयस्व** । **परमात्मभाविनः** अहमेव परमात्मेत्यभिप्राययुक्तान् **मायिनः खेदयस्व** ॥११४॥ (यथा श्रीमदाचार्यस्य समस्यापि स्वस्य तद्दर्शनात् उद्बुद्धसंस्कारत्वं तथा स्वप्रसादात् आप्तं सुबुद्धित्वं वेदवेद्यस्यापि युक्तम् । पूर्वं ऋजूनां उत्तर ऋजु अनुग्राहकत्वात् इति भावः).

**शेषाद्रिपण्डितस्यापि वक्तव्यः स्वाप्तवैभवः ॥११५॥**

**व्यासराजाख्यभक्तस्य तथा तदनुजस्य च ।**
**तैः श्रुतं चेदिदं सर्वं त्रैलोक्यं श्रुतमेव हि (च) ॥११६॥**

(अन्वयः) **स्वाप्तवैभवः शेषाद्रिपण्डितस्य अपि वक्तव्यः । तथा व्यासराजाख्यभक्तस्य तदनुजस्य च (वक्तव्यः) इदं सर्वं तैः श्रुतं चेत् त्रैलोक्यं श्रुतं एव हि ।**

(व्या) एवं स्वेन सह वेदवेद्यस्य अत्यन्तसाम्यमुक्त्वा स्वाभिमतं वेदवेद्येन कर्तव्यमाह – **शेषाद्रीति** ॥ नायं नरसिंहसम्बन्धी शेषाद्रिपण्डितः । तस्य सुबुद्ध्यभावस्य वक्ष्यमाणत्वात् । किन्तु 'नागाह्वयः पण्डितः' इति वक्ष्यमाणानुसारेण शेषाद्रिपण्डितः (अत्र) शेषः । व्यासाराजाख्यो व्यासः । तदनुजः तदनन्तरोत्पन्नः सीतापतिः । तेषां (त्रयाणां) स्वाप्तवैभवो वक्तव्यः ॥ तैरिदं सर्वम् आख्यानोक्तप्रमेयं श्रुतं चेत् त्रैलोक्यं श्रुतमिव भवति ।

**वेदवेद्य प्रेषय त्वं तयोर्दूरगयोरपि ।**

**श्रुत्वा वृन्दावनस्यास्य कुर्वन्तु मम दर्शनम् ।।११७।।**

**तेषां त्रयाणां दास्यामि भक्तिं मुक्तिं हरेः सदा ।**

(अन्वयः) हे वेदवेद्य! तयोः दूरगयोः अपि त्वं प्रेषयस्व. अस्य वृन्दावनस्य श्रुत्वा मम दर्शनं कुर्वन्तु. त्रयाणां तेषां सदा हरेः भक्तिं मुक्तिं दास्यामि.

**(व्या) तयोः** व्याससीतापत्योः **दूरगयोरपि** अपिशब्देन शेषस्यापि **प्रेषय** स्वाप्नवैभवम् इति शेषः । वेदवेद्यस्य प्रेषकत्वं विप्रान्तर्यामिरूपेण स्वस्यभिक्षापरिग्रहवत् प्रेषकान्तर्यामिरूपेणेति ज्ञातव्यम् ।।११७-११८।।

**पालय ब्राह्मणं त्वेनं मद्बुद्धिं मत्परायणम् ।।११८।।**

**स्वप्ने च मम वाग्भूतिविलासस्याश्रयं परम् ।।**

(अन्वयः) मद्बुद्धिं मत्परायणं एनं ब्राह्मणं तु पालय । स्वप्ने मम वाग्भूतिविलासस्य च परम् आश्रयम् ।

**(व्या) पालयेति ।। एनं ब्राह्मणं तु पालय** इत्यनेन व्यक्तित्रयापेक्षया अतिशयेन पालनीयत्वमुक्तम् । तुशब्दस्य विशेषार्थकत्वात् । तं विशेषमाह – **स्वप्नेति** ।।११८।। वेदवेद्य-प्रकरणं सम्पूर्णं ।।

### ९. दूषकपुरुषप्रकरणम्।। श्लोकाः (११९-१२८ १/२)

**(व्या) 'एतदन्यत्र नैवाहम्'** इत्यारभ्य 'नरके पुण्यसङ्क्षये' इत्यन्तं छन्दो भङ्गादिशङ्का-कलङ्कितदुष्टपुरुषविशेषश्रोतृकं नवमं प्रकरणम् । दोषपरिहारकथनेन स्वस्य आप्तत्वरूपं वैभव-मत्रोच्यते । 'स्वप्ने च मम वाग्भूतिविलासस्याश्रयं परम्' इत्यनेन कथं विप्रस्य विशेषः उक्तः । स्वप्नेपि हिताहितकथनस्य अन्यत्राप्युपलम्भात् इत्यत आह – **एतदन्यत्रेति ।।**

**एतदन्यत्र नैवाहं वदे श्लोकेन कुत्रचित् ।।११९।।**

**सर्वे कवित्वं जानन्ति न जानाति ह्ययं द्विजः ।।१२०।।**

**अस्य स्वप्ने मया चोक्तं प्रत्ययार्थं न संशयः ।**

(अन्वयः) कुत्रचित् अन्यत्र अहं एतत् (एकेनापि) श्लोकेन नैव वदे । सर्वे

**कवित्वं जानन्ति । अयं द्विजयः न जानाति हि । मया च अस्य स्वप्ने प्रत्ययार्थं उक्तम्; न संशयः ।**

**(व्या)** (विप्रादन्यत्र यद्यपि स्वप्ने अहमुपदेशादिकं करोमि । परन्तु तत्र श्लोकेन नोपदिशामि ।। किञ्च एष विप्रः सुतरां पाण्डित्यहीनः । कवित्वशक्तिरहितश्च ।। तस्मादेतस्य द्वारा कृतिप्रकाशे कृते सति, सर्वेषाम् इदमाख्यानं गुरुराजकृतमिति प्रत्ययः विश्वासः भविष्यतीति । अस्य स्वप्ने मया श्लोकरूपेणोपदेशः कृतः ।।१२० १/२।।)

**स्वाप्नदैविकपद्येषु लोकभिन्नेषु दोषधीः ।।१२१।।**

**न कर्तव्या यतो देवा अशरीरा भवन्ति हि ।**
**शरीरिणामयं दोषः छन्दोभङ्गादिरेव हि ।।१२२।।**

**अशरीरस्य वाक्येषु न दोषायेति सम्मतम् ।**

(अन्वयः) **देवाः हि अशरीराः भवन्ति । अतः लोकभिन्नेषु स्वाप्नदैविकपद्येषु दोषधीः न कर्तव्या । अयं छन्दोभङ्गादिः दोषः शरीरिणाम् एव हि; अशरीरस्य वाक्येषु न दोषाय इति सम्मतम् ।**

**(व्या) लोकभिन्नेषु** लोकविलक्षणेषु । **अशरीराः** मानुषशरीररहिताः ।।१२२।। (इदं तात्पर्यम् – जाग्रत्काले मनुष्यरचितश्लोकेषु छन्दोभङ्गः दोषाय कल्पते । स्वाप्नश्लोकेषु तत्रापि देवताभिः रचितश्लोकेषु न छन्दोभङ्गादिकं दोषाय भवति[१] । देवाः अशरीराः पाञ्चभौतिकस्थूलशरीरहीनाः । तैरुक्तं सर्वं माङ्गलिकमेव । तेषां श्लोकेषु दोषान्वेषणं पापकार्यमिति भावः ।।२२।।)

---

(१) **प्रायो देवाश्च ऋषयो न सर्वशुभलक्षणाः ।**
**ऋते विष्णुं सुरश्रेष्ठं ब्रह्माणं वाऽप्यनन्तरम् ।**
**यस्मान्न विदुषां वाक्यमाशङ्क्यं केनचित्क्वचित् ।**
**तस्माद्वेदेषु सर्वेषु कथाः प्रश्नोत्तरात्मिकाः ।**
**न प्रमाणान्तरं तत्र पृच्छन्ति घटनां विना ।**
**एतस्मादाश्वलाद्याश्च पप्रच्छुर्नैव कुत्रचित् ।**
**आगमं याज्ञवल्क्योक्तेरन्यं तं मिथिलोऽपि च' इति ब्रह्मतर्के ।** – (बृ.उ.भा. शाकल्यब्राह्मणे)

**अहं जानामि तत्सर्वं यदुक्तं दुर्जनैरिह ।।१२३।।**

**इदमेवोत्तरं तेषां यदुक्तं तु मया पुरा ।**
**अङ्गीकृत्य मया प्रोक्तः परिहारः सुदुर्मते ।।१२४।।**

**कुत्र छन्दोभङ्गदोषः वर्तते दुष्ट तद्वद ।**

(अन्वयः) इह दुर्जनैः यदुक्तं तत् सर्वं अहं जानामि । तेषां मया पुरा यदुक्तं इदमेव उत्तरम् । हे सुदुर्मते! मया प्रोक्तः परिहारः अङ्गीकृत्य, हे दुष्ट! छन्दोभङ्गदोषः कुत्र वर्तते वदस्व?

(व्या) पुरा अष्टमाध्याये । यदुक्तं 'व्यञ्जनस्याधिकत्वेन न छन्दस्यतिदूषणम्' इति । तदेवोत्तरम् । ( पुरा = अष्टमेऽध्याये 'व्यञ्जनस्याधिकत्वेन न छन्दस्यतिदूषणं' 'स्वच्छन्दवृत्तेर्मम च कश्छन्दोभङ्गः' इति यत्प्रोक्तम्)[(१)] ।।१२३ १/२।। दुष्टपुरुषप्रकरणं सम्पूर्णम् ।

**वाग्वैखर्येण शून्यस्य ब्राह्मणस्य मुखेन तु ।।१२५।।**
**वृन्दावनस्य विभवमुक्तं वै लेशतो मया ।**

(अन्वयः) मया वाग्वैखर्येण शून्यस्य ब्राह्मणस्य मुखेन लेशतः वृन्दावनस्य वैभवं तु उक्तम् ।

**असम्भावितमेतच्च नित्यं स्वप्रेरितं मया ।।१२६।।**
**इति हास्यं प्रकुर्वन्ति ये जना मम रोषिणः ।**

(अन्वयः) मया नित्यं स्वप्ने ईरितम्; एतत् च असम्भावितम् इति ये जनाः हास्यं प्रकुर्वन्ति (ते) मम रोषिणः ।

---

(१) (आ) 'न वा एकेन अक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' इत्यादिप्रमाणेन वेदे न छन्दोभङ्गः ।. अस्मिन् वेदतुल्यग्रन्थे 'छन्दसि बहुलं' इत्यादिसूत्तोक्तरीत्या न छन्दोभङ्गः इत्यभिप्रायः ।

(आ) 'साक्षी हयास्योत्र हि' एंब मन्त्रभागेऽपि देवतावाक्यत्वात् न छन्दोभङ्गः । 'अपि माषं मषं कुर्यात् छन्दोभङ्गं न कारयेत्' इति न्यायं तु मानुषरचितवाक्ये अन्वितं भवति ।

अत्र समाधानद्वितयमपि साधु; प्रथमसमाधानं तु सिद्धान्तः; द्वितीयं तु अभ्युपगमवादः । उपरि १२५तमे श्लोके 'कुत्र छन्दोभङ्गः वर्तते? तद्वद' इत्यनेन अस्मिन् ग्रन्थे छन्दोभङ्गस्थलानि विरलानि अदुष्टान्येव सन्ति इति सूचितम् ।

(व्या) ('इदमाख्यानं न विप्रकृतम् । किन्तु वादिराजमुनिकृतमिति प्रत्ययसिद्ध्यर्थमेव अज्ञम् एडमूकं प्रविश्य, स्वप्ने श्लोकोपदेशः असम्भावितः' इति ये वदन्ति, ते दुष्टा एवेति भावः ।)

**यद्वक्ति ब्राह्मणः श्लोकैः तत्सर्वं सत्यमेव च ।।१२७।।**
**तत्कर्तव्यमवश्यं तु मम शासनमेव च ।**

**(अन्वयः) ब्राह्मणः श्लोकैः यत् च वक्ति तत् सर्वं सत्यम् एव । तत् तु अवश्यं कर्तव्यम् । मम शासनम् एव च ।**

(व्या) गुरुराज एव श्लोककर्ता इत्यत्र युक्त्यन्तरमाह – यद्वक्तीति ।। ब्रह्मसूत्रभाष्ये –

'यद्वापि ब्राह्मणो ब्रूयाद्देवतावृषभोपि वा ।
स्वप्नस्थमथवा राजा तत्तथैव भविष्यति ।।' (ब्र.सू. ३/२/४)

इत्युक्तरीत्या सफलवागुपदेशः न विप्रकार्यम् । किन्तु गुरुराजकार्यमेवेति तात्पर्यम् ।। (गुरुराजकृतत्वादेव श्लोकोक्ताः विधयः परिपालनीयाः, निषेधाः यत्नेन त्याजनीया इत्याह – तत्कर्तव्यमित्यादिना ।। श्लोकोक्ताकरणे गुर्वाज्ञोल्लङ्घनरूपदोषो भवतीति भावः ।।)

**मम रोषात्सर्वपुण्यैश्चवन्ते नात्र संशयः ।।१२८।।**
**पितृभिः सह मज्जन्ते नरके पुण्यसङ्क्षये ।।**

**(अन्वयः) मम रोषात् सर्वपुण्यैः च्यवन्ते पुण्यसङ्क्षये (सति) नरके पितृभिः सह मज्जन्ते; अत्र न संशयः ।**

### १०. विप्रप्रकरणम्।। श्लोकः (१२९)

(अव) 'तस्माद्घोरे कलौ काले ह्यलमेतावता द्विज' इत्येतत् विप्रश्रोतृकं दशमं प्रकरणम् ।।

**तस्माद्घोरे कलौ काले ह्यलमेतावता द्विज ।।१२९।।**

**(अन्वयः) हे द्विज! तस्मात् घोरे कलौ काले एतावता अलम् हि ।**

(व्या) तस्मादिति ।। अत्र कलौ गोपनीयमाहात्म्यरूपवैभवमुक्तं भवतीति ।। दशमं विप्रप्रकरणं सम्पूर्णम् ।।

**११. लक्ष्मीपतिप्रकरणम्।। श्लोकौ (१३०-१३२)**

(व्या) वेदवेद्येत्यारभ्य 'न मृषेति विचिन्तय' इत्यन्तं लक्ष्मीपतिश्रोतृकं प्रकरण-मेकादशम् ।। यथा विप्रं प्रति प्रतिपादितं वैभवं गोपनीयमिति । तथा विप्रान्तर्यामिरूपेण शुद्धशिलासन्निहितभगवदाराधकत्वादिवैभवं त्वां प्रति उक्तमपि गोपनीयमिति प्रागुक्तरूपभागवत-वैभवमत्रोच्यते ।।

**वेदवेद्य मम सत्सु सत्कृते पादपद्मयुगले सदा कुरु ।**
**ते मतिं मम कृतिं तथाश्मनि त्वं कुरुष्व तव भूतिदां सदा ।।१३०।।**

**(अन्वयः) हे वेदवेद्य! सत्सु मम पादपद्मयुगले सत्कृते सदा कुरु । सदा तव भूतिदां मम कृतिं तथा अश्मनि ते मतिं त्वं कुरुष्व ।**

(व्या) **वेदवेद्येति ।। अश्मनीति ।।** शुद्धशिलायां **ते मतिं मम कृतिं च** तद्विषयकत्वेन कुरु । **'तव भूतिदाम्'**[१] इत्यनेन त्वद्भूतिप्रदत्वम् । अधिकं च वैभवमुक्तं भवति ।। ल.प.प्र. सम्पूर्णम् ।।

**त्रिवाचापि मया प्रोक्तं तव बुद्धिर्यथा तथा ।**
**कुरु विप्रस्य वचनं न मृषेति विचिन्तय ।।१३१।।**

**(अन्वयः) मया त्रिवाचा अपि प्रोक्तम्; यथा तव बुद्धिः तथा कुरु । विप्रस्य वचनं मृषा इति न विचिन्तय**[२] **।**

---

(१) 'तव भूतिदां सदा' इत्यनेन गुरुराजैः तव मोक्षदं भवति इत्यपि सूचितम् । 'भूति'शब्दं तु श्रीमदाचार्यैः भागवततात्पर्यनिर्णये (७/३/१४) व्याख्यातः । तद्यथा –

**'भवो वृद्धिः समुद्दिष्टा श्रेयो मोक्ष उदाहृतः ।**
**वृद्धस्य न पुनर्ह्रासो भूतिरित्येव कथ्यते' इति शब्दनिर्णये ।।**

* अत्र वेदवेद्यपदेन लक्ष्मीपतिः ग्राह्यः । प्राक् तृतीयाध्याये 'वेदैः वेद्यो वेदवेद्यः श्रीव्यासः; तेन अनुग्राहकेन निरवद्यरहस्यज्ञानप्रतिबन्धकरहितलक्ष्मीपतिः'(५३) इति व्याख्यातत्वात् ।

(२) गुरुराजानुग्रहपात्रम् लक्ष्मीपतिः तत्प्रसादेन गीतोक्तप्रकारेण गुरुराजकार्यं कृतवान् इत्यत्र न कश्चित् क्षुद्रोपद्रवः । गीतायां तु –

**'इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ।।'** इति श्रीकृष्णवाक्यं प्रति अर्जुनः

११. विप्रप्रकरणम् ।। श्लोकाः (१३२-१३६)

(व्या) 'सकृदेवोपदेशेन' इत्यारभ्य 'शिशोः क्षीरं भविष्यति' इत्यन्तं विप्रश्रोतृकं प्रकरणं द्वादशम् । अत्र अस्य विप्रस्य सकृदुपदेशमात्रेण ग्रहणशक्तेः, भुक्तेः मुक्तेश्च प्रदापयितृत्व-कथनेन भौमलौकिकभाक्तवैभवमुच्यते – सकृदिति ।।

**सकृदेवोपदेशेन सकृद्ग्रहणशक्तिनम् ।**
**करोमि त्वां च विप्रेंद्र मम पादाब्जसेवकम् ।।१३२।।**

(अन्वयः) हे विप्रेन्द्र! त्वां सकृदेवोपदेशेन सकृद्ग्रहणशक्तिनं मम पादाब्जसेवकं च करोमि ।

(व्या) सकृदिति ।। 'विप्रस्य वचनं न मृषा' इति विचिन्तयेत्युक्तम् । मृषात्वशङ्का-परिहाराय अत्र एतदुक्तिः । सकृदुपदेशेन सकृद्ग्रहणेन शक्तं समर्थं प्रवचनाद्यनुकूलं मनः ज्ञानं च तत् अस्यास्तीति सकृद्ग्रहणशक्ती, तं = सकृद्ग्रहणशक्तिनम्(१) ।।१३२-१३३।।

**ब्राह्मण ब्रह्मतेजस्विन् मत्सेवां मा त्यजस्व ह ।**
**मत्प्रसादाप्तमत्या च नित्यं कीर्तय भारतम् ।।१३३।।**

(अन्वयः) हे ब्राह्मण! ब्रह्मतेजस्विन्! मत्सेवां मा त्यजस्व ह । मत् प्रसादाप्तमत्या च नित्यं भारतं कीर्तय ।

---

'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोस्मि गतसन्देहः करिष्ये वचनं तव ।।'

इत्युक्त्वा युद्धे प्रवृत्तवान् इति प्रमेयमत्रानुसन्धेयम् ।

(१) सेतुमाधवसूरिविरचितविश्वप्रियलीलाविलासकाव्ये वृन्दावनाचार्यजन्मनि श्रीगुरुराजादाप्तग्रहणशक्तिस्तु वर्ण्यते । तद्यथा –

ततो मठपतिर्भूत्वा गत्वा सोदापुरं यतिः ।
गुरोर्वृन्दावनस्याग्रे शास्त्रस्यावर्तनं व्यधात् ।।
तदर्थवाणीं कल्याणीमद्वशो वादिराडहो ।
स्वदासं श्रावयामास यथाख्यानं द्विजं पुरा ।।
देशादागतशिष्याणां मध्वशास्त्रोपदेशनम् ।
चक्रेसावश्रमेणैव बहुवारमतन्द्रितः ।।१९-२१।।

**मत्सेवया सुसम्पूर्णं दापयिष्येऽत्र भोजनम् ।**
**मत्सेवया शुभगतिं दापयिष्येत्र जिष्णुना ।।१३४।।**

(अन्वयः) मत्सेवया अत्र सुसम्पूर्णं भोजनं दापयिष्ये; अत्र मत्सेवया शुभगतिं जिष्णुना दापयिष्ये ।

**(व्या) मदिति ।। जिष्णुना** हरिणा ।।१३४।।

**इतः परं तव स्वप्ने न च वक्ष्ये निरन्तरम् ।**
**कदाचिदेव वक्ष्यामि कार्ये तु प्रस्तुते सति ।।१३५।।**

(अन्वयः) इतःपरं निरन्तरं तव स्वप्ने च न वक्ष्ये; कार्ये तु प्रस्तुते सति कदाचित् एव वक्ष्यामि ।

**(व्या)** 'एतदन्यत्र नैवाहं वक्ष्ये श्लोकेन कुत्रचित्' (१०/१२०) इत्यनेन प्रतिजन्मनि श्लोकोपदेशः भविष्यतीति न मन्तव्यमिति ज्ञापयितुमाह – **इतःपरमिति ।। इतःपरं** जन्मान्तरे श्लोकरूपेणापि **निरन्तरं न वक्ष्ये । कार्ये तु प्रस्तुते** सत्यपि **कदाचिदेव** (अश्लोकरूपेण) **वक्ष्यामि** ।।१३५।।

**(अव) सुखीति ।।** 'भोजनं दापयिष्ये इत्युक्तम् । शिशोः क्षीराभावे स्वकीयभोजनं न सुखदम्' इत्यत आह – **त्वयेति ।।**

**सुखी भव त्वं विप्रेन्द्र ममाशीर्वचनेन च ।**
**त्वया चिन्ता न कर्तव्या शिशोः क्षीरं भविष्यति ।।१३६।।**

(अन्वयः) हे विप्रेन्द्र! मम आशीर्वचनेन त्वं सुखी भव; त्वया चिन्ता च न कर्तव्या । शिशोः क्षीरं भविष्यति ।

**(व्या)** यस्मिन् जन्मनि औरसपुत्रप्राप्तिः । तस्मिन् क्षीरलाभचिन्ता, क्षीरप्राप्तिश्च । तत्कालवृत्तान्तमिदं तत्कालीनैर्ज्ञातव्यम् । शेषस्य शिशुतुल्यत्वात् तस्य सुज्ञानक्षीराभावेन **'शेषाय वद मत्पुत्र'** इत्यादिना वक्ष्यमाणानुपपत्तेः[१], चिन्ता न कार्या । तस्य **'अवशिष्टं तु**

---

(१) तादृश अनुग्रहस्तु स्वोत्तमगुरुषु दृश्यते । तादृशकारुण्यम् तेषु अस्तीति श्रीमदाचार्यैः श्रीमद्भागवत-तात्पर्येऽपि निर्णीतम् । तद्यथा –

**वक्तव्यं मुक्तिं यास्यामि सद्गतिम्' 'निःसंशयो भव त्वं च सर्वेषां हर संशयम्'** इति उक्तवक्ष्यमाणानुसारेण ज्ञानं क्षीरं शेषतोषकं भविष्यत्येवेति वा । अत एव **'शेष घोषय'** इत्युक्तिः[१] ।।१३६।। इति विप्र.प्र.सं. ।।१२।।

## १३. शेषप्रकरणम् ।। श्लोकाः (१३७ऽ१४०)

---

**प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरन्ति विजनेन परार्थनिष्ठाः ।**
**नैतान्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोनुपश्ये** ।। भाग. ७/९/४४ ।।

*** – प्रायेण देवमुनयः ।**

**'आश्रितेषु कृपा कार्या विशेषात् तात्विकैः सुरैः ।**
**मुनिभिश्च तथा कैश्चित्कैश्चित्कार्याखिलेष्वपि ।**
**तथापि तात्विकसुरकृपाविषयतां गताः ।**
**ये त एव विमुच्यन्ते तदन्ये न कथंचन' इति च ।।** – इति भागवततात्पर्ये ।

(१) श्रीवृन्दावनाचार्यैरपि तद्वत् शिष्येभ्यः अनुग्रहः कृतः । यद् विश्वप्रियलीलाविलासो दृष्टं तदत्र स्मर्तव्यम् । तद्यथा –

**द्रव्याणि दत्वा विद्वद्भ्यस्सदा श्रीकृष्णमन्दिरे ।**
**सर्वमूलग्रन्थरत्नपारायणमकारयत् ।।...**
**सुचिरं मरुदंशशास्त्रसारं पाठनालेखनपाठनाद्युपायैः ।**
**भुवि सज्जनपात्रके निधाय –** इति कोचिरङ्गप्पाचार्यविरचितविश्वप्रियविलासे

**दयालुर्वादिराजस्य पौरुटं पादुकाद्वयम् ।**
**शिरस्याधाय मे तत्वं रहस्युपदिदेश हि ।।**
**शुद्धीकृत्य स्वदासं मां योकरोत्सुधियं हृदा ।**
**न कदाप्यस्योपकारं विस्मरेयमनन्यधीः ।। ...**

**असङ्ख्यमूलग्रन्थादिलेखनेन हरिं गुरुः ।**
**तोषयन् शिष्यवर्गेभ्यः समदात्पुस्तकान् बहून् ।।...**
**एवं क्रमेण सर्वेषां भक्तानां चतुरर्थदः ।**
**अव्याजेन चचारासौ तदेतन्मुनिलक्षणम् ।।**
**देशान्तरगताः शिष्या अपि लोकगुरोर्वचः ।**
**साधयित्वा प्रसिद्धांश्च वर्तन्ते सुखजीविनः ।।**
**एवं श्रीवादिराजाख्यजलदस्थमहास्पदे ।**
**इयत्येष कृपादृष्टिरिति को वर्णयेद्बुधः ।।** – इति सेतुमाधवसूरिविरचितविश्वप्रियविलासे

(व्या) 'शेष घोषय' इत्यारभ्य 'कुर्विदं तु तवाज्ञया' इत्यन्तं त्रयोदशं शेषश्रोतृकं प्रकरणम् । प्रकृतशेषेण पञ्चोत्सवस्य कर्तव्यताकथनात् तदनुकूलसामर्थ्यप्रदत्वरूपं भौमलौकिक-भाक्तवैभवमुच्यते – **शेषेति ।।**

**शेष घोषय पोषय त्वं दोषशून्यां तु मे कृतिम् ।**
**शेषशायिहयग्रीवं तोषय त्वं च भूषय ।।१३७।।**

(अन्वयः) हे शेष! त्वं मे कृतिं तु दोषशून्यां (इति) घोषय, पोषय; शेषशायि-हयग्रीवं च त्वं भूषय तोषय ।

(व्या) **शेषेति ।।** सीतापतिना पूज्य**शेषशायिं** (शेषशायिनम्) विप्रपूज्यं **हयग्रीवं** च **तोषय** । तत्पूजकवृत्तान्तख्यापनादिना **भूषय** ।

**रथोत्सवं नेत्रमनोरथोत्सवं तथोत्सवं भोक्तृजनस्य भोजनैः ।**
**कुरु त्वमर्थोत्सवमर्थिनां तु नेत्रोत्सवं प्रेक्ष्य सज्जनानाम् ।।१३८।।**

(अन्वयः) नेत्रमनोरथोत्सवं रथोत्सवं, तथा भोक्तृजनस्य भोजनैः उत्सवम्, अर्थिनां तु अर्थोत्सवम्, सज्जनानां प्रेक्ष्य नेत्रोत्सवं त्वं कुरु.

(व्या) **रथोत्सवमिति ।।** भक्तानां **नेत्रमनोरथोत्सवरूपं रथोत्सवं** रजतपीठपुरस्थ-श्रीकृष्णादिरथोत्सवं कुरु । सज्जनानां **नेत्रोत्सवं** बालगोपालप्रतीकदर्शनेन कुरु ।।१३८।।

**एवं पञ्चोत्सवं कृत्वा पञ्चरूपधरं हरिम् ।**
**सम्पूज्य पञ्चबाणं तं पञ्चत्वं चैव त्वं जहि ।।१३९।।**

(अन्वयः) एवं पञ्चोत्सवं कृत्वा, पञ्चरूपधरं तं हरिं सम्पूज्य, पञ्चबाणं पञ्चत्वं एव च त्वं जहि.

(व्या) **एवमिति ।। एवं** उक्तप्रकारेण घोषोत्सव-रथोत्सव-भोजनोत्सव-अर्थोत्सव-नेत्रोत्सव-रूपं पञ्चोत्सवं कृत्वा, **पञ्चरूपधरं** = पञ्चवृन्दावनस्थ अनिरुद्धादि**पञ्चरूपधरं हरिं सम्पूज्य, पञ्चबाणं**[१] निन्दितकामदोषं **पञ्चत्वं** मृत्युं **च जहि** ।।१३९।।

**इमां मम कृतिं मित्र प्रेषयस्व ममात्मज ।**
**अन्यथा त्वं च मद्द्रोही कुर्विदं तु तवाज्ञया ।।१४०।।**

(१) ''अरविन्द, अशोक, चूत, नवमल्लिका, नीलोत्पल'' इति मन्मथस्य पञ्च बाणाः ।

**(अन्वयः) हे मित्र! (ममात्मज!) इमां मम कृतिं प्रेषयस्व; तव आज्ञया च इदं कुरु । अन्यथा त्वं मद्द्रोही ।**

(व्या) इमामिति ।। घोषोत्सवानुकूलं कृतिप्रेषणं त्वदीयं कार्यम् । तस्माद्यत्र प्रेषणीयं तत्र त्वं प्रेषय । अन्यथा प्रेषणाभावे । त्वं मद्द्रोही ।।१४०।। शेष.प्र.सं.।।

१४. विप्रप्रकरणम्।। श्लोकाः (१४१-१४८ १/२)

(व्या) 'ब्राह्मण त्वं तत्र गत्वा वदस्व' इत्यारभ्य 'कुरु त्वं सार्थमेव तत्' इत्यन्तं चतुर्दशं विप्रश्रोतृकं प्रकरणम् । अत्र प्रागुक्तशेषप्रेषितकृतिकपुरुषाय शेषाय च विप्रेणैव वक्तृत्वकथनेन शेषस्य पुत्रलाभकथनेन च तदनुग्राहकत्वरूपं भौमभाक्तलौकिकवैभवमुच्यते – ब्राह्मणेति ।।

**ब्राह्मण त्वं तत्र गत्वा वदस्व स्वाप्रवैभवम् ।**
**इदं तु मद्वैभवं तु मद्भक्तेन तु कीर्तितम् ।।१४१।।**
**शृणोति मद्भक्तिरतो मद्भूतिं लभते नरः ।**

**(अन्वयः) हे ब्राह्मण! त्वं तत्र गत्वा स्वाप्रवैभवं तु वदस्व. इदं मद्वैभवं तु मद्भक्तेन कीर्तितं तु. अतः मद्भक्तिरतः नरः शृणोति. मद्भूतिं लभते.**

(व्या) ब्राह्मणेति ।। हे ब्राह्मण! त्वं तत्र गत्वा = यत्र श्रोता आयाति तत्र गत्वा । स्वाप्रवैभवं वदस्व ।।१४१।। शृणोतीति ।। श्रोतृ मन्मुखतः शृणोत्येव । नरः = व्यासः । मद्भूतिं मत्पूज्यभगवत्प्रतिमां लभते स्पृशति पूजयतीति यावत् ।

**शेषाय वद मत्पुत्र दोषायनतरं मम ।।१४२।।**
**तोषाय तव विप्रस्य प्रेषय स्वाप्रवैभवम् ।**
**स शेषः शेषवद्दक्षः श्रुत्वा कार्यं करिष्यति ।।१४३।।**

**(अन्वयः) दोषायनतरं मम(माहात्म्यं) मत्पुत्र शेषाय वद. विप्रस्य तव तोषाय स्वाप्रवैभवं प्रेषय. शेषवद् दक्षः सः शेषः श्रुत्वा कार्यं करिष्यति.**

(व्या) दोषायनतरं दोषायनस्य भवसागरस्य तरं तारकम् ।।१४२।। विप्रस्य प्राक् । यतिरूपिणः तव तोषाय (प्राक् विप्रस्य नन्तरं यतिरूपिणः तव तोषाय एन्दु अन्वय) । अनेन यतिजन्मनि सोहं विप्रः इत्यनुसन्धातव्यमिति सूचितं भवति ।।१४३।।१४४।।

**अशेषं मम शेषस्य हयग्रीवस्य तोषकः ।**
**भविष्यत्यनिशं तस्य योगक्षेमं करोम्यहम् ।।१४४।।**

(अन्वयः) मम अशेषं शेषस्य (श्रावय), (सः)अनिशं हयग्रीवस्य तोषकः भविष्यति. अहं तस्य योगक्षेमं करोमि.

(व्या) (मम शेषस्य (भृत्यस्य) अशेषं स्वाप्नवैभवं प्रेषय (श्रावय) । स शेषः हयग्रीवस्य तोषकः अनिशं भविष्यति । तस्य योगक्षेमम् अहम् अनिशं करोमि ।)

**पुत्रलाभश्च भविता मत्प्रसादान्न संशयः ।**
**श्रीशस्य भक्तिकोशस्य दासस्य सेश्वरस्य मे ।।१४५।।**

**तोषस्य कोशभूतस्य शेषस्य वद मत्कृतिम् ।**

(अन्वयः) मत्प्रसादात् पुत्रलाभश्च भविता न संशयः; भक्तिकोशस्य श्रीशस्य सेश्वरस्य दासस्य मे तोषस्य कोशभूतस्य शेषस्य मत्कृतिं वद.

(व्या) **श्रीशस्येति** ।। **श्रीशस्य** विष्णोः । **भक्तिकोशस्य** भक्तिरूपधननिक्षेपस्थळभूतस्य ईश्वरसहितस्य **(दासस्य मे)** मम[१] । **तोषस्य** सन्तोषात्मकधनस्य **कोशभूतस्य** निक्षेप-स्थळभूतस्य **(शेषस्य) मत्कृतिं वद** ।।१४५ १/२।।

**ब्राह्मण त्वं तत्र गत्वा वद स्वाप्नीं तु मत्कृतिम् ।।१४६।।**

**मद्भक्तियुक्तमनसो मम संस्थानदस्य च ।**

---

(१) अत्र श्रीगुरुराजानां गुरुत्वं यथा युक्तिमल्लिकायां श्रीमध्वाचार्यस्य कथितः तथा इति ध्येयं तस्य सेश्वरस्य भक्तिकोशस्य दासत्वं तेनात्र उक्तत्वात् । तद्यथा –

अन्तरातिष्ठति हरिं पश्यंश्च वृषभः किल ।
वागूर्मिता वाक्प्रदत्वं बुद्धिदत्वादयो गुणाः ।।
सारासारविवेकश्च यद्गुरुत्वप्ररूपकाः ।
अन्तःप्रागुक्तमध्वाख्यरूपवागेव वागियम् ।।
तदस्येति श्रुतौ प्रोक्तो विष्णोस्तु परमे पदे ।
उत्स औत्सुक्यवान्मध्वः को वा सिद्धो निगद्यताम् ।
मध्वश्रुतेर्विष्णुभक्तिलिङ्गाच्चासौ गुरुर्हि नः ।। (५३५-५३६,६७३) (फलसौरभम्)

(अन्वयः) हे ब्राह्मण! त्वं तत्र गत्वा मद्भक्तियुक्तमनसः मम संस्थानदस्य (तस्य) स्वाप्नीं मत्कृतिं तु वद ।

(व्या) ब्राह्मणेति ।। स यत्र श्रोतुमायाति तत्र गत्वा वद ।।१४६।। मम संस्थानदस्य त्वदन्तर्यामिणो मम एकत्रावस्थानप्रदस्य (मम सम्यक्स्थानम् अवस्थानं तत्प्रदस्य) ।

**अद्यैव गच्छ विप्रेन्द्र हृदिस्थोऽहं भवामि ते ।।१४७।।**
**अद्यप्रभृति ते शान्तिं दास्यामि च न संशयः ।**

(अन्वयः) हे विप्रेंद्र! अद्यैव गच्छ; अहं ते हृदिस्थः भवामि; अद्यप्रभृति शान्तिं च ते दास्यामि; न संशयः ।

(व्या) अद्येति ।। अद्येत्यनेन यस्मिन् काले शेषस्य श्रोतृत्वं (अवगतं) स कालो विवक्षितः । हृदिस्थोहमित्यनेन विशेषेण सन्निहितत्वमुच्यते ।।१४७।। अद्यप्रभृति ते शान्तिं दास्यामीत्यनेन इतः प्राक् यादृगनिष्टं प्रसक्तं तादृशमनिष्टं इतःपरं न भविष्यति ।।१४७ १/२।।

**मयोक्तमम्भसि क्षिप्तकाञ्चनेषुर्यथा तथा ।।१४८।।**
**अभूत्स्वाप्नप्रमेयं तु कुरु त्वं सार्थमेव तत् ।।**

(अन्वयः) मयोक्तं स्वाप्नप्रमेयं तु यथा अम्भसि क्षिप्तकाञ्चनेषुः तथा अभूत्. तत् सार्थम् एव त्वं कुरु.

(व्या) मयोक्तमिति ।। 'अम्भसि क्षिप्तकाञ्चनेषुः' इत्यनेन काञ्चने गुरुत्वं जले च तन्मज्जनसामर्थ्यं (स्वाभाविकं) । प्रयुक्तस्य इषोस्तु अनायासेन प्रवेश इव मदुक्तं प्रमेयम् अतिसुलभं भविष्यतीति भावः ।। इति विप्रप्रकरणं सम्पूर्णम् ।।

### १५. शेषप्रकरणम् ।। श्लोकाः (१४९-१५२)

(व्या) 'शेषाशेषे'त्यारभ्य 'ख्यातिं चात्र करिष्यतः' इत्यन्तं पश्चादशं शेषश्रोतृक-प्रकरणम् । विप्रपालनस्य, बादरायणमानस्य (मानं पूजनं सत्कारः), कृतिप्रेषणस्य च शेषेण कर्तव्यताकथनात् तदनुग्राहकत्वरूपभौमलौकिकभाक्तवैभवमत्रोच्यते – शेषेति ।।

**शेषाशेषं च मत्कार्यं शेषाशेषप्रदं तव ।।१४९।।**
**अकर्तुः कर्तुरप्येतत्कुरुष्व त्वं सुखीभव ।**

(अन्वयः) हे शेष! हे शेष! अकर्तुः तव कर्तुरपि अशेषप्रदं एतत् मत् कार्यं च अशेषं कुरुष्व; (तेन) त्वं सुखीभव ।

(व्या) **हे शेष! हे शेष!** (हे शेष! शेष इति आदरार्थं द्विरुक्तिः) **अशेषं** समस्तं **मत्कार्यम् अकर्तुः** प्राग्जन्मन्यकर्तुः तव **कर्तुरपि** तन्नामकभूपस्यापि (अनेन शेषः कस्यचिद्राज्ञः मन्त्री इति सूचितो भवति ।) **अशेषाभीष्टप्रदं** तस्मात् **तत्कुरुष्व** । तेन **त्वं सुखी भव** ।।१४९ १/२।।

**ममात्मजं वेदवेद्यं मम संस्थानसंस्थितम् ।।१५०।।**
**मत्कलापूर्णमनसं पालयस्व सुमानिनम् ।**

(अन्वयः) (हे शेष!) मम आत्मजं वेदवेद्यं, मम संस्थानसंस्थितं वेदवेद्यं, सुमानिनं मत्कलापूर्णमनसं पालयस्व.

(व्या) **ममात्मजमिति ।। (ममात्मजं** विप्रं पालयस्व । **वेदवेद्यं** बादरायणं **सुमानिनं कुरु** इति प्रत्येकमन्वयः) । **मत्कलापूर्णमनसं ममात्मजं** यतिरूपिणं **विप्रं** पालयस्व । **मम संस्थानसंस्थितं** = मम संस्थानस्थित(सोदेमठस्थित) पौरुटभाजनगतप्रतीकसन्निहितं वेदवेद्यं बादरायणं सुमानिनं कुरुष्व । बादरायणसन्मानः कर्तव्यः । तस्य प्रामाणिकत्वं च ख्यापनीयमिति भावः ।।१५० १/२।।

**अहो ममाज्ञां कुरु वेदवेद्यख्यातिर्मम स्वाप्नकृतेर्न किञ्चित् ।।१५१।।**
**जाता तयोः प्रेषय भक्तियुक्तयोः सीतापति व्यास सनामधेययोः ।**
**श्रुत्वा तौ मत्कृतेः सम्यक् ख्यातिं चात्र करिष्यतः ।।१५२।।**

(अन्वयः) हे वेदवेद्यख्यातिः मम स्वाप्नकृतेः किञ्चित् न जाता; अहो! भक्तियुक्तयोः सीतापतिव्यास सनामधेययोः प्रेषय; तौ च श्रुत्वा मत्कृतेः अत्र सम्यक् ख्यातिं करिष्यतः ।

(व्या) **अहो शेष!** वेदवेद्यस्य ख्यातिः बादरायणस्य ख्यातिः स्वाप्नकृतेः ख्यातिश्च **न जाता** । अतः भक्तियुक्तयोः सीतापतिव्यास सनामधेययोः । **सीतापतिव्यासयोः** नामधेयसमाने नामधेये ययो स्तौ । तथोक्तौ तयोः प्रेषय ।।१५१ १/२।। त्वत्प्रेषितं **श्रुत्वा तौ मत्कृतेः ख्यातिं करिष्यतः** ।।१५२।। इति शेषप्रकरणं सम्पूर्णम् ।।प्र.१५।।

१६. विप्रप्रकरणम्।। सार्धश्लोकः (१५३-१५३ १/२)

**विप्र त्वमेव गत्वा च मत्कृतिं तु तयोर्वद ।**
**नामैकदेशग्रहणे गृहीतं पूर्णमेव च ।।१५३।।**

**तयोर्नाम तथा शास्त्रे चोक्तं विद्वद्भिरेव च ।।**

(अन्वयः) हे विप्र! त्वम् एव गत्वा मत्कृतिं तु तयोः च वद; नामैकदेशग्रहणे तयोः नाम च पूर्णं एव ग्रहीतम् । विद्वद्भिः तथा शास्त्रे च उक्तम् ।

(व्या) विप्रेति ।। यत्र तयोः समावेशो भविष्यति । तत्र गत्वा वद । नामैकदेशग्रहणे नाम्नोः व्यासराजसीतापतिनाम्नोः । एकदेशस्य राजेति रमणेति एकदेशस्य ग्रहणे तयोर्नाम पूर्णं गृहीतमिव । तथा शास्त्रे भारतादौ भीमादिनामग्रहणे (भीमसेन इति) पूर्णं गृहीतमिति विद्वद्भिः उक्तम् ।। १५३ १/२।। वि.प्र.सं ।। प्र १६।।

१७. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (१५४-१६३)

(अव) 'अस्यातिशुद्धबुद्धेः(द्धिः)' इत्यारभ्य अध्यायान्तं लक्ष्मीपतिश्रोतृकसप्तदश-प्रकरणम् । अत्र शेषाद्रिपण्डितं प्रति शेषसत्कृतकार्यस्य सपक्षत्वेन लक्ष्मीपतिना वक्तव्यत्व-कथनात् तत्कर्तव्यकार्यबोधनरूपं भौमलौकिकभाक्तवैभवमुच्यते अस्येति ।।

**अस्यातिशुद्धबुद्धेश्च यस्य सद्धर्मपद्धतेः ।।१५४।।**

**मद्बुद्धिर्निधिरत्रासीदहो विधिबलं महत् ।**

(व्या) (अस्येति।।) अतिशुद्धबुद्धेः अतिनिर्मलबुद्धेः यस्य । सद्धर्मपद्धतिं निर्दुष्टधर्ममार्गम् अनुसृत्य मद्बुद्धिर्निधिरासीत् । मद्बुद्धिरूपनिधिलाभः आसीत् । अस्य ब्राह्मणस्य विधिबलम् अत्र निधिलाभे महत् बलवत्तरकारणम् । अत्र अस्मदभिमतजनसमूहे अस्य विधिबलं महदिति वा ।।१५४ १/२।।

**अयं तु ब्राह्मणश्चात्र मामेव शरणं गतः ।।१५५।।**
**वृन्दावनकृतेः पूर्वं स्वस्याभीष्टं निवेद्य मे ।**
**कृत्वा वृन्दावनं चेति प्राक् श्लोकद्वितयेन च ।।१५६।।**
**अतस्त्वं मे मया प्रोक्तं तत्सत्यं समभूदहो ।**

**(अन्वयः) 'अयं तु ब्राह्मणश्चात्र मामेव शरणं गतः । वृन्दावनकृतेः पूर्वं स्वस्याभीष्टं निवेद्य मे ।' 'कृत्वा वृन्दावनं च' इति श्लोकद्वितयेन प्राक् मया प्रोक्तं तत् सत्यं समभूत् अहो; अतः त्वं मे (प्रियोसि) ।**

(व्या) **अयमिति ।।** **'अयं ब्राह्मणश्च'(८४)** इति तृतीयाध्यायगतपद्यं । (**''अयं तु ब्राह्मणः शुद्धः सत्यवादी जितेन्द्रियः । अस्य स्वप्ने मया प्रोक्तं विश्वासान्नात्र संशयः''** १०.९९) 'कृत्वा वृन्दावनं चैतद्'(१०-६१) इति एतदध्यायगतपद्यम् । एतत् **श्लोकद्वयेन मया प्रोक्तं तत् सत्यं समभूत् अहो** आश्चर्यम् ।। 'अयम्'(३.८४) इति श्लोके विप्रस्य स्वमात्र-शरणकत्वम्, आख्यानोपदेशकारणं त्वां प्रति उक्तम् । 'कृत्वा वृन्दावनं च' (१०.६१) इत्यत्र त्वत्कारितवृन्दावन सन्निहितस्य तद्भावितस्य त्वदभीष्टप्रदत्वमुक्तम् । एतदुभयमपि यस्मात् त्वदनुभवारूढं जातम् । **अतः** कारणात् **त्वं मे** मदीयोसि ।।१५६ १/२।।

**वेदवेद्य मम शेषसत्कृतं तत्सशेषगिरिपण्डितं वद ।**
**त्रिदशदोषरहितैः सुपूजित कदशनार्थिभिरनादृतरूपां(पं) ।।१५७।।**

**(अन्वयः) (तस्मात् हे सुत) वेदवेद्य (व्यासभक्त) सुपूजित मम शेषसत्कृतं तत् शेषगिरिपण्डितं वद; (मम कृतिः) कदशनार्थिभिः अनादृतरूपं त्रिदशदोषरहितैः (शेषेण सत्कृतं) ।**

(व्या) तस्मात् हे सुत! **वेदवेद्य!** व्यास! **मम शेषसत्कृतं** शेषेण सम्प्राप्तपुत्रलाभेन यत्सत्कृतं तत् **शेषगिरिपण्डितं** शेषाद्रिपण्डितं प्रति **वद** ।।१५७।। 'मदुक्तिः कथं तदुपादेया' इत्यत आह – **त्रिदशेति ।।** त्रिदशदोषैः त्रिंशत् दोषैः रहितैः, पुरुषैः सुपूजितं। (त एन्दु स्वा.) ।।१५७।।

(अव) मयि विश्वासाभावे कथं उक्तिर्युक्तेत्यत उक्तम् **मदूर्जितपदेति ।।**

**सुत मदूर्जितपदे च सुस्थिरः त्वं च सर्वसुरसत्तमदेवभूः ।**
**तद(दु)भयप्रभवाय को महान् त्वामृते पुरुषभूषण तद्वद ।।१५८।।**

**(अन्वयः) हे सुत! त्वं मदूर्जितपदे सुस्थिरः च सर्वसुरसत्तमदेवभूः च । हे पुरुष-भूषण! तद(दु)भयप्रभवाय त्वां ऋते कः महान् तत् वद.**

(व्या) **त्वं सुस्थिरः** निश्चयोपेतः (त्वं मदृजुत्वविषये दृढनिश्चयवान् । तव सुदृढोपपादनं

तस्य शङ्कां निवारयतीति भावः) । तस्मात् त्वयोक्तं शेषगिरिपण्डितेनोपादेयम् (भविष्यतीति शेषः) । यथा शेषेण सत्कृतं ब्रूषे; तथा कदशनार्थिभिः उदरपोषणैकतत्परैः अनादृतरूपं च वद । प्रतिपादनसमये त्वं सर्वसुरसत्तमदेवस्य हरेः भूः आवासस्थानम् ।।१५७।। निर्दुष्टैः (पण्डितैः) तव पूज्यत्वात् मयि विश्वासयुक्तत्वात् भगवत्सन्निधानपात्रत्वाच्च । त्वया शेषगिरि-पण्डितं प्रति वक्तव्यमुक्तं चेत् 'शेषेण सत्कृतं । शेषस्य पुत्रप्राप्तिर्जाता । अन्येन तु अपकारः कृतः तस्य अनिष्टदर्शनं जातम् । तस्माद्विश्वासः कृते भूपकार्यसिद्धिः भूयात्' इति भावः ।। (तस्मात् अभयेन प्रभवाय शेषाद्रिपण्डितं जेतुम् । **हे पुरुषभूषण!** लक्ष्मीपते! **त्वामृते कः महान् वर्तते । तद्वद?** ।।१५८।।)

**एतच्छलोकद्वयस्यार्थं ब्राह्मणस्य मुखेन तु ।**
**जानीहि त्वं यतश्चास्य मयार्थोप्यनुवर्णितः ।।१५९।।**

(अन्वयः) **यतः मया अर्थः अनुवर्णितः अपि, एतत् श्लोकद्वयस्य अर्थं च त्वं अस्य ब्राह्मणस्य मुखेन तु जानीहि ।**

(व्या) **एतदिति ।।** एतत्पद्यद्वयस्य मया मत्प्रेरितया बुद्ध्या **अर्थः अनुवर्णितः** अपि **ब्राह्मणस्य मुखेन जानीहि** विशेषतः ।।१५९।।

**त्रिंशच्च (तु) कवितादोषाः विदुषां ज्ञानिलक्षणे ।**
**तैर्विहीनाश्च विद्वांसो नेतरेति सतां मतम् ।।१६०।।**

(अन्वयः) **ज्ञानिलक्षणे विदुषां त्रिंशः कवितादोषाः च (कथितं). तैः विहीनाः च विद्वांसः न इतरः इति सतां मतं.**

(व्या) त्रिदशदोषरहितैः इत्युक्तान् दोषानाह – **त्रिंशच्चेति ।।** पञ्चमाध्याये षष्ठाध्याये च उक्तानाम् अर्थविशेषोपपादनार्थम् अत्रोक्तत्वेन आर्थिकपुनरुक्तिर्न दोषाय इति ज्ञातव्यम् ।।१६०।।

**असूया परनिन्दा च परेषां च प्रतारणम् ।**
**निर्दोषायां परकृतौ दोषदूषणमेव च ।।१६१।।**

(अन्वयः) **असूया परनिन्दा च परेषां प्रतारणं च परकृतौ निर्दोषायां दोषदूषणम् एव च ।**

(व्या) (**असूया** दोषारोपः गुणेषु । उत्तमसज्जनानां गुणाधिक्यं दृष्ट्वा 'अहो मम

तादृग्गुणादिकं न प्राप्तम्' इति धिया तेषु द्वेषः । अथवा न ते मदधीनाः इति धिया तेषु द्वेषः । **परनिन्दा** – स्वोत्तमानां सज्जनानां दोषोत्कीर्तनम् । दोषे विद्यमानेपि कीर्तयतः पापमेव । दोषे अविद्यमाने आरोपेण कीर्तयतः पापाधिक्यमेव । परेषां च **प्रतारणं** – मिथ्यावचनेन वञ्चनं पुरुषार्थहानिकरणं, अन्यकृतं स्वकृतमिति प्रदर्शनं वा । निर्दोषपरग्रन्थे मध्वाचार्यादिभिः कृतग्रन्थे दोषारोपेण निन्दनम् ।)

**परत्वबुद्धिः स्वस्मिंस्तु परेषां हास्यमेव च ।**
**स्वस्य शाठ्यं तत्वमतावहङ्कारित्वमेव च ॥१६२॥**

**(अन्वयः) स्वस्मिंस्तु परत्वबुद्धिः परेषां हास्यम् एव च; स्वस्य शाठ्यं, तत्वमतौ अहङ्कारित्वं एव च ।**

**(व्या)** (**परत्वबुद्धिः** – स्वस्मिन् स्वकीयग्रन्थे महत्वबुद्धिः । अथवा स्वस्मिन् देवत्वाद्यारोपः । **परेषां हास्यमेव च** । उत्तमानां साधूनाम् अल्पदोषान् कुरूपादीन् वा दृष्ट्वा हास्यकरणम् । **स्वस्य** धनस्य **शाठ्यं** विद्यमानेपि अविद्यमानत्वख्यापनम्; योग्यपात्रे प्राप्तेपि इति ज्ञातव्यम् । **तत्वमतौ** द्वैततत्वज्ञाने अहं सर्वाधिकः कोन्योऽस्ति सदृशो मया इति गर्वः । आद्यशब्देन योग्यशिष्येषु अनुपदेशः । वृथा शिष्यबन्धनम् । यथाशक्ति अनुष्ठानाभावः । आकरग्रन्थ, उपदेशकगुर्वादीनाम् अनुत्कीर्तनअवज्ञादिना तिरस्कृत्य स्वस्मिन् अपूर्वनिपुणत्वारोपः ।)

**इत्याद्या बहवो दोषा विदुषां च प्रकीर्तिताः ।**
**तैर्विहीनाश्च विद्वांसो नेतरे च कदाचन ॥१६३॥**

**(अन्वयः) विदुषां इत्याद्याः बहवः दोषाः च प्रकीर्तिताः । तैः विहीनाः च विद्वांसः. कदाचन इतरः च न ।**

**(व्या) इत्याद्या** ज्ञानिलक्षणनामकग्रन्थान्तरोक्ताः गुरुराजैरत्र सङ्क्षेपेणोक्ताः इति मन्तव्यम् ॥ **तैः विहीनाः** पाण्डित्यसिद्धिनाशकैः अथवा पाण्डित्यात्प्राप्तफलनाशकैः । एतैः दोषैः रहिताः **विद्वांसः** = मुख्यविद्वांसः सभासु आदरणीय विद्वांसः । **इतरे न कदाचन** पूजायोग्याः इति भावः । 'तादृशमात्सर्यादिहीनसनकदूर्वासादिपण्डितैः अहं पूजितः देवगुरुः ऋजुगणाग्रणीः' इत्येतत् सर्वं शेषाद्रिपण्डिताय वद । तस्मै उपदेशं कुरु । 'शेषाख्यमन्त्रिणा अपि आख्यानं अङ्गीकृतम्' इति युक्तिं ब्रूहीति लक्ष्मीपतिं प्रति उपदिश्यते ॥१६३॥ प्र.१७॥

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वकं तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दा-शनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्व-रूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि-राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

।। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराज-पूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे दशमाध्यायः समाप्तः ।।

**(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।**

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक-ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य-जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**।।इति श्रीस्वाप्नवृन्दावनाख्यानव्याख्याने दशमाध्यायः समाप्तः ।।**

**।। श्रीवादिराजगुर्वंतर्गतमध्वेशाभिन्नकृष्णार्पणमस्तु ।।**

# ।। अथ एकादशाध्यायः ।।

श्री।। ओं वादिराजगुरुभ्यो नमः ।। ओं पूर्वाध्याये वेदवेद्यस्य वायुतुल्यत्वेन भूतनाथस्य रुद्रतुल्यत्वेन इन्द्रपदयोग्येन विप्रेण ज्ञातव्यम् । विप्रमुखतः शेषस्य व्याससीतापत्योश्च कृति-ग्रहणम् । तत्प्रख्यापकत्वं चोक्तं । प्राप्त जन्मान्तरस्य विप्रस्य पुनः कृतिलाभः कथम्? शेषस्य तन्मुखतः श्रवणं कथम्? व्याससीतापत्योः सामान्याधिकरणं कदा? कदा च विप्रादि व्यक्तिचतुष्टयेन ज्ञातार्था इयं कृतिर्भविष्यति? इत्याशङ्कां वारयितुं पुष्यनक्षत्रसञ्जातेन स्वमठा-धिपतिना विठ्ठलाख्यस्य प्राप्त मठाधिपत्यस्य कृतिलाभः । विठ्ठलेन प्राप्तयतीशभावस्य विप्रस्य कृतिलाभः । ततो विप्रस्य राजधानी विशेषगमनम् । तदा शेषेण नृपसहितपद्यत्रयकथनम् । ततःपरं व्याससीतापत्योः सामानाधिकरण्यम् । ततः व्यक्तिचतुष्टयेन कृतेः ज्ञातार्थत्वम् । ततः परं अग्निहोत्रिणः सीतापतेः सकाशात् वेदनिधेर्जन्म, तस्य बादरायणाराधकत्वं चोच्यते अनेन अध्यायेन । उक्त भक्तानुग्राहकत्वरूपं भौमभाक्तवैभवम् । तदन्तर्यामिरूपेण बालगोपालहयवदन-वेदव्यास, रामाराधकत्वरूपं भौमभागवतवैभवं चात्रोच्यते ।

### १. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (१-९)

(व्या) 'अलौकिकायाम्' इत्यारभ्य 'सा चापि मम प्रियोऽभूत्' इत्यन्तं पूर्वाध्यायान्ते प्रकृतलक्ष्मीपतिश्रोतृक प्रथमं प्रकरणम् । 'श्रुत्वा तौ मत्कृतिं सम्यक् ख्यातिं चात्र करिष्यतः' इति कृतिख्यापनकर्तव्यत्वमुक्तं पूर्वाध्याये । तदयुक्तं । 'शिशोः क्षीरं भविष्यति' इत्यादौ क्षीरादिशब्दानां ज्ञानादिवाचकत्वाभावादिरूपाणां दोषाणामुपलम्भात् इत्याशङ्कां वारयितुं स्वस्य निर्दोषत्वस्य विप्रकृतपूर्वपुण्याभिज्ञत्वस्य च वर्णनेन भौमभाक्तवैभवम् । 'हरिं भजस्व' इत्यनेन व्यापकान्तर्यामिरूपेण हरिभजकत्वरूपं भौमलौकिकभागवतवैभवं चात्रोच्यते **अलौकिकाया-मिति** ।।

**हरिः ॐ ।।**
**अलौकिकायां मम सत्कृतौ च न दोषबुद्धिः कुशलैश्च कार्या ।**
**अर्थे च दृष्टिः क्रियतां न शब्दे यतश्चैषा स्वाप्रकृतिर्हि वासिनी ।।१।।**

अन्वयः - अलौकिकायां मम सत्कृतौ च दोषबुद्धिः कुशलैः च न कार्या । यतः एषा स्वाप्रकृतिः वासिनी च अर्थे च दृष्टिः क्रियतां न शब्दे ।

(व्या) **कुशलैः** लौकिकालौकिकयां छन्दस्तुल्यायां मम सत्कृतौ **दोषबुद्धिः न कार्या** । **अर्थे** अभिप्रेतार्थे । (तात्पर्यार्थे न तु आपातार्थे) **दृष्टिः क्रियताम्** । **शब्दे** अभिप्रेतार्थवाचकत्वं क्वचित् नास्तीति दृष्टिः (दोषदृष्टिः) न कार्या । यस्मात् एषा **स्वाप्नकृतिः वासिनी** वासना-मयी[२] । 'वासनात्मकानां शब्दानाम् अर्थदर्शनमेव सत्यम् । यथार्थं (फलरूपेण दृष्टार्थ एव शब्दार्थः) अर्थमनतिक्रम्यवर्तमानं शब्दसत्यत्वं, तदभिप्रेतार्थवाचकत्वं (क्षीरम् इत्युक्ते गो क्षीरं इत्यादिरूपेण आपातार्थे तात्पर्यनियमः इति यावत्) नापेक्षितम् ।।१।।

**(विशेषांशः)** श्रीहरिः स्वप्नःकर्तृः, तथाहि बृहदारण्यकज्योतिर्ब्राह्मणभाष्ये – (६.३.९)

**स्वप्नो भूत्वा स्वापको भूत्वा । न हि जीवोऽपि स्वप्न एव भवति । 'स्वापं नयतीति स्वप्नः' इति च व्युत्पत्तिः । जायमानो म्रियमाणः प्रस्वपितीत्यादि, 'कृत्वा विवाहं तु कुरुप्रवीराः', 'तदेतन्मे विजानीहि यथाऽहं मन्दधीर्हरे । सुखं बुध्येय दुर्बोधं येषां भवदनुग्रहात्'। 'जज्ञे बहुज्ञं परमाभ्युदारम्'। 'द्रष्टुश्चक्षुषो नास्ति जिह्वा' इत्यादिवदन्तर्नीतणिच्त्वेन भवति । 'स्वातन्त्र्यस्नेहयोरन्तर्णीतणिच्' इति हि सूत्रम् । कथमन्यथा 'स्वयं निहत्य स्वयं निर्माय स्रवत्यः सृजते । स हि कर्ता स्वप्नेन शारीरमभि-प्रहत्यासुप्तः सुप्तानभिचाकशीति' इत्यादि युज्यते । उक्तार्थे च 'स्वप्नेन शारीरम्' इत्यादि जीवेश्वर- भेदमन्त्रा उक्ताः प्रमाणत्वेन । ईश्वरो जीवस्य भयानि पश्यन् जक्षदिव हसदिव । प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनान्वारूढ इत्यादिषु चाभ्यासेन सर्वत्र भेद एव निर्दिश्यते 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति च निर्णयात्मकं भगवद्वचनम् । न चावस्थाभेदेन जीवभेदो व्यावहारिकोऽप्यस्तीत्यत्र किञ्चि- न्मानम् । न हि जाग्रत्स्वप्नस्थश्च द्वावित्यज्ञप्रयोगोऽपि कश्चिदस्ति लौकिकः । न च भ्रमस्तादृशः । तस्माद्भगवानेवात्रोच्यते सर्वकर्तृत्वेन ।**

– इति जीवेशभेदः कथितः; तथा 'भगवानेवात्र सर्वकतृत्वेनोच्यते' इति श्रीमदाचार्यैः निर्णीतः । अपि च –

**'अंशेन जीवमादाय क्वचिदीशो बहिर्नयेत् । स्वप्नेषु फल्गुनं यद्वत्कृष्णः कैलासमानयत् ।**
**वासनारूपकान्प्रायस्त्वन्तरेव प्रदर्शयेत् । अतो बहिः कुलायादित्यपि वाङ् न विरुद्ध्यते' इति ।**

इति अयं ब्राह्मणे एव बृहदारण्यकभाष्ये श्रीमदाचार्यैः श्रीहरेः जाग्रत्स्वप्नस्वापकालमोक्षनियामकमहिमा वर्णितः ।

तथाहि तत् भेदप्रतिपादकमन्त्रः बृहदारण्ये –

**'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ।**
**शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एक हंसः ।।११।।**

अत्र खण्डार्थे **श्रीराघवेन्द्रश्रीमच्चरणाः** – ''स्वप्नाद्यवस्थाप्रेरको भगवान् इत्युक्तार्थे श्लोकाः सन्तीति प्रतिज्ञाय तानुदाहरति – तदेत इति ।। तत् तत्र । स्वप्नेन सुप्त्या स्वर्गेण मोक्षेण वा । शारीरं जीवम्

अभिप्रहत्य संयोज्य स्वयमसुप्तः सुप्तान् सुप्त्यवस्थागतान् स्वर्गगतान् मोक्षगतांश्च शारीरान् जीवान् अभिचाकशीति पश्यति । एवं सुप्त्यावस्थादर्शनानन्तरं शुक्रं शोकेन रत्या च युक्तं जीवमादाय, पुनः स्थानं जाग्रदाख्यं भूलोकाख्यं सृष्टिस्थानं वा एतीत्यर्थः । कीदृशो भगवान् इत्याह – हिरण्मय इति ।। हिरौ रत्यानन्दौ पूर्णौ यस्येति । स्वर्णवर्णत्वाद्वा हिरण्मयः । प्रधानहंसरूपत्वादेकहंसः पुरुष इति ।।'' इति ।

* **वासिनी** इत्यनेनापि कृतेः श्रीहरीच्छया निर्मितम् इत्यपि ध्येयम् । तथाहि – श्रीमद्भागवतात्पर्ये –

**'मनोमात्रमिदं विश्वं यथा स्वप्ने मनः क्रिया ।**
**क्रिया च वासनामात्रं साऽनीहायां प्रलीयते ।। – भागवतम्**

**'मनोमात्रं हरेर्यस्मान्मनसा मीयते जगत् ।**
**व्याप्ते मनसि विष्णोश्च स्थिततत्वाद्वासनामयम् ।**
**वस आच्छादनेत्यस्माद्धातोर्वा वासनामयम् ।'** इति तात्पर्ये । (४.२२.३७)

अत्र श्रीविजयध्वजतीर्थाः – ''मनोमात्रमिति ।। इदं प्रत्यक्षप्रमाणसिद्धं विश्वं ब्रह्मादिस्तम्बपर्यन्तं हरेर्मनसा मितं निर्मितं त्रातं रक्षितम् । 'मीयते संह्रियते' 'मी हिंसायाम्' इति धातोः । अमात्रे अपरिच्छिन्ने मनसि स्थिततत्वाद् वा मनोमात्रम् । .... 'स्वप्ने हरेरिच्छया जाग्रद्दृष्टकरितुरगादिवासनया निर्मिताः मात्रन्ति प्रवर्तन्त' इति वासनामयम् । .. यत एवं हरेरिच्छाधीनं जगदतो हरेरनीहायां सृष्टि- व्यापारराहित्यावस्थायां सत्त्वादिगुणसाम्यलक्षणायां लीयते स्वस्वकारणानुप्रवेशपूर्वकमव्यक्ततामाप्नोति; न तु शून्यत्वम् ।'' इति ।

(*) अत्र स्वप्नोऽपि श्रीहरिनिर्मितत्वात् (तद्विशिष्टप्रतिमात्वेन श्रीगुरुराजद्वारा) न दोषबुद्धिः कार्या, सर्वज्ञत्वात्, स्वतन्त्रत्वाच्च । तद्यथा सन्ध्याधिकरणे (३.२.१)–

– **भक्तिरस्मिन्पाद उच्यते । भक्त्यर्थं भगवन्महिमोक्तिः ।**

**।। ॐ सन्ध्ये सृष्टिराह हि ॐ ।। न स्वप्नोऽपि तं विना प्रतीयते । ( ब्र.सू.भा.३.२.१)**

**'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजते' इत्यादि श्रुतेः ।।१।।**

**।। ॐ निर्मातारं चैके पुत्रादयश्च ॐ ।। 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः' इति च । 'एतस्माद्ध्येव पुत्रो जायत एतस्माद्भ्रातैतस्माद्भार्या यदेनं पुरुषमेष स्वप्नेनाभिहन्ति' इति गौपवनश्रुतिश्च ।।२।।**

**केन साधनेन? – ।। ॐ मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॐ ।। अनादिमनोगतान् संस्कारान्स्वेच्छामात्रेण प्रदर्शयति नान्येन साधनेन, सम्यगनभिव्यक्तत्वात् । ब्रह्माण्डे च –**

**'मनोगतांस्तु संस्कारान्स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते ।।**
**यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता । अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्' इति ।।३।।**

(अत्र श्रीत्रिविक्रमपण्डिताचार्याः स्वकीये तत्वप्रदीपे – ''**महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते**'' इति च स्कान्दे ।।'' इति ।)

।। ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ।। साधनान्तराभावेऽपि भावाभावसूचकत्वेन चेश्वरो दर्शयति ।

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने' इत्यादिश्रुतेः ।

हिशब्दाद्दर्शनाच्च ।

'यद्वाऽपि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा ।
स्वप्नस्थमथवा राजा तत्तथैव भविष्यति'
इत्याद्याचक्षते च स्वप्नविदो व्यासादयः ।। ४ ।।

* श्रीगुरुराजोऽपि गुर्वर्थदीपिकायाम् इयमधिकरणं भगवति भक्त्युद्रेकार्थं कथितमिति सूचितवान् । तथाहि – ''अपि चानन्तानन्तजीवेषु प्रतिशरीरं प्रतिदिनमतिसूक्ष्मतरकरितुरगदेहगेहयोषिदन्नपरमान्नादिविचित्रस्वोप-भोग्यपदार्थसर्जनेन सुखहेतौ महामहिम्नि स्वोपकारके परमात्मनि स्यादेव विवेकिनां भक्त्युद्रेकः । अत एवा-साधारण्येन प्रतिदिनमुक्तविधयैकैकजीवोपकारकसन्ध्यस्रष्टृत्वमहिमप्रतिपादकमिदमेवाधिकरणमादौ निबबन्ध ।'' इति ।

* **अनुव्याख्याने प्रकृत्यधिकरणेऽपि श्रीमदाचार्याः –**

**'बाध्यं नार्थक्रियाकारि न च स्वप्नोऽपि नो मृषा ।**
**वासनाजनितत्वेन तस्याप्यङ्गीकृतत्वतः ।।'** इति प्राहुः ।

**वासनात्मकशब्दानामर्थदर्शनमेव च ।**
**सत्यं न शब्दसत्यत्वमेवं हि स्वाप्ननिर्णयः[3] ।।२।।**

**अन्वयः - वासनात्मकशब्दानां च अर्थदर्शनं एव सत्यं शब्दसत्यत्वं न; एवं स्वाप्ननिर्णयः हि ।**

(व्या) (एवं हि स्वाप्नवाक्यानां वाक्यार्थनिर्णयप्रकारः । एवं च प्रतीतार्थं विहाय विवक्षितार्थगवेषणं कर्तव्यमिति भावः । क्वचिदुपदेशवाक्ये प्रतीतार्थोऽपि सत्य एवेति अपवादः स्मर्तव्यः ।।२।।)

[3] 'समं सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतात्' इति हि स्वाप्नवृन्दावनस्य महिमा । यत् श्रीमदाचार्यैः ऋग्भाष्ये (१०३,११२) सूचितं तदत्रानुसन्धेयम् । तद्यथा –

**'यादृशो योग्यतां यायात् स ज्ञेयोऽर्थस्तथा स्फुटम् ।**
**अनन्तनियमैर्युक्ता अनन्तार्थविशेषिणः ।**
**वेदा इति समासेन नियमोऽयं समीरितः ।।'** .....

गुणाधिक्यं येन भवेद् वेदस्यार्थः स एव हि ।
प्रयोजकत्वान्नान्यस्य फलाभावात् तदर्थता ।। – इति च सिद्धान्तः ।

**लौकिकस्य तु वाक्यस्य बुद्धिपूर्वं कृतस्य च ।**
**शब्दार्थोभयसत्यत्वं ग्राह्यमेव न संशयः ।।३।।**

अन्वयः – बुद्धिपूर्वकं कृतस्य लौकिकस्य वाक्यस्य तु शब्दार्थोभयसत्यत्वं ग्राह्यम् एव । न संशयः ।

(व्या) **लौकिकेति** ।। लौकिकवाक्यस्यापि बुद्धिपूर्वं कृतस्यैव शब्दार्थोभयसत्यत्वं ग्राह्यम् । (‘गोशब्दः धेनुवाचकः’ इति शब्दमर्यादयैव वाचकवाच्यभावः सम्बन्धः ग्राह्यः । आपातार्थ एव शब्दलभ्यार्थः प्रायेण । स्वप्नवाक्ये तु गोपदस्य धेनुरित्यर्थः नैव ग्राह्यः, शब्दमर्यादा त्याज्या एव । किन्तु समृद्धिरित्यादि ज्ञान्युक्तफलितार्थः ग्राह्यः इति भावः अत्र दृष्टान्तः) उपश्रुति-रूपस्य अबुद्धिकस्य तु स्वाप्नशब्दवदभिप्रेतार्थवाचकत्वं नावश्यकम् । अयमभिप्रायः – ‘‘यथा घटोस्तीति वक्तव्ये पटोऽस्तीति वाक्यमप्रमाणम् । तथा ज्ञानं भविष्यतीति वक्तव्ये क्षीरं भविष्यतीति वाक्यस्यापि प्रामाण्यासम्भवात् इदमाख्यानम् अप्रमाणम्’’ इति दोषबुद्धिः कुशलैः न कर्तव्या । अन्यत्रापि स्वप्नोक्तानां वासनात्मकशब्दानां पुत्रलाभो भवतीति वक्तव्ये मौक्तिक-लाभो भवतीत्यादिरूपाणाम् अभिप्रेतार्थवाचकत्वाभावेऽपि तत्प्रमापकमात्रेण प्रामाण्योपलम्भात् । लौकिकवाक्येऽपि अबुद्धिपूर्वके उपश्रुतिरूपे ‘देशान्तरात्पुत्रः आयाति न वा’ इति संशयसमये (मनसि स्वप्नवाक्ये उदाहृते सति) ।।३।।

**पूर्वानुभवसंस्कारात् तादृशार्थांस्तु पश्यति ।**
**शृणोति च तथा शब्दान् पूर्वसंस्कारकारणात् ।।४।।**

अन्वयः - तादृशार्थांस्तु पूर्वानुभवसंस्कारात् पश्यति; पूर्वसंस्कारकारणात् तथा शब्दान् च शृणोति ।

(व्या) स्वाप्नपदार्थानां वासनामयत्वमुपपादयति **पूर्वानुभवेति** ।। जाग्रदावस्थायां यादृशान् पदार्थान् पश्यति यादृशान् शब्दान् शृणोति तादृशसंस्कारोपादकान् अर्थान् स्वप्नेपि पश्यति । तादृशान् शब्दान् शृणोति चेति[४] ।।४।।

[४] तथाहि **अनुव्याख्याने सन्ध्याधिकरणे** (३.२.१)

वासनाः सर्ववस्तूनामनाद्यनुभवागताः ।
सन्त्येवाशेषजीवानामनादिमनसि स्थिताः ॥
त्रिगुणात्मकं मनोऽस्त्येव यावन्मुक्तिः सदातनम् ।
तत्रैवाशेषसंस्काराः सञ्चीयन्ते सदैव च ॥
सूक्ष्मत्वेन लये सञ्च प्राकृतैरुपचीयते ।
सृष्टिकाले यदा तन्न कुतः संसारसंस्थितिः ॥
संस्कारैर्भगवानेव सृष्ट्वा नानाविधं जगत् ।
स्वप्नकाले दर्शयति भ्रान्तिर्जाग्रत्त्वमेव हि ॥ – इति ।

* विष्णुतत्वविनिर्णयेऽपि स्वप्नसत्यत्वं निर्णीतं श्रीमदाचार्यैः । तद्यथा –

**मायामयीसृष्टिरपि तत्सदृशस्यान्यस्य विद्यमानत्व एव दृष्टा । द्रव्यत्वादिसादृश्ययुक्तं किञ्चिदधिष्ठानमाश्रित्यैव च ।**
**'अधिष्ठानं च सदृशं सत्यवस्तुद्वयं विना ।**
**न भ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि ॥**
**मानस्यां वासनायां तु बहिर्वस्तुत्वकल्पनम् ।**
**स्वाप्नो भ्रमश्च मायायां कर्तृदेहादिवस्तुषु ॥**
**चतुरङ्गबलत्वादिकल्पनं भ्रम इष्यते ।**
**न भ्रान्तिकल्पितं विश्वमतो विष्णुबलाश्रितम्' ॥ इति ब्रह्मवैवर्ते ।**

* पुनः विष्णुतत्वविनिर्णये – **'स्वप्नेऽपि वासनारूपं सत्यमेव जगत् मनसि स्थितं बहिःष्ठत्वेन दृश्यते'** इति ।

**अयं तु ब्राह्मणः पूर्वं मम शिष्यः सुबुद्धिमान् ।**
**तत्संस्कारवशादेव स्वप्ने वक्ष्याम्यहं द्विजम् ॥५॥**

**अन्वयः - अयं सुबुद्धिमान् ब्राह्मणः तु पूर्वं मम शिष्यः । तत् संस्कारवशात् एव अहं स्वप्ने द्विजं वक्ष्यामि ।**

(व्या) अयं त्विति ॥ अयं ब्राह्मणस्तु मच्छिष्यः; मद्दर्शितजन्यवासनामयं मद्रूपं पश्यति, मदुक्तशब्दश्रवणजन्यवासनोपादकान् शब्दान् शृणोति इत्युक्तं भवति । तर्हि स्वाप्नकृतेर्भवदुक्तं कथम्? इत्याशङ्कां वारयितुमुक्तम् – स्वप्ने वक्ष्याम्यहं द्विजमिति ॥ 'यथा जाग्रदवस्थायां भगवन्निर्मिते प्राकृतशरीरे स्थित्वा अहमुपदिशामि, तथा तद्वासनामये मच्छरीरसदृशे तैजसनिर्मिते शरीरे सन्निहितः सन् तद्वासनामयीम् इमां कृतिम् उपदिशामि' ॥५॥

[५] स्वप्ने कृत-दृष्टश्लोकान्यपि श्रीगुरुराजैः युक्तिमल्लिकायां निवेशितानि इति व्याख्यानेषु दृश्यते । तथाहि

* गुणसौरभे प्रथमश्लोके – "**अस्मिन् पद्येऽन्तिमपादो ग्रन्थकर्तुः स्वाप्नः, पादत्रयं तु तदनुसारेण ग्रन्थकृता कृतमिति बोध्यम्** । – इति श्रीसुरोत्तमतीर्थाः (भावविलासिनी व्याख्यायाम्)

* तथा हि युक्तिमल्लिकाफलसौरभम् (७२१) – 'जीवकर्तृत्वादिनानामतनिराकरणाय ग्रन्थकारेणैव कृतं स्तोत्रमस्मिन् ग्रन्थे प्रवेशयति । **स्वप्ने जाते प्रवेशितं किल** ।' – (श्रीसुरोत्तमतीर्थाः)

अत्रैव तत्रभवन्तः श्रीसत्यप्रमोदतीर्थश्रीमच्चरणाः – **'अयं स्वकृतग्रन्थस्तोत्रान्तर्गतः श्लोकः परमात्मनः स्वातन्त्र्योपपादनद्वारा तस्य मोक्षफलदातृत्वसमर्थकतया स्वस्वप्नानुसारेण फलसौरभेऽत्र निवेश्य व्याख्यायते यदभूदित्यादिना** ।।

**अहं जानामि तत्सर्वं पूर्वसंस्कारकारणम् ।**
**जातिस्मरणशीलोऽहं हयग्रीवस्य चाज्ञया ।।६।।**

**अन्वयः - पूर्वसंस्कारकारणं तत् सर्वम् अहं जानामि; हयग्रीवस्य आज्ञया च अहं जातिस्मरणशीलः ।**

**(व्या)** स्वप्नावस्थायां तैजसातिरिक्तस्य तव वचनं कथम्? इत्याशङ्कां वारयितुमुक्तम् **अहमिति** ।। स्वातन्त्र्येण तैजसस्य निर्मातृत्वेपि[६] तदात्मकस्य **हयग्रीवस्य आज्ञया** अहं वक्ष्ये। न तावता तस्य(हरेः) स्वातन्त्र्यानुपपत्तिः। तदाज्ञया ब्रह्मादीनां स्रष्टृत्वादिवत् उपपत्तेः। जन्मान्तरवासनानां कथं भवत्प्रतीतत्वमित्यत उक्तम् **जातिस्मरणेति** ।। **जातिस्मरणशीलोहं** पूर्वसंस्कारकारणं जानामि इति ।।६।।

[६] माण्डूक्योपनिषद्भाष्ये प्रथमखण्डे प्राज्ञनामकहरेः स्वप्नकर्तृत्वमुक्तम् । तथाहि –

**'कालं च तस्य स्थानस्य पतिः प्राज्ञो हरिः स्वयम् ।**
**चित्तस्थो दर्शयेद् यस्मात् तैजसः स्वप्नकृद्धरिः ।।**
**न बाह्यं ज्ञापयेद्यस्मात् प्राज्ञस्तेन जनार्दनः ।'** इति प्रकाशिकायाम् ।

(*) तथा हि महाभारततात्पर्यनिर्णये श्रीमदाचार्याः –

**देवाश्शिवाद्या अपि तु विरोधं चक्रिरे क्वचित् ।।**
**ऋषिमानुषगन्धर्वा वक्तव्याः किमतः परे ।**
**जन्मजन्मान्तराज्ञानादवजानन्ति यत्सदा ।।**
**तस्मादेको वायुरेव धर्मे भागवते स्थितः ।**
**लक्ष्मीस्सरस्वती चेति परशुक्लत्रयं स्मृतम् ।।**

सर्वमेतच्च कथितं तत्र तत्रामितात्मना ।
व्यासेनैव पुराणेषु भारते च स्वसंविदा ।। (१८/२६-२८)

(अव) एवमस्याः कृतेः निर्दुष्टत्वात् तदुक्ता मत्कीर्तिः ख्यापनीयेत्याह दुर्वादीति ।।

**दुर्वादिगर्वहर पुत्र सुखी भवस्व गुर्वादिराजकृपया सुमतिं भजस्व ।**
**शर्वादिदेववरवंद्यहरिं भजस्व चोर्व्यां सुकीर्तिमथ मेऽत्र च ख्यापयस्व ।।७।।**

अन्वयः - हे पुत्र! दुर्वादिगर्वहर! सुखी भवस्व; गुर्वादिराजकृपया सुमतिं भजस्व; शर्वादिदेववरवन्द्यहरिं भजस्व; अथ अत्र उर्व्यां च मे सुकीर्तिं च ख्यापयस्व ।

(व्या) दुर्वादिगर्वहरेति ।। दुर्वादिनां एतदाख्यानाप्रामाण्यवादिनां गर्वहर । गुर्वादिराजस्य गुरोः वादिराजस्य कृपया = मम कृपया । सुमतिं मत्कीर्तिख्यापनानुकूलसुबुद्धिं भजस्व । शर्वस्य शिवस्य आदिदेवः श्रीमदाचार्यः । तद्वरेण तदध्यापकेन वन्द्यो यो हरिः बालगोपालरूपः तं भजस्व । अथ तद्भजनानन्तरं मे सुकीर्तिम् उर्व्यां ख्यापयस्व । बालगोपालभजनानन्तरं ख्यापनशक्तिरधिका भविष्यति ।।७।।

(अव) 'मत्प्रीत्यर्थं स्त्रियापि सेवा क्रियते । त्वया तु कर्तव्या इति किमु वक्तव्यम्' इति भावेनाह – इमामिति ।।

**इमां कृतिं या लिखति स्म लेखिका वाचाऽपि पुण्यं लभते न संशयः ।**
**वृन्दावनालङ्करणेन धातुभिः सम्मार्जनाभिर्बहुपुण्यभाजनी ।।८।।**

**आरार्तिकाभिर्बहुचित्रिकाभिः सन्नामसङ्कीर्तनसंस्तवैश्च ।**
**उपाधिराहित्यवतां सुसेवां करोति सा चापि मम प्रियोऽभूत् ।।**

अन्वयः - या लेखिका इमां कृतिं लिखति स्म; वाचा अपि पुण्यं लभते न संशयः; धातुभिः सम्मार्जनादिभिः वृन्दावनालङ्करणेन बहुपुण्यभाजिनी, आरार्तिकाभिः बहुचित्रिकाभिः सन्नामसङ्कीर्तनसंस्तवैः च उपाधिराहित्यवतां सुसेवां करोति; सा अपि च मम प्रियः अभूत् ।

(व्या) काचिद्योषा इमां कृतिं लिखति । लेखकाय वित्तं दत्वा लेखनं कारयति वाचा 'गुरुराजः जीवोत्तमः' इत्यादिरूपया वाचापि पुण्यं लभते । ऋजुत्वादि विषये तस्याः संशयो

न भविष्यति । **धातुभिः वृन्दावनालङ्करणेन** वृन्दावनसमीपदेशालङ्करणेन वा, गेहस्थतुलसी-तुलसीवृन्दावनालङ्करणेन वा, **सम्मार्जनादिभिः** भगवद्गेहसम्मार्जनाभिः, **बहुचित्रिकाभिः आरार्तिकाभिः**, सन्नाम सङ्कीर्तनसंस्तवैश्च भगवन्नामकीर्तनसंस्तवैश्च, **उपाधिराहित्यवतां** वेतनाद्युपाधिराहित्यवतां सज्जनानां **सुसेवां करोति** । **साऽपि ममप्रियः अभूत्** । मत्प्रीतिविषयः अभूत् । अत्र 'प्रिया अभूदिति'वक्तव्ये 'प्रियोऽभूदि'त्युक्त्या स्वातन्त्र्यादिना ईषत्पुरुषसादृश्यं सूचयति ।। (स्त्रियं प्रति स्वप्रीतेः निर्मलत्वं द्योतयति) ।। लक्ष्मीपतिप्रकरणं संपूर्णं ।।

२. पुष्यनक्षत्रसञ्जातप्राप्तयतिभावविप्रपरमगुरुप्रकरणम्।। श्लोकौ (१०-११)

(व्या) **'मद्भागवतमुख्यान्'** इत्यारभ्य **'नागशयनः सुबुद्धिमान्'** इत्यन्तं पुष्पनक्षत्र-सञ्जातप्राप्तयतिभावविप्रगुरुश्रोतृकं द्वितीयं प्रकरणम् ।। 'उर्व्यां सुकीर्तिमथ मेऽत्र च ख्यापय' इत्युक्तपुरुषस्यकृतिप्रदातुः विप्रस्य गुरौ पितरि पितृव्ये च अपरित्याज्यत्वकथनात् तदनु-ग्राहकत्वरूपं भौमभाक्तलौकिकवैभवमुच्यते **मद्भागवतमुख्यांस्त्विति** ।।

**मद्भागवतमुख्यांस्तु त्रीन् दासांश्च सहोदरान् ।**
**मा त्यज त्वं हि मत्पुत्र ते वै मम प्रियाः सदा ।।१०।।**

अन्वयः - हे मत्पुत्र! मद्भागवतमुख्यांस्तु सहोदरान् त्रीन् दासांश्च त्वं मा त्यज; सदा ते मम प्रियाः वै ।

**नागशयनहनूमन्तौ तौ सदा वै मम प्रियौ ।**
**अहं जानामि तद्भक्तिं नागशयनः सुबुद्धिमान् ।।११।।**

अन्वयः - नागशयनः हनूमान् तौ सदा वै मम प्रियौ; नागशयनः सुबुद्धिमान् तद्भक्तिं अहं जानामि ।

(व्या) अनन्तासनस्य हरेर्भक्तत्वात् (अनन्तेश्वरस्य देवस्येति यावत्) **नागशयनः** । हनुमदुपासकत्वाद्धनूमान् । अत्र आद्यः विप्रस्य पिता । द्वितीयः पितृव्यः । तृतीयः सन्न्यास-प्रदो विठ्ठलः । उत्तरत्र तद्वृत्तान्तमुच्यते ।।१०।। **'नागशयनः सुबुद्धिमान्'** इत्यनेन तत्सहो-दरस्य विठ्ठलस्य संस्थानप्राप्तौ तदीयबुद्धेरुपयोग इति सूचितम् ।।११।।

३. विप्रप्रकरणम्।। श्लोकाः (१२-१८)

(व्या) 'वेदवेद्य' इत्यारभ्य 'नैवेद्यं नैव गृह्णामि तावत्पर्यन्तमेव ते' इत्यन्तं तृतीयं विप्रश्रोतृकप्रकरणम् । अत्र नागशयनपुत्रत्वेन बुद्धिसन्निहितेन विप्रेण व्यासादीनां त्रयाणां कृति-लाभकथनात् तदनुग्राहकत्वरूपं भौमलौकिकभाक्तवैभवमुच्यते ।। 'हयास्याराधनेनैव ममानन्दप्रदो भव' इति विप्रसन्निहितरूपेण हयवदनाराधकत्वरूपभौमभाक्तभागवतवैभवसूचनं च क्रियते – वेदवेद्येति ।।

**वेदवेद्यसुबुद्धस्त्वं दुर्बुद्धिं दुर्धरेरिताम् ।**
**त्यजेमां सुजनश्रेष्ठ मज्जनप्राणहारिणीम् ।।१२।।**

**ममाशीर्वचनेनैव चिरं जीव सुखी भव ।**
**हयास्याराधनेनैव ममानन्दप्रदो भव ।।१३।।**

अन्वयः - हे वेदवेद्यसुबुद्ध! सुजनश्रेष्ठ! त्वं दुर्धरेरितां इमां मज्जनप्राणहारिणीं दुर्बुद्धिं त्यज । मम आशीर्वचनेन एव चिरं जीव सुखी भव; हयास्याराधनेन एव मम आनन्दप्रदः भव ।

(व्या) हे विप्र! त्वं **वेदवेद्यसुबुद्धः** = वेदवेद्यो बादरायणः सुबुद्धः सम्यक्ज्ञातः येन सः । **दुर्धरेरितां** = दुष्टा अन्यार्जिता धरा भूमिर्येन सः यस्य सः इति वा, तेन ईरिताम् । **(मज्जनप्राणहारिणीम् =)** मज्जनस्य सीतापतेः प्राणहारिणीं **दुर्बुद्धिं त्यज** । हे मज्जनविप्र! तव प्राणहारिणीं दुर्बुद्धिमिति वा । अस्याभिप्रायः एवं ज्ञातव्यः केनचिद्दुष्टपुरुषेण सोदापुरे कश्चिद्दुष्टः औषधादिना प्राणापहारी क्लृप्तः, तस्मिन् समये विप्रो बोधितः 'इदानीं सोदापुर-निवासे हयवदनपूजनं वृन्दावनपूजनं च इति उभयलाभो भविष्यति' इति । सा सुबुद्धिः इव प्रतीयमाना अपि दुर्बुद्धिः, परित्याज्यः' इति भावः । तर्हि मम हयवदनवृन्दावनयोः पूजालाभा-भावेन न्यूनता स्यात्' इति शङ्कां वारयितुमाह - **हयास्य इति** ।। हे विप्र आयुष्मान् भव, आरोग्यवान् भव ।

(*) 'दुर्धरेरितां बुद्धिम्' इत्यनेन गुरुः श्रीगुरुराजः शरणं प्राप्तस्य शिष्यस्य हितं मनसि निधाय, तत्काले 'इदं दुष्टबुद्ध्या प्रेरितम्' इत्यनभिज्ञस्य विप्रस्य अनुग्रहार्थं सूक्ष्ममार्गे प्रेरयति इति द्रष्टव्यम् । तादृशो हि गुर्वनुग्रहः ।

**वृन्दावने दन्दशूकधारिणं दास्यधारिणम् ।**
**मन्दारमालिनां शान्तिशालिनः कमलात्मनः ।।१४।।**

**इति मां विद्धि सद्बुद्धिं हयग्रीवकृपोदधिम् ।**
**वेदवेद्यसदाराध्य शुद्ध मत्पट्टवर्धन ।।१५।।**

अन्वयः - हे वेदवेद्यसदाराध्य! शुद्ध! मत्पट्टवर्धन! वृन्दावने शान्तिशालिनः कमलात्मनः दास्यधारिणं मन्दारमालिनां दन्दशूकधारिणं हयग्रीवकृपोदधिं सद्बुद्धिम् इति मां विद्धि ।

(*) दन्दशूकधारिणम् – इत्यनेन ''तत्काले अहम् क्लृप्त प्राणापहारी दुष्टेन तव रक्षणार्थं दन्दशूकधारी भूत्वा, श्रीहयग्रीवस्वामिनम् आराध्य, तं दुष्टं निवारयामि; तादृशसमये तव सोदापुरागमनं नावश्यकम्; किन्तु तव व्याससीतापत्योः समीपे अनुग्रहार्थं गन्तव्यम्'' इति सूचयति ।

**व्यासेन सीतापतिना शेषेणापि च न श्रुतम् ।**
**तैः श्रुतं चेदिदं सर्वं त्रैलोक्यं श्रुतमेव हि(च) ।।१६।।**

**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमा(म)न् ।**
**त्रीनुद्दिश्य मया प्रोक्तं त्वां विशेषान्न संशयः ।।१७।।**

अन्वयः - हे बुद्धिमन्! व्यासेन सीतापतिना च शेषण अपि न श्रुतम् । 'इदं तैः श्रुतं चेत् त्रैलोक्यं सर्वं श्रुतं एव हि' इति पूर्वं मया प्रोक्तम् अनुसन्धत्स्व । त्रीन् विशेषात् त्वां उद्दिश्य मया प्रोक्तम्; न संशयः ।

(व्या) तत्र विप्रेण कर्तव्यमाह **व्यासेनेति** ।। 'तैः श्रुतं चेदिदं सर्वं त्रैलोक्यं श्रुतमेव हि(च)' इति पूर्वाध्यायोक्तप्रमेयं (११६) अत्रानुसन्धेयम् । (बुद्धिमान् इत्यनेन तव तादृश-स्मृतिर्भविष्यतीति सूचितो भवति) तस्मिन्स्थले व्यक्तित्रयनिर्णयस्य भवितव्यत्वादिति भावः ।।

**अतस्त्रयाणां भक्तानां तेषां प्रेषय मत्कृतिम् ।**
**नैवेद्यं नैव गृह्णामि तावत्पर्यन्तमेव ते ।।१८।।**

अन्वयः - अतः भक्तानां तेषां त्रयाणां मत्कृतिं प्रेषय; तावत्पर्यन्तं एव ते नैवेद्यं नैव गृह्णामि ।

**(व्या)** त्रयाणां कृतिप्रेषणपर्यन्तं त्वदर्पित**नैवेद्यं न गृह्णामी**त्युक्त्या,

**नैवेद्यं मृष्टमन्नं मे यावन्न क्रियते द्विज ।**
**तावत्कुरुष्व त्वं नक्तव्रतं निरशनं मम ।।**

इत्यन्यत्रोक्त्या च अतीतजन्मवृत्तान्तसूचकमुक्तं भवति।। (एतदध्यायप्रथमश्लोकोक्तरीत्या एतत् सर्वं भविष्यत्कालीनार्थानुसारेण ज्ञातव्यम् ।) शब्दानामापाततः प्रतीतार्थानां बाधितत्वात् ।।

**४. शेषप्रकरणम् ।। श्लोकाः (१९-२६)**

**(व्या) वृन्दावने**त्यारभ्य 'हयग्रीवस्य चाज्ञया' इत्यन्तं शेषश्रोतृकं चतुर्थप्रकरणम् ।। अत्र पूर्वप्रकरणोक्तव्यक्तित्रयान्तर्गतशेषेण भूपं प्रति हितपद्यत्रयस्य वक्तव्यता कथनात् । तदनुग्राहकत्वरूपं भौमभाक्तवैभवम्; तदनुग्राहकरामप्रणामकथनात् भौमभागवतवैभवं चोच्यते **वृन्दावन इति** ।।

**वृन्दावने मदनमर्दनरुद्रहृद्यं सद्भिः प्रवन्दितपदं मदनाभिरामम् ।**
**वृन्दारकेन्द्रमरुदंशसुमर्दिताङ्गं रक्षो विदार्य वरदं प्रणमामि रामम् ।।१९।।**

(अन्वय) मदनमर्दनरुद्रहृद्यं सद्भिः प्रवन्दितपदं मदनाभिरामं वृन्दारकेन्द्रमरुदंश-सुमर्दितांगं रक्षः विदार्य वरदं वृन्दावने (सन्निहितं) रामं प्रणमामि।।

**(व्या)** पद्यार्थः प्रथमाध्याये कथितः (१/५१) । नृपं प्रत्युपदेशकाले शेषेण तदनुग्राहकत्वतया रामस्य स्मर्तव्यत्वता सूचनाय अत्र पुनस्तदुदारहणम् ।।१९।।

(*) पदार्थस्तु – वृन्दावने सन्निहितं मदनमर्दनरुद्रहृद्यम् = मन्मथमर्दकस्य शिवस्य हृद्यम् । अत एव हनुमद्भीममध्वहृषीकेशतीर्थपद्मनाभतीर्थाद्यैः सद्भिः प्रवन्दितपदम् । मदनमर्दनेत्यनेन यत्याश्रमस्थैः पूजितप्रतीकस्थत्वं सूचितम् । नृपानुग्राहकत्वसूचनाय मदनाभिराममित्यादि । वृन्दारकेंद्रमरुदंश-सुमर्दितांगम् । रक्षः रावणाख्यं विदार्य । वरदं विभीषणादिवरप्रदम् । अस्य नृपस्याज्ञया शत्रूणां वधो भवतीति सूचनाय रक्षो विदार्येति ।। राज्यलाभसूचनाय वरदमिति ।। – इति । (सौकर्यार्थम् इह मुद्रितः)

**अरसभूप चिरपट्टवर्धन परशुचापधरदुष्टमर्दन ।**
**निरशपापहरशिष्टशोधन परसुपापकरदुष्टसूदन ।।२०।।**

अन्वयः - अरसभूप चिरपट्टवर्धन परशुचापधरदुष्टमर्दन निरशपापहरशिष्टशोधन पर-सुपापकरदुष्टसूदन.

**(व्या) अरसभूप इति ।।** भूपंप्रति वक्तव्यपद्यत्रयमाह **अरसेति ।। अरसभूप** । न विद्यते रसा येषां ते अरसाः केचित्पुरुषाः, ते भूपाः स्वभूमिपालकाः कालविशेषे यस्य सः तस्य सम्बुद्धिः हे अरसभूप; अरसाः नीचाः भूपाः यस्य सः तस्य सम्बुद्धिरिति वा । **हे अरसभूप! चिरपट्टवर्धन** = चिरपट्टं स्थिरपट्टं वर्धयतीति तथोक्तः । परशुचापधराणां वनचराणां केषाञ्चि-दुष्टानां मर्दन । **निरशपापहरशिष्टशोधन** = निरशः कालविशेषे कृत निरशनव्रतः यः शिष्टः । तं स्वानुग्राहकत्वेन शोधयति परीक्षया जानातीति तथोक्तः । तस्य सम्बुद्धिः । परेषां सुपाप-करान् दुष्टान् सूदयतीति तथोक्तः । तस्य सम्बुद्धिः । अस्मिन् पद्ये सम्बुद्ध्यन्तानि पञ्चपदानि सन्ति । तदभिप्रायविचारे सति व्यासादिव्यक्तित्रयनिर्णयसमये तद्देशीयः कश्चिद्भूपः; तद्राज्ये केचिद्दुष्टाः भविष्यन्ति । तेषु केषाञ्चिन्निग्रहः, केषाञ्चित् हननं च भविष्यति । तदा भूस्वामित्वरहिताः नीचाः केचित् देशपरिपालका भविष्यन्ति । न तावन्मात्रेण राज्यापगमः । कालक्रमेण राज्यलाभो।पि भविष्यति । तदा स भूपः शिष्टविप्रे भक्तिं करिष्यति इति भावो ज्ञायते ।।२०।।

**रथोत्सवस्य भारोऽयं तावकः पावकप्रभ ।**
**कालोऽयं मम सेवायाः बालोऽयं मम पुत्रकः ।।२१।।**

**अन्वयः - हे पावकप्रभ! अयं रथोत्सवस्य भारः तावकः; अयं मम सेवायाः कालः; अयं मम पुत्रकः बालः ।**

**(व्या)** राज्यप्राप्तिसाधनत्वेन भूपेन सङ्कल्पनीयमाह – **रथोत्सवेति ।। हे पावकप्रभ!** पावकस्य प्रभेव प्रभा यस्य सः तस्य सम्बुद्धिः । **रथोत्सवस्य भारः तावकः** । अस्मिन् काले मया सेवा कथं कर्तव्या? इत्यत उक्तम् - **कालोऽयमिति ।।** अनिष्टनिवृत्त्यर्थं इष्टप्राप्त्यर्थं च अस्मिन् काले सेवासङ्कल्पः कर्तव्यः । मम पुत्रकः विप्रः साक्षात् त्वद्बोधने प्रयत्नरहितत्वात् बाल इव ।।२१।।

**अन्तरायः कुतो ह्यस्य शान्तरायाश्च शत्रवः ।**
**भविष्यंति न संदेहो मम विघ्नकराः सदा ।।२२।।**

**अन्वयः - अस्य अन्तरायः कुतः? सदा मम विघ्नकराः शत्रवः च शान्तरायाः भविष्यन्ति; न सन्देहः ।**

(व्या) अन्तराय चिन्ता न कर्तव्येत्याह – **अन्तराया इति** ।। अस्य मदभिमतकार्यस्य अन्तरायः विघ्नः कुतः? न कुतोपि । तव शत्रवः शान्तरायाः शान्तधनाः । नीचानां राज्य-पालनसमये धनाधिक्यदर्शने विघ्नशङ्का कार्या । तदभावाद्विघ्नशङ्का न कार्येति भावः । रायशब्दस्य धनवाचकत्वम् । 'तं राये तं सुवीर्ये' इत्यत्र ऋग्वेदे दृष्टं भविष्यति । ये तव विघ्नकराः ते मम विघ्नकराः तस्मात् तन्निग्रहः मत्प्रयत्नेन भविष्यति इति भावः ।।२२।।

**एतत्पद्यत्रयं शेष वदस्व त्वं च भूपतेः ।**
**यतस्त्वं पण्डितः शौण्डः तन्मण्डनपरो भव ।।२३।।**
**सर्वं वक्तव्यमुक्तं च कृतार्थोऽहं न संशयः ।**

अन्वयः - हे शेष! त्वं भूपतेः एतत् पद्यत्रयं च वदस्व; यतः त्वं पण्डितः शौण्डः तत् मण्डनपरः भव; वक्तव्यं सर्वं उक्तं च; अहं कृतार्थः न संशयः ।

(व्या) **हे शेष!** भूपतेरेतत्पद्यत्रयं वदस्व । बहुषु सत्सु कुतो मया वक्तव्यमित्यत उक्तम् **यत इति** ।। यस्मात् त्वं समर्थः पण्डितः तस्मात् त्वया वक्तव्यम् । **पण्डित** इत्यनेन तस्मिन् काले शेषस्य 'पण्डित' इति व्यवहार इति सूचितं भवति । तन्मण्डनपरः भूपालङ्करणतत्परो भव ।। सर्वं नृपं प्रति यद्वक्तव्यं तत्सर्वमुक्तम् । **कृतार्थोऽहमिति** ।। अहं अहङ्कारी शेषः । कृतार्थः ।।२३।।

**मद्वेतनेनैव तु यश्च जीवन्(ति) मन्नामधारी मदनुग्रही च ।**
**पठेत स्वाप्नीं मम सत्कृतिं च नो चेददण्ड्यस्य करोमि तीव्रम् ।।२४।।**

अन्वयः - यः च मद् वेतनेन एव तु जीवन्(ति) मन्नामधारी मदनुग्रही च; स्वाप्नीं मम सत्कृतिं च पठेत; नो चेत् अदण्ड्यस्य तीव्रं करोमि ।

(व्या) कृतिपठनाभावे तद्योग्यस्य शिक्षा क्रियते । पठतां सर्वाभीष्टं भविष्यतीत्याह - **मद्वेतनेनेति** ।।२४।।

**एवं मद्भक्तिमन्तश्च सर्व एव पठन्त्विमाम् ।**
**ख्यातां कुर्वंतु लोकेषु नो चेन्मद्द्रोहिणश्च ते ।।**

अन्वयः - एवम् इमां भक्तिमन्तः सर्व एव पठन्तु; लोकेषु ख्यातां च कुर्वन्तु; नो चेत् ते च मद्द्रोहिणः (भविष्यन्ति).

**पठतां शृण्वतां चापि ख्यातामुर्व्यां प्रकुर्वताम् ।**
**सर्वेष्टानि भविष्यन्ति हयग्रीवस्य चाज्ञया ॥२६॥**

अन्वयः - पठतां शृण्वतां च उर्व्यां ख्यातां प्रकुर्वताम् च अपि; हयग्रीवस्य आज्ञया सर्वेष्टानि भविष्यन्ति ।

(व्या) (स्पष्टम् । 'योग्येषु प्राप्तेषु, ज्ञानार्थिषु पृच्छत्सु प्रकटनं धर्म' इत्यर्थः । हयग्रीव-स्याज्ञया सर्वेष्टानि भविष्यन्ति' इति योजना कार्या । तेन अयोग्येभ्यः उपदेशो न देयः इति लभ्यते)॥

५. विप्रप्रकरणम् ॥ श्लोकाः (२७-३१)

(व्या) **यो मनांसी**त्यारभ्य **'शापभीतो न भक्तिभाग्'** इत्यन्तं विप्रश्रोतृकपञ्चमं प्रक-रणम् । पूर्वप्रकरणे शेषेण नृपहितपद्यत्रयकथनेन भवितव्यमुक्त्वा, व्यासं प्रति सीतापतिं प्रति च विप्रेण कृतेर्वक्तव्यत्वम्, कथनोपयुक्त व्याससीतापतिकृतसर्वसमर्पणकथनात् तदुभयपूज्यत्व- रूपं, शापभीतेन भक्तिरहितेन शेषाद्रिपण्डितेन पूज्यत्वरूपं च भौमभाक्तलौकिकवैभवमत्रो- च्यते ॥

**यो मनांसि तनुमर्पितवान् ममैतत् सर्वं धनं कनकपूर्णमथाभिषेकम् ।**
**यश्चाकरोद्विततभक्तियुताय तस्मै गत्वा वदस्व मम सत्कृतिमाशु विप्र ॥२७॥**

**व्यासाय भक्तिकोशाय दासाय मम नित्यशः ।**
**वैष्णवस्नेहपाशाय तोषाय वद मत्कृतिम् ॥२८॥**

अन्वयः - हे विप्र! यः मनांसि तनुं धनं एतत् सर्वं च मम अर्पितवान्; अथ कनकपूर्णं अभिषेकं च यः अकरोत्, विततभक्तियुताय तस्मै (तत्र) गत्वा मम सत्कृतिम् आशु वदस्व; वैष्णवस्नेहपाशाय मम भक्तिकोशाय नित्यशः दासाय व्यासाय (तस्य) मत्कृतिं वद.

(व्या) 'व्यासाय वद' इत्येतावता पूर्तौ 'यो मनांसि' इत्यादि तदनुमापकलक्षण- कथनार्थं **यः मनांसि** मनःप्रभृतिसर्वेन्द्रियाणि **तनुं** शरीरं **सर्वं धनं चार्पितवान्** । **अथ** अनन्तरं **कनकपूर्णम् अभिषेकं यः अकरोत् तस्मै वैष्णवस्नेहपाशाय मम नित्यशः दासाय भक्ति-कोशाय** भक्तिरूपधनस्य कोशभूताय **व्यासाय मत्कृतिं वद** । सर्मर्पिताखिलकत्वं सीतापतौ ।

एवम् अन्यदपि प्रत्येकमन्यत्रविद्यमानमपि मिलितं सत् एकस्य स्वरूपानुमापकम् ।।२७२८।।
(निश्चितहरिभक्त्यादिगुणोपेते अधिकारिणि उपलब्धे सति तस्मै उपदेशः कार्य एव । हय-ग्रीवाज्ञा प्रतीक्षा न कार्येति वा, शिष्यगुणवर्णनं क्रियते ।)

* श्रीमदाचार्याः ऐतरेयोपनिषद्भाष्ये (द्वितीयप्रघट्टके) शिष्यस्य लक्षणं निर्दिष्टवन्तः । तथाहि-
एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्या आचार्याः ।।(उ)

* 'एवं विशिष्टप्राणात्मबलाद्यखिलसद्गुणैः ।
पूर्णस्वभावः सर्वेषां वचसामर्थ ईरितः ।।
संहिताख्यानि विष्णोस्तु रूपाण्येतानि सर्वशः ।
अन्यविद्यास्वशिष्यस्य न ब्रूयात् प्रथमं क्वचित् ।।
व्याख्यानशक्तिहीनाय नैव ब्रूयात् कथञ्चन ।
वैष्णवाय सुवृत्ताय मेधाश्रद्धायुताय च ।।
गुरोः शुश्रूषकायैव ब्रूयादित्यनुशासनम् ।। इति च । - (भाष्यम्)

**तस्यानुजस्य मयि सर्वसमर्पकस्य भक्त्यादिमुख्यगुणसङ्ग्रहणस्य तस्य ।**
**पूर्वं हयास्यचरणस्मरणोत्सुकोऽपि दुर्विप्रनिग्रहवतो वद मत्कृतिं च ।।२९।।**

अन्वयः- मयि सर्वसमर्पकस्य भक्त्यादिमुख्यगुणसङ्ग्रहणस्य तस्यानुजस्य पूर्वं हयास्य-चरणस्मरणोत्सुकः अपि दुर्विप्रनिग्रहवतः तस्य च मत्कृतिं वद ।

(व्या) **तस्यानुज्यस्य** तदनन्तरोत्पन्नस्य **दुर्विप्रनिग्रहवतः** दुष्टानां यतित्वेनोत्पन्न-विप्रापकारिणां निग्रहवतः । कालविशेषे तत्कृतनिग्रहवतः । कालविशेषे तेषां निग्रहकारिणः सीतापतेः । त्वं **पूर्वं हयास्यचरणस्मरणोत्सुकोऽपि** = पूर्वं सीतापतेः मठाधिपत्यं प्रदातव्य-मिति मनसि निधाय तत्पूज्यत्वेन हयग्रीवचरणस्मरणोत्सुकोऽपि **मत्कृतिं वद** । अनेन 'सीतापतेः सन्न्यासो न भविष्यति । कृतिकथनादिना तस्मिन्ननुग्रहः कर्तव्यः' इति सूचितं भवति । 'समर्पिताखिलकत्वे सति दुर्विप्रनिग्राहकत्वम्' सीतापतेः लक्षणम् ।।२९।।

**वेनवद्वेतनान्नं च यस्य भुङ्क्ते सुदुर्मतिः ।**
**तस्येष्टदेवस्मरणे महत्कोपादभूदहो ।।३०।।**

अन्वयः - यस्य वेतनान्नं वेनवत् सुदुर्मतिः भुङ्क्ते तस्य च इष्टदेवस्मरणे कोपाद् महत् (दुःखं) अभूत्; अहो.

(व्या) **वेनवदिति** ।। वेनवदैक्यवादी शेषाद्रिपण्डितः । यस्य वेतनान्नं नारसिंहादे- र्वेतनान्नं भुङ्क्ते; तस्य नारसिंहादेः इष्टदेवस्य श्रीरामस्य स्मरणे, सर्वोत्तमत्वेन स्मरणे, कोपात् महदुःखमभूत् ।। इति विप्र.प्र.सं।।५।।

**इदं सर्वेऽपि जानन्ति तद्द्वेषान्नोच्यते मया ।**
**सोऽपि मत्पादमापन्नः शापभीतो न भक्तिभाक् ।।३१।।**

अन्वयः - इदं सर्वेऽपि जानन्ति; मया तद्द्वेषात् न उच्यते; सः शापभीतः सन् मत्पादमापन्नः । न भक्तिभाक् ।

६. सीतापतिप्रकरणम्।। श्लोकाः (३२-२९)

(व्या) **'ब्राह्मणम्'** इत्यारभ्य **'मुक्तेर्नास्ति ततोधिकम्'** इत्यन्तं सीतापतिश्रोतृकं षष्ठं प्रकरणम् । चतुःश्लोकात्मकं अत्र सीतापतिना विप्रस्य अपरित्याज्यत्वस्य कृतिं वदता- मुपादेयत्वस्य तदन्येषां त्याज्यत्वादेश्च कथनात् । तदनुग्राहकत्वरूपं भौमभाक्तवैभवमुच्यते ब्राह्मणं मानिनमित्यादिना ।।

**ब्राह्मणं मानिनं मानं हित्वा मत्पादसेवनम् ।**
**कुर्वाणमनिशं विद्वन् मा त्यज त्वममायिनम् ।।३२।।**

(अन्वयः) हे विद्वन्! मानं हित्वा मत्पादसेवनम् अनिशं कुर्वाणम् अमायिनं ब्राह्मणं त्वं मा त्यज ।

(व्या) **ब्राह्मणं मानिनमिति ।। मानं** गर्वं **हित्वा मत्पादसेवनमनिशं कुर्वाणम् अमायिनम्** अकपटिनं ब्राह्मणं (मानिनं प्रामाणिकज्ञानयुक्तं हे विद्वन्) **मा त्यज** ।

**मद्वेतनान्नं भुञ्जाना ये वै कुजनबुद्धयः ।**
**तेष्वेकोऽपि तु मत्पद्यं तदर्थं वा न वक्त्यहो ।।३३।।**

(अन्वयः) मद्वेतनान्नं भुञ्जानाः कुजनबुद्धयः ये वै; तेषु एकः अपि मत्पद्यं वा तदर्थं तु न वक्ति; अहो!

(व्या) (**मद्वेतनान्नं** मया मठे दत्तवेतनप्राप्तम् अन्नं भुक्त्वापि, ये मत्कृतिपारायणे अलसाः ते दैत्याविष्टबुद्धियुक्ताः, ते सर्वे नैव कृतिपारायणं कुर्वन्ति । नापि इतरेभ्यो उपदिशन्ति) ।।

**मत्कृतिं वदतां पुत्र तदर्थं वदतां तथा ।**
**मद्वेतनां ददस्व त्वमन्यथा मा ददस्व भो ॥३४॥**

(अन्वयः) हे पुत्र! भो! मत्कृतिं वदतां तथा तदर्थं वदतां त्वं मद्वेतनां ददस्व । अन्यथा मा ददस्व ।

**(व्या) हे सीतापते** तादृशमठीयसेवकानां त्वं ब्रूहि । 'कृतिपारायणे वेतना दीयते । अन्यथा वेतना नैव दीयते' इत्युक्त्वा तान् कृतिपारायणरतान् कुरु इति भावः । अयं च न्यायः सर्वशिष्यसाधारणः 'गुरुराजकृपया धनादिकं राज्ये अधिकारादिकं प्राप्यापि ये कृति- विमुखाः ते अभक्ततुल्याः' इति सूचितो भवति । (अनेन सीतापतिः मठे सर्वाधिकारस्थाने नियुक्त अधिकारिविशेषः इति ज्ञायते ।)

**मद्वेतनेन शून्येऽस्मिन् विप्रे जातः पराग्रहः ।**
**जनेषु वक्ति मत्पद्यं तदर्थं मयि भक्तमान् ॥३५॥**

(अन्वयः) मद्वेतनेन शून्ये अस्मिन् विप्रे जातः पराग्रहः; (सः) मत्पद्यं जनेषु वक्ति । मयि भक्तिमान् (भवति) ।

**(व्या) मद्वेतनेनेति ॥ मद्वेतनेन शून्ये** जने, **विप्रे** विप्रविषये, **पराग्रहः** उत्कृष्ट आग्रहः सुज्ञानरूपः जातः । स जनः मत्पद्यार्थं जनेषु वक्ति । मयि भक्तिमान् जातः । एवं सति मद्वेतनभोजिनाम् अविश्वासे त्याज्यत्वं युक्तमेवेति भावः ॥३५॥

**अहं शपे सुपापिनं कुपात्रसादभूद्धनम् ।**
**मया।त्र जीवितं बहु सुपुत्र मा ददस्व ह ॥३६॥**

अन्वयः – अहं सुपापिनं शपे; कुपात्रसादभूत् धनं मा ददस्व; मया अत्र बहु जीवितम् ।

**(व्या) अहं शप इति ॥ सुपापिनं** जानीहि त्वम् । **'सुपापिनम्'** इत्यत्र वक्ष्यमाणं सुपापिनम् अहं शपे ॥ तस्मै धनं मा ददस्व । **'मयाऽत्र जीवितम्'** इत्यनेन स्वस्या- परित्यक्तदेहतया निखिलद्रष्टृतया च अवस्थानमुक्तं भवति ॥३६॥

**ब्राह्मणं गुणमणिं शृणु पुत्र चारुवीजितसुचामरपाणिम् ।**
**पुण्यपूर्णगुणभूषणकीर्तेरग्रजत्व(मिमं)मम मा त्यज तूर्णम् ॥३७॥**

अन्वयः- अग्रजत्वमम पुत्र! पूर्णपुण्यगुणभूषणकीर्तेः चारुवीजितसुचामरपाणिं गुण-मणिं ब्राह्मणं शृणु! तूर्णं मा त्यज.

(व्या) 'ब्राह्मणं गुणमणिम्' इति ।। 'पुण्यपूर्णगुणभूषणकीर्तेब्राह्मणस्य मूर्तेः' इति पाठान्तरम् । अग्रजत्वमम अनेन 'विप्रस्य यतित्वसमये सीतापतेरग्रजः' इति व्यवहार्यमाणत्वं सूचितं भवति । 'तूर्णं मा त्यज' इत्यनेन दुष्टानां दुरुक्त्या विक्षिप्तचित्तस्य सीतापतेः विप्र-परित्यागेच्छा प्रसक्तौ सर्वथा विप्रो न त्याज्य इति हितोपदेशः कृतो भवति ।।३७।।

**ब्राह्मणं गुणवन्तं च ऋणवन्तं गुणार्णवम् ।**
**जानीहि गुणिनः फणिनो वदस्वास्य च तदृणम् ।।३८।।**

**ऋणान्मुक्तिश्च विप्रस्य साक्षान्मुक्तिर्न संशयः ।**
**भोज्यवित्ते प्रदत्ते हि भुक्तेर्नास्ति ततोऽधिकम् ।।३९।।**

अन्वयः - गुणवन्तं ऋणवन्तं गुणार्णवं ब्राह्मणं जानीहि; अस्य तदृणं च गुणिनः फणिनः वदस्व; विप्रस्य ऋणात् मुक्तिः साक्षात् मुक्तिः न संशयः; भोज्यवित्ते प्रदत्ते हि ततः अधिकं भुक्तेः नास्ति ।

(व्या) ब्राह्मणं गुणवन्तं इति ।। फणिनो शेषस्य वदस्व । ऋणान्मुक्तिरिति ।। ऋणा-न्मुक्तिः = विप्रस्य साक्षान्मुक्तिसमा । भोज्यवित्ते ग्रामादिलब्धे साकल्येन ऋणपरिहारार्थं दत्ते । ततोऽधिकं भुक्तेर्नास्ति । तस्मात् शेषोपकारेण कतिपयऋणमुक्तिर्भाविनी; तदर्थं सीता-पतिना वक्तव्यमित्युक्तं भवति ।।३९।। इति सी.प.प्र.सं. ।।प्र६।।

### ७. पुष्यनक्षत्रसञ्जातविप्रगुरुप्रकरणम् ।। श्लोकार्धं (३९१/२)

(व्या) 'मद्वाचं' इत्यारभ्य 'मा वृथाकुरु' इत्यन्तमर्धश्लोकः पुष्यनक्षत्रसञ्जातविप्रगुरु-प्रकरणम् ।

**मद्वाचं नन्दन त्वं हि सर्वथा मा वृथा कुरु ।।**

अन्वयः - हे नन्दन! त्वं मद्वाचं हि सर्वथा मा वृथा कुरु ।

(व्या) (हे नन्दन!पुष्यनक्षत्रसञ्जातसुतृप्तविठ्ठल! त्वं, मद्वाचं 'विप्रतिरस्कारं मा कुरु' इति मद्वचनं, मा वृथा कुरु; किन्तु अनुचर । तेन तव श्रेयःप्राप्तिरस्तीति भावः ।।)

८. विप्रपरमगुरुप्रकरणम्।। श्लोकाः (४०-४३१/२)

(व्या) तदनन्तरं **'मन्मठस्याधिपत्ये तु'** इत्यारभ्य **'नागशयनः सुबुद्धिमान्'** इत्यन्तं अष्टमं पुष्यनक्षत्रसञ्जातविप्रपरमगुरुश्रोतृकप्रकरणम् । अत्र विप्रस्य संस्थानप्रदातुः विठ्ठलस्य संस्थानाभावे अभिमतसिद्ध्ययोगात् । पुष्यनक्षत्रसञ्जातेन पुष्यनक्षत्रसञ्जातविठ्ठलस्य संस्थानं प्रदातव्यमिति कथनात् तदनुग्राहकत्वरूपं भौमभाक्तवैभवमुच्यते ।।

**मन्मठस्याधिपत्ये तु विठ्ठलं पट्टवर्धन ।।४०।।**

**स्फुटं कार्यपटुं मत्वा पट्टपच्छोटिकां दिश ।**
**पूर्वं प्रामादिकी बुद्धिः स्यात्तस्य न तु साहजा ।।४१।।**

**निर्वेदनामिदानीं तु संप्राप्तश्च न संशयः ।**

अन्वयः - मन्मठस्य आधिपत्ये तु पट्टवर्धनं विठ्ठलं पुत्रं मत्वा स्फुटं कार्यं पट्टपच्छोटिकां दिश; पूर्वं तस्य प्रामादिकी बुद्धिः स्यात्; तत् तु साहजा न; इदानीं तु निर्वेदिनां प्राप्तः । न संशयः ।

(व्या) (मन्मठस्याधिपत्ये तु इति ।। हे पट्टवर्धन! पुष्यनक्षत्रसञ्जातविप्रपरमगुरो! **विठ्ठलं स्पष्टं** कार्यपटुं कार्यदक्षं निर्णीय तस्मै संस्थानं संस्थाने सम्यक् स्वातन्त्र्यरूपपट्ट-पच्छोटिकां देहि । यद्यपि पूर्वं दुर्जनसङ्गरूपउपाधिवशात् विठ्ठलः भवन्निन्दां कृतवान् । न तु सहजबुद्ध्या । तस्मात् क्षमस्वेति भावः ।। इदानीं विठ्ठलः पश्चात्तापयुक्तश्च वर्तते । तस्मात् क्षमार्हः ।।४११/२।।)

(*) 'निर्वेदं' = परवैराग्यम्, वैराग्यम्.

ततः कदाचिन्निर्वेदान्निराकाराश्रितेन च ।
लोकतन्त्रं परित्यक्तं दुःखार्तेन भृशं मया ।। (महाभारत मोक्षधर्मपर्व)

**रथोत्सवस्य भारं तं धर्ता तर्ता स एव तु ।।४२।।**

**तदन्यः को भवेत्पुत्र समर्थः कार्यसाधने ।**

अन्वयः - हे पुत्र! तं रथोत्सवस्य भारं स एव धर्ता तर्ता तु । कार्यसाधने समर्थः तत् अन्यः कः भवेत्?

(व्या) रथोत्सवस्य भारं धर्ता क(त)र्तेत्यनेन तदन्तर्यामिरूपेण रथोत्सवकर्तृत्वभागवत-वैभवमुक्तं भवति ॥४१-४२॥

**नागशयनस्य मनसः सङ्कल्पं सम्प्रपूरय ॥४३॥**

**अहं जानामि तद्भक्तिं नागशयनः सुबुद्धिमान् ।**

अन्वयः - नागशयनस्य मनसः सङ्कल्पं सम्प्रपूरय; (किमर्थं?) अहं तद्भक्तिं जानामि; नागशयनः सुबुद्धिमान् (अस्ति).

(व्या) विठलसहोदरस्य नागशयनस्य मनसः सङ्कल्पं सम्प्रपूरय । सहोदरस्य विठ्ठलस्य संस्थानप्रापकं सङ्कल्पं प्रपूरय ॥

९. दुष्टपुरुषप्रकरणम्।। श्लोकाः (४४-४७१/२)

(व्या) 'मद्वाक्यम्' इत्यारभ्य 'प्रतिबन्दी दुरुत्तरा' इत्यन्तं दुष्टपुरुषविशेषश्रोतृकं नवमं प्रकरणम् ॥ पूर्वप्रकरणे विठ्ठलदुष्टबुद्धेः कादाचित्कायाः प्रामादिकत्वम्, विठ्ठलस्य स्वभावतः योग्यत्वमुक्तम् । तस्य सत्स्वभावत्वे किं मानम्? इति नाशङ्कनीयम् । मद्वाक्यमानमिति ।

**मद्वाक्यमानसंसिद्धं (मद्वाक्यं मानसं सिद्धं?) सर्वं सङ्ग्राह्यमेव हि ॥४४॥**

**चोद्यानर्हे तु मद्वाक्ये चोद्यं कुर्वन् पतत्यधः ।**

अन्वयः - मद्वाक्यमानसंसिद्धं सर्वं सङ्ग्राह्यम् एव; चोद्यानर्हे मद्वाक्ये तु चोद्यं कुर्वन् अधःपतति.

(व्या) मद्वाक्यस्यैव तत्र प्रमाणत्वात् । मद्वाक्ये अप्रामाण्यशङ्कायां तु अधःपतनं भविष्यति ॥४४१/२॥

(*) 'मानोक्तत्वात्तु मारुतः' श्रीहरिः (ऋग्भाष्ये १३७) । अतः अत्र 'मानसंसिद्धम्' इत्यनेन श्रीहरिसर्वोत्तमत्वादिकमपि ग्राह्यम् । हरिसर्वोत्तमत्वादिके चोद्यं कुर्वन् तु अधः पतति ।

**भावनात्मकशब्देषु ज्ञातव्यो भाव एव च ॥४५॥**

अन्वयः - भावनात्मकशब्देषु भाव एव च ज्ञातव्यः ।

(व्या) अन्यत्रापि भावनात्मकशब्देषु (संस्कारोपादानकशब्देषु इति नार्थः । मनोगत-

अर्थान्तरबोधकेषु इत्यर्थः) तदभिप्राय एव ज्ञातव्यः । न तत्र प्रमाणान्तरापेक्षा कर्तव्या । अत एव पुत्रार्थिनः स्वप्ने 'मुक्तालाभो भविष्यति' इत्युक्ते तत्र किं मानम्? इति प्रष्टुरविश्वासेन अनिष्टप्राप्तिर्भविष्यति । तर्हि अस्य कृतेर्भावः (सूचितार्थः गुरुराजाभिप्रेतान्तरार्थः) कुतो न विप्रेण साकल्येनोच्यते? इति नाशङ्कनीयम् । यदा अहमाविष्टवान् विप्रे तदा मद्भावं वर्णयति । यदा त्वहं नाविष्टवान् न तदा मद्भावं जानाति ।।४५१/२।।

* भावो भावना ध्यानमिति वा । यद्वा भावो मनः, ''भावो वृद्धिः समुदिष्टः क्वचिद्भावो मनःस्मृतः'' इति तत्वप्रदीपे शब्दनिर्णयोदाहरणात् । तेन च मानसी क्रियोच्यते । द्वितीयस्तु तज्जन्यवृद्धिशब्दितफलपरः। भावो वृद्धिरित्युक्तेः । भावित्वादिति । भाववत्वात् अनुसन्धानवत्वादित्यर्थः । तथा चात्मनोंऽशस्य तद्भावभावित्वात्तस्यांशिनः भावस्योपासनायाः भावः फलं तद्भावः तस्य भावित्वादनुसन्धातृत्वादिति सूत्राक्षरार्थः । (वाक्यार्थमुक्तावली ३.३.५६)

* ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ (३.३.६३) अङ्गदेवतानां यथा यथा परमेश्वराङ्गाश्रयत्वं 'चक्षोः सूर्यो अजायते' (ऋ. सं. १०-९०-१३) त्यादि तथा भावना कर्तव्या ।। – (ब्रह्मसूत्रभाष्यम्) (यथा चक्षुरादिभगवदङ्गाश्रितत्वमस्ति तथा भावना उपासना कर्तव्येति शेष इति सूत्रार्थः – वाक्यार्थमुक्तावली)
– अनेन आख्याने यदभिहितं तत् श्रीगुरुराजैरेव कथितम्? इति भावो ध्येयः इति लभ्यते ।

*** 'तस्य विष्णोः शिरो नाम भावनाद्भूरिति स्मृतम् ।<br>भावनं रक्षणं प्रोक्तं दृष्ट्या वाचा च रक्षति ।<br>उत्पादनाद्भुनामा स्याद्दक्षिणो बाहुरस्य तु ।<br>विनाशनाद्व इत्युक्तः सव्यो बाहुः परात्मनः ।<br>स्वित्यानन्दस्समुद्दिष्टो वरिति ज्ञानमुच्यते ।' – (बृहदारण्यभाष्यम् सप्तमोध्यायः पञ्चदशब्राह्मणम्)**

**अहमाविष्टवान् विप्रे कदाचिन्न कदाचन ।<br>मत्कृतौ(ता) दोषशङ्का चेद्दोषे परिहृते सति ।।४६।।**

**भवतां मातृदोषोऽपि साद्व्यभीचारशङ्कया ।<br>पातिव्रत्यात् न दोषश्चेदशरीरत्वतस्तथा ।।४७।।**

**प्रकृतेऽपि न दोषः स्यात्प्रतिबन्दी दुरुत्तरा ।**

अन्वयः - विप्रे अहं कदाचित् आविष्टवान् कदाचन न; मत्कृतौ दोषशङ्का चेत् दोषे परिहृते सति. व्यभिचारशङ्कया भवतां मातृदोषः अपि स्यात्; पातिव्रत्यात् दोषः न चेत् तथा अशरीरत्वतः प्रकृते अपि न दोषः स्यात्; प्रतिबन्दी दुरुत्तरा ।

(व्या) एवं सत्यपि मदुक्तार्थे प्रमाणान्तरसंवादं विना प्रामाण्यानङ्गीकारे विप्रतिपन्नस्य पितृत्वे मातृवाक्यस्यापि प्रामाण्यं न स्यात् । संवादान्तराभावात् । न हि श्रुत्यादौ अस्मिन् देहे, अस्मिन् काले, अस्मिन् क्षेत्रे अस्य बीजात् अयमुत्पन्नो भविष्यतीति वाक्यादिक-मुपलभ्यते । पविव्रतायाः मातुर्वाक्येन । तथैवाङ्गीकर्तव्यम् । (एवं चेत्) **अशरीरस्य** इत्यनेन यथा अशरीरवाण्या ज्ञाते प्रमेये प्रमाणान्तरसंवादं विना विश्वासः । तथा मद्वाक्येपि विश्वासः कर्तव्यः इति सूचितं भवति । गुरुराजस्य अशरीरत्वं तु 'ब्रह्मा निरभिमानित्वात् शरीर्यप्य-शरीरवान्' इत्यादिना ज्ञातव्यम् । अनेन भक्ताभीष्टसाधनाख्यानोपदेष्टुः स्वस्य अशरीरशब्देन वायुतुल्यत्वसूचनात् निर्दोषत्वरूपं भाक्तवैभवमुक्तं भवति ।।४७१/२।। दुष्ट.पु.प्र.सं।।

* 'पराभिमतसमाधिसमाधेयमुत्तरं प्रतिबन्दी' इति प्रतबन्दीलक्षणम् । 'ब्रह्माऽप्यशरीरवान्' इत्यनेनापि भाविब्रह्मत्वात् श्रीगुरुराजवाक्ये दोषो न ।

### १०. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (४८-५८)

(व्या) 'जनाः सुपापिनः' इत्यारभ्य 'गुरुत्वात् कुरु कारुण्यं विप्रस्याज्ञानहारिणम्' इत्यन्तं लक्ष्मीपतिश्रोतृकं दशमं प्रकरणम् ।। पूर्वप्रकरणे कृतेः निर्दोषत्वमुपपादितम् । तत्र दोषबुद्ध्या विश्वासरहितानाम् अनिष्टम् । विश्वासिनामभीष्टप्राप्तिः । एवमुक्तसुगूढवैभवस्य लक्ष्मीपतिना ख्यापनीयत्वं चोच्यते । जनाः इत्यादिना ।।

**जनाः सुपापिनः सर्वे कलिनाविष्टचेतनाः ।।४८।।**
**कत्थनं वावदूकास्ते कुर्वन्ति मम सन्निधौ ।**
**कदने चोद्यताः सर्वे वदने भस्मवासिनः ।।४९।।**

**अन्वयः - सुपापिनः जनाः सर्वे कलिनाविष्टचेतनाः; अवदूकाः ते मम सन्निधौ कत्थनं वा कुर्वंति. कदने च उद्यताः. सर्वे वदने भस्मवासिनः.**

(व्या) **मयि जीवति ।।** (कलिकाले प्रायेण **सर्वे जनाः कलिना आविष्टबुद्धयः** । अत एव उत्तमेषु कलहशीलाः । गुरुराजसन्निधावेव **कत्थनं कुर्वन्ति** । 'किमयं ऋजुः आहोस्वित् ऋषिमात्रः' इत्यादिरूपेण । स्वमतस्थापनार्थं प्रमाणं विना युद्धकरणशीलाः । मुखे भस्मलेपन-वन्तः चक्रादिचिह्नहीनाः अन्यदेवोत्कर्षबुद्धियुक्ताः ।।४८-४९।।)

**मयि जीवति सर्वेऽपि मत्प्रिया इव मत्कृतिम् ।**
**पठन्त्यर्थं वदन्त्येते मत्प्रतारणबुद्धयः ।।५०।।**

अन्वयः - मयि जीवति (सति) मत् प्रतारणबुद्धयः एते सर्वेऽपि मत्कृतिं मत्प्रिया इव पठन्ति, अर्थं च वदन्ति.

(व्या) मयि जीवति कृतिं तां (रुग्मिणीशविजयादिकृतिं) मत्कृतिं मत्प्रतारणबुद्धयः सन्तः केचित्पठन्ति । (केचिदर्थं च वदन्ति) ।।

**इदानीं स्वाप्नपद्यं मे तेष्वेकोऽपि न वक्त्यहो ।**
**अहं नैवेति दुर्बुद्ध्या जाने सर्वमनोगतम् ।।५१।।**

अन्वयः - इदानीम् अहं नैव इति दुर्बुद्ध्या तेषु एकः अपि स्वाप्नपद्यं न वक्ति. अहो. अहं सर्वमनोगतं जाने.

(व्या) इदानीम् अहं नैवेति दुर्बुद्ध्या मत्कृतां कृतिं तेष्वेकोऽपि न पठति । (सर्वेषां मनोगतं सर्वज्ञतादहं जाने) ।।५१।।

**यो न वक्ति च मत्पद्यं तदर्थं वा मदाश्रयी ।**
**तस्याशुभं भवत्येव पश्य मे तपसः फलम् ।।५२।।**

अन्वयः - यः मदाश्रयी मत्पद्यं तदर्थं वा न वक्ति तस्य अशुभं भवति एव. मे तपसः फलं पश्य.

(व्या) मदाश्रयी भूत्वा यो मत्कृतिं तदर्थं वा न वक्ति, तस्य अनिष्टं भवति ।।५२।।

**इमां कृतिं मम स्वाप्नीम् आदराद्यस्तु वक्ष्यति ।**
**तस्य श्रीशः प्रसन्नः सन् शुभं दास्यत्यसंशयः ।।५३।।**

अन्वयः - मम इमां स्वाप्नीं कृतिं यः तु आदरात् वक्ष्यति; तस्य श्रीशः प्रसन्नः सन् शुभं दास्यति; असंशयः ।

(*) (श्रीमदाचार्यैः द्वादशस्तोत्रे सूचितप्रकारेण) भाविसमीराणां कृतवृन्दावनाख्यानपठनेन, व्याख्यानेन च श्रीशः प्रसन्नो भवति इत्यनुसन्धेयम् –

"आनन्दतीर्थमुनिसन्मुखपङ्कजोत्थं साक्षाद्रमाहरिमनःप्रियमुत्तमार्थम् ।
भक्त्या पठत्यजितमात्मनि सन्निधाय यः स्तोत्रमेतदभियाति तयोरभीष्टम् ।।" इति द्वादशस्तोत्रम् ।

**सत्यं सत्यं पुनः सत्यं त्रिवाचाऽपि मयोच्यते ।**
**पठतां शृण्वतां चापि सर्वसम्पद्भविष्यति ।।५४।।**

अन्वयः - मया सत्यं सत्यं पुनः सत्यं (इति) त्रिवाचा अपि मया उच्यते; पठतां च शृण्वतां अपि सर्वसम्पत् भविष्यति.

(व्या) इमां कृतिमित्यादि ।। भक्त्या पठतां शृण्वतां च सर्वसम्पद्भविष्यति ।।५४।।

**पुत्र ते सुप्रसन्नोऽस्मि मत्प्रसादाप्तसुप्रभ ।**
**मित्र ते सुप्रतापोऽयं कृत्रिमो न प्रदृश्यते ।।५५।।**

अन्वयः - हे पुत्र! मत्प्रसादाप्तसुप्रभ! ते सुप्रसन्नः अस्मि; हे मित्र! अयं सुप्रतापः न कृत्रिमः प्रदृश्यते.

(व्या) मत्प्रसादेन आप्ता प्राप्ता सुप्रभा यस्य सः तस्य सम्बुद्धिः । हे पुत्र! ते सुप्रसन्नाऽस्मि । अयं ते सुप्रतापः न कृत्रिमः अर्थाशादिकृतो न भवति ।।५५।।

(*) अयं तु सुप्रतापः; तेन त्वं सुप्रतापवान् भवसि । तथाहि छान्दोग्योपनिषत् । –
"आत्मासत्याऽऽत्मसाक्षी सतां धर्मः प्रतापवान् ।
न च पापानि कुरुते यस्याऽत्मा भवति प्रियः ।।" इति । आत्मा परमात्मैव । सत्या सत्यः । सत्यवचननियामकः । आत्मा परमात्मैव साक्षीदीक्षत इति साक्षी । धर्मो धारकः प्रतापवान् कीर्तिमान् । यस्याधिकारिणः आत्मा परमात्मा प्रियो भवति । सः न पापानि कुरुत इत्यन्वयः । भगवति प्रीतिमांश्च भेदज्ञान्येवेति हृदयम् । – (वेदेशीय खण्डार्थः षष्ठेऽध्याये अन्तिमे)

**हयास्यं ब्रह्मणोऽपास्यं मयोऽपास्यं च भूरिशः ।**
**प्रसन्नास्यं सदावश्यमुपास्य त्वं सुखीभव ।।५६।।**

अन्वयः - ब्रह्मणोपास्यं मयोपास्यं च प्रसन्नास्यं हयास्यं सदा अवश्यं भूरिशः उपास्य त्वं सुखीभव ।

(व्या) ब्रह्मणा उपास्यं मया उपास्यं च हयग्रीवं प्रसन्नास्यं प्रसन्नास्यत्वेन बादरायणात्मना बालगोपालात्मना च उपास्य सुखी भव ।।५६।।

**एवं श्रुत्वा विप्रवर्यात्सुगूढमाश्चर्यभूतं मम वैभवं तु ।**
**पुत्र चैतत्सुप्रसिद्धं कुरु त्वं मित्रो यथैवान्धकारस्थमर्थम् ।।५७।।**

अन्वयः - एवं विप्रवर्यात् सुगूढं आश्चर्यभूतं मम वैभवं तु श्रुत्वा, हे पुत्र! यथा मित्रः अंधकारस्थं अर्थं (प्रसिद्धिं कुरुते) तथा एतत् च सुप्रसिद्धं कुरु ।

(व्या) **एवं श्रुत्वा** एतत्पद्यं पञ्चमाध्यायगतदशश्लोकात्मकम् । अत्र तदनुवादेन एकादशाध्यायपर्यन्तं वैभवप्रतिपादकं प्राधान्येनेति सूचितं भवति ।।५७।

**पुत्र त्वं विप्रवर्यस्य सुप्रसन्नो भव प्रभो ।**
**प्रभुत्वात् तत्प्रसादोऽयं विप्रे स्यादैहिकप्रदः ।।५८।।**
**गुरुत्वात्कुरु कारुण्यं विप्रस्य............**

**अन्वयः - हे प्रभो! पुत्र! विप्रवर्यस्य सुप्रसन्नः भव; प्रभुत्वात् अयं विप्रे ऐहिकप्रदः स्यात् । गुरुत्वात् विप्रस्य कारुण्यं तत्प्रसादः ।**

(व्या) **हे प्रभो!** समर्थ! **विप्रवर्यस्य** विषये **त्वं सुप्रसन्नो भव** । तव समर्थत्वात् मनःप्रसादस्त्वदीयः विप्रस्यैहिकप्रदः । तस्य गुरुत्वात् तत्कारुण्यं तव ऐहिकप्रदम् आमुष्मिकप्रदं च भविष्यति । तस्मान्मनःप्रसादं कुरु इति भावः ।।५८ १/२।।

(*) श्रीमदाचार्यैः गीताभाष्ये विहितकर्माणि अत्र अनुसन्धेयम् । तथाहि –

**वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः ।**
**वनस्थस्याक्रतुर्यज्ञः क्रत्वादिगृहिणोऽखिलः ।**
**शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः ।**
**विद्याऽभयादिदानं च सर्वेषामपि सम्मतम् ।**
**गृहिणो वित्तदानं तु वनस्थस्यान्नपूर्वकम् ।**
**सर्वैः कार्यं तपो घोरमिति सर्वे त्रिकर्मिणः' इतिनारदीये ।**

– 'परस्परं भावयन्तः' इति गीतोक्तमपि स्मर्तव्यम् ।

(*) 'गुरुत्वात् कुरु कारुण्यम्' – इत्यनेन गुरुपूजाकरणेन लभ्यफलं ज्ञेयम् ।

**'तत्रस्था देवताः सर्वाः प्रीयन्ते गुरुपूजया ।**
**नैवान्यथैषां प्रीतिः स्याद्गुरूक्तिमपहाय तु ।**
**तस्मात् पूजा विशेषेण सतां कार्या नृणां सदा ।**
**भक्तिस्तु तारतम्येन विशिष्टे त्वधिका भवेत्' इति स्कान्दे ।।**

**– भागवततात्पर्यनिर्णये(११/७२/१३)**

**११. सीतापतिप्रकरणम्।। श्लोकाः (५८१/२-६३) अज्ञानहारिणमित्यारभ्य ।।**

(व्या) **'अज्ञानहारिणम्'** इत्यारभ्य **'शुभसत्कृते हरेः'** इत्यन्तं सीतापतिश्रोतृकम् एकादशं प्रकरणम् ।। तेन लक्ष्मीपत्युक्तएतदाख्यानश्रवणस्य कर्तव्यत्वं, स्वस्य तदर्पितकरस्वीकारार्थ-

मागमनम्, स्वाशीर्वचनेन तस्य चिरञ्जीवनादि, स्वप्रसादेन तस्य भगवत्पूजकत्वं इत्येवं रूपं भौमलौकिकभाक्तवैभवमुच्यते ।

**...................... अज्ञानहारिणम् ।**
**मत्पुत्रेणादरार्थोक्तं मत्कृतेरर्थमञ्जसा ।।५९।।**
**शृणु सीतापते भक्त्या सत्पते ते शुभाप्तये ।**

**अन्वयः – हे सीतापते! सत्पत! ते शुभाप्तये भक्त्या मत् पुत्रेण आदरार्थः उक्तं अज्ञानहारिणं मत्कृतेः अर्थम् अञ्जसा शृणु.**

(व्या) मत्पुत्रेण पूर्वप्रकरणे गूढवैभवख्यापकत्वेन उक्तेन लक्ष्मीपतिना आदरार्थोक्तं । हरौ गुरौ च आदरलाभार्थमुक्तं । **अज्ञानहारिणामिति ।। अज्ञानहारिणम्** अज्ञानपरिहारकं **मत्कृतेः अर्थं अञ्जसा शृणु ।। शृण्विति ।।** श्रवणमपि तव शुभलाभार्थम् । **हे सत्पते** सन्, विप्रः स्वामी यस्य सः तस्य सम्बुद्धिः ।

(*) प्रतिबन्धनिवृत्यर्थं (अज्ञाननिवृत्यर्थं) श्रवणादिकमपेक्षितम् । तथाहि युक्तिमल्लिका फलसौरभे श्रीभाविसमीराः – (७३) 'प्रतिबन्धनिवृत्त्यर्थं श्रवणाद्यपि मृग्यते । अतः श्रुतिः श्रवणतो मुक्तिरित्यपि सा जगौ ।' इति ।

**त्वामागतमहं जाने चिरादागतवानसि ।।६०।।**

**करायाऽगतवानस्मि सुरलोकात्सुपर्वसु ।**

**अन्वयः - चिराद् आगतवानसि । आगतं त्वाम् अहं जाने । सुपर्वसु कराय सुरलोकात् आगतवान् अस्मि ।**

(व्या) **त्वाम् आगतं** पुनर्भूलोकं प्रति आगतं, पुनरुत्पन्नं इति यावत् । **सुपर्वसु** = दर्शपूर्णमासरूपेषु । **सुरलोकात् कराय** त्वदर्पितदर्शपूर्णमासेष्टिरूपकरस्वीकारार्थम् ।

**चिरं जीव चिरं जीव सुखी भव सुखी भव ।।६१।।**

**ममाशीर्वचनेनैव हयग्रीवपरो भव ।।६२।।**

**अन्वयः - हे सीतापते! चिरं जीव चिरं जीव सुखी भव सुखी भव; मम आशीर्वचनेन एव हयग्रीवपरः भव ।**

(व्या) (चिरञ्जीव सुखीभव इति आशीर्वचनाभ्यां तस्मिन् जन्मनि सः सुखी, विपद्र-हितश्च जीवतीति सूचितो भवति । हयग्रीवपरो भव इत्यनेन हयग्रीवभक्तश्च भवतीति ज्ञायते)

(*) ''इत्यस्मत्कृतं भाष्यप्रकरणं अशेषमोक्षयोग्यमतीनां मङ्गलमुद्दिश्य भूयादित्याशीर्वादो वा । आशीर्वादस्यापि मङ्गलत्वात् ।'' – इति शर्कराश्रीनिवासीयतत्वप्रकाशिकटिप्पण्यां सूचितमङ्गलात्मकअशीः आवश्यकत्वेन अत्र श्रीगुरुराजाः स्वकृतआख्यानार्थविदाम् आशीर्वचनेनैव उद्धरिष्यामि इति सूचितवन्तः इति स्मर्तव्यम् । 'आशीर्वचनेन अधोनिर्दिष्टप्रमेयमपि ज्ञेयम् । –

**'आशीःसमृद्धिहेतुष्वप्यखिलेषु व्यवस्थितम् ।**
**एकमेव हरिं वेद यः स सर्वेष्टमाप्नुयात् ।।'** इति च । (छान्दोग्योपनिषद्भाष्ये १.३.३)

**'आशीर्वादनमस्कारवस्तुनिर्देशपूर्वकम् ।**
**मङ्गलं त्रिविधं प्रोक्तम्''** – इति सम्प्रदायविदः ।

**सुत सुतत्वमत सन्मते कुतः कुमतिरत्र तव मत्प्रसादतः ।**
**विततभक्तियुत मत्पदे सदा कृतसमस्तशुभसत्कृते हरेः ।।६३।।**

अन्वयः - हे सुतत्वमत सुत! सन्मते! मत्प्रसादतः मत्पदे हरेः (पदे च) विततभक्तियुत! सदा कृतसमस्तशुभकृते! तव कुमतिः अत्र कुतः?

(व्या) हे सुतत्वमत सुतत्वं मतं येन सः तस्य सम्बुद्धिः । अत्र ते कुमतिः कुतः? मत्प्रसादेन मत्पदे हरेः पदे च विततभक्तियुतः सदा कृता समस्तशुभसत्कृतिः येन सः । तस्य सम्बुद्धिः ।। इति प्र११।।

### १२. अनेकभक्तप्रकरणम्।। श्लोकाः (६४-६६)

(व्या) 'द्विज' इत्यारभ्य 'कृतेरर्थबुद्धिभिः' इत्यन्तं द्वादशं अनेकभक्तश्रोतृकं प्रकरणम् । पूर्वप्रकरणोक्तानां विप्रशेषापतिभूपानां सम्बोधनमनुपपन्नम् । पूर्वजन्मनि इत्थं गुरुराजोक्तं अस्मिन् जन्मनि इत्थमहं करोमीति तेषामनुसन्धानाभावात् । तस्मादिदमाख्यानमनुपादेयं इत्याशङ्कां वारयितुं न केवलं जीवानां सम्बोधनं किन्तु द्विजादिशब्दैः अन्तर्यामिणामपि सम्बोधनं इति स्वाभिप्रायप्रकटनात् भौमभाक्तवैभवमत्रोच्यते । जीवानाम् अतीतजन्मोक्तार्थस्य जन्मान्तरेषु अनुसन्धानाभावेपि न तदनुपादेयमिति शङ्कां वारयितुं किन्तु द्विजादिशब्दैरन्तर्यामितया भौमभाक्तभागवतवैभव मत्रोच्यते ।।

'पूर्वमित्थमनेनोक्तमस्मिन् जन्मनि तथैव मया कारितम् इत्यन्तर्यामिणामनुसन्धानस्य सत्वेन भक्त्या अनुकम्पया, कोपेन वा, मुनिभिः त्वं व्याघ्रो भव इत्युक्तानाम् अर्थानां विस्मृतत्वेन जन्मान्तरे जीवानामनुसन्धानाभावेपि अन्तर्यामिणामनुसन्धानेन तद्वाक्यप्रमाण्यसंभवेन उपादेयत्व-मिव आख्यानस्याप्युपादेयत्वमिति भावः ।।

**द्विजेति गरुडस्यापि सम्यक्सम्बोधना कृता ।**
**पुत्रेति नरकोत्तारं हरिं प्रत्युक्तवानहम् ।।६४।।**

**अन्वयः - द्विजेति गरुडस्य अपि सम्यक् सम्बोधना कृता. पुत्र इति नरकोत्तारं हरिं प्रति अहम् उक्तवान्.**

(व्या) **द्विजेति** ।। अत एव 'यत्र प्रतीतार्थबाधः तत्रान्तर्यामिसङ्ग्रहः' इति अध्यायान्तरे प्रतिपादितम् । इन्द्रपदयोग्यस्य विप्रस्य तदन्तर्यामिणः तन्मार्गरूपस्य गरुडस्य हरेरपि द्विजेति सम्बोधना कृता । पुत्रशब्दप्रवृत्तिनिमित्तस्य नरकपरिहारकत्वस्य तत्तदन्तर्यामिणो हरेर्मुख्यत्वेन मुख्यः पुत्रशब्दः । तस्य सम्बोधनं कृतम् ।

**शेषेति भूधरं शेषं व्यासेति व्यासमेव च ।**
**सीतापतेति रामं च भूपेति भूवराहकम् ।।६५।।**
**भूपेति भूमेरुद्धारं वराहं चोक्तवाहनम् ।**

**अन्वयः - शेष इति भूधरं शेषं, व्यास इति च व्यासं एव, सीतापते इति रामं च, भूप इति भूवराहकम् । भूमेः उद्धारं वराहं च भूप इति च अहम् उक्तवान् ।**

(व्या) **शेषान्तर्यामिणो** हरेः भूधारकत्वस्य मुख्यत्वेन **शेषेति** हरेः सम्बोधनम् । व्यास-शब्दोक्तपुरुषोपास्यस्य तदन्तर्यामिणः **व्यासेति** सम्बोधनम् । सीतापत्यन्तर्यामि रामस्य **सीतापते** इति सम्बोधनम् ।। **भूपेति** भूमेरुद्धारकस्यापि वराहस्य भूपान्तर्यामिणः सम्बोधनम् । उप-लक्षणमेतत् । अन्यैरपि शब्दैः तत्तच्छब्दप्रवृत्तिनिमित्तबाहुल्येन तत्तदन्तर्यामिणो हरेः सम्बोधन-मिति मन्तव्यम् ।

* 'सर्वान्तर्यामिकत्वात्तु सर्वनामा जनार्दनः ।
न तु सर्वस्वरूपत्वात्सर्वेशोऽसौ हरिर्यतः' इति ब्रह्मतर्के – (भाग.ता. ४.२४.३३)

**तस्माद्ब्राह्योभयार्थश्च(स्य) मत्कृतेरर्थबुद्धिभिः ।।६६।।**

**अन्वयः - तस्मात् अर्थबुद्धिभिः मत्कृतेः उभयार्थश्च ग्राह्यः ।**

(व्या) अस्मिन्नध्याये प्राधान्येन द्विजादिशब्दानां प्रयुक्तत्वेन तेषां सम्बोधनप्रकारदर्शनेन अन्यत्रापि तद्रीतेर्ग्राह्यत्वात्; **तस्मादयं** ग्रन्थः मत्कृतेरर्थबुद्धिभिः ग्राह्यो**भयार्थः ग्राह्यः** ज्ञातव्यः । उभयार्थः जीव तदन्तर्यामि रूपार्थः यस्येति स तथोक्तः ।। अनेकभक्तपुरुषप्रकरणं सं।।

* (द्विजः = गरुडः । पुत्रः = पुंनामकनरकात् त्राता हरिः । शेषः = भूधारक आदिशेषः । व्यासः = कृष्णद्वैपायनः । सीतापतिः = दाशरथी रामः । भूपः = भूनामकलक्ष्मीपतिः वराहस्वामी, हिरण्याक्षसंहारक-वराहश्च । एवं हरिपरतया एतेषां पदानाम् अर्थाः सन्ति ।)

### १३. लक्ष्मीपतिप्रकरणम् ।। श्लोकाः ६७ - ७१ १ /२

(व्या) **'सुत सुसूक्ष्ममतिमन्'** इत्यारभ्य **'व्यग्रमानिनी'** इत्यन्तं लक्ष्मीपति श्रोतृकं त्रयोदशं प्रकरणम् ।। पूर्वप्रकरणे अर्थदर्शिभिर्ज्ञातव्यमुक्तम् । उक्तरीत्या एतदभिमततात्पर्य-ग्रहणशक्तेन । अस्याः कृतेः व्याकर्तव्यत्वकथनेन तद्वत् युक्तिमल्लिकायाः सत्पात्रेषु दातव्यता-कथनेन च तदनुग्राहकत्वरूपं भौमलौकिकभाक्तवैभवमुच्यते **सुत सूक्ष्ममतिमन् इत्यादिना ।।**

**सुत सुसूक्ष्ममतिमन् कृतकृत्यस्त्वं समस्तयतिषूत्तममूर्ते ।**
**मत्कृतिं विततयुक्तिसत्कृतिं सत्सु व्याकुरुत तत्र कीर्तये ।।६७।।**

**अन्वयः - सुसूक्ष्ममतिमन् सुत! उत्तममूर्ते! त्वं कृतकृत्यः । समस्तयतिषु सत्सु विततयुक्तिसत्कृतिं मत्कृतिं तत्र कीर्तये व्याकुरुत ।**

(व्या) **हे सुसूक्ष्ममतिमन् सुत लक्ष्मीपते! त्वं कृतकृत्यः यतिषु** यत्याश्रमस्थेषु निगृहीतेन्द्रियेषु **सत्सु** सज्जनेषु सत्स्वपि । **विततयुक्तिसत्कृतिं** वितताः निरवकाशाः याः युक्तयः तत्सहितां सत्कृतिं निर्मलां कृतिं व्याकुरु । **कीर्तये** कीर्त्यर्थं व्याकुरु।।६७।।

(*) सत्सु इत्यत्र सतां गुणाः भागवततात्पर्ये प्रोक्ताः अत्र ध्येयाः । तद्यथा –

**'तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।**
**अजातशत्रवः शान्ताः साधवः साधुभूषणाः ।**
**मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम्'** इत्यादि सतां लक्षणम् । – (भाग.१.१.२)

(*) सिद्धान्तग्रन्थाध्ययनबलेन कृतेः प्रसिद्धिं कुरु इत्यपि ग्राह्यम् ।

**पुत्र मत्पुत्रिकां युक्तिमल्लिकाख्यां तवानुजाम् ।**
**कुरु सत्पात्रदानं ते कन्यादानफलं भवेत् ।।६८।।**

**अन्वयः - हे पुत्र! तवानुजां मत्पुत्रिकां युक्तिमल्लिकाख्यां सत्पात्रदानं कुरु । ते कन्यादानफलं भवेत् ।**

**(व्या)** तथा त्वया युक्तिमल्लिकाख्याकृतिः आदरणीया इति भावेनाह **पुत्रेति ।। हे पुत्र!** पुत्रवद्दयापात्र! **युक्तिमल्लिकाख्यां** कृतिं त्वया सत्पात्रेषु दातुं योग्यत्वेन तवानुजोपमां मत्वा **सत्पात्रदानं कुरु । ते** तव **कन्यादानफलं भवेत्** ।।६८।।

**मद्युक्तिभाषणैर्भासि त्वद्व्याख्यानसुवासिनी ।**
**नानापुष्पोल्लसत्केशबन्धिनी भावगन्धिनी ।।६९।।**

**वेदवेद्य द्रौपदीव भात्यनेकवराप्यहो ।**

**अन्वयः - मद्युक्तिभाषणैः त्वं भासि. हे वेदवेद्य! त्वद् व्याख्यानसुवासिनी भावगन्धिनी नानापुष्पोल्लसत्केशबन्धिनी अनेकवरा अपि द्रौपदी इव भाति । अहो!**

**(व्या)** मयैव तद्दानं कुतः कर्तव्यमित्यत आह **मद्युक्तिभाषणैरिति ।।** मदीया युक्तयः एषु भाषणेषु तानि मद्युक्तीनि, तानि च तानि भाषणानि च, मद्युक्तिभाषणानि; तैः त्वं भासि । मद्युक्तितात्पर्याभिज्ञेन त्वया दातव्येति भावः । विवाहितायाः हरिद्रादिसुवासनयुक्तत्वात् सुवासिनीति व्यवहारः । तथा युक्तिमल्लिकापि त्वदीयप्रवचनरूपसुवासनयुक्तत्वात् **सुवासिनी । नानापुष्पोल्लसत्केशबन्धिनी** । युक्तिनानापुष्पैः उल्लसन् यः केशबन्धः शिरोभूषणरूपः । तद्वती भावगन्धिनी भावो अभिप्रायः तद्रूपः सुगन्धः तद्वति ।।६९ ।। **वेदवेद्येति ।। अनेकवरा** बहुषु दातव्यत्वेन अभिप्रेतत्वात् **द्रौपदीव भाति** शोभते ।

(*) द्रौपदीवत् बहु प्रदत्वेऽपि युक्तिमल्लिकायाः निर्दोषत्वं बोध्यम् ।

**तस्मात् व्याख्यानसन्मन्त्रैर्दानं कुरु वरेषु ताम् ।।७०।।**

**त्वमेव तत्पिता माता पितृहीनां तु मा कुरु ।**

**अन्वयः - तस्मात् वरेषु तां सन्मंत्रैः दानं कुरु । त्वमेव तत् पिता माता; पितृहीनां तु मा कुरु ।**

(व्या) **तस्मात्** व्याख्यानरूपैः सन्मन्त्रैः **वरेषु** (सत्सु) **दानं कुरु** । दातृत्वेन पितृ-सदृशत्वात् त्वमेव पिता । पालकत्वेन मातृसदृशत्वात् माता । तथा दातृरहिता कन्या पितृहीना, तथा तां कृतिं पितृहीनां मा कुरु ।।

**अहो ममात्मजा युक्तिमल्लिकेति (काख्या) ममात्मजम् ।।७१।।**
**वव्रे तिव्रेण भावेनाप्यग्रजं व्यग्रमानिनी(गामिनी) ।।**

**अन्वयः - युक्तिमल्लिका इति ममात्मजा व्यग्रमानिनी अग्रजं ममात्मजम् अपि तीव्रेण भावेन वव्रे ।**

(व्या) मत्कृतत्वात् **ममात्मजा युक्तिमल्लिका;** पुत्रवद्दयापात्रं **ममात्मजम्; व्यग्रमानिनी** व्यग्रमानवती । **तीव्रेण** भावेन **वव्रे** ।। अथापि निर्दोषत्वमुत्तराध्याये निगद्यते ।। लक्ष्मीपति-प्रकरणं सम्पूर्णम् ।।

### १४. विप्रप्रकरणम्।। श्लोकाः (७२-८९ १/२)

(व्या) **'अप्पणः कृष्णभट्ट'** इत्यारभ्य **'चिरञ्जीव सुखी भव'** इत्यन्तं विप्रश्रोतृकं चतुर्दशं प्रकरणम् । अत्र व्याख्यातृसन्मानस्य विप्रेण कर्तव्यत्वं, भक्तरुत्पन्ना चेत् अप्पण्णकृष्णभट्टेन शिष्येषु व्याख्येयत्वस्य कथनात् रुद्रानुग्राहकत्वादेश्च कथनाच्च भौमदिव्यलौकिकालौकिक-भाक्तभागवतवैभवमुच्यते – **अप्पण इति** ।।

**अप्पणः कृष्णभट्टश्च शष्पण्णः परिकीर्तितः ।।७२।।**
**पुष्पवल्लघुबुद्धिश्च कपटी मत्पदे सदा ।**

**अन्वयः - अप्पणः शष्पण्णः कृष्णभट्टः च परिकीर्तितः । पुष्पवत् लघुबुद्धिः मत्पदे सदा कपटी च ।**

(व्या) **अप्पण इति** ।। कश्चि**दप्पण कृष्णभट्ट**शब्दोक्तः, **शष्पण्णः** बालतृणवदल्पबलः । 'णकारो बलमि'त्युक्तेः णकारस्य बलवाचित्वात् ।।७२।। (पुष्पवत् लघुबुद्धिः । केवलसामान्य-ज्ञानवान् इत्यर्थः । **मत्पदे कपटी** । गुरुराजऋजुत्वे विश्वासो नास्ति । तथापि न वा भक्त इव व्यवहरति ।)

**मत्पुत्रसुप्रसङ्गे तु स्वप्रसङ्गं करोति यः ।।७३।।**
**तत्प्रसङ्गं त्वहं सम्यक् कुप्रसङ्गं करोम्यहम् ।**

अन्वयः - यः मत् पुत्रप्रसङ्गे तु स्वप्रसङ्गं करोति; तत् प्रसङ्गं तु अहं सम्यक् कुप्रसङ्गं करोमि ।

(व्या) मत्पुत्रे इति । सः (अप्पणः) मत्पुत्रस्य विठ्ठलस्य सुप्रसङ्गे न्यायानुसारिणी भू-विषयकव्यवहारे क्रियमाणे सति । स्वप्रसङ्गं न्यायविरुद्धं यः करोति सः अप्पणः । कृष्णभट्टः । अहं तत्प्रसङ्गं तदीयव्यवहारं कुप्रसङ्गं करोमि ।

**मत्पुत्रे कृतपाण्डित्ये पण्डितैर्मन्डिते सति ।।७४।।**
**पण्डकैः क्रियते डम्भात्स्वपाण्डित्यं हि डम्भ(डिंभ)वत् ।**

अन्वयः - मत्पुत्रे कृतपाण्डित्ये पण्डितैर्मन्डिते सति, पण्डकैः डम्भवत् स्वपाण्डित्यं डम्भात् क्रियते हि ।

(व्या) मत्पुत्रे कृतपण्डित्ये इति ।। दुर्ववहारानभिज्ञे सति पण्डितैः व्यवहाराभिज्ञैः । मण्डिते । अलङ्कृते पण्डकैः नपुंसकैः डिम्भवत् बालवत् स्वपाण्डित्यं क्रियते ।।७४ १/२।।

**अयं तु कुमनाः कृष्णो ह्यप्पण्णः फणिबुद्धिमान् ।।७५।।**

**शुनवत् कत्थनं कुर्वन् नन्दनाग्रे मनाक्च नः ।**

अन्वयः - अयं कृष्णः अप्पणः कुमनाः फणिबुद्धिमान् तु । शुनवत् कत्थनं कुर्वन् (अपि) नन्दनाग्रे मनाक् च नः कत्थनं (करोति) ।

(व्या) अयं त्विति ।। अयमप्पणः कृष्णः । कुमनाः कुत्सितमनाः फणिबुद्धिमान् सर्प-बुद्धिः शुनवत् श्वानवत् । पश्चात् कत्थनं कुर्वन्नपि नन्दनाग्रे विठ्ठलाग्रे मनाक्कत्थनं करोति ।।

**मन्नन्दनपदं ध्यात्वा श्रुत्वा तस्य सुधामयीम् ।।७६।।**
**गां तं वै गोमुखव्याघ्रं त्यज शीघ्रं दुराग्रहम् ।**

अन्वयः - मन्नन्दनपदं ध्यात्वा तस्य सुधामयीं गां श्रुत्वा तं दुराग्रहं गोमुखव्याघ्रं शीघ्रं वै त्यज ।

(व्या) मन्नन्दनस्य विठ्ठलस्य पदं ध्यात्वा । तस्य विठ्ठलस्य सुधामयीं गां श्रुत्वा दुराग्रह-वन्तं गोमुखव्याघ्रं तम् अप्पणकृष्णभट्टं शीघ्रं त्यज ।।७६ १/२ ।।

**सोऽपि मत्पादभक्तश्चेत् हित्वा स्वकृतदुष्कृतिम् ।।७७।।**

**मत्कृतिं पुत्रशिष्येषु सम्यग्व्याख्यां करोत्य(त्व)हो ।**

**अन्वयः - मत्पादभक्तः चेत् सः अपि स्वकृतदुष्कृतिं हित्वा पुत्रशिष्येषु मत्कृतिं सम्यग् व्याख्यां करोतु; अहो.**

(व्या) सोऽपि मत्पादभक्तश्चेत् स्वकृतां पापरूपां दुष्कृतिं हित्वा मत्कृतिं श्रुत्वा, पुत्रशिष्येषु सम्यक् व्याख्यां करोतु । उपदिशतु ।।७९।।

**तद्द्वेषात्तु न भाषेऽहं शेषशायिपदे शपे ।।७८।।**

**रागद्वेषविहीनोऽहं हयग्रीवस्य चाज्ञया ।**
**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।।७९।।**

**अन्वयः - अहं तु तद् द्वेषात् न भाषे; शेषशायिपदे शपे । हे बुद्धिमन्! 'रागद्वेष-विहीनोऽहं हयग्रीवस्य चाज्ञया' इति पूर्वं मया प्रोक्तम् अनुसन्धत्स्व ।**

(व्या) (अप्पण्णकृष्णभट्टः नेदानीं बोधनीयः । तस्य दुःखानुभवानन्तरमेव समीचीनभक्ति-र्भविष्यति । इदानीं स अनधिकारी । तस्मिन् द्वेषात् ज्ञानात्मकक्रोधात् । अहं न भाषे । रहस्यांशं न वदामि । अनेन तस्य किंचित् दुःखं भविष्यतीति सूचितो भवति । यद्यपि मयि द्वेषो नास्ति । तामसक्रोधः सन्तापरूपः नास्ति । यथायमेतथा- ज्ञानरूपक्रोधः गुणरूप एव । ।७९ ।।)

(*) (पूर्वं अ ३.८३ 'क्रोधोऽपि मम नास्त्येव त्वं चिरञ्जीव सुपुत्रक; उत्तरत्र १४.६१... 'सत्पुत्र रागद्वेषौ च नैव मे', १७.११२ - 'तस्मादरागद्वेषोऽहं विष्णोः पादपरागभाक्') इत्यादिस्थले रागद्वेष-विहीनत्वं प्रतिपादितम् ।

(व्या) एवमुक्त्या तस्य व्याख्यानकर्तृत्वं न मन्तव्यमिति भावेनाह व्याख्यानेति ।।

**व्याख्यानगौरवादेव वक्ष्याम्येषः सुबुद्धिमान् ।**
**नन्दन त्वं तु सन्मानं कुरु व्याख्यानकारिणे ।।८०।।**

**अन्वयः - व्याख्यानगौरवादेव वक्ष्यामि; एषः तु सुबुद्धिमान् । हे नन्दन! व्याख्यान -कारिणे त्वं सन्मानं कुरु ।**

(व्या) **हे सुबुद्धिमन्!** विप्र! **व्याख्यानगौरवादेव** सम्यग् व्याख्यां करोत्वसौ इति वक्ष्यामि । न तु तस्य व्याख्यातृत्वतात्पर्येण । वस्तुतः व्याख्याता तु एषः लक्ष्मीपतिः । **सुबुद्धिमान्** । तस्मै **व्याख्यानकारिणे सन्मानं कुरु** ।

**(व्या)** सन्मानं च वस्त्ररूपेणेति सूचयितुम् उत्तरपद्ये तृतीयाध्यायोक्तस्य कुम्भराक्षसभङ्गस्य पुनरनुवादः ।

**पतन्तमम्बरात् सन्तः कुम्भिनीं प्रति शम्भुना ।**
**कुम्भराक्षसभङ्गे तु दृष्टा च स्तम्भितो मया ॥८१॥**

अन्वयः - शम्भुना कुम्भराक्षसभङ्गे कुम्भिनीं प्रति अम्बरात् पतितं च दृष्ट्वा, सन्तः (भीताः) (तदा शम्भुः) मया स्तम्भितः ।

**(व्या)** प्रागुक्तभागे कुम्भराक्षसभङ्गानन्तरं स्वस्य वस्त्रलाभस्योक्तत्वात्; **शम्भुना कुम्भराक्षसभङ्गे** क्रियमाणे सति **अम्बरात् पतन्तं** शम्भुं **दृष्ट्वा, सन्तः** भीताः, तदा **मया** शम्भुः **स्तम्भितः** । तस्मात् भूवौ न पपात ॥८१॥

**ध्वजस्तम्भो द्विजश्रेष्ठ भुजस्तम्भे धृतो मया ।**
**सुजनान् भजकान् विष्णूत्सवः पातु ममात्मजान् ॥८२॥**

अन्वयः - हे द्विजश्रेष्ठ ध्वजस्तम्भः मया भुजस्तम्भे धृतः; विष्णूत्सवः ममात्मजान् भजकान् सुजनान् पातु ।

**(व्या) ध्वजस्तंभेति** । एवं **हे द्विजश्रेष्ठ! विप्र!** ध्वजस्तम्भोऽपि भुजस्तम्भे धृतः । 'सोदापुरे स्थापितो ध्वजस्तम्भः । पुनः पुनः पतन् । तत्र हंसवाहनारूढगुरुराजप्रतिमानिर्माणानन्तरं स्थिरो जातः' इत्यैतिह्यम् अत्रोपपादकं ज्ञातव्यम् । (**विष्णूत्सवः** त्रिविक्रमरथोत्सवः **सुजनान्** दर्शनार्थं प्राप्तमुक्तियोग्यान् तत्रापि आख्यानपारायणादिरूपेण **भजकान्,** तत्रापि **ममात्मजान्** शरणागतान् व्याख्यानकर्ता वेदनिध्यादीन् यतीन् **पातु**) ।

**कुञ्जरायुतसत्वोऽहं कञ्जनाभप्रियेच्छया ।**
**मञ्जुमत्पाणिना धर्ता कञ्जलोचनसन्निधौ ॥८३॥**

अन्वयः - कञ्जनाभप्रियेच्छया अहं कुञ्जरायुतसत्वः; कञ्जलोचनसन्निधौ मञ्जुमत् पाणिना धर्ता (भवेयम्) ।

**(व्या)** (कुञ्जरायुतबलवानहम् । नित्यभूतपद्मनाभप्रसादेन तस्मात् कञ्जलोचनसन्निधौ श्री-त्रिविक्रमसन्निधाने **मञ्जुमत्पाणिना** मम मनोहरहस्तेन धर्ता ध्वजस्तम्भधारको भवेयम्) ।।८३।।

**अधस्तादुपविष्टोऽहमिति मा चिन्तय द्विज ।**
**त्वदन्तर्यामिणं मामप्यधस्थं विद्धि बुद्धिमन् ।।८४।।**

**अन्वयः - हे द्विज! अहम् अधस्थात् उपविष्टः इति मा चिन्तय । हे बुद्धिमन्! त्वदन्तर्यामिणं माम् अपि अधस्थं विद्धि ।**

**(व्या) अधस्तादिति ।।** प्राप्तव्यस्थानाप्राप्तिकाले स्थाने अधस्तादुपविष्टोहमिति **मा चिन्तय** ।। (ध्वजस्तम्भस्य अधोभागे स्थितिमासीत् इति चिन्ता न कुरु । त्वदन्तर्यामित्वात् उपलक्षणया मम सज्जनप्रेरकरूपाणाम् अन्तःस्थिततत्वम्; अधोभागे स्थित्वा धारकत्वं विद्यत एव । परन्तु आकाश इव निर्लिप्तः । अत एव **'बुद्धिमन्'** इति सम्बुद्धिः । 'अयमुत्तमदेवानां कृपास्वभावः' इति शास्त्रेण जानीहीति भावः । अथवा हे द्विज! विप्र! 'अहं अधस्तात् उप-विष्टः अल्पज्ञः अल्पशक्तः भाग्यरहितः' इति चिन्तां न कुरु । अहं त्वयि अन्तर्यामिरूपेण त्वाम् उन्नतपदवीं प्रति नयामि इत्यर्थः ।।८४।।)

(*) कृपा –

**'हृदयस्य द्रवीभावस्त्वनुकम्पेति कथ्यते ।**
**उपकारं कर्तुमिच्छां कृपेत्याहुर्मनीषिणः'इति शब्दनिर्णये ।।** – (भाग.ता.नि. ४.७.४८)

**मत्कृतश्चात्र सन्मानो वाङ्मात्रेण कृतोऽभवत् ।**
**पच्छोटिकाऽपि नो दत्ता तव विप्र ममाग्रतः ।।८५।।**

**अन्वयः - अत्र मत्कृतः च वाङ्मात्रेण कृतः अभवत् । हे विप्र! तव मम अग्रतः पच्छोटिका अपि न दत्ता ।**

**(व्या) (मत्कृतः** मह्यं कृतः । मत्कृतः सन्मानः वाङ्मात्रेण कृतः अभवत् । कार्यरूपेण न व्यक्तमभूत् । तदेव विवृणोति **पच्छोटिकेति ।।**) **पच्छोटिकापि नो दत्ते**त्यनेन सम्यक् स्वातन्त्र्यं न दत्तमित्युक्तं भवति ।।

**ऋणान्निष्कृतिमप्याशु न कृता तव शोभन ।**
**भोज्यवित्तं प्रदत्वा तु ऋणान्मुक्तः शनैः शनैः ।।८६।।**

**अन्वयः - हे शोभन! तव ऋणात् निष्कृतिः अपि आशु न कृता; भोज्यवित्तं तु प्रदत्वा शनैः शनैः ऋणात् मुक्तः (भव) ।**

**(व्या) ऋणान्निष्कृतिरिरिति ।।** विठ्ठलेन **ऋणनिष्कृतिर्नकृता** । ऋणनिष्कृति सदृशं कार्यं न कृतम् । विठ्ठलसङ्गृहीतदुर्जनानां वशे भोज्यवित्तं प्रदत्वा ऋणात् प्राग्जन्मजात् शनैः शनैः मुक्तो भव ।।८६ ।।

**भोजनार्थं मधुकरवृत्तिं कुरु यथा पुरा ।**
**मत्कृतिश्चाप्यश्मगता न कृता पश्य तन्मते (सन्मते) ।।८७।।**

**अन्वयः - भोजनार्थं यथा पुरा मधुकरवृत्तिं वृत्तिं कुरु. हे मते! पश्य मत्कृतिः च अपि अश्मगता न कृता.**

**(व्या) भोजनार्थमिति ।। भोजनार्थं मधुकरवृत्तिं कुरु** । यथा मधुकराणां नाना पुष्परसेन जीवनं तथा यत्याश्रमोचितनानागृहस्थजनप्रदत्तान्नेन जीवनं कुर्विति भावः ।। मत्कृतेयं कृतिः विठ्ठलेन **अश्मगता न कृता** । शुद्धशिलाविषयत्वेन न ज्ञाता । (**हे मते!** बुद्धिमन्! **पश्य** तव सामर्थ्यमस्तीति सूचितो भवति ।।)

(*) **'क्षणशः कणशश्चैव विद्यामर्थं च साधयेत्'** । अतः त्वं बहुपण्डितेभ्यः विद्याप्राप्तवान् सन् ज्ञानी भव । इत्यत्र हार्दम् । ज्ञानं तु बृहदारण्यकोपनिषदि ३.५.४ मन्त्रे देवप्रीत्यर्थम् आवश्यकम् । तथा हि – **''बहवः पशवो मनुष्यं भुञ्ज्युः एवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमाने प्रियं भवति किमु बहुषु''** इति खण्डव्याख्यानसन्दर्भे श्रीराघवेन्द्रश्रीमच्चरणाः **''यथा बहवो गोरूपाः पशवः क्षीरादिना मनुष्यं भुञ्ज्युः भोजयेयुः । ह वै प्रसिद्धम् । एवमेकैको ज्ञानिपुरुषः देवान् भुनक्ति भोजयति प्रीणयतीति यावत् । देवप्रीतिकरत्वं ज्ञानिनः कुतः?** इत्यत आह – **एकस्मिन्निति ।। लोके एकस्मिन् भोजके पशावादीयमाने प्रियं भवति । किमु बहुषु । तस्माद्बहुगोपशुतुल्यतया भोजको ज्ञानी देवानां प्रीतिविषयो भवतीति किमु वाच्यमिति भावः ।''** इति ।

**तस्मात्तवैहिकाभावेऽप्यमुत्रार्थो भविष्यति ।**
**मत्प्रसादान्न सन्देहो विश्वासं कुरु सर्वथा ।।८८।।**

**अन्वयः - तस्मात् तव ऐहिकाभावेऽपि अमुत्र अर्थः मत्प्रसादात् भविष्यति; न सन्देहः; सर्वथा विश्वासं कुरु ।**

**(व्या)** त्वया तु ज्ञाता । तस्मात् तव **ऐहिकाभावेपि । अमुत्र पुरुषार्थो भविष्यति** ।

**ऐहिकोऽपि यथा काले किञ्चित् किञ्चित् भविष्यति ।**
**श्रीशप्रसादादावासोऽप्यत्रापि तु भविष्यति ।।८९।।**

**अहं तु गत्वा चाऽयास्ये चिरं जीव सुखी भव ।।**

अन्वयः - यथा काले ऐहिकः अपि किञ्चित् किञ्चित् भविष्यति. अत्रापि श्रीशप्रसादात् तु आवासः अपि भविष्यति; अहं तु गत्वा आयास्ये च; चिरं जीव सुखी भव.

(व्या) अत्रापि स्वकीयभोज्यवित्तप्रापकदेशेपि आवासः भविष्यति ।।८९।। तस्मिन् समये अहमन्यत्र गत्वा त्वदन्तर्यामिरूपेण अत्र आयास्ये । मदागमनसमये तव तत्र आवासो भविष्यतीति भावः ।। विप्र.प्र.सं.।।

१५. वेदनिधिप्रकरणम्।। श्लोकाः (९०९५)

(व्या) 'द्विजसमाजनत' इत्यारभ्यं 'क्लीबशब्दं प्रयुक्तवान्' इत्यन्तं वेदनिधिश्रोतृकं पञ्च- दशं प्रकरणम् । प्रागुक्तविप्रकार्यसाधकस्य वेदनिधेः अग्निहोत्रिणः सकाशात् उत्पत्त्यादेः कथनात्, तदनुग्राहकत्वरूपं भौमलौकिकभाक्तवैभवमत्रोच्यते द्विजेति ।।

**द्विजसमाजनत सज्जनप्रिय कुजनभर्जन ममात्मज भोज ।**
**द्विजवरस्य ऋणजां सुरुजं वै सुजनश्रेष्ठ हर मज्जनैर्द्विजैः ।।९०।।**

अन्वयः - हे ममात्मज! भोज! द्विजसमाजनत! सज्जनप्रिय! कुजनभर्जन! सुजनश्रेष्ठ! मज्जनैः द्विजैः द्विजवरस्य ऋणजां वै सुरुजं हर ।

**वेदान्तवेद्य मम सान्द्रदयानिधेऽद्य**
**त्वं वेदवेद्यपदपद्म(द्य)सुधारसाब्धौ ।**
**धीमन्दरेण मथिते सति भावचिन्ता-**
**रत्नं गृहीष्व तव भागदशोत्तराच्च ।।९१।।**

अन्वयः - हे वेदान्तवेद्य! मम सान्द्रदयानिधे! वेदवेद्यपदपद्मसुधारसाब्धौ धीमन्दरेण मथिते सति तव भावचिन्तारत्नं च भागदशोत्तरात् गृहीष्व.

(व्या) वेदान्तवेद्येति ।। वेदान्तवेद्य! वेदपदस्य अन्ते उत्तरभागे विद्यमानेन निधिपदेन वेद्य । मम सान्द्रदयानिधे! हे वेदनिधे! त्वं वेदवेद्यस्य बादरायणस्य यानि पद्यानि तान्येव

सुधारसाः तेषाम् अब्धौ समुद्रसदृशे अस्मिन्नाख्याने **धीमन्दरेण मथिते सति, तव भाग-दशोत्तरात्** एकादशाध्यायतः **भावचिन्तारत्नम्** अभिप्रायरूपचिन्तामणिं गृहीष्व । अस्मिन् एकादशाध्याये वेदनिधिवृत्तान्तस्य स्पष्टमुक्तत्वात् । दशोत्तरादित्युक्तम् ।।९१।।

**वेदान्तवेद्य सुजनाब्धिसुपूर्णचन्द्र**
**त्वं कुण्डलमण्डलसुदर्शनतो भवाद्य ।**
**त्वं वेदवेद्यकुमुदस्य प्रमोदकारी**
**मत्पट्टदिव्यसरसीतटजस्य कामम् ।।९२।।**

**अन्वयः - वेदान्तवेद्यसुजनाब्धिसुपूर्णचन्द्र त्वम् अद्य कुण्डलमण्डलसुदर्शनतः भव. त्वं मत्पट्टदिव्यसरसीतटजस्य वेदवेद्यकुमुदस्य कामं प्रमोदकारी.**

**(व्या) वेदान्तवेद्य सुजनाब्धीति** । हे वेदान्तवेद्य! वेदनिधे! त्वम् । **कुण्डमण्डल-सुदर्शनतः** कुण्डानां मण्डलैः सम्यक् दर्शनं यस्य सीतापतेः । तस्य सकाशात् **भव** = उत्पन्नो भव । यथा चन्द्रः मण्डलदर्शनतः उत्पन्नवद्भवति तथा त्वं सुजनाब्धितोषकृत् सुपूर्णचन्द्रः कुण्ड-मण्डलसुदर्शनतः भवेति भावः । **त्वं वेदवेद्यकुमुदस्य** बादरायणरूपकुमुदस्य **प्रमोदकारी** । त्वत्पूजया तोषो भवतीति भावः । कुमुदसादृश्यमुपपादयति **मत्पट्टेति ।।** मत्पट्टरूपे दिव्यसर-सीतटे उत्पन्नवत् विद्यमानस्य (बादरायणस्य प्रमोदकारी इति पूर्वेणान्वयः) ।।९२।।

**त्वां वेदवेद्यमपि वां सहितौ च दृष्ट्वा सन्तोषसन्ततिरभून्मम ज्येष्ठपुत्र ।**
**पूर्वं यथा च सुरवर्यरघुप्रवीरं तस्यानुजं दशरथस्य बभूव मोदः ।।९३।।**

**अन्वयः - हे ज्येष्ठपुत्र! त्वां वेदवेद्यं अपि च वां सहितौ दृष्ट्वा मम सन्तोषसन्ततिः पूर्वं यथा सुरवर्यरघुप्रवीरं तस्य अनुजं च (दृष्ट्वा) दशरथस्य मोदः बभूव तथा अभूत्.**

**(व्या) त्वां वेदवेद्यं** बादरायणं च । कदाचित् पृथक् दृष्ट्वा तव यतित्वप्राप्त्यनन्तरं **वां सहितौ च दृष्ट्वा मम सन्तोषसन्ततिरभूत्** । **सुरवर्यरघुप्रवीरं** तदनुजं लक्ष्मणं **च दृष्ट्वा यथा दशरथस्य मोदः** सन्तोषः तथा ।।९३।।

**(व्या)** वेदनिधिना कर्तव्यकार्ये निर्विघ्नत्वसूचनायाह **रथोत्सवस्येति** ।।९४।।

**रथोत्सवस्य विघ्नानि यानि कानिचिदप्यहो ।**
**स्तम्भप्रपातनादीनि तानि वारितवानहम् ।।९४।।**

अन्वयः - रथोत्सवस्य स्तम्भप्रपातनादीनि यानि कानिचिदपि विघ्नानि तानि अहं वारितवान् ।

(व्या) (यानि विघ्नानि सम्भावितानि । तानि अहं वारितवान् इति योजना ।।९४।।)

**मद्भयात् क्रुद्धविघ्नानां पुनरुद्धरणं बुध ।**
**नैवेति सुमनोज्ञोऽहं क्लीबशब्दं प्रयुक्तवान् ।।९५।।**

अन्वयः - हे बुध! मद्भयात् क्रुद्धविघ्नानि पुनः उद्धरणं नैव इति क्लीबशब्दं सुमनोज्ञो।हं प्रयुक्तवान् ।

(व्या) विघ्नानीति नपुंसकशब्दस्य प्रयोजनमाह मद्भयादिति ।। पञ्चमाध्यायमारभ्य एकादशाध्यायपर्यन्तं बहूनि वैभवानि उक्तानि । तत्र बादरायणाराधकत्वमुपपादयितुम् अन्येषां बहूनां कथनमिति सूचयितुं पञ्चमाध्याये 'तामप्यस्य ददाम्यहम्' 'शिलास्थां कुरु पुत्रेश' इत्याद्युक्तस्य अत्रोपसंहारे कथनात् 'व्यासस्यैवाज्ञया' इत्यारभ्य 'त्वां वेदवेद्यमपि' इत्यन्तेन बादरायणाराधकत्वे विशेषतः तात्पर्यमिति सिद्धम् ।।९५।। वे.निधि.प्र.सं.।।

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**

**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

।। इति श्रीमत्कविकुलतिलकवागीशतीर्थश्रीमच्चरणकरसञ्जातश्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलौकिकविभागे एकादशाध्यायः समाप्तः ।।

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः

भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक-ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य-जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**वैभवपर्वणि एकादशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**

# १२-०००- द्वादशोऽध्यायः

## १२-००१-००२- विप्रप्रकरणम्

(व्या) श्रीवादिराजगुरुभ्यो नमः ।। ॐ ।। अध्यायचतुष्टयात्मकभजनपर्वोक्तार्थे च निश्चयमुत्पादयितुं एकादशाध्यायात्मके पर्वणि निदर्शनान्युच्यन्ते । प्राचुर्येण अस्मिन् अध्याये विप्रशेषसीतापतिभिः ज्ञातव्यानि निदर्शनान्युच्यन्ते । अत्रत्यप्रकरणानां परस्परसङ्गतेः विश्वं विष्णुर्वषट्कारः इत्यादाविव सूक्ष्मदर्शिभिरेव ज्ञातव्यत्वात् अत्रत्यानां परस्परसङ्गतिर्न विचार्यते । **'मत्प्रसादाच्च'** इत्यारभ्य **'चिन्तय त्वं सुखी भव'** इत्यन्तं विप्रश्रोतृकप्रथमं प्रकरणम् । अत्र पूर्वाध्यायोक्तभूपेन कारयितव्यं विप्रस्य शिबिकारोहणरूपं निदर्शनम्, शेषेण कर्तव्यवृत्तिप्रयत्नरूपनिदर्शनं चात्रोच्यते ।।

**हरिः ओं ।। मत्प्रसादाच्च भूपेन शिबिकारोहणं कृतम् ।**
**तव विप्र न सन्देहश्चेत् सर्वं हि निदर्शनम् ।।१।।**

**मत्प्रसादाच्च शेषेण कृतो यत्नस्तवाप्तये ।**
**वृत्तेर्न चान्यथा विप्र चिन्तय त्वं सुखी भव ।।२।।**

(अन्वयः) हे विप्र! मत्प्रसादाच्च तव शिबिकारोहणं भूपेन कृतम् । (अत्र) न सन्देहः चेत् सर्वं निदर्शनं हि ।। मत्प्रसादाच्च तव वृत्तेः आप्तये शेषेण यत्नः कृतः; हे विप्र! अन्यथा न चिन्तय । त्वं सुखी भव ।।

(व्या) **भूपेन शिबिकारोहणं कृतं** कारितं **चेत्** वक्ष्यमाणं **सर्वं निदर्शनं** ज्ञातं **भवेत्** ।।१।। **मत्प्रसादात्** । नृपोपकारेण **शेषेण तव वृत्तेः** प्राप्तये **यत्नः कृतः** । **हे विप्र! अन्यथा** किमेतद्भविष्यति न वा इति न चिन्तय ।।२।। प्र.१।।

## १२-००३-००५ - बहुभक्तप्रकरणम्

(व्या) **'मद्दत्ताचार्य'** इत्यारभ्य **'मत्कृतिं वक्ष्यतु त्विमाम्'** इत्यन्तं बहुभक्तश्रोतृक-द्वितीयं प्रकरणम् ।।

**मद्दत्ताचार्यनाम्ना तु यः कश्चिद्वा नराधमः ।**
**ब्राह्मणं न भणत्यन्त्यः कुणपेन किमन्तरम् ।।३।।**

**वृन्दावनपदोपेततन्नाम्नैवाऽऽह्वयन्त्विमम् ।**
**ये चेमं न भणन्त्यन्त्यास्ते च मद्द्रोहिणः सदा ।।४।।**

**लक्ष्मीपतिः सूक्ष्ममतिः श्लक्ष्णवाक् मत्कटाक्षतः ।**
**भोक्ष्यतीक्षाफलं सूक्ष्मं मत्कृतिं वक्ष्यतु त्विमाम् ।।५।।**

(अन्वयः) यः कश्चित् नराधमः (अयं) ब्राह्मणं तु मद्दत्तआचार्यनाम्ना वा न भणन्ति । (सः) अन्त्यः । (तस्य) कुणपेन किम् अन्तरम्? इमम् वृन्दावनपदोपेततन्नाम्ना एव आह्वयन्तु; ये च इमं न भणन्ति (ते) अन्त्याः सदा मद्द्रोहिणः च ।। सूक्ष्ममतिः श्लक्ष्णवाक् लक्ष्मीपतिः मत् कटाक्षतः ईक्षाफलं भोक्ष्यति; इमां सूक्ष्मं मत्कृतिं तु वक्ष्यतु ।।

(व्या) विप्रस्य, प्राप्तयतित्वस्य, (पूर्वजन्मनि गुरुदत्तवृन्दावनाचार्यनामकत्वज्ञानाभावे भूपशेषाभ्यां विप्रस्य मान्यत्वज्ञानानुपपत्त्या) भक्तैः वृन्दावनाचार्येति नाम्ना व्यवहारः कर्तव्यः । केनचिदभक्तमुख्येन 'अयं वृन्दावनाचार्यनामको विप्रः' इति नोच्यते ।।३।। (ये तथा न व्यवहरन्ति ते गुरुराजद्रोहिणः । यथा 'इळावृतखण्डभागे प्राप्तानां स्त्रीत्वं भवतु' इति रुद्रशापः अज्ञानादपि सुद्युम्नराज्ञः बाधकोऽभवत् । तथेदं गुरुराजवचनं उल्लङ्घ्य व्यवहर्तॄणां गुरुद्रोहफलं दुर्वारमेव ।।४।।) किन्तु लक्ष्मीपतिनाप्युच्यते इति सूचयितुमाह – **लक्ष्मीपतिरिति ।। ईक्षाफलं** = ज्ञानफलं **भोक्ष्यति** । भजनपर्वार्थः लक्ष्मीपतिना वक्तव्य इति 'एतद्रहस्यं मम पुत्र पश्यन्'(३/४९) इत्यादिना प्रतिपादितम् । 'लक्ष्मीपते सूक्ष्ममते' इत्यादिना वैभवपर्वार्थस्यापि तेन वक्तव्यत्वमुक्तम् । अत्र पुनः तस्यैव अनुवादेन निदर्शनपर्वार्थस्यापि तेन वक्तव्यत्वमुक्तम् ।।५।।

अभक्तेषु विप्रस्य वृन्दावनाचार्यनाम्ना व्यवहाराभावः । भक्तेषु व्यवहारः । लक्ष्मीपतिना कर्तव्यं निदर्शनपर्वार्थकथनं चेति निदर्शनत्रयमत्रोक्तम्[१] ।।५।।

---

(१) (सु) हन्नेरडनेय अध्यायदिन्द इप्पत्तेरडनेय अध्यायपूर्तियागि हन्नोन्दु अध्यायगळु निदर्शनपर्व एन्दु करेयल्पडुत्तवे. प्रथम नाल्कु अध्यायगळु भजनपर्व. ऐदरिन्द हन्नोन्दनेय अध्यायपूर्तियागि एळु अध्यायगळु वैभवपर्ववेन्दु करेयल्पडुत्तवे. प्रथमाध्याय नान्दियन्ते मूरु पर्वक्कू सेरुत्तदे. आद्दरिन्द १,२,३,४ अध्यायगळु भजनपर्व. १,५,६,७,८,९,१०,११ हीगे एंटु अध्यायगळु वैभवपर्व. नन्तर १,१२,१३,१४,१५,१६,१७,१८,१९,२०,२१,२२ हीगे हन्नेरडु अध्यायगळु निदर्शनपर्व. हीगे मूरु

### १२–००६–००९ – लक्ष्मीपतिप्रकरणम्

(व्या) 'लक्ष्मीपते सूक्ष्ममते' इत्यारभ्य 'तत्सङ्गात् शृणुयात् इमाम्' इत्यन्तं लक्ष्मीपतिश्रोतृकप्रकरणम् ।(तृतीयं)

**लक्ष्मीपते सूक्ष्ममते मत्कथामृतवारिणा ।**
**सतामाध्यात्मिकाद्यग्निं शमय त्वं सुखीभव ।।६।।**

(अन्वयः) हे सूक्ष्ममते! लक्ष्मीपते! सताम् अध्यामिकाद्यग्निं मत्कथामृतवारिणा शमय । त्वं सुखीभव ।।

(व्या) 'मत्कृतिं वक्ष्यतु त्विमां' इति परोक्षेण दत्ताप्यभ्यनुज्ञा कथं विश्वसनीया? इत्यत आह – लक्ष्मीपते इति ।।६।। (अयमेव श्लोकः पञ्चमाध्याये तृतीयश्लोकरूपेण वैभवपवार्थवक्तृत्वे लक्ष्मीपतेरधिकारप्रदानज्ञापकतया दृश्यते । अत्र तस्यानुवादेन लक्ष्मीपतेः समग्राख्यानग्रन्थप्रवचने अधिकारो गुरुराजेण दत्त इति विज्ञायते ।।६।।)

**अहो ममात्मजा युक्तिमल्लिकाख्या ममात्मजम् ।**
**वव्रे तीव्रेण बोधेनाप्यग्रजं व्यग्रभामिनी ।।७।।**

**अग्रजाद्रमणी भूत्वा जाता सा भावगर्भिणी ।**
**सुषाव पुत्रं भावाख्यं विदुषां तु मतं तथा ।।८।।**

**अथापि दोषशून्याऽभून्निस्सङ्गस्यात्मजा यतः ।**
**यां तु श्रुत्वा च सत्सङ्गी निस्सङ्गो जायते पुमान् ।।**

**तस्मान्निस्सङ्गतावाप्तौ तत्सङ्गात् श्रुणुयादिमाम् ।**

(अन्वयः) युक्तिमल्लिकाख्या ममात्मजा व्यग्रभामिनी तीव्रेण बोधेन अपि अग्रजं ममात्मजं वव्रे । अग्रजाद् रमणी भूत्वा सा भावगर्भिणी जाता, भावाख्यं पुत्रं सुषाव । तथा विदुषां तु मतम् ।। अथापि यतः निस्सङ्गजस्य आत्मजा (अतः सा) दोषशून्या अभूत् । सत्सङ्गी पुमान् च यां तु श्रुत्वा निस्सङ्गः जायते ।।

तस्मात् निस्सङ्गता अवाप्तौ तत्सङ्गात् इमां श्रुणुयात् ।।

---

विभागक्कू लक्ष्मीपतिये प्रवचनाधिकारि एन्दु हेळल्पट्टिदे.

**(व्या)** ''वृन्दावनकृतिवत् युक्तिमल्लिकापि आदरणीया । वृन्दावनकृतेः पूर्वं सिद्धव्याख्यानाभावात् । तद् व्याख्यातॄणां तत् प्रख्यापकत्वम् । श्रोतृत्वं च तवावश्यकमिति सूचितम् । युक्तिमल्लिकायास्तु व्याख्यानस्य पूर्वसिद्धत्वात् श्रोतृत्वं ख्यापकत्वं चेत्याता-वदेव । तस्मात् प्रयत्ने(त्न) सौलभ्यमस्ति । तस्मात् तया श्रोतव्या इति ज्ञापयितुमाह – **अहो ममात्मजेति ।।** यथा **आत्मजा** प्रद्युम्नरूपिणः सकाशादुत्पन्ना या अग्रभामिनी सरस्वती ।। **अग्रजं** सापेक्षया अग्रे प्रलयकाले जातम् **आत्मजं** ब्रह्माणं **बोधेन ज्ञानेन तीव्रेण वव्रे** ।।७।। **अग्रजात्** ब्रह्मणः **रमणी** रमणवती **भूत्वा भावगर्भिणी** भावसम्बन्धी, भावः तदात्मको गर्भः अस्याः अस्तीति भावगर्भिणी । **जाता सा** । **भावाख्यं** शिवाख्यं भवमङ्गलशिवशब्दानां पर्यायत्वात् । विदुषां **मतम्** । सम्मतम् । **पुत्रं सुषाव** ।।८।। **अथापि दोषशून्या अभूत्** । निःसङ्गस्य हरेः आत्मजा पुत्री यतः तस्मात् । मत्कृतत्वात् **ममात्मजा व्यग्रभामिनी**, विः परमात्मा अग्रः सर्वोत्तमः यस्याः सा व्यग्रा । भामिनी । यस्याः अभिमानिनी सा व्यग्रभामिनी, **युक्तिमल्लिकाख्या** कृतिः **अग्रजं** स्वापेक्षया पूर्वं जातं मम पुत्रतुल्यं सुरोत्तमतीर्थं **तीव्रेण बोधेन** तद्गतेनापि अभिमतार्थज्ञानेन **वव्रे । अग्रजात् रमणी भूत्वा** =विहारवती विचारिता सती भावगर्भिणी जाता = अभिप्रायगर्भिणी जाता । सा विदुषां मतं भावाख्यं अभिप्रायाख्यं पुत्रं सुषाव (भावविलासिनी – श्रीसुरोत्तमतीर्थविरचित युक्तिमल्लिकाटिप्पणी) । **निःसङ्गस्य** मम यस्मादात्मजा निःसङ्गेन मया कृता तस्माद-ज्ञानविप्रलम्भादिदोषमूलकत्वाभावात् **दोषशून्या अभूत्** । **यां तु श्रुत्वा पुमान् निःसङ्गो जायते** । निर्दोषतया सरस्वतीं श्रुत्वा यथा निःसङ्गो जायते तथा निर्दोषामिमां कृतिं श्रुत्वा निःसङ्गो जायते ।।९।।

तस्मात् इमाम् अधिकारी निःसङ्गतावाप्त्यै निःसङ्गत्वप्राप्त्यर्थं यः (सङ्गः) तत्सङ्गात् सदा आसक्तिरूपात् शृणुयात् । सः तत्सङ्गी निःसङ्गश्च जायते । तस्मात् त्वया युक्तिमल्लिकोक्तेन **मत्कथामृतवारिणा सताम् आध्यात्मिकाद्यग्निशमनं** कर्तव्यमिति भावः । लक्ष्मीपतिना कर्तव्यं निदर्शनपर्वार्थकथनम् । युक्तिमल्लिकार्थकथनं चेति निदर्शनद्वयमत्रोक्तम् ।।९ १/२।।

## १२–०१० – विप्रप्रकरणम्

**(व्या)** शेषेण व्यासेन च कर्तव्यमुक्त्वा सीतापतिना कर्तव्यं निदर्शनं वक्तुं विप्रेण रक्षकतया सीतापतिर्विश्वसनीय इत्याह । **को वा त्वयि** इत्येकं पद्यं विप्रप्रकरणं चतुर्थम् ।।

**को वा त्वयि दयाशीलो वर्तते मत्सुतोपमः ॥१०॥**

**ऋणमोचयितारं ते मत्पुत्रं शरणं व्रज ।**

(अन्वयः) मत्सुतोपमः त्वयि दयाशीलः को वा वर्तते? ते ऋणमोचयितारं मत्पुत्रं शरणं व्रज ॥

(व्या) **मत्सुतः** सीतापतिः । **दयाशीलः** तत्सदृशः **त्वयि को वा वर्तते?** न कोऽपि । तस्मात् **ते ऋणमोचयितारं शरणं** रक्षकं **मत्पुत्रं** सीतापतिं **व्रज** । अत्र सीतापतेः विप्रेण विश्वसनीयत्वमुक्तम् ॥

### १२-०१२-०१६ सीतापतिप्रकरणम्

(व्या) **'यश्चाक्षेपं'** इत्यारभ्य **'निर्विघ्नं कुरु तत्र च'** इत्यन्तं सीतापतिश्रोतृकप्रकरणं पञ्चमम् ॥

**यश्चाक्षेपं करोत्यत्र मत्कृतौ दोषशङ्कया ॥११॥**

**तत्प्राणस्यैव चाक्षेपं मुख्यप्राणः करोत्यहो ।**
**सत्यं सत्यं पुनः सत्यं त्रिवाचाऽपि मयोच्यते ॥१२॥**

**विप्रान्तर्यामिणा चेयं सत्कृतिश्च मया कृता ।**

(अन्वयः) यः दोषशङ्कया अत्र मत्कृतौ च आक्षेपं करोति मुख्यप्राणः तत् प्राणस्य एव आक्षेपं च करोति । अहो! त्रिवाचा अपि मया सत्यं सत्यं पुनः सत्यं (इति) उच्यते; (तथा) इयं सत्कृति च विप्रान्तर्यामिणा मया कृता ॥

(व्या) पूर्वप्रकरणे वृन्दावनकृतेर्युक्तिमल्लिकोपमत्वम् उक्तम् । **अत्र यः आक्षेपं करोति** 'युक्तिमल्लिका गुरुराजकृता । आख्यानं तु न वृन्दावनप्रवेशतः पूर्वं कृतम्, तस्मात् न विश्वसनीयम्' इति । यः एवं आक्षेपं करोति **तत्प्राणस्यैव मुख्यप्राणः आक्षेपं करोति** । दार्ढ्यार्थमाह – **सत्यं सत्यं इति ॥** (एवं अप्रामाण्यशङ्कायुक्तः आयुर्नाशं प्राप्नोति गुरुराज-द्रोहेणेत्यर्थः) (तर्हि कथं तत्वं ज्ञातव्यम्? इत्यत आह – **विप्रेति ॥**) **इयं (सत्)कृतिः विप्रान्तर्यामिणा मया कृता** । (विप्रस्य स्वप्ने दर्शितरूपेण मया कृता) तस्मात् त्वया इयं विश्वसनीया इति भावः ॥१२ १/२॥

**अयं तु ब्राह्मणः श्रीमानापणे चातिपापिना ।।१३।।**

**आतपे स्थापितः कामं देवरेण वणिग्भृता ।**
**द्विजान्तर्यामिणं मामप्यातपस्थं चकार सः ।।१४।।**

**पुत्र त्वं शीघ्रतस्तस्मादृणान्मोचय मारणात् ।**

(अन्वयः) अयं तु श्रीमान् ब्राह्मणः अतिपापिना वणिग्भृता देवरेण च आपणे कामं आतपे स्थापितः । (किन्तु) द्विजान्तर्यामिणं माम् अपि सः आतपस्थं चकार । (अतः) हे पुत्र! त्वं तस्मात् मारणात् ऋणात् शीघ्रतः मोचय ।।

(व्या) **अयमिति** ।। **देवरेण** स्वदेवरेण सह **अतिपापिना वणिग्भृता** । केनचित् पुरुषेण **अयं ब्राह्मणः आतपे स्थापित** इव आसीत् । स पापी न केवलं द्विजमातपस्थत्वेन चकार किन्तु **तदन्तर्यामिणं माम् आपि आतपस्थं चकार** ।।१४।। **तस्मात्** हे पुत्र सीतापते! **ऋणाद्विप्रं मोचय** । मारणाच्च मोचय । कालविशेषे केनचित् पापिना विप्रप्रेष्येण स्वदेवरसहितेन आपणस्थैः वणिग्भिः गृहीतस्य क्रयरूपेण दातव्यं धनं ग्रामादिलब्धं स्वयमुपहृत्य ऋणपत्रं लिखित्वा वणिग्वशे दत्वा मृतः । तसामत् तदृणं विप्रेण परिहर्तव्यं भविष्यति । विप्रहितकारिणा त्वया तत्परिहारः कर्तव्यः इत्यर्थः । एवं कालविशेषे शत्रुकृतमारणप्रयोगपरिहारोपि त्वया कारयितव्यः इति सूचयितुं **मारणादि**त्युक्तम् ।।

**पुत्र मद्वचनं सत्यमेकं कुरु च कीर्तये ।।१५।।**

**अहं दास्यामि मद्दास्यं शश्वदृणविमोचने ।**
**विप्राय प्राप्तकामाय निर्विघ्नं कुरु तत्र च ।।१६।।**

(अन्वयः) हे पुत्र! मद्वचनं कीर्तये च सत्यम् एकं कुरु । ऋणविमोचने (जाते सति) अहं शश्वत् मत् दास्यं दास्यामि । प्राप्तकामाय विप्राय तत्र च निर्विघ्नं कुरु ।।

(व्या) **ऋणविमोचने** जाते सति **अहं** विप्रस्य **शश्वत्** एकप्रकारेण **मद्दास्यं** नैरन्तर्येण मद्वृन्दावनसेवादिरूपं **दास्यामि** । **तत्र** त्वं **निर्विघ्नं कुरु** । कृतेर्विश्वसनीयत्वं, ऋणमोचनं, मारणमोचनं चेति निदर्शनत्रयमत्रोक्तम् ।। सी.प्र.सं. प्रकरण ५।।

## १२-०१७-०२१- विप्रप्रकरणम्

(व्या) **'मत्कार्यमपि'** इत्यारभ्य **'करमञ्जसा'** इत्यन्तं विप्रश्रोतृकं षष्ठं प्रकरणम् । पूर्वप्रकरणोक्तेन अतिपापिना केनचित् कृतेन ऋणदोषेण वित्ततोदपरिहारार्थमाह – मत्कार्यमपीति ।।

**मत्कार्यमपि भूदेव किञ्चिदप्यतिलङ्घितुम् ।**
**न शक्यं न कृतं तच्च तव कार्ये तु किं पुनः ।।१७।।**

**इतः परं तु मत्कार्यं तव वा विप्रवर्य यत् ।**
**न वक्ष्ये कुर्विति व्यर्थं दैन्यं मम न रोचते ।।१८।।**

(अन्वयः) हे भूदेव! मत्कार्यम् अपि किञ्चत् अतिलङ्घितुं न शक्यम्, तच्च न कृतं (च); तव कार्ये तु किं पुनः? हे विप्रवर्य! इतः परं मत्कार्यं वा तव यत् कार्यं 'कुरु' इति व्यर्थं न वक्ष्ये; मम दैन्यं न रोचते ।।

(व्या) **हे भूदेव!** केनापि **मत्कार्यम् अतिलङ्घितुं न शक्यम्** । तदपि अतिपापिना तेन (न)[१] कृतम् । **तव कार्ये तु किं** पुनर्वक्तव्यम् ।।१७।। **इतः** इतः कारणात् **परं** प्रति अभक्तं प्रति, **यत् मत्कार्यं तव वा** यत्कार्यं तत् **कुर्विति व्यर्थं** निष्फलं यथा भवति तथा **न वक्ष्ये** ।।१८।।

तर्हि ऋणविमोचनं केनोपायेन? इत्यत आह – **तवेति ।।**

**तव कार्यं तु विप्रेश प्रागेवोक्तं मायाऽनघ ।**
**भोज्यवित्तं प्रदत्वा तु ऋणान्मुक्तः शनैः शनैः ।।१९।।**
**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।**

**(अन्वयः) हे विप्रेश! तव कार्यं तु प्रागेव मया उक्तम्; हे अनघ! भोज्यवित्तं तु प्रदत्वा शनैः शनैः ऋणान् मुक्तः (भव) । हे बुद्धिमन्! इति मया पूर्वम् उक्तम् अनुसन्धत्स्व ।**

---

(१) 'अतिपापिना तेन कृतं' एन्दु श्री इदे. आग 'तदपि' एन्दरे तादृश अतिलङ्घनमपि एन्दु अर्थमाडबेकु. आदरे 'तदपि' एम्बुदक्के स्वरसवागि तादृशमत्कार्यमपि एन्दु अर्थमाडिदरे अतिपापिना तेन न कृतं एन्दु मुन्दिन पद्यभागक्के अर्थमाडबेकु. आद्दरिन्द 'न' एम्ब पदवु इल्लि प्रामादिकवागि बिट्टुहोगिदे एन्दु तिळिदु सेरिसलागिदे.

(व्या) तवकार्यमिति ।। भोज्यवित्तेषु कतिपयवित्तानि सङ्गृह्य (सङ्ग्राह्य) सीतापतिना ऋणमोचनं कारयितव्यमिति भावः ।।१९।। (पूर्वं – ११.८६; ६.३६; १४.१२; १९.३)

कतिपयऋणमोचनं भक्तेन दत्तेन वित्तेनेति सूचयितुमाह – सत्पात्रे इति ।।

**सत्पात्रे दानशीलस्य मत्पात्रे चान्नदो द्विज ।।२०।।**

**मत्करे चोदकं दत्वा सत्करं प्राप्नुयादिह ।**
**ऋणमोचयिता ते च मरणं नैति शीघ्रतः ।।२१।।**

**शरणं व्रज मत्पुत्रं करुणाकरमञ्जसा ।**

**(अन्वयः) हे द्विज! सत्पात्रे दानशीलस्य मत्पात्रे च अन्नदः; मत्करे च उदकं दत्वा सत्करं प्राप्नुयात् ।। इह ते ऋणमोचयिता च शीघ्रतः मरणं न एति । करुणाकरं मत्पुत्रं अञ्जसा शरणं व्रज ।**

(व्या) हे द्विज! यः मत्पात्रे मदीयभक्तरूपे पात्रे लब्धे सति अन्नदः ।।२०।। सः मत्करे भक्तान्तर्यामिणो मम करे उदकं दत्वा तत्पुण्यप्रभावेण सत्करं प्राप्नुयात् । सत्पात्रे दानशीलस्य ते तव ऋणमोचयिता यः शीघ्रं मरणं न प्राप्नोति पूर्णायुर्भविष्यतीति भावः। तस्मात् तादृशं (मत्पुत्रं) मद्भक्तं करुणाकरं दयावन्तं तव रक्षकं व्रज ।। अत्रा-तिपापिना कृतं गुरुकार्यपरित्यागरूपं, सीतापतिना कारयितव्य कतिपयऋणविमोचनं, अन्नदानं चेति निदर्शनचतुष्टयमुक्तम् ।। वि.प्र.सं.प्र८६।।

### १२–०२२–०२७– सीतापतिप्रकरणम्

(व्या) 'विप्रस्य पुत्रलाभोऽयम्' इत्यारभ्य 'कुजनं त्यज दुर्बुद्धिं भुजङ्गं तु जनो यथा' इत्यन्तं सप्तमं सीतापतिश्रोतृकप्रकरणम् । इतःपरं एतादृशानां दुष्टानां सङ्ग्रहो न कर्तव्यः । सङ्गृहीता अपि केचिद्दुष्टाः भुजङ्गवत् परित्याज्याः इति वक्तुं तदुपयुक्तकृति-प्रामाण्यनिश्चयं बन्धकबुद्धिदोषपरिहारफलकपुत्रलाभनिदर्शनमाह – विप्रस्येति ।।

**विप्रस्य पुत्रलाभोऽयं भवतीति मयोदितम् ।।२२।।**

**तत्सत्यं समभूत्पुत्र कुत्र ते संशयो वद ।**
**एवं मयोदितं सर्वमैहिकामुष्मिकं च यत् ।।२३।।**

**तत्सत्यं नात्र सन्देहो विश्वासं कुरु सर्वदा ।**
**सुजनाम्भोजतेजस्विन् कुजनाम्बुजराज ते ।।२४।।**

(अन्वयः) मया अयं विप्रस्य पुत्रलाभः भवति इति (यत्) उदितम् तत् सत्यं समभूत् । हे पुत्र! ते संशयः कुत्र? वद । एवं यत् मया उदितं सर्वं ऐहिकामुष्मिकं तत् सत्यम् । हे सुजनाम्भोजतेजस्विन्! कुजनाम्बुजराज! अत्र न सन्देहः । सर्वदा विश्वासं कुरु ।

(व्या) विप्रस्य पुत्रलाभः । तेन प्रदातव्यमठाधिपत्ययोग्यपुत्रलाभः । प्रथमजन्मनि औरसपुत्रलाभः[(१)] (हे सुजनाम्भोज तेजस्विन्[(२)]! कुजनाम्बुजराज दुर्जनकमलचन्द्र! विप्रस्य अयं प्रसिद्धः पुत्रलाभः भवतीति मया यत् उदितम् तत्सत्यं समभूत् । हे पुत्र ते कुत्र संशयः वद । (एवम्) एवमेव मयोदितं सर्वम् ऐहिकं आमुष्मिकं च यत् तत् सर्वं सत्यम् । नात्र सन्देहः । सर्वदा विश्वासं कुरु इति योजना । 'ते' इत्यस्य उत्तरश्लोकस्य 'सौजन्यं' इति पदेनान्वयः ।।२२-२४।।)

**स्वजने चास्तु सौजन्यं द्विजराजे च सर्वदा ।**
**एवं मदीरितां कीर्तिमार्तिनाशकरीं पराम् ।।२५।।**

**आदाय ते चानन्दाय चानन्दी भव नन्दन ।**
**हरौ कुरु गुरौ भक्तिभारं धीर परात्परे ।।२६।।**

**घोरसंसारपारं त्वं तितीर्षुश्चेत्कृपाकरे ।**
**कुजनं त्यज दुर्बुद्धिं भुजगं तु जनो यथा ।।२७।।**

(अन्वयः) ते स्वजने च द्विजराजे च सौजन्यं सर्वदा अस्तु । हे नन्दन! एवं ते आर्तिनाशकरीं मदीरितां परां कीर्तिं च आदाय, ते च आनन्दाय आनन्दी भव ।। हे धीर! घोरसंसारपारं त्वं तितीर्षुः चेत्, परात्परे, कृपाकरे हरौ गुरौ

---

(१) ई श्रीमुष्णाचार्यर व्याख्यानप्रकार एडमूकविप्रनिगे आ जन्मवादाग नन्तर बरुव प्रथमजन्मदल्लि विप्रनिगे गृहस्थधर्मविरुत्ते. औरसपुत्रनागुत्ताने. द्वितीयजन्मवे वृन्दावनाचार्यरागुव जन्म. आ जन्मदल्लि योग्ययतिशिष्यरु पुत्रत्वेन अवरिगे प्राप्तरागुत्तारे एन्दर्थ.।।

(२) सुजनरेम्ब कमलगळिगे सूर्यने!

**(च) भक्तिर्भारं कुरु ।। यथा जनः भुजङ्गं तु (त्यजति, तथा त्वं) कुजनं दुर्बुद्धिं (च) त्यज ।।**

**(व्या) स्वजने** भक्तसमूहे ।।२४।। **(ते सौजन्यं स्वजने अस्तु** । च अपि । **द्विजराजे च** वृन्दावनाचार्येऽपि तव सौजन्यं सर्वदा अस्तु ।।२४ १/२।।) ते आर्तिनाशकरीं मदीरितां कीर्तिम् आदाय । ज्ञात्वा । (वृन्दावनाख्यानं श्रुत्वा इत्यर्थः) । **ते आनन्दाय** तव प्राप्तव्य मोक्षानन्दादिलाभाय । इदानीम् **आनन्दी भव** । आख्यानार्थश्रवणजन्यस्य आनन्दस्य भाव्यानन्दस्य उत्कर्षहेतुत्वात् इति भावः ।। विप्रस्य पुत्रलाभः, सीतापतेराख्या-नार्थश्रवणजन्यानन्दः, तेन कर्तव्य दुर्जनत्यागश्चेति । निदर्शनत्रयमत्रोक्तम् ।।२६/२७।।

(**हे धीर!** बुद्धिशालिन्! **त्वं घोरसंसारपारं तितीर्षुश्चेत् कृपाकरे** परात्परे **हरौ भक्तिभारं कुरु** । **गुरौ** वादिराजगुरौ वृन्दावनाचार्याख्यगुरौ च भक्तिभारं निधेहि ।। दुर्बुद्धि-जनकं **कुजनं त्यज** । तस्य त्यागः कथम्? इति चेत्, जनः लौकिकपुरुषवर्गः **भुजगं** यथा त्यजति तथा त्यज । ''भाविदुःखं चिन्तयित्वा इदानीं भयपूर्वकं दुष्टपुरुषे स्नेहं त्यज'' इति भावः[१] । प्र - ७ सम्पूर्णम् ।।

## १२–०२८–०३०–विप्रप्रकरणम्

**(व्या) 'मया यदुच्यते'** इत्यारभ्य **'त्वङ्गीकुर्वन्तु मत्कृतिम्'** इत्यन्तं विप्रश्रोतृकं अष्टमं प्रकरणम् ।। पूर्वप्रकरणे कुजनत्यागस्य कर्तव्यत्वमुक्तम् । तन्निग्रहसाधकत्वेन सीतापतिना विप्रेण च भीमकृतस्य गुणाधमानां दुर्योधनादीनां निग्रहस्य स्मर्तव्यत्वं सूचितम् । चतुर्थाध्याये (४/७५) 'गुणाधमान्' इति प्रोक्तं विहाय 'बलाधिकान्' इति ब्राह्मणेनोक्तम् । तस्मादेतदपकारिणां किञ्चिद्बलाधिक्यं दृष्ट्वा तत्परिहारार्थं पुनः 'गुणाधमान्' इत्येव लेखनीयम् इति भावेनाह – **मयेति ।।**

**मया यदुच्यते तद्वै हित्वा चान्यत् त्वयोच्यते ।**
**करणापाटवं विप्र मरणार्तिसमं तव ।।२८।।**

**गुणाधमानिति प्रोक्ते बलाधिकानिति त्वया ।**

---

(१) सीतापति आ दुर्जनन मनेगे तानागि होगुत्तिरुत्ताने. इन्नु मेले अवन मनेगे होगबेड. अवनु निन्न बुद्धियन्नु केडिसुत्तानेन्दु तात्पर्य. अवन स्वरूपस्वभाववन्नु तिळिदु अवनल्लि स्नेहवन्नु बिट्टु बिडु एन्दर्थ.।।

**प्रोच्यते विप्रवर्येह तव मौढ्यमहो बत ।।२९।।**

**स्वप्नसत्यत्ववादेन जेतुमिच्छन्ति वादिनम् ।**
**ये तत्ववादिनः सर्वे त्वङ्गीकुर्वन्तु मत्कृतिम् ।।३०।।**

(अन्वयः) हे विप्र! मया यत् उच्यते तत् हित्वा च अन्यत् त्वया उच्यते वै । तव करणापाटवं मरणार्तिसमम् । अहो! हे विप्रवर्य! इह 'गुणाधमान्' इति प्रोक्ते त्वया 'बलाधिकान्' इति प्रोच्यते; तव मौढ्यम् बत ।

ये तत्ववादिनः स्वप्नसत्यत्ववादेन वादिनं जेतुम् इच्छन्ति; (ते) सर्वे तु मत्कृतिं अङ्गीकुर्वन्तु ।।

**(व्या)** 'करणापाटवं विप्र मरणार्तिसमं तव' इत्यनेन करणापाटवदोषेण (४/७५) श्लोके **बलाधिकान्** इति कथनेन **मरणार्तिसमं** = दुर्जनोपद्रवरूपम् अनिष्टं प्रसक्तमिति सूचितम् ।।२९।। **(मया गुणाधमान् इति प्रोक्ते त्वया तत् हित्वा अन्यत् बलाधिकान् इति उच्यते** । हे विप्र एतत् करणापाटवनिमित्तकं कार्यं तव जन्मान्तरे **मरणार्तिसमं** बलाधिकशत्रुभिः मरणसङ्कटसदृशदुःखप्रापकम् ।।२८।।

**हे विप्रवर्य! इह** इदानीम् । **अहो बत । तव मौढ्यम्** । भाविसङ्कटप्रापकम् एतन्मम कार्यमिति न ज्ञातं त्वया उक्ताभिप्रायसूचकानां स्पष्टशब्दानां अनुपलम्भेपि 'सूचकश्च' इति सूत्रोक्तदिशा (३/२/४.१)[१] । स्वप्नसत्यत्ववादिभिः अभिमताभिप्रायसूचकत्वेन मत्कृति-रङ्गीकार्या इति भावेनाह – **स्वप्नेति ।।** करणपाटवदोषप्राप्तशत्रूपद्रवः । भीमकृतदुष्टनिग्रहस्मरणेन

---

(१) ३३८३३८ (सु) 'मन्त्रे व्यत्यासः स्वरतः वर्णतः वा' एम्ब प्रमाणानुसारेण विप्रनु व्यत्यासवागि अनुवाद माडिद्दरिन्द अनिष्टक्के सूचकवेन्दु भाव. इदरिन्द ई ग्रन्थ वेदक्के तुल्यवेन्दू मन्त्रदन्ते विशिष्टफलप्रापकवेन्दू सिद्धवागुत्ते. मत्तु ग्रन्थदल्लि स्वाप्नदेवतादिबोधितऽ शब्दगळेल्लवू सत्यार्थकवाद्दरिन्द शब्दव्यत्यासमाडि अनुवाद माडिद्दरिन्द अप्रामाणिक – अर्थप्रतिपादकत्ववु प्रसक्तवायितु. ई स्वाप्नग्रन्थ हागे अप्रामाणिकबोधकवल्ल. आद्दरिन्द शब्दवन्नु सरियागि बरेयिसबेकेन्दु हेळिद्दारे. स्वाप्नदेवतादि उपदिष्ट सत्यार्थबोधकवेम्बल्लि ३०ने श्लोकदल्लि प्रमाणवन्नु सूचिसि, स्वप्नसत्यत्वसाधने माडुववरिगे ई ग्रन्थवे उत्तमनिदर्शनवेन्दु हेळिद्दारे. ब्रह्मसूत्र ३/२/४. 'यद्वापि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा । स्वप्नस्थमथवा राजा तत् तथैव भविष्यति' इत्याचक्षते च स्वप्नविदो व्यासादयः ।। एन्दिदे. स्वाप्नदेवतादिप्रोक्तवाक्यगळिगे नियतप्रामाण्यविदे. ।।२९।।)

भवितव्यदुष्टनिग्रहः । सद्भिः कृतेरङ्गीकर्तव्यता चेति निदर्शनत्रयमत्रोक्तम् (“ये तत्ववादिनः स्वप्नसत्यत्ववादम् अवलम्ब्य अद्वैतिनः जेतुमिच्छन्ति ते सर्वे मत्कृतिं निदर्शनतया अङ्गी-कुर्वन्तु । अत्रोक्तसर्ववाक्यानाम् अव्यभिचारेण फलसंवादित्वात्” इत्यर्थः ।।३०।।) ।।३०।। विप्र.प्र.सं. ।।८।।

### १२–०३१–०४२–शेषप्रकरणम्

(व्या) ‘हे पुत्र’ इत्यारभ्य ‘मानयस्व सुवाससा’ इत्यन्तं नवमं शेषश्रोतृकं प्रकरणम् । ‘तत्ववादिनः सर्वे त्वङ्गीकुर्वन्तु’ इत्युक्तरीत्या मत्कृतितात्पर्याभिज्ञेषु प्राथमिकेन शेषेण एतदाख्यानोक्तलक्षणैः ‘अयं शेषः, अयं विप्रः, अयं सीतापतिः’ इत्यादिवृत्तान्ताभिज्ञेन ‘सीतापतिर्बोधनीयः’ इति, ‘विप्रश्च माननीयः’ इति च ज्ञापयितुमाह – हे पुत्रेति ।।

**हे पुत्र विप्रवर्योऽयं कुत्र यास्यति मत्प्रियः ।**
**सत्रार्थं तव सत्पात्रं सकलत्रः सपुत्रकः ।।३१।।**(१)

**श्रोत्रियः शास्त्रवेत्ता च कृपापात्रो ममात्र तु ।**
**गात्रे(ऽ)कृशतरः पुत्र कुत्र यात्रां करिष्यति ।।३२।।**

**भोज्यवित्तम् ऋणान्मुक्त्यै दत्तवान् ममवाक्यतः ।**
**भोजनार्थं तु किञ्चिद्वा नास्ति चास्मै दयां कुरु ।।३३।।**

**(अन्वयः) हे पुत्र (शेष!) तव सत्पात्रं मत् प्रियः सकलत्रः सपुत्रकः अयं विप्रवर्यः सत्रार्थं कुत्र यास्यति? हे पुत्र! श्रोत्रियः शास्त्रवेत्ता च अत्र मम तु कृपापात्रः गात्रे अकृशतरः कुत्र यात्रां करिष्यति? मम वाक्यतः ऋणात् मुक्त्यै भोज्यवित्तं दत्तवान् । भोजनार्थं वा किञ्चिद् नास्ति च; अस्मै दयां कुरु ।।**

(व्या) हे पुत्र शेष! मत्प्रियः; अत एव सत्पात्रं; गात्रे कृशतरः अयं विप्रवर्यः । सत्रार्थं सत्रसदृशपर्यायोत्सवकार्यार्थं भवादृशान् विहाय कुत्र यास्यति ? मास्तु । विप्रस्या-न्यत्रगमनं तर्हि अस्तु तदीय सीतापतेर्गमनम् इत्यत आह – सकलत्रः इति ।। (विप्रवर्यः=) विप्रः वर्यः यस्य सः, अयं सीतापतिः भार्यया सहितः, सपुत्रकः, गात्रेऽकृशतरः = पुष्टाङ्गः

(१) (सु) मूवत्तोन्दने श्लोक विप्रनिगे सम्बन्धपट्टिद्दरिन्द, ‘सकलत्रः सपुत्रकः’ एम्ब विशेषणगळन्नु उत्तरश्लोकद ‘श्रोत्रियः’ मुन्ताद पदार्थनाद सीतापतिगे अन्वयिसबेकु.

एतादृशः कुत्र यात्रां करिष्यति[१] ।

पर्यायोत्सवशङ्कां वारयितुमाह – **भोज्यवित्तमिति ।। दयां कुरु ।।** (**भोज्यवित्तं =** मठीयलौकिकधनं वेतनादिऋणपरिहारादिकार्यार्थं नियुक्तमस्ति । **भोजनार्थं** = ज्ञानकार्यार्थं **किञ्चिद्वा नास्ति** । सभां कारयित्वा दक्षिणादानार्थं सहायं कृत्वा **दयां कुरु** इति यतिजन्मपक्षे योजना । गृहस्थजन्मपक्षेपि योग्ययोजना कार्या ।।३३।।)

**मच्छिष्यैर्दापय त्वं वा पुत्र किञ्चिद्ददस्व ह ।**
**मद्वाचं नन्दन त्वं हि सर्वथा मा वृथा कुरु ।।३४।।**

**किमत्र बहुनोक्तेन ममैकोक्तिः शतोक्तिका ।**
**तस्माद्दापय मच्छिष्यैर्मदाज्ञेति निवेद्य तान् ।।३५।।**

**इदं तु सर्वं वृत्तान्तं वद सीतापतेः सुत ।**
**श्रुत्वा सन्तोषवन्तश्च तं विना वद तान् मुने ।।३६।।**

**(अन्वयः) हे पुत्र! मच्छिष्यैः दापय वा किञ्चिद् त्वं ददस्व; ह । हे नन्दन! मद्वाचं हि त्वं सर्वथा मा वृथा कुरु । बहुना उक्तेन किम्? मम एकोक्तिः शतोक्तिका । तस्मात् मदाज्ञा इति तान् निवेद्य, मच्छिष्यैः दापय ।**

हे सुत! इदं सर्वं वृत्तान्तं सीतापतेः वद । हे मुने! तान् शृत्वा तं विना (को अन्यः) सन्तोषवन्तः च (भवति) (तत्) वद ।।

---

(१) ई ३१-३२ श्लोकगळेरडू विप्रनिगे अन्वयिसुत्तवे. हागू सीतापतिगू अन्वयिसुवन्तिवे. विप्रनिगे अन्वयिसुवाग 'सकलत्रः सपुत्रकः' एन्दरे 'मठीय नौकररु, विद्यार्थिगळु इवरिन्द सहितरु' एन्दर्थ. गात्रे कृशतरः एन्दु पदच्छेदमाडि विप्रनु तेळ्ळगे कट्टियन्ते इरुववनु एन्दर्थमाडबेकु. इवेरडु श्लोकगळन्नू सीतापतिगे अन्वयिसिदाग 'विप्रवर्यः' एन्दरे विप्रने गुरुवागि उळ्ळवनु एन्दू; सकलत्रः एन्दरे भार्यापुत्रादिऽ गळुळ्ळ गृहस्थरेन्दू, 'अकृशतरः' एन्दरे पुष्टदेहवुळ्ळवरेन्दू अर्थमाडबेकु.

भोज्यवित्तेन – पर्यायोत्सवशङ्कां एम्बुदु अनन्वितवु. श्रीयल्लि ओन्दु पङ्क्ति बिट्टुहोगिरबेकु. 'पर्यायोत्सवः क्रियतां इति शङ्कां' एन्दादरू इरबेकु. भोज्यवित्तं = हस्तोदक, दुड्डन्नु ऋणपरिहारक्कागि नन्न आज्ञेयन्ते विनियोगमाडिरुत्ताने इन्नु भोजननैवेद्यादि मठद खर्चिगे प्रत्येकधनविल्ल. आदरिन्द मन्त्रि शेषने! दया होन्दु एन्दु ३३ने श्लोकद अर्थ.

(व्या) **मच्छिष्यैः** भूपादिभिः ।।३४।। **एकोक्तिः** शतोक्तिसदृशी बहुभाववती च ।।३५।। **मुने** = ज्ञानिन् ।।३६।। (तं विना आ सीतापतियन्नु बिट्टु, इन्नू इतररादरू सरि । श्रुत्वा सन्तोषवन्तश्च भवेयुः । तान् उद्दिश्यापि वद' एन्दु योजना।।३६।।)

**मात्रा विहीनः पित्रा च भ्रात्रा मित्रात् तथैव च ।**
**मामत्राश्रितवान् विप्रः सत्पात्रं किमतः परम् ।।३७।।**

**स्वामित्वेन सखित्वेन बन्धुत्वेन सुहृत्त्वतः ।**
**मामत्राश्रितवान् विप्रः सत्पात्रं किमतः परम् ।।३८।।**

**किमत्र बहुनोक्तेन विप्रे मत्प्रीतिरञ्जसा ।**
**जायते त्रायते कामं कियज्जन्मऋणं मुने ।।३९।।**

(अन्वयः) मात्रा पित्रा च तथैव भ्रात्रा मित्रैः च विहीनः (अयं) विप्रः, अत्र माम् (एव) आश्रितवान् । अतः परं किं सत्पात्रम्? स्वामित्वेन, सखित्वेन, बन्धुत्वेन, सुहृत्वतः (च अयं) विप्रः माम् (एव) अत्र आश्रितवान् । अतः परं किं सत्पात्रम्?

हे मुने! बहुना उक्तेन किम्? विप्रे मम प्रीतिः अञ्जसा जायते; कामं त्रायते । कियज्जन्मऋणम्?

(व्या) **कियज्जन्मऋणम्** इत्यनेन अनेक जन्मार्जितं ऋणमिति सूचितं भवति ।।३९।। (अन्यत्र शरणं अलब्ध्वा विप्रः गुरुराजं आश्रितवान् । महदाश्रयेन सः उत्तमदानपात्रमभूदिति ३७श्लोके कथ्यते ।।३७।। विप्रः गुरुराजं सर्वभावेन अभजदिति ३८श्लोके कथ्यते । तादृश उपासनया स पात्रोत्तमं अभूदिति चोच्यते ।।३८।। बहुजन्मोपासनया विप्रः गुरुराज-प्रीतिपात्रत्वं सम्पादितवान् इति गुरुराजैरेवोच्यते ।

''स्वामित्वेन सुहृत्त्वेन बन्धुत्वेन च पाण्डवाः ।
सखित्वेन गतित्वेन तमेव शरणं ययुः ।।' इति मणिमञ्जरी ।

''ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति ।
गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम् ।।'' इति भारतवचनम् ।

'न देवतोषणं वृथा' इति अत्र मानम् ।।३९।।)

**वृद्धः शुद्धः सदा भक्तिबद्धः सद्धर्मपद्धतिः ।**
**श्रद्धासमुद्धतो विद्वान् धत्ते मद्बुद्धिबन्धितः ।।४०।।**
**शरणागतविप्रं तं करुणाकरमञ्जसा ।**
**मरणार्तिं हरिष्यामि परिणामं गतेऽप्यहो ।।४१।।**
**तस्मात्पुत्र गतिः का वा मया त्यक्ते द्विजोत्तमे ।**
**त्वमप्यमुं ममावासं मानयस्व सुवाससा ।।४२।।**

(अन्वयः) वृद्धः शुद्धः सदा भक्तिबद्धः । मद्बुद्धिबद्धितः सद्धर्मपद्धति श्रद्धा समुद्धतः हे विद्वन् (सः विश्वासं) धत्ते ।। करुणाकरं, शरणागतविप्रं परिणामं गतेऽपि मरणार्तिं हरिष्यामि; तं अञ्जसा (पालयामि) । अहो! तस्मात् हे पुत्र (शेष!), द्विजोत्तमे मया त्यक्ते का वा गतिः? मम आवासं अमुम् त्वम् अपि सुवाससा मानयस्व ।।

(व्या) **श्रद्धासमुद्धतो** कार्ये विश्वासं **धत्ते** । **मद्बुद्धिबन्धितः** साधनान्तरानुपलम्भेऽपि = आयुः परिसमाप्तिं प्राप्तेऽपि । पुनरायुःप्रदाय तदीयां **मरणार्तिं हरिष्यामि** ।।४१।। **ममावासं** = मत्सन्निधानपात्रम् **अमुं सुवाससा मानयस्व** ।।४३।। बहुभिः शिष्यैः दापनं, सीतापतिं प्रति वृत्तान्तकथनम्, विप्रसन्मानश्चेति निदर्शनत्रयमत्रोक्तं प्राधान्येन ।।४२।। शेषप्रकरणं सम्पूर्णं ।। प्रकरणं ९।।

### १२–०४३–५१–विप्रप्रकरणम्

(व्या) **'शश्वत्'** इत्यारभ्य **'समिद्धो बुद्धिगां कुरु'** इत्यन्तं विप्रश्रोतृकं प्रकरणं दशमम् ।। पूर्वप्रकरणेऽपि विप्रस्य कार्पण्यादिना नानाजनानुसरणं नास्तीति 'कुत्र यास्यन्ति मत्प्रियः?' इति शेषं प्रत्युक्त्या सूचितम् । यतिभावसमये विस्मृतिकार्पण्यादिदोषराहित्यं गुणसमृद्धिश्च भविष्यतीति सूचयितुमाह – **शश्वदिति** ।।

**शश्वद्विस्मृतिशीलस्य कस्मृतौ विस्मृतिर्भवेत् ।**[१]

(१) 'कः स्मृतौ' एन्दु वृं इदे. आदरू विसर्ग प्रामादिकवागि तोरुत्ते. भी नोडबेकु. कस्मृतौ एन्दु स्वा.

**आमृतिं तव विप्रेन्द्र कामतिं त्यज मां भज ।।४३।।**

**विप्र नन्दनमन्यं वा धनिनं मनसाऽपि वा ।**
**कार्पण्यं न वदस्व त्वं शरणं व्रज मां मुनिम् ।।४४।।**

**कार्पण्यं तव विप्रेश मम सन्तोषकारणम् ।**
**त्वदन्तर्यामिणो विद्वन्न भवेत्पुण्यमूर्तिनः ।।४५।।**

(अन्वयः) हे विप्र! शश्वत् विस्मृतिशीलस्य कस्मृतौ विस्मृतिः भवेत्? कामतिं हे विप्रेन्द्र! तव आमृतिं त्यज । मां भज ।। हे विप्र! नन्दनम् अन्यं धनिनं वा मनसा अपि वा कार्पण्यं न वदस्व । त्वं मां मुनिं शरणं व्रज ।

हे विद्वन् विप्रेश! तव कार्पण्यं त्वत् अन्तर्यामिणः पुण्यमूर्तिनः मम सन्तोष-कारणं न भवेत् ।।

(व्या) शश्वत् ।। एकप्रकारेण **विस्मृतिशीलस्य** पुरुषस्य कस्मृतौ = परमात्मस्मृतौ सुखस्मृतौ च । **विस्मृतिर्भवेत्** । तस्मात् विस्मृतिप्रापिकां **कामतिं त्यज** । **आमृतिं** इत्यनेन पूर्वजन्मनि मृतिपर्यन्तां स्थितां विस्मृतिं तदुत्तरजन्मनि त्यज[१] इत्युक्तं भवति ।।४३।। (उत्तरजन्मद्वये तव रिक्तत्वप्राप्तौ । नन्दनं मठीयश्रीपादाः शेषादिकं वा प्रति । तव दुःखं न विस्तारय । मामेव शरणं व्रज । इति ।।४४।।) त्वदन्तर्यामिणो मम । तव कार्पण्यं न सन्तोषकारणम् ।।४५।।

**यावदीश्वरदत्तं वा वित्तं गृह्णीष्व पोषणम् ।**
**कुरु पुत्रकलत्रादिमित्राणां सत्रकर्मणि ।।४६।।**

**अन्ते सुत्रामलोकोऽयं कान्तस्तव भविष्यति ।**
**शान्तिस्तव भवेद्विद्वन् मां तातं शरणं व्रज ।।४७।।**

**मन्नन्दनपदं धन्यं धनधान्यादिकं दिने ।**
**दिने ममेति जानीहि का नीतिर्नोच्यते मया ।।४८।।**

(अन्वयः) यावत् ईश्वरदत्तं वित्तं वा गृणीष्व; सत्रकर्मणि पुत्रकलत्रादिमित्राणां

(१) वृन्दावनाचार्यजन्मदल्लि निनगे मरेवु बेड. ओळ्ळे ज्ञापकशक्ति इरुत्ते एन्दर्थ.

**पोषणं कुरु ।। हे कान्त! अन्ते अयं सुत्रामलोकः तव भविष्यति । शान्तिः हे विद्वन्! तव भवेत्; तातं मां शरणं व्रज । धन्यं मन्नन्दनपदं (शरणं व्रज); दिने दिने मम धनधान्यादिकं ममेति जानीहि; मया का नीतिः नोच्यते ।।**

(व्या) **पुत्रकळत्रादिमित्राणां**[१] स्वपुत्रकलत्रादीनां मित्राणां गृहस्थाश्रमस्थानां सीता-पतिप्रभृतीनां **सत्रकर्मणि** पर्यायोत्सवसमये विशेषेण **पोषणं कुरु** ।।४६।। (**अन्ते** वृन्दावनाचार्यजन्मान्ते **तव** मनोहरः इन्द्रलोकः वासार्थं **भविष्यति** । **शान्तिः** अपरोक्ष-सुखातिशयश्च (**विद्वन्** =) परोक्षज्ञानपूर्णस्य **तव भविष्यति** । पितरं यथा तथा **मां शरणं व्रज** । सुखेन साधनपूर्तिर्भविष्यतीति भावः ।।४७।।) **मन्नन्दनपदं** = वेदवेद्यमुनेः पदं, **धन्यं** शरण्यम्, शरणं व्रज । **दिने दिने** प्रतिदिनं मदीयं धनधान्यादिकं (**ममेति**) त्वदीयमिति **जानीहि । का नीतिर्नोच्यते** । 'नीतिर्न्यायः युक्तिः' इति यावत् ।।४८।।

**मातृत्वेन पितृत्वेन भ्रातृत्वेन च मित्रतः ।**
**त्रातुर्मे पुत्रतां प्राप्तः सत्पात्रं किमतः परम् ।।४९।।**

**तस्माच्छरण्यं शरणमरणं शरणार्थिनाम् ।**
**भरणं मम मन्त्रेण गुणिनं व्रज ब्राह्मण ।।५०।।**

**(अन्वयः) मातृत्वेन, पितृत्वेन, भ्रातृत्वेन मित्रतः च (त्वं) त्रातुं मे पुत्रतां प्राप्तः । अतः परं सत्पात्रं किम्? ।। हे ब्राह्मण! तस्मात् शरण्यम्, अरणं (संरक्षकं), शरणार्थिनां भरणं, गुणिनं मम मन्त्रेण शरणं व्रज ।।**

(व्या) (वेदवेद्यस्य माहात्म्यमाह – **त्रातुः** शरणागतरक्षणशीलस्य **मे** मम 'मातृत्वादि-रूपेण त्वमेव रक्षकः' इति मां उपास्य **पुत्रतां प्राप्तः** शिष्योपि वर्तते । न केवलं आश्रमशिष्यः किन्तु भक्तश्चेत्यर्थः । तस्मा**दतः परं सत्पात्रं** तव **किम्** ।।४९।।) **तस्मादिति** ।। **अरणं** संरक्षकम् । **मम मन्त्रेण** 'कामधेनुः' इति मन्त्रेण **गुणिनं** वेदवेद्यं **शरणं व्रज** ।।५०।।

---

(१) स्वपुत्र एम्बल्लि वृन्दावनाचार्यजन्मक्के अन्वयिसिदाग तन्न शिष्यनेन्दर्थ. अथवा पूर्वजन्मद पुत्र एन्दादरू अर्थ माडबहुदु. पुत्रकळत्रादयः एव मित्राणि एषां । ते गृहस्थाः । तेषां उत्तमगृहस्थाश्रमिणां एन्दू अर्थवागुत्तदे.

**एवं मद्बुद्धिबद्धस्त्वं शुद्धसद्धर्मपद्धतिम् ।**
**मुग्धबुद्धिं विना श्रद्धासमिद्धो बुद्धिगां कुरु ।।५१।।**

(अन्वयः) एवं मद्बुद्धिबद्धः त्वं श्रद्धासमिद्धः (सन्) मुग्धबुद्धिं विना शुद्धसद्धर्मपद्धतिं बुद्धिगां कुरु ।।

(व्या) (एवं त्वं मद्बुद्धिबद्धः मम हितोपदेशेन शिक्षितः; श्रद्धासमिद्धः = 'निश्चित-फलमस्ति, तन्मे भविष्यत्येव' इति सुदृढोत्साहं प्राप्तः । शुद्धसद्धर्मपद्धतिं = स्वोत्तमा-राधनादिमदुक्तवैष्णवसम्प्रदायं) मुग्धबुद्धिं विना मूढबुद्धिं विना, मदुक्तां नीतिं बुद्धिगां कुरु ।।५१।। विस्मृतिकार्पण्यादिदोषनिवृत्तिः, गुरुभक्त्यादिगुणसमृद्धिः इत्येवं निदर्शनद्वयमत्रोक्तं प्राधान्येन ।।५१।। वि.प्र.सं. १०।।

### १२–०५२–०५३– सीतापतिप्रकरणम्

(व्या) 'मा त्यजस्त्वम्' इत्यारभ्य 'देहं तु मा त्यज' इत्यन्तं सीतापतिश्रोतृकं एकादशप्रकरणम् । सीतापत्यादीनां विप्रेण पोषणीयत्वमुक्तं पूर्वप्रकरणे । कदाचित् सीतापतेः दुष्टोपद्रववशात् देहत्यागेच्छाप्रसक्तिः भविष्यति । सा तु न परित्याज्या इति भावेनाह – मात्यजस्त्वम् इत्यादिना ।।

**मा त्यज त्वं ममाऽवासं कमवश्यन्तु यास्यति ।**
**हित्वैनं तत्ववेत्तारं मत्तोन्मत्तं त्वितः परम् ।।५२।।**

**मम मूर्तिधरं कीर्तिं ख्यापयन्तं सतामिह ।**
**आर्तिनाशकरीं सार्थीकुरु देहं तु मा त्यज ।।५३।।**

(अन्वयः) (हे सीतापते!) त्वं मम आवासं तु इतःपरं मा त्यज; अवश्यं तत्ववेत्तारम् मूर्तिधरं एनं हित्वा कं मत्तोन्मत्तं (प्रति) यास्यति । सतां आर्तिनाशकरीं मम कीर्तिं ख्यापयन्तं, देहं तु मा त्यज; (किन्तु) सार्थीकुरु ।।

(व्या) ममावासं = मत्सन्निधानपात्रं विप्रं दुष्टानां दुर्वार्तया मा त्यजः । तत्ववेत्तारं मम कीर्तिं सभासु ख्यापयन्तम्, मूर्तिधरं = बादरायणमूर्तिधरं 'मूर्त्यैकया प्रार्थितया' इत्यत्र प्रयोगात् । एतादृशं विप्रं हित्वा, मत्तेष्वपि उन्मत्तम् । इतः विप्रात् परम् अन्यं (आवश्यं सुखेन सर्वदा त्वदधीनं द्यूतासक्तादिकं) कं भवान् यास्यति ।।५२।।

(**आर्तिनाशकरीं कीर्तिम्** इत्यनेन तवार्तिरपि सभायां मत्कीर्तिश्रवणेन नश्यतीति सूचितम् । तस्मात् विप्रसेवया **देहं सार्थीकुरु । मा त्यज**) तस्मात् सर्वप्रकारेण अयं विप्रः त्वया भजनीयः । दुर्वार्ता तु उपेक्षणीया । विप्रालम्बने दार्ढ्यं दुष्टवार्तया देहत्यागेच्छयाः परित्यागश्चेति सीतापतेर्निदर्शनद्वयमत्रोक्तम् ।।५३।। (सीतापति प्र. सं. प्र.११)

### १२-०५४-६२-लक्ष्मीपतिप्रकरणम्

**(व्या) 'शब्दजालानि'** इत्यारभ्य **'स्मर्तव्या नैव ते मम'** इत्यन्तं लक्ष्मीपतिश्रोतृकं प्रकरणं द्वादशम् ।

'देहं तु मा त्यज' इत्यादिना पूर्वप्रकरणोक्तकार्यस्य लक्ष्मीपतिना सीतापतिं प्रति वक्तुं तत्रत्य भङ्गिजष्ठा इत्यस्य प्रकृतिप्रत्ययेन दोषशङ्कां वारयितुमाह – **शब्दजालानीति ।।**

**शब्दजालानि मद्बुद्धिलोलानीति भयाच्च माम् ।**
**नमन्ति तावकानीति संस्तब्धामुग्धकानि च ।।५४।।**

**प्रकृतिप्रत्ययौ मह्यं स्वकृतौ सत्यमूर्तिनौ ।**
**साचिव्यं कुरुतः सम्यग्व्यवहर्तुं परान् प्रति ।।५५।।**

**तस्माच्छब्दस्य दोषोऽयं नास्ति नः शाब्दिकोत्तम ।**
**साऽस्ति निर्दोषता काऽत्र दोषिता मुनिभूषण ।।५६।।**

(अन्वयः) **हे संस्तब्ध! शब्दजालानि आमुग्धकानि मां तावकानीति मद्बुद्धिलोलानीति च भयात् नमन्ति । सत्यमूर्तिनौ प्रकृतिप्रत्ययौ स्वकृतौ परान् प्रति सम्यग् व्यवहर्तुं मह्यं साचिव्यं कुरुतः । हे शाब्दिकोत्तम! तस्मात् शब्दस्य अयं दोषः न अस्ति; सा निर्दोषता नः अस्ति । हे मुनिभूषण! अत्र दोषिता का?**

**(व्या) शब्दजालानि मद्बुद्धिलोलानि** सर्वेशब्दसमूहाः मद्बुद्धिलोलाः (मद्बुद्धिलोलाः मद्बुद्धौ आसक्ताः । मद्बुद्धिवशाः इति यावत् ।) मद्बुद्धिविषया इति हेतोः । **मद्भयात् । तावकानीति** ब्रुवन्तः सन्तः **मां** मा नयन्ति (नमन्ति) । **हे संस्तब्धे**ति लक्ष्मीपति-सम्बोधनम् । 'पुण्डरीकाक्ष भञ्जिष्ठा' इत्यस्य अर्थास्फूर्तिसमये संस्तब्धत्वात् । **अमुग्धकानीति** शब्दजालानां विशेषणम् । अमुग्धानां अमूढानां सुखजनकत्वात् (अमुग्धानां कं येभ्यस्तानि

बहुव्रीहिसमास) ।।५४।। (**प्रकृतिप्रत्ययौ** = प्रकृतिप्रत्ययाभिमानिदेवौ **स्वकृतौ** स्वकार्ये सत्यमूर्तिनौ सन्तौ अव्यभिचारेण मम ज्ञानगोचरस्वरूपौ सन्तौ **साचिव्यं कुरुतः** आख्यानरचनाकार्ये सहायं कुरुतः **परान् प्रति** सम्यक्+निर्दोषं यथा भवति तथा । परान् प्रतिव्यवहर्तुम् ।।५५।।) शाब्दिकाः महाव्याकरणाभिज्ञाः उत्तमाः यस्मात् स **शाब्दिकोत्तमः** तस्य सम्बुद्धिः । **हे शाब्दिकोत्तम** । **अत्र** अस्मत्कृतौ **सा** प्रसिद्धा निर्दोषता अस्ति । हे **मुनिभूषण** ज्ञानिभूषण ।।५६।।

**यत्र प्रतीतार्थबाधस्तत्रान्तर्यामिसङ्ग्रहः ।**
**कर्तव्यः सततं विष्णुः स्मर्तव्यः सोऽपि मत्कृतौ ।।५७।।**

**अहं द्विजस्य सत्तेजः कारयिष्ये स्वशिष्यकैः ।**
**यथाऽमुत्रापि कामैश्च तथाऽत्रापि सुमानवैः ।।५८।।**

**यदि वा नैव कुर्वन्ति तर्हि सर्वं यशः श्रियः ।**
**आयुष्यं च हरिष्यामि पश्यन्तु तपसो बलम् ।।५९।।**

**(अन्वयः) यत्र प्रतीतार्थबाधः तत्र अन्तर्यामिसङ्ग्रहः कर्तव्यः; सः विष्णुः अपि मत्कृतौ सततं स्मर्तव्यः ।। यथा अमुत्र कामैः सुमानवैः च (सत्तेजः कारयिष्ये); तथा अत्र अपि स्वशिष्यकैः अहं द्विजस्य सत्तेजः कारयिष्ये ।**

**यदि वा नैव कुर्वन्ति तर्हि सर्वं यशः श्रियः आयुष्यं च हरिष्यामि; तपसः बलं पश्यन्तु ।।**

**(व्या) यत्रेति ।।** प्रकृतिप्रत्ययादीनां शब्दानां जडत्वेन कथं तेषां साचिव्यादिकं युक्तमित्यत आह – **यत्रेति ।।** अभिमान्यधिकरणोक्तरीत्या प्रकृतिप्रत्ययाद्यभिमानिनां देवानां साचिव्यादिकं उपपन्नमिति भावः ।।५७।। (''पीठे रत्नोपक्लृप्ते'' इत्याद्युक्तरीत्या शब्दाभिमानिदेवाः गुरुराजभृत्याः इति भावः । न केवलमेतावत् । अन्तर्यामी हरिरपि सर्वदा मम सचिवः = कार्यसहायकः । एतस्मिन् आख्याने **सोपि** प्रधाननायकः सर्ववाक्यप्रतिपादितः इत्यपि स्मर्तव्यः इत्यर्थः ।।५७।। अध्याय १४/७१ श्लोकेपि एष विषयः परामृश्यते । अस्य आख्यानस्य अन्तर्यामि विष्णुपरः अन्यः अर्थश्च विद्यते) **अहमिति ।।** यथा देवाः मम परिचारकाः । तथा सुमानवैः विप्रस्य **सत्तेजः** (= परिचर्यां स्तुतिं, सेवां) कारयिष्ये

(अथवा सत्तेजः = स्वपक्षजनसमृद्धिनिमित्तशौर्ययुक्तत्वम्) ।।५८।। (विप्रः **यथा** स्वर्गे सुखं प्राप्नोति । तथा भूलोकेऽपि विद्वज्जनैः आदृतः सन् सत्यकामो भवतीत्यर्थः ।।५८।।) **यदीति ।।** यदि **नैव कुर्वन्ति** । तेषां आयुरादिकं **हरिष्यामि ।** (मम भक्तद्रोहिणः क्लिश्यन्ति, अकाले म्रियन्ते च इत्यर्थः) ।।५९।।

**लक्ष्मीपते च गत्वा त्वं सौक्ष्मीं वार्तां वदस्व मे ।**
**मत्पुत्रं तत्र चात्याप्तं नाम्ना सीतापतिं मतम् ।।६०।।**

**नो चेत्तवापि दण्डश्च भवेन्मन्मण्डनं विना ।**
**पुण्डरीकाक्ष भञ्जिष्ठा भाण्डीकृतगतिर्यथा ।।६१।।**

**विप्रः स्वार्थं वदत्येवं तेजःश्लोकं स्वकल्पितम् ।**
**इति जानन्ति मां मर्त्याः स्मर्तव्या नैव ते मम ।।६२।।**

(अन्वयः) हे लक्ष्मीपते! त्वं च गत्वा मत्पुत्रं मतं, तत्र च अत्याप्तं नाम्ना सीतापतिं मे सौक्ष्मीं वार्तां वदस्व । यथा भाण्डीकृतगतिः पुण्डरीकाक्ष भञ्जिष्ठा (तथा); नो चेत् मन्मण्डनं विना तव च अपि दण्डः भवेत् । एवं विप्रः स्वार्थं स्वकल्पितं तेजःश्लोकं वदति इति (ये) मर्त्याः (मां) जानन्ति ते मम नैव (इति) स्मर्तव्याः ।।

**(व्या) हे लक्ष्मीपते! त्वं** प्रागुक्तं प्रमेयं **मत्पुत्रं** विप्रम् । **तत्र** विप्रविषये । **अत्याप्तं** = वादिराजाख्यं । **मतं** विप्रसम्मतं सीतापतिं प्रति च **वद । 'सौक्ष्मीं वार्तां वद'** इत्यनेन 'गूढार्थशब्दतात्पर्यं वद' इत्युक्तं भवति ।।६०।। यथा **भाण्डीरक(कृत?)गति**रगस्त्यः **पुण्डरीकाक्षं भञ्जिष्ठाः** श्रीरामेण कर्तव्यदुष्टभञ्जनोपायबोधिकाः वार्ताः । श्रीरामचन्द्रं प्रत्युक्तवान् । तथा त्वमपि वद । **नो चेत् तवापि (मन्मण्डनं विना** । यस्मात् त्वं मदाज्ञामुल्लङ्घ्य मन्मण्डनं न कृतवान् तस्मात्) । **दण्डश्च** भवेत् ।।६१।। केचित् पुरुषाः प्रागुक्तश्लोकस्य ('अहं द्विजस्य सत्तेजः' इति ५८तमे श्लोकस्य) कल्पितत्वं ब्रुवन्तः । **ते** न स्मर्तव्याः इत्याह – **विप्रेति ।। (इति मां** ये **मर्त्याः जानन्ति ते न स्मर्तव्याः । ते नैव मम** । ते मम द्वेषिणः अभक्ताः । **नैव** इत्यस्य आवृत्त्या योजना) ।।६२।। लक्ष्मी-पतिना विप्र, वादिराजाख्य, सीतापतीन् प्रति सूक्ष्मवार्ताकथनरूपं निदर्शनम् अत्रोक्तम्

।।६२।। लक्ष्मीपतिप्रकरणं सं ।। प्र.१२।।

## १२-०६३-०६६-विप्रप्रकरणम्

(व्या) 'विप्र त्वम्' इत्यारभ्य 'कीर्तिस्तव भविष्यति' इत्यन्तं विप्रश्रोतृकत्रयोदशकं प्रकरणम् ।।

**विप्र त्वं लज्जया युक्तो मज्जातं न वदेः कुतः ।**
**कुब्जापतेः प्रियं भक्तं सज्ज्ञानं मत्प्रिये रतम् ।।६३।।**

**लक्ष्मीपतिश्च मद्भक्तो वक्षत्येव मदाज्ञया ।**
**त्वं च तूष्णीं च तिष्ठस्व मत्पादस्मरणे रमन् ।।६४।।**

(अन्वयः) हे विप्र! त्वं लज्जया युक्तः (सन्) मज्जातं कुब्जापतेः प्रियं सज्ज्ञानं मत्प्रिये रतं भक्तं कुतः न वदे? मदाज्ञया मद्भक्तः लक्ष्मीपतिः च वक्ष्यति एव । त्वं मत्पादस्मरणे रमन् च तूष्णीं च तिष्ठस्व ।।

(व्या) 'मत्पुत्रं तत्र चात्याप्तम्' इत्यत्र लक्ष्मीपतेः वादिराजाख्यबोधकत्वमुक्तम् । विप्रस्य (वादिराजाख्यं प्रति) अत्याप्तत्वे न तस्यैव तद्बोधकत्वसम्भवे लक्ष्मीपतेः कुतः वादिराजाख्य बोधकत्वम्? इत्यत आह - विप्रेति ।। विप्र त्वम् अत्याप्तं (प्रति) गूढ-वृत्तान्तकथने लज्जया युक्तः । अन्यथा मज्जातं पुत्रसदृशं कुब्जापतेः प्रियं रजतपीठ-पुरकृष्णाराधकं सज्ज्ञानं (शुद्धज्ञानयुक्तं) मत्प्रिये रतं भक्तं वादिराजाख्यं प्रति कुतो न वदेः ।।६३।। त्वद्युक्त्यभावेपि मद्भक्तो लक्ष्मीपतिः मदाज्ञया वक्ष्यत्येव ।।६४।। (तत्काले त्वं माम् अनुस्मरन् तूष्णीं तिष्ठ) ।।६४।।

**तेजसा मे जिता लोकाः को जितो न भवेदिह ।**
**ऊर्जिताभयसो मह्यं पूजिताश्च नमन्त्यहो ।।६५।।**

**इति मत्वा तु तां कीर्तिमार्तिनाशकरीं तव ।**
**सार्थीकुरु ममाऽऽज्ञां तां काऽऽर्तिस्तव भविष्यति ।।६६।।**

(अन्वयः) मे तेजसा लोकाः जिताः । इह कः जितः न भवेत्? ऊर्जिताभयसः पूजिता (अपि) मह्यं (मां) नमन्ति च । अहो ।। इति (हे विप्र) तां कीर्तिं

**मत्वा तु, तव आर्तिनाशकरीं मम आज्ञां तां सार्थीकुरु । तव आर्तिः का भविष्यति?**

(व्या) तस्य कथं सामर्थ्यम् इत्यत आह – **तेजसेति** ।। **मे** मम **तेजसा लोकाः जिताः** भविष्यन्ति । **इह** भूमौ **कः जितो न भवेत्** । **ऊर्जिताभयसः** ऊर्जिता अभयाः निश्चितमोक्षाः (ऊर्जितम् अभयम् एषां ते – बहुव्रीहि.) । अत्र श्रौतप्रयोगोऽयं 'तेजसा-नापो अमृतत्वं भजन्ते' इतिवत् । **पूजिता** अपि (स्वापेक्षया अधमैः) मां नमन्ति ।।६५।। **इति** पूर्वोक्तप्रकारेण उत्तमनम्यत्वं मत्वा (मम ऋजुत्वं ज्ञात्वा इति यावत्) । तव आर्तिनाशकरीं ममाज्ञां ताम्[१]। ('तां कीर्तिं' १२/२५ पूर्वोक्तमहिमानं च) सार्थीकुरु । एवं चेत् **तव आर्तिः का भविष्यति** न कापि ।।६६।। प्र.१३।।

### १२–०६७–०७०–लक्ष्मीपतिप्रकरणम्

(व्या) **'विप्रश्च'** इत्यारभ्य **'वद मन्निरूपम्'** इत्यन्तं चतुर्दशं लक्ष्मीपतिश्रोतृकं प्रकरणं ।।

**विप्रश्च मनसा वाचा कर्मणा वा गुणार्णव ।**
**न काङ्क्षति स्म सुक्षीणोऽप्यत्यन्ताशावशो न हि ।।६७।।**

**तस्मात्त्वमेव सन्मानं ममैवेति कुरुष्व तम् ।**
**तवैव प्रीतिरत्यन्तं ममैव च भविष्यति ।।६८।।**

**मन्दस्मितधरं सान्द्रानन्दसन्दोहमन्दिरम् ।**
**शतानन्दगुरुं सान्द्रहयसत्कन्धरं स्मर ।।६९।।**

(अन्वयः) हे गुणार्णव! सुक्षीणः अपि विप्रः अत्यन्तावशः न । हि । मनसा वाचा कर्मणा वा च न काङ्क्षति स्म ।। तस्मात् त्वमेव मम एव (इदं) इति (मत्वा) तं सन्मानं कुरुष्व । मम एव च अत्यन्तप्रीतिः तव एव भविष्यति ।।

मन्दस्मितधरं सान्द्रानन्दसन्दोहमन्दिरं शतानन्दगुरुं सान्द्रहयसत्कन्धरं स्मर ।।

---

(१) ममाज्ञां तां एन्दिदे. 'तां कीर्तिं मत्वा । तां ममाज्ञां सार्थी कुरु । एन्दु योजने. कीर्तिं एन्दरे मम महिमाप्रतिपादककृतिं एन्दर्थ. कृतिख्यापकनिगे भूलोकदल्लू दुःखविल्लद साधनेयागुत्तदे ।

(व्या) पूर्वप्रकरणे 'लक्ष्मीपतिश्च मद्भक्तो वक्ष्यत्येव मदाज्ञया' इति पारोक्ष्येणोक्तं । अपरोक्ष्येण बोधयितुमाह – विप्रश्चेति ।। विप्रः सुक्षीणोपि हि यस्मात् अत्यन्ताशावशो न भवति । तस्मात् मनसा वाचा कर्मणा वा कर्तव्यं सन्मानं न काङ्क्षति ।।६७।। तस्मात् त्वमेव स्वकीयकर्तव्यतया । ममैवेदमिति मत्वा । सन्मानं कुरुष्व (विप्रं भक्त्या सम्मानय) अनुग्राह्येषु मध्ये विप्रविषये । ममैव अत्यन्तप्रीतिः । विप्रे । तथा अनुग्राह्येषु जनेषु तवैव इतरविलक्षणाप्रीतिर्भविष्यति । तस्मात् । मत्कृताख्यानतात्पर्यं वर्णनीयमिति भावः ।। (विप्रसेवाकाले हयग्रीवं स्मरेति च बोधयति । मन्दस्मितधरं । करुणापूर्णत्वात् आनन्दपूर्णं । ब्रह्मणोऽपि गुरुं सर्वज्ञं । सान्द्रं इत्येव 'स्वा' पाठः । पूर्णं हयग्रीवस्वामिनं स्वतन्त्रकर्तारं स्मर । 'ब्रह्मार्पणं' (गीता) इति न्यायेन तव कर्म सात्विकं भविष्यतीति भावः) ।।६९।।

**लक्ष्मीपते तव सुतं मम नामयुक्तं**
**कृत्वा करोषि विततां रतिमेव चात्र ।**
**सीतापतिं मयि सुभक्तिमतां प्रशस्तं**
**मत्पुत्रमप्यभिमतं वद मन्निरूपम् ।।७०।।**

**(अन्वयः) हे लक्ष्मीपते! तव सुतं मम नामयुक्तं कृत्वा, अत्र च विततां रतिम् एव करोषि । मयि सुभक्तिमतां प्रशस्तं सीतापतिं मत्पुत्रम् अपि अभिमतं मन्निरूपं वद ।।**

(व्या) कान्() प्रति कर्तव्यं वक्तव्यम् इत्यत आह – लक्ष्मीपते इति ।। हे लक्ष्मीपते! तव सुतं 'तेन ते तात एवासौ' इति वक्ष्यमाणानुसारेण सुतोपमं विप्रं । मम नामयुक्तं मद्दत्तेन वृन्दावनाचार्यनाम्ना युक्तं कृत्वा । 'तन्नामवाच्यत्वेन व्यवहारं कृत्वा' इति यावत् । अत्र वृन्दावनाख्याने विततां विस्तृतां रतिं भक्तिं करोषि । तस्मात् मयि सुभक्तिमतां प्रशस्तं सीतापतिं प्रति; मत्पुत्रं विप्रं प्रति; तथा तस्य अभिमानविषयत्वात् अभिमतं वादिराजाख्यं प्रति च मन्निरूपं वद । पूर्वप्रकरणोक्तमेव निदर्शनमत्रापि प्रतिपादितम् । 'तत्र श्रोता विप्रः । अत्र श्रोता लक्ष्मीपतिः' इति विप्रगुणोक्तिपूर्वकम् अत्र कथनमिति विशेषः ।।७०।। ल.प.प्र.सम्पूर्णं ।। प्र.१४।।

### १२-०७१-८०-विप्रप्रकरणम्

(व्या) 'तव नन्दन' इत्यारभ्य 'सत्रकर्म सदा कुरु' इत्यन्तं विप्रश्रोतृकप्रकरणं पञ्चदशम् ।। पूर्वप्रकरणे 'मत्पुत्रमप्यभिमतं वद मन्निरूपम्'; 'लक्ष्मीपतिश्च मद्भक्तो वक्ष्यत्येव मदाज्ञया' इति तत्पूर्वप्रकरणे च लक्ष्मीपतिना वादिराजाख्यं प्रति सूक्ष्मवृत्तां तस्य वक्तव्यत्वमुक्तम् । 'लक्ष्मीपतेः सूक्ष्मवृत्तान्ताभिज्ञत्वं विप्रप्रत्यक्षत्वात् विश्वसनीयम्' इति सूचयितुमाह – तवेति ।।

**तव नन्दन कर्णस्य स्वर्णयुक्तश्च सन्मणिः ।**
**ब्राह्मणेक्षणगश्चासीज्जनानां नयनं विना ।।७१।।**

**तच्चापि मत्प्रयत्नेन चासीत् काङ्क्षितमीक्षया ।**
**भोक्ष्यतीक्षाफलं सूक्ष्मं तत्प्रत्यक्षमभूत् तव ।।७२।।**

(अन्वयः) हे नन्दन! ब्राह्मण! तव कर्णस्य च स्वर्णयुक्तः सन्मणिः ईक्षणगः च आसीत् । (लक्ष्मीपतेः) जनानां नयनं विना आसीत् । तत् च अपि काङ्क्षितम् अपि मत्प्रयत्नेन आसीत् । तत् ईक्षाफलम् ईक्षया भोक्ष्यति; तव प्रत्यक्षमभूत् च ।।

(व्या) नन्दन! हे ब्राह्मण! तव कर्णस्य भूषणरूपः स्वर्णयुक्तः पौरुटभाजनोपेतः सन्मणिः व्यासप्रतीकरूपसन्मणिः ईक्षणगः ज्ञानविषयः आसीत् । उपदेशे सति सन्मणिशब्दार्थत्वेन बादरायणप्रतीकज्ञानं बहूनां भविष्यति । लक्ष्मीपतेः को विशेषः? इत्यत उक्तम् – जनानां नयनं शब्दनयनं तद्योजनं विनेति । परेषां ज्ञानसाहाय्यं विना लक्ष्मी-पतिना ज्ञातत्वात् । अत्र विशेष इति भावः ।।७१।। तच्च । जनानां ज्ञानसाहाय्यं विना सन्मणिशब्दार्थत्वेन बादरायणप्रतीकज्ञानं काङ्क्षितमपि अपेक्षितमपि मत्सामर्थ्येनासीत् ।

''लक्ष्मीपतिः सूक्ष्ममतिः श्लक्ष्णवाक् मत्कटाक्षतः ।
भोक्ष्यतीक्षाफलं सूक्ष्मं मत्कृतिं वक्ष्यतु त्विमाम्'

इति यत् प्रागुक्तं (१२/५) लक्ष्मीपतेरीक्षाफलभोगरूपं कार्यं तत् तव प्रत्यक्षमभूत् । तत् प्रत्यक्षसिद्धमभूत्[१] ।।७२।।

---

(१) लक्ष्मीपतिगे अपरोक्षवागिदे एन्दु विप्रनिगे ध्यानदिन्द तिळियितु.

**दक्ष प्रत्यक्षमित्युक्ते तत्समक्षमिति त्वया[१] ।**
**लक्ष्मीपतिं समुद्दिश्य तत्पक्षीकृतमक्षत ।।७३।।**

**विचार्यैव वदस्व त्वं तवाचार्यत्वमञ्जसा ।**
**ममाचार्यमतं पृच्छ किमाचार्यत्वसत्फलम् ।।७४।।**

(अन्वयः) हे अक्षत! दक्ष! 'प्रत्यक्षम्' इत्युक्ते त्वया 'तत्समक्षम्' इति लक्ष्मीपतिं समुद्दिश्य तत्पक्षीकृतम् । अञ्जसा तव आचार्यत्वं (मया दत्तम्); (अतः) विचार्य एव त्वं वदस्व । (तस्मात्) हे आचार्य मम मतं (सम्मतं) पृच्छ । आचार्यत्वसत्फलं किम्?

(व्या) तत् प्रत्यक्षमभूत् इत्युपदिष्टम् । तत्र प्रत्यक्षपदं विस्मृत्य तत्समक्षम् अभूत् इति विप्रेण लेखितम् । तत्समीकरोति – दक्ष प्रत्यक्षमिति ।। हे दक्ष समर्थ! लक्ष्मीपतिं समुद्दिश्य तत्पक्षीकृतं तत्पक्षतया कृतं प्रत्यक्षपदं वदस्व । त्वया तु प्रत्यक्षपदस्थाने समक्षमिति पदप्रयोगः कृतः ।।७३।। (हे अक्षत इति विप्रं प्रति सम्बुद्धिः ।। त्वं विचार्यैव वदस्व । आलोचनां कृत्वा मां ध्यात्वा स्वाप्नश्लोकान् वद । त्वयि तादृशस्मृतिशक्तिर्विद्यते इति भावः । तव अञ्जसा आचार्यत्वं वृन्दावनाचार्यनामप्रदानेन मया सम्यक् दत्तं । त्वयि स्थिरं वर्तते इति अध्याहारः ।) तस्मात् हे आचार्य! मम मतं सम्मतम् । पृच्छ (मनसा प्रश्नं कृत्वा जानीहि) आचार्यत्वस्य मद्दत्तस्य किं सत्फलम् ।।७४।।

**अच्युतं स्मर विप्रेश कश्च्युतिं न त्यजेदिह ।**
**स्वच्छमूर्तिस्मृते विद्वन् पृच्छ मामेव तं प्रभुम् ।।७५।।**

**इदं वृन्दावनाख्यानं मम वृन्दावने सदा ।**
**सद्वृन्दानां वदस्व त्वं मद्वृन्दावनवैभवम् ।।७६।।**

(अन्वयः) हे विप्रेश! अच्युतं स्मर; इह कः च्युतिं न त्यजेत्? हे विद्वन्! स्वच्छमूर्तिस्मृते! तं प्रभुं माम् एव पृच्छ ।। त्वं इदं मद्वृन्दावनवैभवं वृन्दावनाख्यानं सदा मम वृन्दावने सद्वृन्दानां वदस्व ।।

---

(१) विप्रनु प्रत्यक्षं एन्दु बरेसदे समक्षं एन्दु बरेयिसिद्दाने एन्दिदे. अदु हिन्दिन ७२ श्लोकदल्लिरुव पद. दूरद पदवल्ल.

(व्या) (हे विप्रेश!) बादरायणप्रतीकलाभरूपमेव सत्फलम् । तत् मणिव्यत्यय-कथनादिना मया कथितम् । त्वया तु आप्लुतं उल्लङ्घितम्[१] । तत् तात्पर्यविचारो न कृतः इत्यर्थः । तत् तात्पर्यपरिज्ञाने किं बाधकम् इत्यत उक्तं – कश्च्युतिं न त्यजेत् इति ।। च्युतिम् = अभिमतार्थापरिज्ञानरूपां च्युतिम् । कः न त्यजेत् । हे स्वच्छमूर्तिस्मृते । स्वच्छायां शुद्धशिलायां मूर्तिर्यस्य स तथोक्तः । (बादरायणः) तस्य स्मृतिर्यस्य सः । तस्य सम्बुद्धिः । हे स्वच्छमूर्तिस्मृते (वेदव्याससस्मृतियुक्त!) तं प्रभुं बादरायणमुद्दिश्यैव मां पृच्छ । अनेन सूक्ष्मवृत्तान्ताभिमतं बादरायणवृत्तान्तं लक्ष्मीपतिना वक्तव्यमिति सद्बृन्दानां समीपे इदं मद्बृन्दावनवैभवं (मद्बृन्दावनमहिमाप्रतिपादकं वृन्दावनाख्यानं इति बहुव्रीहिः । मद्बृन्दावनस्य वैभवं यस्मिन् तत् । तादृशं आख्यानं वदस्व इत्यन्वयः) वदस्व ।।७६।।

**अहं प्रत्यक्षतश्चापि वक्ष्ये सूक्ष्ममते सुत ।**
**को दक्षश्चक्षुषा द्रष्टुं मत्तेजः साक्षिगोचरः ।।७७।।**

**विप्रप्रत्यक्षमेवैतत्सर्वं प्रत्यक्षमेव च ।**
**प्रत्यक्षसिद्धं प्रत्यक्षं ग्राह्यं ते साक्षिणं विना ।।७८।।**

(अन्वयः) हे सुत! सूक्ष्ममते! अहं प्रत्यक्षतः अपि च वक्ष्ये । साक्षिगोचरः मत्तेजः चक्षुषा द्रष्टुं कः दक्षः?

एतत् सर्वप्रत्यक्षं विप्रप्रत्यक्षम् एव; प्रत्यक्षसिद्धं प्रत्यक्षम् एव च; ते (त्वया) साक्षिणं विना प्रत्यक्षं ग्राह्यम् ।।

(व्या) मया कुतो वा वक्तव्यम् त्वयैव कुतो नोच्यते? इत्यत आह – अहमिति ।। अहं प्रत्यक्षतश्चापि वक्ष्ये । (हे सुत! सूक्ष्ममते!) साक्षिगोचरं मत्तेजः चक्षुषा द्रष्टं को दक्षः न कोपि । तस्मादहं सर्वान् प्रति न वक्ष्ये ।।७७।। हे विप्र! एतत् लक्ष्मीपतेः सूक्ष्मदर्शनरूपं तव प्रत्यक्षं (जातं) । तव प्रत्यक्षसिद्धं । सर्वैः प्रत्यक्षसिद्धत्वेन अङ्गी-कर्तव्यम् । प्रत्यक्षसिद्धं प्रमेयं, प्रत्यक्षरूपं प्रमाणं ग्राह्यम् । सङ्ग्राह्यम् । प्रत्यक्षप्रामाण्यं च साक्षिणं विना (पुरुषान्तरसाक्षिवचनेन विना) ग्राह्यम् ।। (ते त्वया) ।।७८।।

---

(१) 'आप्लुतं स्मर विप्रेश' एन्दु पाठ इट्टुकोण्डु व्याख्यानविदे श्रीयल्लि. आदरे अदे श्रीमूल, स्वा मत्तु वृंनल्लि 'अच्युतं स्मर विप्रेश' एन्दे पाठविदे.

**तत्प्रत्यक्षेऽपि प्रत्यक्षान्तरकाङ्क्षा भवेदिति[१] ।**
**तत्प्रत्यक्षेऽपि प्रत्यक्षान्तरबुद्धिश्च जायते ॥७९॥**

**एवं चेदनवस्था स्यात् काऽप्यवस्था व्यवस्थिता ।**
**न जायते प्रजानां तु जाने कुब्जापतेः प्रियम् ॥८०॥**

**त्वां तु मां तातबुद्ध्या त्वं सत्रकर्म सदा कुरु ।**

(अन्वयः) तत् प्रत्यक्षे अपि प्रत्यक्षान्तराकाङ्क्षा भवेत् इति; तत् प्रत्यक्षे अपि प्रत्यक्षान्तरबुद्धिः च जायते । एवं चेत् अनवस्था स्यात्; प्रजानां काऽपि अवस्था (अपि) व्यवस्थिता न जायते । त्वां तु कुब्जापतेः प्रियम् (इति) जाने । (हे विप्र!) मां त्वं तातबुद्ध्या (पूजयित्वा) सत्रकर्म सदा कुरु ॥

(व्या) (प्रत्यक्षसिद्धविषयेपि प्रत्यक्षान्तराकाङ्क्षा यदि भवेत् तर्हि तत्प्रत्यक्षेपि प्रत्यक्षान्तरकाङ्क्षा भवेदिति अनवस्था स्यात् । कापि व्यवस्थिता निश्चयः प्रजानां न जायते एव) तस्मात् तव प्रत्यक्षसिद्धं यत् । तत् प्रामाणिकैरङ्गीकर्तव्यम् । मयि को विशेषः इत्यत आह – **जाने कुब्जापतेः प्रियम् इति ॥** त्वामहं कृष्णभक्तं जाने ॥८०॥ **मां तातबुद्ध्या** पितृबुद्ध्या पूजयित्वा **सत्रकर्म** पर्यायोत्सवरूपं कर्म **कुरु** । यथा वृद्धयतौ जीवति सति द्वितीयः तत्स्वामिकत्वमनुसन्धाय उत्सवं करोति । तथा त्वमपि मत्स्वामिकत्वमनुसन्धाय उत्सवं कुर्विति भावः ॥८० १/२॥ लक्ष्मीपतिगतं सूक्ष्मदर्शित्वं, विप्रस्य स्वस्मिन् पितृत्वानुसन्धानरूपं चेति निदर्शनमत्रोक्तं प्राधान्येन ॥ विप्र.प्र.सं ॥ प्र१५॥

## १२–०८१–९४–लक्ष्मीपतिप्रकरणम्

(व्या) 'अहं विमानम्' इत्यारभ्याऽचाम वा नास्ति' इत्यन्तं लक्ष्मीपति श्रोतृकं षोडशप्रकरणं । पूर्वप्रकरणे विप्रेण लक्ष्मीपतेराप्तत्वं सूक्ष्मवृत्तान्ताभिज्ञत्वकथनेन कथितम् । अत्र विप्रस्य स्वानुग्रहपात्रत्वं मान्यता प्रयोजकं लक्ष्मीपतिनाज्ञातव्यम् इत्यभिप्रेत्य आह – अहमिति ॥

**अहं विमानमारुह्य चामानवसमन्वितः ॥८१॥**

---

(१) 'राकाङ्क्षा, राबुद्धि' एन्दु प्रिं. इद्दरू स्वा.दल्लू वृन्दल्लू सह 'रकाङ्क्षा, रबुद्धि' एन्दे पाठविदे.

**कुमानवगतिं हित्वा सुमानवसमीपगः ।**
**ततोऽवरुह्य तस्मात् तु तमूह्य ब्राह्मणोत्तमम् ॥८२॥**

**तत्कर्णे स्वर्णसङ्कीर्णाभर्णे वच्मि विविच्य ताम् ।**
**श्लोकान् वै पञ्च वा सप्त नव वा दश वाऽष्ट वा ॥८३॥**

**त्रीन्वैकं पञ्च दश च द्वादशादिक्रमादिह ।**
**ततोऽन्तर्धानमासाद्य सीमाद्यन्तं गतोऽस्म्यहम् ॥८४॥**

**स्वर्गादिभर्गलोकानां गर्गादिमुनिभिः सह ।**

(अन्वयः) अमानवसमन्वितः च अहं विमानम् आरुह्य, कुमानवगतिं हित्वा, सुमानवसमीपगः (सन्) ततः तस्मात् अवरुह्य तं ब्राह्मणोत्तमम् तु ऊह्य, ताम् विविच्य पञ्च वा सप्त नव वा दश वा अष्ट वा त्रीन् वा एकं पञ्च दश द्वादशादिक्रमात् च श्लोकान् इह स्वर्णसङ्कीर्णाभर्णे तत्कर्णे वच्मि । ततः अन्तर्धानम् आसाद्य, अहं सीमाद्यन्तं गतः अस्मि । गर्गादिमुनिभिः सह स्वर्गादिभर्गलोकानां (गतः अस्मि) ।

**(व्या)** (**अमानवसमन्वितः** = अमानवैः देवैः **समन्वितः** विमानवारुह्य) (**कुमानव-गतिं** =) कुमानवान् प्रति गमनं **हित्वा** सुमानवस्य विप्रस्य समीपगतः सन् **ततः** अपि तस्मात् विमानात् **अवरुह्य तं** ब्राह्मणोत्तमम् **ऊह्य** = अभिमुखीकृत्य ॥८२॥ स्वर्ण-सङ्कीर्णाभरणोपेते तत्कर्णे **तां** कृतिं **विविच्य** मनसा विभज्य । यस्मिन् काले यावतां श्लोकानां धारणं (तस्य) योग्यं तावत्सङ्ख्याकान् श्लोकान् तस्य स्वप्ने वक्ष्यामि ॥८३-८५॥ (कस्मिंश्चिद्दिने त्रीन् श्लोकान्, कचित् एकमेव । पञ्च । दश । द्वादशादिक्रमात् तावत् सङ्ख्याकान् श्लोकान् वच्मि । ततः अन्तर्धानं प्राप्य, पुनः विमानमारुह्य सीमाद्यन्तं आकाशप्रदेशं लोकान्तरदर्शनाय गतोऽस्मि) ॥८४॥ **स्वर्गम्** आरभ्य **भर्गलोकानां** ब्रह्मलोकानां **सीमाद्यन्तम्** आकाशप्रदेशं गतोस्मीति पूर्वेणान्वयः । गर्गादिमुनिभिः सह = विमानस्थितऋषिभिः सह गतोऽस्मि ॥८४ १/२॥

**पूर्वं मद्धृतस्रग्गन्धशुद्धगन्धं च जिघ्रति ॥८५॥**

**श्रद्धासमिद्धसद्बुद्धौ धैर्याद्धत्ते मदीरितम् ।**

**एवं स्वप्नक्रमं विप्रे मानिन् जानीहि त्वं सदा ।।८६।।**

**कानीह सुकृतान्यस्य त्वं तु मानादिकान् कुरु ।**

(अन्वयः) पूर्वं मद्धृतस्रग्गन्धशुद्धगन्धं जिघ्रति च; श्रद्धासमिद्धसद्बुद्धौ मदीरितं धैर्यात् धत्ते । हे मानिन्! एवं विप्रे स्वप्नक्रमं त्वं सदा जानीहि ।। अस्य सुकृतानि इह कानि? त्वं तु मानादिकान् कुरु ।।

**(व्या)** (वैकुण्ठादिऊर्ध्वलोकस्थगुरुः भूमिस्थमूकविप्रं प्रति कुतः आगच्छतीत्यत आह – **पूर्वमिति ।।** जन्मान्तरे विप्रः मदुच्छिष्टगन्धादिसेवनेन शुद्धः ।।८५।। अत एव इदानीमपि श्रद्धाभक्तिभरितसद्बुद्धौ) श्रद्धया सम्यगभिवृद्धायां बुद्धौ । **मदीरितम्** आख्यानं **धत्ते** । **तस्मात् त्वं मानादिकान् कुरु** ।।८७।। (एवं स्वप्नक्रमं जानीहि = स्वप्नक्रमो न निष्कारणः । किन्तु जन्मान्तरे गुरुसेवया लब्धान्तःकरणशुद्धेः ब्राह्मणस्य अनुग्रहं कर्तुं तद्वारा लोकानुग्रहार्थम् । **कानीह सुकृतानि अस्य** । अस्य ब्राह्मणस्य बहूनि पुण्यानि जन्मान्तरे एतज्जन्मनि बाल्ये च लब्धानि । तेन कारणेन दृढस्मृतिमान् सः योग्यतायाः आधिक्यात् सः अस्वल्पयापि मत्सेवया बहुपुण्यानि लब्धवान् । एवं दृढस्मरणशक्तिः अन्तःकरणनैर्मल्यं इत्युभयमपि प्राप्तवान् । हे मानिन्! हेतुगर्भसम्बोधनमिदं । अहमेवाधिकपुण्यवान् इति गर्वं हित्वा ब्रह्माणस्य आधिक्यं जानीहि । ततश्च मानादिकान् कुरु बहुमानपूर्वकं तस्य सेवां कुरु ।।८६ १/२।।

**श्रीमद्वागीशसञ्जातवादिराजाख्यसन्मुनेः ।।८७।।**

**गतिर्न जाता चात्रैव भ्रमते श्रमतेऽनिशम् ।**
**इति जानन्ति ये मर्त्याः पतिता नात्र संशयः ।।८८।।**

**पतन्ति पितृभिः सार्धं वितते नरके सुत ।**

(अन्वयः) 'श्रीमद्वागीशसञ्जातवादिराजाख्यसन्मुनेः गतिः न जाता; अनिशम् अत्रैव भ्रमते श्रमते च' इति ये मर्त्याः जानन्ति (ते) पतिताः अत्र संशयः न । हे सुत! पितृभिः सार्धं वितते नरके पतन्ति (च) ।

**(व्या)** (केचन मन्दाः वादिराजमुनेः ऊर्ध्वलोकादिकं न प्राप्तम् । तस्मात् पिशाचभावेन

स्वप्ने ब्राह्मणं तोदयतीति वदन्ति । ते पापिष्ठाः **पतिता** भूत्वा नरके पतिष्यन्ति । ततश्च विनष्टा भविष्यन्ति ॥८८॥) अविश्वासिनां नरकप्राप्तिः विश्वासिनां स्वर्गप्राप्तिश्चानुसन्धातव्य इति भावेनाह – **श्रीमदिति** ॥

**स वै महानुभावश्च मोदते विष्णुमन्दिरे ॥८९॥**

**इति जानन्ति ये मर्त्या अप्यमर्त्यत्वगामिनः ।**
**मोदन्ते दिव्यलोकेषु नाकादिषु न संशयः ॥९०॥**

**(अन्वयः) 'सः महानुभावः वै, विष्णुमन्दिरे अपि मोदते च' इति ये मर्त्याः जानन्ति अमर्त्यत्वगामिनः (सन्तः) दिव्यलोकेषु नाकादिषु मोदन्ते; न संशयः ।**

**(व्या)** (ये तु मुक्तियोग्याः वादिराजमुनिः ऋजुगणस्थः । श्वेतद्वीपादिषु हरिसेवापरायणः इत्यादि महिमानं जानन्ति ते मरणानन्तरं स्वर्गे मोदन्ते ॥९०॥)

**एवं शश्वत्सुप्रसन्नोऽस्मि पुत्र सत्प्रेक्षा ते जायते काऽत्र शङ्का ।**
**मत्प्रेक्षणात् प्राणनाथप्रियेऽस्मिन् कृष्णे भक्तिं कुरु मन्त्रेण पुष्णन् ॥९१॥**

**(अन्वयः) हे पुत्र! एवं शश्वत् सुप्रसन्नः अस्मि; ते सत्प्रेक्षा जायते; अत्र का शङ्का । मत् प्रेक्षणात् प्राणनाथप्रिये अस्मिन् कृष्णे मन्त्रेण पुष्णन् भक्तिं कुरु ॥**

**(व्या) एवं शश्वदिति ॥ एवम्** उक्तप्रकारेण अस्मिन् विप्रे अहं **सुप्रसन्नोऽस्मि** । **अत्र** विप्रविषये । तव **सत्प्रेक्षा** निर्दुष्टाबुद्धिः **जायते । अत्र का शङ्का** न कापि । (तव मनसि) शङ्काभावे सत्प्रेक्षायां च मत्प्रेक्षणं मदीयकृपाकटाक्षेण दर्शनं कारणम् । (मदनुग्रहेणैव स्वरूपोत्तमे विप्रे त्वं गौरवयुक्तो भविष्यसीति भावः) तस्मात् अस्मिन् (**प्राणनाथप्रिये** मध्वप्रिये) विप्रपूज्ये **कृष्णे** (कृष्णद्वैपायनाख्ये) बादरायणे । **मन्त्रेण** आलोचनेन । **पुष्णन्**(१) तात्पर्यलिङ्गसिद्धार्थनिश्चयं कुर्वन् सन् **भक्तिं कुरु** ॥९१॥

**हे पुत्र तव पापानि चापानीव नमन्ति च ।**

---

(१) मन्त्रेण पुष्णन् एन्दरे कृष्णमन्त्रेण, व्यासमन्त्रेण अथवा वादिराजगुरुमन्त्रेण कृष्णद्वैपायने भक्तिं वृद्धिं कुर्वन् सन् एन्दू अर्थवागुत्तदे ।

**दिने दिने कलावृद्धिर्वदने मदनं विना ॥९२॥**

**जायते कामतश्चापि(१) मापते त्वायतेक्षण ।**
**तव पापानि कर्माणि वर्माणि धृतवानसि ॥९३॥**

**मत्कृपापात्ररूपाणि वैरिणां मारकाणि च ।**
**तस्मात्तव न भीतिर्वा मम वा नास्ति (पार्थिवात्)(२) ॥९४॥**

(अन्वयः) हे पुत्र! तव पापानि चापानि इव नमन्ति च । (तेन) दिने दिने वदने कलावृद्धिः जायते । मदनं विना कामतः अपि तव कर्माणि वैरिणां मारकाणि च (भवान्ति) । (हे आयतेक्षण!) (यतः त्वं) मापतेः मत्कृपा-पात्ररूपाणि वर्माणि धृतवानसि । तस्मात् तव वा मम वा भीतिः नास्ति ॥

(व्या) (ननु) बहूनां पापानां तत्कृतानां (मत्कृतानां) सत्वात् । कथम् एतादृशार्थानां ज्ञाने वचने चाधिकारः? इत्यत आह – **हे पुत्रेति ॥ हे पुत्र लक्ष्मीपते! तव पापानि चापानीव** धनूंषीव **नमन्ति । दिने दिने कलावृद्धि**र्जायते ॥९२॥ **मदनं विना** कायतः कृतानि पापानि । **वैरिणां मारकाणि** । यतस्त्वं मत्कृपापात्ररूपाणि भक्तजालानि **वर्माणि** इव **धृतवानसि** । तेषां कृपादृष्टिबलेन त्वदीयानि **पापानि** (३)चापतुल्यानि **वैरिणां मारकाणि** भवन्ति ॥९३॥ तस्मात् तव भीतिर्वा आचाम वा आचमनं वा नास्ति । अलौकिकोयं प्रयोगः । साकल्येन प्रारब्धेतरपापभोगाभावेपि किञ्चिद्भोगोपि नास्तीति भावः(४) ॥

---

(१) कायतश्चापि एन्दु श्रीपाठ. आदरे कामतश्चापि एन्दु वृंपाठ. कायतः एन्दिट्टुकोण्डे व्याख्यानमाडिद्दारे श्रीयल्लि.

(२) चामा वा एन्दु वृ.पाठ. आदरे व्याख्यानदल्लि चाम वा एन्दु हिडिदु अर्थ तोरिसिद्दारे. ई श्लोकद नास्ति एम्ब पदान्त्यदल्लि ई १६नेय लक्ष्मीपति प्रकरणवुमुगियुत्ते. पार्थिवात् एम्बपदवु हदिनेळनेयदाद विप्रप्रकरणक्के सेरिदु.

(३) (कामतः कृतानि एन्दु पाठ साधुवादरे 'धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत' एम्बन्ते निन्न हरिभक्तियिन्द माडिद पापगळु निन्नन्नु हाळु माडुवुदिल्ल. पुण्यबीजवागुत्तवे एन्दु भाव)

(४) इल्लि एनो पद व्यत्यासवागिदे. ''साकल्येन प्रारब्धपापनाशाभावेपि प्रारब्धेतरपापानां किञ्चिद्भोगोपि नास्तीति भावः' एन्दिरबेकेन्दु तोरुत्ते. इल्लि विवक्षितप्रमेयऽ वेनेन्दरे

### १२–०९५–१०७–विप्रप्रकरणम्

(व्या) 'पार्थिवात् । मानं वै जायते' इत्यारभ्य अध्यायान्तं विप्रश्रोतृकं सप्तदश-प्रकरणम् । एवं उक्तप्रकारेण सूक्ष्मवृत्तान्तख्यापने भूपकार्यविलम्बनादिना अविश्वासशङ्का न कार्या इति भावेनाह – पार्थिवादिति ।।

**...................... पार्थिवात् ।।**

**मानं वै जायते कामं मानिंस्तव न चान्यथा ।**
**तस्मान्मम पदे नित्यं भक्तिं कुरु सुतोत्तम ।।९५।।**

**विततां कीर्तिमाप्नोति सततं च भवानिति ।**
**वादिराजाग्रतः क्षुद्रराजकार्यं कुतस्तव ।।९६।।**

**वादीभमृगराजोऽहं वादिराजो हरिं भजे ।**
**राज्ञां कार्येण मे कृत्यं प्राज्ञ किं वद मद्विधेः ।।९७।।**

**ईश्वरस्यैव सङ्कल्पो यथा चास्ति तथा भवेत् ।।९८।।**

(अन्वयः) हे मानिन्! तव पार्थिवात् मानं कामं वै जायते; अन्यथा च न । हे सुतोत्तम! तस्मात् नित्यं मम पदे भक्तिं कुरु । इति (मयोक्तकार्यकरणेन) भवान् सततं विततां कीर्तिम् आप्नोति च ।

वादिराजाग्रतः तव क्षुद्रराजकार्यं कुतः? वादीभमृगराजः अहं वादिराजः; हरिं भजे । हे प्राज्ञ! मे कृत्यं कार्येण राज्ञां किम् (भयम्? तत्) वद । मद्विधेः ईश्वरस्य एव सङ्कल्पः च यथा अस्ति तथा भवेत् ।।

(व्या) क्षुद्रराजभीतिर्मास्तु इत्याह वादिराजाग्रत इति ।। क्षुद्रराजप्राबल्येपि ।।९७।। ईश्वरसङ्कल्पानुसारेण अस्मदभिमतं भूपकार्यं भविष्यतीति भावेनाह – ईश्वरस्येति ।।९८।। मानं पूजा[१] । हे मानिन् ज्ञानिन् तव कामं जायते । न चान्यथा तस्मात् सदा मुदा

---

(१) (पार्थिवात् = केरळनृपात् सेतुमाधवसूरिविरचितविश्वप्रियविलास ४ श्लोक ७ –

'विहायान्यत्र सत्कारं हयास्य वशगः सदा ।
गुरुः केरळमासाद्य रजे राज्ञाभिवन्दितः ।।

**मद्भक्तिं कुरु** ।।९५।। मम पदे कृतभक्तिप्रभावेण तव कीर्तिवृद्धिः सुखजीवनं च भविष्यतः । 'जीवनार्थं क्षुद्रराजानं प्रति मा गच्छ' इति भावेनाह **– वादिराजाग्रतः इति ।।** मत्सन्निधाने वृन्दावनसेवारतस्य तव, तां सेवां त्यक्त्वा, जीवनार्थं राजधानीगमनं नोचितमिति भावः ।।९६।। क्षुद्रराजापेक्षया स्वस्य उत्तमत्वं ज्ञापयन् स्वनामनिर्वक्ति **– वादीभेति** ।। यस्मात् सकलदुर्वादिगजानां अहं सिंहसदृशः । तस्मात् सर्वज्ञत्वात् सर्वजयशीलशक्तिमत्वाच्च । अहं **वादिराज**नामकः । तस्मात् **हे प्राज्ञ! राज्ञां कार्येण** सेवया अनुनयेन वा **मे** किं **कृत्यम्** फलं प्रयोजनं वा नास्ति । किमर्थं तेषां सेवा मया कार्या? वद । **मद्विधेः** मदाज्ञया मम सेवारतस्य ममाज्ञया हरिगुरुसेवारतस्य तव वा **किं कृत्यम्?** 'समुद्रे यथा कूपं तथा मत्सेवालभ्यफले राजसेवा प्राप्यं सर्वफलं मग्नं भविष्यति' इति भावः । तस्मात् सर्वदा मत्सेवां कुरु । मदाज्ञां विना तां त्यक्त्वा नरराजसेवार्थं न गच्छ ।।९७।। ननु नाहं जीवनार्थं राजानं गच्छामि । तस्य विद्योपदेशमाङ्गल्यसिद्ध्याद्यपेक्षा पूरणीया? इत्यत आह **– ईश्वरस्येवेति ।। ईश्वरस्य** मम नियामकस्य वादिराजगुरोः सङ्कल्पः । **यथास्ति** । तदनुसारेण राजप्रार्थित मद्विषये श्रीहरिरूपईश्वरस्य सङ्कल्पः यथास्ति

---

**धनेन राजदत्तेन कनकोत्तममण्डपे ।**
**मुनीन्द्रः स्वकृते पूजां श्रीनिधेः कृतवान् मुदा ।।१२।।**

एन्दिदे. राजपूजा कोच्चियल्लि एरडु मूरावर्ति अनेक वर्षकाल वृन्दावनाचार्यरिगे नडेदिदे. मैसूरु महाराजरू यथेष्ट पूजे माडिद्दारे. कोच्चिरङ्गप्पाचार्यकृतविश्वप्रियविलासद द्वितीयविलास श्लोक श्लोक ७,८,९-१५ पर्यन्तवागि मैसूर महाराजरु माडिद पूजेयु हेळल्पट्टिदे. १५ने श्लोक

'एवं राजाधिराजस्य बहुमानं गुरौ परं ।। श्लोक – २९-३० : सत्यधर्म इति ख्यातो वादिराड्भक्तिपूरितः । गुरुं स्वमठमानाय्य व्यासपूजामकारयत् ।।२९।। एन्दु वृन्दावनाचार्यरिगे सत्यधर्मरिन्दलू सत्कारवागिदे एन्दु हेळिद्दारे. 'महीशूर् पुरं प्राप्य राज्ञा सम्पूजितोऽभवत् ।।३०।। एन्दिद्दारे. तृतीयविलास श्लोक ९रिन्द १६रवरेगू पुनः २१रिन्द - २७रवरेगू कोच्चिराजरु माडिद पूजे हेळिदे. चतुर्थविलासद २३रल्लि माठराजन पूजे हेळिदे. अल्लि 'वत्सरगणान् अध्युवास' एन्दिदे. अल्लि एन्दरे चित्पुर एम्ब राजधानियल्लि. पुनः ४ने विलासद ३१ने श्लोकदल्लि त्रैशिवपुरदल्लि कोच्चिराज माडिद पूजे ३०रिन्द ३४रवरेगू वर्णितवागिदे. ऐदने विलासदल्लू कोच्चिय रविवर्मभूपति माडिद पूजे ४नेय श्लोकदिन्द १७ने श्लोकद वरेगूहेळिदे. श्लोक ५ हीगिदे. 'शिबिकामधिरोप्य योगिवर्यं धृतचामीकरचामराग्र्यहस्तः । विबभौ यतिराजसन्निधाने नरराजो गुरुसन्निधौ यथेन्द्रः ।।

तथैव भवेत् । हरिगुरुसेवां समाप्य तदनन्तरं राजादीनाम् अपेक्षापूरणीया इति भावः ।। तस्मात् वृन्दावनसेवायाः सर्वापेक्षया अधिकत्वात् । तां परित्यज्य कुत्रापि न गन्तव्यं तदाज्ञां विना । गुरुराजानुग्रहसम्पादनानन्तरमेव इतरेषां सेवा कार्या । तद्योग्यतानुसारेण ।।९८।।)

**तस्माल्लोकस्य वार्तां मां न शृणुष्वाद्य गच्छतु ।**
**राज्ञां पापात्मनां वार्ता सतामार्तिप्रदा ध्रुवम् ।।९९।।**

**तस्मात् त्वं ब्राह्मण श्रीमन् वद मद्गुणवैभवम् ।**
**वक्ष्यामि गुणसम्भूतिं शृणु त्वं गुणिनां वर ।।१००।।**

**पुनः पुनः प्रवक्ष्येऽहं तद्गुणौघानपि द्विज ।।१०१।।**

**शनैः शनैः शृणु त्वं हि मदन्तर्यामिणो हरेः ।**

(व्या) **तस्मादिति** ।। **लोकानां वार्तां मां** बुद्धिं च **न शृणुष्व** । **अद्य गच्छतु** । कतिपयदिनेषु एवं गच्छत्सु । तदनन्तरं कार्यनिदर्शनं भविष्यतीति भावः[१] ।। तर्हि तवाज्ञा का इत्यत आह – **तस्मादिति** ।। 'तदलं बहुलोकविचिन्तनया' इत्युक्तत्वात् । **हे श्रीमन्! ब्राह्मण!** अदृष्टयुक्त! ब्रह्मज्ञानयोग्य! **मद्गुणवैभवं वद** । आख्यानं पठ । सज्जनेभ्यो वद । **हे गुणिनांवर गुणसम्भूतिं** गुणसम्पूर्णश्रीहरिस्वरूपं मम गुणसमुदायं च **वक्ष्यामि** । 'चरितं विष्णुभक्तानां विष्णूद्रेकाय कथ्यते' इत्युक्तत्वात् श्रवणीयं तत्सर्वं शृणु ।। **तद्गुणौघानपि** । व्याप्तहरिमहिमानमपि पुनः पुनः साक्षाद्वा अन्यगुरुद्वारा स्वप्ने वा अस्वप्ने वा आख्यानादिग्रन्थेषु वा यथा तव बोधो जायते तथा काले काले उपदिशामि ।।१०१।। **शनैः शनैः शृणुष्वे**त्यनेन क्रमेण अर्थबोधो भविष्यतीति सूचितं भवति ।।(मदन्तर्यामिणो हरेः प्रेरणया मदन्तर्यामिणः

---

(१) अथवा मां नन्नन्नु कुरितु लोकस्य वार्तां = राजरुगळ वृत्तान्तवन्नु, न शृणुष्व = न श्रावय = नीनू केळबेड, ननगू 'स्वामि आ राजनिगे ई अभीष्टवन्नु पूरैसबेकु, आ अभीष्टवन्नु पूरैसबेकु. एन्दु प्रार्थिसबेड, नन्न वृन्दावनद सन्निधियल्लि लौकिकर वृत्तान्तवन्नू, वृत्तान्तपत्रिके पठनादिगळन्नु माडबेड. राजरुगळेन्दरे सामान्यवागि प्रजाद्रोहिगळु. स्वार्थिगळु. तपोहीनरु. तत्वज्ञानशून्यरु. राज्यान्तेन नरकं ध्रुवं' एम्ब पुराणवाक्यदन्ते मरणानन्तरदल्लि नरकक्के बीळुववरु. अन्तहवरल्लि आसक्ति बिडु. 'मागृधः कस्यस्विद्धनम्' एन्दु ईशावास्योपनिषत्तिदे एन्दु अर्थ.

हयग्रीवस्य गुणान् यथाज्ञानं जायते तथा उपदिशामीत्यर्थः)[१] ।

निखिल सूक्ष्मवृत्तान्तं स्पष्टं कुतो नोच्यते इत्यत आह – अथापीति ।।

**अथापि न प्रवक्ष्यामि ह्यविश्वासात्मनः कलेः ।।१०२।।**

**मिथ्यामतिस्वरूपत्वात्तन्नैवेति प्रवक्ष्यतः ।**
**कापुरुषहृन्मध्यस्थः कोप एव भविष्यति ।।१०३।।**

**शापं तदा प्रदास्यामि पापपूरुषरूपिणः ।**
**एवं सर्वं जगन्नष्टं कष्टात्कष्टं च यास्यति ।।१०४।।**

**स्पष्टात् स्पष्टतमं लोकं नारकं याति दारक ।**

(अन्वयः) अथापि कलेः अविश्वासात्मनः न प्रवक्ष्यामि; मिथ्यामतिस्वरूपत्वात् कापुरुषहृन्मध्यस्थः (श्रीहरिः) इति तन्नैव प्रवक्ष्यति । कोप एव भविष्यति । तदा पापपुरुषरूपिणः शापं प्रदास्यामि । एवं जगन्नष्टं कष्टात् कष्टं च यास्यति । हे दारक (विप्र)! लोके स्पष्टात् स्पष्टतमं नारकं याति ।

(व्या) अयोग्यानां कल्यादीनां विश्वासस्यानुत्पादनीयत्वात् ।।१०२-१०६।। अविश्वासमनस्कस्य कलेः स्वरूपतः भ्रान्तिज्ञानत्वात् । तस्य तत्वज्ञानायोग्यत्वात् ।

---

(१) इदेल्ला नडेदिदे एन्दु सेतुमाधवाचार्यर विश्वप्रियविलासद प्रथमविलासश्लोक १९,२०रल्लिदे.

**ततो मठपतिर्भूत्वा गत्वा सोदापुरं यतिः ।**
**गुरोर्वृन्दावनस्याग्रे शास्त्रस्यावर्तनं व्यधात् ।।**
**तदर्थवाणीं कल्याणीं अदृश्यो वादिराडहो ।**
**स्वदासं श्रावयामास यथाख्यानं द्विजं पुरा ।।२०।।**

एन्दिदे. २१रिन्द २५रवरेगे अवरु माडिद सेवे हेळल्पट्टिदे. सेवे मुगिसि वापस्सु उडुपिगे होरटु गुरुराजरिगे विश्वप्रियरु नमस्करिसिदरु.

**'गुरोर्वृन्दावनस्याग्रे वन्दमानस्य सन्मुनेः ।**
**दिव्यमन्त्राक्षता मूर्ध्नि ताश्चैततदद्भुतं ।।**

कोच्चिरङ्गप्पाचार्यकृत विश्वप्रियविलास प्रथमविलास श्लोक २१S२५रल्लू ई विवरविदे.

तस्यापि बोधो यथा भवेत् तथा स्पष्टं नैव वच्मि । कारणान्तरं चास्ति । तस्य कलेः मिथ्याज्ञानस्वरूपत्वात् । स्पष्टं उपदेशे कृतेऽपि उक्तमाहात्म्यं असदेव इति प्रवक्ष्यति । कथं प्रवक्षति अदृश्यः खलु कलिरिति चेन्न । कापुरुषहृन्मध्यस्थः सन् प्रवक्ष्यति । दुर्जनेषु प्रविश्य तेषां वचनैः तथा निन्दति ।।१०३।। तथा प्रामाणिकस्य अपलापे कृते सति कोपो भविष्यति । कोपेन शापे दत्ते सति सर्वे दुर्जनाः इदानीमेव मृत्वा तमः प्रविशन्ति । इदानीं स न युक्तः ।।१०४ १/२।।)

**तस्मात्कलियुगे घोरे सौरैर्लोकं तु यास्यतः ।।१०५।।**

**पास्यतो[१] दुःखरूपाणि नीराणीति च तान् प्रति ।**
**न वक्ष्ये सूक्ष्मवृत्तान्तं ध्वाङ्क्षवृत्तिं च काङ्क्षतः ।।१०६।।**

**साक्षिसिद्धं तु प्रत्यक्षायोग्यं काङ्क्षितमीक्षया ।**
**वक्तव्यमेव वक्ष्यामि नावक्तव्यं कदाचन ।।१०७।।**

(अन्वयः) तस्मात् कलियुगे घोरे सौरैर्लोकं तु यास्यतः, दुःखरूपाणि नीराणि इति च पश्यतः, ध्वाङ्क्षवृत्तिं च काङ्क्षतः तान् प्रति सूक्ष्मवृत्तान्तं न वक्ष्ये । साक्षीसिद्धं तु ईक्षया काङ्क्षितं प्रत्यक्षायोग्यं (अयोग्यानां प्रति) वक्तव्यम् एव वक्ष्यामि; अवक्तव्यं कदाचन न (कदापि न वक्ष्ये) ।।

**(व्या) तस्मात्** विश्वासहीनतामसजनानाम् अनुपदेश्यत्वात् **घोरे** कलियुगे । मरणानन्तरं यमलोकं गत्वा, तत्र दुःखाख्यजलानि नरके पानं कुर्वतः दुर्जनान् **प्रति** । तत्रापि **ध्वाङ्क्षवृत्तिं काङ्क्षतः** काक इव पिण्डासक्तान् जनान् प्रति **सूक्ष्मवृत्तान्तं न वक्ष्ये** इति योजना ।।१०६।। तथापि भक्तानां प्रति यद्वक्तव्यं तत् अयोग्यान् प्रति **प्रत्यक्षायोग्यं** ज्ञानिनाम् **ईक्षया काङ्क्षितं** साक्षिसिद्धं **वक्तव्यमेव वक्ष्यामि** ।।१०७।। **अवक्तव्यं** अतिसूक्ष्मरहस्यतत्वम् । पूर्वोक्तकारणात् न कदाचन वक्ष्यामि अनेनोक्तेषु वक्ष्यमाणनिदर्शनेषु अनुपलब्धिशङ्का न कार्या इति कथनेन उक्तवक्ष्यमाणोपलम्भरूपं निदर्शनमत्रोक्तं भवति । विप्रप्रकरणं सम्पूर्णम् ।।

**एतत्सर्वं स्वाप्रपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**

---

(१) 'पा'पाने एम्ब धातु. पास्यन् एन्दु ऌडन्तशतृप्रत्यय. द्वितीया बहुवचन

**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दा-शनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाह-कत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि- राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ

**तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति ।**
**अहो! (हे) सुत तत्! सत्यम् एव ।**

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्रपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामक- ब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्य- जनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्रवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि द्वादशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**

# १३-०००- त्रयोदशाध्यायः

## १३-००१-०३२-विप्रप्रकरणम्

(व्या) श्रीगुरुभ्यो नमः । विप्रवादिराजाख्यलक्ष्मीपतिसीतापतिबहुभक्तानां श्रवण-कथनादिनिदर्शनानि अत्रोच्यन्ते । 'वादिराजे'त्यारभ्य 'मत्कृतिरस्तु सर्वदा' इत्यन्तं विप्रश्रोतृकं प्रथमं प्रकरणम् । वादिराजाख्यं प्रति विप्रेण वक्तव्यं पद्यत्रयं वदेत्याह – वादिराजाख्येति ।।

**हरिः ओं ।।**

**वादिराजाख्यभट्टं तु स्पष्टं वद सुतुष्टिद ।**
**पुष्टगात्रं च मद्दत्तात् सुष्ठुपाटवसंयुतम् ।।१।।**
**काष्ठभारस्य चोद्धारे कष्टात्कष्टकृतिं शठम् ।**
**पट्टवर्धनशुण्ठाग्र्यं मत्कृतिं च पठेति तम् ।।२।।**

(अन्वयः) हे सुतुष्टिद! पुष्टगात्रं मद्दत्तात् सुष्ठुपाटवसंयुतं च कष्टात् काष्ठभारस्य उद्धारे च कष्टकृतिं, शठं पट्टवर्धनशुण्ठाग्र्यं तं वादिराजाख्यभट्टं तु 'मत्कृतिं च पठ' इति स्पष्टं वद ।

(व्या) 'विप्र त्वं लज्जया युक्तो मज्जातं न वदेः कुतः? त्वं च तूष्णीं च तिष्ठस्व; मत्पादस्मरणे रमन् । 'लक्ष्मीपतिश्च मद्भक्तो वक्ष्यत्येव मदाज्ञया' इति(१२/६२) पूर्वाध्याये विप्रेण वादिराजाख्यं प्रति वक्तव्यगुणदोषकथनप्रतिबन्धकीभूतायाः लज्जायाः सत्वात् लक्ष्मी-पतिर्वक्ष्यति इत्युक्तम् । अत्र वादिराजाख्यभट्टं प्रति स्पष्टं वदेत्युक्तिः कथम्? इति चेन्न । लक्ष्मीपतेरुक्तिः प्राथमिकी । तया ज्ञाताल्पगुणदोषकं वादिराजाख्यं प्रति वचने विप्रस्य लज्जायाः शान्तत्वात् 'वद' इत्युक्तिः । लक्ष्मीपतेरुक्त्यनन्तरं विप्रोक्तेः किं प्रयोजनम्? इति चेन्न । संवादस्य दाढर्यहेतुत्वात् । हे सुतुष्टिद! वादिराजाख्यभट्टं प्रति तद्गतदोषकथनेनापि तस्य सन्तोषप्रद! वादिराजाख्यभट्टं प्रति स्पष्टं यथा भवति तथा मत्कृतिं पठेति वद । वादिराजाख्यस्य लक्षणमाह – पुष्टगात्रं = पुष्टाङ्गं । मद्दत्तात् मदनुग्रहलब्धात् । संस्थाना-धिपत्यबलात् । सुष्टपाटवसंयुतं समीचीनपटुत्वोपेतम्[1] ।।१।।

---

(१) ॐ पूर्वविकल्पः प्रकरणात्स्यात् क्रियामानसवत् ॐ (ब्र.सू.३/३/४६)

**कष्टात् काष्ठभारस्य** उद्धारेपि (कृत) कष्टप्रयत्नम् । **शठं** गूढद्वेषिणम् । **पट्टवर्धन-शुण्ठाग्र्यम्** = पट्टवर्धनाः श्रीमदाचार्यसंस्थानाधिपत्ये जाताभिषेकाः । तेषु ये शुण्ठाः कर्तव्याकरणादिना शोकरहिताः । तेषु अग्र्यं श्रेष्ठम् । विप्रस्य यतित्वसमये यः पुष्टगात्रः श्रीमदाचार्यसंस्थानाधिपेष्वाश्रमज्येष्ठः स्वकीयशत्रुषु द्वेषाप्रकाशः । कर्तव्यलोपादिना शोक-रहितश्च स वादिराजभट्टः । अत्यल्पे महद्भिरकर्तव्ये काष्ठभारोद्धरणादौ च बहुप्रयत्नवान् । एतादृशं प्रति मत्कृतिं वदेति भावः ।।३।।

**एतत्पद्यद्वयं विद्वन् वदस्वाद्य सदा बुधम् ।**
**वेदवेद्यसदाराध्य शुद्ध मत्पट्टवर्धन ।।३।।**

**अहं पालितवानेतद्दिनपर्यन्तमेव च ।**
**इदानीं तु हरिष्यामि तद्धनं मानवर्धनम् ।।४।।**

**(अन्वयः) हे विद्वन्! वेदवेद्यसदाराध्य! मत्पट्टवर्धन! शुद्ध! एतत् पद्यद्वयं सदा बुधम् अद्य वदस्व । एतत् दिनपर्यन्तम् अहम् एव पालितवान् च । इदानीं तु मानवर्धनं तद्धनं हरिष्यामि ।।**

**(व्या) सदाऽबुधं** सर्वदा अज्ञजनगोष्ठीषु रतं वादिराजाख्यं प्रति, **हे विद्वन्! हे वेदवेद्यसदाराध्य!** वेदवेद्यो बादरायणः सदा आराध्यो यस्य सः । सदा व्यासाराधकत्वं सुब्रह्मण्यमठाधिपेषु पद्मनाभतीर्थानां मठाधिपेषु च अतिव्याप्तम् । अतिव्याप्तिवारणाय – **मत्पट्टवर्धनेति** ।। स्वकीयसंस्थानाधिपत्यस्य विठ्ठलाधिष्वपि सत्वात् पट्टवर्धनत्वे सति कदाचिद् बादरायणाराधकत्वस्यापि विठ्ठलादौ सत्वात् **वेदवेद्यसदाराध्ये**त्युक्तम् । 'सदा वेदव्यासार्चकमन्मठासंस्थानेश्वरविप्र' इति यावत् । **एतत्** वक्ष्यमाणपद्यत्रयम् । स्थान-त्रयतात्पर्यं वद ।। 'पुत्रपुत्रे'त्यारभ्य 'भविष्यस्यन्यथा प्रेतस्त्वं नशिष्यसि' (४-८) इत्यन्तं पद्यमेकं प्रथमम् । 'कुमतिं त्यज' इत्यारभ्य (अन्यथा नरकं यासि सुरकम्पितदेहवान् । क्रकचैर्दार्यसे त्वं हि सुकृतैर्हीनतां व्रजे[१]) इत्यन्तं द्वितीयं स्थानम् । 'मनुष्याधम' इत्यारभ्य 'नो चेद्गच्छस्व दूरं तु दारुणं नरकं तथा' इत्यन्तं तृतीयं पद्यम् । एवं समुदायत्रयं पद्यत्रयमित्युच्यते एतादृशपद्यत्रयस्य तात्पर्यं च वदेत्यर्थः ।।३।।

---

(१) कर्मणां शरदां शतं एन्दिरबेकु

प्राक् पुष्टगात्रत्वादिकं तल्लक्षणमुक्तम् । इदानीं कतिपयकालेषु धनाढ्यत्वं तेन गर्वाभि-वृद्धिः, ततो नष्टधनत्वं च वादिराजभट्टे ज्ञातव्यमिति भावेनाह – **अहं पालितवानिति ।।** अनेन एतदाख्यानतात्पर्यश्रवणकाले पूर्ववद्धनसमृद्ध्यभावकाले एतदाख्यानार्थश्रवणं भविष्यतीति सूचितं भवति ।।४।। श्लोकार्थः स्पष्टः । **मानवर्धनं** = गर्ववृद्धिरहितमित्यर्थः

अवान्तरवादिराजाख्यभट्ट प्रकरणे प्रथमपद्यम्

**पुत्र पुत्र तवार्याणां बुद्धिरेव विवर्धते ।**
**तत्र तत्र च मत्कार्यं शुद्धबुद्धिगतं कुरु ।।५।।**

**(अव) हे पुत्र पुत्र! तव अर्याणाम् बुद्धिः एव विवर्धते । तत्र तत्र च मत्कार्यं शुद्धबुद्धिगतं कुरु ।**

**(व्या) 'पुत्र पुत्रे'**त्यारभ्य **'कुर्वतः सार्थकान् कुरु'** इत्यन्तं विप्रश्रोतृकप्रकरणान्तर्गत -वादिराजाख्यश्रोतृकं अवान्तरप्रकरणम् । **हे पुत्र पुत्र!** वादिराजाख्य यथा **आर्याणां** बुद्धिः महतां बुद्धिः **एवं तव बुद्धिर्विवर्धते** । वस्तुतः तव बुद्धेः सामीचीन्यं नास्ति । तथा महतां बुद्धिः नूतनपुरुषाणां दर्शने तत्पुरतः महतां श्लाघनोपयुक्ता । तन्मर्यादोपयुक्ता । एवं तव बुद्धिरपि परेषां दर्शनसमये तदुपचारादिना स्वकीयमाहात्म्यख्यापनोपयुक्ता इत्युक्तं भवति । अस्मिन् आख्याने यत्प्रकरणं त्वया श्रोतव्यं **तत्र तत्रोक्तं मत्कार्यं शुद्धबुद्धिगतं कुरु** । निर्मलबुद्धिविषयं कुरु ।।५।।

**वृद्धं बुद्धिमतां श्रेष्ठं बद्धभक्तिं च मत्पदे ।**
**शुद्धं क्रुद्धं तु दारिद्र्यात् दारादिषु च मा त्यज ।।६।।**

**(अन्वयः) वृद्धं बुद्धिमतां श्रेष्ठं मत्पदे बद्धभक्तिं च दारिद्र्यात् तु दारादिषु क्रुद्धं शुद्धं च (त्वं) मा त्यज ।**

**(व्या) वृद्धं** ज्ञानवृद्धम् । अतएव **बुद्धिमतां श्रेष्ठम्** । **मत्पदे बद्धभक्तिम्** । **दारादिषु** दाराः भार्या आदयः स्वजीवनमूलभूताः येषां ते दारादयः । तेषु (कामुकसंसारि)दुष्टपुरुषेषु **क्रुद्धम्** । अत एव **शुद्धम् । विप्रं मा त्यज** । अनेन त्वं दारादिषु(दुष्टपुरुषेषु) दारिद्र्यात् इदानीं हरिष्यामिति प्रागुक्तदारिद्र्यदोषेण न क्रुद्धः । विप्रस्तु तदा (सदा) दारादिषु क्रुद्धः । अथापि त्वं अस्मत्पदेपि बद्धभक्तिः । विप्रोपि बद्धभक्तिः । तस्मात् त्वं तं मा त्यज

इत्युक्तं भवति ॥६॥

**एवं नीतिं मया नीतां सितां मा तात तां त्यज ।**
**त्राताऽहं त्वां सदा कान्त मां तातं शरणं व्रज ॥७॥**

**मनुष्याधम ते शङ्कां सुनिःशेषां त्यजस्व च ।**
**भविष्यस्यन्यथा प्रेतस्त्वं नशिष्यसि सर्वथा ॥८॥**

(अन्वयः) एवं मया नीतां तां सितां नीतिं हे तात (प्रिय वादिराजाख्य) मा त्यज । हे कान्त! अहं सदा त्वां (तव) त्राता । तातं मां शरणं व्रज ॥

हे मनुष्याधम! ते शङ्कां सुनिःशेषां त्यजस्व च । अन्यथा त्वं प्रेतः भविष्यसि; सर्वथा नशिष्यसि ॥

**(व्या) एवं** पूर्वोक्तां **सितां** शुद्धां (तां) **नीतिं** न्यायं **मा त्यज** । अनेन मत्पदे बद्धभक्तित्वरूपा नीतिः । विप्रस्यापि अपरित्यागप्रयोजिका । अतएव सिता परिशुद्धा । दुर्जनप्रियत्वरूपं दारादिष्वक्रुद्धत्वं तेषु क्रुद्धविप्रपरित्यागप्रयोजकीभूता अपरिशुद्धां नीतिः । तत्र शुद्धानीतिर्ग्राह्या । तदन्या तु त्याज्या इत्युक्तं भवति । (**अहं त्वा सदा त्राता** । **हे कान्त** मनोहर । **तातं मां शरणं व्रज** । इति स्पष्टम् ॥७॥ **हे मनुष्याधम** नराधम इव मन्दबुद्धे ।) **ते शङ्कां** सुनिश्चयात् । (निःशेषां सम्पूर्णतया) **त्यजस्व** । अनेन विप्रस्य पौरुटभाजनस्थबादरायणप्रतीकाराधकत्वं किं भगवत्पादसम्मतं उत नेति शङ्का । तस्याः कदाचित् त्यागः न प्रयोजकः । किन्तु **सुनिःशेषत**स्त्यागः कर्तव्यः इत्युक्तं भवति । अन्यथा (१) मत्कार्यकरणं, (२) विप्रापरित्यागः (३) सुनीतेरपरित्यागः, (४) शरणागतिः, (५) शङ्कायाः सुनिःशेषपरित्यागश्च इत्युक्तकार्यपञ्चकाभावे त्वं प्रेतो भविष्यसि । सर्वथा औषधादिमहाप्रयत्नेपि नशिष्यसि (मरणं प्राप्नोषि) इति प्रथमविषयः ॥८॥

अवान्तरवादिराजाख्यभट्ट प्रकरणे द्वितीयं पद्यम्

**कुमतिं त्यज जीव त्वं सुमतिं भज सर्वथा ।**
**सत्कुरु द्विजवाक्यं यु तत्कुरुष्व मयोदितम् ॥९॥**

**अन्यथा नरकं यासि सुरकम्पितदेहवान् ।**

**क्रकचैर्दार्यसे(ते) त्वं हि सुकृतर्हीनतां व्रजेः ।।१०।।**

**जीव जीव कुतो यासि नरकं नरकम्पनम् ।**
**जीव जीव हरेर्भक्त्या इहैव शरदां शतम् ।।११।।**

(अन्वयः) हे जीव! त्वं कुमतिं त्यज; सर्वथा सुमतिं भज; द्विजवाक्यं तु सत्कुरु; तत् मयोदितं कुरुष्व । अन्यथा सुरकम्पितदेहवान् (सन्) नरकं यासि, त्वं क्रकचैर्दार्यसे; सुकृतैर्हीनतां व्रजेः । हे जीव! जीव! नरकम्पनं नरकं कुतः यासि? हे जीव! इह एव हरेर्भक्त्या शरदां शतं जीव ।।

**(व्या) हे जीव! त्वं कुमतिं** कुबुद्धिं दुष्टपुरुषं सर्वथा महता प्रयत्नेनापि त्यज । **सुमतिं** सुबुद्धिं सात्विकपुरुषं महताप्रयत्नेन भज[१] । अनेन स्वकीयसंस्थानमुख्यकार्यानुकूलतया द्वौ पुरुषौ भविष्यतः । तत्रैकः **कुमतिः** दुर्मतावलम्बी । तत्र दुर्मतित्यागः प्रयाससाध्योपि कर्तव्यः । सुमतेः संस्थानं प्रदातव्यमित्युक्तं भवति ।।८ १/२।। सुमतिभजनविषये यत् **द्विजवाक्यं (सत्कुरु =)** तत्सत्यं कुरु, 'निर्दुष्टम्' इत्यङ्गीकुरु । तत् **मयोदितमिति** मत्वा कुरुष्व ।।९।। **अन्यथा** = कुमतेरपरित्यागे सुमतेः परित्यागे द्विजवाक्योपेक्षया नरकं यासि । (**सुरकम्पितदेहवान्**) सुरैः कम्पितदेहवान् = वातोपद्रवग्रस्तदेहवान् भविष्यसि । लोकान्तरेषु तु **क्रकचैर्दार्यते** । 'दार्यसे'पुरुषव्यत्ययोयम् । तस्य प्रयोजनं तु क्रकचच्छेदनस्य परकृतत्वसूचनम् ।।१०।। उक्त प्रकारेणानुष्ठाने हरिगुरुभक्तिबलेन नरकाप्रवेशः, वातोपद्रव-निवृत्तिः, पूर्णायुष्कत्वं च भविष्यतीति द्वितीयविषयः ।। (**जीव! हे जीव नरकम्पनं नरकं कुतो यासि** । प्रत्युत **हरेर्भक्त्या इहैव शरदां शतं** जीव जीव ।।११।।)

**जीव जीव गुरौ भक्त्या मयि कारुण्यविग्रहे ।**
**जीव जीव स्वपुण्येन कर्मणा शरदां शतम् ।।१२।।**

(अन्वयः) हे जीव! कारुण्यविग्रहे गुरौ मयि भक्त्या (सुखेन) जीव । हे जीव! स्वपुण्येन कर्मणा शरदां शतं (सुखेन) जीव ।।

**(व्या)** कुमतिपरित्यागादिना **कारुण्यविग्रहे** गुरुराजे **मयि** भक्तिर्भविष्यति । तादृश-हरिगुरुभक्तिपूर्वकं कृतनिष्कामकर्मणा शरदां शतं जीव । इति द्वितीयविषयः ।।१२।।

---

(१) गरुडपुराणे ब्रह्मकाण्डे जीवस्य द्वौ पत्नौ सुष्ठुबुद्धिदुष्टबुद्ध्याख्यौ कथितौ । ३०तमे अध्याये

अवान्तरवादिराजाख्यभट्ट प्रकरणे तृतीयं पद्यम्

**मनुष्याधम ते वाचा त्वाचार्योऽयं न भीतियुक् ।**
**स्वचारित्रं च मे सर्वं विचार्यैवं वदिष्यति ।।१३।।**

**तस्माच्छृणोषि चेद्वृत्तं शृणुष्व त्वं द्विजोत्तम ।**
**नो चेद्गच्छस्व दूरं तु दारुणं नरकं तथा ।।१४।।**

(अन्वयः) हे मनुष्याधम! ते वाचा अयम् आचार्यं तु न भीतियुक् । मे स्वचारित्रं च सर्वं विचार्य एव वदिष्यति ।। हे द्विजोत्तम! तस्मात् शृणोषि चेत्, त्वं वृत्तं शृणुष्व । नो चेत् दूरं तु तथा दारुणं नरकं गच्छस्व ।।

(व्या) हे मनुष्याधम! ते तव वाचा मनसि चिन्तया भयोत्पादिकया बादरायणपूजा-प्रतिबन्धकीभूतया वाचा अयं आचार्यः वृन्दावनाचार्यः भीतियुक्तो न भविष्यति । 'यद्यत् स्वकीयं कार्यं तत्किं विचार्य वदिष्यति । उत स्वेच्छया' इति तव मनसि संशयो भवति । विप्रः मे विशिष्टं स्वचारित्रं विचार्यैव वदिष्यति । (तस्मात् विप्रस्य प्रामाणिकत्वात् । वृत्तं शृणोषि चेत् हे द्विजोत्तम त्वं शृणुष्व । विप्रादाख्यानं शृणु) नो चेत् । तत्र संशये सति (विप्रे वा आख्याने वा संशये सति) दारुणं नरकं गच्छस्व ।।१४।। इति तृतीय-विषयः ।।

**स्वर्गं वै गन्तुकामश्चेद्भर्गलोकं सुखोत्कटम् ।**
**निर्गतो न भवस्व त्वं सर्गान्मद्वचनस्य तु ।।१५।।**

**परलोकप्रवृत्तेश्च प्रवक्तृत्वे प्रभोर्मम ।**
**प्रभुत्वं चास्य मे दत्तं विप्रस्याशु प्रगृह्णतः ।।१६।।**

**तस्माद् द्विजेन सुजनैः प्रजानां हितकाम्यया ।**
**समाजे सज्जनानां च श्रोतव्यं निजमीप्सुभिः ।।१७।।**

(अन्वयः) भर्गलोकं सुखोत्कटं स्वर्गं वै गन्तुकामः चेत् त्वं मत् वचनस्य सर्गात् तु निर्गतः न भवस्व ।। परलोकप्रवृत्तेः प्रभोः मम प्रवक्तृत्वे प्रभुत्वं च अस्य आशु प्रगृह्णतः विप्रस्य मे दत्तम् ।

**तस्मात् निजमीप्सुभिः सुजनैः प्रजानां हितकाम्यया च सज्जनानां समाजे द्विजेन श्रोत्रव्यम् ।।**

**(व्या) भर्गलोकं** सूर्यान्तर्गतनारायणानुग्रहलब्धं स्वर्गलोकं **गन्तुकामश्चेत् मद्वचनस्य सर्गात्** समूहात् (आख्यानग्रन्थात्) **(निर्गतः)** निवृत्तः विमुखो **न भवस्व**[१] ।।१५।। **जनानां परलोकप्रवृत्तेः** यन्मदीयं **प्रवक्तृत्वं तत् आशु प्रगृह्णतः अस्य** विप्रस्य **मया (दत्तं)** प्रदत्तम् ।।१६।। (जनानां परलोकप्रवृत्तिं प्रति प्रयोजनकं प्रवक्तृत्वं तत् व्यास-मध्वादिनिष्ठम् । इदानीं तादृशप्रवक्तृत्वे श्रीवादिराजमुनिः अधिकृतः प्रभुः । तादृशप्रभोः मम प्रभुत्वम् । मे मया । आशु प्रगृह्णतः स्वीकर्तुं समर्थस्य । अस्य विप्रस्य दत्तम् । 'वृन्दावनाचार्यमुखेनैव, आख्यानग्रन्थद्वारा एव जनानां मोक्षमार्गे प्रवृत्तिरिदानीं जायते' इति भावः । तदेव देवरहस्यमत्र निरूपितम्) ।।१६।। **तस्मात् (निजमीप्सुभिः)** निजहितेप्सुभिः **(सज्जनानां समाजे)** सज्जनसमाजे । विप्रमुखतः मदुक्ततात्पर्यं **श्रोतव्यम्** ।।१७।। (तस्मात् आख्यानस्य साधनोपयोगित्वात् **निजमीप्सुभिः** स्वयोग्यगतिं प्राप्तुम् इच्छुभिः । सुजनैः मुक्तियोग्यजनैः अधिकारसम्पन्नैः **प्रजानां हितकाम्यया** = स्वपुत्राणां साधनमार्गप्रदर्शनाय स्वभक्तानां साधनमार्गप्रदर्शनाय । **सज्जनानां समाजे** वैष्णवसभायां **द्विजेन श्रोतव्यम्** । आख्यानश्रवणं तन्मुखतः कार्यम् ।।१७।।)

**हे जीव जीव सकलेश्वरजीवभेदं**
**जानीहि जीवगतमेव जनेषु धीमन् ।**
**को मानवस्तव समानसुमानवेषो**
**ज्ञानादिगूहनपरो न मनोनुसारी ।।१८।।**

**(अन्वयः) हे जीव जीव! सकलजीवेश्वरभेदं जीवगतम् एव जानीहि । हे धीमन् जनेषु तव समानसुमानवेषः को मानवः? (त्वं तु) ज्ञानादिगूहनपरः न मनोनुसारी ।।**

**(व्या) हे जीव** (जीव आदराद्विरुक्तिः) **सकलेश्वरजीवभेदम्** (नित्यपरिपूर्णनित्य-मुक्तपरमेश्वरात् अस्वतन्त्रजीवे विद्यमानं भेदम् । तादृशजीवप्रतियोगिकात् परमेश्वरे विद्यमानं

---

(१) (ई बुद्धिवादवू वादिराजाख्यरिगे अन्वयिसुत्ते)

भेदम्) **जानीहि** । तथा **(जीवगतमेव)** जीवगतं परस्परं भेदं जानीहि । एतदुक्तेः का सङ्गतिः? इति चेन्न, 'कुमतिं त्यज' इत्युक्तं । जीवेश्वरभेदज्ञानिना त्वया अभेदज्ञानिपुरुषे संस्थानप्रदानं न कर्तव्यमिति सूचनार्थत्वात् । **हे धीमन्! जनेषु तव समानसुमानवेषः को मानवः?** न कोपि । अनेन शिष्टवेषकथनेन आन्तरशुद्धेः न्यूनता प्रतिपादिता भवति । **ज्ञानादिगूहनपरः** ज्ञानेच्छाप्रयत्नानां गूहनपरः त्वम्, सतां **मनोनुसारी न** । अनेन 'ते बुद्धिरेतादृशी प्रयत्नोपि सदृशः इच्छा एतादृशी प्रयत्नोपीदृशः' इति जनैः ज्ञातुं न शक्यते इति भावः ।।१८।।

**अहं ज्ञानिप्रियो नित्यं ज्ञानिनो हि मम प्रियाः ।**
**नैवाज्ञानी मानयुक्तः श्वानयोनिशतं व्रजेत् ।।१९।।**

**मम नन्दन विज्ञानं भानुतेजोनिभं शुभम् ।**
**शृणु मोहन मत्पुण्यं कारणं कुज नान्यथा ।।२०।।**

**(अन्वयः) नित्यम् अहं ज्ञानिप्रियः; ज्ञानिनः मम प्रियाः (हि); अज्ञानी (तु) न मानयुक्तः; (किन्तु) श्वानयोनिशतं व्रजेत् ।। हे नन्दन! मम विज्ञानं भानुतेजोनिभं शुभं च । हे मोहन! कुज! मत्पुणं कारणं शृणु । अन्यथा न ।**

**(व्या)** 'सकलेश्वरजीवभेदं जानीहि' इत्युक्तम् । किं तज्ज्ञानप्रयोजनम्? इत्यत आह – **अहमिति ।। अहं** ज्ञानिनां प्रियः । ज्ञानिनोपि **मम प्रियाः** । अनेन जीवेश्वरभेदज्ञानस्य गुर्वन्तर्यामि हरिप्रसादः प्रयोजनमित्युक्तं भवति । 'अज्ञानी तु ज्ञानिषु मानयुक्तः सन्मानयुक्तो न भविष्यति । ज्ञानरहितः सत्कुलप्रसूत्यादिना गर्वाधिकः पुरुषः मम नैव प्रियः श्वानयोनिशतं व्रजेत्' इति गर्वकृतमनिष्टमुक्तं भवति ।।१९।। **हे नन्दन! मम विज्ञानं** = मत्स्वरूपज्ञानं **भानुतेजोनिभं** सूर्यप्रकाशसदृशं । **हे मोहन!** सम्भाषणादिना जनानां मोहोत्पादक! **कुजन अन्यथा** । (तव मोहनव्यापारेण यदि अभ्रान्तः सन् तव अन्तरङ्गं पश्यति । त्वं कुजन एव आवेशवशात्) प्रागुक्तसुज्ञाने । मामुद्दिश्यकृतं पुण्यं कारणं । **हे कुज** भूजायत । नान्यथा अन्यथा मदन्तर्यामि परमात्मप्रीतिसाधनपुण्याभावे सुज्ञानं न भविष्यति ।। (दुर्योनि-नाशकभेदज्ञानं कथं जायते इत्यत आह – **हे नन्दन! मम विज्ञानं** साक्षिस्वरूपज्ञानं मानसअपरोक्षज्ञानं वृत्तिरूपं इति उभयरूपं विज्ञानं सूर्यप्रकाशवत् सर्वप्रकाशकं, शुभं, हीनजन्मनिवारकम् । तादृशं ज्ञानं प्रति **हे मोहन!** = कपटपुरुष! मया आचरितं

अनादिपुण्यं कारणं प्रयोजकम् । **हे कुज** = भूजातसाधनशरीरवान् । अन्यथा न । तस्मात् त्वमपि पुण्यं सम्पादय । वैष्णवज्ञानं भविष्यतीति भावः । अथवा ननु भवत्सेवा आख्यानश्रवणादिकं मम भवता आज्ञाप्यते । तेन किं प्रयोजनम्? भवज्ज्ञानं कथं सम्पाद्यते? इत्यत आह – **हे नन्दन! मम विज्ञानं** 'अहं जीवोत्तमः ऋजुः ब्रह्मवाय्वाविष्टः' इति स्पष्टज्ञानं मद्विषयकसाक्षात्कारो वा सूर्यप्रकाशवत् अलौकिकम्; उत्तमम् = कलाविद्यया जातसर्वज्ञानेभ्यः उत्तमम् । **शुभं** हरिप्रसादं प्रापयित्वा संसारतारकम् । श्वानादिजन्म-निवारकम् । **हे मोहन! कुज** भूजात । **शृणु मत्पुण्यं** मत्प्रीत्यर्थम् आचरितपुण्यं वृन्दावनसेवा, आख्यानयुक्तिमल्लिकादीनां श्रवणं इत्यादिजन्यं पुण्यं; **कारणं** = तादृशज्ञान-साधनम् । तस्मात् 'मोहकव्यापारान् हित्वा विप्रमुखेन आख्यानं शृणु' इति भावः ।।)

**प्रत्यक्षसिद्धमेतद्धि तेजसा च प्रकाश्यते ।**
**स्थूलप्रकाशकं सूक्ष्मं न तु तेजःप्रकाशकम् ।।२१।।**

**दूरस्थपुरुषस्यापि ज्ञानं सूक्ष्मप्रकाशकम् ।**
**क्वाचित्कं तेजसः साह्यं बाह्यसाधनमेव हि ।।२२।।**

**(अन्वयः) एतत् स्थूलप्रकाशकं प्रत्यक्षसिद्धम् (घटादिकं) च तेजसा प्रकाश्यते; तेजःप्रकाशकं सूक्ष्मं न । दूरस्थपुरुषस्य ज्ञानम् अपि सूक्ष्मप्रकाशकम् । क्वाचित्कं बाह्यसाधनम् एव तेजसः साह्यं हि ।।**

**(व्या)** (ज्ञानमाहात्म्यं किम्? इत्यत आह) **प्रत्यक्षसिद्धमेतत्** । घटादिकं तेजसा सूर्यप्रकाशादिना प्रकाश्यते ज्ञायते; अन्धकारस्थं घटादिकं तु चक्षुः सन्निकृष्टमपि न ज्ञायते। प्रकाशे सत्यपि स्थूलमेव ज्ञायते; न सूक्ष्मं । तथा (बाह्य)तेजः (दृश्यमानवस्तु) सूक्ष्मं चेत्, न प्रकाशकम् ।

(बाह्यालोकवत् ज्ञानमपि विषयद्योतकपदा(था)र्थः तत्र बाह्यतेजः किं करोति? इति चेत् एतद्धि प्रत्यक्षसिद्धम् – घटादिकं तेजसा च चक्षुरश्मिसहायकभूततेजसा प्रकाश्यते । तथापि तेजः स्थूलप्रकाशकं घटादिस्थूलवस्तुप्रकाशकम् । कुतः सूक्ष्मं[१] घटवृत्तिशक्तिः रुद्रप्राणलक्ष्म्यादिदेवस्वरूपम् न **तेजःप्रकाशकम्** = 'तेजः प्रकाशकं यस्य तत् । बाह्यतेजसा

---

(१) (= प्रथमाविभक्ति सूक्ष्मवाद घटदल्लिरुव देवतासमुदायवु एन्दर्थ)

न प्रकाश्यते' इति योजना । तस्मात् सूक्ष्मअतीन्द्रियादिप्रतिपत्तौ अन्तरङ्गप्रकाशरूपज्ञानमेव अवश्यकमिति भावः ।।२१।।

इन्द्रिर्यरश्मिरपि सूक्ष्मप्रतिपत्तौ अपर्याप्तशक्तिमान् इति यावत् । तस्मात् बाह्यप्रकाशापेक्षया या ज्ञानमधिकं, तदेवाह – **ज्ञानन्त्विति ।।** ज्ञानं तु दूरस्थपुरुषस्य विषयानधिकरण-दूरदेशगतपुरुषस्य सूक्ष्मप्रकाशकं देशान्तरस्थस्यापि ज्ञानबले सति दूरदेशगतं वस्तु स्पष्टं सूक्ष्ममपि प्रतीयते इति भावः । तस्मात् ज्ञानं सर्वप्रकाशकम्, तेजस्तु बाह्य (स्थूल) प्रत्यक्षे एव (सहकारि)साधनम् । (तस्मात् बाह्यदीपापेक्षया ज्ञानमुत्तमम्) ।।२२।।

**आन्तरं तु तमः कान्त ज्ञानं तु हरतेऽनिशम् ।**
**ज्ञानं माने न चानीतं हीनं विषयमानिनम् ।।२३।।**

**श्वानरूपं मुनिं चापि कुरुते च निवर्तनम् ।**
**ज्ञानं तु मौनिनां मुख्यं कानने वासिनां मुने ।।२४।।**

**श्वानजन्मानि दूराणि स्वयं नित्यं करोति च ।**
**तस्माद् ज्ञानी सदा पूज्यः पूज्यात् पूज्यतमः स्मृतः ।।२५।।**

**(अन्वयः) हे कान्त! ज्ञानं तु अन्तरं तमः तु अनिशं हरते । ज्ञानं च माने (सति) न आनीतम् () विषयमानिनं मुनिं च अपि श्वानरूपं कुरुते । हे मुने! मौनिनां कानने वासिनां तु ज्ञानं मुख्यम् । स्वयं च श्वानजन्मानि दूराणि च करोति । तस्मात् ज्ञानी सदा पूज्यः, (अपि तु) पूज्यात् पूज्यतमः (इति) स्मृतः ।।**

**(व्या) आन्तरं तमः तु** (द्वीतीया एक) ज्ञानमेव (प्र.ए.) **हरते** । तच्च **ज्ञानं** माने प्रमाणे सति **नानीतं चेत्** न सम्पादितं चेत्, **मुनिम् अपि** (विश्वामित्रं यथा) **विषयमानिनं** दुर्विषयाभिमानवन्तम् । अत एव हीनं निकृष्टं, **स्वानुरूपं च कुरुते** (श्वानरूपं इति स्वा.पाठः) तादृश अनिष्टस्य **निवर्तनं** निवर्तकं ज्ञानं **मौनिनां कानने वासिनामपि मुख्यम्** ।।२३-२४।।

(**हे कान्त** प्रिय! **मुने** ज्ञानयोग्य! इति च सम्बुद्धिः । अरिष्टनिवर्तकज्ञानं स्तौति – **श्वानजन्मानीति ।।**) तत् **ज्ञानं श्वानजन्मानि दूराणि करोति** । **तस्मात्** ज्ञानस्य

श्वानादिहीनजन्मनिवारकत्वात् **ज्ञानी सदा पूज्यः** । न केवलं राजादिवत् पूज्यः किन्तु **पूज्यात् पूज्यतमः** (स्वयं स्वस्वभावेन यथा अग्निः स्वस्वभावेन हर्यधीन एव दहति तथा । नित्यं प्रति मरणानन्तरम्) ।।२५।।

**अहं ज्ञानिप्रियो नित्यं ज्ञानिनोऽपि मम प्रियाः ।**
**नैवाज्ञानी मानयुक्तः श्वानयोनिशतं व्रजेत् ।।२६।।**

(अन्वयः) तस्मात् नित्यम् अहं ज्ञानिप्रियः, ज्ञानिनः अपि मम प्रियाः । अज्ञानी मानयुक्तः एव न । श्वानयोनिशतं व्रजेत् ।।

(व्या) (एवं वैष्णवज्ञानित्वात्) पूज्यात् पूज्यतमत्वात् **अहं ज्ञानिप्रियः** । **ज्ञानिनोपि मम प्रियाः** । '**नैवाज्ञानी मानयुक्तः श्वानयोनिशतं व्रजेत्**' इति प्रागुक्तनिगमनम् ।।

**ममोपदेशवाक्यानि श्वासमात्रावशेषिताः ।**
**श्रुत्वा खासादिदोषैश्च मुच्यन्ते नात्र संशयः ।।२७।।**

**ममोपदेशवाक्यानि सर्वाभीष्टप्रदानि च ।**
**श्वानादिहीनजन्मानि निराकुर्वन्ति नान्यथा ।।२८।।**

(अन्वयः) श्वासमात्रावशेषिताः मम उपदेशवाक्यानि श्रुत्वा खासादिदोषैश्च मुच्यन्ते; अत्र संशयः न । मम उपदेशवाक्यानि सर्वाभीष्टप्रदानि श्वानादिहीन-जन्मानि निराकुर्वन्ति च; अन्यथा न ।

(व्या) एवं उक्तेषु (श्लोकेषु । वादिराजाख्यस्य) मम दोषित्वेन प्रतिपादनात् तादृशानां दोषाणां कथमाख्यानपठनमात्रेण निवृत्तिः स्यात् इति न चिन्तनीयमिति भावेनाह – **ममोपदेशेति** ।। रोगनिवारकत्वसूचनाय '**श्वासादिदोषैश्च मुच्यन्ते**' इत्यनेन वातादिरोग-निवारकत्वं च सूचितम् ।।२७।। '**श्वानादिहीनजन्मानि निराकुर्वन्ति**' इत्यनेन पापनिवा-रकत्वं श्रोतुरभिमतमुक्तं भवति ।।२८।। ('**सर्वाभीष्टप्रदान्**' इत्यनेन यत्यादिवर्णाश्रम-योग्यधर्मादिदायकत्वमपि सूचितं भवति ।।२८।।)

**हे पुत्र वृत्तश्लोकानामन्ते योज्यफलश्रुतीन् ।**
**श्लोकान्वै शोकविच्छेदं कुर्वतः सार्थकान् कुरु ।।२९।।**

**(अन्वयः) हे पुत्र! वृत्तश्लोकानाम् अन्ते फलश्रुतीन् योज्य; शोकविच्छेदं कुर्वतः श्लोकान् वै सार्थकान् कुरु ।।**

**(व्या) हे पुत्र!** वादिराजाख्य । वृत्तश्लोकानां त्वदर्थप्रवृत्तश्लोकानाम् **अन्ते योज्य-फलश्रुतीन्** योज्यानि यानि फलानि तेषां श्रुतिः श्रवणं येषु । 'जीव जीव हरेर्भक्त्या इहैव शरदां शतम्' इत्यादिषु । ते तथोक्ताः तान् श्लोकान् । (कथम्भूतान्? शोकविच्छेदं कुर्वतः श्लोकान्) । **सार्थकान् कुरु =** सफलान् कुरु (तत्रोक्तरीत्या पारायणेन शोकनाशादिकं प्राप्य सफलान् कुरु) त्याज्यत्वेनोक्तदोषत्यागेन कर्तव्यत्वेनोक्तकरणेन च फलप्रतिपादकानां श्लोकानां साफल्यं भविष्यतीति भावः ।।२९।।

**ब्राह्मणाशनचिन्ता मा साऽम्भृणी तव दास्यति ।**
**कामणिं मा भज त्वं मत्पुत्रचिन्तामणिं भज ।।३०।।**

**(अन्वयः) हे ब्राह्मण! तव अनशनचिन्ता मा; सा अम्भृणी दास्यति । कामणिं मा भज; मत्पुत्रचिन्तामणिं त्वं भज ।।**

**(व्या)** एतावता वादिराजाख्यं प्रति वक्तव्यमुक्तम् । तत्र 'मनुष्याधम ते शङ्कां सुनिःशेषां त्यजस्व' इत्यनेन विप्रेण बादरायणपूजनस्य अवश्यं कर्तव्यमुक्तम् । तथा सति तद्विरोधिनां केषाञ्चित् पर्यायोत्सवसमये अशनार्थमागमनचिन्ता न कार्या इति भावेन आह – **ब्राह्मणेति ।। हे ब्राह्मण! तवाशनचिन्ता मा** अस्तु । या शुद्धशिलासन्निहिता **अम्भ्रणी सा** त्वदभिमतजनसमृद्धिं दास्यति । **का मणिं मा भज** । दुर्जनं मा भज । **मत्पुत्रचित्रामणिं** वादिराजाख्यं (वेदवेद्यगुरुं इति वा) **भज** । **हे मत्पुत्र** विप्र! **अशनचिन्तया कामणिं व्यासमुनिस्थापितबादरायणं मा भज ।** चिन्तामणिसदृशं पौरुटभाजनस्थबादरायणप्रतीकं **भज ।** 'अम्भ्रणी'पदेन या प्रळयावसाने परमात्मसमीपे एकाकिनी तस्य स्तुतिं कृतवती, तदनुज्ञया ब्रह्मादिनिखिलप्रजासृष्टिं च कृतवती । तस्याः स्मरणेन दुर्जनानां प्रतिबन्धेऽपि अभिमतप्रजासमृद्धिर्भविष्यतीति सूचितं भवति ।।३०।।

**अष्टाध्यायान् कुरु स्पष्टं शिष्ट काठिन्यवर्जितान् ।**
**पुष्टार्थानर्थिनोऽभीष्टं ददतः पठतोऽनिशम् ।।३१।।**

**(अन्वयः) हे शिष्ट! अनिशं पठतः अर्थिनः अभीष्टं ददतः काठिन्यवर्जितान्**

**पुष्टार्थान् अष्टाध्यायान् स्पष्टं कुरु ।**

(व्या) बादरायणभजनेनैव अष्टाध्यायानां स्पष्टार्थता भविष्यति । नोचेन्नेति भावेनाह – **अष्टाध्यायानिति ।। हे शिष्ट अनिशं पठतः** अधिकारिणः **अभीष्टं ददतः** अभीष्टप्रदान् पुष्टार्थान् पुष्टार्थप्रतिपादकान् **अष्टाध्यायान्** प्रथमाध्यायेन सह अष्टाध्यायान् (१,५,६,७,८, ९,१०,११इति अष्टाध्यायान्) वैभवप्रतिपादकान् । **काठिण्यवर्जितान्** । **स्पष्टं कुरु** = स्पष्टीकुरु । बादरायणपूजने कृते सत्येव । 'यां गतिं प्राप्य मोदन्ते तामप्यस्य ददाम्यहम्' इत्यादीनां स्पष्टार्थता । यस्मात् तस्मात् त्वया अनिशं बादरायणो भजनीयः इति भावः ।।३१।।

**ये विष्णुभक्ताः कृतकौतुकाः सदा**
**सीतापतिव्याससुतादयो मम ।**
**भक्ताश्च सर्वेऽपि सुतत्ववादिना-**
**मङ्गीकृता मत्कृतिरस्तु सर्वदा ।।३२।।**

(अन्वयः) ये सुतत्ववादिनां (मध्ये) सदा कृतकौतुकाः विष्णुभक्ताः सीतापति-व्याससुतादयः मम भक्ताः च सर्वेऽपि (= सर्वैरपि?) सर्वदा मत्कृतिः अङ्गीकृता अस्तु ।।

(व्या) दुर्जनैराख्यानस्यानुपादेयत्वेपि सीतापतिप्रभृतीनां भक्तानां भक्तिबलेन स्पष्टार्थता भविष्यतीति भावेनाह – **ये विष्णुभक्ता इति ।। सुतत्ववादिनां** मध्ये **ये कृतकौतुकाः** प्राप्तकुतूहलाः सीतापतिव्याससुतादयः तैर्ममकृतिः सदा **अङ्गीकृता अस्तु** । अनेन विप्रस्य वादिराजाख्यसहायरूपं निदर्शनमुक्तं भवति ।।वि.प्र.सं. प्र.१।।

### १३–०३३–०४०–लक्ष्मीपतिप्रकरणम्

(व्या) **'इति श्री'**त्यारभ्य **'न पश्यामि सुमानव'** इत्यन्तं लक्ष्मीपतिश्रोतृकं द्वितीय-प्रकरणम् ।

**इति श्रीत्यादिवाक्यानि मायाऽनुक्तान्यपि प्रिय ।**
**प्रत्यध्याये त्वया चान्ते प्रयोक्तव्यानि चाज्ञया ।।३३।।**

**समाप्याख्यानमेतद्वै मद्वृन्दावननामकम् ।**

**सद्वृन्दानां च मध्ये चाऽनन्दीकुरु द्विजोत्तमम् ।।३४।।**

**आचार्यशब्दप्रवृत्तौ निमित्तं चास्ति ब्राह्मणे ।**
**ममापूर्वगुणानां तु प्रवक्तृत्वं दिने दिने ।।३५।।**

(अन्वयः) हे प्रिय! मया अनुक्तानि इतिश्रीत्यादिवाक्यानि अपि आज्ञया च प्रत्यध्याये अन्ते च त्वया प्रयोक्तव्यानि । एतत् आख्यानम् समाप्य सद्वृन्दानां मध्ये मद्वृन्दावननामकम् द्विजोत्तमं च आनन्दीकुरु । वै । आचार्यशब्दप्रवृत्तौ ब्राह्मणे निमित्तं च अस्ति । दिने दिने (विप्र तथा वृन्दावनाचार्यजन्मनि) मम अपूर्वगुणानां प्रवृक्तत्वं तु (अस्ति) ।

**(व्या)** वादिराजाख्यवृत्तान्तप्रतिपादकस्य अतीतप्रकरणस्य अभिमतार्थवक्तारं पूर्वश्लोके व्यासशब्देन प्रकृतं लक्ष्मीपतिं प्रति तेन कर्तव्यमाह – **इति श्रीत्यादि ।।** अस्मिन् वृन्दावनाख्याने **प्रत्यध्याये मयानुक्तान्यपि 'इति श्री'त्यादि वाक्यानि** यथा मद**ाज्ञया** मत्सुतेनोक्तमिति[१] । तथा त्वदीये व्याख्याने प्रत्यध्याय**ान्ते त्वया च** वक्तव्यानि ।।३३।। **एतत्** वादिराजाख्यवृत्तान्तप्रतिपादकम् **आख्यानं समाप्य**, तदर्थं विज्ञाय, **सद्वृन्दानां** शेषादीनां **मध्ये द्विजोत्तमं** द्विजापेक्षया आश्रमज्येष्ठं वादिराजाख्यं **मद्वृन्दावननामकं** वृन्दावनाचार्यश्च **आनन्दीकुरु** ।। **ब्राह्मणे आचार्यशब्दप्रवृत्तौ** यत् **निमित्तं** तदस्ति । तत्किमित्यत आह – **ममेति** ।। (**निमित्तं** = प्रवृत्तिनिमित्तं ।

**आचिनोति च शास्त्रार्थम् आचारान् ग्राहयत्युत ।**
**स्वयमाचरते यस्तु तमाचार्यं प्रचक्षते'**

– इति)।।३५।। **(दिने दिने** वेदनिधिपुरतः वादिराजगुरुभिः स्वप्रोक्तश्लोकानां **प्रवक्तृत्वम्,** जन्मान्तरे वृन्दावनाचार्यजन्मनि गुरुराजमहिमाबोधकत्वम् इति निमित्तं ज्ञातव्यम् ।।३५।।)

**श्रोत्रियः शास्त्रवेत्ता च कृपापात्रो ममात्र तु ।**
**सत्पात्रत्वे मया प्रोक्तं तदपि ग्राह्यमेव हि ।।३६।।**

---

(१) (मत्सुतेन एन्दरे वेदनिधिना एन्दर्थविरबहुदु)

**सुक्षीणं ब्राह्मणं विद्वन् गुणिनं फणिनं भण ।**

**(अन्वयः) श्रोत्रियः शास्त्रवेत्ता च अत्र तु मम कृपापात्रः । मया (यत्) सत्पात्रत्वे प्रोक्तं तत् अपि ग्राह्यमेव । हि ।**

**हे विद्वन्! गुणिनं फणिनं (प्रति) सुक्षीणं ब्राह्मणं भण ।**

**(व्या)** यथा विप्रः मत्कृपापात्रतया ज्ञातव्यः । तथा सीतापतिरपि ज्ञातव्यः इति भावेनाह– **श्रोत्रिय इति ।। श्रोत्रियः** अग्निहोत्री **शास्त्रवेत्ता** सीतापतिश्च **मम कृपापात्रः** । तस्मादुभयोः सत्पात्रत्वं मयोक्तं ज्ञातव्यम् ।।३६।। (गुरुराजकृपापात्रत्वं सत्पात्रत्वम् । आख्यानोपदेशे सत्पात्रत्वविषये । तदपि ग्राह्यम् । गुरुराजकृपापात्रत्वरूपमाहात्म्यमपि ग्राह्यम् । ये ये गुरुराजकृपापात्रभूताः ते सर्वे लक्ष्मीपतिना आख्यानकथनेन आनन्दीकरणीयाः इति भावः । तस्मात् सीतापतिं प्रति आख्यानं कथनीयम् ।।३६।।) **हे विद्वन्!** लक्ष्मीपते! त्वं **गुणिनं फणिनं** शेषं प्रति **ब्राह्मणं सुक्षीणं वद** । 'शेषं प्रति विप्रस्य प्रकृतोपयुक्तधनराहित्यरूपासुक्षीणता प्रतिपादिता चेत् शेषकृतेन सहायेन विप्रस्य प्रकृतोपयुक्तधनलाभो भविष्यति' इति भावः ।।

**नन्दन शृणु मे वाणीं गुणभूषणकारण ।।३७।।**

**ममाज्ञाधारणेशानं मम प्राण भणाधुना ।**
**चिन्तामणे दरिद्राणां प्राणिनां प्राणभूषण ।।३८।।**

**(अन्वयः) हे नन्दन! गुणभूषणकारण! मे वाणीं शृणु । दरिद्राणां चिन्तामणे! प्राणिनां प्राणभूषण! मम प्राण! ममाज्ञाधारणेशानं अधुना भण ।**

**(व्या) गुणभूषणकारण**गुणानां मद्गुणानां शिष्याणां च भूषणं श्लाघनम् । तस्य कारणममवाणीं शृणु ।।३७।। अथवा हे विद्वन्! **ब्राह्मणं गुणिनं** शमदमादिसम्पन्नं **सुक्षीणं** = सद्गुरुद्वारा वेदान्तश्रवणराहित्येन अतिदुःखयुक्तम् । **फणिनं भण** आख्यानं उपदिश । **हे गुणभूषणकारणशिष्यानन्दायकप्रवचनचतुर!** मे वाणीं शृणु । **ममाज्ञां** परिपालय । तव श्रेयो भविष्यति । सोऽपि आख्यानश्रवणे पात्रभूतः इत्यर्थः हे मम प्राण! प्राणवदभिमानविषय! **ममाज्ञाधारणेशानम्** शेषं प्रति **अधुना भण** । प्राणिनां **प्राणभूषण**! प्राणिनां प्राणस्य मम भूषण । **'चिन्तामणे दरिद्राणां'** इत्यनेन 'दरिद्राणां एतद्ग्रन्थार्थलाभो भविष्यति' इति उक्तं

भवति ॥३८॥

**शक्तः कस्त्वद्गुणमणीन् वर्णितुं भण मां विना ।**
**शिष्यस्य गुणसम्भूतिवर्णने गुणभूषण ॥३९॥**

**गुणज्ञः प्राणते काणो ह्यक्षीणां मनुते नु किम् ।**
**तस्मात् त्वद्गुणसम्भूतिमहमेव मुनीश्वर ॥४०॥**

**जानामि मानवे चान्यो न पश्यामि सुमानव ॥**

(अन्वयः) हे गुणभूषण! त्वद्गुणमणीन् वर्णितुं मा विना कः शक्तः? (तं) भण । शिष्यस्य गुणसम्भूतिवर्णने गुणज्ञः प्राणते (खलु); काणः अक्षीणां त्वद्गुणसम्भूतिं मनुते नु किम्? तस्मात् हे मुनीश्वर! त्वद्गुणसम्भूतिं अहम् एव जानामि; हे सुमानव! मानवे अन्यः न पश्यामि च ॥

**(व्या)** 'शिष्यस्य गुणकथने शिष्यगुणाभिज्ञो गुरुरेव मुख्यः । अन्येषां तद्गुणदोष-परिज्ञानाभावात् । अहं त्वदीयगुणादि ज्ञाता । तव गुणाभिवृद्धये वक्ष्यामि' इति भावः ॥३९॥ (**हे गुणभूषण!** गुणैः भूषण इव समाजालङ्कार! **शिष्यस्य तव (गुणसम्भूतिवर्णने)** गुणसम्भूतिः गुणनां मेलनम्, तस्य वर्णने । **गुणज्ञः प्राणते** इत्युत्तरेणान्वयः । **गुणज्ञः** शिष्यज्ञः गुणस्वरूपज्ञः । **प्राणते** समर्थो भवति । यत्नं करोति ॥३९॥ **काणः** (एकचक्षुषा हीनः । अविमर्शकः ।) **अक्षीणां त्वद्गुणसम्भूतिं मनुते किम्?** जानाति किम् (तस्मात् हे **मुनीश्वर!** मुनयः ईश्वराः यस्य सः तस्य सम्बुद्धिः । अष्टमठाधिपानां प्रिय । **सुमानव त्वद्गुणसम्भूतिं अहमेव जानामि** । (मानवे) **अन्यं** मानवं **न पश्यामि** इति शिष्यश्लाघनं ज्ञेयम् ॥४०-१/२) पूर्वप्रकरणार्थकथनेन वादिराजाख्यादितोषकत्वरूपं निदर्शनमत्रोक्तम् ॥ लक्ष्मीपतिप्रकरणम् सम्पूर्णम् ॥ प्र.२॥

### १३-०४१-०४८- विप्रप्रकरणम्

**(व्या)** **'संसार'** इत्यारभ्य **'वक्ष्ये संशिक्षयन् क्षणात्'** इत्यन्तं विप्रश्रोतृकं तृतीयं प्रकरणम् ॥

**(व्या)** **'का मणिं मा भज त्वं' 'मत्पुत्र चिन्तामणिं भज'** इत्युक्तं पूर्वप्रकरणे । तत्र बादरायणमूर्तेः चिन्तामणिसादृश्यम्; तदन्यस्य काममणित्वमुक्तम् । तथा पञ्चमाध्यायो-

पदेशकाले मणिव्यत्ययः कृतः । तथा एतदध्यायोपदेशसमयेपि मणिव्यत्ययव्यापारं स्वकृतं प्रतीकव्यत्ययसूचकं पुनरपि प्रतिपादयत्यस्मिन् प्रकरणे ।

**संसारक्लेशतस्तोक श्लोकं त्वं त्यक्तवानसि ।।४१।।**

**एकं ते शोकहर्ता को मां विना कोविदो वद ।**
**''दक्षिणे कर्णरन्ध्रे च तन्द्री न स्याद्यथा तव ।।४२।।**

**मन्द्रमध्यमतारैश्च सध्रीयन्ते वचांसि नः'' ।**
**इत्येकं श्लोकमुख्यं मे पुनर्वच्मि शुके यथा ।।४३।।**

**पाकशासनलोकं च पुनर्यामि यथाऽगमम् ।**

(अन्वयः) हे तोक! संसारक्लेशतः एकं श्लोकं त्वं त्यक्तवानसि; ते शोकहर्ता मां विना कः कोविदः? वद । 'तव दक्षिणे कर्णरन्धे च तन्द्री यथा न स्यात् (तथा) मन्द्रमध्यमतारैः च नः वचांसि सध्रीयन्ते' इति एकं मे श्लोकमुख्यं शुके यथा (तथा) पुनः वच्मि । यथा अगमम् तथा पाकशासनलोकं च पुनः यामि।

(व्या) उपदेशसमये तन्द्रीदोषपरिहारार्थं मणिव्यत्ययवत् मन्द्रमध्यमतारैः स्वकृतं तन्द्रीदोषपरिहारबोधकपरित्यक्तशोकोपदेशं च करोति – **संसारक्लेशतः इति ।। हे तोक! त्वं संसारक्लेशतः** मदुक्तश्लोकेषु **एकं श्लोकं त्यक्तवानसि** । तव शोकपरिहर्ता स श्लोकः । (तादृशश्लोकत्यागेन तव शोकः प्रसक्तः । एवं मदुक्तत्यागेन प्रसक्तशोकस्य परिहारकः अहमेव कोविदः भविष्यज्ज्ञानी अन्यः एवं तव उपकारकः नास्तीत्यर्थः ।।४१-१/२।।)

**दक्षिणे कर्णरन्ध्रे च इति ।।** इमं श्लोकं पुनरपि । यथा शुके(कं) भाषाभ्याससमये जनः पुनर्वक्ति; तथा वच्मि ।।४३।। (श्लोकानुपूर्वि च 'दक्षिणे' इत्यारभ्य 'वचांसि नः' इत्यन्तं) **पाकशासनेति ।। यथागमं** आगमनानुसारेण पुनरपि **पाकशासनलोकं** प्रतिगच्छामि ।।४३ १/२।।

**यत्कर्णे कामणिं त्वं हि धृतवानसि ब्राह्मण ।।४४।।**

**तत्कर्णे दक्षिणे स्वच्छं मणिं त्वं धृतवानसि ।**
**पश्य सामर्थ्यमेतन्मे विपरीतं तवाधुना ।।४५।।**

**कर्णस्याभरणं विप्र शृणु मे वचनं त्वहो ।**

(अन्वयः) हे ब्राह्मण! यत्कर्णे त्वं कामणिं हि धृतवान् असि, तत् दक्षिणे कर्णे स्वच्छं मणिं त्वं धृतवानसि । एतत् मे सामर्थ्यं पश्य । अधुना तव कर्णस्य आभरणं विपरीतं (जातं पश्य) । हे विप्र (अतः) मे वचनं तु शृणु । अहो ।

(व्या) 'यत्कर्णे' इत्यादि स्पष्टार्थम् ।।४४-४८।। (हे ब्राह्मण! यत्कर्णे दक्षिणकर्णे पूर्वं कुत्सितरत्नम् अधधः । तस्मिन्नेव कर्णे दक्षिणे इदानीं जीवरत्नोपेतं शुद्धं कर्णाभरणं धृतवानसि । एवं वामकर्णस्थ आभरणं दक्षिणे कर्णे निधाय । दक्षिणकर्णस्थाभरणं वामकर्णे निधाय मम सामर्थ्यं तव प्रदर्शितवानस्मि ।।४५।। तथा च कर्णस्य आभरणम् अधुना विपरीतमभूत् । वामकर्णस्थं दक्षिणे; दक्षिणकर्णस्थं वामे इति । अहो! एवं सामर्थ्यं ज्ञात्वा भक्तियुक्तः सन् मम वचनं शृणु ।।४५१/२।। तद्वचनमाह –

**कुतो दक्षिणमत्कर्णे कामणिः कुणपोत्तम ।।४६।।**

**वामकर्णे धरस्व त्वं कामणिं ब्राह्मणोत्तम ।**
**ममोपदेशकर्णे तु सन्मणिं त्वं तु मा त्यज ।।४७।।**

**अहं शतं सहस्रं वाऽप्ययुतं नियुतं तथा ।**
**लक्षं लक्षणसम्पन्न वक्ष्ये शिक्षन् जनान् क्षणात् ।।४८।।**

(अन्वयः) हे कुणपोत्तम! दक्षिणमत्कर्णे कामणिः कुतः? हे ब्राह्मणोत्तम! त्वं कामणिं तु वामकर्णे धरस्व । त्वं ममोपदेशकर्णे तु सन्मणिं मा त्यज । हे लक्षणसम्पन्न! अहं जनान् क्षणात् शिक्षन् शतं सहस्रं वा लक्षं अयुतम् वा नियुतम् अपि वक्ष्ये ।।

(व्या) (हे कुणपोत्तम! हे बुद्धिमन्! ममोपदेशयोग्यदक्षिणकर्णे कुतः कामणिः? कामणि नोचितः । हे ब्राह्मणोत्तम! कामणिं वामकर्णे धरस्व । सन्मणिं तु दक्षिण-कर्णे । उपदेशाभावात् त्वं सन्मणिं न त्यज । सदा धरस्व ।।४७।। सन्मणियुक्तदक्षिणकर्णे अहं क्षणात् स्वल्पेनैव कालेन, कालं योगबलात् विस्तार्य, हे लक्षणसम्पन्न! इन्द्रपद-योग्यलक्षणयुक्त! शत-सहस्र-अयुतादि सङ्ख्याकान् श्लोकान् वक्ष्ये । किमर्थम्? 'लक्षण-हेत्वोः शतृ' इति हेत्वर्थे शतृ । जनान् क्षणात् व्यर्थकालक्षेपो न कार्यः इति शिक्षन् ।

शिक्षितुं हरिगुरुमहिमानं वच्मि इत्यर्थः । **नियुतं** = दशलक्षकम् ।।४८।।) यस्मिन् समये दक्षिणकर्णे सन्मणिः, तदा अयुतः नियुत लक्षपद्योपदेशश्चेत्, तेषां पद्यानां अनुपलब्धिः कुतः? इति नाशङ्कनीयम् । 'जनस्य योग्यतां दृष्ट्वा हृतवान् विप्रवाक्यतः' इत्युक्तरीत्या तेषाम् अपहृतत्वात् । क्षणमात्रेण दशलक्षोपदेशः कथम्? इति चेन्न । बहुरूपेण तत्कथनसम्भवात् । पद्यशब्दश्रवणाभावात् एकेनैव शब्देन दशलक्षसङ्ख्याकप्रमेयकथनसम्भवात् इति भावः । तच्च प्रमेयं 'शतं नारायणी' इत्यादि । एतदध्यायोपदेशकाले प्रसक्तमणिव्यत्ययरूपं निदर्शनमत्रोक्तम् ।।वि.प्र.सं. ।।प्र.३।।

### १३–०४९–०६०–लक्ष्मीपतिप्रकरणम्

**(व्या) 'ब्राह्मणोऽयम्'** इत्यारभ्य **'तवायुवृद्धिमेष्यति'** इत्यन्तं लक्ष्मीपतिश्रोतृकं चतुर्थं प्रकरणं । पूर्वप्रकरणे –

**अहं शतं सहस्रं वाप्ययुतं नियुतं तथा ।**
**लक्षं लक्षणसम्पन्न वक्ष्ये शिक्षन् जनान् क्षणात् ।।**

इत्युक्त्या सर्वेषां शास्त्राणामुक्तिः अपहरणं चेति न मन्तव्यम् । बहूनां शास्त्राणामनुक्तिश्च इति ज्ञापयितुमाह – **ब्राह्मणोयमिति ।।**

**ब्राह्मणोऽयं न गृह्णाति शास्त्राणि सुमना अपि ।**
**कृणुते चान्नयत्नं च मनुते ऋणमोचने ।।४९।।**

**शृणुते लोकवार्तां च भणते स्वयमप्यहो ।**
**मयोक्तश्लोकसत्पाके शोकविच्छेदकारके ।।५०।।**

**एकं वाऽर्धं च सार्धं वा श्लोकं त्यजति काकधीः ।**
**अतो न वक्ष्ये शास्त्राणि सूक्ष्माणि विविधानि च ।।५१।।**

(अन्वयः) सुमना अपि अयं ब्राह्मणः शास्त्राणि न गृह्णाति । अन्नयत्नं च कृणुते; ऋणमोचने च मनुते । लोकवार्तां च शृणुते; स्वयम् भणते अपि । अहो । काकधीः (अयं विप्रः) शोकविच्छेदकारके मयोक्तश्लोकसत्पाके अर्धं च एकं वा सार्धं वा श्लोकं त्यजति । अतः सूक्ष्माणि विविधानि च शास्त्राणि न वक्ष्ये ।

**(व्या) अयं ब्राह्मणः (सुमना अपि =)** सुमनस्कोपि विविधानि **शास्त्राणि न**

**गृह्णाति** । तत् कुतः? **अन्नार्थम् ऋणमोचनार्थम्** ।।४९।।

**लोकवार्तां** श्रवणे कथने च तदीयसामर्थ्यस्य कुण्ठितत्वात् । (शोकविच्छेदकारणे) **मयोक्तश्लोकसत्पाके** समीचीनः पाकः यस्मिन् सः सत्पाकः । सिक्थसमूहः । मयोक्तश्लोक एव सत्पाकः (तस्मिन्) तत्र कतिपयश्लोकान् **त्यजति** । यथा काकस्य पुरतः । सिक्थेषु निक्षिप्तेषु । कतिपयसिक्थग्रहणम् । कतिपयसिक्थपरित्यागः । तथात्रापीति ज्ञापयितुं – **काकधीरिति ।।** अत्रोक्तान् श्लोकानां साकल्येन ग्रहणाभावात् । (उक्तश्लोकेष्वेव यतः **एकं वा अर्धं वा सार्धं वा त्यजति** । अतः **सूक्ष्माणि विविधानि** अन्यशास्त्राणि न वक्ष्ये) ।।५०।।५१।।

**गह्वरेण सुराणां च स्वराणां तु तथैव च ।**
**ग्रन्थरत्नस्य बाहुळ्यात् साफल्याद्वचनस्य मे ।।५२।।**

**(व्या) 'गह्वरेण** मुखगह्वरेण । सूक्ष्माणि विविधानि शास्त्राणि । न वक्ष्ये । मुखतो न वक्ष्ये ।' इत्यनेन 'प्रकारान्तरेण बहूनामुक्तिरस्ति' इति सूचितं भवति । **स्वराणां गह्वरेण** = गाम्भीर्येण । **ग्रन्थरत्नस्य** च **बाहुल्यात्** । इत्यनेन स्वरादिविविधानि सूक्ष्माणि वक्ष्ये इति सूचितं भवति । मुखतोऽनुक्तौ निमित्तान्तरं चास्तीति सूचयितुं 'सुराणां च' इत्यादिना प्रतिपाद्यानां **सुराणां** बाहुल्यात् । विष्णुगुणानां बाहुल्यात् । विप्रस्य तद्ग्रहणशक्तेरभावात् न वक्ष्ये इति भावः ।।५२।।

**(निषादर्षभगान्धारषड्जमध्यमदैवताः ।**
**पञ्चमश्चेत्यमी सप्ततन्त्री कण्ठोत्थिताः स्वनाः ।।) ... उपात्तानि**

ग्रन्थरत्नस्य गाम्भीर्येण प्रवृत्तत्वात् (गाम्भीर्यं च स्वल्पशब्देन बह्वर्थप्रतिपादकत्वम्) ग्रन्थरत्नस्य **सुराणां स्वराणां** च बाहुल्यात् । प्रतिपाद्यानां देवानां हरेर्गुणानां वा । प्रतिपादकानां निषादऋषभादिगायनस्वराणां तदुत्पन्नरागाणां च च बहुलत्वात् । अथवा इदानीमेव ग्रन्थरत्नस्य बाहुल्यात् २२०० शोकरूपत्वात् । एतदपेक्षया बाहुल्यस्य अनपेक्षितत्वात् । मे वचनस्य साफल्यात् नियमेन सत्यार्थविषयकत्वात् । सूक्ष्मवृत्तान्तं न वक्ष्ये इति योजना[१] ।।५२।।)

---

(१) अथवा गह्वरेण = रहस्येन सुराणां स्वराणां उपदेश्यत्वात् । आ देवता विद्येगळू, गन्धर्व

**अयोग्यजनमोहेन स्वयोग्यगतिमिच्छताम् ।**
**सुजनानां द्विजश्रेष्ठ कुजनान् भजतां तथा ।।५३।।**

**न वक्ष्ये सूक्ष्मवृत्तान्तं ध्वाङ्क्षवृत्तिं च काङ्क्षताम् ।**

**(अन्वयः) हे द्विजश्रेष्ठ! अयोग्यजनमोहेन कुजनानां भजतां तथा ध्वाङ्क्षवृत्तिं काङ्क्षतां स्वयोग्यगतिमिच्छतां सुजनानां सूक्ष्मवृत्तान्तं न वक्ष्ये ।।**

**(व्या)** (किञ्च कांश्चन अधिकारिणोऽपि उद्दिश्य अहं सूक्ष्मवृत्तान्तं उपदेष्टुं नोत्सहे इति तान् विवृणोति) **अयोग्यजनमोहेन** अयोग्यजनकृतेन मोहेन (अयोग्यजनेषु कृतेनातिस्नेहेन) ('स्वयोग्यगतिमिच्छतां = स्वेषां उत्तमगतिः स्यादिति भ्रान्त्या प्रतिपन्नानां । वस्तुतस्तु सु+अयोग्यगतिमिच्छतां कुम्भीपाकादिनरकलोकं प्रतिदुर्मार्गे अज्ञानेन गच्छताम् । धर्मज्ञानशून्यानां अत एव । - एन्दिष्टन्नु ओदिकोळ्ळबेकु.) **कुजनान्** दुर्जनान् **भजताम्** । **ध्वाङ्क्षवृत्तिं** काकवृत्तिं **काङ्क्षतां** सुजनानामपि **सूक्ष्मवृत्तान्तं न वक्ष्ये**(१) ।।५३।। मे मम वचनस्य साफल्यात्, दुःसङ्गिनां सूक्ष्मवृत्तान्तकथने वैफल्यं न सम्पादनीयम्(२) । तस्मान्न वक्ष्ये इति भावः । सूक्ष्मवृत्तान्तं न वक्ष्ये इत्यनेन स्थूलवृत्तान्तकथनमस्तीत्युक्तं भवति ।।५३ १।२ ।।

**गेहं गत्वा स्वदेहं वा गूहयित्वा महद्भयात् ।।५४।।**

**तेऽपि सूनृतवाक्यं चेद्वदन्ति कुजना अपि ।**
**हृष्टा पुष्टा भवन्त्यद्धा मनसा देहतस्तथा ।।५५।।**

**परुषं चेद्वदन्त्येते कलुषीकृतबुद्धयः ।**

---

शास्त्रादिगळू मन्त्रगळू उपदेश्यवागिद्दरिन्द, वैष्णवजनरिगेल्ला प्रचाररूपवागि उक्तवाद ई ग्रन्थदल्लि सूक्ष्मवृत्तान्तवन्नु हेळुवुदिल्ल एन्दु योजना

(१) (कागे पिण्डवादरू सरि अदु पवित्रान्नवे अपवित्रान्नवे एन्दु विचारमाडदे तिन्नुवन्ते, एन्तह अपवित्रान्नवादरू सरिये दुर्जनर जोतेयल्लि भक्षणमाडुत्तिरुव भ्रान्त सुजनरिगू सूक्ष्मोपदेश माडुवुदिल्ल एन्दर्थ)

(२) (उपदेश फलिसदिद्दरे एन्दरे ग्रन्थपारायणादिगळन्नु माडियू फलबरदिद्दरे ग्रन्थक्के अगौरव बरुत्ते. ओदुववनु अनधिकारियागिद्दरे हागे वैफल्य बरुत्ते. अधिकारिगे फल बन्दे बरुत्ते)

**अहमेतादृशान् वक्ष्ये जनान्न प्रति पुत्रक ॥५६॥**

**(अन्वयः) (सुजनानां) गेहं (प्रति) गत्वा, महत् भयात् स्वदेहं (मनोभावं) गूहयित्वा, सूनृतवाक्यं वदन्ति चेत्, ते कुजना अपि, मनसा, देहतः च अद्धा हृष्टाः पुष्टाः भवन्ति । कलुषीकृतबुद्धयः चेत् एते परुषं वदन्ति । एतादृशान् जनान् प्रति हे पुत्रक! अहं न वक्ष्ये ।**

**(व्या)** सोपाधिकभजनस्यापि किञ्चित्फलमस्तीति ज्ञापयितुमाह – **गेहं गत्वा इति ॥** सुजनानां गेहंप्रति गत्वा । (कुजनाः) भयात् स्वदेहं गूहयित्वा । सूनृतवाक्यम् 'ऋजुस्थं पुण्यकृन्नरः' इत्यादिवाक्यं वदन्ति चेत् । **ते कुजना अपि** मनसा देहतश्च हृष्टाः पुष्टाः भवन्ति । परुषं वदन्ति चेत् । (गुरुराजऋजुत्वे किं मानम्? ऋजुत्वम् अप्रामाणिकम्? इत्यादिरीत्या कथ्यन्ते चेत्) ते (कुजनाः) कलुषीकृतबुद्धयो भविष्यन्ति । तस्मात् **एतादृशान् दुर्जनान्** प्रति सुजनानां सूक्ष्मवृत्तान्तं तैः कर्तव्यानि सूक्ष्माणि साधनानि फलानि च **न वक्ष्ये** ॥ (श्लोक ५४॥५५॥५६॥)

('गेहं गत्वा' इत्यादि श्लोकानां योजनं प्रकारान्तरेण कार्यम् इति भाति – यथा हि – मिथ्याज्ञानग्रस्तसज्जनाः । यथा दुर्जनान् भजन्ति । तत्प्रकारं वर्णयति – **गेहं गत्वा इति ॥** 'अयोग्यानां गृहं गत्वा जरासन्धादिवद् विद्यमाननीचराज्ञां सेवया सन्तुष्टान्, मोहग्रस्तमुक्तियोग्यजनानपि नोपदिश्यामि' इत्यर्थः । अनेन धर्मनाशकअधिकारिजनेषु सेवार्थं नियुक्तसज्जनाः तादृशवर्णाश्रमनाशकमूर्खेषु न स्नेहं कुर्यादिति सूचितं भवति ॥ (कुजन-कर्तृककेवलसोपाधिकभजनमपि किञ्चित्फलकारि इत्यत्र प्रमाणं मृग्यम्) । प्रत्युत ''अभक्त्यु-दाहृतं नामनैव फलदातृभविष्यति'' इत्यादि विरुद्धवचनानि सन्ति । तथापि स्वजनभ्रमया मुक्तियोग्यत्वभ्रमया वा दुर्जनोपदेशकानां पण्डितानां सूक्ष्मोपदेशं न करोमीत्यर्थः प्रामाणिकः अयोग्योपदेशं कुर्वतां पुण्यहानिः भक्तिह्रासश्च भविष्यति ॥)

**(व्या)** (तर्हि सूक्ष्मविद्याप्रचाराभावे योग्यानामपि एतद्ग्रन्थेन मोक्षमार्गः न प्रकाशते एव इत्यत आह) ...

**तस्मादलं तावतैव यावदीश्वरप्रेरितम् ।**
**कारितं चेतनेदं तु तारितं भवसागरात् ॥५७॥**

**मारितुं दैत्यकूटं च पारतन्त्र्याद्द्विरूपतः ।**
**इदं वृन्दावनाख्यानं ये न शृण्वन्ति मानवाः ।**
**दानवानां गतिं प्राप्य श्वानजन्मानि यान्तु ते ।।५८।।**

**(अन्वयः) तस्मात् यावत् ईश्वरप्रेरितं तावत् एव अलम् । हे चेतन! इदं तु भवसागरात् तारितं, पारतन्त्र्यात् द्विरूपतः दैत्यकूटं मारितुं च कारितम् । ये मानवाः इदं वृन्दावनाख्यानं न शृण्वन्ति ते दानवानां गतिं प्राप्य श्वानजन्मानि यान्तु ।**

**(व्या) ईश्वरेण यावत् प्रेरितम्** । यावत् कारितम् । **तावतैवालम्** ।। (तावतापि हे चेतन! इदं तु कारितं हरिणां किं तत्) सज्जनानां कूटं **भवसागरात् तारितम्** ।।५७।। **दैत्यकूटं च मारितम्** । प्राप्ततमः साधनं जातम् । "यथा उपाधिवशेन मनसादेहतः हृष्टपुष्टत्वमुक्तम् । तथैव पारतन्त्र्यदिना । आख्यानश्रवणाभावे सुजनानामपि अनिष्टं भविष्यति" इति भावेनाह – **पारतन्त्र्यदिति ।।** अभ्यस्तदुःशास्त्रत्वात् । 'तन्त्रं शास्त्रम्' इत्युक्तेः । पराधीनत्वाद् वा । द्विरूपतः सुखदुःखोभयस्वरूपतो वा ।।५८।।

(अयं भावः – सूक्ष्मवृत्तान्तस्य अकथनेपि । एतावद्ग्रन्थमात्रेण देवकार्यं साधितम् । सज्जनवर्गः मुक्तियोग्यजनेषु त्यक्ताभिमानः कृतः स्वयोग्यगुरुद्वारा मध्वशास्त्र, गुरुराजकृत युक्तिमल्लिकादिषु निष्ठायुक्तः कृतः । द्विरूपतः बहिः राजभृत्यरूपेण । अन्तःपुरुषछायावत् नियामकनियम्यरूपेणेति उभयविधपारतन्त्र्यज्ञानस्फूर्तियुक्तः कृतः । स्वयोग्यकर्मश्रवण-रूपध्यानादिषु आसक्तः कृतः । आख्यानग्रन्थद्वारा एवं सज्जनवर्गः उद्धृतः । दुर्जनवर्गस्तु गुरोरवतारस्य रहस्यत्वात् अत्र रहस्याकथनेन स्वस्वभावेन एतद्ग्रन्थस्य उदासीनतां प्राप्य । अत एव अनृतवादिराजसेवः । अजातवादिराजऋजुत्वज्ञानः कृतः । तथा च पारतन्त्र्यात् तैः परशास्त्राभ्यासेन पाश्चात्यादिपरजनपरगुरुसेवासक्त्या च । द्विरूपतः = द्वितीयरूपतः = वस्तुयाथार्थ्यात् द्वितीयभूतस्य मिथ्याज्ञानस्वरूपतः भ्रान्तिस्वरूपत्वाच्च इति वा । आख्याने संशयादिकं प्राप्य च । कृततमःसाधनः भविष्यति । कुटिलस्वभावेन असत्यनिष्ठया । द्विरूपेण विद्यमानहरिपारतन्त्र्यं अविश्वस्य परित्यज्य कृततमःसाधनः भविष्यतीति वा । तस्मात् मन्त्ररूपग्रन्थे स्थूलमहिमायुक्ते यदि सज्जनवर्गः उदास्ते अवकाशे प्राप्तेपि यदि न शृणोति; तर्हि यथा दानवाः तथा । अथवा दानवानां भृत्यमित्यत्र बान्धवा भूत्वा ।

अयोग्येषु वृद्धाभिमानेन दानवरीत्या जन्मनीत्वा () योग्यजनद्वेषेण श्वानजन्मानि यान्ति इति भावः ।।)

**लक्ष्मीपते मम कृतिं नितरां सुतस्य**
**सीतापतेश्च कृतकृत्यगतेः प्रयत्नात् ।**
**नित्यं तु तत्र गत एव च त्वं तु हित्वा**
**कृत्यं तवापि पतितानपि पावयन्तीम् ।।५९।।**

**श्रावयाज्ञां मया दत्तां धृत्वा शिरसि पालय ।**
**अवामि त्वां सदा यत्नात् तवायुर्वृद्धिमेष्यति ।।६०।।**

**(अन्वयः) हे लक्ष्मीपते! मम सुतस्य कृतकृत्यगतेः, तस्य सीतापतेः च प्रयत्नात्, तत्र च (वादिराजाख्यसमीपे) गत एव (गत्वा) तव अपि नित्यं कृत्यं हित्वा, मया दत्ताम् आज्ञां शिरसि धृत्वा, पतितान् पावयन्तीं मम कृतिं त्वं नितरां श्रावय । (मयोक्तं कृतं चेत्, अहं) त्वां सदा अवामि । तव यत्नात् आयुः वृद्धिम् एष्यति ।।**

**(व्या)** एवं प्रासङ्गिकमुक्त्वा, **लक्ष्मीपते** मम सुतस्य वृन्दावनाचार्यस्य, **कृतकृत्यगतेः** कृतं कृत्यं यया गत्या गमनेन सा तथोक्ता । तादृशी गतिर्यस्य स तथा । तस्य सीतापतेः प्रयत्नाच्च । तत्र वादिराजाख्यसमीपे गत्वा । **तव कृत्यं** गृहकृत्यं वापि हित्वा, **पतितानपि पालयन्तीं** मदाज्ञां **शिरसि धृत्वा ।** मम कृतिं **श्रावय ।** नित्यमिति गृहकृत्यस्य विशेषणः ।।(५९-१/२।।) मयोक्तं कृतं चेत् **अहं त्वाम् अवामि** । **तव यत्नात्** वादिराजाख्यस्य **आयुर्वृद्धिमेष्यति** । कदाचिल्लक्ष्मीपतिः सोदापुरं प्रति गतः । तस्मिन् समये विप्रस्य वादिराजाख्यस्य च प्रयत्नात् सीतापतिरपि सोदापुरं प्रति गतः । सीतापतेः प्रयत्नेन लक्ष्मी-पतिः वादिराजाख्यसमीपं प्रति गतः । तत्रैतां कृतिमुक्तवान् । इत्येतन्निदर्शनमत्रोक्तम् । (ई कथेयेनु एम्बुदन्नु श्रीगळवरल्लि केळबेकु). ।। इति ल.प.श्रो.समाप्तः ।।

### १३–०६१–०६५–बहुभक्तश्रोतृकप्रकरणम्

**(व्या)** 'हे दासाः' इत्यारभ्य 'निःसङ्गा यान्तु मद्गतिम्' इत्यन्तं बहुभक्तश्रोतृक-प्रकरणम् । कुजनान् भजतां सुजनानामपि सूक्ष्मवृत्तान्तं न वक्ष्ये इति भावेनाह – **हे दासाः**

इति ।।

**हे दासाः सन्ति लोके च के दासास्तु भवादृशाः ।**
**को दासत्वमवापेह खेदात् सर्वे पुनर्गताः ।।६१।।**

**मम सङ्गीतलोलाश्च मद्भक्त्या च सुनिर्मलाः ।**
**भवतां कमलादेवी गेहे तिष्ठतु लालिता ।।६२।।**

(अन्वयः) हे दासाः! लोके तु भवादृशाः के दासाः सन्ति? इह कः दासत्वम् अवाप? खेदात् सर्वे पुनर्गताः । (यूयं तु) मम सङ्गीतलोलाः मद्भक्त्या च सुनिर्मलाः; भवतां गेहे लालिता कमलादेवी तिष्ठतु ।

(व्या) **हे दासाः** शेषादयः दासाः । अस्मिन् **लोके** बहवः मम **दासाः सन्ति** । तेषु **भवादृशाः** तु **के दासाः?** न केपि । **इह** वृन्दावनाख्यानार्थज्ञाने । तत्कथने च । **कः दासत्वमवाप?** । न कोपि । **खेदात्** = आख्यानार्थापरिज्ञानजन्यखेदात् । पुनः आख्यान-मनवलोक्य तूष्णीङ्गताः ।।६१।। यूयं तु **मम सङ्गीतलोलाः** (स्वप्ने अनेकरागैः) सम्यग्गीते लोलाः । **मद्भक्ताः** निवृत्तकुजनभजनादिमलाः । बादरायणप्रिया **कमलादेवी** । मद्भागभिमानिनी भवद्भिः **लालिता । भवतां गेहे तिष्ठतु** ।।६२।।

**यूयं वृन्दावनाख्याने ममाख्यानपरान् बहून् ।**
**श्लोकान् सङ्गीतसंस्थान् वै ह्यङ्गीकुर्वध्वमञ्जसा ।।६३।।**

**इदमेव महत्कार्यं भवतां मम पूजनम् ।**
**इदमेव महाप्रीतिसाधनं भवतां मतम् ।।६४।।**

**भवद्भिस्तु सुसङ्गीतं मां च शृङ्गाररूपिणम् ।**
**श्रुत्वाऽङ्गा अपि सर्वेऽपि निस्सङ्गा यान्तु मद्गतिम् ।।६५।।**

(अन्वयः) यूयं वृन्दावनाख्याने ममाख्यानपरान् सङ्गीतसंस्थान् बहून् श्लोकान् वै अञ्जसा अङ्गीकुर्वन्तु हि । भवताम् इदं मम पूजनम् एव भवतां महत्कार्यम् । भवताम् इदम् एव महाप्रीतिसाधनं मतम् । भवद्भिः सुसङ्गीतं शृङ्गाररूपिणं मां च श्रुत्वा, अङ्गा अपि सर्वे निस्सङ्गाः (सन्तः) मद्गतिम् अपि यान्तु ।

**(व्या) यूयं मम वृन्दावनाख्याने ममाख्यानपरान्** वैभवकथनपरान् । बहु **श्लोकान्** भवद्विषयांश्च कतिपयश्लोकान् । **अञ्जसा अङ्गीकुर्वध्वम्** ।।६३।।

सूक्ष्मवृत्तान्तकथनाभावेपि अस्मिन् काले कृतिपठनं, तदर्थज्ञानं, तत्कथनमेव **भवतां महत्कार्यम् । इदमेव मम पूजनम्** । इदमेव मत्प्रसादसाधनम् ।।६४।। **भवद्भिः** सम्यग्गीतम् । 'मेने रतिः स्वभर्तारं कामार्ता रूपसम्पदा' इत्याद्युक्तरीत्या **शृङ्गाररूपिणं मां श्रुत्वा,** परिवारभूतापि, **सर्वे निःसङ्गाः सन्तः मद्गतिं यान्तु** । अनेन कालदोषेण दुष्टान्नोपभोगेन दुष्टानां संसर्गेण च । सुजनानां गुणोपसंहारादिसाधनसूक्ष्मवृत्तान्तस्य स्पष्टोक्त्यभावेऽपि । कृतिपठनादिसाधनस्य कर्तव्यता कथनेन युक्तं तेषामत्राधिकारित्वम् इत्येतन्निदर्शनमस्मिन्प्रकरणे प्रतिपादितं भवति ।।६५।। ब.भ.प्र.सं।।

### १३–०६६–०७०–विप्रप्रकरणम्

**(व्या)** 'हे ब्राह्मण' इत्यारभ्य 'पालकोऽहं सदा तव' इत्यन्तं विप्रश्रोतृक षष्ठं प्रकरणम् । (आख्यानार्थज्ञानमेवान्नमित्याह –)

**हे ब्राह्मण त्वं कुरु चान्नयत्नं मद्वाक्यरत्नं शृणुते न कोऽपि ।**
**अनादरान्मद्वचनं सुतोऽपि तृणोपमं तत्कृतवानहो मे ।।६६।।**

**मत्सुतानादरं दृष्ट्वा सर्वे कुर्वन्त्यनादरम् ।**
**अतो निराशस्त्वं विप्र भवराशिं तरस्व ह ।।६७।।**

**(अन्वयः) हे ब्राह्मण! त्वं च अन्नयत्नं कुरु । मद्वाक्यरत्नं न कोऽपि शृणुते । मे सुतः अपि तत् मद्वचनं अनादरात् तृणोपमं कृतवान् । मत्सुत (वादिराजाख्यभट्टस्य) अनादरं दृष्ट्वा, सर्वे अनादरं कुर्वन्ति । अतः (यद्यपि त्वं) निराशः त्वं (अन्नप्रयत्नतः) भवराशिं तरस्व । ह ।**

**(व्या)** आख्यानार्थज्ञानादिकं महाप्रीतिसाधनमित्युक्तं पूर्वप्रकरणे । तादृशमिदमाख्यानरूपं **मद्वाक्यरत्नम्** । कतिपयकालपर्यन्तं **कोपि न शृणुते** । तत्कुतः? **(अनादरात्)** आदराभावात् । वादिराजाख्यः पुत्रोपमोपि **मद्वाक्यरत्नं तृणोपमं कृतवान्** । तदा मया किं कर्तव्यम् इति चेत्, त्वं (तेषां) **अन्नयत्नं कुरु** । **निराशः** (अशनरहितः) अन्नभोजनेच्छारहितः **त्वम्** । अतः (अन्येषां) अन्नप्रयत्नतः **भवराशिं** जन्मसमुदायात्मकं संसारवाराशिं **तरस्व**

।।६७।।

(व्या) अन्नयत्नात् भवसागरतरणं कथम्? इत्यत आह – कुटुम्बेति ।।

**कुटुम्बभरणार्थं च मरणार्तिसमं त्यज ।**
**करणं चातियत्नस्य शरणं व्रज मां मुनिम् ।।६८।।**

(अन्वयः) कुटुम्बभरणार्थम् अतियत्नस्य मरणार्तिसमं करणं त्यज; मुनिं मां च शरणं व्रज ।

(व्या) कुटुम्बसंरक्षणफलकं (तण्डुलोपादानकं) अन्नं 'कुरु चान्नयत्नं' इत्यत्रोक्तेन अन्नशब्देन न ग्राह्यम् । तदन्नशब्देन त्वया गृहीतं तत् त्याज्यम् । 'यादृशान्नप्रयत्नेन वादिराजाख्यादिः एतदाख्यानवाक्यरत्नं शृणुते तादृशान्नयत्नं कुरु' इति 'कुरु चान्नयत्नम्' इत्यनेनोक्तम् इति तदभिप्रायः सूचितो भवति । अन्नं चात्र आख्यानार्थज्ञानरूपमन्नं विवक्षितम् । अत एव तस्य भवसमुद्रतारकत्वं युक्तम् । अतियत्नस्य करणं मरणार्तिसमं त्यज । अर्थज्ञानसाधनमाह – शरणं व्रजेति ।।६८।।

**यावदीश्वरदत्तं वै तावतैव सुखीभव ।**
**माऽवतास्त्वं सदा विप्र तावकस्य वचः शृणु ।।६९।।**

**मद्वाक्यरत्नमाशु त्वं धर कालान्तरे मम ।**
**आलयं यास्यसे विप्र पालकोऽहं सदा तव ।।७०।।**

(अन्वयः) यावत् ईश्वरदत्तं वै तावता एव सुखी भव । हे विप्र! मावताः; तावकस्य वचः सदा श्रुणु । कालान्तरे त्वं मद्वाक्यरत्नम् आशु धर; मम आलयं यास्यसे; हे विप्र! अहं सदा तव पालकः ।।

(व्या) यस्मिन् काले यावदर्थज्ञानरूपमन्नम् ईश्वरेण दत्तं, तस्मिन् काले तावतैव सुखी भव । त्वं स्वप्रयत्नेन मावताः = 'स्वकीयगुणदोषादिकं मा च्छादये'ति भावः । तावकस्य व्यासादेः (शेषसीतापत्यादेः) वचः = एतदाख्यानार्थबोधकं वचः शृणु ।।६९।।

तेन कालान्तरे त्वम् आशु मद्वाक्यरत्नं धर = तदर्थं जानीहि । ततः परम् । मम आलयं मदीयं श्रीकृष्णस्य पूजास्थानं यास्यसे । सदा अहं तव पालकः । अनेन

कतिपयकालेष्वाख्यानार्थज्ञानाभावेन वादिराजाख्यादेः उपेक्षा । तया बहूनामप्युपेक्षा । विप्रकृतज्ञानान्नप्रयत्नेन लक्ष्मीपत्यादेरुक्तिश्रवणरूपे च । वादिराजाख्यस्य तदीयानां बहूनां ज्ञानलाभो भविष्यतीत्येतन्निदर्शनमस्मिन् प्रकरणे प्रतिपादितम् ।।७०।। वि.श्रो.प्र.सं. ।।

### १३–०७१–०७८–वादिराजाख्यप्रकरणम्

(व्या) 'वृद्धे बुद्धिमताम्' इत्यारभ्य 'तवायुर्वृद्धिमेष्यति' इत्यन्तं वादिराजाख्य-श्रोतृकप्रकरणं सप्तमम् । 'आलयं यास्यसे विप्र' इत्यनेन पूर्वप्रकरणे पर्यायोत्सवसमये (विप्रेण) श्रीकृष्णालयप्रवेशः सूचितः । तस्मिन् काले वादिराजाख्येन कर्तव्यमाह वृद्धेति ।।

**वृद्धे बुद्धिमतां बुद्धे श्रद्धाबद्धे दयां कुरु ।**
**कारुण्यं कुरु चारण्यं न वस त्वं मुनीश्वर ।।७१।।**

**(अन्वयः) हे मुनीश्वर! त्वं बुद्धिमतां (मध्ये) बुद्धे श्रद्धाबद्धे वृद्धे दयां कुरु । हे करुणार्णव! कारुण्यं च कुरु । अरण्यं न वस ।**

(व्या) गुणवृद्धे विप्रे दयां कुरु[१] । बुद्धिमतां शेषादीनां मध्ये बुद्धे त्वां प्रति-वक्तव्यार्थज्ञातरि लक्ष्मीपतौ कारुण्यं कुरु । अरण्यं[२] न वस = कान्ताराख्यग्रामे न वस । त्वं । 'हे मुनीश्वर' इति तत्र वासत्यागकारणमुक्तं[३] भवति ।।७१।।

**ब्राह्मणे मत्पदं प्राप्ते शरणं करुणार्णव ।**
**स्वस्थचित्तो भवत्वद्य मत्कृतिं सततं वदेत् ।।७२।।**

**सतां च शृण्वतां नित्यं सत्यं कुरु मयोदितम् ।**
**पुत्र मा कुरु लोभं त्वं सत्रकालोऽयमञ्जसा ।।७३।।**

**कुत्र लोभो न निन्दार्हः पात्रपालो भवाशु च ।**

**(अन्वयः) शरणं मत्पदे प्राप्ते ब्राह्मणे स्वस्थचित्तः भवतु । अद्य शृण्वतां सतां च**

---

(१) (श्रद्धाबद्धे एम्ब विशेषण विप्रे एम्बुदक्कू लक्ष्मीपतौ एम्बुदक्कू अन्वयिसुत्ते. **कृष्णपूजायां श्रद्धाबद्धे विप्रे दयां कुरु । आख्यानार्थोपदेशे श्रद्धाबद्धे लक्ष्मीपतौ च कारुण्यं कुरु** एन्दर्थ)

(२) (अब्जारण्य एम्ब ऊरु शीरूरुमठक्के सेरिद्दु एन्दु हेळलागुवुदिल्ल. वादिराजाख्यरु शीरूरुमठदवरल्ल)

(३) (आ ग्रामक्के होदरे यतिधर्मनाशद प्रसक्ति उंटागुत्तदेन्दु सूचितार्थ)

**सततं मत्कृतिं वदेत् । मया उदितं सत्यं कुरु । हे पुत्र! अयम् अञ्जसा सत्रकालः; त्वं लोभं मा कुरु । लोभः कुत्र न निन्दार्हः? (तस्मात्) आशु पात्रपालः भव ।।**

**(व्या) (हे करुणार्णव) ब्राह्मणे मत्पदं** मदास्पदं **शरणं** कृष्णसदनं **प्राप्ते** सति त्वत्सहायेन **स्वस्थचित्तो भवतु** । **(सतां? =)** सज्जनानां शेषादीनां **शृण्वतां सतां मत्कृतिं सततं वदेत्** ।।७२।।

मयोदितम् अरण्यवासत्यागादिरूपं कार्यं **सत्यं कुरु** । 'वादिराजाख्येन दातव्यदान-प्रतिबन्धकत्वात् लोभः परित्याज्यः' इति भावेनाह – **पुत्रेति ।। हे पुत्र!** वादिराजाख्य! **अयं अञ्जसा सत्रकालः** पर्यायोत्सवादि यज्ञकालः । अस्मिन् काले त्वया लोभो न कर्तव्यः ।।७३।। अत्र लोभो न दोषः । तत्प्रतिनिधिकार्यान्तरस्य[१] मन्मूलत्वादिति मतिं वारयितुमाह – **कुत्रेति ।।** त्वयि (त्वया) कृतकार्ये । तथा अकृतकार्ये वा **लोभः कुत्र न निन्दार्हः** । सर्वत्र निन्दार्ह एव । तस्मात् **त्वं पात्रपालो**(लोभो) (पात्रलोभो भव एन्दु पाठान्तर) सत्पात्रं प्रति परिपालको **भव** । (सत्पात्रप्रतिपालको भव) अत्र लोभे कृते । सुपात्रत्वज्ञानेन यदुपकृतं तद्व्यर्थं स्यादिति भावः ।

**त्वन्मनःस्थमहं वक्ष्ये मन्मनःस्थं त्वदग्रतः ।।७४।।**

**शृणु ब्राह्मणमुद्दिश्य दातव्यं किञ्चन त्वया ।**
**त्वन्मनःस्थमहं वक्ष्ये शृणुष्वैकमनाः सुत ।।७५।।**

**परेण दापयिष्यामि नाहं दास्यामि सर्वथा ।**
**इदं त्वद्धृदयं विद्धि मम यद्धृदिसंस्थितम् ।।७६।।**

**(अन्वयः) अहं त्वन्मनःस्थं मन्मनःस्थं त्वदग्रतः वक्ष्ये । शृणु । त्वया ब्राह्मणम् उद्दिश्य किञ्चन दातव्यम् । हे सुत! अहं त्वन्मनःस्थं वक्ष्ये; एकमनाः शृणुष्व । 'परेण दापयिष्यामि सर्वथा अहं न दास्यामि' इति यत् त्वत् हृदयं मम हृदिसंस्थितं विद्धि ।।**

**(व्या)** त्वन्मनसि चिन्तितं मया न ज्ञातमिति न मन्तव्यमिति भावेनाह –

---

(१) (तत्प्रतिनिधि एम्बुदु तप्पु. दानप्रतिनिधि एन्दिरबेकु; अथवा लोभाभावप्रतिनिधि एन्दादरू बेकु.)

त्वन्मनःस्थमिति ।। त्वन्मनःस्थं यत् तत् मन्मनःस्थं मया ज्ञातं तत् त्वदग्रतः त्वत्पुरतः वक्ष्ये । तत् श्रुणु ।।७४।।

त्वया किञ्चित् प्राग्गृहीतं दातव्यम् अस्ति । तस्मिन् विषये यत् ब्राह्मणमुद्दिश्य 'परेण दापनीयं गृहादिकं तद्दापयिष्ये । यन्मया दातव्यं तत्सर्वथा न दास्ये' इदं त्वद्धृदयं तन्मनोगतं जानीहि । यत् मन्मनोगतं तत् श्रुणु ।।७६।।

**वृन्दावनकृतिं वक्तुं मन्दाशनमिदं कुतः ।**
**त्वं दानं कुरु किञ्चिद्वा मन्दानामपि तद्वद ।।७७।।**

**(अन्वयः) वृन्दावनकृतिं वक्तुम् इदं मन्दाशनम्; कुतः? त्वं किञ्चिद् दानं कुरु? तत् मन्दानाम् अपि वा वद ।**

(व्या) मत्कृतां वृन्दावनकृतिं वक्तुं । इदं । त्वया परेण दापयितुं योग्यत्वेन चिन्तितं मन्दाशनम् अत्यल्पं कुतः (कथम्)? तदनुरूपं भवेत् 'सप्तद्वीपवतीमहीप्रदानमपि एकाक्षरप्रदानस्य कलां नार्हति' इत्युक्तेः । तस्माद् दापितसाम्यबुद्ध्या दातव्यं न देयमिति न चिन्तनीयम् । शक्त्यभावे तु त्वया किञ्चिद्दातव्यम् । मन्दानां यद्वक्तव्यं तदपि वक्तव्यम् ।।७७।।

**इदं हृदिस्थं सद्बुद्धे कुरु चाद्धा बुधेरितम् ।**
**क्रोधं मा कुरु वृद्धे त्वं तवायुर्वृद्धिमेष्यति ।।७८।।**

**(अन्वयः) हे सद्बुद्धे! इदं कुरु; बुधेरितं (इति मत्वा) हृदिस्थं कुरु । त्वं वृद्धे क्रोधं मा कुरु । तव आयुः वृद्धिम् एष्यति ।।**

(व्या) इदं मन्मनोगतं (हे सद्बुद्धे! तव हृदिस्थं कुरु । अद्धा बुधेरितं = करुणया सर्वज्ञेन गुरुणा उक्तमिति ज्ञात्वा कुरु) । विप्रोक्तमिति मत्वा क्रोधं मा कुरु । एवं चेत् तवायुः वृद्धिं प्राप्नोति । ''अरण्य(ग्राम)वासेन यत्याश्रमधर्मविरोधः, ग्रामवासपरित्यागे तु अभिमतसाधनाभिवृद्धिः; दातव्याप्रदानचिन्तया इष्टसाधनस्य न्यूनता, तत्प्रदाने । सुकृतपरिपालनं चेति निदर्शनद्वयम् अत्रोदितं ज्ञातव्यम् ।। वादि.प्र.सं.।।

**१३–०७९–विप्रप्रकरणम्**

(व्या) 'विप्र' इत्येकं पद्यं विप्रश्रोतृकप्रकरणम् । पूर्वप्रकरणेनोक्तेन मित्रमनोगतत्वेन दातव्यदानप्रतिबन्धकलोभेन एवमादिप्राप्तव्या प्राप्तौ, कथं पर्यायोत्सवादिकं भविष्यतीति चिन्ता न कार्या इति भावेनाह – विप्रेति ।।

**विप्र ते मत्सुतेनैव दापयिष्येऽन्नमुत्तमम् ।**
**तदन्तःप्रेरयित्वाऽहं मदन्तर्यामितां स्मर ।।७९।।**

**(अन्वयः) हे विप्र! ते उत्तमम् अन्नं मत्सुतेन एव अहं तत् अन्तःप्रेरयित्वा दापयिष्ये । मत् अन्तर्यामितां स्मर ।**

(व्या) मत्सुतेन = केनचिद्भक्तेन उत्तममन्नं दापयिष्ये । कथम् अदृश्यस्य दापयितृत्वम्? इत्यत आह – तदन्तरिति ।। (अहं तद्भक्तमनसि स्थित्वा तं प्रेरयित्वा दापयिष्ये) तत्र साधनमाह – मदन्तर्यामितामिति ।। (त्वं मम अन्तर्यामित्वमाहात्म्यं स्मर भक्त्या) पर्यायोत्सवसमये केनचिद्भक्तेन अभिमतधनप्राप्तिर्भविष्यतीति निदर्शनमत्रोक्तम् ।।विप्र.प्र.सं. ।।

### १३–०८०–०८७–वादिराजभट्टप्रकरणम्

(व्या) 'मन्नामधार' इत्यारभ्य 'तनौ य(त)था' इत्यन्तं वादिराजाख्यश्रोतृकप्रकरणं नवमम् । 'बुद्धिमतां बुद्धे कारुण्यं कुरु' इत्युक्तम्, न केवलं कारुण्यं कर्तव्यम्; किन्तु तस्मिन् पुरुषे क्षमा च कर्तव्या । त्वद्धितार्थं मदुक्तदोषवक्तृत्वेपि द्वेषो न कार्यः इति भावेनाह – मन्नामधारेति ।।

**मन्नामधार कृशदारधराऽसुताप्य**
**हे धीर पूर्वगिरमौरसपुत्रकेऽपि ।**
**माता पिता न वदतस्त्वपरे कुतो नु**
**तत्क्षम्यतां शुभमतिं भज मत्कृतिं च ।।८०।।**

**(अन्वयः) हे मन्नामधार! कृशदारधर! धीर! औरसपुत्रके अपि पूर्वगिरं माता पिता न वदतः, अपरे कुतः नु? हे आसुताप्य! तत्क्षम्यतां शुभमतिं मत्कृतिं च भज ।**

(व्या) हे कृशदारधर । कृशानां धनतः ज्ञानतः बलतश्च कृशानां पुरुषाणां ये दाराः

भार्याः; तद्धर तत्पालक **मन्नामधार** वादिराजाख्य, पूर्वं कृशधारेति पूर्वमुक्तां गिरं च (**औरसपुत्रकेऽपि** साक्षात् स्वपुत्रं प्रत्यपि) मातापिता न वदतः, **अपरे** अन्ये । कुतो वदन्ति? एवं स्थितेपि कश्चिद्वक्ति । (अहमपि वदामीति भावः) । **(हे धीर) तत्-क्षाम्यताम्** (तत्क्षाम्यतां इति अनुनयोक्तिः) । **हे आसुताग्र्य** । **सु** सुपुत्रवर्य । तदुक्त्या **शुभमतिं मत्कृतिं च भज** । (तादृशअवाच्यदोषस्यापि मया उक्तत्वात् । मदुपदेशपालनार्थं शुभबुद्धिं भज इत्यर्थः) ।।८०।।

**कृते चानादरे लोके मत्कृतौ च त्वयाप्यहो ।**
**अनादरं तु सर्वेऽपि कुर्वन्त्येव न संशयः ।।८१।।**

**(अन्वयः) त्वया अपि लोके मत्कृतौ च अनादरे कृते, सर्वे अपि तु अनादरं कुर्वन्ति एव । अहो! अत्र न संशयः ।**

**(व्या)** 'मत्सुतानादरं दृष्ट्वा सर्वे कुर्वन्त्यनादरम्' इति यत्पूर्वमुक्तं तदत्र वादिराजाख्येनापि ज्ञातव्यमिति भावेनाह – **कृते चेति ।।** (नायकभूतस्य त्वया अपि मत्कृतौ अनादरे कृते सति । लोके सर्वेपि अनादरमेव कुर्वन्त्येव । न संशयः) ।।८१।।

**अतो मया यदुक्तं तु परोक्तमिव नो भवेत् ।**
**भवमन्नामधाराग्र्य तावकोऽहं न संशयः ।।८२।।**

**तस्मात्कृतिं मम त्वत्र पुत्रवत्पठ पाठक ।**
**काठकस्य यथा पाठं कुर्वन्ति ऋषयः सदा ।।८३।।**

**ब्राह्मणस्यान्नकामस्य को न दास्यति मानिनः ।**
**अद्याशनेन शून्यस्य तस्य पुण्यमनन्तकम् ।।८४।।**

**(अन्वयः) अतः मया यत् उक्तं तु परोक्तम् इव न भवेत् । हे भवमन्नामधाराग्र्य! अहं तावकः (अत्र) न संशयः ।। हे पाठक! तस्मात् ऋषयः यथा काठकस्य सदा पाठं कुर्वन्ति तथा अत्र मम कृतिं पुत्रवत् पठ । अद्य अशनेन शून्यस्य मानिनः ब्राह्मणस्य कः न दास्यति? तस्य (दातुः) पुण्यम् अनन्तकम् ।।**

**(व्या) अतः** त्वया कृतादनादरात् **यत्** मया **(उक्तं)** दुरुक्तं तत्**परोक्तमिव** द्वेषिभि-

रुक्तमिव **न भवेत्** । यस्मात् **अहं तावकः** तव स्वामी (**हे भवमन्नामधाराग्र्य** मङ्गळं मन्नाम । तद्धारकेषु अग्र्य इति सम्बुद्धिः) ॥८२॥

**तस्मात्** त्वमपि **पुत्रवत्** वृन्दावनाचार्यवत् **मत्कृतिं पठ** । **यथा ऋषयः काठकस्य** । विष्णोः सर्वोत्तमत्वस्य वायोर्जीवोत्तमत्वस्य बोधकत्वात् 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादेः पाठं कुर्वन्ति । तथा मत्कृतिं पठ ॥८३॥

वादिराजाख्यस्यापि भूदापनादावनुकूलत्वात् तं प्रतिवक्तव्यमाह – **ब्राह्मणस्येति** ॥ (**अन्नकामस्य अद्याशनेन शून्यस्य** अत एव पात्रभूतस्य **मानिनः** = दाक्षिण्यादिगुणयुक्तस्य अन्नं **कः** विवेकी पुण्यार्थी न दास्यति? **'अद्याशनेन शून्यस्य'** इति तत्काले पात्रत्वम् उपपादितम् । दातुः **पुण्यमनन्तकम्** । पर्यायोत्सवकाले दत्तम् अनन्तं भवतीति यावत् ।) ॥८४॥

**विप्रान्नसिद्धिपर्यन्तं कुर्यां निरशनव्रतम् ।**
**नैवेद्यं नैव गृह्णामि तावत्पर्यन्तमेव च ॥८५॥**

**अहं मद्भक्तवश्यश्चाभक्तस्याशुभप्रदः ।**
**भक्तवत्सलदेवस्य स्वभावो भक्तवश्यता ॥८६॥**

**अहं विप्रमुखेनैव भोक्ष्ये चान्नं तनौ तथा ॥८७॥**

(अन्वयः) (अहं) विप्रान्नसिद्धिपर्यन्तं निरशनव्रतं कुर्याम् । तावत्पर्यन्तम् एव नैवेद्यं च न गृह्णामि । अहं मद्भक्तवश्यः अभक्तस्य अशुभप्रदः । भक्तवत्सलदेवस्य स्वभावः भक्तवश्यता । अहं विप्रमुखेन एव अन्नं भोक्ष्ये, तथा तनौ च ॥

(व्या) **विप्रान्नेति** ॥ **'विप्रान्नसिद्धिपर्यन्तम्'** इत्यनेन कतिपयवत्सरेषु विप्रस्य अन्न-भोजनाभावः[१] तदा स्वकीयनैवेद्याग्रहणम्, विप्रस्य कालविशेषेषु भोजनम् । तदा तदन्त-र्यामिरूपेण तच्छरीरे स्थित्वा स्वस्यापि भोजनम् । तदा नैवेद्यग्रहणं च प्रतिपादितं भवति ॥८५-८७॥ एतत् कथनेन वादिराजाख्येन अन्नसहायस्य कृतिपठनादेश्च कर्तव्यत्वरूपं निदर्शनमुक्तं भवति ॥वादि.श्रो.प्रक.सं.॥

---

(१) (इदु वृन्दावनाचार्यरु माडिद व्रत विश्वप्रियविलासदल्लि हेळिदे).

### १३-०८८-०९३-सीतापतिप्रकरणम्

**ममोपदेशकर्णस्य सन्मणिः क्व गतः सुत ।**
**जानीहि चापणस्थस्य वणिजः प्राप वै वशम् ।।८८।।**

**अन्नार्थं ब्राह्मणश्चासौ कर्णाभरणं विसृज्य च ।**
**आपणे वणिजो हस्ते मणिं दत्वा गुणार्णव ।।८९।।**

**आनीतवान् स्वकं गेहं तण्डुलान् कुण्डलेऽत्यजत् ।**

(अन्वयः) हे सुत! ममोपदेशकर्णस्य सन्मणिः क्व गतः? आपणस्थस्य वणिजः वशं प्राप वै (इति) जानीहि । हे गुणार्णव! असौ ब्राह्मणः अन्नार्थं कर्णाभरणं विसृज्य आपणे वणिजः हस्ते मणिं दत्वा तण्डुलान् स्वकं गेहं आनीतवान्; कुण्डले अत्यजत् ।।

**(व्या) ममेति ।।** 'अन्नं भोक्ष्ये तनौ तथा' इत्यनेन कालविशेषे अन्नलाभः । तदा वणिग्वशे मणिप्रदानम्, तण्डुलानयनम् । तदा सीतापतेः प्रयत्नेन पुनर्मणेरानयनं च कर्तव्य-मित्येतन्निदर्शनमत्रोक्तम् । यतित्वसमये चेदिदं निदर्शनम् । **'पुत्रमित्रकलत्राणां'** इत्यत्र हे पुत्रेति सीतापतेः सम्बोधनं; मित्राणि कलत्राणि येषां ते मित्रकलत्राः । गृहस्थाः । तेषां अन्नं दत्तवान् इत्यर्थो ज्ञातव्यः । (**हे सुत** सीतापते! **(ममोपदेशकर्णस्य)** विप्रस्य दक्षिणकर्णे विद्यमान**सन्मणिः क्व गतः** इति प्रश्नः । उत्तरं तु **आपणस्थवणिजः वशं प्राप वै** इति जानीहि । **असौ ब्राह्मणः अन्नार्थं** स्व**कर्णाभरणं विसृज्य, हे गुणार्णव!** सीतापते अन्नार्थं = तण्डुलार्थम् **आपणे वणिजः हस्ते मणिं दत्वा** स्वकं गेहं प्रति तण्डुलान् आनीतवान् । कुण्डले अत्यजत् ।

**एतादृशोऽयं सुक्षीणो मणिनाऽन्नं प्रदत्तवान् ।।९०।।**

**पुत्रमित्रकलत्राणां स्वयं तु बुभुजे तदा ।**

(अन्वयः) अयं एतादृशः सुक्षीणः । मणिना पुत्रमित्रकळत्राणाम् अन्नं प्रदत्तवान्; तदा स्वयं तु बुभुजे ।

**(व्या) अयं** ब्राह्मणः **एतादृशः सुक्षीणः दरिद्रः । मणिना अन्नं प्रदत्तवान्** । स्वमणिं

आपणे निक्षिप्य धनेन स्वीय जनानां अन्नं प्रदत्तवान् । पुत्रमित्रकलत्राणां अन्नं प्रदत्तवान् इति पूर्वेणान्वयः । तदा स्वयम् अपि बुभुजे ।)

**मत्कर्णमणिमात्रं वा त्याजयाशु पणार्धतः ।।९१।।**

**स्वर्णेन सहितं कर्णे दक्षिणे धारणं त्वयम् ।**
**करोतु पुरतो विप्रो मम कारुण्यरूपिणः ।।९२।।**

**एवं तु पक्षपातेन पक्षीकुर्यामहं द्विजम् ।**
**सुक्षीणं श्लक्ष्णया वाचा मत्कृतौ पक्षपातिनम् ।।९३।।**

(अन्वयः) त्वं पणार्धतः मत्कर्णमणिमात्रं वा आशु त्याजय; अयं विप्रः कारुण्यरूपिणः मम पुरतः दक्षिणे कर्णे स्वर्णेन सहितं धारणं करोतु ।। एवम् अहं पक्षपातेन सुक्षीणं, श्लक्ष्णया वाचा मत्कृतौ पक्षपातिनं, द्विजं तु पक्षपातेन पक्षीकुर्याम् ।।

(व्या) (त्वं पणार्धं दत्वा दक्षिणकर्णस्थ मणिम् आशु वणिजः हस्तात् मोचय ।।९१।। कारुण्यरूपिणः मम पुरतः स्वर्णेन सहितं कर्णमणिम् अयं ब्राह्मणः दक्षिणकर्णे धारणं करोतु ।।९२।। एवमेव दक्षिणकर्णे पक्षपातं कृत्वा तम् अलङ्कृत्य अहं सुक्षीणं द्विजं पक्ष्मीकुर्यां = मत्कार्याङ्गतया स्वीकरोमि । कथं भूतं द्विजम्? स्वस्य मधुरवाण्या मत्कृतौ विश्वासवन्तं विश्वासेन स्वप्नानन्तरं स्वमधुरवाचा श्रीवेदनिधिपुरतः निवेदयन्तम् इत्यर्थः । अथवा मम श्लक्ष्णया वाचा मत्कृतौ पक्षपातिनं च करोमीत्यन्वयः) ।।९३।। सी.प्र.सं.

### १३-०९४-०९७-विप्रप्रकरणम्

(व्या) 'स्वर्णेन शून्ये' इत्यारभ्य अध्यायान्तं विप्रश्रोतृक एकादशं प्रकरणं

**स्वर्णेन शून्ये मणिना च दक्षिणे कर्णे न वक्ष्ये तव विप्रवर्य ।**
**मत्प्रेरिता दत्तवती च ते सती निष्कार्धमात्रं मम वृन्दावनाग्रे ।।९४।।**

**तत्कृतं स्वर्णसङ्कीर्णं कर्णाभर्णं च ब्राह्मण ।**
**आपणे वणिजः पाणौ कुतस्त्वं दत्तवानसि ।।९५।।**

**तदागमनपर्यन्तं न वक्ष्ये दक्षिणे तव ।**

**कर्णे ब्राह्मण मे वाणीं पुण्यहीनोऽसि तत्क्षणे ।।९६।।**

**अतः शीघ्रं तदादाय पुनर्धर धरासुर ।**
**गुरोराज्ञां न वैराग्यान्निराकुरु नराधम ।।९७।।**

(अन्वयः) हे विप्रवर्य! स्वर्णेन मणिना शून्ये तव दक्षिणे कर्णे न वक्ष्ये च । ते सती मम वृन्दावनाग्रे मत्प्रेरिता (भूत्वा) निष्कार्धमात्रं (तव) च दत्तवती । हे ब्राह्मण! तत्कर्णस्वर्णसङ्कीर्णं कर्णाभरणम् आपणे वणिजः पाणौ त्वं कुतः दत्तवान् असि? तव दक्षिणे कर्णे तदागमनपर्यन्तं वाणीं न वक्ष्ये । तत् क्षणे (त्वं) पुण्यहीनः असि ।। अतः हे धरासुर! शीघ्रं तदादाय पुनः धर; हे नराधम! वैराग्यात् गुरोः आज्ञां न निराकुरु ।।

**(व्या)** (पदार्थः स्पष्टः । **हे विप्रवर्य!** यदि तव दक्षिणकर्णः मणिशून्यः वर्तते तर्हि नाहम् उपदेशं स्वप्ने करोमि । **ते सती** = धर्मपत्नी । मत्प्रेरणया **मम वृन्दावनाग्रे** स्वस्त्रीधनं तव प्रयोजनार्थं **दत्तवती** । **निष्कार्ध**परिमितं तद्धनम् ।।९४।। त्वं देवताव्यापारं विस्मृत्य दक्षिणकर्णस्थसन्मणिमपि **कुतः आपणे** पणरूपेण दत्तवान् ।।९५।। अनलङ्कृत-दक्षिणकर्णे अहं मद्वाणीं **न वक्ष्ये** । मणित्यागक्षणे एव उपदेशार्हपुण्येन रहितोऽसि ।।९६।। **अतः शीघ्रं** सीतापतिं प्रेषयित्वा, निष्कार्धदानेन पुनः सम्पाद्य, **पुनः** कर्णे **धर** । **हे 'धरासुर'** इत्यनेन 'मङ्गळकार्यं कृतवान् भविष्यसि' इति सूचयति । अन्यथा यदि वैराग्येण कर्णालङ्काररहित एव अवतिष्ठसे । तदा गुरोराज्ञोल्लङ्घनेन गुरुद्रोही भविष्यसि । 'नराधम' इत्यनेन गुरुद्रोहेण नराधमो भविष्यसि । अनशनादिरूपवैराग्यमपि एकादश्यादिविध्युक्त-व्रतादिभिन्नम् । यदा सतां गुरुदेवानां विरोधि तदा न कर्तव्यमिति सूचयति ।।९७।। सावित्र्या यथा कथा तेषाम् आज्ञयैव कर्तव्यमिति भावः ।।वि.प्र.सं) पूर्वप्रकरणे वणिग्वशे मणिप्रदानमुक्तम् । तत्तथा न कर्तव्यम् । **मत्प्रेरितया** पतिव्रतया प्रदत्तनिष्कार्धमात्रेण लब्धोऽयं सन्मणि । तद्धारणसमये उपदेशः, तदभावसमये तु न । तस्मात् तं मणिं शीघ्रमादाय धरस्वेति कथनेन सतीप्रदत्तनिष्कार्धप्रदानरूपं निदर्शनमुक्तम् ।।

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दा-शनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाह-कत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि- राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि त्रयोदशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**

# १४-०००- चतुर्दशाऽध्यायः

## १४-००१-००६-सीतापतिप्रकरणम्

(व्या) पूर्वाध्यायोक्तवादिराजनिदर्शनवत् विठलादिनिदर्शनं प्रतिपादयत्यनेनाध्यायेन । 'सीतापते' इत्यारभ्य 'शिक्षन् सर्वान् विचक्षण' इत्यन्तं सीतापतिश्रोतृकप्रथमं प्रकरणम् ।

विप्रेण वणिग्वशे दत्तस्य मणेः त्याजनं सीतापतिना कर्तव्यं, तद्धारणं विप्रेण कर्तव्यम् इत्युक्तं पूर्वाध्यायान्ते । सीतापतिना वणिजः सकाशात् मणित्याजनं कृतम् । तेन कीर्तिः सम्पादिता । एवमस्य विप्रस्य निषिद्धकृत्ये प्रसक्ते सति सीतापतिना तत्परिहारप्रयत्नं कर्तव्यः । त्याजितमणिधारणं च विप्रेण कारयितव्यम् । ततः परम् अहं वक्तव्यमुपदिशामीति भावेनाह – सीतापते इति ।।

**हरिः ओं।।**
**सीतापते शुभकृते विततां च कीर्तिं**
**त्वं चात्र मित्र कृतवानसि पात्रपाल ।**
**सुत्रामपुत्रकृतदुष्कृतहन्तृनाम त्वं**
**सार्थकं कुरु ऋषेऽस्य निषिद्धकृत्ये ।।१।।**

(अन्वयः) हे सीतापते! पात्रपाल! शुभकृते! मित्र! त्वम् अत्र विततां कीर्तिं च कृतवानसि । हे ऋषे! अस्य निषिद्धकृत्ये सुत्रामपुत्रकृतदुष्कृतहन्तृनाम त्वं सार्थकं कुरु ।

(व्या) हे पात्रपाल सुपात्रविप्रपरिपालक । शुभकृते सुप्रयत्न त्वं च अत्र विततां कीर्तिं कृतवानसि । न केवलं वादिराजाख्यः विप्रस्य भूलाभादिविषये विततां कीर्तिं कृतवान् । अपि तु त्वमपि कृतवानसि । अस्य विप्रस्य निषिद्धकृत्ये प्रसक्ते सति तव यत् सुत्रामपुत्रकृतहन्तृनाम तत् सार्थकं कुरु । इन्द्रपुत्रेण जयन्तेन काकरूपेण कृतस्य सीतापराधस्य परिहर्तुः श्रीरामचन्द्रस्य यन्नाम सीतापतिरिति तत्सफलं कुरु । 'ऋषेः' इत्यनेन सीतापतेः स्वतोपि निषिद्धकृत्यप्रसक्त्यभावं सूचयति ।।१।। (ऋषे असि अनिषिद्धकृत्ये सर्वदा साधुरसीत्यपि भावः) ।

**मया निषिद्धं वृद्धोऽयं क्रुद्धः संसृतिपद्धतौ ।**
**सद्बुद्धिरपि सङ्क्षुब्धः क्षुधया तद्व्यधाद् बुधः ।।२।।**

**मत्कर्णसन्मणिं स्वर्णयुक्तं त्याजितवानसि ।**
**वणिजः पाणिगं प्राणिन् सुत्राणं कुरु ब्राह्मणम् ।।३।।**

(अन्वयः) अयं वृद्धः सद्बुद्धिः बुधः अपि संसृतिपद्धतौ क्षुधया क्रुद्धः सङ्क्षुब्धः (सन्) तत् मया निषिद्धं व्यधात् । हे प्राणिन्! वणिजः पाणिगं स्वर्णयुक्तं मत्कर्णसन्मणिं त्याजितवानसि; ब्राह्मणं सुत्राणं कुरु ।।

(व्या) संसृतिपद्धतौ क्रुद्धः, वृद्धो बुधः ब्राह्मणः सद्बुद्धिरपि क्षुधया सङ्क्षुब्धः सन् यन्मया 'सन्मणिं त्वं तु मा त्यज' इति निषिद्धं तद् व्यधात् कृतवान् ।।२।। हे प्राणिन्! सीतापते वणिक्पाणिगतं स्वर्णयुक्तं मत्कर्णसन्मणिम् = विप्रान्तर्यामिणः मम (अथवा मया क्रियमाण उपदेशाङ्गभूत) कर्णभूषणं सन्मणिं, वणिजः सकाशात् त्याजितवानसि । ब्राह्मणं सुत्राणं सुपालनवन्तं कुरु ।।३।।

**मणिना विलसत्कर्णे मद्वाणीं दक्षिणेऽनिशम् ।**
**भणामि शृणु पुण्यात्मन् गुणमाणिक्यवादिनीम् ।।४।।**

**अतोऽपि पुण्यवान् कर्णे मणिं धारितवानसि ।**
**ब्राह्मणेन गुणिन् धीमन् सुक्षीणोऽयं न संशयः ।।**

**इतः परमहं वक्ष्ये सुक्षीणे ब्राह्मणोत्तमे ।**
**लक्षणं मम सर्वं तु शिक्षन् सर्वान् विचक्षण ।।६।।**

(अन्वयः) हे पुण्यात्मन्! मणिना विलसत् दक्षिणे कर्णे अनिशं गुणमाणिक्य-वादिनीं मद्वाणीं भणामि । शृणु । ब्राह्मणेन कर्णे मणिं धारितवान् असि । अतः अपि पुण्यवान् । हे धीमन्! अयं सुक्षीणः, न संशयः । हे गुणिन्! विचक्षण! इतः परम् अहं सर्वान् शिक्षन् सुक्षीणे ब्राह्मणोत्तमे मम सर्वं लक्षणं तु वक्ष्ये ।।

(व्या) मणिना तत्करणं कथम्? इत्यत आह – मणिनेति ।। दक्षिणे मणिना विलसत्कर्णे गुणमाणिक्यवादिनीं (उत्तमगुणयुक्तउपदेशबोधिनीं) मद्वाणीं भणामि । हे

पुण्यात्मन् सीतापते । त्वमिदं वृत्तान्तं **शृणु** ।।४।।

अतः श्रवणादिनापि (वक्ष्यमाणवृत्तान्तश्रवणादिनापि) पुण्यवान् भविष्यसि । एवम् उक्तप्रकारेण सीतापतिना मणिः विप्रवशे दत्तः । तेन कर्णे धृतः । तद्वृत्तान्तानुवादेन सीतापतेः पुण्याभिवृद्धिः भूयादिति भावेनाह – **मणिमिति ।। हे गुणिन् ! धीमन्** सीतापते **ब्राह्मणेन मणिं धारितवानसि** । **अयं** ब्राह्मणः इतः पूर्वं मदुपदेशाभावेन **सुक्षीणः** ।।५।।

**इतः परं अहं** प्रागुपदेशाभावेन **सुक्षीणे ब्राह्मणोत्तमे सर्वान्** जनान् **शिक्षन्** सन् **मम सर्वलक्षणं वक्ष्ये** ।। (उपदेशयोग्यं सर्वम् उपदिशामि) ।।६।। अत्र विप्रस्य सीतापतिकृतं मणिप्रदानमुक्तम् ।। सी.श्रो.प्र.सं.।।

### १४–००७–००९–शेषप्रकरणम्

**(व्या) 'हे शेष'** इत्यारभ्य **'तत्कृतं तु ममैव हि'** इत्यन्तं शेषश्रोतृकं द्वितीयं प्रकरणम् ।

**हे शेष दोषरहित मच्छिष्यवृष पोतक ।**
**पोष्य दारिद्र्य(जन्य)तद्दोषं त्वं शेषं शोषयाशु च ।।७।।**

**नरस्तोत्रजदोषं तु नरसिंहस्तुतेर्न हि ।**
**नरोत्तम शृणु त्वं हि नरजन्मानि नैव मे ।।८।।**

**तस्मान्मद्भक्तमुख्यस्य विप्रस्य कुरु सत्कृतिम् ।**
**मत्कृतिं सर्वदा वक्तुं तत्कृतं तु ममैव हि ।।९।।**

**(अन्वयः) हे शेष! दोषरहित! मच्छिष्यवृष! पोतक! पोष्य! त्वं शेषं दारिद्र्यतद्दोषं च आशु शोषय ।। हे नरोत्तम! शृणु । नरसिंहस्तुतेः तु नरस्तोत्रजदोषं न, हि । मे नरजन्मानि एव न ।। तस्मात् मद्भक्तमुख्यस्य विप्रस्य सत्कृतिं कुरु । मत्कृतिं सर्वदा वक्तुं तत्कृतं तु मम एव हि ।।**

**(व्या)** यथा सीतापतिना मणित्याजनं कृतं तथा शेषेणापि कर्तव्यमाह **हे शेषेति ।। दोषरहित!** इदं कथं सङ्घटते? (५।७८) इत्याक्षेपादिकृतदोषरहित । **मच्छिष्यवृष=** मच्छिष्योत्तम । **पोष्य** = पोषयितुं योग्य । **पोतक** = पुत्रसदृश । **त्वं शेषम्** उर्वरितं

**दारिद्र्यतद्दोषं** = दारिद्र्यरूपं (तस्य) विप्रस्य दोषम् **आशु शोषय**= शीघ्रं परिहर ।।७।।

**हे नरोत्तम!** मच्छिष्य मनुष्येषु उत्तम । अन्तर्यामिणो नृसिंहस्य स्तुतिर्यस्य स तथा । तस्य मे मम । **नरजन्मनि** । **नरस्तोत्रजदोषं** । नरस्तोत्रजन्यं पापं नास्ति । (त्वं शृणु) **दोषमिति** नपुंसकशब्दप्रयोगेण पापोत्पादकतमोगुणभागस्य शक्तिराहित्यं सूचितं भवति ।।४।। तस्मात् उक्तदारिद्र्यदोषपरिहारात् (दोषस्यपरिहार्यत्वात्?) एन्दु इरबेकु) **मद्भक्तमुख्यस्य विप्रस्य** सत्कारं **कुरु** । **सर्वदा मत्कृतिं वक्तुं** यत् सत्कृतं **तत्** ममैव सत्कृतम् । शेषेण कर्तव्यं विप्रदारिद्र्यदोषनिवारणमत्रोक्तम् ।। शे.प्र.सं.

### १४–०१०–०११–विट्ठलप्रकरणम्

(व्या) **'विट्ठले'**त्यारभ्य पद्यद्वयं विट्ठलश्रोतृकप्रकरणं तृतीयम् ।। शेषवत् कदाचित्क-दोषवचनेन विप्रोपकारकत्वेन च, बुद्धिसन्निहितस्य विट्ठलस्य निदर्शनमाह – **विट्ठलेति** ।।

**विट्ठल भ्रष्टसन्मार्गदुष्टबुद्धिं च माऽट भो ।**
**काष्ठायां तिष्ठ पापिष्ठ शिष्टद्रोहमिमं त्यज ।।१०।।**

**शिष्टलक्षणदुष्टांस्त्वं पूर्वकष्टं तु संस्मर ।**
**कपटं हृदि तिष्ठन्तं त्यज विट्ठल संस्फुटम् ।।११।।**

(अन्वयः) हे विट्ठल! भो! भ्रष्टसन्मार्गदुष्टबुद्धिं च माऽट । इमं शिष्टद्रोहं (पुरुषं?/बुद्धिं) त्यज! हे पापिष्ठ! काष्ठायां तिष्ठ ।

हे विट्ठल! पूर्वकष्टं तु संस्मर । त्वं शिष्टलक्षणदुष्टान् हृदि तिष्ठन्तं कपटं (च) संस्फुटं त्यज ।।

(व्या) **हे विट्ठल! त्वं भ्रष्टसन्मार्गदुष्टबुद्धिं** = भ्रष्टसन्मार्गाणां दुष्टानां (कर्मधारय) बुद्धिं, **माऽट** = मा सञ्चर । **शिष्टद्रोहं** = शिष्टस्य मदभिमतविप्रस्य द्रोहः यस्य पुरुषस्य स तथोक्तम्, तम् । **इमं** त्वत्समीपगतं पुरुषं **त्यज** ।।१०।।

तथा **शिष्टलक्षणदुष्टान्** = शिष्टानां लक्षणमिव लक्षणं येषां ते शिष्टलक्षणाः ते च ते दुष्टाश्च । तान् त्यज । तत्त्यागकारणमाह – **पूर्वकष्टमिति ।।** पुष्यनक्षत्रसञ्जातेन यत्याश्रमं प्राप्य तदीयैः कृतसंस्थानाधिपत्यप्राप्तिप्रतिबन्धकापकारकजन्यं **पूर्वकष्टं संस्मर** । **हृदि**

**तिष्ठन्तं** दुष्टानुकूलं विप्रस्य प्रतिकूलं **कपटं स्फुटं** स**न्त्यज** । एवं प्रतिपादनेन दुष्टबुद्ध्या विठ्ठलकृतकपटानुसन्धानं व्यर्थं भविष्यतीति निदर्शनमुक्तं भवति ।।११।। विठ्ठल.श्रो.प्र.सं.

### १४-०१२-०५६-लक्ष्मीपतिप्रकरणम्

**(व्या) 'एवमेव ह्यविश्वासम्'** इत्यारभ्य **'सूचनेपि हरामि च'** इत्यन्तं लक्ष्मीपतिनामकश्रोतृकं चतुर्थप्रकरणम् । सीतापतिना शेषेण च कर्तव्यनिदर्शनमुक्त्वा लक्ष्मीपतिना कर्तव्यमाह – **एवमित्यादि** ।।

**एवमेव ह्यविश्वासं कुर्वन्तीति मयेरितम् ।**
**पूर्वमेव परं विप्र कुरुवृत्तिं च माधवीम् ।।१२।।**

**लक्ष्मीपते कृतिं सान्तां सुतं सीतापतिं वद ।**
**चरमां वा कृतिं सम्यक् परमां तु तयोर्वद ।।१३।।**

**(अन्वयः) विप्र! मया पूर्वं परं एव 'एवं एव अविश्वासं कुर्वन्ति; माधवीं वृत्तिं कुरु' इति ईरितम् । हे लक्ष्मीपते! सुतं सीतापतिं सान्तां कृतिं वद । परमां तु चरमां कृतिं वा सम्यक् तयोः वद ।।**

**(व्या) एवं** यथा विठ्ठलसम्बन्धिनः केचित् **अविश्वासं कुर्वन्ती**त्युक्तम् । **परं** उत्तरभागेऽपि केचिदविश्वासं कुर्वन्तीति 'पुत्राविश्वासिनः सदा' इति द्वितीयप्राणावधौ चतुर्थाध्याये (२१।२८) प्रतिपादितं; तथा **पूर्वं** 'कुरु वृत्तिं च माधवीम्' (१७।१९) 'भोजनार्थं मधुकरवृत्तिं कुरु यथा पुरा' (११।८७; १९।२) इति । षष्ठाध्यायेऽपि (६।३६) प्रतिपादितं ('कुरुवृत्तिं च माधवीम्' इति आकारग्रहणम्)।।१२।।

तथा **हे लक्ष्मीपते! सान्तां** = स निर्णयां मम **कृतिं सुतं** वृन्दावनाचार्यं **सीतापतिं** च प्रति **वद** इति । 'लक्ष्मीपते च गत्वा त्वं सौक्ष्मीं वार्तां वदस्व मे' (१२।६०, १३।५८) इति द्वादशाध्याये प्रतिपादितम् । हयग्रीवमुनिनन्दनाग्रे **परमां** साद्यन्तां **कृतिं चरमां** कृतिं वा उत्तरप्राणावधिरूपां वा[१] । वदेति –

---

(१) (उत्तरप्राणावधि अथवा चरमाकृति एन्दरे कोनेय ५ अध्यायगळु 'वदस्व मद्द्यासिन्धौ हयग्रीवतपोनिधौ एन्दु १०।८७ रल्लिदे. आ वाक्य साद्यन्तां एम्बुदक्के आधार. १०।१००रल्लि हेळुवन्ते 'आगतेषु जनेष्विह'एन्दु एल्लरिगू हेळुवन्ते आज्ञे इदे)

श्रीपतेगृहकृत्यं ते बह्वस्ति हित्वा च तत् ।
नन्दनाग्रे वदस्व त्वं चरमां वा कृतिं प्रिय ।। (२२।१)

इति चरमप्राणावधौ पञ्चमाध्याये प्रतिपादितम् । **तयोः** व्याससीतापत्योः । **मत्कृतिं वदेति** 'विप्रत्वमेव गत्वा तु मत्कृतिं तु तयोर्वद' इति दशमाध्याये (१०।१५२) प्रतिपादितम् ।। (तथा सीतापतिविषये 'लक्ष्मीपते मम कृतिं नितरां सुतस्य सीतापतेश्च' इत्यादिना त्रयोदशाध्यायेप्यस्ति (१३।५८)) ।।

**कुरु मापतिभक्तिं च सारमन्नं तु दास्यति ।**
**एवं शेषस्य तोषार्थं व्यासस्यापि शुभाप्तये ।।१४।।**

**श्रीशभक्तस्य मद्भक्तियुक्तस्यापि सदा वद ।**
**एवं बुद्धिस्तवापीह शुद्धक्रुद्धस्तु मा भव ।।१५।।**

(अन्वयः) (हे लक्ष्मीपते!) मापतिभक्तिं च कुरु; सारम् अन्नं तु दास्यति । एवं श्रीशभक्तस्य मद्भक्तियुतस्य शेषस्य अपि तोषार्थं शुभाप्तये व्यासस्य अपि सदा वद । एवम् इह तव बुद्धिः (भविष्यति) शुद्धक्रुद्धः तु मा भव ।।

**(व्या) मापतिभक्तिं** = कमलापतिभक्तिं कुर्विति 'कृष्णे भक्तिं कुरु मन्त्रेण पुष्णन्' इति द्वादशाध्याये (१२।९१) प्रतिपादितम् । [१]'शेषाय वद मत्पुत्र दोषाय न तरं मम । तोषाय तव विप्रस्य' (१०।१४२, १५२म १५३) इत्यादिना दशमे प्रतिपादितम् । तत्र नरः इत्यस्य व्यासः इति व्याख्यानमस्ति । एकादशेप्यस्ति (११।२८) '**व्यासस्यापि शुभाप्तये** मत्कृतिं वद' इति दशमाध्याये (१०।११५,१५१) प्रतिपादितम् । (**श्रीशभक्तस्य सदा मद्भक्तियुक्तस्यापि व्यासस्य कृतिं वद** इति पूर्वेणान्वयः । एवं तेषां प्रति कृतिवाचकत्वबुद्धिः तवापीह शुभाप्तये भवति । शुद्धे क्रुद्धः **शुद्धक्रुद्धः** विप्रविषये क्रोधं न

(१) (एवं शेषस्य तोषार्थं (अध्याय १० श्लोक ११५रल्लि शेषाद्रिपण्डितस्यापि वक्तव्यः स्वाप्नवैभवं, व्यासराजाख्य भक्तस्य तथा तदनुजस्य च' एम्बल्लि शेष, व्यासभक्त, सीतापति एम्ब मूवरिगू श्रवणद आज्ञे इदे. अध्याय १० श्लोक १४०रल्लि शेषनिगे आज्ञे इदे. 'इमां मत्कृतिं मित्र प्रेषयस्व ममात्मजं' एन्दिदे. १४१रल्लू विप्रनिगे शेषादिगळिगे हेळलु आज्ञे इदे. ई एल्ला पूर्वोक्तनिदर्शनगळू सत्यवागिवे. अदरिन्द नन्न सत्यसङ्कल्पत्व व्यक्तवागुत्तदे. कृतियल्लि सुळ्ळिल्ल, प्रामाणिकग्रन्थ एन्दु जनरिगे निश्चयवागुत्ते एन्दर्थ. हदिनेळने श्लोकदल्लियू हीगेये हेळल्पट्टिदे)

कुरु । तं न त्यज ॥१५॥)

**श्रद्धां कुरु बुधोक्तौ तु वृद्धे सख्यं सदा कुरु ।**
**शतं शतं च पद्यानां प्रत्यध्यायगतं कुरु ॥१६॥**

**इति पूर्वं मया प्रोक्तं तत्सत्यं समभूदहो ।**
**मम सङ्कल्पसिद्धत्वे सुविश्वासस्तवापि च ॥१७॥**

**कारणं समभूत् काण सुक्षीणं पश्य ब्राह्मणम् ।**
**पुत्र कृत्रिमभक्तोऽयं विप्रो नैव तवापि च ॥१८॥**

(अन्वयः) 'श्रद्धां कुरु बुधोक्तौ तु वृद्धे सख्यं सदा कुरु' 'शतं शतं च पद्यानां प्रत्यध्यात्मगतं कुरु' इति (यत्) पूर्वं मया प्रोक्तं तत् सत्यं समभूत् । मम सङ्कल्पसिद्धत्वे तव सुविश्वासः अपि समभूत् । अहो । हे काण! सुक्षीणं ब्राह्मणं पश्य । हे पुत्र! अयं विप्रः कृत्रिमम् अभक्तं न (एव) ।

(व्या) **'श्रद्धां कुरु बुधोक्तौ तु वृद्धे सख्यं सदा कुरु'** इत्येतत् **'वृद्धे बुद्धिमतां बुद्धे श्रद्धाबद्धे दयां कुरु'** इति त्रयोदशाध्याये(१३।७०) प्रतिपादितम् । उत्तरप्राणावधौ प्रथमाध्यायेऽपि (१८।८३) **'स्नेहं कुरु । मम स्नेहपात्रे शास्त्रज्ञसज्जने । मत्सुतोप्यतिस्नेहं करोति पुरुषोत्तमे'** इति प्रतिपादितम् । **'शतं शतं च पद्यानां प्रत्यध्यायगतं कुरु'** इति पञ्चमाध्याये (५।८७) प्रतिपादितम् ॥१६॥ **इति** यत् **पूर्वं मया प्रोक्तं तत्** उत्तरकालेपि **सत्यं समभूत्** । सत्यत्वेन ज्ञातं भविष्यति ॥ तव अविश्वासोऽपि आख्यानोक्तप्रमेयं सत्यमिति निश्चयाभावोपि कारणं समभूत् । तव विश्वासाभावे विमर्शाभावेन निदर्शनानुपलम्भे मदीय सङ्कल्पसिद्धत्व(स्य) ज्ञानं न भवेदिति भावः ॥१७॥

**हे काण!** अविश्वासेन (सत्यसङ्कल्पत्वविषये अविश्वासेन) तिरोहितज्ञानैकचक्षुष्क![(१)] **ब्राह्मणं** जन्मकृतेन अविश्वासादिना **सुक्षीणं** श्रान्तं **पश्य** ॥ **(हे पुत्र)** एवमपि

---

(१) ज्ञानचक्षुष्क – (पा); (हे लक्ष्मीपते! निनगू नानु सत्यसङ्कल्पनु. नानु हेळिद्दु हागे आगिये आगुत्ते एम्ब दृढनिर्णयविल्ल एन्दु तात्पर्य. आ निश्चयाभाववे इल्लिन निन्न अवतारद दुःखगळिगे कारण एन्दू अर्थवागुत्ते. निन्न आन्तरज्ञानराहित्य, ध्यानचक्षुस्सिन अभाव इदेल्लक्कू अदे कारण एन्दु 'काण' एम्ब पदवु सूचिसुत्ते)

भक्तिलोपाभावात् । अयं ब्राह्मणः मम कृत्रिमभक्तो न ।।१८।।

**ऐहिकाभावमात्रेऽपि ह्यमुत्रार्थो भविष्यति ।**
**तस्माद्विमानमारुह्य ब्राह्मणोऽयं गुणार्णव ।।१९।।**

**मत्समीपमथाऽगन्ता पश्य लोका(काला?)न्तरे सुत ।**
**आयुःशेषे तथा नीते प्रीते मयि सुताञ्जसा ।।२०।।**

**हरौ प्रीते तथा प्रीते त्वयि का सुकृतिः कृता ।**

(अन्वयः) (तवापि च) (अस्य ब्राह्मणस्य) ऐहिकाभावमात्रे अपि अमुत्र अर्थः भविष्यति, हि । हे गुणार्णव! तस्मात् अयं ब्राह्मणः विमानम् आरुह्य अथ मत्समीपः लोका(काला)न्तरे आगन्ता । हे सुत! पश्य । हे सुत! अयुःशेषे नीते तथा अञ्जसा प्रीते मयि, प्रीते हरौ, तथा त्वयि प्रीते का सुकृतिः कृता?

(व्या) अस्य ऐहिकभोगाभावेऽपि अमुत्र परलोके अर्थः पुरुषार्थः भविष्यति । तवापि (लक्ष्मीपतेरपि) । ऐहिकाभावमात्रेपि । अमुत्रार्थो भविष्यति ।।१९।।

हि यस्मात्, तस्मात् (हे गुणार्णव!) अयं ब्राह्मणः आयुःशेषे (तथा) नीते सति । विमानमारुह्य काला(लोका?)न्तरे मत्समीपं प्रत्यागन्ता । त्वं तदा पश्य । मम कथं दर्शनशक्तिरित्यत आह – प्रीते इति ।। मयि प्रीते ।।२०।।

हरौ हयग्रीवे त्वयि प्रीते सति । मयि त्वयि च प्रीते सति च त्वया का सुकृतिः कीदृशी सुकृतिः कृता? तां चिन्तय । मत्प्रसादेन हरिप्रसादेन च तद्दर्शनं युक्तमिति भावः ।।२१ १/२।।

**स्त्रीसङ्गिनः कथं चास्य स्वप्ने वक्ति गुरुः स्वयम् ।।२१।।**

**इति शङ्काऽपि ते माऽस्तु निस्सङ्गोऽहं न संशयः ।**
**अर्भके गर्भसंस्थे तु(ऽपि?) स्वर्भानुग्रस्तभानुवत् ।।२२।।**

**तवार्भकः पुमानेव भूसुरेश भविष्यति ।**
**विप्र त्वं तव पुत्रं तु मम नाम्ना समाह्वय ।।२३।।**

**इति पूर्वं[१] मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।**

(अन्वयः) कथं च स्त्रीसङ्गिनः अस्य स्वप्ने गुरुः स्वयं वक्ति? इति ते शङ्का अपि माऽस्तु । (यतः) अहं निःसङ्गः, (अत्र) संशयः न । 'अर्भके गर्भसंस्थेऽपि स्वर्भानुग्रस्तभानुवत्' 'तवार्भकः पुमानवेव भूसुरेश भविष्यति' 'विप्र त्वं मम पुत्रं तु मम नाम्ना समाह्वय' इति मया पूर्वं प्रोक्तं हे बुद्धिमन्! अनुसन्धत्स्व ।

**(व्या) स्त्रीसङ्गिन इति ।।** 'विप्रः स्त्रीसङ्गि' इति दुर्वार्ताश्रवणेन, 'स्त्रीसङ्गिनः अस्य विप्रस्य एतादृशं वृत्तान्तं गुरुः कथं स्वप्ने वक्ति' इति कु**शङ्का ते मास्तु** ।।२१।।

**अयं निःसङ्ग** एव । यस्मात् **अहं** तदनुग्राहको **निःसङ्गः** तस्मात् । निःसङ्गस्य मम समीपं प्रति । 'निःसङ्गोऽयं ब्राह्मणः मत्समीपं प्रति विमानमारुह्य आगन्ता' इति यदुक्तं तद्युक्तमेव । षोडशाध्याये यदुक्तं (१६।१४) **'अर्भके गर्भसंस्थे तु'** इत्यादि । यच्चोक्तं दशमाध्याये **'विप्र त्वं तव पुत्रं तु मम नाम्ना समाह्वय'**(१०।६२) इति । तदपि **अनुसन्धत्स्व**[२] ।।

**विप्र तत्कृत्रिमश्लोकैः पुत्रबुद्धिप्रतारकैः ।।२४।।**

**शस्त्रक्षतक्षात्रवत् ते काऽत्र हानिः परत्र वा ।**
**तूष्णीं तिष्ठ सुशर्मिष्ठ काष्ठमौनं दृढं कुरु ।।२५।।**

**शिष्ट कष्टमतिर्मा ते सुष्ठु त्वं पठ मत्कृतिम् ।**
**गुणार्णवं तु मद्वाणीं भण मन्नन्दनं गुणिन् ।।२६।।**

**शृणु तस्य सुधावाणीं प्राणिनां पापनाशिनीम् ।**
**श्रेणीं प्राप्नोषि तद्वाण्याः श्रवणात् श्रेयसां सदा ।।२७।।**

(अन्वयः) हे विप्र! पुत्रबुद्धिप्रतारकैः तत् कृत्रिमश्लोकैः शस्त्रक्षतक्षात्रवत् अत्र वा परत्र ते का हानिः? हे सुशर्मिष्ठ! दृढं काष्ठमौनं कुरु; तूष्णीं तिष्ठ । हे शिष्ट! ते

---

(१) (इति पूर्वं १०।६२रल्लि 'अर्भके' श्लोकवु १६।१५रल्लि ज्ञापिसल्पट्टु इल्लि सेरिसल्पट्टिदे.

(२) (ई श्लोकगळ अन्दरे १२नेय श्लोकदिन्द मोदलुमाडि २३१/२ श्लोकदपर्यन्त सूचितवाद अनेक श्लोकगळ अर्थानुसन्धानवन्नु माडिदरे एनागुत्ते एन्दरे मुन्दिन श्लोकदल्लि उत्तर हेळल्पट्टिदे)

**कष्टमतिः मा । त्वं मत्कृतिं सुष्ठु पठ । हे गुणिन्! मन्नन्दनं गुणार्णवं तु मद्वाणीं भण । प्राणिनां पापनाशिनीं तस्य सुधावाणीं शृणु । तद्वाण्याः श्रवणात् सदा श्रेयसां श्रेणीं प्राप्नोषि ।।**

**(व्या) 'एवमेव ह्यविश्वासं कुर्वन्ति'** इति द्वादशश्लोकमारभ्य **'मम नाम्ना समाह्वय'** इत्यन्तेन कर्तव्यतयोक्तैः अनुसन्धानैः किं कार्यम्? इत्यत आह – **विप्रेति ।। हे विप्र! पुत्रबुद्धिप्रतारकैः**[१] पुत्रस्य तव यतित्वदशायां परमगुरोः पुष्यनक्षत्रसञ्जातस्य बुद्धि-प्रतारकैः । **तत्कृत्रिमश्लोकैः** । तत्समीपगतैः जनैः । कृत्रिमत्वेन कल्पितैः श्लोकैः । ते तव । अत्र वा परत्र वा । **का हानिः?** न कापि ।।२४।।

**शस्त्रक्षतक्षात्रवत्** = 'यथा शस्त्रक्षतक्षात्रेण इह अमुत्र च हानिर्नास्ति, तथा तवापि दुष्टानां दुरुक्तिमात्रेण शस्त्रेण यन्मनसि जातं क्षतम्, तेन इहलोके परलोकेऽपि शुभमेव भवति । बाधके सत्यपि स्वधर्मपरित्यागाभावात्' इति भावः ।। **हे सुशर्मिष्ठ!** सुसमीचीनं शर्म सुखं येन भवति तस्मिन् धर्मे स्थिरचित्त! त्वं दुष्टानां दुरुक्तिसमये **दृढं काष्ठमौनं कुरु** ।। 'तैः सह सम्भाषणे कलहो भवेत् । तव परमगुरोर्मनसि विक्षेपो भवेत् । तेन पुनरन्यस्य संस्थानप्रदानं स्यात् । परमगुरोः पुत्रस्त्वद्गुरुस्तु वृन्दावनस्थो जातः । तस्मात् परमगुरोरनुग्रहप्राप्त्यर्थं तत्समीपगतानां दुष्टानां दुरुक्तावपि सहनं कर्तव्यम्' इति भावः ।।२५।।

**हे शिष्ट! ते कष्टमतिः** अभिमतवृन्दावनाख्यानपारायणविघ्नशङ्कया कष्टमतिः **माऽस्तु** । **सुष्ठु** सम्यक् **मत्कृतिं पठ** । **(हे गुणिन्)** सूचकानां दुरुक्त्या किमेतदिति परमगुरुणा प्रश्ने कृते सति, गुणार्णवं **(मन्नन्दनं)** ते परमगुरुं प्रति **मद्वाणीं भण** । 'वृन्दावनाख्यानपारायणं करोमि' इति भण ।।२६।।

मन्नन्दनस्य **तस्य सुधावाणीं श्रुणु** । 'अहं वृन्दावनाख्यानार्थं विमर्शं कृतवान् । तथापि न क्रोडीकृतम् । त्वं सम्यग्विमर्शनं कुरु' इति **(प्राणिनां पापनाशिनीं)** सुधावाणीं

---

(१) (पुत्रबुद्धिप्रतारकैः एम्बल्लिरुव पुत्रपदक्के विप्रपरमगुरुवाद विश्वाधीशतीर्थर एन्दर्थ. अवर बुद्धिगे मोहवागुवन्ते विप्रविरोधिगळु मठद मूढरु श्लोकमाडिकोण्डु विप्रनु यावुदो हळे श्लोक ओदिकोण्डु कालक्षेप माडुत्तिद्दाने, गुरूपदिष्टवाद पाठ ओदुवुदिल्ल एन्दु दूषणे माडुत्तारे. अदरिन्द विप्रनिगे हानियागुवुदिल्लवेन्दु इल्लि भरवसे इदे.)

श्रृणु । तद्वाण्याः श्रवणात् । श्रेयसां पुण्यानां । श्रेणीं (सदा) प्राप्नोषि ।।२७।।

**मन्नन्दनपदं धन्यं ध्यात्वा त्वं तु दिने दिने ।**
**कन्दनं मदनावासं तदनङ्गीकुरु प्रिय ।।२८।।**

**मन्नन्दनगृहद्वारि शुनवत्संस्थितो भव ।**
**शृणु तद्गुणसम्भूतिं भण वृन्दावने कृतिम् ।।२९।।**

**इदं मे बुद्धिचातुर्यं क्रुद्धस्त्वाचार्य मा भव ।**
**वृद्ध श्रुत्वा सदा कार्यं श्रद्धावान् शृणु कार्यतः ।।३०।।**

(अन्वयः) हे प्रिय! दिने दिने धन्यं मन्नन्दनपदं ध्यात्वा त्वं तत् कन्दनं मदनावासं तु अनङ्गीकुरु । मन्नन्दनगृहद्वारि शुनवत् संस्थितः भव । तद्गुणसम्भूतिं शृणु; वृन्दावने कृतिं भण ।। इदं मे बुद्धिचातुर्यं (शृणु) । हे आचार्य! (त्वं) कार्यं श्रुत्वा क्रुद्धः मा भव । हे वृद्ध! कार्यतः सदा श्रद्धावान् (भव) ।

(व्या) मन्नन्दनस्य त्वत् परमगुरोः धन्यं पदं ध्यात्वा दिने दिने प्रसक्तं दुष्टानां मदनावासं मन्मथाश्रयं (तत्) कदनं कलहं नाङ्गीकुरु । स्त्र्यदिमूलेन । 'अयं मया वशीकर्तव्यः । अयं मया वशीकर्तव्यः' इति दुष्टानां (स्त्रीणां) कलहो भविष्यति । स त्वया सर्वथा नाङ्गीकर्तव्यः इति भावः । गृहान्तःशयने दुष्टानां प्रयत्नस्य चावकाशो भवति । तस्मात् स परित्याज्य इति भावेनाह – मन्नन्देनेति ।। मन्नन्दनगृहद्वारि शुनवत् यथा निशादौ चोरादीनां समावेशेऽपि श्वा जागरूको वर्तते तथा त्वमपि जागरूकः सन् संस्थितो भव । तद्गुणसम्भूतिं = तस्य त्वत्परमगुरोः गुणत्वेन शिष्यत्वेन सम्भूतिं सम्यक् भवनम्, शृणु । 'त्वद्गुरोः वृन्दावनप्रवेशानन्तरं त्वत्परमगुरोः पुत्राभावादन्यस्यैव संस्थानं प्रदातव्यमिति दुष्टानां बोधनसमये ते परमगुरुः त्वां प्रति त्वं मेऽपि ममापि पुण्यदिनं कुरु । पुत्रवत् भव' इति वदिष्यति । तत् शृण्विति भावः । तदाज्ञया निर्भयः सन् वृन्दावनकृतिं भण ।।२९।।

मे मया । प्रतिपादितमिदं बुद्धिचातुर्यं शृणु । त्वदपकारिष्वपि परमगुरुसम्बन्धिषु । तदभिमतं कार्यं श्रुत्वा क्रुद्धो मा भव । कार्यतः मत्सङ्कल्पसिद्धकार्यात् । त्वं श्रद्धावान् भव ।।३०।।

**अहं गच्छामि मच्छापः स्वच्छानां न भविष्यति ।**

**कृच्छ्रात् कृच्छ्रतरं यान्तु मच्छापात् कुत्सिता नराः ।।३१।।**

**अयं तु कुजनः कृष्णोऽप्यप्पणः फणिबुद्धिमान् ।**
**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।।३२।।**

**गाळीदानेन चैनं तु तोळयामि पुनः पुनः ।**
**ताळकाण्डेन तं विप्रं का(तो?)लयामि पुनः पुनः ।।३३।।**

**(अन्वयः) अहं गच्छामि; स्वच्छानां मच्छापः न भविष्यति । कुत्सिता नराः मच्छापात् कृच्छ्रात् कृच्छ्रतरं यान्तु । अयं कृष्णः अपि अप्पणः कुजनः फणि-बुद्धिमान् तु । एनं तु पुनः पुनः च गाळीदानेन तोळयामि । पुनः पुनः ताळकाण्डेन तं विप्रं कालयामि ।**

**(व्या) अहमिति ।।** तव परमगुरोरन्तर्यामितया स्थितोऽहं मूलरूपं **गच्छामि** । अनेन विप्रपरमगुरोः देहत्यागः उक्तो भवति । **दुःसङ्गवशात्** कृतापराधानामपि **स्वच्छानां** स्वभावतो मुक्तियोग्यानां **मच्छापो न भविष्यति** । स्वभावतः **कुत्सिता नराः** = अयोग्याः[(१)] **कृच्छ्रात् कृच्छ्रतरं यान्तु** । अनेन विप्रापकारिणां तत्परमगुरुसम्बन्धिनाम् असज्जीवानामनिष्टमुक्तं भवति[(२)] ।।३१।। अयं बुद्धिस्थः **अप्पण्ण कृष्ण**भट्टाख्यः पुरुषः **कुजनः फणिबुद्धिमान्**

---

(१) (मच्छापात् 'मच्छापात्' ई शापवु विध्युक्तवाद दैत्यद्वेषद कार्य. स्वरूपसङ्कीर्तनरूपवादद्दु. दैत्यजीवरु तमस्सिगे होगिये होगुत्तारे. आ दुर्योधनादिगळिगे तमस्सु आगलि एम्ब नम्म हारैकेयिन्द नम्म पुण्य खर्चागि अवरु तमस्सिगे होगुवुदिल्ल. नम्म शापवु अवरिगे अवश्यम्भावियाद दुष्फलसङ्कीर्तन मात्र. सिद्धार्थानुवादक. अन्थ शापक्के पुण्यवू बरुत्ते. ऋजुगळु कूड इन्तह शापवन्नु कोडुत्तले इरुत्तारे. 'तत्तद्योग्यकालदल्लि पापपूर्ति होन्दि अवरु हाळागलि' एन्दु अवर अभिप्राय. श्लोक १४।६३ नोडबेकु.)
(२) (परमगुरुसम्बन्धिगळु असज्जीवरू केलवरिद्दरु एन्दु हेळिद्दरिन्द दैत्यजीवरु वैष्णवयोनियल्लि उडुपियल्लू हुट्टुत्तारे. अल्लू सज्जनरन्नु दुर्मार्गक्के एळेदु साधुगळिगू प्रतिबन्धकगळन्नोड्डि, तमस्साधनेयन्नु माडिकोळ्ळुत्तारेन्दु सूचितवागुत्ते. अदक्के दृष्टान्तवो एम्बन्ते ३२ने श्लोकदिन्द अप्पणन स्वभाव हेळल्पडुत्तदे. नन्तर देशीयब्राह्मणन चरित्रे हेळल्पडुत्ते. आदरू अप्पण्णनु मुक्त्ययोग्यनल्लवेन्दु ११।७७रल्लि सूचितवागुत्ते. आदरू निर्णीतवागि खचितवागि आतनु मुक्तियोग्यनेन्दु हेळल्पट्टिल्ल. हागे देशीयब्राह्मणन विषयदल्लू १४.४५रल्लि आतनु मुक्तियोग्यनिरबहुदेन्दु सूचितवादरू साहित्यमुद्रेयिन्द आ श्लोक प्रवृत्तवागिरबहुदु. आतनु दैत्यने एन्दू तोरुत्तदे. निर्णय कष्टवागिदे. प्रकृत ई ३२-३३रल्लि

सर्पबुद्धिमान् अप्पण्णकृष्णभट्टः विप्रगुरौ द्वेषी । विप्र तत्परमगुरौ च द्वेषी । तयोरुभयोरपि लोकान्तरगमनानन्तरम् । विप्रे द्वेषवान् अत एव सर्पवद्दीर्घद्वेषयुक्तबुद्धिमान् । एनं अप्पण्णकृष्णभट्टं[१] गालीदानेन गुरूक्तिरूपेण तोलयामि (तथा पुनः पुनः तालकाण्डेन तेन धृतलगुडविशेषेण च तत्स्वरूपं निर्णयामीत्यर्थः) (इदमपि पूर्वोक्तं एकादशाध्याये निरूपितं निदर्शनं सत्यम् अभूदिति भावः) ।।३३।।

**एतत्कृतौ सुदार्ढ्यार्थं मूढविप्रमुखेन तु ।**
**काठिन्यं वच्मि पाठेन सौष्ठवेनैव चात्र तु ।।३४।।**

**स्त्रीमुखेनापि काऽत्रापि शङ्का माऽस्तु सुपुत्रक ।**
**श्लोकान् वक्तुं प्रविष्टोऽहं काकबुद्धौ द्विजोत्तमे ।।३५।।**

**तोके लोकापवादेन शोको नास्ति ममेह च ।**

**(अन्वयः) अत्र मूढविप्रमुखेन तु एतत् कृतौ सुदार्ढ्यार्थं सौष्ठवेन पाठेन एव काठिन्यं वच्मि । हे सुपुत्रक! अत्र स्त्रीमुखेन अपि का? इति शङ्का अपि माऽस्तु । काकबुद्धौ द्विजोत्तमे अहं श्लोकान् वक्तुं प्रविष्टः अस्मि । मम इह तोके लोकापवादेन च शोको नास्ति ।**

**(व्या) एतत्कृतौ** एतस्यां कृतौ **सुदार्ढ्यार्थं** सुनिश्चयार्थं 'एवमेव' (१४।१२) इत्यारभ्य 'विप्रत्वं तव पुत्र तु मम नाम्ना समाह्वय'(१४।२३) इत्यन्तं एतस्मिन् अध्याये उक्तम् अनुसन्धत्स्व इति पूर्वेणान्वयः ।

**हे सुपुत्रक! मूढविप्रमुखेन** (स्त्रीमुखेनापि) मृदुभाषित्वेन स्त्रीमुखसदृशेन **सौष्ठवेनैव पाठेन काठिण्यं** (दुर्ज्ञेयार्थगर्भितं श्लोकं) **वच्मि** = वक्ष्यामि । तदपि **एतत्कृतौ** सुदार्ढ्यार्थमेव (अत्र तु एतस्मिन् काले देशे एव सः मुग्धः । न तूत्तरजन्मनि अत्र कापि

---

अप्पण्णभट्टन विवर एके हेळिद्दारेन्दरे ई पापियु विप्रन परमगुरुगळ समीपक्के दोड्ड दोण्णे हिडिदुकोण्डु बन्दु असाध्यबैगळयुक्तमातिनिन्द विप्रनन्नु निन्दिसि बेरे इन्नोब्बनिगे सन्न्यास कोडि एन्दु पुनः पुनः बोधिसिदनु. आदरू विवेक बिडदे आ पुण्यात्मरु बेरे सन्न्यास कोडलिल्ल. विप्रनन्ने तमगू पुण्यदिवसकर्तनन्नागि ओप्पिकोण्डरु.)

(१) (इति पूर्वं (११।७१-७८) श्लोकेषु मया प्रोक्तमनुसन्धत्स्व हे बुद्धिमन् विवेकयुक्त)

शङ्का मास्तु) ।।३४।। अत्र अस्मिन् विषये मदुक्तरीत्या पूर्वोत्तरानुसन्धानेन ज्ञाततात्पर्यस्य तव शङ्का द्वितीयजन्मनि[१] किमयं स्वप्नद्रष्टा विप्रः उतान्यः, किमेते एव आख्यानोक्त शेषादयः उतान्ये इति संशयः तव मास्तु ।।

**काकबुद्धौ** काकवत् परभृतोऽण्डानि स्फुटीकृत्य रक्षन्तीति प्रसिद्धम् (काकस्तु पिण्डं दृष्ट्वा अन्य काकान् आह्वयति; एकाकी न भुङ्क्ते इत्यपि ग्राह्यः) । अत एव द्विजोत्तमे **श्लोकान् वक्तुम् अहं प्रविष्टः** ।।३५।। एतादृशे **तोके लोकापवादेन** 'स्त्रीसङ्गिनः कथं चास्य'(१४।२१) इत्युक्तरीत्या तवभ्रान्तिकारणलोकापवादेन दुष्टजनोक्तापवादेन **इह मम शोको नास्ति** ।।

**(अव)** एवं दुष्टानां दुर्बोधनेऽपि उपकर्तुः विप्रपरमगुरोः वृत्तान्तमुक्त्वा विप्रापकारिणः कस्यचिद्विप्रस्य अभक्तस्य वृत्तान्तमाह – **प्रश्नमिति ।।**

**प्रश्नं न कुरुते तत्वे न स्नाति मम तीर्थके ।।३६।।**

**आश्नाति मृष्टमन्नं मे शिश्नोदरपरायणः ।**
**ज्ञानिन् कटाक्षतश्चोक्तं जानीहि त्वं सुपापिनम् ।।३७।।**

**धीमन्न कुरु तद्वाक्यं धीमान् भव सदा बुध ।**
**तल्लक्षणं न वक्ष्यामि त्वमाचक्ष्व विचक्षण ।।३८।।**

**सङ्क्षेपतश्चोक्तमेतत्कालक्षेपस्य शङ्कया ।**
**तद्वाणीं न शृणु प्राणिन् प्राणिनः प्राणिनां वर ।।३९।।**

**(अन्वयः) (कश्चिदभक्तः) तत्वे प्रश्नं न कुरुते; मम तीर्थके न स्नाति । शिश्नोदरपरायणः (सन्) मे मृष्टमन्नम् अश्नाति । हे ज्ञानिन्! कटाक्षतः उक्तं च त्वं सुपापिनं जानीहि । हे धीमन्! तत् वाक्यं न कुरु; हे बुध! सदा धीमान् भव । हे विचक्षण! तत् लक्षणं न वक्ष्यामि; त्वम् आचक्ष्व । कालक्षेपस्य शङ्कया एतत् सङ्क्षेपतः उक्तं च; हे प्राणिनां वर तत् प्राणिनः वाणीं न शृणु ।।**

---

(१) (श्रीमुष्णाचार्यरु 'द्वितीयजन्मनि' एम्ब पददिन्द इल्लि 'विप्रस्य परमहंसजन्मनि' एम्ब अर्थवन्नु बोधिसुत्तारे. वस्तुतः गृहस्थ एडमूकजन्म, पौराणिक विप्रजन्म गृहस्थ, परमहंसजन्म हीगे मूरु जन्म विप्रनिगे आगिवे एन्दु सूचितवागुत्ते.)

(व्या) कश्चिदभक्तः तत्वे तत्वविषये प्रश्नं न कुरुते । मम तीर्थके मत्कृतवृन्दावनाख्यानरूपे न स्नाति = तदर्थावगाहनं न करोति ।। शिश्नोदरपरायणः सन् मन्मठीयमृष्टमन्नं अश्नाति । हे ज्ञानिन्! सः मया नामतः नोक्तः, कटाक्षतः नयनसूचनेन उक्तम् । सुपापिनं तं जानीहि ।।३७।।

हे धीमन् बुद्धिमन्! त्वं तद्वाक्यं न कुरु । हे बुध विप्र! सदा धीमान् भव । तस्य लक्षणमहं विस्तरेण न वक्ष्यामि । (हे विचक्षण!) त्वं लक्षणमाचक्ष्व ।।३८।।

कालक्षेपस्य शङ्कया एतत् अभक्तपुरुषविशेषस्य लक्षणं सङ्क्षेपतः उक्तम् । प्राणिनां वर! जीवानां श्रेष्ठ! हे प्राणिन्(साधु) विप्र । प्राणिनः (नीचस्य) दुष्टप्राणिनः । प्रागुक्तस्य वाणीं = 'वृन्दावनाख्यानपारायणं न कुरु' इति वाणीम् । न शृणु ।।३९।।

**श्रेणीं प्राप्नोषि पुण्यानां मद्वाणीं शृणु(ष्वे?)षेति चेत्।**
**विप्रमुद्दिश्य यत्प्रोक्तं तत्प्रोक्तं च मयैव तु ।।४०।।**

(अन्वयः) मद्वाणीं शृणुषेति चेत् पुण्यानां श्रेणीं प्राप्नोषि । यत् विप्रम् च उद्दिश्य प्रोक्तं तत् तु? मयैव प्रोक्तम् ।

(व्या) मद्वाक्यं शृणुष्वेति चेत्, पुण्यानां श्रेणीं प्राप्नोषि । शृणुष्वेति चेत् इत्यलौकिकप्रयोगः । एवमादिकं यन्मया विप्रमुद्दिश्य प्रोक्तम् तन्मयैव (वादिराजगुरुभिरेव) उक्तम् ।।४०।।

**तत्प्रोक्तं पापिना तेन विप्रः स्वार्थं तदुक्तवान् ।**
**इति तद्वचनं किञ्चिन्न शृणु त्वं च नन्दन ।।४१।।**

**क्रकचच्छेदनं प्राप्य छिन्नभिन्नो भविष्यति ।**
**मा ददस्वेति यो ब्रूयाद्द्रव्यं गोब्राह्मणेषु च ।।४२**

**स याति निरयं घोरं यावदाभूतसम्प्लवम् ।**
**तस्मान्न शृणु तद्वाक्यं मद्वाक्यं शृणुषे(ष्वे?)ति चेत् ।।४३।।**

**एतद्वाक्यमपि प्रेष्ठ द्विजोक्तमिति वक्ष्यति ।**
**सोऽत्यन्तं तव विश्वासी देशीयो ब्राह्मणो ह्ययम् ।।४४।।**

**(अन्वयः) तत् प्रोक्तं तु? तेन पापिना 'विप्रः स्वार्थं तदुक्तवान्' इति (?); हे नन्दन! त्वं तत् वचनं च किञ्चित् न शृणु । (सः) क्रकचच्छेदनं प्राप्य, छिन्नभिन्नः भविष्यति । गोब्राह्मणेषु च मा ददस्व इति यः ब्रूयात् सः यावत् आभूतसम्प्लवं घोरं निरयं याति । तस्मात् तद्वाक्यं न शृणु । 'मद्वाक्यं श्रुणुषेति चेत्' एतद्वाक्यमपि हे प्रेष्ठ द्विजोक्तम् इति वक्ष्यति ।**

**(व्या) विप्रः तत् स्वार्थं** 'मा कुरु' इत्युक्तवान् इति तेन पापिनोक्तम्[१] । तत्र **तद्वचनं त्वं न शृणु** । न हि स्वकृते कोऽपि स्वदोषं प्रतिपादयति । अस्मिन् ग्रन्थे प्रतिपादितं आत्मदोषं (विप्रदोषं) अविज्ञाय, स पापी पुरुषः अस्मिन् आख्याने जनानां अविश्वास- मुत्पादयितुं 'तेनैव कृतं (विप्रेणैव कृतं) इदमाख्यानम्' इति तेन पापिना प्रतिपादितम् । 'मूकोऽहम्' इतिवद्विरुद्धं त्वया न श्रोतव्यमिति भावः[२] ।।४१।।

तस्य परलोके भाविकार्यं (अनिष्टं) आह – **क्रकचेति ।।** (नरके क्रकचछेदनेन । छिन्नदेहवान् भविष्यति) तद्गतं दोषान्तरमप्याह – **मा ददस्वेति ।।** यः (= सः) प्रागुक्तपापी ब्राह्मणेषु गव्यप्रदानसमये 'गोब्राह्मणेषु गव्यं मा ददस्व' इति ब्रूते । तत्प्रतिबन्धकं करोति दानविघ्नं करोति इति भावः ।।४२।।

तस्य निरयरूपमनिष्टमाह – **स यातीति ।। आभूतसंप्लवं** दिनकल्पपर्यन्तं (**निरयं**

---

(१) (विप्रने! बेळिग्गे एद्दु बन्दु 'एलै विप्रने निन्न स्नेहितनोब्बनु आख्यानग्रन्थवन्नोदबेड एन्नुत्ताने. आ देशीयब्राह्मणन मातन्नु केळि केडबेड' एन्दु बरेयिसिद्दाने. स्वार्थसाधनेगागि बरेयिसिद्दाने एन्दु आ पापि हेळुत्ताने.)

इन्नोन्दु जन्मक्के अन्वयिसुवाग 'विप्रनु हळेयमित्रनन्नु त्यागमाडलु उपाय हुडुकि, 'वृन्दावनाख्यानदल्लि देशीयब्राह्मणनन्नु विश्वासमाडबेड. अवन मातन्नु नडेसबेड' एन्दु हेळिदे एन्दु स्वार्थवागि हेळुत्ताने. आदरे आ मातन्नु ताने सृष्टिमाडिद्दाने. आ मातु वृन्दावनाख्यानदल्लि इल्लवे इल्ल एन्दु आ पापियु हेळुत्ताने. आ पापिय मातन्नु नम्बबेड एन्दु लक्ष्मीपतिगे बोधने. एकेन्दरे विप्रनु केवल अज्ञ. एष्टो शोकगळल्लि आत्मदोषवन्नु बरेयिसिद्दाने. आत्मनिन्देयन्नू बरेयिसिद्दाने.)

(२) (ननगेनो ई विप्र एष्टु ओदिद्दाने. एनु माडुत्ताने मुन्ताद ओन्दू तिळियदु. आदरे ई श्लोक विप्रने बरेयिसिद्दाने एन्दु हेळिदरे, मूकोहं एम्बन्ते विरोधवे. हागे 'नानु वृन्दावनाख्यान ओदिल्ल. आदरू ई श्लोक वृन्दावनाख्यानदल्लि इल्ल एन्दु हेळिदरे 'मूकोऽहं' एम्बन्ते विरोधवे बरुत्ते.)

**घोरं याति** इति भविष्यवचनमेतत् । अनेन 'स मुक्त्ययोग्यः' इति सूचितः भवति ।) । **तस्मात्** कारणात् **तद्वाक्यं** न शृणु । **मद्वाक्यं शृणुष्वेति चेत्** इत्युक्तार्थमिदानीं लक्ष्मीपतिं प्रत्युक्तः ।।४३।।

**एतदिति ।।** एतदपि वाक्यं (''स याति निरयं घोरं यावदाभूतसंप्लवम्'' इति वाक्यमपि) द्विजेन कल्पितमित्यपि कदाचिद् वक्ष्यति स विप्रः । **तव** (तव मयि एन्दु श्रीव्याख्यान. तव एन्दु वृं मूलक्के अनुसारियागि नानु बरेदिरुत्तेने) **अत्यन्तविश्वासी** । **देशीयः** महाराष्ट्रदेशीयः ।।४४।।

**कोशार्धमपि दास्यामि दासाय भवसागरे ।**
**जन्मान्तरे कर्मनाशे ध(घ)र्मान्ते शर्म वर्म च ।।४५।।**

**कुर्मः कूर्मोऽमृताब्धौ च नर्ममात्रेण धर्मिणाम् ।**
**देवतानां मानवानां दानवान्तक एव सन् ।।४६।।**

**दत्तवान् मित्र सन्तापं कृतवान् शस्त्रजं भयम् ।**

**(अन्वयः) दासाय भवसागरे कोशार्धमपि दास्यामि । जन्मान्तरे कर्मनाशे घर्मान्ते शर्म वर्म च कुर्मः । (यथा) कूर्मः दानवान्तक एव सन्, अमृताब्धौ नर्ममात्रेण धर्मिणां देवतानां मानवानां शर्म (वर्म च) दत्तवान्; हे मित्र! शस्त्रजं भयं सन्तापं कृतवान् (तथा अहमपि विप्रश्चापकारिणाम् अनिष्टं विप्रस्येष्टं च ददामि)।**

**(व्या) भवसागरे दासाय** तस्मै विप्राय **कोशार्धं** त्रिलोकाधिपत्यं दास्यामि । तत्कदा? **जन्मान्तरे** = मम ब्रह्मत्वदशायां **कर्मनाशे** त्रिलोकाधिपत्यप्रतिबन्धककर्मनाशे सति **धर्मान्ते** क्रतुशतरूपाणाम् अन्ते **शर्म** सुखं **वर्म** कवचरूपमनुग्रहं वा **कुर्मः**[१] ।।४५।।

---

(१) (ई ब्राह्मणपापिगे मुन्दे इन्द्रपदवि कोडतक्क निरूपणेयु केवल साहित्यमुद्रे. आ ब्राह्मण नन्नल्लि विश्वासमाडुत्तानल्ला, अवनिगे नरकवादरे हेगे न्यायवागुत्ते एन्दरे आगलप्पा अवनु निन्न प्रीति अथवा नन्न प्रीतिमाडिद्दक्के अवनिगे स्वरूपयोग्यते इद्दरे मुन्दे अवनिगे इन्द्रपदवी कोडुत्तेने, अवनु १००याग माडलि, ईग आख्यान निन्दे माडिद्दक्के दिनकल्प नरकक्के होगि बरलि' एन्दु साहित्यमुद्रेयिन्द उत्तर कोट्टिद्दारे. वस्तुतः 'देवानां निरयो नास्ति; तमश्चापि कथञ्चन' एन्दिरुवुदरिन्द ई ब्राह्मण इन्द्रपदवी

**यथा कूर्मः** कूर्मावतारो हरिः **अमृताब्धौ** क्षीरसमुद्रे **दानवान्तकः** सन्नेव, **नर्ममात्रेण** विनोदमात्रेण धर्मिणां (किन्तु) स्वाभाविकपुण्यरहितानां (**हे मित्र**) **सन्तापं दत्तवान्** । **शस्त्रजं भयं च कृतवान्** । देवतानां मानवानां मनुसम्बन्धिनां गन्धर्वादीनां च **शर्म सुखं दत्तवान्** । तथा विप्रश्चापकारिणाम् अनिष्टं विप्रस्येष्टं च ददामि[१] ।।४६।।

**जानीहीत्यत्र चाऽनीतं वर्णवैषम्यतः सुत ।।४७।।**

**जानीहि तस्य वैषम्यात् स्वरूपं त्वं मुनीश्वर ।**
**मद्दा(?)त्ताचार्य नाम्नापि कदापि न वदत्यहो ।।४८।।**

**वदाद्य विबुधेश त्वं मदान्धस्य सुपापिनः ।**
**साम्ना वच्मि सुसाम्ना यो न भणत्यन्त्य एव सः ।।४९।।**

**(अन्वयः) हे सुत! जानीहि इत्यत्र वर्णवैषम्यतः च तस्य वैषम्यात् स्वरूपं च आनीतम्; जानीहि । हे मुनीश्वर कदा अपि मद्दत्ताचार्यनाम्ना अपि न वदन्ति । अहो । हे विबुधेश! त्वम् अद्य वद । साम्ना मदान्धस्य सुपापिनः वच्मि । यः सुसाम्ना न भणन्ति, स एव अन्त्यः ।**

**(व्या)** पूर्वं **'जानीहि'** इत्यत्र = 'जानीहि त्वं सुपापिनम्' इत्यत्र **(वर्णवैषम्यतः =)** वर्णानाम् अक्षराणां वैषम्येण व्युत्क्रमेण कृतत्वरूपवैषम्येण वा **(आनीतं =)** सूचितम् । प्रागुक्तपापिनः हीनजं **स्वरूपं जानीहि** ।।४७।।

**मुनीश्वरेति ।।** मुनिः वृन्दावनाचार्यः, ईश्वरो यस्य इति लक्ष्मीपतेः सम्बोधनम् ।। **मद्दत्तेन ।।** वृन्दावनाचार्येति नाम्ना कदाप्ययं न भणति ।।४८।।

**हे विबुधेश!** लक्ष्मीपते त्वं मद्दत्तेन आचार्यनाम्ना **वद** । **मदान्धस्य सुपापिनः** विषये

---

योग्यते उळ्ळवनागिद्दरे इवनिगे दिनकल्प नरकद प्रसक्तिये इल्ल. आद्दरिन्द इवनु स्वरूपतः पापिये सरि एन्दु निश्चय तिळिदुकोळ्ळबेकु. अन्तहवरु विप्रप्रेम, गुरुराजर प्रेम माडिदरू यावुदादरू वरदल्लि पर्यवसानहोन्दि तामसज्ञानदिन्द मुन्दे नित्यनरकवे आगुत्ते.)

(१) (एवं च दैत्यजीवनु याव धर्ममाडिदरू, याव दोड्डवरल्लि मोसद स्नेह माडिदरू कोनेयल्लि अनिष्ट तप्पिदल्ल. एकेन्दरे अवनु देवद्वेषि. देवकार्यवाद आख्यानदल्लि अप्रामाण्य तिळिदु इतररिगू सुळ्ळुकल्पनेयिन्द अप्रामाण्यशङ्केयन्नुंटु माडुत्ताने. आ गुरतरपापक्के क्रमवागि तमस्से फल.)

**साम्ना** सामवचनेन वक्ष्यामि । मदुक्तेन (सु)साम्ना (अतिविनयपूर्वक) वचनेन यः विप्रं वृन्दावनाचार्य (इति) नाम्ना न भणति, सः **अन्त्य एव** = चण्डाल एव ॥४९॥

**दाम्ना बध्वा नयिष्यामि चाम्नायात्सुबहिष्कृतम् ।**
**दूतैर्यमस्य सौम्यत्वं काम्यं वा नास्ति तस्य च ॥५०॥**

**स्वाम्यमात्रेण सन्तुष्टो भौमसंयमिनीपुरे ।**
**क्रकचैदार्यते पुत्र स्वकचेषु प्रगृह्य च ॥५१॥**

**श्वपचैर्नीयते मार्गे प्रपच्येत नराधमः ।**
**नाममात्रेण वा तोषं पोषयस्व न शोषय॥५२॥**

**मृषा न हि सुषेणाग्र्य तावतैव प्रहर्षय ।**

**(अन्वयः) आम्नायात् सुबहिष्कृतं (तं पापिनं पुरुषं) यमस्य दूतैः दाम्ना बध्वा नयिष्यामि । तस्य सौम्यत्वं वा काम्यं वा नास्ति च । हे पुत्र (सः) स्वाम्यमात्रेण सन्तुष्टः (सन्) भौमसंयमिनीपुरे स्वकचेषु प्रगृह्य क्रकचैः दार्यते च । (सः) नराधमः मार्गे श्वपचैः नीयते, (नरके) प्रपच्येत । नाममात्रेण वा (तं) पोषयस्व; न शोषय । हे सुषेणाग्र्य! (इदं) मृषा न हि, तावता एव (तान्) प्रहर्षय ।**

**(व्या) आम्नायात्** मदुक्तात् **सबहिष्कृतम्**[१] पापिनं पुरुषं **यमस्य दूतैः दाम्ना** पाशेन **बध्वा, नयिष्यामि** । तस्य[२] मया भवितव्यं **काम्यं** क्षुद्रकाम्यं क्षुद्रकाम्यफलं वा नास्ति ॥५०॥

---

(१) (१)स्वा मत्तु श्रीयल्लि स बहिष्कृतं एन्दिदे. बहिष्कृतं बहिष्कारः । बहिष्कृतेन सहितः सबहिष्कृतः, तं एन्दु अर्थ माडबेकु. आदरू सुबहिष्कृतम् एम्बुदु स्वरस. वृं.मूल सुबहिष्कृतं एन्दिदे. (२) आम्नायात् एम्बुदक्के मदुक्तात् एन्दु बरेदिद्दारे. चण्डालत्व प्राप्तवादरिन्द आम्नायात् बहिष्कृतात् वेदाधिकाररहितं एन्दू अर्थ स्वरसवागिदे.)

(२) (तस्य । यमस्य । सौम्यत्वं । काम्यत्वं मनोहरत्वं वा नास्ति एन्दू अर्थवागुत्ते. श्रीमुष्णाचार्यर अर्थवेनेन्दरे, आ पापि माडिद इतर सेवेगळिगू पुण्यबरुवुदिल्ल. अवन सात्विक अदृष्ट, शुभगळेल्ला सुट्टुहोगुत्ते एन्दु अदू निजवे.)

**(स्वाम्यमात्रेण)** स्वामित्वमात्रेण (सन्तुष्टः सः) **(भौमसंयमिनीपुरे)** भूमौ भूसम्बन्धिनि संयमिनीपुरे **क्रकचैः दार्यते ।** 'अविद्यमानस्वामित्वानुसन्धानेन[१] एवं भविष्यति' इति भावः ।।५१।।

**स्वकचेषु प्रगृह्य श्वपचैः** नीचैः **मार्गे** यममार्गे **नीयते** (सः) **नराधमः** कुम्भीपाकादौ **प्रपच्येत** । तदीया ये जनाः कमलनाभप्रभृतयः । **तेषां** दर्शने सति (मूलदल्लि तोषं एन्दिदे. तेषां एन्दु ई व्याख्यान) **नाममात्रेण** प्रसिद्धिमात्रेण **पोषयस्व** = स्वलोकमर्यादां पोषयस्व । स्फुटं दुरुक्त्यादिना तान् **न शोषय** ।।५२।। (हे सुषेणाग्र्य! मृषा नहि पूर्वोक्तधर्मः प्राज्ञसम्मतः।) तावतैव । नाममात्रेणैव (तान् दुष्टान्) प्रहर्षय । न तत्र भक्त्यादिकं कुरु ।

**ब्राह्मणाऽमरणं वक्ष्ये कारणेन विनाऽप्यहम् ।।५३।।**

**पुनर्वाणीं हरिष्यामि प्रेरणामपि मे सदा ।**
**तस्मात् प्रतिज्ञाहान्यादिदोषो मम न कश्चन ।।५४।।**

**श्रीशपादाम्बुजासक्तसेवके मयि कोऽप्यरिः ।**
**नास्ति चास्तिकता चास्ति सक्तिरेव सदा हरौ ।।५५।।**

**(अन्वयः) ब्राह्मणाऽमरणं कारणेन विना अपि अहं वक्ष्ये । पुनः मे वाणीं सदा प्रेरणाम् अपि हरिष्यामि । तस्मात् मम कश्चन प्रतिज्ञाहान्यादिदोषः न । श्रीशपादाम्बुजासक्तसेवके मयि कः अपि अरिः नास्ति । आस्तिकता च अस्ति; हरौ सदा सक्तिरेव अस्ति ।**

**(व्या)** ब्राह्मणस्य आमरणं मरणपर्यन्तं तं **वक्ष्ये** ।।५३।। (अहं विना कारणं सेवाप्रार्थनादि इदानीन्तनकर्मनिरपेक्ष्य) । **पुनः** जन्मान्तरे मदुक्ता **वाणीं हरिष्यामि**, **सदा प्रेरणामपि** ।। तस्मात् जन्मान्तरे कृत्यर्थाद्यनुसन्धानाभावकाले पुनरनुपदेशेन **मम प्रतिज्ञा-**

---

(१) (अविद्यमानस्वामित्वानुसन्धान एन्दरे आ महाराष्ट्रपण्डितनु मौढ्यदिन्द अथवा दुराग्रहदिन्द विप्रने आख्यानकर्ता एन्दु हेळिद्दाने. अथवा जम्भदिन्द 'नाने आ श्लोकवन्नु माडिदेनु' एन्दु अपहासक्कोस्कर हेळिदाग, आख्यानशोकगळिगे स्वकर्तृत्ववन्नु आरोपिसकोण्ड हागायितष्टे! अन्थ हास्यक्कागि माडिद स्वामित्वानुसन्धानवू पापकार्यवे.)

**हान्यादिदोषो** नास्ति ।।५४।। **श्रीशपादाम्बुजासक्तसेवके** = श्रीशपादाम्बुजासक्ताः रुद्रादयो देवाः सेवकाः यस्य सः तस्मिन् । **मयि कोऽप्यरिः** कामादिशत्रुः नास्ति । **आस्तिकता** अतीन्द्रियधर्मादौ सत्यत्वबुद्धिः । सदा **अस्ति** । **हरौ सदा सक्ति**रासक्तिः । (एवकारेण अविच्छिन्नरूपेण द्वेषामिश्रतया आस्तीति योजना) ।।५५।।

**स्वास्थ्यं च मनसः सम्यक् सदाऽस्ति प्राश्निकोत्तम ।**
**अयोग्यश्रवणं न स्याद्यथा चाहं करोम्यलम् ।।५६।।**

**वाचने ब्राह्मणमतिं सूचनेऽपि हरामि च ।। ।।५६१/२।।**

**(अन्वयः) हे प्राश्निकोत्तम! मनसः सम्यक् स्वास्थ्यं च सदा अस्ति । अयोग्यश्रवणं यथा अलं न स्यात् (तथा) करोमि । ब्राह्मणमतिं वाचने सूचने अपि च हरामि ।।**

(व्या) **मनसः स्वास्थ्यं** स्वस्थत्वं सदा वर्तते । तस्मादस्य ब्राह्मणस्य दुःसङ्गतौ प्रसक्तायामपि **अयोग्यश्रवणम्** अयोग्येन पुरुषेण श्रवणम् अयोग्येनास्यार्थस्य वा श्रवणं **यथा न स्यात्** तथा **करोमि** ।।५६।।

अयोग्यसमीपे **वाचने** पठने स्वाभिमतार्थ**सूचने** वा **ब्राह्मणमतिं हरामि ।** एवमस्मिन् प्रकरणे विप्रोपकारिणः तत्परमगुरोः बहुदुर्जनसमावेशेपि (विप्रायैव) उपकारित्वं सत्सङ्गतौ सत्यामपि कस्यचित् पुरुषस्य भक्तिराहित्यम्; एतत् प्रतिपादकभागार्थनिश्चयार्थं एतदाख्यानार्थ निश्चयार्थं च; पूर्वोत्तरभागोक्तानां बहूनां निदर्शनानां लक्ष्मीपतिनानुसन्धेयत्वं च प्रतिपादितं ।।५६-१/२।।

### १४–०५७–०७३–विप्रप्रकरणम्

(व्या) 'वीति ज्ञानम्' इत्यारभ्य 'शेषशायिपदे शपे' इत्यन्तं पञ्चमं विप्रप्रकरणम् ।।

**वीति ज्ञानं समुद्दिष्टं ठेति तच्छून्य एव वा(च?) ।।५७।।**

**लेति तत्पालनं चापि समुद्दिष्टं मठेश्वर ।**
**पदार्थः कोऽर्थ इत्युक्ते तं च वच्मि सुलोचन ।।५८।।**

**विदा ज्ञानेन ठान् शून्यान् लाति गृह्णाति विठ्ठलः ।**

**इति विट्ठलशब्दार्थं पठन्ति भुवि पण्डिताः ।।५९।।**

**पट्टवर्धनकाष्ठासु श्रेष्ठ सम्यग्विचारय ।**

(अन्वयः) 'वि' इति ज्ञानं समुद्दिष्टम्; 'ठ' इति तच्छून्य एव च; 'ल' इति तत् पालनम् अपि च समुद्दिष्टम् । हे मठेश्वर! पदार्थः अर्थः कः? इति उक्ते, तं च वच्मि । हे सुलोचन! विदा ज्ञानेन ठान् शून्यान् लाति गृह्णाति (इति) विट्ठलः इति विट्ठलशब्दार्थं भुवि पण्डिताः पठन्ति । हे पट्टवर्धन! काष्ठासु श्रेष्ठ! सम्यक् विचारय ।

(व्या) 'विट्ठल भ्रष्टसन्मार्ग' (१४।१०) इत्यत्र विप्रगुरोः विट्ठलाख्यस्य भ्रष्टत्वं प्रतीयते । शिष्टलक्षणदुषान् त्वयीति विट्ठलसम्बन्धिनां दुष्टत्वमुक्तम् । 'विप्र तत्कृत्रिमश्लोकैः पुत्रबुद्धिप्रतारकैः' इत्यादिना परमगुरोः तदीयानां च बुद्धिभेदः प्रतीयते । तावता विप्रेण । स्वगुरोः परमगुरोर्वा तदीयानां केषाञ्चित् स्वभावतः शुद्धानां च । अयोग्यत्वं न मन्तव्यमिति भावेनाह – वीति ज्ञानमित्यादि ।। हे मठेश्वर विप्र! विट्ठलशब्दघटिकानि त्रीणिपदानि सन्ति । तत्र वीति पदेन ज्ञानम् उक्तम् । ठेति पदेन तच्छून्यो जन उच्यते । लेति पदेन तत्पालनम् उक्तम् । एवं पदत्रयस्यार्थ उक्तः । पदत्रयघटितस्य विट्ठलशब्दस्य अर्थः क उच्यते तम् अपि वक्ष्यामि । हे सुलोचन! समीचीन ज्ञानचक्षुष्क ।।५८।।

वीतिपदार्थेन विदा ज्ञानेन । ठान् शून्यान् । ज्ञानरहितान् पुरुषान् । पालनीयत्वेन लाति गृह्णाति विट्ठलाख्यस्तव गुरुः ।। काष्ठासु दिक्षु । उक्तप्रकारेण पण्डिताः विट्ठलशब्दार्थं पठन्ति । (हे पट्टवर्धन श्रेष्ठ काष्ठासु श्रेष्ठ कीर्तिमन् । सम्यक् विचारय । )

(व्या) (कथं विचारणीयः? इत्यत आह)

**एतदर्थानुकूल्येन निन्दावाक्यानि सुन्दर ।।६०।।**

**योज्यानि पूज्य सत्पुत्र रागद्वेषौ च नैव मे ।**
**तर्हि शापोक्तिरप्यत्र कुत्र ते च प्रयोजिता ।।६१।।**

**कृत्रिमश्लोककर्तॄणां पुत्र मे सुप्रयोजिता ।**
**तर्हि तत्रापि ते(तद्) द्वेषो भवतीत्यपि मा वद ।।६२।।**

**पुत्र तत्रापि मे चोक्तिरुपचारेण योजिता ।**
**भीषणार्थं सुषेणाग्र्य धिषणा स्यान्न तादृशी ।।६३।।**

**इति चोक्तिप्रेषणा मे दोषशोषण शृण्वहो ।**

**(अन्वयः) हे सुन्दर! एतत् निन्दावाक्यानि आनुकूल्येन योज्यानि । पूज्य सत्पुत्र (इति सम्बोधनात्); मे रागद्वेषौ न एव । तर्हि अत्र ते शापोक्तिः अपि च कुत्र प्रयोजिता? (इति चेत्) हे पुत्र! मे कृत्रिमश्लोककर्तॄणां सुप्रयोजिता । तर्हि तत्र अपि ते द्वेषो भवति इत्यपि मा वद । हे पुत्र! तत्र अपि उपचारेण मे उक्तिः च योजिता । हे सुषेणाग्र्य! भीषणार्थं यथा धिषणा न स्यात् तादृशी इति मे उक्तिप्रेषणा । शृणु । अहो ।**

**(व्या) हे सुन्दर! एतदर्थानुकूल्येन** ज्ञानरहितपुरुषपरिपालकत्वरूपविठ्ठलशब्दार्थस्य आनुकूल्येन **निन्दावाक्यानि** = 'विठ्ठल भ्रष्टसन्मार्ग' (१४।१०) इत्यादि निन्दावाक्यानि **योज्यानि** ।।६०।। न तु विठ्ठलस्य स्वरूपेण भ्रष्टत्वबोधकत्वेन योज्यानि । अनेन तव गुरुः स्वभावतः सत्पुरुषः । तथा परमगुरुरपि स्वतः सत्पुरुष इति सूचयितुं **पूज्ययोः** विठ्ठल तद्गुर्वोः **सत्पुत्रे**ति विप्रसम्बोधनम् । **(पूज्यसत्पुत्र** इति) (**रागद्वेषौ च नैव मे** । स्वभावतः ऋजोर्मम अज्ञानकार्यभूतरागद्वेषौ न स्तः । न कदापि तामसगुणकार्येण क्रोधेनाविष्टः शापं दास्यामि ।) तर्हि मम गुरोः परमगुरोश्च सत्पुरुषत्वे तयोर्विषये भवतो रागद्वेषयोरभावे **(ते) शापोक्तिः** (कृच्छ्रात् कृच्छ्रतरं यान्तु इत्यादि) **कुत्र प्रयोजिता** इति चेत् ।।६१।। ये मदुक्त श्लोकानां कृत्रिमश्लोकत्वेन व्यवहारकर्तारः स्वतः दुष्टाः तेषां विषये (मे) शापोक्तिः **सुप्रयोजिता** ।। **तर्हि तत्रापि** कृत्रिमश्लोककर्तृष्वपि, **ते** (वादिराजगुरोः) **द्वेषो भवतीति मा वद** ।।६२।। **(हे पुत्र)** शापविषयजनाः तावद्द्विविधाः । स्वतः सज्जनाः दुःसङ्गदोषेण कृत्रिमश्लोककर्तारः । स्वतः दुर्जनाः स्वबुद्ध्यैव कृत्रिमशेककर्तारः इति । तत्र प्राथमिकेषु या शापोक्तिः सा **उपचारेण प्रयोजिता** । **भीषणार्थं** भयोत्पादनार्थं । (हे सुषेणाग्र न तादृशी धिषणा स्यात् । एष विनष्टो भवत्विति सङ्कल्पो नास्ति मयि) भयोत्पादनार्थं शापोक्तिं श्रुत्वा पश्चात्तापं प्राप्य कृत्रिमश्लोककर्तृत्वप्रयोजकीभूता दुर्बुद्धिः न स्यादिति तात्पर्येण ।।६३।। (इति तात्पर्येण एव) **उक्तिप्रेषणा** उक्तेः प्रेषणं यस्यां शापोक्तौ सा उक्तिप्रेषणा (शापोक्तिः) । **(मे)** मया कृता (भवति) ।

**मद्भक्ताः सुखिनः सन्तु शश्वज्जीवन्तु कान्त ते ।।६४।।**

**शान्तिं यान्तु ममैकान्ताः स्वान्तःस्थहरिचिन्तया ।**
**तस्माद्वा मे तपोहानिर्नास्ति दोषोऽपि कश्चन ।।६५।।**

**शास्ति मां शाश्वतीं(ती?) भक्तिं हयग्रीवः कृपाम्बुधिः ।**
**हयग्रीवप्रसादोऽयमीदृशो वर्तते मयि ।।६६।।**

(अन्वयः) हे दोषशोषण! कान्त! (ई वाक्यगळु देवरु हेळिदे? ते भक्ताः एन्दरे अन्वय एल्लिगे???) (ते) मद्भक्ताः सुखिनः सन्तु शश्वत् जीवन्तु; ममैकान्ताः स्वान्तःस्थहरिचिन्तया शान्तिं यान्तु । तस्मात् मे कश्चन तपोहानिः वा दोषः अपि नास्ति । हयग्रीवः कृपाम्बुधिः मां शाश्वतीं भक्तिं शास्ति । ईदृशः अयम् हयग्रीवप्रसादः मयि वर्तते ।

(व्या) तस्मात् (अहो! हे दोषशोषण! श्रुणु । ते प्रसिद्धाः) मद्भक्ताः सुखिनः सन्तु शश्वत् एकप्रकारेण जीवन्तु (हे कान्त इति सम्बुद्धिः)।।६४।।

तेन मम च (स्वान्तःस्थहरिचिन्तया) स्वान्तःस्थस्य चित्तसन्निहितस्य हयग्रीवस्य चिन्तया (ममैकान्ताः शान्तिं यान्तु) इति भक्तानां सुखादिसाधनकथनमुक्तं भवति । तस्मात् सज्जनेषु अनिष्टप्रापकशापोक्त्यभावात् । मम तपोहानिर्नास्ति । अधर्मोऽपि नास्ति ।।६५।।

कृपाम्बुधिः हयग्रीवः मां प्रति शाश्वतीं भक्तिं शास्ति(१) = भक्तिमार्गमुपदिशति। (ईदृशः हयग्रीवप्रसादः मयि वर्तते)

**भवग्राहाच्च मां(मे?) नित्यं त्याजयामास पूजया ।**
**अहमाराधनं तस्य कारयामि त्वयाऽपि च ।।६७।।**

**प्रेरयामि सुबुद्धिं ते तारयामि भवाब्धितः ।**
**तस्मादाराधनं तस्य नित्यं कुरु मनोरम ।।६८।।**

**परमां प्राप्स्यसे सिद्धिं शुद्धिं च हृदि नित्यशः ।**

---

(१) अवनल्लि सर्वदा भक्तिमाडिकोण्डिरुवन्ते अनुग्रहिसिरुत्ताने. नानु हरिय अच्छिन्नभक्त एन्दर्थ.

**कस्यापि निन्दा न कृता स्वस्यापि सुकृतं शपे ।।६९।।**

**(अन्वयः) पूजया भवग्राहात् च नित्यं मां त्याजयामास । तस्य आराधनम् च अहं त्वया अपि कारयामि । ते सुबुद्धिं प्रेरयामि; भवाब्धितः तारयामि । हे मनोरम! तस्मात् तस्य आराधनं नित्यं कुरु । परमां सिद्धिं प्राप्स्यसे; नित्यशः हृदि शुद्धं प्राप्स्यसे । (मया) कस्य अपि निन्दा कृता, (यदि मदुक्तम् असत्यं स्यात्, तर्हि) स्वस्य अपि सुकृतं (विनश्यतु इति) शपे ।**

**(व्या)** संसाररूपाद् **ग्राहाच्च त्याजयामास** । कया? मयाकारितपूजया । (मे पूजया मां नित्यं भवग्राहात् हयग्रीवः त्याजयामास - इति योजना स्वरसा) **तस्य** हयग्रीवस्य । **आराधनम्** अहं **त्वयापि कारयामि**(१) ।।६७।।

दुःसङ्गादिप्रतिबन्धे सत्यपि **सुबुद्धिं प्रेरयामि** ।।६८।। (अहं सदा त्वयि स्थित्वा, सुबुद्धिं दत्वा भवाब्धितः तारयामि । **तस्मात् हे मनोरम नित्यं तस्य आराधनं कुरु** ।।६८।। **परमां सिद्धिं प्राप्स्यसे** । **नित्यशः शुद्धिं** च पावित्र्यं च अन्तःकरणनैर्मल्यं च प्राप्स्यसे । कस्यापि निन्दा न कृता, शापो न दत्तः, रागद्वेषरहितत्वात् । एतद्विषये शपथं करोमि । यदि मदुक्तम् असत्यं स्यात् मम **सुकृतं** विनश्यतु इति ।)

**तस्यापि प्रकृतिश्चेयं पश्यापि विकृतां कृतिम् ।**
**एवं स्वरूपकथनं कृतं पूर्वं मया मुने ।।७०।।**

**(अन्वयः) इयं तस्य अपि प्रकृतिः चेत् विकृतां कृतिं पश्यामि । हे मुने! एवं पूर्वं मया स्वरूपकथनं कृतम् ।**

**(व्या)** ननु 'कस्यापि निन्दा न कृता' इति कथम् सज्जनान् प्रति प्रयुक्तायाः शापोक्तेरौपचारिकत्वाभावादित्यत अह – **तस्यापीति ।।** अयोग्येषु प्रयोजिता शापोक्तिरपि न तपोभङ्गप्रदा । शापोक्तिर्गतेति भावः ।।७०।। (**तस्यापि** दुर्जनस्यापि **इयं प्रकृतिः** नरकगतिः स्वाभाविकी **विकृतां कृतिं पश्यामि** । अहं दुर्जनस्य वेदविरुद्धं तामसभूतं कर्म जानामि । तस्मात् आगामि फलं ज्ञात्वा 'नरकं गच्छ' इति शापमिव वक्ष्यामि । **एवं** पूर्वं

---

(१) मे पूजया एन्दरे मत्कृतपूजया एन्दर्थ. आदरे श्रीमुष्णाचार्यरु मे पूजया अहं तस्याराधनं त्वयापि कारयामि एन्दु योजने माडिद्दारे.)

एतदध्यायस्थ दशमादिश्लोकेषु शापव्याजेन दुर्जनस्वरूपं वर्णितवानस्मि । **मुने** हे विप्र ।।७०।। )

**स्मृतं दैववशेनेह वृतं(त्तं?) चाज्ञानतः प्रिय ।**
**यादृशं कपटं तस्य दास्यामीति च विट्ठल ।।७१।।**

**हृदि तिष्ठति ते नित्यं तादृशं त्यज संस्फुटम् ।**
**इति सम्प्रार्थयाम्यत्र काऽत्र शङ्काऽपि मा तव ।।७२।।**

**(अन्वयः) इह दैववशेन वृतं स्मृतम् । हे प्रिय! विट्ठल! 'यादृशं कपटं तस्य दास्यामि' इति ते हृदि तिष्ठति; संस्फुटं तादृशं नित्यं त्यज इति सम्प्रार्थयामि । अत्र अपि का शङ्का? मा तव ।**

**(व्या) दैववशेन** परदैवस्य **हरेः वशेन** यत् क्लृप्तं तत्कृतं तदुक्तं च । एवमुभयत्रापि (सज्जनेषु दुर्जनेषु च) प्रयुक्तायाः शापोक्तेः माण्डव्यादिप्रयुक्तशापोक्तिरिव अज्ञानकोपादि-मूलकत्वाभावात् ।[१] न तया (शापोक्त्या) तपोभङ्गः दोषप्राप्तिश्चेत्युक्तं भवति । एवं 'विट्ठलभ्रष्टसन्मार्ग' इत्यस्य अविरोधेन योजनं कर्तव्यमित्युक्तम् । योजनप्रकारं सूचयितुमाह – **हे प्रिय विट्ठल!** (तव) **अज्ञानतः** दुर्जनेन **यादृशं वृतं**() याचितं तादृशं दास्यामीति ते हृदि यादृशं **कपटं** (रहस्यप्रतिज्ञा)[२] **तिष्ठति** । **तादृशं** कपटं **संस्फुटं** यथा भवति तथा **त्यज** इति । तात्पर्येण प्रकर्षेण अर्थयामि अर्थयुक्ततया करोमि ।। (अत्र कापि शङ्कान्तरं मास्तु । 'भ्रष्टसन्मार्ग दुष्टबुद्धिं माऽट' इत्यत्र अन्यार्थो न विवक्षितः इति निःशङ्कं जानीहि

---

(१) (माण्डव्यादिगळु अज्ञानविपरीतज्ञानकोपगळिगे वशरागि यम मुन्ताद दोड्डवरिगू शापकोट्टरु. पुण्य कळेदुकोण्डरु. नानु हागे माडुवुदिल्ल. मत्तेनेन्दरे ''नन्न आज्ञा भङ्ग माडिदि नीनु देवर केलस एडबलसेवेगे इन्नु हत्तु दिनबरबेड. इन्दिनिन्द मठक्के बरबेड' एन्दु गुरुगळु ओब्ब शिष्यनिगे शपिसिदरु. आ कालदल्लि आ शिष्यन चिक्कप्प आस्पत्रेयल्लि सत्तिद्दनु अवरु केळिद्दरु. सूतकवाद्दरिन्द शिष्यनु १०दिनवू याव एडबलसेवेगू अनर्हने. तिळिदुकोट्ट ई शापदन्ते गुरुराजर शापवु अवर सर्वज्ञत्वक्के द्योतक. कोपकार्यवल्ल एन्दर्थ.)

(२) कपटं एन्दरे कुत्सितशपथ, रहस्य. यारु एनु हेळिदरू अदन्नु कोडुत्तेनेम्ब शपथवु दुर्जनर विषयदल्लि कुत्सितशपथवे सरि. 'दुष्टबुद्धिं माट भो' एन्दरे दुर्जननु केळिद्दन्नू कोडुत्तेनेम्ब केट्ट निश्चयवन्नु त्यजिसु एन्दु अर्थमाडबेकेन्दु तिळि एन्दु विप्रनिगे हेळिद्दारे.)

।।७२।।)

**तदर्थमेव सत्पुत्र सोऽपि मित्रं भविष्यति ।**
**तस्मादरागद्वेषोऽहं शेषशायिपदे शपे ।।७३।।**

(व्या) हे सत्पुत्र विप्र सोऽपि दुर्जनोऽपि । त्वदर्थमेव[१] स्वाभिमतकृत्रिमकार्यार्थमेव विठ्ठलस्य मित्रं भविष्यति । ('तस्मादरागद्वेषोहं शेषशायिपदे शपे इत्येवं पूरणीयं । अर्थः स्पष्टः)एवमर्थकथनेन विठ्ठलस्य मनः स्फटिकशिलावन्निर्मलं जपाकुसुमसदृशदुर्जनमनोगतकपटस्य तत्र प्रतिफलनम् । दुःसङ्गापगमे सति नश्यतीत्यभिप्रायेण 'विठ्ठल भ्रष्टसन्मार्ग' इत्यत्र 'हे विठ्ठल! भ्रष्टसन्मार्ग! दुष्टबुद्धिं माट' इत्येव (बहुव्रीहिसमासेन) योजनीयम् । न तु (विठ्ठल एव) भ्रष्टेति पूर्वपद्यार्थकथनेन विठ्ठलादावयोग्यत्वचिन्ता न कर्तव्या इति निदर्शनमुक्तं भवति ।।७३।। विप्र.प्र.सं.

### १४–०७४–०९४–लक्ष्मीपतिप्रकरणम्

(व्या) 'विप्रस्याच्चोपदेशो मे' इत्यारभ्य अध्यायान्तं लक्ष्मीपतिश्रोतृकं षष्ठं प्रकरणम् ।

**विप्रास्याच्चोपदेशो मे नाऽयास्यति कुतः सुत ।**
**इति ते शेमुषी माऽस्तु तदाऽस्यादाहरामि तम् ।।७४।।**

**गोप्यत्वात् सोऽप्यतीतोऽभूद् भूपतीनां सभापते ।**
**क्वाप्यतो नैव मे चोक्तहानिः पश्य सुपुत्रक ।।७५।।**

**(अन्वयः) हे सुत! मे उपदेशः विप्रस्याच्च न आयास्यति कुतः? इति ते शेमुषी मा अस्तु; तदा तम् आस्यात् आहरामि । हे भूपतीनां सभापते! गोप्यत्वात् सः अपि अतीतः अभूत् । हे सुपुत्रक! अतः एव मे उक्तहानिः न क्वापि; (त्वं) पश्य ।**

(व्या) प्रागुक्तप्रकरणार्थकथनसमये प्राप्तयतिभावं (जन्मान्तरस्मृतिरहितं) स्वज्ञात-

---

(१) (दुर्जनरु हेगो ओळहोक्कु विठ्ठलन प्रतिज्ञेयन्नु तिळिदुकोण्डु अवनन्नु सेरि याचिसि धनापहारमाडुवुदरल्लि आसक्तरागुत्तारे. दृष्टान्त युधिष्ठिरन अक्षद्यूतक्के करेदरे होगिये होगुत्तेने' एम्ब प्रतिज्ञेयन्नु हेगो तिळिदुकोण्डु दुर्योधननु अवनिगे हेळि कळिसि जूजाडि, अवनन्नु मोसपडिसिदनेन्दु सभापर्वदल्लिदे.)

तात्पर्यानुपदेशकं विप्रं दृष्ट्वा (लक्ष्मीपतेः संशयो जायते किमिति) प्राग्जन्मनि चेदयं स्वप्ने गुरुणा प्राप्तोपदेशः, तर्हि इदानीमनेन गूढार्थोपदेशः कुतो न क्रियते इति । (तथा) लक्ष्मीपतेः विप्रमुखतो उपदेशः गूडार्थोपदेशः । **मे** मह्यम् **कुतो नायास्यति इति शेमुषी** बुद्धिः **(हे सुत) ते** तव **मास्तु** । यस्मात् **तदास्याद्** वक्तव्यं तदहम**हरामि**(१) ।।७४।।

अनेन 'त्वदपेक्षया विप्रस्य उत्तमत्वेऽपि मदिच्छया इदानीं अर्थोपदेशाभावः । वक्तव्यार्थस्य **गोप्यत्वात्** । स वक्तव्यार्थनिश्चयः विप्रस्य **अतीतोऽभूत्** (विस्मृतोभूत्) । (**हे भूपतीनां सभापते** सुपुत्रक अतः) तस्मान्मयोक्तस्य हानिर्नैव (हानिः अर्थानुपलब्धिः । अप्रामाण्यम्) त्वं **पश्य** ।।७५।।

**सहस्रं वच्म्यहं श्लोकशतं वाऽप्ययुतं प्रिय ।**
**नियुतं प्रयुतं वाऽपि चाऽहरामि तदाऽस्यतः ।।७६।।**

**एवं नित्यं च वक्ष्यामि पक्षीकृतमुखेन च ।**
**कक्षीकृतप्रमेयं च शक्ष्याम्याहर्तुमेव तत् ।।७७।।**

**उक्तं श्लोकेषु शक्तश्च ग्रहीतुं सर्वमेव च ।**
**अथाप्ययोग्यजीवानां योग्यं नेत्याहरामि तत् ।।७८।।**

**(अन्वयः) हे प्रिय! अहं सहस्रं अयुतं वा नियुतं प्रयुतम् अपि वा श्लोकशतं वच्मि । तत् आस्यतः आहरामि च ।। एवं नित्यं च पक्षीकृतमुखेन वक्ष्यामि । तत् कक्षीकृतप्रमेयं च आहर्तुम् शक्ष्यामि एव ।। (अयं विप्रः) उक्तं श्लोकेषु सर्वं ग्रहीतुम् शक्तः एव च । अथापि अयोग्यजीवानां योग्यं न इति तत् आहरामि ।**

---

(१) (वृन्दावनाचार्यरिगे मोदलु जन्मान्तस्मृति इरलिल्ल. आग लक्ष्मीपतिये अवरिगे आख्यान ओदि अर्थ हेळिदनु. लक्ष्मीपतिगे तिळियद अर्थवन्नु वृन्दावनाचार्यरु आग अवनिगे हेळलु समर्थरागलिल्ल. लक्ष्मीपतिगे आग सन्देह बन्तु. ई स्वामिगळु पूर्वजन्मदल्लि 'विप्र'रु एन्दु हेगे नम्बलि एन्दु शङ्किसिदरु. अदक्के ई ७४ने श्लोकदल्लि उत्तरविदे. लक्ष्मीपतियु उपदेशमाडिदाग वृन्दावनाचार्यरिगे संस्कारोद्बोधकवागलिल्ल. आदरे स्वल्पकालद तरुवायदल्लि अवरिगे जन्मान्तरस्मृति बन्तु. मत्तु लक्ष्मीपतिगू आख्यानद गूढार्थवन्नु बोधिसिदरु. इदेल्ला नडेदिरुव कथे. विठ्ठलर कालदिन्दलू इद आ लक्ष्मीपतिनामक गृहस्थरु यारु एम्बुदन्नु शोधिसि तिळियबेकु.)

(व्या) (हे प्रिय लक्ष्मीपते) अस्मिन् विप्रे सहस्रादिसङ्ख्याकान् श्लोकान् तैः बहु-प्रमेयविशेषांश्च वक्ष्यामि[१] ।।७६-७७।। (विप्रस्य स्वप्ने वच्मि । लेखनकाले तदाऽस्यतः आहरामि = अपहरामि इत्यर्थः । एवं नित्यं पक्षीकृतमुखेन विप्रमुखेन कक्षीकृतप्रमेयं भक्तसकलदेवमनुष्ययोग्यप्रमेयान् वच्मि । तत्सर्वम् अपहर्तुमपि समर्थोस्मि । तथापि किञ्चित् प्रमेयं मनुष्ययोग्यं भूस्थजनानाम् उद्धारार्थम् विप्रद्वारा लेखयामीति भावः ।।) तस्मात् विप्रस्यादुपदेशाभावेन न्यूनतां शङ्का न कार्या (यद्यपि विप्रः मदनुग्रहेण उक्तं सर्वं स्वप्ने धर्तुं जाग्रत्काले आलेखयितुं च समर्थः । तथापि ते प्रमेयविशेषाः देवाधिकारिकाः मनुष्यानां न योग्याः इति हेतोः तान् प्रमेयान् नैव लेखयामीत्यर्थः)।।७८।।

### १४–०७९–०८३–लक्ष्मीपतिप्रकरणान्तर्गतविठ्ठलप्रकरणम्

**सुत सुलोचन लोकपूजित यतिकुलोचितलोप्तृपालक ।**
**वृतबलोचितकृत्यलोल ते शतधृतेरपि लोकमलोक्य ते[२] ।।७९।।**

**हे पुत्र पुत्र विप्रस्य कार्यं विस्मृतवानसि ।**
**हा तत्र तत्र कर्तव्यं यत्र ते वाक्यगौरवम् ।।८०।।**

**(अन्वयः) हे सुत! सुलोचन! लोकपूजित! यतिकुलोचितलोप्तृपालक! वृतबलोचितकृत्यलोल! अलोक्य! ते शतधृतेः अपि लोकम् (प्राप्तो भवति) । हे पुत्र पुत्र! विप्रस्य कार्यं विस्मृतवान् असि । हा यत्र ते वाक्यगौरवं (अस्ति) तत्र तत्र (कार्यं) कर्तव्यम् ।**

(व्या) पूर्वाध्यायोक्तविठ्ठलवृत्तान्तस्य पुनः कथनेन पुनरुक्तिशङ्का न कार्या । उक्तार्थानुपलम्भेन अप्रामाण्यनिश्चयो वा संशयो वा न कर्तव्यः इत भावेनाह – सुत सुलोचनेति ।। 'सुत सुलोचन' इत्यारभ्य 'मां तातं शरणं गतः' इत्यन्तं लक्ष्मीपतिश्रोतृक-प्रकरणान्तर्गतविठ्ठलश्रोतृकप्रकरणम् । हे सुलोचन! सुन्दरनयनोपेत! यतिकुलोचितलोप्तृपालक

---

(१) (प्रयुतं = १०लक्ष, नियुतं = १लक्ष, नियुतं एन्दरे हत्तुसाविरकोटि एन्दर्थविदे. अयुतं एन्दरे हत्तुसाविर. इल्लि नियुत एन्दरे लक्ष. प्रयुत एन्दरे १०लक्ष एन्दु अर्थ माडबहुदु.)

(२) (इल्लिएरडु ते पदगळिवे. व्याख्यानदल्लि न्दके अन्वय हेळिद्दारे. इन्नोन्दु हे इबरबहुदु. भी नोडबेकु.)

= यतिकुलोचितानि यानि स्त्रीरागराहित्यधनरागराहित्यादीनि, तेषां ये लोप्तारः विलोपकर्तारः, तेषां दुष्टपुरुषाणां पालक! **वृतबलोचितकृत्यलोल** = वृतबलानां सैन्यसहितानां यदुचितं परग्रामविलोपादिकं तत्र लोल आसक्त । **हे अलोक्य** सुलोपप्राप्ययोग्य । **हे सुत** विट्ठल! ते त्वया **शतधृतेः** ब्रह्मणः **लोकम**पि लोकोऽपि प्राप्यो भविष्यति । लोकमित्यस्य अलौकिकनपुंसकशब्दप्रयोगेण कालविलम्बेन पुण्यलोकप्राप्तिः सूचिता भवति ।।७९।।

हे विट्ठल विप्रवर्यस्य **कार्यं** ऋणमोचनादिकार्यं **विस्मृतवानसि** । **यत्र ते** वाक्यगौरव-मस्ति । त्वदीयं वाक्यं विफलं न भविष्यति । **तत्र तत्र** विप्रानुकूलं कार्यं **कर्तव्यम्** ।।८०।।

**तूष्णीं स्थिते मयि सुत सर्वथा विस्मृतिर्भवेत् ।**
**अतस्तवाहं स्मृत्यर्थं वक्ष्याम्यद्य पुनः पुनः ।।८१।।**

**मामाश्रितश्च विप्रोऽयं कामान्वितमतिर्भवेत् ।**
**सोमाश्रयाद्यथा रुद्रोऽप्युमाकान्तो गतव्यथः ।।**

**तथाऽयं ब्राह्मणः श्रीमान् त्वया मुक्तऋणव्यथः ।**
**भवेदामरणान्तं च मां तातं शरणं गतः ।।८३।।**

**(अन्वयः) मयि तूष्णीं स्थिते (सति) हे सुत! सर्वथा विस्मृतिः भवेत् । अतः अद्य तव स्मृत्यर्थं पुनः पुनः वक्ष्यामि । अयं मामाश्रितः विप्रः कामान्वितमतिः भवेत् । यथा रुद्रः उमाकान्तः अपि सोमाश्रयात् गतव्यथः, तथा च हे श्रीमान्! तातं मां शरणं गतः अयं ब्राह्मणः त्वया आमरणान्तं मुक्तऋणव्यथः भवेत् ।**

**(व्या)** यद्यपि 'न वक्ष्ये कुर्विति व्यर्थं दैन्यं मम न रोचते' इति (१२।१८) प्राक् मया प्रतिपादितम् । तथापि मया पुनः पुनरनुक्तौ (तव) **सर्वथा विस्मृतिर्भवेत्** । तथा विप्राभिमतनिखिलकार्यविलोपः स्यात् ।। **अतः तव** कतिपयकार्याणां वा **स्मृत्यर्थं पुनः पुनः** वक्षे ।।८१।।

**अयं विप्रः मामाश्रितः**(१) यथा रुद्रः कामान्वितमतिः कामे मन्मथे अन्विता निगृही-

(१) (ममाश्रितश्च एम्बल्लि मा एन्दरे मां एन्दू, 'बेड' निषेधे एन्दू एरडु अर्थवागुत्ते. विप्रः माश्रितः

तव्यत्वेन सम्बद्धा मतिर्यस्य स तथा । कामनिगृहीतबुद्धिरिति यावत् । तथा विप्रोऽपि भवेत् । यथा **रुद्रः उमाकान्तः** तथाऽयं ब्राह्मणोऽपि उकारवाच्यस्य विष्णोः मया बुद्ध्यात् कान्तः मनोज्ञः यथा रुद्रः सोमाश्रयात् चन्द्राश्रयात् **गतव्यथः** = निवृत्तदुःखः ।।८२।।

**तथा** त्वया **मुक्तऋणव्यथः आमरणान्तं भवेत् ।** यस्माद् **ब्राह्मणः मां तातं** मत्वा पितृत्वेन मत्वा **शरणं गतः** ।।८३।। लक्ष्मीप्रकरणान्तर्गतविठ्ठलप्रकरणं सम्पूर्णम् ।

### १४–०८४–०९४–लक्ष्मीपतिप्रकरणम्

**उक्तं मे वितथं जातं शुक्तिरूप्यं यथा सुत ।**
**अत्यन्तासत्त्वतः कान्त भ्रान्तेर्विषयमेव तत् ।।८४।।**

**तद्वदर्थक्रियाकारी न भवत्येव मे मतिः ।**
**इत्यनादरतः पुत्र कृत्रिमेति च मत्कृतिः ।।८५।।**

**विप्रेणैव कृता चात्र नात्र हानिः परत्र च ।**
**अकृतेऽपि तदुक्तार्थे स्वार्थं वक्ति द्विजो वृथा ।।८६।।**

**काऽऽर्तिर्मम कृते चार्थेऽप्यकृतार्थेऽपि वा सुत ।**
**इति ते शेमुषी न स्यात्पश्याद्य सुविशारद ।।८७।।**

(अन्वयः) हे सुत! यथा शुक्तिरूप्यं वितथं जातं, (तथा) उक्तं मे वितथं जातम् । हे कान्त! तत् अत्यन्तासत्त्वतः भ्रान्तेर्विषयम् एव । तद्वत् मे मतिः अर्थक्रियाकारि न भवति एव । इति अनादरतः हे पुत्र! मत्कृतिः कृत्रिमा इति; विप्रेण एव कृता अत्र वा परत्र न हानिः; अकृते अपि तदुक्तार्थे द्विजः वृथा स्वार्थं वक्ति; हे सुत! कृते अर्थे अपि अकृतार्थे अर्थे अपि वा मम का आर्तिः? इति ते शेमुषी न स्यात्;

**(व्या) यथा शुक्तिरूप्यम्** अत्यन्तासत्वात् भ्रान्तेर्विषयम् अर्थक्रियाकारि न भवति

---

= मां आश्रितः तस्मात कामान्वितमतिः मा भवेत् । अन्नस्य का गतिः इति कामेन व्यथितबुद्धिः न भवतु एन्दू अन्वयवागुत्ते. 'उमासेवितोपि रुद्रः सोमाश्रयेण गतव्यथः अभूत् । तथा विष्णुभक्तः गुरुभक्तः तत्वज्ञानी विप्रः भवत्सहायेन ऋणरहितः भवतु' एन्दु ८३ने शोकद पूर्वार्धद योजने)।

(रजतयोग्यार्थक्रियाजनको न भवति) । 'विषयम्' इत्यलौकिकम् । वस्तुतो भ्रान्तिविषयत्वं अस्मदुक्तार्थस्य नास्तीति सूचयितुं नपुंसकप्रयोगः । अत एव वितथं मिथ्या । तथा मयोक्तं 'सुत सुलोचन' इत्याद्युपलक्षितेन उक्तं प्रमेयं वितथं जातम् ।।८४।।

(तथैव) **मे मतिः कृत्रिमा**[(१)] कृतिश्च कृत्रिमा इति शेमुषी (अनादरतः) न स्यादिति उत्तरत्रान्वयः ।।८५।।

'इयं कृतिः विप्रेण कृता' इति केचिद् वदन्ति । विप्रेण कृता चेदपि अत्र इह लोके का हानिः परत्र वा परलोके वा **का हानिः** अस्मिन् आख्याने विप्रेण अकृते सत्यपि तदुक्तार्थे तदुक्तफलप्राप्त्यर्थमिति यावत् । अयं द्विजः । इदमाख्यानं स्वार्थमिति वक्ति । (वृथा । विप्रेणोद्दिष्टं फलं नैव भविष्यति) ।।८६।। तज्ज्ञानेन (आख्यानज्ञानेन) अर्थे कृते प्रयोजने कृते (विप्रेणाधिगते) प्राप्ते इति यावत् । (अथवा) तज्ज्ञानेन ब्राह्मणे अकृतार्थे अप्राप्तपुरुषार्थे वा (मम का आर्तिः मम किं नष्टम्) अस्माकं किं प्रयोजनम् इत्येवंरूपा शेमुषीसंशयबुद्धिरपि तव न स्यात् ।

**कस्य वा कृतिरेवेयं स्वस्य वाऽद्य द्विजस्य वा ।**
**हे केशव त्वं तोकस्य स्मारकः प्रेरको भव ।।८८।।**

**कार्यं मे कारय क्षिप्रं विप्रस्यापि सुतेन मे ।**
**अन्यथा भक्तवश्यत्वं तव न स्यात्स्वदास्यकम् ।।८९।।**

**(अन्वयः) (हे सुविशारद!) अद्य इयं कृतिः कस्य वा? स्वस्य वा द्विजस्य? इति पश्य ।**

**हे केशव! तोकस्य त्वं स्मारकः प्रेरको भव । मे सुतेन मे कार्यं विप्रस्य अपि कार्यं क्षिप्रं कारय । अन्यथा तव भक्तवश्यत्वं स्वदास्यकं (च) न स्यात् ।**

**(व्या) अद्य (पश्य)** हे सुत **(सुविशारद)** एतदध्यायोक्तरीत्या पूर्वोत्तरोक्तार्थानुसन्धान-

---

(१) (अर्थक्रियाकारि न भवत्येव; अर्थक्रियाकारि न भवति एन्दरे अर्थक्रियारहितार्थविषयिणी । भ्रान्तिरूपा एन्दु अर्थ. कृतिश्च कृत्रिमा एन्दरू हीगे. अविद्यमानार्थबोधिनी एन्दर्थ. हीगे तिळियबारदेन्दु तिळिसुत्तारे.) ।

समये **पश्य** ।।८७।।[१]

**इयं कृतिः स्वस्य वा द्विजस्य वा** इति विचार्य गतसंशयः गतविपर्ययश्च भवेति भावः । संशयराहित्यादिकमपि मत्प्रार्थितभगवदनुग्रहेणेति भावेनाह – **हे केशवेति ।। हे केशव!** ब्रह्मरुद्रप्रवर्तक! **तोकस्य** लक्ष्मीपत्यादेः **स्मारकः** स्मर्तव्यार्थस्मृतिजनकः **प्रेरकः** कर्तव्यकार्यं कारयितुं प्रेरकश्च **भव** ।।८८।।

**मे** मम सम्मतं **कार्यं विप्रस्यापि** कार्यं **मे सुतेन** विठ्ठलशेषसीतापत्यादिना यद्भवितव्यं तत् **कारय** । **अन्यथा** तदभावे **तव भक्तवश्यत्वं न स्यात्** ।।८९।। (तच्च वेदोक्तं नाप्रामाणिकं भवितुमर्हति ।।)

**पश्याद्य चक्षुषा स्वेन करुणारसवर्षिणा ।**
**अच्छिन्नभक्तिसञ्छन्नः पृच्छन् सल्लाञ्छनं तव ।।९०।।**

**इच्छन् संछिन्नबन्धं च त्वामश्नन् काञ्चनं त्यजन् ।**
**ज्ञानवैराग्यभक्ताख्यसखिभिः सुखमेव च ।।९१।।**

**प्राप्नुयां स्वाप्नपद्यैर्मे चाप्नुयाच्छोभनं नरः ।**

---

(१) (ई आख्यानवन्नु विप्रमाडिरलि, बेरेयवरु माडिदु स्वप्रयोजनवागुत्तदेन्दु वृथा भ्रमिसि, विप्रने प्रयोजनार्थवागि प्रचार माडुत्तिरलि. अदरिन्द नमगेनु? ई आख्यानोक्तफलवु सत्यवागि विप्रनिगे उपलब्धवादरे ताने नमगेनु? विप्रनिगे अल्लि हेळिरुव फलवु बरदे अवनु दुःखियादरू ताने नमगेनु होयितु? हीगे संशयबुद्धियु अनेक आस्तिकरिगे इदे. कृष्ण यारादरे नमगेनु? मध्वाचार्यरु यारादरे नमगेनु? वादिराजरु यारादरे नमगेनु? एकादशी यावाग बन्दरे नमगेनु? एम्बन्ते देवकार्यवन्नु तिळियद अज्ञर व्यवहार नरकक्के कारणवागुत्ते. ''सात्विकबुद्ध्या यथाशक्ति यथामति सन्निहितवस्तुस्वरूपं निर्धार्य सात्विकनिर्णयानुसारेण तद्विषयकपूजादिकं कुर्यात् ।

''सुपूजार्हस्य अवमानेन दुर्गतिः भविष्यति ।
असुराणां तमःप्राप्ति तदा नियमतो भवेत् ।
यदा तु ज्ञानिसद्भावेनैव गृह्णन्ति तत्परं'' इत्यादेश्च

अपूज्यः पूज्यते यत्र सुपूज्यो यत्रावमानितः ।
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम् ।। इति च)

**(अन्वयः) स्वेन करुणारसवर्षिणा चक्षुषा अद्य पश्य । अच्छिन्नभक्तिसञ्छन्नः, तव सल्लाञ्छनं पृच्छन्, सञ्छिन्नबन्धम् इच्छन्, त्वाम् अश्नन् च, काश्नं त्यजन् ज्ञानवैराग्यभक्त्याख्यसखिभिः सुखमेव प्राप्नुयां च । नरः मे स्वाप्नपद्यैः च शोभनं आप्नुयात् ।**

**(व्या) करुणारसवर्षिणा** चक्षुषा दयादृष्ट्या पोष्यवर्गं पश्य । विप्रं च पश्य । अहं अच्छिन्नभक्तिसंछन्नत्वादियुक्तः ।।९०।।

(आदिशब्देन **तव सल्लाञ्छनं पृच्छन् सञ्छिन्नबन्धं इच्छन्** । **त्वां अश्नन्** । **काश्नं त्यजन्** । **ज्ञानवैराग्यभक्त्याख्यसखिभिः** युक्तः ।।९१।।) शुभं **प्राप्नुयां** (सुखमेव निर्दुःखस्वरूपानन्दमेव प्राप्नुयां) **नरः** मद्भक्तोपि शुभं **(आप्नुयात्)** प्राप्नुयात् । (मे स्वाप्नपद्यैः अहं तु स्वाप्नपद्यकरणेन, नरस्तु स्वाप्नपद्यपारायणादिना ।)

**विदित्वा मद्गतिं श्रुत्वा कृत्वा भक्तिं मयि प्रिय ।।९२।।**

**भुक्त्वा भूतिं च मां स्तुत्वा छित्वा संसृतिबन्धनम् ।**
**इत्यहं देवदेवेशं वेदे वेदे च संस्तुतिम् ।।९३।।**

**कृत्वा कृत्वा प्रार्थयामि दृष्ट्वा दृष्ट्वा तमव्ययम् ।।९४।।**

**(अन्वयः) हे प्रिय! मद्गतिं श्रुत्वा, विदित्वा, मयि भक्तिं कृत्वा, भूतिं भुक्त्वा, मां स्तुत्वा, संसृतिबन्धनं छित्वा (शोभनं आप्नुयात्) इति वेदे वेदे च संस्तुतिं देवदेवेशं (तस्य प्रीतिं) कृत्वा कृत्वा, तम् अव्ययं दृष्ट्वा दृष्ट्वा च प्रार्थयामि ।।**

**(व्या)** (कथं भक्तस्य शोभनप्राप्तिः? इत्यत आह – **विदित्वेति**) मत्कृताख्याने **मद्गतिं विदित्वा, मयि भक्तिं** कृत्वा ।।९२।।

**भूतिं** इह लोके, भोक्तव्यमैश्वर्यं, **भुक्त्वा, मां स्तुत्वा, संसृतिबन्धनं छित्वा,** शोभनं प्राप्नुयादिति । **अहं वेदवेदे प्रतिवेदे संस्तुतिं** = सम्यक् स्तुतिमन्तं स्तुतम् ।।९३।। (सर्ववेदेषु प्रतिपादितम्) **देवदेवेशं** = देवदेवानां रमाब्रह्मादीनां स्वामिनम् । **अव्ययं** = नाशरहितम् । **दृष्ट्वा दृष्ट्वा** तत्प्रियं **कृत्वा कृत्वा प्रार्थयामि** ।।९३&९४।। अस्मिन् प्रकरणे लक्ष्मीपतिना कदाचित् उक्तार्थानुपलम्भादिना कृतेः अप्रामाण्यादिकं न ज्ञातव्यम् । कृति-प्रामाण्यादौ संशयश्च न कर्तव्यः । (एतद्दृष्टान्तेन इदानीन्तनैरपि संशयो न कर्तव्यः) इति

निदर्शनमुक्तं भवति ।।९४।।

**एतत्सर्वं स्वाप्रपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्रपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाह-कत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि- राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**

**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

**(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।**

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि चतुर्दशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**

# १५-०००-पञ्चदशोऽध्यायः

## १५-००१-०१५-विप्रप्रकरणम्

(व्या) श्रीगुरुभ्यो नमः ।। हरिः ओं ।। विप्रेण सीतापतिना शेषेण च कर्तव्यं निदर्शनं प्रतिपादयत्यनेनाध्यायेन । 'ऋणेऽप्यथ शरण्यं तम्' इत्यारभ्य 'मन्निरूपं परात्परम्' इत्यन्तं विप्रश्रोतृकं प्रथमं प्रकरणम् ।।

**हरिः ओं ।। ऋणेऽप्यथ शरण्यं तं करुणां त्वयि कारिणम् ।**
**शरणं व्रज कारुण्यात् तस्य संसरणं जहि ।।१।।**

**इति ते बुद्धिरद्धोक्ता वृद्ध क्रुद्धश्च मा भव ।**
**बद्धभक्तिर्भव श्रद्धासमिद्धश्च मदङ्गजे ।।२।।**

**शिखां गृहीत्वा वक्ष्यामि सखा त्वं मम सर्वदा ।**
**सुखावासान् प्रवक्ष्यामि मखावासादपि प्रिय ।।३।।**

(अन्वयः) हे वृद्ध! त्वयि करुणां कारिणं शरण्यं तं शरणं व्रज; अथ तस्य कारुण्यात् संसरणं जहि । इति ते अद्धा बुद्धिः उक्ता । क्रुद्धः च मा भव । मदङ्गजे बद्धभक्तिः श्रद्धासमिद्धः च भव । हे प्रिय! (ते) शिखां गृहीत्वा वक्ष्यामि, (यतः) त्वं सर्वदा मम सखा । मखावासादपि सुखावासान् प्रवक्ष्यामि ।

(व्या) हे वृद्ध! **त्वयि करुणा(णां)कारिणं शरण्यं** रक्षकत्वेन प्राप्तुं योग्यं **तं** पूर्वाध्याये त्वत्परमगुरुत्वेनोक्तम्, **ऋणेऽपि** तदीयैः प्रसक्ते ऋणदोषशङ्कितेऽपि **शरणं** रक्षकं **व्रज** । **तस्य** तव परमगुरोः **कारुण्यात् संसरणं जहि** । तदनुग्रहलब्धभगवत्पूजादिना संसरणं जहि ।।१।।

**इति** पूर्वोक्तप्रकारेण **ते** तुभ्यम् **अद्धा** सम्यक् **बुद्धिरुक्ता** । **क्रुद्धः** परमगुरुसम्बन्धिषु अपकारशङ्कया क्रोधयुक्तो **मा भव** । क्रोधस्य परमगुरुसम्बन्धित्वादिति भावः । **मदङ्गजे** मत्पुत्रे प्रागुक्ते ते परमगुरौ **बद्धभक्तिः** सम्बद्धभक्तिः **श्रद्धासमिद्धः** । तदनुग्रहेण प्रयोजन-मस्तीति श्रद्धया समिद्धः । सम्यगभिवृद्धिश्च भव ।।२।।

'मदुक्ते चेदुपेक्षा, तर्हि बलेनापि कारयामि' इति भावेनाह – **शिखामिति** ।। हे विप्र!

'श्रद्धासमिद्धो भव' इति **ते शिखां गृहीत्वा वक्ष्यामि** । तत्कुतः? यस्मात् **त्वं सदा मम सखा । मखावासात्** गृहस्थाश्रमस्थादपि **सुखावासान्** यत्याश्रमेण कर्तव्यसाधनविशेषान् **प्रवक्ष्यामीति वा** । (१) यत्याश्रमधर्माणां क्रोधत्यागादीनां (२) सीतापतिना कर्तव्यानां नृपहितोपदेशादीनां (३) हयग्रीवकृतानां हारावळीचोरशिक्षादीनां अस्मिन्नध्याये प्रति-पादितत्वात् त्रिविधमपि योजनमभिप्रेतं सम्भवति ।।३।।

**मद्वशे सति मध्वेशे मध्वाचार्यप्रिये मयि ।**
**मधुघातकभक्ता ये भक्तिं कुर्वन्ति नित्यशः ।।४।।**

**(अन्वयः) मध्वेशे मयि मद्वशे मध्वाचार्यप्रिये सति ये मधुघातकभक्ताः (ते) नित्यशः भक्तिं कुर्वन्ति ।**

**(व्या)** 'मखावासादपि' इति हयवदनसमुचितबादरायणेन भवितव्यमाह – **मद्वशे सतीति ।। मध्वेशे** बादरायणे पौरुटभाजनस्थप्रतीकसन्निहिते **मद्वशे सति । मयि । मध्वाचार्यप्रिये** (विश्वप्रियनामके विप्रे) मध्वाचार्यस्य प्रिये विप्रे त्वयि । **सन्निहिते** सति । ये **मधुघातकभक्ताः** मधुघातकस्य हयग्रीवस्य भक्ताः । **नित्यशो भक्तिं कुर्वन्ति** । अनेन 'यस्मिन् काले मध्वाचार्यप्रियशब्दवाच्ययतिरूपे त्वयि मत्सन्निधानं सदा बादरायणपूजनम् । तस्मिन् काले भक्तानाम् आख्यानार्थज्ञानम्, तेन भक्तिः भविष्यति' इत्युक्तं भवति ।। 'स विश्वकृत् । स हि सर्वस्य कर्ता' इत्यस्य 'सर्वकर्तृत्वात् स वायु कर्ता' इति व्याख्यातत्वात् विश्वशब्दो वायुवाची । वाय्ववताररूपस्य मध्वाचार्यस्य प्रिय इत्युक्त्या विश्वप्रिय इत्युक्तं भवति ।।४।। ('विश्वो वायुः')

**श्रावय त्वं मम श्राव्यं चरितं चरतोऽमृतम् ।**
**पावय त्वं पावकाद्धि विशुद्धिर्मुग्ध लोहके ।।५।।**

**यथा तथा वृथा विप्र मा कृथास्त्वं व्यथामथ (व्यथां तथा) ।**
**पृथासुता यथा पार्थाः कृतार्थाः सत्कथां सताम् ।।६।।**

**(अन्वयः) त्वं मम श्राव्यं चरितम् अमृतं चरतः श्रावय । हे मुग्ध! लोहके पावकात् विशुद्धिः हि; (तथा) त्वं पावय ।**

**यथा पार्थाः व्यथां (त्यक्त्वा) सतां सत्कथां (उक्तवन्तः) कृतार्थाः; तथा हे**

विप्र! त्वं वृथा व्यथां मा कृथाः ।

(व्या) तदा (विश्वप्रियजन्मनि) विप्रेण कर्तव्यमाह – श्रावयेति ।। अमृतं चरतः अमरान् मम चरितं श्रावय । हे मुग्ध! यथा पावकात् अग्नेः लोहके सुवर्णादौ शुद्धिर्भवति तथा श्रवणजन्यज्ञानाग्नेः सकाशात् सज्जनचित्तरूपे लोहके शुद्धिर्भविष्यति ।।५।।

यथा पार्थाः = पाण्डवाः दुर्योधनादिभिरपकारे प्रसक्तेपि व्यथां त्यक्त्वा, सत्कथाम् उक्तवन्तः । तथा त्वमपि वृथा व्यथां मा कृथाः(धाः) ।।६।।

**वद वृन्दावनेऽमन्दानन्दसन्दोहमन्दिरे ।**
**सदा कन्दाशनामन्दानन्ददस्य गदाभृतः ।।७।।**

**भक्तस्य त्यक्तपापस्य सक्तस्य तदतिप्रिये ।**
**शक्तस्य भक्तियोगे च रक्तस्य मम सत्कृतिम् ।।८।।**

**एवं चेद्भवति प्रेष्ठ श्रेष्ठवृत्तिरपि प्रिय ।**
**ममेष्टनिष्ठात् सत्पुत्रात् सर्वाभीष्टं भवेत् तव ।।९।।**

(अन्वयः) अमन्दानन्दसन्दोहमन्दिरे वृन्दावने (मत्कृतिं) वद । कन्दाशनामन्दानन्ददस्य गदाभृतः सदा भक्तस्य, त्यक्तपापस्य, तदतिप्रिये सक्तस्य, भक्तियोगे शक्तस्य, रक्तस्य च मम सत्कृतिं (वद) । एवं चेत् हे प्रेष्ठ! प्रिय! श्रेष्ठवृत्तिः अपि भवति । मम इष्टनिष्ठात् सत्पुत्रात् तव सर्वाभीष्टं भवेत् ।

(व्या) (तथा त्वमपि) अमन्दानन्दसन्दोहमन्दिरे वृन्दावनविषये सत्कथां सतां सज्जनानां शेषादीनां वद । तथा कन्दाशनामन्दानन्ददस्य वेदव्यासात्मकस्य गदाभृतः गयाक्षेत्राधीशस्य विष्णोः ।।७।।

भक्तस्य त्यक्तपापस्य मत्कृतिं वद ।।८।। (पुनः कथम्भूतस्य मम सत्कृतिम्? तदतिप्रिये सक्तस्य विष्णोः अतिप्रियध्यानादिषु आसक्तस्य नवविधभक्तियोगे शक्तस्य अनुरक्तस्य च मम कृतिं वद ।।८।।) एवमिति ।। 'सतां वद' इत्युक्त्या सर्वेषां लाभात् । [१]अस्य(= लक्ष्मीपतेः) पृथगुक्तेः किं प्रयोजनम्? इत्यत आह – एवं

(१) (एळने श्लोकदल्लि सन्तराद शेषादिगळिगे हेळु एन्दु विप्रनिगे आज्ञे. एंटने शोकदल्लि विष्णुभक्तनू,

चेदिति ।। एवं चेत् व्यासात्मकगदाधरभक्तं प्रति प्रतिपादितं चेत् । वृत्तिः(रपि) व्याख्या भवति, भविष्यति । हे प्रेष्ठ! श्रेष्ठ! विप्र! ममेष्टनिष्ठात् मदिष्टव्याख्याननिष्ठात् सत्पुत्रात् लक्ष्मीपतेः सकाशात् तव सर्वाभीष्टम् एतदाख्यानोक्तसमस्तमभीष्टं ज्ञातं भवेत् ।।९।।

**पुत्रपूतेन पित्रा च पुत्राशा पूरिता मया ।**
**पित्रा पूतेन पुत्रेण पित्राशा मे न पूरिता ।।१०।।**

**उपकारस्योपकारः क्रियते लोकसज्जने ।**
**उपकाराभावतोऽपि ह्युपकुर्वन्ति पूर्वजाः ।।११।।**

**उपकारनिमित्तेन ये कुर्वन्त्युपकारिताम् ।**
**राजसास्ते च विज्ञेया ह्युपकारार्थिनः परे ।।१२।।**

**(अन्वयः) पुत्रपूतेन पित्रा मया पुत्राशा च पूरिता; पित्रा पूतेन मे पुत्रेण पित्राशा न पूरिता ।**

**लोकसज्जने उपकारस्य उपकारः क्रियते; पूर्वजाः उपकाराभावतः अपि उपकुर्वन्ति हि । परे उपकारार्थिनः ये उपकारनिमित्तेन उपकारितां कुर्वन्ति हि, ते राजसाः च विज्ञेयाः ।**

(व्या) पुत्रपूतेन पुत्रः पूतः यस्य स तथा । 'प्रीतेन' इति पाठे षष्ठी तत्पुरुषः समासः कर्तव्यः । तेन तव पित्रा मया पुत्राशा पुत्रस्य तवाशा आख्यानोपदेशादिना मया पूरिता । एवं पित्रा मया पूतेन परिशुद्धेन त्वया पित्राशा = पितुः मम आशा = कृतिख्यापनादीच्छा न पूरिता ।।१०।।

लोकसज्जने उपकारस्योपकारः क्रियते । सज्जनेन कृतस्योपकारस्य प्रत्युपकारः

---

त्यक्तपापनू आद मत्तोब्बनिगे हेळु एन्दु विशिष्य आज्ञे. ई विशेषणगळु 'मम' एम्ब गुरुराजरिगू अन्वयिसुत्ते. 'भक्तस्य वद' एम्बल्लिरुव भक्तस्य एम्ब पदक्कू अन्वयिसुत्ते. आ भक्त यारेन्दरे 'लक्ष्मीपति'नामकनेन्दु ओम्भत्तने श्लोकदिन्द सूचितवागुत्ते. ई ९नेय शोकव्याख्यानदल्लि 'व्यासात्मकगदाधरभक्तं प्रति' एन्दु श्रीमुष्णाचार्यरु बरेदिरुवुदरिन्द लक्ष्मीपतिनामकने व्यासभक्तनामकनु एन्दु सूचितवागुत्ते. शेषादि एल्ल सज्जनरिगू कृति बोधिसु. पुण्य बरुत्ते. लक्ष्मीपतिगे बोधिसिदरे व्याख्यानग्रन्थ हुट्टि बहु सज्जनरिगे उपकारवागुत्ते. आद्दरिन्द विशिष्य आज्ञे एन्दु हेळिदन्तायितु.)

सज्जनेन क्रियते । अनेन 'यदृच्छया दुर्जनकृतोपकारस्य प्रत्युपकारः सज्जनेन कर्तव्यः' इति नियमो नास्तीति सूचितं भवति । (**पूर्वजाः** युधिष्ठिरभरतादिज्ञानिनः उपकाराभावेपि योग्यान् दृष्ट्वा उपकुर्वन्ति) उपकाराभावेप्युपकार उत्तमः ।।११।।

(**ये परे** उपकारार्थिनः (द्वि.बहु.) उपकारापेक्षकान् दृष्ट्वा **उपकारनिमित्तेन** उपकारकं कुर्वन्ति । तैः पूर्वं प्राप्तोपकारं स्मृत्वा, अथवा उत्तरकाले प्रत्युपकारो भविष्यतीति विश्वस्य उपकारं कुर्वन्ति । **ते राजसाः इति विज्ञेयाः** ।) उपकारे सत्युपकारो मध्यमः ।।१२।।

**उपकारानिमित्तेन ह्युपकुर्वन्ति ये परे ।**
**सात्विकास्ते च विज्ञेया ह्युपकारनिराशिनः ।।१३।।**

**उपकारेऽपि ये नैव कुर्वन्ति ह्युपकारकम् ।**
**तामसास्ते च विज्ञेया ह्युपकारापकारिणः ।।१४।।**

(अन्वयः) परे उपकारनिराशिनः ये उपकारानिमित्तेन उपकुर्वन्ति हि ते सात्विकाः च विज्ञेयाः ।। उपकारापकारिणः हि उपकारेऽपि हि ये नैव उपकारकं कुर्वन्ति ते तामसाः च विज्ञेयाः ।

**(व्या)** (**ये परे** पूर्वजाः इति पूर्वोक्ताः । स्वभावतः प्रत्युपकारापेक्षाहीनाः निरुपाधिकतया 'एष विष्णुभक्तः अर्थी' इत्येतन्मात्रं विचार्य उपकारं कुर्वन्ति ते सात्विकाः इति विज्ञेयाः ।।१३।। **ये उपकारापकारिणः** स्वभावतः उपकारेपि उपकारकं नैव कुर्वन्ति **ते तामसाः इति विज्ञेयाः** ।।१४।।) उपकारेप्युपकाराभावो ह्यधमः ।।१४।।

**लोकनीतिरियं तात शङ्का ते माऽस्तु सा सुत ।**
**सात्विकस्त्वं मतः सौम्य काम्यं मे नास्ति सर्वथा ।।१५।।**

**तवैव कर्तव्यमेतन्मन्निरूपं परं स्मर ।**

(अन्वयः) इयम् लोकनीतिः; हे सुत! मतः त्वं सात्विकः; हे सौम्य! मे सर्वथा काम्यं नास्ति; हे तात! सा शङ्का ते माऽस्तु ।

एतत् मन्निरूपं तव परं कर्तव्यम् एव स्मर ।

**(व्या)** 'उपकारो न कृतः' इत्युक्त्या सात्विकादिविभागेन च त्वन्निन्दा न कृता ।

लोकनीतिरियम् उक्ता । त्वं सात्विकः । अहं तु निष्कामः । मत्कामिताऽकरणनिमित्तकं तामसत्वं तव नास्ति ।।१५।।

किन्तु त्वद्धितत्वेनोपदिष्टस्य कतिपयकालेषु अकरणं तवाहितम् । तस्मान्मयोक्तं यस्मिन् काले यत्कर्तव्यं, तस्मिन् काले तस्य करणं तव हितसाधनम् । तस्मात् व्यासभक्ताय सत्कथाकथनं (कृत्युपदेशः) कृतं चेत् व्याख्यानं भविष्यतीति निदर्शनमत्र प्रतिपादितं भवति ।। (अत्र विवक्षितनिदर्शनं तु किमिति चेत्, कृतिख्यापनमेव । तच्च वृन्दावनाचार्यजन्मनि तदानीं परमगुरौ विद्याभ्यासशालिनः तरुणस्य विप्रस्य असाध्यमेव । प्रकरणभेदानां अज्ञातत्वात् । तथापि यादृशतादृशअध्ययनं साध्यं । तादृशआख्यानप्रवचनेनैव मम तुष्टिं सम्पादय इति निरूपयति भगवान् मुनिः ।।) ।। विप्रश्रोतृकं प्र.सं.।।

**१५-०१६-०५५-सीतापतिप्रकरणम्**

(व्या) 'अहं प्रेरयिता' इत्यारभ्य 'त्रयोर्नाशनं मुने' इत्यन्तं सीतापतिश्रोतृकं द्वितीयं प्रकरणम् ।। यथापूर्वप्रकरणोक्तव्यासभक्तप्रयत्नेन व्याख्यारूपाप्रवृत्तिर्भविष्यतीत्युक्तम् । तथा सीतापतिप्रयत्नेन राजावलम्बनरूपावृत्तिः भविष्यतीत्यभिप्रेत्य तेन कर्तव्यमाह – अहमिति ।।

**अहं प्रेरयिता पूर्वराजानं शेषमेव च ।।१६।।**

**शैवमुद्राङ्कितग्राममध्यस्थं वामनेरितम् ।**
**सुक्षेत्रमददां पुत्र तत्र दृष्टिं करोति यः ।।१७।।**

**सुत्रामलोकसन्त्रस्तो याति सावित्रमेव च ।**
**इह तस्य सुसन्तानं नाशं याति न वै मृषा ।।१८।।**

(अन्वयः) अहम् एव पूर्वराजानं शेषं च प्रेरयिता । शैवमुद्राङ्कितग्राममध्यस्थं वामनेरितं सुक्षेत्रम् अददाम् । हे पुत्र तत्र यः दृष्टिं करोति (सः) सुत्रामलोक-सन्त्रस्तः सावित्रम् एव च याति । इह तस्य सुसन्तानं नाशं याति । मृषा न वै ।

(व्या) हे सीतापते! अहं पूर्वराजानं त्रिषु राजसु प्रथमराजानं प्रेरयिता तदुद्बोधकं शेषं च प्रेरयिता ।।१६।।

तावुभौ प्रेरयित्वा, **शैवमुद्राङ्कितग्रामस्थं** = मध्यशैवानां या मुद्रा लिङ्गमुद्रा तद्युक्तशिलाङ्किताः । ये शैवानां ग्रामाः तन्मध्यस्थं **वामनेरितं** वामनमुद्राङ्कितशिलायुक्तं । **सुक्षेत्रं** = समीचीनं भूक्षेत्रम् **अददाम्**[१] ।। अत्र प्रतिग्रहीतुः योग्यतया लाभः । तत्र मद्दत्तसुक्षेत्रे **यो** द्वितीयः राजा दृष्टिं करोति ।।१७।। सः **सुत्रामलोकसन्त्रस्तः सावित्रं** यमलोकं **याति** । **इह** भूलोके **तस्य** विप्रक्षेत्रापहर्तुः द्वितीयनृपस्य **सुसन्तानं** समीचीनो वंशः **नाशं याति** । **मृषा न** । अलीकं न भवति । **वै** प्रसिद्धमेतत् ।।१८।।

**शनैः मद्द्रोहतो नाकाच्च्युतः कीनाशलोकिताम् ।**
**याति तत्रानेकयातनायं नारकिभिः सह ।।१९।।**

**अनुभुङ्क्ते मनोः कल्पपर्यन्तं दुःखमेव च ।**
**ततो विष्ठाक्रिमित्वं च काष्ठासु प्राप्यते सुत ।।२०।।**

**षष्टिवर्षसहस्राणि श्रेष्ठ तेनैव पापिना ।**

**(अन्वयः) शनैः मद्द्रोहतः नाकात् च्युतः (सन्) कीनाशलोकितां याति । तत्र अनेकयातनायां नारकिभिः सह मनोः कल्पपर्यन्तं दुःखमेव च अनुभुङ्क्ते । ततः हे सुत! श्रेष्ठ! (तेन पापिना) काष्ठासु षष्टिवर्षसहस्राणि विष्टाकृमित्वं च प्राप्यते एव ।**

**(व्या)** सः क्षेत्रापहारकर्ता **शनैः** क्रमेण **मद्द्रोहतः नाकात् च्युतः** सन् **कीनाशलोकितां** यमलोकवर्त्तां याति । तत्र यमलोके **अनेकयातनायां** संयमिन्यां **नारकिभिः सह** (अनाकिभिः) नरकस्थैः सह ।।१९।। **मनोः कल्पपर्यन्तं दुःखमेव भुङ्क्ते** । **ततः** नरकभोगानन्तरं **षष्टिवर्षसहस्राणि** (पापिना) तेन भूपेन **काष्ठासु** नानादिक्षु **विष्ठाक्रिमित्वं प्राप्यते** (तेनैव पापिना प्राप्यते[२]) ।

**तस्माद्विप्रस्य या वृत्तिर्न हर्तव्या हितेप्सुभिः ।।२१।।**

---

(१) ('अददां दानमाडिदेनु' एन्दु माडिद दानदल्लि स्वातन्त्र्यद्योतक उत्तमपुरुष. दान माडिदवनु राजने. अदक्के सूचकनु शेषनु. अवरिब्बरिगू प्रेरकराद्दरिन्द 'नाने दान माडिदेनु' एन्दु गुरुराजर वाक्य. नन्न प्रेरणेयिन्द राजनु दान माडिदनु एन्दर्थ.)

(२) आ पापि राजनिन्द होन्दल्पट्ट पडुत्ते एन्दर्थ

**विप्रग्रामेषु यो भुङ्क्ते करं राजाधमः क्वचित् ।**
**स याति निरयं घोरं रौरवं सौरिशौर्यतः ॥२२॥**

(अन्वयः) तस्मात् हे श्रेष्ठ! विप्रस्य या वृत्तिः हितेप्सुभिः न हर्तव्या । यः राजाधमः क्वचित् विप्रग्रामेषु करं भुङ्क्ते सः सौरिशौर्यतः घोरं रौरवं निरयं याति ॥

(व्या) (हे सुत) । तस्मात् विप्रस्य वृत्तिः (धनादिकं) हितेप्सुभिः शुभापेक्षिभिः न हर्तव्या ॥२१॥ एवं यो राजाधमः विप्रग्रामेषु करं भुङ्क्ते सः शौरिशौर्यतः यमपराक्रमतः घोरनरकं याति ॥२२॥

**श्रोतव्यं राजभिर्नित्यं मन्निरूपं परात्परम् ।**
**करं मह्यं च दत्वा तु त्वरयाऽरौरवाप्तये ॥२३॥**

**सीतापते मम सुतस्य कृतार्थतां च**
**श्रुत्वा तु मत्कृतिशतैर्विततार्थपूतैः ।**
**सन्तोषसन्ततिमथ प्रथयाद्यलोके**
**त्वत्तोषतस्त्वदितरेऽपि सुतोषिताः स्युः ॥२४॥**

(अन्वयः) अरौरवाः तैः राजभिः मह्यं करं च त्वरया दत्वा तु परात्परं मन्निरूपं नित्यं च श्रोतव्यम् ।

हे सीतापते! विततार्थपूतैः मत्कृतिशतैः मम सुतस्य कृतार्थतां सन्तोषसन्ततिं च श्रुत्वा अद्य लोके प्रथय । अथ त्वत् तोषतः त्वदितरेऽपि सुतोषिताः स्युः ॥

(व्या) एवं परात्परम् अत्युत्तमं मन्निरूपं मह्यं करं दत्वा ये अरौरवाः रौरवप्राप्त्य-योग्याः तैः राजभिः श्रोतव्यम् । एतत्प्रमेयं भक्तनृपं प्रति वद ॥२३॥ 'तत् कस्मिन् काले वक्तव्यं कथं च मे तद्वचने शक्तिः?' इति शङ्कां वारयितुमाह – सीतापते इत्यादि ॥ हे सीतापते! विततार्थपूतैः = विततैः विस्तृतैः अर्थैः प्रतिपाद्यैः पूतैः, मत्कृतिशतैः, मम सुतस्य कृतार्थतां सन्तोषसन्ततिं श्रुत्वा लोके प्रथय = ख्यापय[१] । अथ ख्यापनानन्तरं

---

(१) (गुरुराजर १. कृतिशतगळन्नु 'कृतिशतैः कृतेरध्यायैः पठितैः' नूरु शोकद अध्यायगळुळ्ळ

त्वत्तोषतः तदितरे शेषादयोऽपि सुतोषिताः स्युः ।।२४।।

**एवमिष्टत्रयं शिष्ट सुष्ठु कारय प्रेष्ठ मे ।**
**काष्ठासु मद्दयादृष्टिः श्रेष्ठ त्वय्येव नैष्ठिकी ।।२५।।**

(अन्वयः) एवं हे शिष्ट! इष्टत्रयं सुष्ठु कारय । मे प्रेष्ठ! काष्ठासु मद्दयादृष्टिः । हे श्रेष्ठ! त्वय्येव नैष्ठिकी (भवति) ।

(व्या) एवं कृतिख्यापनवत्[१] इष्टत्रयं कृतेः ख्यापनं, शिलास्थत्वेन करणं, भक्त-परिग्रहश्चेति इष्टत्रयं विप्रेण कारय । मे मम प्रेष्ठ सीतापते! काष्ठासु दिक्षु मद्दयादृष्टिः त्वयैव (त्वय्येव)[२] नैष्ठिकी भवति ।।२५।।

**भवतीह ततो सीतापते कान्तं च मे सुतम् ।**
**तातस्य कुरु कृत्यं ते त्वां पाति च स विश्वकृत् ।।२६।।**

**इति सम्बोधयाम्भोधिशयनस्य सभातळे ।**
**भविष्यति सुत स्थानमभयं चापि मद्भटैः ।।२७।।**

(अन्वयः) हे सीतापते! ततः मे सुतं 'ते कान्तं च तातस्य कृत्यं कुरु । त्वां सः विश्वकृत् इह पाति' इति सम्बोधय । अम्बोधिशयनस्य सभातळे सुतस्थानं

---

स्वाप्नवृन्दावनाख्यानवन्नु व्यासङ्गमाडि 'नानु पारादेनु, इन्नु ननगे संसारभयविल्ल' एन्दु आनन्ददिन्द विप्र सीतापतिय मुन्दे हेळुत्तारे. २. अथवा नन्न कृतिशतैः पठितैः नन्न नूरारु ग्रन्थगळन्नु व्यासङ्गमाडि, हागे सन्तोषवन्नु व्यक्तमाडुत्तारे. ३. अथवा नन्न 'कृतिशतैः' तदनुग्रहार्थं कृतैः एन्दरे नानु नूरारु सल अवन मेले अनुग्रहदिन्द माडिद अद्भुतकार्यगळिन्द आतनु कृतार्थतेयन्नु होन्दि एन्दरे अन्तरङ्गज्ञानियागि तन्न सन्तोषवन्नु प्रियनाद सीतापतिगे व्यक्तमाडुत्ताने. आग हे सीतापते 'ज्ञानिगळेन्दरे नम्म स्वामिगळु, अवर हागे यारू गुरुराजरन्नु लिसिकोण्डिल्ल' एन्दु अवर कीर्तियन्नु नीनु शेषादिगळिगे हेळु एन्दर्थ.)

(१) (कृतिख्यापनवत् एम्बुदक्के बदलु विप्रख्यापनवत् एन्दिरबेकु.)

(२) (त्वयैव एन्दु स्वा.पाठ. एन्दरे नीनु हरडुवुदरिन्दले नन्न दयादृष्टियु अनेक दिक्कुगळल्लि अनेक जनर मेले बीळुत्ते एन्दर्थवागुत्ते. आदरे 'त्वय्येव' एन्दु वृं. पाठ. अदे साधुवागि तोरुत्ते. 'नीनु इष्टत्रयवन्नु माडिसि, विप्रकीर्तियन्नु विस्तारमाडिदरे एल्ला दिक्कुगळल्लू एन्दरे नीनु एल्लेल्लि होदरू नन्न दयादृष्टियु निन्न मेले निश्चलवागिरुत्ते' एन्दर्थवागुत्ते. विप्रकीर्तिवृद्धियिन्द विप्रनिगे राजधानिप्रवेश. आ प्रवेशवाद मेले सीतापतिगे राजदर्शन. आग ग्रामविषयद धर्मबोधने.)

**भविष्यति । मद्भटैः अभयं चापि भविष्यति ।।**

**(व्या) ततः** तस्मात् कारणात् **मे सुतं ते कान्तं** स्वामिनं विप्रं प्रति **'तातस्य पितृतुल्यस्य गुरोः कृत्यम्** उक्तकृत्यत्रयं **कुरु'** इति; **'त्वां (स) विश्वकृत् पाति'** इति च **(सम्बोधय=)** सम्यक् बोधय । 'तातस्य जनकस्य कृत्यं कुरु' । विप्रं प्रति । 'त्वां विश्वकृत् पाति' इति बोधयेति वा । एवं बोधनाभावे विप्रस्य देशान्तरगमने कृतिख्यापनस्य अभिमतराजधानीप्रवेशस्य च अवकाशाभावेन अभिमतेष्टत्रयसिद्धिर्न भविष्यतीति भावः ।।२६।। एवं सम्बोधनेन (विप्रं प्रति सम्यक् बोधनेन) **अम्भोधिशयनस्य** = समुद्रशायिनः **सभातले सुतस्थानं** सुतस्य विप्रस्य समीपे स्थानं भविष्यति । **मद्भटैः** मद्दूतैः **अभयं च भविष्यति** ।।२७।।

**शतहायनपर्यन्तं कृतहानिर्न चैव ते ।**
**वृतहारावळिं शौरिं मितहारं प्रपूजय ।।२८।।**

**मत्पादसूर्यकिरणेन तवान्तरस्थाज्ञानान्धकारहरणं कुरु पुत्रवर्य ।**
**मध्याह्नभानुकिरणेन हृदम्बुजं ते चोत्फुल्लपद्मवदतिप्रवणं वरेण्यम् ।।२९।।**

**मद्रञ्जिते च हृदये वरदं हरिं तं संस्थापयाद्यसदनं मदनाभिरामम् ।**
**मन्मन्त्रतन्त्रविधिभिः कुरु वारिधौ यः शेते च शेषशयने परमस्य पूजाम् ।।३०।।**

**(अन्वयः) ते शतहायनपर्यन्तं कृतहानिः च न एव । वृतहारावळिं मितहारं शौरिं प्रपूजय ।**

**हे पुत्रवर्य! मत्पादसूर्यकिरणेन तव अन्तरस्थाज्ञानान्धकारहरणं कुरु । ते अति-प्रवणं च हृदम्बुजं मध्याह्नभानुकिरणेन उत्फुल्लपद्मवत् वरेण्यं (भवति); मद्रञ्जिते हृदये च मदनाभिरामं वरदं तं हरिं संस्थापय; यः वारिधौ शेषशयने शेते च (तस्य) परमस्य पूजां मन्मन्त्रतन्त्रविधिभिः कुरु ।।**

**(व्या) शतहायनपर्यन्तं** शतवर्षपर्यन्तं, **कृतहानिः** = त्वत्पूजामार्गादेः हानिर्नैव भवति । **वृतहारावळिं** = प्राप्तमुक्तहारावळिम्, **मितहारं** = मर्यादारूपकौस्तुभोपेतहारयुक्तं वनमालया च युक्तम् ।

(हे पुत्रवर्य सीतापते) **मत्पादसूर्यकिरणेन तवान्तरस्थाज्ञानान्धकारहरणं** चित्तगतस्य अज्ञानरूपस्य अन्धकारस्य परिहारं **कुरु** । **हे पुत्रवर्य** सीतापते! **अतिप्रवणम्** अतिनम्रं **तव हृदम्बुजं मध्याह्नभानुकिरणेन** उत्फुल्लपद्मपत्रवत् **वरेण्यं** (सुप्रकाशयुक्तं भवतीत्यर्थः) ।।२९।।

एतादृशे **(मद्रञ्जिते)** मया रञ्जिते हृदये **वरदं मदनाभिरामं सदनं** सन् अनः प्राणः यस्य वशे सः तथोक्तं (वशीकृतमध्वं) श्रीमदाचार्यपूजितं सतां चेष्टकं वा । वरप्रदं **हरिं** बिम्बरूपिणं परमात्मानं **संस्थापय** । चित्ते (शेषशायिरूपं ध्यायस्व इत्यर्थः) । यः पयो**वारिधौ शेषशयने शेते** तस्य **परमस्य** शेषशयनस्य **पूजां** (मानसपूजां) **मन्मन्त्रतन्त्र-विधिभिः कुरु** ।।३०।।

**एवं तद्ध्यानमानेन गानं कुरु गुरूदितम् ।**
**मा संसारभयं धीर वरदोऽस्मि तवादरात् ।।३१।।**

**मद्वाणीं भण कल्याण कर्णरन्ध्रे शृणु प्रिय ।**
**गुणिनश्चरणं नैव नन्दनस्यापि न त्यज[१] ।।३२।।**

**(अन्वयः) एवं तत् ध्यानमानेन गुरूदितं गानं (च) कुरु । तवादरात् वरदः अस्मि; हे धीर! तव संसारभयं मा । हे कल्याण! मद्वाणीं भण; हे प्रिय! कर्णरन्ध्रे शृणु । गुणिनः चरणं, नन्दनस्य अपि च न त्यज ।।**

**(व्या) एवं** उक्तप्रकारेण **ध्यायमानेन** (ध्यानरूपपूजनेन) त्वं प्रपूज्य, **गुरूदितं** श्रीमदाचार्योक्तं **गानं** द्वादशस्तोत्रं **गानं कुरु** । **गुणिनः** विप्रस्य **चरणं न त्यज** । (नन्दनस्यापि चरणं न त्यज । वेदवेद्यस्यापि पादस्मरणं कुरु) । एवं सति विप्रावलम्बन-शेषशयनपूजादिना प्राप्तमहत्वस्य तव कालविशेषे राजधानीप्रवेशः । तं प्रति कथनस्य अवसरोपि भविष्यतीति भावः ।।३२।।

**रामो राजीवनेत्रोऽसौ राज्ञः स्वैरं वरं ददौ ।**
**तदग्रजं शरैर्हत्वा तद्द्वारानसिधारया ।।३३।।**

---

(१) (त्यज एम्बुदु वृं.पाठ. चरण त्वेव एन्दु लि. वृं.पाठद प्रकार 'गुणिनश्चरणं नैव त्यज । नन्दनस्यापि वेदवेद्यस्यापि चरणं न त्यज एन्दु एरडु आझे)

**वृन्दावनं हरं स्वस्यैवाग्रतश्चिरसंस्थितम् ।**
**रक्तच्छर्दिमपि ह्यत्र कारयामास वीर्यवान् ।।३४।।**

**तदारभ्यामरगणैर्मद्वृन्दावनमार च ।**
**तद्राज्यं च ददौ स्वस्य नामधारिण एव च ।।३५।।**

(अन्वयः) असौ राज्ञः राजीवनेत्रः रामः स्वैरं वरं ददौ । वीर्यवान् (रामः) स्वस्यैव अग्रतः चिरसंस्थितं वृन्दावनं हरं तदग्रजं शरैः हत्वा, तद्दारान् असिधारया (हत्वा) रक्तछर्दिमपि अत्र कारयामास । हि । तदारभ्य अमरगणैः (सह) च मद्वृन्दावनम् आर । स्वस्य नामधारिणः एव तद्राज्यं च ददौ ।।

**(व्या)** न केवलं प्रागुक्तस्य क्षेत्रापहर्तुः (द्वितीयनृपस्य) निरयाद्यनिष्टमेव वक्तव्यम् । किन्तु तदनुजस्य (तृतीयस्य) यदिष्टं दत्तं रामेण । यत्तेन कर्तव्यं प्रसक्तानिष्टपरिहारकत्वेन तदपि वक्तव्यमिति भावेनाह – **राम इत्यादि ।। राजीवनेत्रः** पद्मनयनः **असौ** राजोपास्यो **रामः** (तृतीय) **राज्ञः स्वैरं वरं** स्वेच्छानुसारिणं वरं **ददौ** । **तदग्रजं** तदपेक्षया प्राक्तनं विप्रक्षेत्रापहर्तारं मध्यमं नृपं **शरैर्हत्वा** (= ताडयित्वा) तद्दारानपि खड्गधारया हत्वा ।।३३।। **स्वस्य अग्रतः** पुरतः स्थितं **(वृन्दावनहरं =)** वृन्दावनं हरं अपहरं तं दृष्ट्वा **रक्तच्छर्दिमपि कारयामास** । **वीर्यवान्** श्रीरामः ।।३४।।

**तदारभ्य** देवगणैः सहितः सन् **मद्वृन्दावनम् आर** = प्राप । **तद्राज्यं** क्षेत्रापहारिणो राज्यं **स्वस्य नामधारिणः** 'राम' इति नामधारिणः (तृतीयनृपस्य) **ददौ** ।।३५।।

**तद्विरोधिनि क्रुद्धः सन् रुद्रः कालान्तकोऽप्यभूत् ।**
**मम नन्दनवाक्येऽपि श्रद्धाराहित्यवानभूत् ।।३६।।**

**तद्वाग्विरोधिनि क्रुद्धः कथं कुर्यादनुग्रहम् ।**
**हिताहितोपदेशस्य कर्ता च गुरुरव्ययः ।।३७।।**

**गुरुद्वारा प्रसन्नः सन् भरतीदं रमापतिः ।**

(अन्वयः) तद्विरोधिनि क्रुद्धः सन् (रामः) रुद्रः कालान्तकः अपि अभूत् । (यतः सः राजः) मम नन्दनवाक्ये अपि श्रद्धाराहित्यवान् अभूत् ।

**हिताहितोपदेशस्य कर्ता च गुरुः (प्रसिद्धम्); तद्वाग्विरोधिनि क्रुद्धः (रामः) कथं अनुग्रहं कुर्यात्? (यतः) अव्ययः रमापतिः गुरुद्वारा प्रसन्नः सन् इदं भरति (खलु) ।**

(व्या) **तद्विरोधिनि** = यस्मै स्वयं राज्यं ददौ तद्विरोधिनि, पुरुषविशेषे **क्रुद्धः सन्, कालान्तकः**[१] = कालवत् यमवदन्तकोऽभूत् । एवं मद्वृन्दावनस्थितरामचन्द्रप्रसादेन प्राप्त-राज्योपि तृतीयनृपः मद्भक्तवाक्ये **श्रद्धाराहित्यवानभूत्** ।।३६।।

**तद्वाग्विरोधिनि** = मन्नन्दनवाग्विरोधिनि **क्रुद्धः** रामः **कथम् अनुग्रहं कुर्यात्?** मन्नन्दनस्य तद्गुरुत्वात् । (तद्गुरुत्वं च) तद्धिताहितोपदेशकर्तृत्वात् ।।३७।। **रमापतिः इदं** सर्वं **गुरुद्वाराप्रसन्नः** सन्नेव **भरति** ।

**मन्निरूपितवाक्येषु चैकं वा नैव चाकरोत् ।।३८।।**

**राजसेवासु निरतो नरकं याति दारुणम् ।**
**गुरुरेव हरिः साक्षाद्गुर्वन्तर्याम्यरिं हरेत् ।।३९।।**

**करोति परमं चैवानुग्रहं नरकं हरम् ।**

**(अन्वयः) (सः राजा) मन्निरूपितवाक्येषु एकं च वा न अकरोत् । राजसेवासु च निरतः (सन्) दारुणं नरकं याति । गुर्वन्तर्यामी हरिः साक्षात् गुरुः एव । (सः) अरिं हरेत् । नरकं हरं परमम् अनुग्रहं च एव करोति ।**

(व्या) **मन्निरूपितवाक्येषु** = मदुक्तकार्येषु एकमपिकार्यं तृतीयनृपः **न अकरोत्** ।।३८।। तेन दोषेण राजसेवासु निरतः सन् (स तृतीयनृपः) दारुणं नरकं याति । गुर्वन्तर्यामिणो हरेरनुग्रहाभावे सतीति भावेनाह – **गुरुरेवेति** ।। **गुर्वन्तर्यामी** हरिः **साक्षाद्गुरुः** मुख्यगुरुः[२] । सः **अरिं** शत्रुं परि**हरेत्** ।।३९।। नरकपरिहारकमनुग्रहं च करोति ।

**एतत्प्रमेयं सर्वं तु वद सीतापते मतम् (नृपम्) ।।४०।।**

---

(१) 'सोऽन्तकः स रुद्रः स प्राणभृत् स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परोवरीयान्' इत्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात् (ब्र.सू.भा. १/३/३)

(२) तथाहि छान्दोग्यभाष्ये श्रीमदाचार्याः – 'वायोश्च भगवान् विष्णुः न तस्मादुत्तमो गुरुः' – इत्याचार्यसंहितायाम् ।

**मया तस्मै कृतं राज्यं राज्ञे रामानुशासनात् ।**
**मम नन्दनसन्मानं करोतु मनसाऽर्पितम् । ।।४१।।**

**मम वृन्दावने भक्तिं शक्तिपूर्वं करोत्वलम् ।**

(अन्वयः) हे सीतापते! एतत् मतं सर्वं प्रमेयं वद । रामानुशासनात् मया तस्मै राज्ञे कृतं राज्यम् । मनसा अर्पितं मम नन्दनसन्मानं करोतु । (तथा) मम वृन्दावने अलं शक्तिपूर्वं भक्तिं करोतु ।

**(व्या) एतत् प्रमेयं** उक्तं प्रमेयम्, **सर्वं** नृपं प्रति वद[१] । **(हे सीतापते)** ।।४०।। **रामस्यानुशासनात्**[२] आज्ञाबलात् **मया तस्मै राज्ञे कृतं राज्यम्** । दत्तं भविष्यति । मन्नन्दनवाक्ये श्रद्धाराहित्यदोषपरिहारार्थं **मम नन्दनसन्मानं** मम नन्दनस्य विप्रस्य सन्मानं **मनसा (अर्पितं) करोतु** । अनेन दाक्षिण्यादिना न कर्तव्यम्; मनसा आदरयुक्तेन करोतु ।।४१।। मन्निरूपितवाक्योपेक्षादोषपरिहारार्थं **मम वृन्दावने अलं भक्तिं** पूर्णां भक्तिं **करोतु** । (**शक्तिपूर्वं** शाठ्यरहितं यथा भवति तथा)।

**एवं चेदायुरारोग्यं राज्यं सुस्थिरमेव च ।।४२।।**

**रामस्यानुग्रहेणैव राज्ञः सर्वं भविष्यति ।**
**तस्मात्तस्मै वदस्व त्वं गत्वा सीतापते कृतम् ।।४३।।**

**सुतेन मम सन्मत्या मथितं कथितं तव ।**

(अन्वयः) एवं चेत् रामस्यानुग्रहेण एव आयुरारोग्यं, सुस्थिरं राज्यं सर्वं राज्ञः भविष्यति । तस्मात् हे सीतापते! त्वं गत्वा तस्मै कृतं वदस्व । मम सुतेन सन्मत्या मथितं तव कथितं (च वदस्व) ।

**(व्या) एवं चेदायुरारोग्यं राज्यं सुस्थिरं** सम्यक् स्थिरं **भवेत्** ।।४२।। (अभीष्टं **सर्वं**

---

(१) मतं वद ('नृपम्' इति श्री.पाठः) ।
(२) 'असतां च सतां चैव हरिरेवानुशासकः ।
सतां तु श्रेयसे सैव ह्यनुशास्तिर्भविष्यति ।
असतां विपरीताय लङ्घयित्वाऽनुशासनम्' इत्याग्नेये ।। भाग.ता.१०.२५.०७ ।।

आपत्परिहारादिकं राज्ञः **रामस्यानुग्रहेणैव भविष्यति** । **तस्मात् हे सीतापते! गत्वा तस्मै कृतं त्वं वदस्व** । तेन कृतं विस्मरणादरणादिकम् अनिष्टकरमिति बोधय ।।) अनेन राज्यचाञ्चल्यसन्देहसमये सीतापतिना च वक्तव्यमित्युक्तं भवति ।।४३।। (किं वक्तव्यमित्यत आह) **मम सुतेन विप्रेण सन्मत्या** सद्बुद्ध्या **यन्मथितम्,** यत् **तव कथितं** (तदेव) त्वया वक्तव्यम् ।

**शेषमुद्दिश्य यत्प्रोक्तं पञ्चपुत्रित्वमत्र तु ।।४४।।**

**तन्मिथ्याभूतमेवासीदिति शङ्काऽपि माऽस्तु ते ।**

**(अन्वयः) अत्र तु शेषम् उद्दिश्य यत् पञ्चपुत्रित्वम् प्रोक्तम्, तत् मिथ्याभूतम् एव आसीत् इति ते शङ्का अपि माऽस्तु ।।**

**(व्या) शेषमुद्दिश्य** च (तद्विषये) **'पञ्चवृन्दावनं चात्र'** (१०।८१) **यत्पञ्चपुत्रत्वम्** उक्तम् ।।४४।। **तत् मिथ्याभूतमासीदिति** त्वया शङ्का न कार्या । तच्छङ्कायां तु नृपं प्रति वक्तव्यकथने बुद्धिर्नभविष्यतीति भावः ।।

**पञ्चवृन्दावनान्येव तत्पुत्रा इति कन्दिना ।।४५।।**

**मया नन्दन सम्प्रोक्तं शृणु सुन्दर सद्गतिम् ।**
**पुत्रिणो यां गतिं यान्ति तां गतिं याति निश्चिताम् ।।४६।।**

**(अन्वयः) हे नन्दन! कन्दिना मया 'पञ्चवृन्दावनानि एव तत्पुत्राः' इति सम्प्रोक्तम् । हे सुन्दर! सद्गतिं शृणु । यां सद्गतिं पुत्रिणः यान्ति, तां निश्चितां गतिं याति ।**

**(व्या) पञ्चवृन्दावनान्येव** पञ्चपुत्रा इत्यभिप्रायेण प्रागुक्तम् । वृन्दावनातिरिक्ताः पञ्च-पुत्राः भविष्यन्तीति भ्रान्त्या न शङ्कनीयमिति भावः ।। (**पञ्चवृन्दावनान्येव तत्पुत्राः** शेषस्य पुत्रवद्दुर्गतिपरिहारकाः । **इति कन्दिना** यतिना मया । हे नन्दन! **सम्प्रोक्तम् । हे सुन्दर!** । **सद्गतिं** शेषस्य भाविसद्गतिं **शृणु** । पुत्रिणः स पुत्रवन्तः यां सद्गतिं । निश्चितां यान्ति । तां गतिं याति शेषोपि ।।४६।।

**अत एव हि पञ्चाशद्युगपर्यन्तमेव च ।**

**महीयते स विष्णोर्हि लोकेऽपीति मयोदितम् ।।४७।।**

**पूर्वजन्मनि राजाऽयं द्विजचक्षुः प्रजेरितः ।**
**उज्जहारात्मजे नाऽस तज्जदोषेण चान्धकः ।।४८।।**

(अन्वयः) अत एव 'पश्चाशद्वयुगपर्यन्तम् एव सः विष्णोः लोकेऽपि महीयते' इति च मयोदितम् । अयं पूर्वजन्मनि राजा; प्रजेरितः द्विजचक्षुः उज्जहार; तज्जदोषेण अन्धकः आत्मजे न आस ।

**(व्या) अत एव** 'विष्णुलोके पश्चाशद्युगपर्यन्तं महीयते' इति पूर्वमेव तत्रैवोदितम् । तस्मात् शेषस्य अजातपुत्रकत्वात् आख्यान यनृतमिति न शङ्कनीयमिति भावः ।।४७।।) जन्मविशेषे शेषस्यानिष्टप्राप्तौ तत्प्राग्जन्मकृतदुष्कृतं ज्ञापयितुमाह – **पूर्वेति ।।** अयं **शेषः** । **पूर्वजन्मनि राजा** । **प्रजेरितः** दुष्टप्रजाभिरीरितः सन् = प्रेरितः सन् कस्यचिद् ब्राह्मणस्य **चक्षुः उज्जहार** । तज्जन्यदोषेण **अन्धको** जातः[१] ।।४८।। ('आत्मजो नास' इति पाठे तज्जन्यदोषेण सीतापतिदर्शनपर्यन्तं शेषस्य पुत्रसन्तानोऽपि नासीत् इति ग्राह्यम् ।।)

**तस्माच्छूकाऽपि शङ्काया माऽस्तु ते वै सुपुत्रक ।**
**काकवाक्यस्य सादृश्यं तोक मा कुरु मत्कृतौ ।।४९।।**

(अन्वयः) हे सुपुत्रक! तस्मात् (फलानाम् उपलब्धत्वात्) ते शङ्कायाः शूका अपि माऽस्तु । वै । हे तोक! मत्कृतौ काकवाक्यस्य सादृश्यं मा कुरु ।।

**(व्या)** एवं बहूनां फलानाम् उपलब्धत्वात् (केषाञ्चित् फलानां रूपान्तरेणोपलब्धत्वात्) मत्कृतौ शङ्का न कार्या ।।४९।। (पदार्थः सुगमः । **हे सुपुत्रक!** सीतापते **तस्मात्** = शेषविषये पश्चपुत्राभावसन्देहस्य परिहृतत्वात् । **ते शङ्कायाः शूकापि मास्तु** । **हे तोक! मत्कृतौ** एतस्मिन् आख्याने 'काकस्य कति वा दन्ताः? मेषस्याण्डं कियत् पलम्? कम्बळे

---

(१) ('तज्जन्यदोषेण आत्मजो नास' एन्दु हेळलिल्ल. अन्धको जातः एन्दे हेळिद्दारे. आद्दरिन्द 'आत्मजेन' एम्ब पाठवन्नु इट्टुकोण्डु श्रीकाररु व्याख्यान माडिरबहुदु. किञ्च 'अन्धकः' एन्दु याव पदद आधारदिन्द शेषनन्नु वर्णिसिद्दारेयो अदु व्याख्यातवागिल्ल. आत कुरुडनागिद्दरे पश्चोत्सवादिगळन्नु हेगे माडिसुत्ताने आद्दरिन्द 'आत्मजेन अन्धकः आस' एन्दरे पुत्रनेम्ब कण्णिनिन्द हीननादनु एन्दु प्रायशः अर्थ माडिद्दारे.)

कति रोमाणि? का वार्ता चोळमण्डले?' इत्यादि प्रश्नपरिहारकअनुपादेयग्रन्थसादृश्यं मा निरूपय) ।।

**पूर्वं तु सार्वभौमोऽयं कूर्मको नर्मदातटे ।**
**शर्मणे नर्मकृत्स्वैरं तदूर्मिगतनौर्गतः ।।५०।।**

**स्त्रीगणैः सहितः स्त्रैणो ब्राह्मणैः शापमाप च ।**
**आणिमाण्डव्यकण्वाद्यैरणिमाद्यष्टसिद्धिभिः ।।५१।।**

(अन्वयः) अयं पूर्वं तु कूर्मकः नर्मदातटे सार्वभौमः; स्त्रैणः तदूर्मिगतनौर्गतः (सन्) शर्मणे स्त्रीगणैः सहितः (सन्) स्वैरं नर्मकृत् अणिमाद्यष्टसिद्धिभिः अणिमाण्डव्यकण्वाद्यैः ब्राह्मणैः शापम् आप च ।

(व्या) पूर्वजन्मनि (शेषः) कस्मिन् देशे राजा? किमर्थं विप्रचक्षुरुज्जहार? इत्यत आह – **पूर्वं त्विति ।। नर्मदातटे** = नर्मदातीरे । नायकः **कूर्मकः** सन् अयं शेषः पूर्वं सार्वभौमः **शर्मणे** सुखार्थं **स्त्रीगणैः सहितः** सन् **तदूर्मिगतनौर्गतः** सन् = तदूर्मिषु गता नौः नौका, तस्यां गतः सन् । **स्त्रैणः** स्त्रीभोगसंसक्तः । ब्राह्मणानां **(स्वैरं) नर्मकृत्** अपहासकर्ता ।।५०।। **अष्टसिद्धिभिः** (बहुव्रीहिः) **अणिमाण्डव्यकण्वाद्यैः** = अणिमाण्डव्यश्च कण्वश्च = अणिमाण्डव्यकण्वौ, तौ आद्यौ येषां ते, तथोक्ताः तैः । **ब्राह्मणैः शापम् आप** प्राप ।।५१।।

**'राजसेवासु निरतो रामस्यानुचराग्रजे ।**
**मृते सति गरैर्योगे तस्यावरजराज्यहा ।।५२।।**

**तद्द्रोहतो ह्यभद्रं च यास्यती'ति च ते शपुः ।**

(अन्वयः) 'राजसेवासु निरतः (सन्) रामस्य अग्रजे गरैः योगे मृते सति; तस्य अवरजराज्यहा (भव); तद्द्रोहतः अभद्रं च यास्यति (भवान्)' इति ते च शपुः ।

(व्या) शापप्रकारमाह – **राजसेवास्विति ।।** राज्ञां सेवासु आसक्तः सन् **रामस्य** = तन्नामकनृपस्य **अग्रजे** । प्रागुक्तक्षेत्रापहर्तरि (मध्यम) भूपे **अनुचर** । तदनुसरणेन जीवनं

कुर्विति भावः । तस्मिन् दुष्टभूपे गरयोगसमये **मृते सति** तस्य अवरजस्य रामनामकराज्ञः राज्यहा राज्यप्रतिबन्धकः ।।५२।। **तद्द्रोहतः** तस्य रामनामकराज्ञः द्रोहतः । **अभद्रं** हूणादिकुलजातं पुरुषं **यास्यति** भवान् इति **ते** माण्डव्याद्याः **शपुः** शेपुः ।।

**इति शप्तस्तत्र चैकं विप्रं यत्प्रेरिता द्विजाः ।।५३।।**

**ददुः स्वपुरतः शापं तं प्रजाभिः समीरितः ।**
**कारागृहे रहस्ये तु ह्यसह्यं तं प्रहस्य च ।।५४।।**

**प्रहस्य स्वहितेनैव सहितो वसुहोत्रकम् ।**
**नेत्रस्योत्पाटनं चक्रे पुत्रमन्त्रिनिवारितः ।।५५।।**

**विप्रद्रोहफलं चैतन्नेत्रयोर्नाशनं मुने ।**
**इति पूर्वकृतं कर्म शर्मनाशाय चेह तत् ।।५६।।**

**अहं धर्मगतिं दास्ये तस्य मर्माणि नो वदे ।**

(अन्वयः) इति शप्तः (कूर्मकः) तत्र यत् प्रेरिताः द्विजाः शापं ददुः; तत्र च एकं वसुहोत्रकं विप्रं प्रजाभिः समीरितः स्वपुरतः तं रहस्ये काराग्रहे तु तं असह्यं हि प्रहस्य च, स्वहितेन एव पुत्रमन्त्रिनिवारितः (अपि) प्रहस्य (तस्य) नेत्रस्य उत्पाटनं चक्रे । हे मुने! एतत् नेत्रयोः नाशनं विप्रद्रोहफलं च । इति तत् पूर्वकृतं कर्म इह शर्मनाशाय च (जातम्) । तस्य अहं धर्मगतिं दास्ये; (तस्य) मर्माणि न वदे ।

**(व्या) इति शप्तः** कूर्मकः । **तत्र** ब्राह्मणेषु मध्ये **यत्प्रेरिताः** सन्तः ब्राह्मणाः **शापं ददुः** ।।५३।। तम् **एकं ब्राह्मणं वसुहोत्रकं** तन्नामकविप्रं **कारागृहे प्रहस्य** = अपहासं कृत्वा ।।५४।। **पुत्रमन्त्रिनिवारितः** अपि तस्य चक्षुं उज्जहार (**स्वहितेनैव सहितः** = स्वस्य आप्तजनयुक्तः) ।।५५।। **हे मुने!** मननशीलसीतापते! **इति** पूर्वोक्तप्रकारेण पूर्वं कूर्मकेण कृतं **कर्म शर्मनाशाय** = सुखनाशाय (साक्षात् पञ्चपुत्रत्वाभावाय) अस्मिन् जन्मनि जातम् ।।५६।। एवं **तस्य** बहूनि **मर्माणि** सन्ति । तानि न वक्ष्यामि । **तस्य धर्मगतिं दास्यामि** ।

तस्मात् त्वं स्थिरचित्तो भूत्वा (आख्यानग्रन्थः अप्रामाणिकभागयुक्तः अनुपादेयांशयुक्तः इत्यादि शङ्कारहितो भव) 'नृपं प्रति मदुक्तं प्रमेयं वद' इति नृपहितरूपं निदर्शनमुक्तं भवति ।। सीतापतिश्रोतृकं. प्रकरणं सम्पूर्णम्।।

### १५–०५६–०५८–विप्रप्रकरणम्

(व्या) 'इत्येकं श्लोकम्' इत्यारभ्य 'अग्रजन्माभवत्ततः' इत्यन्तं सार्धपद्यं विप्रश्रोतृकं प्रकरणं (कूलङ्कषं विचारे कृते 'इति पूर्वकृतं कर्म' इत्यारभ्य 'भवत्ततः' इत्यन्तं सार्धद्वयपद्यं विप्रश्रो.प्र.) ।

**[१](इति पूर्वकृतं कर्म शर्मनाशाय चेह तत् ।।५६।।**

**अहं धर्मगतिं दास्ये तस्य मर्माणि नो वदे ।)**

**इत्येकं श्लोकमाकाशे गते मयि गतं द्विज ।।५७।।**

**आदत्स्व तं वदस्वेह मम पुत्रस्य चाग्रतः ।**

**स्वपुरोहितमाराध्य चाग्रजन्माऽभवत् ततः ।।५८।।**

**(अन्वयः) हे द्विज! मयि आकाशे गते सति, 'इति पूर्वकृतं .... मर्माणि नो वदे' इत्येकं श्लोकं गतम् । तम् इह आदत्स्व; मम पुत्रस्य अग्रतः च वदस्व । ततः स्वपुरोहितम् च आराध्य अग्रजन्मा अभवत् ।।**

(व्या) **हे द्विज! मयि (आकाशे गते =)** आकाशगते सति । गतं = 'इति पूर्वकृतं कर्म' इति श्लोकमेकं त्वया विस्मृतम् । **आदत्स्व** = पुनर्गृहाण तमेकं श्लोकं **इह** अस्मिन् अध्याये । **मम पुत्रस्य** शेषस्य (वेदनिधेः) **अग्रतः वदस्व** ।। प्राग्जन्मनि कूर्मकाख्यस्य

---

(१) ('इति पूर्वकृतं कर्म शर्मनाशाय चेह तत् । अहं धर्म गतिं दास्ये तस्य मर्माणि नो वदे' एम्बुदु सीतापति प्रकरणद कोनेय श्लोक. आदरे आ श्लोकवन्नु विप्रनु बरेयिसिरलिल्ल. मरुदिन आ श्लोकवन्नु विप्रनु बरेयिसिरलिल्ल. मरुदिन आ श्लोकवन्नु गुरुराजरु विप्रनिगे हेळि 'इत्येकं श्लोकं' आ शोकवु निन्निन्द नेन्ने बरेयिसल्पडलिल्ल एन्दु हेळि, अदन्नु सीतापति प्रकरणक्के सेरिसु एन्दु विप्रनिगे बोधिसिदरु. आद्दरिन्द 'इति पूर्वकृतं ... नो वदे' एम्ब श्लोकवु विप्रप्रकरणक्कू सेरिदे. आद्दरिन्द एरडूवरे श्लोक विप्रप्रकरणवेन्दु केलवरु गुरुतु माडिद्दारे. अर्थविचार माडिदरे, 'इत्येकं ... भवत्ततः' एम्ब ओन्दूवरे श्लोक विप्रप्रकरणवेन्दु केलवरु गुरुतु माडिद्दारे.)

राज्ञः । तदुत्तरजन्मनि शेषनामकस्य । **स्वपुरोहितमिति** ।। **अग्रजन्मा** ब्राह्मणजन्मा **अभवत्** ।।५८।। अत्रोक्तनिदर्शनं तु गूढस्य मर्मणः शेषसाक्षिसिद्धत्वम् ।।विप्र.प्र.सं.।।

### १५-०५९-०६१-शेषप्रकरणम्

**(व्या)** **'वृद्धं न त्यज'** इत्यारभ्य **'जाने मत्कृतिमञ्जसा'** इत्यन्तं चतुर्थं शेष-प्रकरणम् ।।

**वृद्धं न त्यज मद्वाचं श्रद्धावान् वदतीह च ।**
**मम पुत्रः कृतार्थः सन् आयातु भरताग्रजः ।।५९।।**

**यथा कृतसमस्तार्थस्तावद्वक्ता ह मत्कृतिम् ।**
**श्रुत्वा तु मत्कृतिं को वा सन्तोषं च करोति वै ।।६०।।**

**सुतं विना न पश्यामि मत्कृतौ तोषिणं गुणिन् ।**
**अथापि वक्ष्ये सीतायाः पतेर्नाम्ना वदन्ति यम् ।।६१।।**

**तं प्रति प्रकृतिं तस्य जाने मत्कृतिमञ्जसा ।।**

(अन्वयः) (हे शेष!) वृद्धं न त्यज; श्रद्धावान् (सन्) मद्वाचं वदति । यथा कृतसमस्तार्थः भरताग्रजः (तथा) मम पुत्रः कृतार्थः सन् आयातु; तावत् (अहं) वक्ता ह; मत्कृतिं श्रुत्वा सन्तोषं को वा करोति, वै? हे गुणिन्! मत्कृतौ तोषिणं सुतं विना (अन्यं) न पश्यामि । अथापि यं सीतायाः पतेः नाम्ना वदन्ति, तं प्रति मत्कृतिम् अञ्जसा वक्ष्ये; तस्य प्रकृतिं जाने ।

**(व्या)** अवक्तव्यत्वेन कथितस्य मर्मणः श्रवणे सति । शेषस्य[१] विप्रे दोषशङ्का न कार्येति भावेनाह – **वृद्धमित्यादि ।। हे गुणिन्** शेष! **वृद्धं** विप्रं **न त्यज** । कुतः? यतः **श्रद्धावान्** मत्कृतिं **वदति । मम पुत्रः** विप्रः । (**भरताग्रजः यथा कृतसमस्तार्थः**) रामवत् (कृतार्थः सन्) कृतकार्यः सन् **आयातु** ।।५९।।

तावत्पर्यन्तं यावन्निदर्शनं भाव्यम्, **तावद**हमञ्जसा वक्ता । ततोऽधिकं तु 'न तथा वक्ष्यामीत्यञ्जसा' इत्यनेन सूचितं भवति । विप्रस्य कालविशेषे देशान्तरगमनं भविष्यति ।

---

(१) (शेषस्य = शेषेण एन्दर्थ. 'शेषं प्रति आह' एन्दू सेरिसिकोळ्ळबेकु.)

तत्कालीनानि बहूनि वृत्तान्तानि न सम्यगुच्यन्ते । तथात्रापि इति भावः[१] । (**श्रुत्वा तु मत्कृतिं को वा सन्तोषं च करोति** इति प्रश्ने । वै = आधिक्येन निश्चयेन ।)।।६०।। **मत्कृतौ तोषिणं (सुतं =)** विप्रं **विना** अन्यं **न पश्यामि** ।। (इत्युत्तरम्) **अथापि** = विप्रतोषानन्तरं मत्कृतौ तोषिणं **यं सीतायाः पतेर्नाम्ना वदन्ति । तं प्रति । अञ्जसा मत्कृतिं वक्ष्ये** ।।६१।। **तस्य प्रकृतिं** योग्यताम् **अहं जाने** ।।शेष.श्रो. प्र.सं.।। 'अवाच्य-मर्माणि सन्ति' इत्याख्यानोक्तार्थानुवादेपि शेषस्य विप्रसीतापत्योः विश्वासरूपनिदर्शन-मत्रप्रतिपादितम् ।।प्र.४।।

### १५–०६२–०६४–सीतापतिप्रकरणम्

(व्या) 'सीतापते मम सुते' इत्यारभ्य 'कृत्यं कुरु गुरोरपि' इत्यन्तं सीतापतिश्रोतृकं पञ्चमं प्रकरणं ।।

**सीतापते मम सुतस्य वशं तु सर्वम्**
**मत्सौभगं तदतिकृत्य विरक्ततां च ।**
**कृत्वा तु वर्तत इह प्रति नास्ति तस्य**
**त्वं पश्य कुत्र यतिषूत्तमताऽस्ति तादृक् ।।६२।।**

**एवं कर्तव्यमत्कृत्येऽप्यत्यन्तं वै विरक्तताम् ।**
**करोति प्रार्थय त्वं च कृत्यं कुरु गुरोरिति ।।६३।।**

**(अन्वयः) हे सीतापते! मत्सौभगं सर्वं मम सुतस्य वशम्; तदतिकृत्य विरक्ततां च कृत्वा तु वर्तते; इह तस्य प्रति नास्ति; त्वं पश्य; तादृक् उत्तमता यतिषु कुत्र अस्ति? एवं कर्तव्यं मत्कृत्येऽपि विरक्ततां करोति वै; त्वं 'गुरोः कृत्यं**

---

(१) (विप्रनु देशान्तरद दिग्विजयदल्लि पडेद वैभवगळन्नु अञ्जसा हेळुवुदिल्ल. भरताग्रजनु रावणादिगळन्नु संहरिसि कृतकृत्यनागि बन्दन्ते विप्रनू देशान्तरदिग्विजय माडि कृतार्थनागि शेषन राजधानिगे बन्दिद्दाने. इष्टु मात्रवे हेळल्पट्टिदे. विशेषविषयगळु हेळल्पट्टिल्ल. 'वक्ताहमञ्जसा' एन्दु पाठवन्नु अवलम्बिसि श्रीमुष्णाचार्यरु हीगे व्याख्यानमाडिद्दारे. आदरे वृं. पाठ 'वक्ता ह मत्कृतिं' एन्दिदे. 'तावदेव मत्कृतिं (अहं) वक्ता ह' एन्दु अन्वय माडि 'रामनन्ते कृतकार्यनागि विप्रनु बरुवनु एन्दिष्टे हेळिद्देने कृतियल्लि. हेच्चिगे हेळुवुदिल्ल' एन्दर्थ माडबेकु. आ देशान्तरदल्लि नडेद विषयगळु विश्वप्रियविलासदल्लि कोच्चिरङ्गप्पाचार्यरिन्द मत्तु सूरि सेतुमाधवाचार्यरिन्द वर्णितवागिवे.)

कुरु’ इति च तं प्रार्थय ।

(व्या) ‘तातस्य कुरु कृत्यं ते त्वां पाति च स विश्वकृत्’(१५।२६) इति सम्बोध्य, सङ्क्षेपेणोक्तं पूर्वप्रकरणान्ते प्रसक्तं सीतापतिना कर्तव्यमत्र किञ्चिद्विस्तरेणोच्यते – **सीतापते इति** ।। **हे सीतापते! मम सुतस्य** विप्रस्य **वशं मत्सौभगं** = मन्मठाधिपत्यरूपमैश्वर्यं तदतिक्रम्य, **विरक्ततां** प्राप्य **वर्तते** ।।६२।। **इह** अस्मिन् काले, विप्रस्य **प्रति नास्ति** = सदृशो नास्ति । **तादृक् उत्तमता यतिषु कुत्रास्ति? त्वं पश्य** । यथा स्वकीयभोगादौ विरक्ततां करोति । **एवं** मत्कार्येपि **विरक्ततां करोति** ।।६३।। अतः त्वं ‘गुरोः कृत्यं कुरु’ इति तं **प्रार्थय** । अत्र ‘विप्रस्य गुरोरभिमतं कार्यं विहाय देशान्तरगमनं प्रसक्तं भविष्यति । सीतापतिप्रयत्नेन तद्विहाय गुरुराजाभिमतं स्थलं प्रति आयाति । तदा बहूनि गुरुकार्याणि भविष्यन्ति’ इति बहुकार्याणां च दर्शनरूपं निदर्शनमत्रोक्तम् ।।सी.प्र.सं.।।

### १५–०६५–०६६–विप्रप्रकरणम्

(व्या) **‘हे पुत्र चित्रम्’** इत्यारभ्य **‘गच्छ पुत्र सुखीभव’** इत्यन्तं षष्ठं विप्रश्रोतृकं प्रकरणम् ।। पूर्वप्रकरणोक्तरीत्या सीतापत्युक्तिमात्रेण विप्रस्य देशान्तरगमनेच्छा प्रतिबद्धा भविष्यतीत्युक्तम् । सा न मुख्या । किन्तु मदुक्तिरेव (गुरुराजोक्तिरेव) देशान्तरगमनेच्छा प्रतिबन्धिका । सीतापतेरुक्तिस्तु सहकारिणीति ज्ञापयितुमाह – **हे पुत्रेति** ।।

**हे पुत्र चित्रं मत्कृत्यमकृत्वा गमनं तव ।**
**गतेऽपि कार्यसिद्धिर्वा कथं स्यान्मदनादरात् ।।६४।।**

**हितार्थं तव वक्ष्यामि सुताद्य शृणु मद्वचः ।**
**कृतार्थो भव तत्कृत्वा मतार्थत्रयमञ्जसा ।।६५।।**

**नो चेद्धर्मः कथं ते स्यान्मामनादृत्य यास्यसि ।**
**तस्मात्कृत्यत्रयं कृत्वा गच्छ पुत्र सुखी भव ।।६६।।**

(अन्वयः) हे पुत्र! मत्कृत्यम् अकृत्वा तव गमनं चित्रम्! गते अपि मदनादरात् कार्यसिद्धिः कथं स्यात्? हे सुत! अद्य मद्वचः शृणु; तव हितार्थं वक्ष्यामि । तत् मतार्थत्रयम् अञ्जसा कृत्वा कृतार्थः भव । नो चेत् ते धर्मः कथं स्यात्? (यतः त्वं) माम् अनादृत्य यास्यसि । तस्मात् हे पुत्र! कृत्यत्रयं कृत्वा गच्छ; सुखी

**भव ।।**

(व्या) **हे पुत्र!** विप्र! मदभिमतं कार्यम् **अकृत्वा**, तव देशान्तर**गमनम्** एतत् **चित्रम्** ।।६४।। तथा गमने **तव कार्यसिद्धिः कथं स्यात्?** न कथञ्चित् (**मदनादरात्** = गुरौ आदराभावात् । कार्यसिद्धिर्न भवति) एतदुक्तिस्तु नास्मदर्थे । किन्तु त्वद्**धितार्थम्** ।।६५।।

तस्मान्मदभिमतकार्यत्रयं **कृत्वा कृतार्थो भव** । **नो चेत्** = मदभिमतकार्यकरणाभावे तव **धर्मः कथं स्यात्** यस्मात् **माम् अनादृत्य यास्यसि** ।।६६।। **तस्मात्** मत्कार्यत्रयं **कृत्वा**, (तव गमनेच्छा यत्र भविष्यति) तत्र **गच्छ** । **सुखी भव** । प्रागुक्तदेशान्तरगमनं विहाय विप्रस्य कार्योन्मुखत्वरूपं निदर्शनमत्रोक्तम् ।।

### १५–६७–६९–सीतापतिप्रकरणम्

(व्या) **'सीतापते मम सुवाक्'** इत्यारभ्य **'शृणु विप्रावमानिनाम्'** इत्यन्तं सीतापतिश्रोतृकं सप्तमं प्रकरणम् ।।

**सीतापते मम सुवाग्विभवस्य भूमिम्**
**भूदेवकं तव करेऽर्पितवानहं च ।**
**त्वं पुत्रवच्च परिपालय वृद्धमेनं**
**शिष्योऽसि चेन्मम वचः शृणु प्रीणयाद्य ।।६७।।**

**इयमेकोक्तिरेवात्र शतोक्तिर्मम सर्वथा ।।६८।।**

**वृथा मा कुरु ते तोकवत् ते बुद्धिः कृतान्विता ।**
**अन्येषां वचनं नैव शृणु विप्रावमानिनाम् ।।६९।।**

(अन्वयः) हे सीतापते! अहं मम सुवाग्विभवस्य भूमिं भूदेवकं तव करे अर्पितवान् च । त्वं एनं वृद्धं पुत्रवत् च परिपालय; मम शिष्यः असि चेत् (मम) वचः शृणु, अद्य प्रीणय । अत्र मम इयम् एकोक्तिः एव शतोक्तिः; (तत्) वृथा मा कुरु; ते तोकवत् ते बुद्धिः कृतान्विता । विप्रावमानिनाम् अन्येषां वचनं एव न शृणु ।

(व्या) पूर्वप्रकरणद्वये सीतापतेरेव विप्रसहायत्वं विशेषेणोक्तम् । तस्य दुष्टानां सङ्गे

सत्यपि अपकारबुद्धिर्न स्यादिति भावेनाह – **सीतापते इति ।। हे सीतापते!** मदुक्त-सुवाक्यरूपविभवस्य श्रवणे मुख्याधिकारित्वेन भूमिं तदाश्रयम्, **मम सुवाग्विभवस्य** मदीय बादरायणस्य **भूमिम्** आवासस्थानतुल्यमिति वा । **भूदेवकं** ब्राह्मणम् । त्वद्वशे अहं दत्त-वान् । **त्वं एनं** वृद्धं **पुत्रवत्** पालय । **मम शिष्यश्चेत्** मद्वचः **शृणुष्व** । विप्रं **प्रीणय** तोषय ।।६७ १/२।।

**इयमेकोक्तिरपि शतोक्तिरिति** त्वया मन्तव्या (ममोक्तिं सर्वथा वृथा मा कुरु) ।।६८।।

यथा **ते** तोकस्य बुद्धिः । स्वगुरावस्मिन् विप्रे बुद्धिः । तथा त्वमपि विप्रे कुरु[१] । विप्रस्यापि त्वयि **कृपान्विता बुद्धिः** भविष्यति । **(अन्येषां) विप्रावमानिनां** वाक्यं न **शृणु** । तच्छुत्वापि तदुक्तरीत्या न कर्तव्यमिति भावः ।।६९।। अत्र सीतापतेः विप्रापकारिषु वै मुख्यरूपं निदर्शनमुक्तं भवति ।।सीतापतिप्रकरणं सम्पूर्णम्।।

### १५–०७०–०७२–विप्रप्रकरणम्

**(व्या)** 'पापिनां च' इत्यारभ्य 'शरणं व्रज तं भज' इत्यन्तं विप्रश्रोतृकं प्रकरणं अष्टमं ।।

**पापिनां च प्रसङ्गोऽयं स्मृतः पूर्वकृतो मया ।**
**मया तरङ्गिणीत्युक्ते त्वया चोक्तं निरङ्गिणा ।।७०।।**

**सर्वदेत्यन्तरङ्गेण तुरङ्गवदनं स्मर ।**
**मद्दत्तनिष्कषट्केन गर्वितोऽद्यैव विप्रक ।।७१।।**

**पुनः षट्कं च निष्काणां दापये कोपितां त्यज ।**
**पुरुषान्तरतत्वानि त्यज त्वं द्विजसत्तम ।।७२।।**

**मज्जनेष्वग्रगन्तारं शरणं व्रज तं भज ।**

**(व्या)** 'अन्येषां वचनं नैव शृणु विप्रावमानिनाम्' इति बहूनां विप्रावमानिनां सत्वमुक्तं पूर्वप्रकरणे । तत्र किं निमित्तम्? इत्यत आह – **पापिनां चेति ।।** त्वया पूर्वकृतोयं

---

(१) (निन्न मगनु हेगे मठीयगुरुवाद स्वामिगळल्लि भक्तिमाडुत्तानो, हागेये नीनू स्वामिगळल्लि भक्ति माडिकोण्डु अवर हितचिन्तने माडिकोण्डिरु एन्दर्थ.)

**पापिनां प्रसङ्गः मया स्मृतः** । किन्तु तत्**पूर्वकृतं** कारणं शृणु । अष्टमाध्याये 'स्यन्दने न चराम्यङ्ग गङ्गातीरे तरङ्गिणि' (८।४४) इत्यत्र **निरङ्गिणा** इति त्वया कथितं । तेन कथनेन मद्रथस्याङ्गराहित्यं प्रतीयते । तेन दोषेण । तव पुत्रकळत्राद्यङ्गराहित्यं द्वेषिणां च प्रसङ्गः प्राप्तः । तस्मात् **अन्तरङ्गेण** मनसा **तुरङ्गवदनं स्मर** = हयग्रीवं स्मर । अनेन स्त्रीपुत्रादि-राहित्यं यतित्वं नियतम् । तव हयवदनभजनोपयुक्तं जातमित्युक्तं भवति ।।७०।।

पापिषु मध्ये कश्चिद्विप्रः । तस्मै त्वत्प्रेरकेन मया निष्कषट्कं दत्तं । अद्य स विप्रः (प्रतिग्रही) गर्वितो जातः । तेन त्वया कोपो न कर्तव्यः[१] ।।७१।।

पुरुषान्तरतत्वस्य त्याज्यत्वात् । तद्विचारस्य प्रकृतोपयुक्तत्वाभावात् । मम भक्तजनेषु **अग्रगन्तारं** सीतापतिं व्रज । तं प्रागुक्तं हयवदनचरणं भज ।। अत्र निष्कषट्कप्रयुक्तदुष्टगर्वरूपं दुःसङ्गकारणान्यथावचनरूपं च निदर्शनमुक्तम् ।। विप्र.प्र.सं.।।

### १५–०७३–०८०–सीतापतिप्रकरणम्

(व्या) **'पूर्वं शेषः'** इत्यारभ्य **'गौरवाद्दौ'** इत्यन्तं नवमं सीतापतिश्रोतृकं प्रकरणम् ।

**पूर्वं शेषो ममाशेषवचनं नैव चाकरोत् ।।७३**

**तस्य राजाऽपि किञ्चिद्वा मद्द्रोहफलमीदृशम् ।**
**ततः स्वदोषतो नष्टौ तावुभौ भूमिभारकौ ।।७४।।**

**को वा मद्द्रोहतः कष्टं नानुभूयादिहात्र च ।**
**पूर्वं शेषो ममाशेषवचनं नाप्यचष्ट तम् ।।७५।।**

**राजानं तेन दोषेण कारागृहनिवेशनम् ।**
**नित्यं पुराणवक्तारं ब्राह्मणं च ऋणाद्दुणिन् ।।७६।।**

**(अन्वयः) पूर्वं शेषः मम अशेषवचनं च नैव अकरोत् । तस्य राजापि किञ्चिद् वा (नैव अकरोत्) । ततः स्वदोषतो नष्टौ तौ उभौ भूमिभारकौ; ईदृशं**

---

(१) ('अद्य स विप्रः गर्वितो जातः । तेन त्वया कोपो न कर्तव्यः' एम्ब ई व्याख्यानक्के मूलदल्लि आधार सालदु. मूलदल्लि विप्रक एन्दिदे. विप्रकः एन्दिल्ल. यारु कोपिसिकोण्डरु एतक्के इत्यादि विवरगळु दुर्ज्ञेयवागिवे.)

**मद्द्रोहफलम्; इह अत्र च मद्द्रोहतः कष्टं को वा नानुभूयात्? पूर्वं तं (नृपं) शेषः मम अशेषवचनम् अपि न आचष्ट । तेन दोषेण राजानं कारागृहनिवेशनम् ।**

**(व्या)** प्रागुक्तशेषभूपयोः जन्मान्तरे प्रसक्तानिष्टकारणं किम् इत्यत आह **पूर्वमिति ।। पूर्वं** पूर्वजन्मनि 'यत्कार्यं कुरु' इत्युक्तं तत्सर्वं शेषेण न कृतम् ।।७३।। तदुक्तं कार्यं **राजापि** न कृतवान् ।।७४।। शेषोपि मदुक्तं सर्वं राजानं प्रति नोक्तवान् ।।७५।।

**पुण्ये वृन्दावने स्वस्याप्यग्रतो नैव मोचयेत् ।**
**तेन दोषेण महता वित्तापहरणं त्वभूत् ।।७७।।**

**मम नन्दनवाक्येषु चैकं वा नैव चाकरोत् ।**
**तेन दोषेण महता सर्वाण्येतानि चाभवन् ।।७८।।**

**(अन्वयः) हे गुणिन्! पुण्ये वृन्दावने स्वस्य अग्रतः अपि नित्यं पुराणवक्तारं ब्राह्मणं च ऋणात् नैव मोचयेत् । तेन दोषेण महता वित्तापहरणं तु अभूत् । मम नन्दनवाक्येषु च एकं वा नैव अकरोत् च । तेन दोषेण महता एतानि सर्वाणि च अभवन् ।**

**(व्या)** वृन्दावनसन्निधाने मद्भक्तविप्रऋणमोचनशक्तौ सत्यामपि तं विप्रं ऋणात् नैवामोचयत्[१] ।।७६।। (विप्रं ऋणात् शक्तियुक्तोपि न मोचयामास) तेन दोषेण शेषस्य मतिचाञ्चल्यं भूपस्य राज्यसन्देहश्च (वित्तापहारश्च शेषस्याभूत्) ।।७७।।

तत्र मम नन्दनवाक्येषु विप्रवाक्येषु श्रद्धाराहित्यमभूत् । (अत एव तस्य एकं वाक्यमपि नाकरोत् । तेन महतादोषेण इदानीन्तनजन्मन्यपि बहुकालं पुत्राभावादि दुःखान्यभूवन्) तद्दोषपरिहारकतया यत्पूर्वं 'वद' (१५।४०) इत्युक्तं ''मम नन्दनसन्मानं करोतु मनसा-र्पितम्' (१५।४१) इत्यादिना तत्कर्तव्यम् ।।७८।।

**सहस्रलक्षपर्यन्तं प्रदक्षिणमथ क्षणात् ।**
**चकाराक्षिसहस्रेण लक्षितो यो विचक्षणः ।।७९।।**

---

(१) (बाकि श्लोकभागगळिगे अर्थ स्पष्टवागुत्ते. ई वाक्यगळिन्द शेषनू कूड अनेकावर्ति जन्म ताळिद्दानेन्दु गोत्तागुत्ते.)

**तदनादृत्य ताराणां शारदानाऽकरायितम् ।**
**हयग्रीवश्च हाराणां भारं मे गौरवाद्ददौ ।।८०।।**

**(अन्वयः) अथ यः विचक्षणः अक्षिसहस्रेण क्षणात् लक्षितः सहस्रलक्षपर्यन्तं प्रदक्षिणं चकार । तत् अनादृत्य हयग्रीवः च शारदानाऽकरायितं ताराणां हाराणां भारं मे गौरवात् ददौ ।।**

**(व्या)** विप्रापकारिणः कस्यचिच्चोरस्यानिष्टमाह – **सहस्रेति ।। अक्षिसहस्रेण क्षणात् लक्षितः** (अक्षिसहस्रेण लक्षितः = सहस्राक्षः इति निर्देष्टुं योग्यः) लक्षणयुक्तो भविष्यति । स विप्रः । 'सुरराजप्रसादेनामरराजो भव द्विज' (३।६१) इति प्रागुक्तः । **सहस्रलक्षपर्यन्तं प्रदक्षिणं** चकार । **सहस्रलक्षम्** इत्युक्त्या जनैः सहस्राधिकत्वेन लक्षपर्यन्तत्वेन ज्ञातुं योग्यं प्रदक्षिणमित्युक्तं भवति ।।७९।।

**तत्** = तस्मात् कारणात् **मे गौरवात्** च विप्रापकारिणः **शारदानाकरायितं** = शारे शरगुल्मे दानस्य शरीरत्यागस्य आकरायितं कारणीभूतम्, **हाराणां** मुक्ताहाराणां **ताराणां** नक्षत्रसदृशानां **भारम् अनादृत्य** = तत्रादरमकृत्वा चोराय **ददौ ।** तत्रादरे कृते चोरस्य तदपहारशक्तिश्च नास्तीति ज्ञापयितुं **'तदनादृत्य'** इत्युक्तम् ।। 'कृतप्रदक्षिणस्य विप्रस्य मम हयग्रीवस्य च द्रोहेण हयग्रीवहारापहारी कश्चिच्चोरः कालविशेषे शरगुल्मे त्यक्तशरीरो भविष्यति' इति भावः ।।८०।। कर्तव्याकरणेन शेषभूपयोरनिष्टं, अकर्तव्यकरणेन चोरस्य देहत्यागश्चेति निदर्शनमत्र प्रतिपादितं ।।सी.श्रो.प्र.सं.।।

### १५–०८१–०८५–विप्रप्रकरणम्

**(व्या) 'ममोपदेशकर्णस्य'** इत्यारभ्य **'स्यात् तवैवेह ब्राह्मण'** इत्यन्तं विप्रश्रोतृकं प्रकरणं दशमं ।

**ममोपदेशकर्णस्याप्यादत्स्व त्वं सुकुण्डलम् ।**
**तेन ते कार्यसिद्धिं च कुरु विप्र यथोचितम् ।।८१।।**

**मत्कर्णकुण्डले चापि तव दास्येति मे मतिः ।**
**जायते जायया युक्तो भज मां भुजगेश्वरं ।।८२।।**

**(अन्वयः) ममोपदेशकर्णस्य सुकुण्डलम् अपि त्वम् आदत्स्व । तेन ते कार्यसिद्धिं**

**च (भविष्यति); हे विप्र! यथोचितं कुरु । मत्कर्णकुण्डले अपि च दास्ये इति मे मतिः जायते । भुजगेश्वरं मां जायया युक्तः (सन्) भज ।।**

(व्या) पूर्वप्रकरणे कर्तव्याकरणेन शेषभूपयोः अकर्तव्यकरणेन चोरस्यापि अनिष्टमुक्तम् । तद्वत् 'मया निषिद्धं वृद्धोयम्'(१३।८७) इति प्रागुक्तेन मणिव्यत्ययादिना विप्रस्य बलवदनिष्टचिन्ता न कार्या? इति भावेनाह – **ममोपदेशेति ।।** ममोपदेशकर्णकुण्डलस्य वणिग्वशे स्थापनं तण्डुलानयनं च निषिद्धम् । तथाऽपि असमये (कष्टसमये अनुपदेशसमये वा) तत्कर्णकुण्डलं ग्रहाण ते तात्कालिकीं कार्यसिद्धिं कुरु ।।८१।।

मदीय कर्णभूषणे **कुण्डले ते** (तव प्रयोजनार्थं) दास्यामीति **मे** बुद्धिर्जायते । एवं सति त्वत्कर्णकुण्डलदानेच्छा (वणिग्वशे स्थापितुं अनुज्ञा) जायते इति किमु वक्तव्यम्? (कष्टकाले पत्नीसहितः सन् **भुजगेश्वरं** शेषोत्तमं **मां भज** । तदा प्रारब्धम् उपमर्द्य अन्नं दास्यामीति भावः ।) **जायया युक्त** इत्यनेन गार्हस्थ्यसमये (अत्रोक्तरीत्या) कुण्डले निक्षिप्य तण्डुलानयनं (सम्भविष्यति) इत्युक्तो भवति ।।८२।।

**किं किरोषि दरिद्रस्त्वं विप्र रुद्रं च मां भज ।**
**सान्द्रसौभाग्यवन्तं मे पट्टभद्रं च न त्यज ।।८३।।**

**तण्डुलागमपर्यन्तं (मत्पुत्रा) शौण्ड पद्यानि नो वदे ।**
**कुण्डले च गृहाण त्वं मुण्डिनं मां सुभोजय ।।८४।।**

**त्वदन्तर्यामिणं श्रीमन् सर्वेषां प्राणिनां गुरुम् ।**
**ममाभ्यवहृतेः पुण्यं स्यात्तवैवेह ब्राह्मण ।।८५।।**

**(अन्वयः) हे दरिद्र! विप्र! किं करोषि? रुद्रं मां च भज । सान्द्रसौभाग्यवन्तं मे पट्टभद्रं च न त्यज । हे शौण्ड! तण्डुलागमपर्यन्तं पद्यानि नो वदे । कुण्डले च त्वं गृहाण, मुण्डिनं मां सुभोजय । हे श्रीमन्! ब्राह्मण! इह सर्वेषां प्राणिनां गुरुं त्वदन्तर्यामिणं मम अभ्यवहृतेः तव पुण्यं एव स्यात् ।।**

(व्या) दारिद्र्यदोषपरिहारार्थं विप्रेण कर्तव्यमाह – **किं करोषीति ।।** 'अनैश्वर्याभिमानिनं रुद्रं तदन्तर्यामिणं भुजगेश्वरं शेषाधीशं मां भज । तेन दारिद्र्यदोषनिवृत्तिर्भविष्यति' इति भावः । यतित्वसमये **सान्द्रसौभाग्यवन्तं मे पट्टभद्रं** ते परमगुरुं भज ।।८३।।

उपदेशसमये अन्यत्र कुण्डलप्रक्षेपं विना **तण्डुलागमपर्यन्तं (हे शौण्ड) पद्यानि** न वक्ष्ये । तावत्पर्यन्तं कालक्षेपार्थं कुण्डले गृहाण अन्यत्र ते निक्षिप्य, तण्डुलानानीय त्वदन्तर्यामिणं यतिरूपिणं **मां** भोजय । त्वद्भोजनेनापि मम त्वदन्तर्यामित्वस्मरणेन त्वदीयभोजनस्यापि **मदभ्यवहृतेः** सकाशात् यत्पुण्यं तादृशपुण्यसाधनत्वं स्यात् ।।८५।।

अनेन 'असमये विप्रस्य कुण्डलग्रहणम् । तदा स्वप्ने विप्रस्य पद्यानामनुक्तिः' इत्येतन्निदर्शनमुक्तं भवति ।।वि.प्र.सं.।।प्र.१०।।

### १५–०८६–०९७–लक्ष्मीपतिप्रकरणम्

**(व्या) 'सीतापते न त्यज'** इत्यारभ्य **'नाहं तं सम्भरामि च'** इत्यन्तं एकादशं सीतापति श्रो. प्र. ।।

शेषभूपचोराणां विहिताविहितस्य त्यागकरणाभ्याम् इष्टानिष्टहानिप्राप्तिम् उक्त्वा, दारिद्र्यदोषेण कृतापराधेऽपि विप्रे क्षमा च प्रतिपादिता । वेदनिधिना कार्यत्रयाकरणे इष्टहानिः स्यात् । तस्मादुक्तं कार्यत्रयं वेदनिधिना कर्तव्यम् । तत्सीतापतिना कर्तुं योग्यम् । एवं 'शेषाद्रिपण्डितस्य पूर्वकर्मणा प्राप्तानिष्टपरिहाराय प्रातः प्रियगुरुत्वेन स्मरणं कृतं चेत्, अनिष्टहानिरिष्टप्राप्तिश्च भविष्यति । नो चेत् न' इति भावेनाह – **सीतापते इति ।।**

**सीतापते न त्यज विप्रहस्तं तवेह को वा गणयेद्गुणौघान् ।**
**नम्रस्य चाम्लानमुखस्य भक्तियुक्त्यादिकान् सन्मतिशान्तिकान्तीः ।।८६।।**

(अन्वयः) हे सीतापते! इह नम्रस्य अम्लानमुखस्य तव सन्मतिशान्तिकान्तीः भक्तियुक्त्यादिकान् गुणौघान् (विप्रं विना) को वा गणयेत्? विप्रहस्तं न त्यज ।

**(व्या) हे सीतापते!** मद्भक्ते विप्रे **नम्रस्य** नम्रत्वेऽपि **अम्लानमुखस्य सन्मतिकान्तिशान्तीः भक्तियुक्त्यादिकान् सद्गुणौघांश्च** । **इह** भक्तवर्गे **को वा गणयेत्?** तस्मात् **त्वं विप्रहस्तं न त्यज** । 'तत्करावलम्बेन तवेष्टसिद्धिर्भविष्यति' इति भावः ।।८६।।

**कृत्यत्रयं नैव चकार पुत्र त्वं पश्य सीतापतिमात्मकाद्य ।**
**आद्यापि विप्रस्य तु कार्यलेशं चकार तेनैव च तोषितोऽहम् ।।८७।।**

**अतस्त्वं कुरु भक्तानामग्रणीर्गौणता न ते ।**

**अध्यायान् पद्यजातानां वृद्धकार्यं च किञ्चन ।।८८।।**

**ग्राह्यं बाह्यगुणानामप्यभिव्यञ्जकपुञ्जवत् ।**

(अन्वयः) हे पुत्र! कृत्यत्रयं नैव चकार; हे आत्मक! अद्य सीतापतिं पश्य; अद्य विप्रस्य तु कार्यलेशम् अपि चकार; तेनैव अहं तोषितः च ।

ते गौणता न । अतः त्वं भक्तानाम् अग्रणीः । पद्यजातानाम् अध्यायान् किञ्चन कुरु । बाह्यगुणानाम् अपि वृद्धकार्यं वा अभिव्यञ्जकपुञ्जवत् ग्राह्यं कुरु ।

**(व्या)** वेदनिधिः कृत्यत्रयं कृतेरध्ययनम् (अध्यायकरणं) गुरुत्वेन विप्राङ्गीकरणं, कृतेः शिलास्थत्वेन करणं चेति कार्यत्रयम् अद्यापि **न चकार** (**विप्रस्य तु कार्यलेशं चकार । तेनैव अहं तोषितः**, सन्तुष्टः ।)(१) ।।८७।।

तव **गौणता** अमुख्यता नास्ति । **अतस्त्वं** तत् **कुरु** (त्वं भक्तानां अग्रणीः श्रेष्ठः । अतः त्वं **पद्यजातानां** पद्यसमुदायानाम् अध्यायान् कुरु । वेदनिधिपुरतः कथमत्र कार्यम्? इति प्रश्नं कृत्वा, तं कार्ये प्रवेशय । तथैव **वृद्धकार्यं** कुरु । **'किञ्चन-च'**शब्दाभ्यां शिलास्थत्वकरणकार्येपि उद्युक्तो भव इत्यर्थः) ।।८८।।

('वृद्धकार्यं किञ्चन कुरु' इत्युक्तं । तत्किमित्यत आह) **बाह्यगुणानां** = श्रीकृष्ण-पूजनादिबाह्यगुणानां बहिर्गतानां शिष्याणां वा । **अभिव्यञ्जकपुञ्जवत्** = अभिव्यञ्जकानां (वैष्णवानां) समूहयुक्तम् । विप्रकार्यं कुरु(२) ।। (ग्राह्यं कुरु इति वा ।।)

**करण्डपिण्डिततनुः कुण्डलीव स पण्डितः ।।८९।।**

**प्रचण्डबुद्धिशौण्डोऽपि ब्रह्माण्डे लण्डसाम्यगः ।**

---

(१) (ई ८७ने श्लोकद मूलदल्लि 'वेदनिधिः कृत्यत्रयं अद्यापि न चकार' एम्बुदक्के बेकाद पदगळिल्ल. 'त्वं पश्य सीतापतिमात्मकाद्य' एम्बुदु 'त्वं पश्य सीतापतेमात्मकाद्य' एन्दिद्दरे आ अर्थबरुत्ते. आद्दरिन्द भी. नोडबेकु. प्रकृत इरुव मूलदल्लि 'चकार' एम्ब क्रियेगे कर्तृपदवे इल्ल. 'सीतापतयात्मकाद्यः' एन्दिद्दरे 'हे सीतापते आत्मकाद्यः ऽ वेदनिधिः एन्दु पदच्छेद. अयादेशसन्धि)

(२) (एन्दरे नाल्कारु सद्वैष्णवरु बन्दरे हेगो हागे, 'ई ब्राह्मण महात्म, मानयोग्य' एन्दु वैष्णवर समुदायदल्लि नीनू मान माडु, इतररू मान माडुवन्ते सूचिसु. हागे नाल्कारु आणे, कासुगळन्नु अवनिगे कोट्टु नमस्करिसुवन्ते जनर मध्यदल्लि प्रेरिसु एन्दु भाव)

**मम नन्दनसद्बुद्धिमनिशम्य सुनिश्चिताम् ।।९०।।**

**वदने स तु भस्मानि मानयामास वेनवत् ।**
**किं करोति स पूर्वेण कर्मणा गतिमीदृशीम् ।।९१।।**

**यातः प्रातः समुत्थाय मां गुरुं स्मरतु प्रियम् ।**

(अन्वयः) सः कुण्डलीव करण्डपिण्डिततनुः; ब्रह्माण्डे प्रचण्डबुद्धिशौण्डः अपि मम सुनिश्चितां नन्दनसद्बुद्धिम् अनिशम्य, स तु वदने भस्मानि वेनवत् मानयामास । पूर्वेण कर्मणा ईदृशीं गतिं यातः सः किं करोति? प्रातः समुत्थाय प्रियं गुरुं मां स्मरतु ।

(व्या) (इदानीं शेषाद्रिपण्डितवृत्तान्तमाह) **करण्डपिण्डिततनुः** = करण्डे पिण्डितशरीरः (करण्डवेन्दरे बुट्टि; हावुगळन्नु कूडिडुव बुट्टि अथवा पेट्टिगे) । **कुण्डली** सर्पः । यथा तथा ।।८९।।

अस्मिन् **ब्रह्माण्डे प्रचण्डबुद्धिशौण्डोऽपि** शेषाद्रिपण्डितः **वदने** मुखे **भस्मानि मानयामास** = कृतभस्मोद्धूलनेषु पाषण्डजनेषु सन्मानं कृतवान् (**लण्डसाम्यगः** दुर्जनसदृशः **सुनिश्चितां** मम **नन्दनसद्बुद्धिम् अनिशम्य**, मीमांसाशास्त्रकोविदेन वेदविधिना तत्वविचारं अकृत्वा, अद्वैतिजनान् पूजयामास इत्यर्थः) (**सः किं करोति**) पूर्वकृतेन पापकर्मणा ईदृशीं पाषण्डभक्तत्वरूपां **दुर्गतिं** प्राप्तः ।।९०-९१।। तत्परिहाराय । (**प्रातः** =) प्रातःकाले **समुत्थाय** प्रियगुरुत्वेन **मां स्मरतु** ।

**वक्ष्ये कर्महरं सूक्ष्मं कर्मिणां शर्मदं सदा ।।९२।।**

**कर्म चारभ्यते पुम्भिर्नैष्कर्म्यं ज्ञानसाधनम् ।**
**द्रुतं चैतद्धतः(१) शुद्धिद्वारा दर्दुरजन्म च ।।९३।।**

**निर्दळं कुरुते सार्धं गर्दभाद्यपजन्मभिः ।**
**पूर्वजन्मनि यत्कर्म त्विह जन्मनि यत्कृतम् ।।९४।।**

---

(१) ('द्रुतं चैतद्धतः' एन्दु वृं. इदे. भी. नोडबेकु. 'द्रुतं चैदन्तः' एन्दिरबेकु. 'धृतं चेत्तदन्तः शुद्धिद्वारा एन्दु स्वा. 'धृतं चैतदन्तः शुद्धिद्वारा' एन्दु श्री)

**तत्सर्वं नाशयत्याशु मासि मासि सखिन् शृणु ।**

**(अन्वयः) कर्मिणां कर्महरं सदा शर्मदं सूक्ष्मं (प्रमेयं) वक्ष्ये । ज्ञानसाधनं नैष्कर्म्यं कर्म च पुंभिः आरभ्यते । एतत् (तत्कर्म) द्रुतं हतः । गार्दभाद्यपजन्मभिः सार्धं दर्दुरजन्म च शुद्धिद्वारा निर्दळं कुरुते । हे सखिन्! शृणु । पूर्वजन्मनि यत्कर्म इह जन्मनि मासि मासि यत्कृतं तत् सर्वम् आशु नाशयति ।**

**(व्या)** तदीयस्यापि दुष्कर्मणः परिहारसाधनं **सूक्ष्मं** प्रमेयं **वक्ष्ये** ।।९२।। (**कर्मिणां** = पूर्वं कृतपापानां पश्चात् तप्तानां सत्कर्मकर्तुम् उद्युक्तानां, **सदा** = नियमेन **शर्मदं** = सात्विक- सुखज्ञानादिदायकं निष्कामकर्मविशेषं **वक्ष्ये** ।।)

पुरुषैः यत्कर्मक्रियते तच्च कर्म निष्कामं चेत्, अन्तःकरणशुद्धिद्वारा क्रूरकर्मजन्मनिर्दलं कुरुते । दुष्टकर्मपरिहारकं भविष्यति ।। (**नैष्कर्म्यज्ञानसाधनं** = काम्यकर्माप्राप्यत्वात् नैष्कर्म्यशब्दितमोक्षस्य हेतुभूतं यज्ज्ञानं तत्साधनं निष्कामकर्म । यदि पुंभिः अधिकारिभिः तादृशं कर्म आरभ्यते । **एतत्** तत्कर्म 'नेहाभिक्रमनाशोऽस्ति' इति गीतायां(२।४०)उक्तरीत्या, अन्तःशुद्धिद्वारा अन्तःकरणे वैराग्यपुण्यातिशयादिकमुत्पाद्य, पापं प्रक्षाळ्य, **द्रुतं** शीघ्रं गुरुकटाक्षं सम्पादयित्वा, साधनानुपयोगिशरीरप्राप्तिं निवारयित्वा, व्यर्थकालक्षेपप्रापक-नीचजन्मानि निवारयित्वा, **पूर्वजन्मनि** कृतपापं च **आशु** मर्दयित्वा, साधनदेहम् उत्तर-जन्मनि ददाति ।।) (तत्रापि **हे सखिन् शृणु**) **मासि मासि** 'पक्षा वै मासाः' इतिश्रुत्या पक्षे पक्षे कृतेन, एकादश्युपवासरूपेण निष्कामकर्मणा महत्पापं परिहृतं भवति ।

**तस्मात् सत्कर्म कर्तव्यं कर्णश्राव्यं कविप्रियम् ।।९५।।**

**हरिप्रियं हरेर्ज्ञानसाधनं हरते मलम् ।**
**न कर्तव्यं च दुष्कर्म कदाऽपि कुगतिप्रदम् ।।९६।।**

**(अन्वयः) तस्मात् कर्णश्राव्यं कविप्रियं सत्कर्म कर्तव्यम् । हरिप्रियं हरेः ज्ञानसाधनं मलं हरते । कुगतिप्रदं दुष्कर्म न कदाऽपि कर्तव्यं च ।**

**(व्या)** तत् हरेः ज्ञानसाधनम् । **तस्मात्** तत्कर्तव्यम् । (**तस्मात्** = विशेषतः ज्ञान-साधनत्वात् । **कर्णश्राव्यं** पुराणे स्तुतं, **कविप्रियं** ब्रह्ममध्वगुरुराजऋजुयोगिनाम् अनु-ग्रहसम्पादकं, **सत्कर्म** हरिदिनं ज्ञात्वा कृतमुपोषणं **कर्तव्यम्** । तादृशं निवृत्तकर्म **हरिप्रियं**

गुरुद्वाराकृतश्रवणादिना **हरेः ज्ञानसाधनं** च भविष्यति । प्रतिबन्धकं **मलं** पापं च । हरति नाशयति ।) निन्दितं च त्याज्यम् । (**कुगतिप्रदं** दुष्कर्म निषिद्धं कर्म काम्यकर्म च कदापि न कर्तव्यं च ।।) ।।९६।।

**यदि कुर्यात् स विप्रोऽपि कुम्भिनी तं नरं हरिम् ।**
**शंसति ध्वंसितात्मानं नाहं तं सम्भरामि च ।।९७।।**

(अन्वयः) यदि कुर्यात्, सः विप्रः अपि कुम्भिनी ध्वंसितमात्मानं तं नरं (प्रति) 'अहं तं न सम्भरामि' (इति) हरिं शंसति च ।

**(व्या)** ''यदि निन्दितं करोति । तर्हि **ध्वंसितात्मानम्** = अद्वैतानुसन्धानेन नष्टात्म-स्वरूपम् । **भूमिः** परमात्मानं प्रति **तं** पापिनं न भरामि'' इति शंसति । हरिश्च दुर्जनान् संहृत्य भूभारपरिहारं करोति ।। (**निन्दितं** = पूर्वोक्तपाषण्डपूजनादिकं, मिथ्योपासनादिकं) ।।९७।। ''कदाचिद्वेदनि(वि)धिना अकृतस्य कृत्यत्रयस्य सीतापतिप्रयत्नेन करणम्, प्राप्त-हरिद्वेषादिदोषस्यापि स्वरूपतो मुक्तियोग्यस्य सुकाले साधनोन्मुखत्वं च भविष्यति'' इति निदर्शनमत्रप्रतिपादितम् ।। सी.प्र. सं.।।

### १५–०९७–१०८–विप्रप्रकरणम्

**(व्या)** 'नञद्वयम्' इत्यारभ्य अध्यायान्तं विप्रश्रोतृकप्रकरणं द्वादशम् ।

**नञ्द्वयं कुतो विप्र प्रयुक्तं च त्वया त्विह ।**
**एकेन पूर्वपद्यार्थे सिद्धे सत्यपरं कुतः ।।९८।।**

**नाहं तं सम्भरामीति मया प्रोक्ते त्वया द्विज ।**
**नाहं तं न भरामीति प्रोच्यते शोच्यता न मे ।।९९।।**

**तवापि न स्यात्साऽवस्था स्वस्थो भव सभासु च ।**
**मदवस्थां वदस्व त्वं मदुक्तश्लोकसञ्चयैः ।।१००।।**

**किन्तु त्वत्क्षेत्रविघ्नानि यः करोति नराधमः ।**
**तस्ये व सा शोच्यता स्यान्मयोपास्यहयास्यतः ।।१०१।।**

(अन्वयः) हे विप्र! त्वया इह नञ्द्वयं कुतः प्रयुक्तम्? पूर्वपद्यार्थे एकेन सिद्धे

**सति अपरं कुतः?**

**मया 'नाहं तं सम्भरामि' इति मया प्रोक्ते, हे द्विज! त्वया 'नाहं तं न भरामि' इति प्रोच्यते; मे न शोच्यता । तवापि सावस्था न स्यात्; स्वस्थः च भव । त्वं सभासु मदुक्तश्लोकसश्चयैः मदवस्थां वदस्व । किन्तु यः नराधमः त्वत् क्षेत्रविघ्नानि करोति; तस्य एव सा शोच्यता मया उपास्यहयास्यतः स्यात् ।**

**(व्या) हे विप्र! इह** पूर्वप्रकरणान्तोक्तपद्ये **नञद्वयं त्वया कुतः प्रयुक्तम्? एकेन** 'नञा अहं पापिनं न भरामि' इति **पूर्वपद्यार्थे सिद्धे सति अपरं** किमर्थम्? ।।९८।।

**मया 'नाहं तं सम्भरामि'** इत्युक्ते, **त्वया 'नाहं तं न भरामि'** इति कथनं तवापि दुर्जनपालकत्वं प्रसक्तम् ।।९९।। मया पुनरपि सम्यगुपदिष्टत्वात् तव दुष्टपरिपालकत्वं न स्यात् ।। (**सभासु** मदृजुत्वप्रतिपादकश्लोकान् पठित्वा अद्वितीयत्वेन कीर्तिमान् भव) । किन्तु यः त्वद्भूमेः विघ्नकर्ता **तस्य सा शोच्यता** । 'नाहं सम्भरामि' इत्युक्ता भूम्यधार्यरूपा शोच्यता स्यात् (मया उपास्यहयग्रीवप्रसादेन एवं भविष्यति) ।।१०१।।

**त्वच्चिन्तया किं मच्चिन्तां कुरु विप्र तवोचिताम्**(१) **।**
**वाञ्छितं च भवेदश्नन् मां काश्चनरतिं त्यज ।।१०२।।**

**मुश्च मुश्चेह दुश्चित्तं मच्चित्तं कुरु सर्वदा ।**
**मुश्च काश्चनचिन्तां त्वं चिन्मात्रं चाच्युतं भज ।।१०३।।**

**(अन्वयः) हे विप्र! त्वच्चिन्तया किम्? तवोचितां मच्चिन्तां कुरु । वाञ्छितं च भवेत् । माम् अश्नन् काश्चनरतिं त्यज । इह दुश्चित्तं मुश्च मुश्च । सर्वदा मच्चित्तं कुरु । त्वं काश्चनचिन्तां मुश्च; चिन्मात्रम् अच्युतं भज ।**

**(व्या) त्वच्चिन्तया किं** भविष्यति? 'सर्वमपि शुभं मदुपास्य हयग्रीवप्रसादसाध्यं,

(१) (श्लोक १०२रल्लि 'तवोच्चता' एन्दु वृं. 'तवोच्यते' एन्दु स्वा.श्री. 'तवोचितां' एन्दु अर्थानुसारि. 'तवाच्युतां' एन्दु व्याख्यानानुसारियागि काणुत्ते. अथवा तवाच्युतं एन्दु इट्टुकोण्डिरुत्तारे. १६ने अध्यायद २५नेय श्लोकदल्लि 'गुरूक्तिं च न त्यज स्वोचितां' एन्दिदे. इल्लू अदरन्ते 'तवोचितां' एन्दिरबहुदु. भी नोडबेकु. 'तवोचितां मच्चिन्तां कुरु' एन्दु अन्वय वागुत्ते. ईग 'तव उच्चता वांछितं च भवेत्' एन्दु अन्वय माडबेकु.)

तस्मात् **काञ्चनचिन्तां त्यज । दुश्चित्तं** त्यज । मदन्तर्यामिणमच्युतत्वेन **भज** । तेन तवापि च्युतिराहित्यं भविष्यति' इति भावः । (श्लोक१०३ श्लोकार्थः स्पष्टः)

**रामचन्द्र वरभूपतिसान्द्रप्रेमवन्द्यचरणो रघुपेन्द्र ।**
**ब्रह्मरुद्रमरुदिन्द्रसुरेन्द्राराध्य राज्यवरदोऽसि नरेन्द्र ।।१०४।।**

**त्वद्दत्ततद्राज्यभूतिं कमलालय पालय ।**
**तेन सम्पूजितो नित्यं स्वालयं नैव चालय ।।१०५।।**

(अन्वयः) हे रघुपेन्द्र! ब्रह्मरुद्रमरुदिन्द्रसुरेन्द्राराध्य! नरेन्द्र! वरभूपतिसान्द्र-प्रेमवन्द्यचरणः रामचन्द्र! रघुपेन्द्र! राज्यवरदः असि । हे कमलालय! त्वद्दत्त-राज्यभूतिं पालय । तेन (भूपेन) नित्यं सम्पूजितः (सन्) स्वालयं नैव चालय ।

**(व्या)** प्रागुक्तभूपकार्यमपि[१] न त्वच्चिन्तया साध्यम्; किन्तु मत्प्रार्थितरामचन्द्रानुग्रहेणैव तद्भविष्यति' इति भावेनाह – **रामचन्द्रेति ।। ब्रह्मरुद्रमरुदिन्द्रसुरेन्द्राराध्यरघुपेन्द्र! हे रामचन्द्र!** वरभूपतेः सान्द्रप्रेम्णा वन्द्यचरणः त्वम् ।।१०४।। (**हे नरेन्द्र!** रामावतारे नरेन्द्रत्वेन कृतराज्यभार **राज्यवरदोऽसि** । भूपतये दत्तराज्योऽसि) त्वद्दत्तां तस्य भूपस्य **राज्यभूतिं** त्वं पालय । (**हे कमलालय**) यस्मात् त्वं **नित्यं तेन सम्पूजितः** हृषीकेशपद्मनाभतीर्थप्रभृतिभिः पूजितप्रतीकसन्निहितरूपेण तद्दत्तवित्तेन सम्पूजितः । तस्मात् त्वं **स्वालयं** स्वस्याश्रयं भूपं सिंहासनस्थानान्न **चालय** ।।१०५।।

**इत्यहं प्रार्थयामीह राघवेन्द्रं मुनीन्द्रकम् ।**
**मम वृन्दावने नित्यं देवेन्द्रैः सह संस्थितम् ।।१०६।।**

**मानवानां धने हानिर्मधुसूदनशासनम् ।**
**विना नैवास्ति सन्देहो नैव पृच्छ धनागमम् ।।१०७।।**

**पृच्छ मां स्वच्छतत्वानि कच्छपस्य महात्मनः ।**
**स्वेच्छया सच्चरित्राणां प्रायच्छत् भक्तिमेव यम् ।।१०८।।**

---

(१) (प्रागुक्त = १५।७४, १५।३३-४३, १५।१६ शोकगळल्लि निरूपितवाद मूरनेय राज)

**(अन्वयः) इति अहं मम वृन्दावने नित्यं देवेन्द्रैः सह संस्थितं मुनीन्द्रकं राघवेन्द्रं इह प्रार्थयामि । मानवानां मधुसूदनशासनं विना धने(ऽ)हानिः न अस्ति; अत्र सन्देह एव न । धनागमं न पृच्छ । कच्छपस्य महात्मनः स्वच्छतत्वानि मां पृच्छ । सच्चरित्राणाम् अव्ययां भक्तिं स्वेच्छया प्रायच्छम् ।**

**(व्या) इति अहं मुनीन्द्रकं** = मुनीन्द्राणां श्रीपद्मनाभतीर्थादीनां, कं इष्टरूपं **(राघवेन्द्रं)** श्रीरामचन्द्रं अहं प्रार्थयामि ।।१०६।। (इह मद्वृन्दावने नित्यं देवश्रेष्ठैः सह संस्थितं भक्ताभिलषितदातृत्वेन व्यक्ततया स्थितं) **मानवानामिति ।।** स्थैर्यसम्पादकत्वात् **(कच्छपस्य)** कच्छपरूपिणो हरेः **तत्वानि पृच्छ** । यम् उद्दिश्य अहं **स्वेच्छया भक्तिं प्रायच्छम्** । **मानवानां** = भक्ताभक्तानां, **धने** = ज्ञानवित्ते लोकवित्ते च अहानिः हानिश्च **मधुसूधनशासनं विना** हयग्रीवाज्ञां विना । न भविष्यतीति भावः ।।१०७-१०८।।

स्वानुग्रहेण भक्तस्य भूमिस्थैर्यं विप्रद्रोहिणस्त्वनिष्टं भविष्यति । तस्माच्छेषभूपाभ्यां प्रथमजन्मन्यकृतमत्कार्याभ्यां[१] तदुत्तरजन्मनि भक्तिः कृता चेदिष्टं भविष्यति इति निदर्शनमुक्तं भवति ।। विप्र.प्र.सं.।।

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

**(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।**

**(व्या)** (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-

(१) (इदरिन्द शेष, भूपरु, उपलक्षणया सीतापति, व्यासभक्तनामक लक्ष्मीपति मुन्ताद ई ग्रन्थोक्त अनेकपात्ररु आख्यानग्रन्थद उत्पत्तिकालदल्लि हुट्टिद्दु, पुनः ओन्दु जन्म हुट्टि अथवा हुट्टदे विप्रनु वृन्दावनाचार्यरागि हुट्टिदाग तावू पुनः हुट्टि, अवर सम्बन्धवन्नु होन्दि साधने माडिकोण्डिद्दारे एन्दु सूचितवागुत्ते. व्यासभक्तनामकनु इन्नोन्दु जन्मदल्लि लक्ष्मीपतियागि इन्नोन्दु जन्मदल्लि श्रीपतियागिरबहुदु)

उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि- राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव ।

एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात्** **अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि पञ्चदशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**

# १६-षोडशोऽध्यायः

## १६–००१–०१४–शेषप्रकरणम्

(व्या) श्रीगुरुभ्यो नमः ।। विप्रशेषसीतापतिलक्ष्मीपतिभिः कर्तव्यं ज्ञातव्यं च निदर्शनं प्रतिपादयत्यनेनाध्यायेन । ''मत्पादसेवाविषये' इत्यारभ्य 'शुभानां भूर्भविष्यति' इत्यन्तं शेषश्रोतृकप्रथमं प्रकरणम् ।

**ॐ।।**

**मत्पादसेवाविषये ते सिषाधयिषाऽस्ति चेत् ।**
**वृन्दावने शेष पद्यजातानि वद चोषसि ।।१।।**

**नागाह्वयः पण्डितोऽहं ब्रह्माण्डेऽशौण्डबुद्धिमान् ।**
**इतरः पण्डितः प(ष)ण्डस्त्वमेवेह सुपण्डितः ।।२।।**

**त्वयाऽनुभूतं यत्स्वप्नं मन्निरूपितमेव च ।**
**विद्धि बुद्धिमतां श्रेष्ठ वृद्धं मा त्यज सर्वथा ।।३।।**

(अन्वयः) मत्पादसेवाविषये च ते सिषाधयिषा अस्ति चेत्, हे शेष! उषसि वृन्दावने पद्यजातानि वद । इतरः पण्डितः नागाह्वयः पण्डितः ब्रह्माण्डेऽशौण्ड-बुद्धिमान् प(ष)ण्डः; इह त्वमेव सुपण्डितः अहं (च) ।

यत् त्वया अनुभूतं स्वप्नं च मन्निरूपितम् एव विद्धि । हे बुद्धिमतां श्रेष्ठ! सर्वथा वृद्धं मा त्यज ।

(व्या) पूर्वाध्याये कृतपापत्वेनोक्तस्य शेषस्य नृपोपकारकत्वेन दशमाध्याये प्रति-पादितस्य इष्टप्राप्तिसाधनमाह – **मत्पादेति ।। हे शेष! ते** तव **मत्पादसेवाविषये सिषाधयिषा** साधयितुमिच्छा **अस्ति चेत्, वृन्दावने पद्यजातानि** वृन्दावनविषये श्लोकसमूहान् **उषसि** उषःकाले **वद** ।।१।।

तर्हि त्वं न उत्कृष्टः पुरुषः **इतरः** त्वदन्यः **नागाह्वयः पण्डितः** शेषाद्रिपण्डितः । नामतः त्वत्समोपि **षण्डः** क्लीबः साधनरहितत्वात् । **ब्रह्माण्डेऽशौण्डबुद्धिमान्** विपरीत-ज्ञानी । त्वं तु ब्रह्माण्डे शौण्डबुद्धिमान् । सम्यक् ज्ञानवान् । **अहं** अहङ्कारिकप्राणपदयोग्यः

(वादिश्रेष्ठत्वात् अहमेव, मुख्यशेषनामतः । न तु शेषाद्रिपण्डितः । न च क्लीबः । पुरुषार्थानुपयुक्तविद्यावान् । त्वमपि **सुपण्डितः** शेषनामयोग्यः । मोक्षहेतुभूतविद्यावान् इत्यर्थः । अत्र व्याख्याने 'अहं' पदस्य शेषस्वरूपकथनपरतया योजना क्रियते)[१] ।।२।।

**यत्** यस्मात् । तस्मात् । **त्वयानुभूतं स्वप्नं मन्निरूपितमेव विद्धि** । **बुद्धिमतां** विप्रावराणां मद्भक्तानां मध्ये **श्रेष्ठ! वृद्धं** कालविशेषे वयोवृद्धम्, सदा गुणवृद्धं विप्रं **सर्वथा** न **त्यज** ।।३।।

**इदं वृन्दावनाख्यानं श्रुत्वा लक्ष्मीपतेर्मुखात् ।**
**निस्संशयो भव त्वं च सर्वेषां हर संशयम् ।।४।।**

**पश्यामि ते सुविश्वासं मत्सुते शश्वदत्र हि ।**
**विश्वासिनां समाजे च त्वमप्येकः प्रसन्नधीः ।।५।।**

**(अन्वयः) लक्ष्मीपतेर्मुखात् इदं वृन्दावनाख्यानं श्रुत्वा त्वं निःसंशयः भव; सर्वेषां संशयं च हर । अत्र मत्सुते ते शश्वत् सुविश्वासं पश्यामि । हि । विश्वासिनां समाजे त्वम् एकः प्रसन्नधीः अपि च ।**

**(व्या) लक्ष्मीपतेः मुखात् इदं वृन्दावनाख्यानं श्रुत्वा** = एतदभिमतार्थं श्रुत्वा, **त्वं निःसंशयः** = गतसंशयः **भव** । **सर्वेषां संशयं** परिहर ।।४।।

**मत्सुते** विप्रे **तव शश्वत्** एकप्रकारेण **सुविश्वासं पश्यामि** । **हि** प्रसिद्धमेतत् ।

---

(१) (श्लोक २ पङ्क्ति १. इल्लि अन्वयक्लेशविदे. ना च अगाह्वयश्च पण्डितः । अहं । ब्रह्माण्डे शौण्डबुद्धिमान् । नीनु आख्यानपारायण माडिदरे मनुष्यने सरि. अग = अचल = शेषपर्वतद हेसरुळ्ळदक्कू सार्थकमाडिदवनागुत्ति. निजवाद पण्डाशब्दितविद्यावन्तनु. अहं = अहङ्कारप्राणपदवी योग्यने. ब्रह्माण्डदल्लि एल्लू सिक्कदन्था सूक्ष्मबुद्धियुक्तज्ञानिये सरि; एन्दर्थ. एन्दरे आख्यानद अभ्यासदिन्द निन्न स्वरूपज्ञान मत्तु प्रतिभेगळु व्यक्तवागुत्तवे. नीनु शेषपदनाम धरिसिद्दु सार्थकवागुत्तदे. एकेन्दरे शेषनन्ते वादिजयिष्णुबुद्धिशौण्डतेयन्ने पडेयुत्ति एन्दु भाव. इतरः पण्डितः त्वद्भिन्ननाद शेषाद्रिनामकपण्डितनु षण्ड. ब्रह्माण्डे अशौण्डबुद्धिमान् । व्यधिकरणवाक्यार्थगळिन्द दुष्टनिर्णय-निर्णयाभासगळिन्द तुम्बिद बुद्धियुळ्ळवनु. तत्वनिर्णयानुपयुक्तविद्याभ्यासवुळ्ळवनु. त्वमेवेह सुपण्डितः; नीने आख्यानग्रन्थ पारायणदिन्द निन्न पाण्डित्यवन्नु शोभनपडिसिकोण्डु समीचीनपण्डितनागुत्ति एन्दु अर्थ.)

विश्वासिनां समाजे समूहे त्वमपि मुख्यः प्रसन्नबुद्धिः ।।५।।

**त्वमेव धर्मगोप्ता च गोपीनां पतिरव्ययः ।**
**प्रीतः प्रातः समुत्थाय तमेव हृदि चिन्तय ।।६।।**

**मद्वृन्दावनगं गोपैः गोपीभिश्च समन्वितम् ।**
**गोभिर्गोविन्दनामानं गोपालं हृदि संस्मर ।।७।।**

(अन्वयः) त्वम् एव धर्मगोप्ता च; अव्ययः गोपीनां पतिः (त्वयि) प्रीतः; तम् एव प्रातः समुत्थाय हृदि चिन्तय । मद्वृन्दावनगं गोपैः गोपीभिः गोभिः च समन्वितं गोविन्दनामानं गोपालं हृदि संस्मर ।

(व्या) त्वं धर्मगोप्ता = धर्मगोपनाधिकारी; त्वयि गोपीनां पतिः श्रीकृष्णः प्रीतः । प्रातः समुत्थाय तमेव गोपीनां पतिं कृष्णमेव हृदि मनसि चिन्तय ।।६।।

मद्वृन्दावनगं = मद्वृन्दावने सन्निहितं, गोपैः = वेदपालकैः भूपालकैश्च, गोपीभिः = तद्योषाभिश्च, गोभिः = वेदाभिमानिभिः भूमानिभिश्च समन्वितम् । वेदप्रतिपाद्यत्वात् गोविन्दनामानं गोपालं द्विविधगोपालं हृदि संस्मर = मनसि संस्मर ।।७।।

**'गोपाल निर्मलतनो धर्मपालं तु पालय ।**
**तद्बालं च कृपाशीलं तच्चाश्वल्यं च चालय' ।।८।।**

**इत्यहं प्रार्थयामीह गोपालं बालरूपिणम् ।**
**श्रीलोलं कालकाले च धर्मग्लानिर्यथा न हि ।।९।।**

**धीमानाचार्यनाम्ना यो दाम्ना बद्धः पुमानिति ।**
**धीमानाम्नायमानैर्मे प्रेम्णा नायात्सुमानवः ।।१०।।**

(अन्वयः) 'हे गोपाल! निर्मलतनो! धर्मपालं तु पालय; कृपाशीलं तद्बालं च; तत् चाश्वल्यं च चालय' इति गोपालं बालरूपिणं श्रीलोलं कालकाले धर्मग्लानिर्यथा न (स्यात् तथा कुरु) अहम् इह प्रार्थयामि ।

यः पुमान् धीमान् आचार्यनाम्ना इति बद्धः (अग्निहोत्री) दाम्ना बद्धः (होमरक्षधारी) मे प्रेम्णा अम्नायमानैः धीमान् सुमानवः न आयात् ।।

**(व्या) अहं बालरूपिणं गोपालं प्रार्थयामि** । किमिति? **निर्मलतनो!** = निर्दोष-शरीर! **धर्मपालं** = धर्मपालनाधिकारिणं शेषं **पालय** । **कृपाशीलं** = दयाशीलं, **तद्बालं च पालय** । **तच्चाश्चल्यं** = शेषस्य मनसि विद्यमानं भूपकार्यविषये स्वपूज्यप्रतीकविषये चाश्चल्यं चश्चलत्वम्, **चालय** । 'तदभिमतमिष्टं दत्वा स्थिरचित्तं कुरु' इति भावः ।।८।।

पुनः कीदृशम्? **श्रीलोलं** = लक्ष्मीलोलं, **कालकाले धर्मग्लानिर्यथा न** स्यात् । तथाहं प्रार्थयामि ।।९।।

इष्टसिद्धिसमयं सूचयितुमाह – **धीमानिति ।। यः** पुरुषः **धीमान्** = बुद्धिमान् **आचार्यनाम्ना बद्धः** तत्कुलीनानां भट्टनामकत्वेऽपि अयम् आचार्यनामकः आचार्यपद-शिरस्कनामवाच्यः इति यावत् । **दाम्ना बद्धः** । भस्मलेपवान् अग्निहोत्री, प्रयाणसमये दामबद्धः होमरक्षाधारी । **मे** मम **आम्नायमानैः धीमान्** बुद्धिशोभां प्राप्तः । **मे** प्रेम्णायुक्तः सः **सुमानवः** = उत्तमपुरुषः **नायात्** = नागतः ।।१०।।

**तस्मान्निस्सीम एवाहं मत्स्वामी स्वस्य साम्यदः ।**
**कः स्वामी कस्य निस्सीमत्वं ददौ भस्मलेपवान् ।।११।।**

**मदाधिक्यात् त्वदाधिक्यं स्पष्टमेव च विट्ठले ।**
**कुवादिनो मदैर्हीनाः सन्ति पश्यन्ति देवताः ।।१२।।**

**(अन्वयः) भस्मलेपवान् मत्स्वामी स्वस्य साम्यदः । तस्मात् अहं (अहङ्कारिकप्राणपदयोग्यः त्वं) निस्सीमः (असि) । स्वामी कः कस्य निस्सीमत्वं ददौ?**

**मदाधिक्यात् विट्ठले (विट्ठलप्रतीकार्थं कृते यत्ने) त्वदाधिक्यं स्पष्टमेव । कुवादिनः मदैर्हीनाः सन्ति (भविष्यन्ति); देवताः (त्वां कृपादृष्ट्या) पश्यन्ति ।**

**(व्या)** स आगतश्चेत् । **तस्मात् अहम्** अहङ्कारिकप्राणभावयोग्यः **त्वं निःसीमोसि** अधिकोऽसि । सः **मत्स्वामी** मत्स्वामिकः । सः तवापि श्रीमदाचार्यपूजितप्रतीकपूजकत्वेन **स्वस्य** साम्यप्रदः । **(स्वामी =)** लोके समर्थः सन् कस्मै कः स्वकीयनिःसीमत्वसदृशं निःसीमत्वं ददौ । न कोपि । अस्य तु अहं स्वामी । तवाप्यहं स्वामी ।।११।। (**भस्मलेपवान्** अग्निहोत्री सन् स्वामी इत्यन्वयः)

**मदाधिक्यात्**[१] त्वयाज्ञातात् **विट्ठले** विट्ठलप्रतीकार्थं यत्ने कृते सति, प्रागुक्तं बाल-गोपालप्रतीकलाभरूपं फलं भविष्यतीत्येतत् स्पष्टम् । (एवं त्वदाधिक्यं मदृजुत्वज्ञानात् प्राप्तमिति च स्पष्टं तवैव) । **कुवादिनः** तवाहिताः तत्वदैत्याः **मदैर्हीनाः** भविष्यन्ति । **देवताः** तत्वदेवताः त्वां दयया **पश्यन्ति** ।।१२।।

**इत्थमेव हरिर्वित्तवादितः कृत्तमूलकैः ।**
**उक्तश्च जगतो नित्यं पृथक्त्वेनैव वर्तते ।।१३।।**

**(व्या) कृत्तमूलकैः** छिन्नमूलकैः = दुर्वादिभिरनुमापकैः । एवमेव (विना प्रमाणं । विचारमकृत्वा) **हरिर्वित्तः** = हरिरपि ज्ञातः भविष्यति । दुर्वादिनां छिन्नमूलत्वं कथं स्यात्? इति न वित्त = न चिन्तय । **जगतः** सकाशात् हरिः **पृथक्त्वेनैव वर्तते** = भिन्नत्वेनैव वर्तते । तस्यानुग्रहेणैव प्रागुक्तनिखिलमिष्टं भविष्यतीत्युक्तं भवति[२] ।। (अप्रामाणिकस्य सर्वस्य तिरस्कारात् । वादिभिः तत्वनिर्णयार्थं कुर्वद्भिः । **कृत्तमूलकैः** = विचारशुद्ध्यर्थं स्वपूर्वीकैः अङ्गीकृतअद्वैतादिदुस्तत्वं इतराप्रामाणिकाभ्युपगमांश्च त्यक्तवद्भिः । (कृत्तं अप्रामाणिकतत्वनिर्णयेन परित्यक्तं मूलं अद्वैतादि प्राचीनसम्प्रदायादिकं यैः ते तैः) **हरिः वित्तः** = सद्गुरुप्रसादेन ज्ञातः **इत्थमेव** यथा इदानीं भवता । तथा अनेकैः पद्मनाभतीर्थ, नरहरितीर्थादिवादिभिः प्रागद्वैतवादिभिः एवमेव ज्ञातः । श्रीहरिः **जगतः** सकाशात् अत्यन्त भिन्नः सर्वस्वामी सदा सेव्यः इति तैः उक्तश्च ।।१३।।

---

(१) (नन्न आधिक्य एन्दरे ऋजुत्ववन्नु नीनु निर्णयवागि तिळिदुकोण्डिद्दरिन्द नीनु इतर पण्डितरिन्द अधिकनादे. अन्थ नन्न अनुग्रहदिन्द सामान्यवाद विट्ठलप्रतीकक्के नीनु यत्न माडिद्दरू निनगे मध्वगुरुगळु अर्चिसिद बालगोपालकृष्णप्रतीकवु दोरकितु. इदु स्पष्ट निदर्शन. नन्न आधिक्य तिळिदवरिगे स्वसमानजनरल्लि आधिक्य बरुत्ते. (नारदर अनुग्रहदिन्द प्रह्लादनिगे बन्दन्ते) एन्दु भाव.)

(२) ई ओन्दूवरे श्लोकगळिगे बेरे अर्थविदे. श्रीमुष्णाचार्यर अर्थदल्लि एरडु तोन्दरे इदे. १. वादिभिः एन्दरे दुर्वादिभिः एन्दु अर्थ माडबेकु. २. आ दुर्वादिगळ हेत्वाभासगळिन्द हरियु ज्ञातनागुत्तानेम्ब अवर व्याख्यानवु प्रमाणहीनवागिदे. ३. मत्तु दुर्वादिनां छिन्नमूलत्वं कथं स्यादिति न चिन्तय एन्दु हेळि मुन्दे हेळिद कारणवु सुझेयवल्ल.

बेरे अर्थवेनेन्दरे, एलै शेषने नीनु विप्रसेवे, बालगोपालप्राप्ति, द्वैततत्वविचारगळिन्द तत्वज्ञानहोन्दि, दैत्यावेशरहितनागि देवतेगळिगे सन्तोषवागुवन्ते शुद्धमाध्वनागि बिट्टि. निन्न 'एक्स्पीरियेन्स् वित् टत्' तत्वनिर्णयार्थवाद मीमांसा सफलवायितु.

(अव) 'एषां वादिनां कृत्तमूलत्वं कथम् पितृपितामहैरङ्गीकृतदुस्तत्ववासना कथं तैः निश्छिन्ना परित्यक्ता च? इति न त्वं वित्त । प्रबलगुरुसमागमे स्वरूपोद्धारके ऋजुस्वरूपे मध्वगुरुराजसदृशे गुरौ प्रसीदति सति, एतत्सर्वं सुशकमेव' इति भावेनाह – **अर्भके इत्यादि** ।। अचिन्त्याद्भुतशक्तिसम्पन्नऋजुगुरुकटाक्षे सति मूलदुःसम्प्रदायेषु विश्वासो विनष्टो भवति - इति भावः ।। ऋजुगुरुः गर्भे एव अदृष्टमुज्ज्वलति[१]।)

**कृत्तमूलत्वमप्येषां कथं त्विति न वित्त च ।**

**'अर्भके गर्भसंस्थेऽपि स्वर्भानुग्रस्तभानुवत् ।।१४।।**

**तवार्भको दुर्भगो न शुभानां भूर्भविष्यति' ।।**

(व्या) (कृत्तमूलत्वमिति श्लोकार्धस्य पूर्वमेव अर्थः उक्तः) **तद्बालं च कृपाशील-मित्यनन्तरं**[२] पुत्रप्राप्त्यनन्तरं बालगोपालप्रतीकलाभो भविष्यतीति सूचितम् । तस्मिन् गर्भसंस्थेन सत्यपि दुर्भगो न । किन्तु सुभाग्यसम्पन्नः तस्मात् तवार्भकः शुभानां गोपालप्रतीकलाभादीनां भूराश्रयः सन् भविष्यति । उत्पन्नो भविष्यति (जायते इत्यर्थः)[३] । पूर्वाध्यायोक्तसीतापतेरिव शेषस्यापि तद्वत् नृपानुग्राहकस्य पुत्रोत्पत्त्यनन्तरं भगवत्पाद-पूजितप्रतीकपूजकत्वरूपं निदर्शनमुक्तं भवति ।।शेष. प्र.सं.।।

### १६–०१५–०२७–विप्रप्रकरणम्

(व्या) **'इत्येकं श्लोकमुख्यं'** इत्यारभ्य **'भज मां भुजगेश्वरम्'** इत्यन्तं विप्रश्रोतृक-द्वितीयं प्रकरणम् ।।

**इत्येकं श्लोकमुख्यं मे त्यक्तवानसि विप्रक ।।१५।।**

---

(१) सात्विकादृष्ट इद्दरे द्वैतज्ञान बरुत्ते; अद्वैत वासने होगुत्ते एन्दर्थ.

(२) ('तद्बालं च कृपाशीलमित्युक्तत्वात्' एन्दिरबेकु. अदरल्लू कृपाशील एन्दे वृं.पाठ. 'तद्बालं च' १६।८ एन्दु हिन्दे बन्दिदे.)

(३) (शेषन हेण्डतियु पुत्रनन्नु प्रसविसिद कूडले आ शिशुवु मनेगे बालगोपालस्वामियन्नु तन्न अदृष्टदिन्द बरमाडिकोण्डितु. आ पुत्र आगर्भश्रीमन्त. अदृष्टशालि अवन मेले गुर्वनुग्रहवु चेन्नागिदे एन्दु भाव. केलवरु हुट्टुवागले ओळ्ळे पुण्यपडेदुकोण्डु हुट्टिरुत्तारे. हागे शेष, पद्मनाभतीर्थादिगळु हुट्टुवागले अज्ञान सुट्टु, प्राचीनसम्बन्ध कडिदु, निजतत्वज्ञानहोन्दुव अदृष्टवुळ्ळवरेन्दु भाव.)

**आकरस्थं लेखनं च कारय प्राङ्मयेरितम् ।**

**(व्या) हे विप्रक!** ‘अर्भके गर्भसंस्थे’ इत्येकं श्लोकमुख्यं प्राक् पूर्वप्रकरणे मयोक्तं त्वं त्यक्तवानसि ।।१५।। **प्राक् मया ईरितम् आकरस्थं लेखनं च कारय** ।

**अहं मे किङ्करस्यापि विस्मृतेः किं करोमि ते ।।१६।।**

**न त्वहङ्कारमानी च शङ्करोऽपि निवारकः ।**
**सहजा विस्मृतिः केन परिहर्तुं सुशक्यते ।।१७।।**

**(अन्वयः) मे किङ्करस्य ते विस्मृतेः अहं किं करोमि? अहङ्कारमानी शङ्करः अपि च न निवारकः । सहजा विस्मृतिः परिहर्तुं केन सुशक्यते?**

**(व्या) आकरस्थं** त्वं **लेखनं कारय** ।।१५।। **अहं मे किङ्करस्यापि** तव **विस्मृतेः** परिहारकं **किं करोमि** अहङ्कारतत्वाभिमानी शिवोपि तव विस्मृतेः **न निवारकः** । **सहजा** औत्पत्तिकी **विस्मृतिः** । **केन** सम्यक् **परिहर्तुं** शक्यते[१] ।।१७।।

---

(१) (देवरिगे एल्ला शक्तियू इदे. आदरे अवन सङ्कल्पदिन्दले अनादि हरिविस्मृतियन्नु क्रमवागि साधने माडिसि भक्तिवृद्धियाद हागेल्ला कम्मियागुवन्ते माडुत्ताने. २. इन्नु केलवु विस्मृतिगळु प्रतिबन्धक कर्मदिन्द काळिदासन काव्यदल्लि दुष्यन्तनिगे शकुन्तले विषयदल्लि बन्दन्ते बरुत्ते. अवु दोड्डवर वर, तपस्सु मुन्ताद पुण्यदिन्द होगुत्ते. ३. केलवु विस्मृति सहजशक्तिय न्यूनतेयिन्द इद्दु. अदु होगुवुदे इल्ल. दृष्टान्त श्रीमध्वाचार्यरु ‘विश्व’पदक्के १०० अर्थ ओम्मेले हेळिदरु. सभिकरिगे धारणे माडलागलिल्ल. इन्थ शक्तिन्यूनते = दौर्बल्य तुम्ब साधने माडिदरू स्वल्प कम्मियागुत्तदेये होरतु, सम्पूर्णवागि होगुवुदे इल्ल. आदरू दोड्डवर आवेशदिन्द अर्जुनादिगळिगे शक्ति हेच्चितु. हागे ‘नन्नन्नु भजिसु, निनगे हेच्चु स्मृति इरुवन्ते माडुत्तेने’ एन्दु गुरुराजरु इल्लि विप्रनिगे हेळिद्दारे. इदु तात्कालिक अनुग्रह. इदरिन्द बेकाद्दु योग्यते मीरिद्दु आगुत्तदे. आदरे आ फल शाश्वतवागिरुवुदिल्ल. अर्जुन अश्वत्थामनन्नु सोलिसिदरू, आ हेच्चिन बल शाश्वतवागि निल्ललिल्ल. प्रकृत ‘नन्नन्नु भजिसु, निन्न स्मृतिशक्तियन्नु इन्नू हेच्चिसुत्तेने एन्दु ई रीतियागि गुरुराजरु निरूपिसिद्दारे. ई मातन्नु अवरु १०ऽ१५ श्लोकगळन्नु द्वागि हेळि, विप्रनु सहजदौर्बल्यदिन्दागि न्दन्नु मरेताग हेळिद्दारेन्दु तिळियबेकु. एकेन्दरे विप्रनिगे सहजवाद स्मरणशक्ति, गुरुभक्ति, दैवानुग्रह एल्ला इद्दे इदे. अवनिगे विस्मृतिये इल्ल एन्दु गुरुराजरे इदे अध्यायद २१-२२श्लोकगळल्लि कोण्डाडिद्दारे. विरोध बन्तु एन्दु तिळियबारदु. ४-५ श्लोकगळन्नु स्वल्पवू मरेयदन्ते हेळतक्क सहज स्मृतिशक्ति अवनिगे यावागलू इद्दे इदे. अदरिन्द अवनु एल्ला मनुष्यर देसेयिन्द

**सहसा परिहर्तुं हि हरेरपि न शक्यते ।**
**शश्वद्विस्मृतिशीलस्य कस्मृतौ विस्मृतिर्भवेत् ।।१८।।**

**आकृ(मृ?)तिं तव विपेन्द्र कामतिं त्यज मां भज ।**
**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।।१९।।**

(पूर्वं = १२।४३)

(अन्वयः) हरेः (विस्मृति) अपि सहसा परिहर्तुं न शक्यते; हि । 'शश्वद् विस्मृतिशीलस्य ..... त्यज मां भज' इति मया पूर्वं प्रोक्तम् हे बुद्धिमन्! अनुसन्धत्स्व ।

**(व्या)** हरिविषयिणी विस्मृतिः शीघ्रं **परिहर्तुं न शक्यते** । किन्तु श्रवणमननाद्यभ्यासेन परिहर्तुं शक्यते । तस्मात् त्वया विस्मृतिपरिहारार्थं **'शश्वद्विस्मृतिशीलस्य' इति** यत् प्राक् द्वादशाध्याये (१२।४३) **उक्तं** तत्पुनः पुनः **अनुसन्धत्स्व** ।।१९।।

**वृद्ध श्रद्धान्वितो नित्यं भज मां भुजगेश्वरम् ।**
**मानवा मानिनः सर्वे पापिनः कोपिनः सदा ।।२०।।**

**शश्वद्विस्मृतिशीलश्च दुःखशीलश्च दुर्भगः ।**
**इदं गाळीप्रदानं तु नैव चाळीप्र(प?)दस्य ते ।।२१।।**

**मत्पादाब्जे सदा चाब्जभवस्य बलमीदृशम् ।**
**अलिं त्वं मम पादाब्जे कथं मे वागलम्भव ।।२२।।**

(अन्वयः) हे वृद्ध! श्रद्धान्वितः (सन्) मां भुजगेश्वरं नित्यं भज । सर्वे मानवाः सदा मानिनः पापिनः कोपिनः । 'शश्वद्विस्मृतिशीलः च दुःखशीलः दुर्भगः च' इति गाळीप्रदानं मत्पादाब्जे सदा चाळीप्रदस्य ते तु न एव । अब्जभवस्य बलम्

---

उत्तमने. अष्टु स्मरणे नम्मल्लि यारिगू इल्ल. अन्थ शाश्वतगुरुभक्ति, हरिस्मृति इद्दरू १५-२० श्लोकगळन्नु हेळुवष्टु सहज स्मरणे शक्ति इल्ल. अदक्के विशेष गुरुस्मृति, गुर्वनुग्रह बेकु. कृष्णनन्नु बेडि विशेषशक्तियिन्द बलभद्रनु प्रलम्ब, मैन्दादिगळन्नु कोन्दन्ते, विप्रनू गुरुगळन्नु बेडिदरे अन्थ विशेषशक्तियु बरुत्तदेन्दु १९नेय श्लोकदल्लि हेळिद्दारे. आद्दरिन्द विरोधविल्ल.)

**ईदृशम् । मत्पादाब्जे अळि त्वम् (अहमुक्तवान् । सा मे वाक् कथं इति चेत्) हे अलम्भाव शृणु ।**

**(व्या)** परमात्मस्मरणमपि (विशेषस्मृतिशक्तिरपि) मद्भजनसहकृतमेव त्वदिष्टसाधनमिति भावेनाह – **वृद्ध इति ।।** (**हे वृद्ध! श्रद्धान्वितः** प्रवृद्धभक्त्या **नित्यं** प्रतिदिनं **भुजगेश्वरं मां भज** । 'शेषाधिकं ऋजुः मम गुरुः पिता माता च त्वम् । देवकार्यनिर्वाहार्थमहं अधिक-स्मरणशक्तिं याचे' इति मां **(भज)** प्रार्थय । 'आदिशेषस्य यथा तथा तवापि अधिकस्मृतिः ददामि' इति भावः । लौकिकमनुष्याणां स्वभावमाह । **सर्वे** (अदेवा) **मानवाः** सर्वे स्वरूपतः मनुष्याः ज्ञानरहितदशायां **(मानिनः =)** दुरभिमानिनः । **(कोपिनः=)** तामस-कोपभरिताः सदा रागद्वेषाभ्यां प्रेरिताः ।।२०।।)

ये नराः कोपवन्तश्च पापिनश्च तैः कृतं 'शश्वत् एकप्रकारेण विस्मृतिशीलः = विस्मरणशीलः दुःखशीलः दुर्भगश्च' इति गाळीप्रदानं मत्पादकमले (निक्षिप्त) **(अलिपदस्य=)** चित्तरूपभ्रमरस्य तव न भविष्यति । किन्तु त्वद्वेषिण एव शापफलभोक्तारः । यथा पद्मगतमधुभोगवतो भ्रमरस्य पद्मस्मृतिराहित्यं नास्ति । दुःखं च नास्ति । दुर्भगशब्दोक्त-सूर्यप्रकाशराहित्यं नास्ति । तथा मत्पादाब्जनिष्ठत्वचित्तभ्रमरस्य विस्मरणं दुःखं ज्ञानसूर्य-राहित्यं च नास्तीति भावः । तत्कुतः **अब्जभवस्य** ब्रह्मणः बलमेतादृशम् । ब्रह्मभावयोग्यस्य ममानुग्रहेण तव दुःखादिकं नास्ति इति भावः ।।

'अलिपदस्य' इत्यस्य अर्थाप्रतीतेः तदर्थमाह – **अलिमिति ।।** अलम्भव । सम्यग् उत्पत्तिमन् । मम **पादाब्जे अलिं त्वं** दत्तवानसि इत्यभिप्रायेण 'अलिपदस्य' इति अर्थ-गर्भिता या वाक् मया प्रागुक्ता सा कथमिति चेत् शृणु ।। ('नैव चाळिपदस्य ते' इत्यत्र मत्पादाब्जे अळि त्वम् अहमुक्तवान् । सा मे वाक् कथं इति चेत् । हे अलम्भाव शृणु' एन्दु योजना । 'अळि'पदवु पुल्लिङ्गः, भ्रमरवेन्दर्थ.)

**त्वन्मनःसन्निकृष्टं तु मत्पदं सन्निकर्षते ।**
**तस्मान्मत्पादकमलध्यानात् ते निर्मलं मनः ।।२३।।**

**मम सालोक्यसिद्ध्यर्थं कुरु शीलवतां वर ।**
**पञ्चजन्मसु पञ्चास्यवत्समर्थो भव प्रिय ।।२४।।**

**(अन्वयः) त्वन्मनःसन्निकृष्टं मत्पदं तु सन्निकर्षते । तस्मात् मत्पादकमलध्यानात् ते मनः निर्मलं (भवति) । हे शीलवतां वर! मम सालोक्यसिद्ध्यर्थं (मत्पाद-कमलध्यानं) कुरु । हे प्रिय! पञ्चजन्मसु पञ्चास्यवत् समर्थो भव ।**

**(व्या) त्वन्मन इति ।। त्वन्मनःसन्निकृष्टं मत्पदं** = त्वच्चित्तभ्रमरसम्बद्धं मत्पाद-कमलम् । **सन्निकर्षते** = त्वच्चित्तरूपभ्रमरस्याकर्षणं करोति । **तस्मात् मत्पादकमलध्यानात् (ते =)** तव **मनः निर्मलं** भविष्यति ।।२३।।

'**मम सालोक्यसिद्ध्यर्थं** समानलोकसिद्ध्यर्थं मत्पादकमलध्यानं **कुरु**' इत्यभिप्रायं जानीहि । **हे शीलवतां वर!** त्वं **पञ्चजन्मसु पञ्चास्यवत्** पञ्चाननवत् **समर्थो भव** । हे प्रिय ।।२४।।

**पञ्चास्यवाक्यसन्दिष्टं पुराणं पञ्चलक्षणम् ।**
**कुरु शीघ्रं गुरूक्तिं च न त्यज स्वोचितां कचे ।।२५।।**
**गृहीत्वा वक्ष्यते पक्षपातेन सुविचक्षण ।**

**(अन्वयः) पञ्चास्यवाक्यसन्दिष्टं (इदमाख्यानं) पञ्चलक्षणं[१] पुराणं कुरु । स्वोचितां गुरूक्तिं च शीघ्रं कुरु; न त्यज च । (गुरूक्तित्यागे) हे सुविचक्षण! कचे गृहीत्वा वक्ष्यते ।**

**(व्या)** (मुख्यप्राणवत् अधुनैव प्राणादिपञ्चरूपसन्निधानयुक्तेन मया सन्दिष्टं) **पञ्चास्य-वाक्यसन्दिष्टं** = प्राणापानादिपञ्चरूपस्य वायोः पदयोग्येन मया सन्दिष्टं । इदमाख्यानं **पञ्चलक्षणं** = पञ्चविधानि पञ्चजन्मसम्बन्धीनि लक्षणा यस्मिन् तत्, **पुराणं कुरु** = पुराणवत् श्रुतं कुरु । गुरोः मम (स्वोचितां) **उक्तिं न त्यज** ।।२५।।

त्यागे **कचे गृहीत्वा पक्षपातेन** वक्ष्यामि । **(हे सुविचक्षण!** त्वया कर्तव्याकरणे मया बलात्कारेण पक्षपातेन त्वद्विषयकपक्षपातेन **कचे गृहीत्वा वक्ष्यते** । प्रेरणां कृत्वा भगवत्सेवा

---

(१) 'एतदन्ते च मध्ये च ब्रह्मैवोक्त्वा विजानताम् ।
ऋगादि पञ्चधा संस्थं शब्दब्रह्म प्रशाम्यति ।।
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
स्तुवन्ति सत्यकर्माणं सत्यं सत्येषु सामसु' – आथर्वणोपनिषद्भाष्यम् । प्रथमखण्डे

क्रियते इत्यर्थः) ।।

(अव) यथा 'शिखां गृहीत्वा वक्ष्यामि' इत्यस्य उक्ताकरणे बलेनापि कारयामि' इति तात्पर्यम् । तथा 'कचे गृहीत्वा वक्ष्यते' इत्यस्यापि तात्पर्यं ज्ञातव्यमिति भावेनाह – शिखामिति ।। ।।२५ १/२।।

**शिखां गृहीत्वा वक्ष्यामि सखा त्वं मम सर्वदा ।।२६।।**

**सुखावासान् प्रदास्यामि मखावासादपि प्रिय ।**
**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।।२७।।**

**वृद्ध श्रद्धान्वितो नित्यं भज मां भुजगेश्वरम् ।**

(अन्वयः) 'शिखां गृहीत्वा ..... मखावासादपि प्रिय' इति पूर्वं मया प्रोक्तम् हे बुद्धिमन्! अनुसन्धत्स्व । हे वृद्ध! नित्यं श्रद्धान्वितः (सन्) मां भुजगेश्वरं भज ।

(व्या) **शिखां गृहीत्वेति** ।। 'पूर्वं पञ्चदशाध्याये प्रोक्तमत्राप्यनुसन्धत्स्व । तस्मात् श्रद्धान्वितः सन् शेषोत्तमत्वेन मां भज' इत्यादरोत्पादनार्थं पुनः पुनः कथनम् । अनेन स्वान्तर्यामिणो हरेः स्मरणं विप्रेण कर्तव्यमिति निदर्शनमुक्तं भवति ।।विप्र.प्र.सं.।।

### १६–०२८–०३६–शेषप्रकरणम्

(व्या) **'ममाभिप्रायमज्ञात्वा'** इत्यारभ्य **'मन्तव्या तेन मत्कृतिः'** इत्यन्तं शेष-श्रोतृकप्रकरणं तृतीयम् ।।

**ममाभिप्रायमज्ञात्वा प्रेत दूषयसीह माम् ।।२८।।**

**प्रीतवानस्म्यहं तस्मै प्रोक्तवान् यो गुणान् मम ।**
**नैव पृच्छेति पूर्वोक्तिर्नैव मानं तवाबुध ।।२९।।**

**कनकानि समुद्दिश्य शौनकीं ते मतिं त्यज ।**

(अन्वयः) हे प्रेत! इह मम अभिप्रायम् अज्ञात्वा मां दूषयसि । यः मम गुणान् प्रोक्तवान् तस्मै अहं प्रीतवान् अस्मि । हे अबुध! 'नैव पृच्छ' इति पूर्वोक्तिः

**तव मानं नैव । (तस्मात्) कनकानि समुद्दिश्य ते शौनकीं मतिं त्यज ॥**

**(व्या) हे प्रेत!** 'सुतं मे कुमतिं प्रेत वृथा प्रेरितवानसि' (६।३०) इति षष्ठाध्याये उक्तरीत्या प्रकृष्टदोषसंयुक्तशेष! त्वं **ममाभिप्रायम् अज्ञात्वा** 'मत्पादसेवाविषये'' (१६।१) इत्यादिना प्रतिपादितं तवेष्टसाधनं ममाभिप्रायमज्ञात्वा दुःसङ्गवशात्, 'मम स्वप्ने तव स्वप्ने वदतु' (६।२८) इत्याद्युक्तदिशा **मां दूषयसि** ॥२८॥

**यः** ब्राह्मणः **मम गुणान् प्रोक्तवान् अहं तस्मै प्रीतवान्** । **हे अबुध!** ज्ञानरहित! पूर्वोक्तं (१५।१०७) 'नैव पृच्छ धनागमं' इत्येतत् **तव** सिद्धान्ते **मानं नेति** प्रतीयते ॥२९॥

तस्मात् **कनकानि** काञ्चनानि **समुद्दिश्य** '(आख्यानं) ब्राह्मणेनोक्तम्' इति **शौनकीं मतिं** = शुनकसम्बन्धिनीं मतिं **त्यज** ।

**पूर्वं तु भट्टाचार्यस्य भट्ट(भ्रष्ट?)बुद्धेः कदाचन ॥३०॥**

**नष्टासीत् दृष्टिरेकैव वेदाप्रमाण्यशङ्कया ।**
**तद्वत्कमलनाभस्य समलस्य सुदुर्मतेः ॥३१॥**

**शमनं चास सन्नेत्रं दमनं यास्यते यमात् ।**

**(अन्वयः) पूर्वं कदाचन भट्टाचार्यस्य तु वेदाप्रामाण्यशङ्कया एक एव दृष्टिः नष्टासीत्; तद्वत् समलस्य सुदुर्मतेः भट्टबुद्धेः कमलनाभस्य सन्नेत्रं च शमनम् आस; (सः) यमात् दमनं यास्यते ।**

**(व्या)** शेषस्य कमलनाभादिषु तेषां वेषमात्रेण विश्वासं वारयितुमाह – **पूर्वम् इत्यादि ॥ यथा** भट्टस्य (भट्टकुमारस्य) वेदाप्रामाण्यशङ्कया चक्षुरेकं नष्टं । तद्वत् । तस्य सपापस्य अतिदुर्बुद्धेः कमलनाभाख्यस्य **सन्नेत्रं** ज्ञाननेत्रं मत् तस्य **शमनं**(१) = नाशनम्

(१) (इदरिन्द शेषनु स्मार्तकुलदल्लि अद्वैतभूयिष्ठ देशदल्लि हुट्टिदवनागिद्दरू इरबहुदु; अथवा वैष्णवकुलदल्लि हुट्टिदरू अद्वैतिगळ सङ्गडवे विद्याभ्यास, उद्योग, व्यवहार स्नेहवुळ्ळवनागि मीमांसेयिन्द द्वैततत्वद प्राशस्त्यवन्नु तिळियलु अवकाशवे इल्लदवनागि केवल बुद्धिप्राबल्यवुळ्ळ पण्डितनागिद्दनेन्दु तोरुत्तदे. विप्रन समागमदिन्द अवनिगे जन्मान्तरस्मृतियू बन्दु अवन दुरितगळु होगि, अवन दृष्टिकोणगळे व्यत्यस्तवागि सुरूपगोण्डवेन्दु तिळियबेकु. अल्लियवरेगे शेषनु कमलनाभादिगळिगे

आस ।।३१।। तस्मात् **यमात् दमनं** निग्रहं **यास्यते** ।। तस्मात् 'तं न भज' इति भावः ।

**अयं न तम्मणः प्रेम्णा मद्वाणीं भणते गुणिन् ।।३२।।**

**काणवत्सरणीं यायान्नाणते पूर्णरूपिणम् ।**
**तत्फलं प्राप्यते पुत्र सत्फलं नैव पश्यते ।।३३।।**

**विप्रफल्गुतरश्चायं विप्रलिप्सुर्न संशयः ।**
**अनेकरूपवन्तं मां विनैकतररूपिणम् ।।३४।।**

**मनाक् स मनुते विद्वन् शौनको भुवि जायते ।**

(अन्वयः) हे गुणिन्! अयं तम्मणः मद्वाणीं प्रेम्णा न भणते । सरणीं काणवत् यायात् । पूर्णरूपिणं न अणते । हे पुत्र! तत्फलं प्राप्यते । सत्फलं नैव पश्यते । अयं विप्रफल्गुतरः विप्रलिप्सुः, न संशयः । हे विद्वन्! सः अनेकरूपवन्तं एकतररूपिणं मां विना मनाक् मनुते; भुवि शौनको जायते ।

**(व्या) अयं तम्मणः प्रेम्णा** भक्त्या **मद्वाणीं न भणते** । किन्तु स्वकीयकार्यसिद्ध्यर्थं विषहरमन्त्रादिवत् भणते ।।३२।। **काणवत् सरणीं** पन्थानं **यायात्** । **पूर्णरूपिणं मां न** मनुते(१) । **तत्फलं** = क्षुद्रफलं **प्राप्यते**, **सत्फलं** ज्ञानभक्तिवैराग्यादिफलं **न पश्यते** ।।३३।।

**(विप्रफल्गुतरः =)** विप्रेषु ब्राह्मणेषु फल्गुतरः अल्पतरः, **विप्रलिप्सुः** बहूनां वञ्चकः । **एकतररूपिणम्** अतिमुख्यरूपिणम् **अनेकरूपवन्तं मां विना** मद्भक्तान्न **मनुते** । मद्भक्तद्वेषी भूत्वा मामेव किञ्चित्स्मरते । **सः भुवि शुनको** भवति ।।३४ १/२।।

**एवं निःश्रीनिवासोऽयं श्रीनिवासाभिधोऽपि सन् ।।**

---

प्रियनागि अद्वैतिगळ गोष्ठियल्लि बेरेतवने आगिद्दनु.)

(१) (पूर्णरूपिणं न मनुते एन्दरे सन्यासि सत्तु होदमेले वृन्दावनवागिदे. इल्लि होदवर बल वृन्दावनदल्लि एनू इल्ल; आदरू मन्त्रक्के सामर्थ्यविदे एन्दु तिळिदु आख्यान पारायणवन्नु आगिन्दाग्ये माडुत्ताने एन्दर्थ. इवरु ऋजुगळु देहदिन्द सहितवागिये स्वेच्छेयिन्द वृन्दावनदल्लि स्थितरागिद्दारे. बदुकिद्दारे. अवर शक्तिगळेल्लवू अवर उपयोगदल्लिरुत्तवे. लोकव्यवहार त्यजिसि केवल देवकार्य, देवर कार्यगळिगे मनस्सु कोडुवुदक्कोस्कर वृन्दावनदल्लिद्दारे एन्दु तिळियबेकु.)

**निस्सीमं मां न मनुते सुश्रीमन्तं कदाचन ।**
**नित्यं ब्राह्मणसम्बन्धि सत्यं वाक्यं मयोदितम् ।।३६।।**

**अत्यन्तं भ्रान्तबुद्धिश्च मन्तव्या तेन मत्कृतिः ।**

(अन्वयः) एवम् अयं श्रीनिवासाभिधः अपि निःश्रीनिवासः (सन्) सुश्रीमन्तं निस्सीमं मां कदाचन न मनुते । मया (प्रमाणेन) उदितं नित्यं सत्यं ब्राह्मणसम्बन्धि वाक्यं (च); (सः) अत्यन्तं भ्रान्तबुद्धिः; तेन मत्कृतिः मन्तव्या ।

**(व्या) (एवं** यथा तम्मणः तथैव ) **अयं** श्रीनिवासः श्रीनिवासाख्योपि । **निःश्रीनिवासः** = दारिद्र्याश्रयः ।।३५।। **मां निःसीमं** जीवोत्तमं **न मनुते** । **मया** तु **नित्यं** अपौरुषेयम् । **सत्यम्** = अबाधितार्थकम् । **ब्राह्मणसम्बन्धि** ब्रह्मच्छ्रुतिगताश्वमेधादिब्राह्मणगतं वाक्यं मम जीवोत्तमत्वे प्रमाणेन उक्तम्[१] ।।३६।।

सः श्रीनिवासः **अत्यन्तं भ्रान्तबुद्धिः** । तेन मत्कृतिः एवमेव **मन्तव्या** अप्रमाणत्वे नैव मन्तव्या । अनेन शेषेण द्रष्टुं योग्यस्य कमलनाभादिव्यक्तित्रयस्य दोषरूपं निदर्शनं विप्रे भक्त्युत्कर्षोत्पादनार्थं प्रतिपादितम् ।।३६ १/२।।

### १६–०३७–०३९–विप्रप्रकरणम्

**(व्या) 'हे ब्राह्मण'** इत्यारभ्य **'पापिनं तं महात्मभिः'** इत्यन्तं चतुर्थं विप्रश्रोतृकप्रकरणम् ।।

**हे ब्राह्मणाधम गुणाधम भूधनाढ्यं मन्नन्दनं त्वनुदिनं गुणिनं भजस्व(वदस्व)[२]।**
**वृन्दावने मदनगोपसदायने मद्वाणीं वदस्व वदनेन ददामि चान्नम् ।।३७।।**

**मत्सत्रभोजनं भुङ्क्ष्व पुत्र मित्रकळत्रकैः ।**

---

(१) ('ब्रह्मच्छ्रुति एन्दरे याव श्रुतियो गोत्तिल्ल. बृहदारण्यकद मूरने अध्यायद एरडने ब्राह्मणवु अश्वमेधब्राह्मणवु. आदि पददिन्द मूरने ब्राह्मणवाद उद्गीथब्राह्मण. इवेरडरल्लू वायुदेवर महिमे हेळल्पट्टिदे. भाष्यदल्लू 'पवमान'नामकराद एल्ल ऋजुगळमहिमेयू उपनिषदर्थवागि तोरिसल्पट्टिदे. 'पवमाना इति प्रोक्ता मुख्यवायुत्वयोगिनः' इत्यादि.)

(२) मुन्दिन प्रकरणद व्याख्यानद अवतारिकेयल्लि वदस्व एन्दे प्रतीक हिडिदिद्दारे.

**तत्र यात्रां न कृत्वा त्वं यत्र चानादरस्तव ॥३८॥**

**इयं ते दिव्यसद्बुद्धिः क्रुद्धो मा भव (विप्रक?) वृद्धक ॥३९॥**

**श्रद्धाहीनं तु मद्वाणीं न वदस्वाद्य चाधमम् ॥**

(अन्वयः) हे ब्राह्मणाधम! गुणाधम! भूधनाढ्यं गुणिनं मन्नन्दनं तु अनुदिनं भजस्व । मदनगोपसदायने वृन्दावने मद्वाणीं वदनेन वदस्व । अन्नं च ददामि । हे पुत्र! यत्र तव अनादरः त्वं तत्र यात्रां न कृत्वा, मित्रकळत्रकैः मत्सत्रभोजनं भुङ्क्ष्व । इयं (हि) ते दिव्यसद्बुद्धिः; हे वृद्धक! क्रुद्धो मा भव । अद्य अधमं श्रद्धाहीनं तु मद्वाणीं न वदस्व ।

**(व्या) हे ब्राह्मणाधम!** 'ब्राह्मणाः अधमाः यस्य' इति व्युत्पत्त्या कैश्चिद्ब्राह्मणाधमैः युक्त । **हे गुणाधम!** 'गुणाः क्षुद्रपरिवाराः अधमाः' यस्य इति व्युत्पत्त्या गुणाधम । (नीचपरिवारयुक्त) **भूधनाढ्यं मन्नन्दनं** पूर्वप्रकरणोक्तशेषं प्रति वदस्व । (शेषं **भजस्व)** ॥३७॥

**मदनगोपसदायने** = मदनगोपालरूपस्य हरेः सर्वदा आश्रये, मद्वृन्दावने **मद्वाणीं** (आख्यानं) **वदनेन वदस्व** । अहं शेषं प्रेरयित्वा **अन्नं ददामि** । **हे पुत्र! यत्र तव अनादरः तत्र यात्रामकृत्वा, मित्रकलत्रकैः** सह गृहस्थैः कारितं **मत्सत्रभोजनं** कुरु[१] ॥ (एतादृशः तव मनःप्रसादः सात्विकः । निरीक्षितं धनं न प्राप्तमिति क्रोधं मा कुरु) ॥३९॥ श्रद्धाहीनं पुरुषं प्रति मद्वाणीं न वदस्व ॥

## १६-०४०-०५२-शेषप्रकरणम्

**(व्या) 'मन्नन्दनं वदस्व'** इत्युक्तं (तत्र नन्दनपदेन शेष उच्यते) किं तत्प्रति वक्तव्यम्? इत्यत आह – **तवेत्यादि ॥ 'तवोत्तमसती'** इत्यारभ्य **'संशयी नात्र संशयः'** इत्यन्तं विप्रश्रोतृकप्रकरणान्तर्गत शेषश्रोतृक अवान्तरप्रकरणं ॥

**तवोत्तमसतीसूतिकाले चित्रं कृतं मया ॥४०॥**

---

(१) (मठदल्लिये गृहस्थरु भिक्षा माडिसुत्तारे. मठदल्ले ऊटमाडु एन्दु न्दर्थ. अथवा पुत्रकळत्रशब्दित अधीनजनरिन्द कूडिकोण्डु पर्यायमठदल्लि ऊटमाडु अथवा मठद समाराधनेय अन्नवन्ने ऊटमाडु एन्दर्थ)

**पूर्वोक्तवाक्यसत्यार्थं सा पुत्री पुत्रतः कृतः ।**
**अंशेन पुंस्त्वसिद्ध्यर्थमहमेव सहासुभिः ।।४१।।**

**प्रविष्टः प्रतिरुद्धं तु प्र(वि ?)कृष्टे[१] चाप्यमर्षितः ।**
**प्रसूतिकाले वायुश्च पुरः स्थित्वा च कर्षति ।।४२।।**

**इति मानान्तरादेव प्राप्तं धर्मं करोम्यहम् ।**
**कंसेन बद्धदम्पत्योर्यादवानां पतिर्यथा ।।४३।।**

**कंसादिदैत्ययुद्धार्थमाविरासीदहं तथा ।**

(अन्वयः) तव उत्तमसतीसूतिकाले मया चित्रं कृतम् । सा पुत्री पूर्वोक्तवाक्य-सत्यार्थं पुत्रतः कृतः । पुंस्त्वसिद्ध्यर्थमेव असुभिः सह अंशेन अहम् एव प्रविष्टः । 'प्रतिरुद्धं तु प्रकृष्टे प्रसूतिकाले च अमर्षितः अपि वायुः पुरः स्थित्वा च कर्षति' इति मानान्तरादेव प्राप्तं धर्मम् अहं करोमि । यथा यादवानां पतिः कंसेन बद्धदम्पत्योः; कंसादिदैत्ययुद्धार्थम् आविरासीत् तथा अहम् (अपि) ।

**(व्या)** (विप्रेण शेषः एवं बोधनीयः । हे शेष!) **त्वदीयभार्या प्रसवकाले मया विचित्रं कृतं** ।।४०।। **(पूर्वोक्तवाक्यसत्यार्थं =)** 'तवार्भकः पुमानेव भूसुरेश भविष्यति' (१६।१५, १४।२३) इति यत्पूर्वमुक्तं, तस्य सत्यत्वसिद्ध्यर्थं या त्वद्भार्या गर्भगता पुत्री, **सा पुत्री मया पुत्रकः(तः) कृतः** । स्त्रियः पुरुषत्वं दत्तमिति यावत् ।। कदापि स्त्रीणां पुंस्त्वाभावात् 'सा पुत्री पुत्र**कः(तः)** कृतः' इति कथितं तत्कथम् इत्यत आह **अंशेनेति।। अहं असुभिः** प्राणैः **सह** पुरुषत्वसिद्ध्यर्थं **अंशेन** तच्छरीरं **प्रविष्टः** । 'स्त्रीणां पुंस्त्वं नास्ति' इत्यस्य पुरुषजीवान्तरानधिष्ठिते पुरुषशरीरे स्त्रीजीवस्य अभिमानितया अवस्थानं नास्ती-त्येतदर्थकत्वेन शिखण्डिनः शरीरे इव । अंशतः पुरुषाधिष्ठितशरीरे अत्रापि स्त्रीजीवस्य अवस्थाने बाधकाभावात्' इति भावः ।।४१।।

प्रसव(काले)समये प्रतिबद्धं शिशुं बहिरानेतुं **'प्रसूतिकाले वायुश्च'** इत्युक्तं वायोर्धर्मं, प्रतिबद्धाकर्षणरूपं **धर्मम् अहं करोमि । यथा कंसेन** वसुदेवदेवक्योः निगडबद्धयोः सतोरपि श्रीकृष्णस्य मधुरापुराद् बहिर्गमनं तद्बलेन वसुदेवस्यापि बन्धपरिहारः । बहिरागमनमित्येतत्

(१) 'प्रकृष्टे' एन्दु स्वा. इदे. विकृष्टे एन्दु वृं.पाठ. भी.नोडि पाठ निर्णय माडबेकु

कंसादिदैत्ययुद्धार्थं कृतम् । तद्वदहं प्रतिबद्धस्यापि बहिरानयनं कृतवान् । यथा वसुदेवेन सह बहिरागतः कृष्णः, तथा अहमपि देहस्थजीवान्तरेण सह गर्भस्थ देहसंस्थः सन् बहिरागतः ।।४३ १/२।। (**प्रतिरुद्धं तु** शिशुं **प्रकृष्टे** (अथवा विकृष्टे) **प्रसूतिकाले अमर्षितः** प्रकोपितः **वायुश्च** सूतिकावायुः **पुरःस्थित्वा** बाह्यभूमिं प्रकर्षति । स च व्यापारः इदानीं मया कृतः' इत्यन्वयः ।)

**पूर्वं तु वरदानेन करदानकराय च ।।४४।।**

**स्मरदाश्रयदः सोऽहं सर्वदा नन्दनेऽर्भके ।**

**(अन्वयः) पूर्वं करदानकराय तु वरदानेन च सः सर्वदा स्मरदाश्रयः अहं नन्दने अर्भके (सन्निहितोऽस्मि)**

**(व्या) पूर्वं करदानकराय** = 'करदा वरदायाथ स्मरदाश्रयदाय च' इति सप्तमाध्यायोक्तरीत्या करसमर्पकाय वरप्रदानेन **स्मरदाश्रयदः** । **सः** देवादिभिराराधितः अहम् अस्मिन् अर्भके सन्निहितोऽस्मि । 'पूर्वं करदानकराय स्मरदाश्रयदः सन् अर्भके स्थितोहम्' इत्युक्त्या येन पूर्वं करप्रदानं कृतं सोऽस्मिन् शरीरे वर्तते इत्युक्तं भवति । अनेन तत्रोक्तस्यापि[१] नृपशरीरस्य स्त्रीपुंजीवाधिष्ठितत्वं सूचितं भवति ।

**'अर्भके गर्भसंस्थेऽपि स्वर्भानुग्रस्तभानुवत् ।।४५।।**

**तवार्भको दुर्भगो न शुभानां भूर्भविष्यति ।'**

**इति पूर्वं मयाप्रोक्तमनुसन्धत्स्व बुद्धिमन् ।।४६।।**

**तत्काले तच्छरीरे तु ह्यहमेव प्रविष्टवान् ।**

**पुनर्जीवान्तरस्तस्मिन् मत्स्थाने स्थापितस्त्वहो ।।४७।।**

**(अन्वयः) हे बुद्धिमन्! 'अर्भके गर्भसंस्थेऽपि ... भूर्भविष्यति' इति मया पूर्वं**

---

(१) ('तत्रोक्तस्यापि' ७।६१रल्लि मत्तु ६२रल्लि परदेशदल्लिद्द राजपुत्रनिगे रामनु राज्य कोडिसिदनु एन्दिदे. आ राजपुत्रनु पूर्वदल्लि रामनन्नु सेवे माडिद्दनु. कर कोट्टवरिगे वर कोडुवुदु रामन स्वभाव एन्दु ७।५३रल्लू ७।६२रल्लू हेळल्पट्टिदे. आ राजपुत्रन विषयदल्लू गर्भदल्लिरुवागले अद्भुत नडेदिदे एन्दु श्रीमुष्णाचार्यरु सूचिसिद्दारे.)

**प्रोक्तम् अनुसन्धत्स्व । तत्काले (प्रसूतिकाले) तत् शरीरे तु अहमेव प्रविष्टवान् हि; पुनः तस्मिन् (तच्छरीरे) मत्स्थाने जीवान्तरः स्थापितः । अहो!**

**(व्या) हे बुद्धिमन्!** शेष! **मया 'अर्भके गर्भसंस्थे'**(१४।२३) इत्यनेन यदुक्तं तत् एतदभिप्रायेणोक्तमिति[१] अनुसन्धत्स्व ॥४६॥

तस्य देहस्य पुंस्त्वसिद्ध्यर्थं **तत्काले अहं प्रविष्टवान्** । **पुनः** तदनन्तरं **तस्मिन्** शरीरे **मत्स्थाने जीवान्तरः स्थापितः** । बीजप्रदानक्षणमारभ्य पुरुषजीवाधिष्ठितत्वे तस्य पुरुष-शरीरत्वेन स्त्रीशरीरस्य पुंभावप्रदानमसङ्गतम् । यस्मिन् समये स्वयं प्रविष्टः तस्मिन्नेव क्षणे स्वयम् अप्रविश्य जीवान्तरस्थापने तस्मिन् शरीरे प्रतिबन्धवशेन अन्तर्विकृष्टे सति तस्य (जीवान्तरस्य) शरीरस्य बहिरानयनसामर्थ्यं जीवान्तरस्य नास्ति । तस्मादहं प्रविश्य तस्य शरीरस्य पुंस्त्वमुत्पाद्य, तच्छरीरं बहिरानीय मत्स्थाने जीवान्तरः स्थापित इति भावः ॥४७॥

**यः कश्चित्पुण्यजीवस्तु सदा मां तपसा चरन् ।**
**ब्राह्मणोऽहं भविष्यामि स तु संस्थापितः शिशोः ॥४८॥**

**तेन सम्पूजितो नित्यमंशतः संवसाम्यहम् ।**
**पूर्वेऽपि ''मम पादाब्जभक्तो यः शूद्रकोऽपि सन् ।**
**सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्''**
**इति पूर्वप्रमाणं तु ह्यनुसन्धत्स्व बुद्धिमन् ॥५०॥**

**रङ्गनाथस्य दृष्टान्तमपि दत्वा, त्वहं सदा ।**

**(अन्वयः) 'अहं ब्राह्मणः भविष्यामि' इति यः कश्चित् पुण्यजीवः मां तु तपसा चरन् (पूजयामास); सः शिशोः संस्थापितः । तेन संपूजितः अहं नित्यम् अंशतः संवसामि । पूर्वे अपि 'मम पादाब्जभक्तो ... ब्राह्मणो भवेत्' इति**

---

(१) (एतदभिप्रायेण निन्न स्त्रीगर्भदल्लिद्द पुत्री पुरुषजीवनिन्द आविष्टळागि हेण्णु गण्डायितु. आ नूतनपुरुषजीव पुण्यात्म. नृपकुमार परदेशस्थ ७।६१रल्लि हेळल्पट्टवनु हेगे रामसेवे माडि पुण्यात्मनो हागे निन्न पुत्रनू कूड जन्मान्तरपुण्यदिन्द युक्तनु एन्दु तिळि एन्दु तात्पर्य)

**रङ्गनाथस्य दृष्टान्तम् अपि[१] दत्वा (यत्कथितं) पूर्वप्रमाणं तु हे बुद्धिमन्! अनु-सन्धत्स्व ।**

**(व्या)** यस्य (जीवस्य) तस्मिन् शरीरे त्वत्स्थाने स्थापनम्; किं तेन कृतं कर्म? इत्यत आह – **यः कश्चिदिति ।। कश्चित्पुण्यजीवः** 'ब्राह्मणोहं भविष्यामि' इति बुद्ध्या **तपसा मां** पूजयामास । **स** पुण्यजीवः **शिशोः** शरीरे **संस्थापितः** ।।४७।।

**तेन** जीवेन **सम्पूजितोहं** तदनुग्राहकरूपेण **अंशतः** तत्र वसामि । 'यः पूर्वजन्मनि शूद्रकः सन्नपि मम पादाब्जभक्तः स ब्राह्मणो भविष्यति' इति; 'क्षत्रियादिस्तु ब्राह्मणं सम्पूज्य, ब्राह्मणो भविष्यति' इति किमु वक्तव्यम् । अत्र **'सम्पूज्य ब्राह्मणं भक्त्या'** इत्यादिवचनं प्रमाणत्वेन **अनुसन्धत्स्व** ।।५०।।

**निस्सङ्गो नात्र सन्देहः सन्देहो नश्यते शमिन् ।।५१।।**

**संशयात्मा नश्यतीति मानसिद्धमिहोच्यते ।**
**श्वानयोनिं स यात्याशु संशयी नात्र संशयः ।।५२।।**

**(अन्वयः) (अहं तु) सदा निःसङ्गः; अत्र सन्देहः न । हे शमिन्! (यः) सन्देहः (अत्र करोति, सः) नश्यति । मानसिद्धं 'संशयात्मा नश्यति' इति (तु) इह उच्यते । (यः) संशयी सः आशु श्वानयोनिं याति; अत्र संशयः न ।**

**(व्या)** एवमुक्तार्थे संशयो न कार्यः । यस्य संशयः स **नश्यति** ।।५१।।

'संशयात्मा' इति प्रमाणसिद्धमेतत् ('संशयात्मा विनश्यति' – गी) । 'यः प्रामाणिके मदुक्तार्थे संशयी स शीघ्रं श्वानयोनिं प्रयाति' इति शेषं प्रति वदेति पूर्वेणान्वयः ।। इत्यवान्तर शेषप्रकरणं. सं. ।।

## १६–०५३–०७९–विप्रप्रकरणम्

(१) (रङ्गनाथनु शूद्रनु; वैखानसनामक ऋषिगळ सेवेमाडि, अवर देवर पूजेगे प्रतिदिनवू हूवन्नु वनदिन्द कुय्दु तन्दुकोट्टु अवर अनुग्रहदिन्द तोण्डमानराजनादनेन्दु भविष्योत्तर पुराण वेङ्कटेशकल्याणग्रन्थदल्लि इदे. अवन सेवे मध्ये विघ्नदिन्द निन्तिद्दरिन्द रङ्गनाथ क्षत्रियनाद. पूर्णवागिद्दरे ज्ञानि ब्राह्मणने आगि हुट्टुत्तिद्दनु. प्रकृत गुरुराजरन्नु सेवे माडिद शूद्रनिगे विघ्न बरलिल्ल. आद्दरिन्द मुन्दिन जन्मदल्लि गुरुराजर भक्तनागियू ब्राह्मणनागियू तत्रापि अवरिन्द आविष्टनागियू हुट्टिदनु.)

(व्या) (पुनः विप्रप्रकरणम्)

(अव) कमलनाभादीनाम् अभक्तत्वं शेषस्य तु भक्तत्वमुक्तम् । श्रीनिवासाचार्याख्यस्य तु न कमलनाभादिवदभक्तत्वम्; नापि शेषवद्भक्तत्वम् । किन्तु 'मम मानससम्प्रीतिं तनोतीह न संशयः' (२१।३१) इति वक्ष्यमाणानुसारेण कदाचिद्भक्तत्वमिति भावेनाह – कृष्णाचार्य-सुतेति ।।५३-५४।।

**कृष्णाचार्यसुतः श्रीनिवासाचार्याभिधोऽपि सन् ।**
**निस्सीमं मां न मनुते सुश्रीमन्तमहो विधे ।।५३।।**

**तत्फलं पश्यते पुत्र सत्फलं नैव पश्यति ।**
**स्वप्रसङ्गे सुचतुरोऽप्यभिमानी न चात्रभूत् ।।५४।।**

(अन्वयः) कृष्णाचार्यसुतः श्रीनिवासाचार्याभिधः सन् अपि, सुश्रीमन्तं निस्सीमं मां न मनुते; अहो विधे!

(व्या) (कृष्णाचार्यसुतः श्रीनिवासाचार्य इति उत्कृष्टनामवान् । तथापि ज्ञानाख्य'श्रीः' तस्मिन् नास्ति । मां ऋजुत्वेन न जानाति । सत्यलोकाधिपत्यादिमाहात्म्यवान् इति न जानाति । तादृशदुरदृष्टवान् सः ।।५३।। (तत्फलं =) मद्विषयकमहिम्नः अज्ञानफलं पश्यति । शुभफलं न पश्यति । 'तत्कृतप्राचीनपुण्यफलमपि दग्धं भवति' इति भावः । सः स्वप्रसङ्गे = स्वेष्टकथालापे सुचतुरः = निपुणः मम ऋजुत्वादिस्थापने अभिमानहीनः सन् वर्तते ।।५४।।)

**मयाऽपि जीवता भूमावनुभूतं ज्वरादिकम् ।**
**भवरोगेण ग्रस्तस्य किन्त्विदं ज्वरपीडनम् ।।५५।।**

**इदानीमौषधं मा सेवस्व त्वं वृद्धविप्रक ।**
**शिष्टान्यत्र गतान्याशु ज्वराणि न जरन्ति ते ।।५६।।**

(अन्वयः) हे वृद्धविप्रक! भौमौ जीवता मया अपि ज्वरादिकम् अनुभूतम् । भवरोगेण ग्रस्तस्य (तव) इदं ज्वरपीडनं किन्तु । इदानीम् औषधं मा सेवस्व; हे शिष्ट! ज्वराणि आशु अन्यत्र गतानि, ते न जरन्ति ।

(व्या) हे वृद्धविप्रक! भूमौ जीवता मयापि ज्वरादिकं जनमोहनार्थम् अनुभूतम् । भवरोगेण ग्रस्तस्य तव तु इदं ज्वरपीडनं भविष्यतीति किमु वक्तव्यम् ।।५५।। इदानीम् = अस्मिन् जन्मनि त्वम् औषधं मा सेवस्व (ते ज्वराणि हे शिष्ट अन्यत्र गतानि । तव द्वेषिणः प्रति गमिष्यन्ति । त्वां न जरन्ति = दुर्बलं न कुर्वन्ति ) ।।५६।।

**अपमृत्युं छिनत्त्याशु मम पादोदकं द्विज ।**
**विप्रान्तरमुखेनैतच्छृणु चित्रं त्वकृत्रिमम् ।।५७।।**

**तव ज्वराणि यास्यन्तु तावत्पर्यन्तमेव च ।**
**न वदामि सुदामाग्र्य लेखकोऽप्यत्र नास्ति मे ।।५८।।**

**(अन्वयः) हे द्विज! मम पादोदकम् आशु अपमृत्युं छिनत्ति । एतत् विप्रान्तरमुखेन एव शृणु । (इदं तु) अकृत्रिमं चित्रम् । हे सुदामाग्र्य! तव ज्वराणि यास्यन्तु; तावत्पर्यन्तम् एव न वदामि च; अत्र मे लेखकः अपि नास्ति ।**

(व्या) मम पादोदकं पिब । यस्मात् मम पादोदकम् अपमृत्युं परिहरति । (सत्यं, अद्भुतं मम पादोदकस्य स्वाभाविकमहिमानं विप्रान्तरः जागृद्दशायां वक्ति । तच्छृणु ।।५७।।) अथापि द्वितीयजन्मन्यपि त्वमौषधं मा सेवस्व । हे शिष्ट तव ज्वराणि अन्यत्र गतानि; न जरन्ति; न जरावदाचरन्ति । त्वया भोक्तव्यानि ज्वराणि जनान्तरेषु गतानि भविष्यन्ति । एतच्चित्रमकृत्रिमं च । विप्रान्तरमुखेन शृणु[१] ।।५७।।

तर्हि इदानीमेव विप्रान्तरमुखेन (पादोदकमाहात्म्यं) ब्रूहि; श्रोष्यामि इति मा वद । तव ज्वराणि अन्यत्र यास्यन्तु । तावत्पर्यन्तं न वदामि । तथा विप्रान्तरमुखेनोक्तार्थ-लेखकोपि अद्य नास्ति ।।५८।।

**अद्यैव सोऽपि शीघ्रं तु आगमिष्यति श्रीपतिः ।**
**अथापि तव चारोग्यपर्यन्तं नैव कथ्यते ।।५९।।**

---

(१) (इल्लि हेळल्पट्ट विप्रान्तरनु यारु एन्दु निश्चितवागिल्ल. वृत्तरत्नसङ्ग्रहदल्लि गुरुराजर पादोदकमहिमेयु हेळल्पट्टिदे. इल्लि विवक्षित विप्रान्तरनु लक्ष्मीपति इरबहुदु)

**गवि प्रसवदुःखेन व्यथितायां स वै वृषः ।**
**बाधते तां तदा या गीर्न मां स्पृशतु लौकिकी ।।६०।।**

**प्रत्यक्षसिद्धापलापं प्रकुर्वन्ति प्रजाः कलौ ।**
**स्वमातृप्रसवारभ्य प्रनष्टप्राक्सुदृष्टयः ।।६१।।**

(अन्वयः) अद्य एव सः श्रीपतिः तु शीघ्रम् आगमिष्यति; अथापि तव आरोग्यपर्यन्तं च नैव कथ्यते । प्रसवदुःखेन व्यथितायां गवि सः वृषः तां तदा बाधते, लौकिकी या गीः मां न स्पृशतु । कलौ स्वमातृप्रसवारभ्य प्रनष्टप्राक्-सुदृष्टयः प्रजाः प्रत्यक्षसिद्धापलापं प्रकुर्वन्ति ।

(व्या) सः = श्रीपतिनामकः, आगमिष्यति । तावत्पर्यन्तमपि न वदामि । ज्वराणामन्यत्र गमनोपलब्धेः पूर्वकथने संशयः स्यात् । लेखकाभावसमये विप्रान्तरमुखेनापि कथितं चेत् न स्थैर्यं भविष्यति । तस्माल्लेखकागमनानन्तरं एतदाख्यानव्याख्यानसमये व्याख्यातृमुखतः चित्रमिदमभिप्रेतं वक्ष्यते इति भावः । **तवारोग्यपर्यन्तम्** इदानीमपि पद्यं **नैव कथ्यते** ।।५९।।

कुतो न कथ्यते? इत्यत आह – **गवीति** ।। (अर्थः स्पष्टः) ६०।।

''यथा शरीरस्य पुंभावनिर्माणं; तथा अन्येन भोक्तव्यानां ज्वराणां अन्यत्र गमनं दृष्ट्वा, प्रागुक्तमपि युक्तमिति ज्ञातव्यम्'' इति भावः । प्रजाः एवं प्रत्यक्षसिद्धस्यापि ज्वराणा-मन्यत्रगमनस्य, श्रीपतेरागमनस्य विप्रान्तरमुखेनार्थकथनस्यापि अपलापं कुर्वन्ति । (प्राक् सुदृष्टयः अपि) स्वमातृगर्भाद्बहिर्निर्गमनानन्तरं यद्वृत्तं तद्विषयेपि नष्टज्ञानाः मदुक्तार्थापलापं कुर्वन्ति । एतच्चित्रमिति भावः ।।६१।।

**मया परोक्षतश्चोक्तं परलोकस्य वैभवम् ।**
**परोक्षज्ञानहीनास्ताः परिवादं प्रकुर्वते ।।६२।।**

**परेषां च श्रियं श्रुत्वा दह्यमाना इवाग्निना ।**
**अशक्तास्तां गतिं गन्तुं ततो निन्दां प्रकुर्वते ।।६३।।**

**जना सुपापिनः सर्वे कलिनाविष्टचेतनाः ।**

**मनांसि पापकृत्येषु स्वनाशाय प्रकुर्वते ।।६४।।**

(अन्वयः) परलोकस्य वैभवं च मया परोक्षतः उक्तम् । अग्निना दह्यमाना इव परेषां च श्रियं श्रुत्वा तां गतिं गन्तुम् अशक्ताः (सन्तः) ततः निन्दां प्रकुर्वते । कलिनाविष्टचेतनाः सुपापिनः सर्वे जनाः स्वनाशाय मनांसि पापकृत्येषु प्रकुर्वते ।

(व्या) 'स्पष्टमुक्तं चेत् तेषामपलापस्य अवकाशो नास्ति । स्पष्टं भवता कुतो नोच्यते' इत्यत आह । अहं **परोक्षतः** अस्पष्टार्थकेनैव वाक्येन **परलोकस्य वैभवं** वक्ष्यामि । परोक्षोक्तेः तात्पर्यं श्रुत्वा, **अग्निना दह्यमाना इव तां गतिं गन्तुम् अशक्ताः** सन्तः तादृशीं गतिं प्राप्तुमशक्ताः सन्तः । विप्रादीनां **निन्दां** प्रकुर्वन्ति ।।६२-६३।।

(कलिप्रभाववशमापन्नाः दैत्यावेशेन नष्टज्ञानाः स्वमनांसि **स्वनाशाय** = नरकप्राप्तये **प्रकुर्वते** = निश्चित्य दुष्कर्म कुर्वन्ति ।।६४।।)

**अहं परोक्षतश्चैव वक्ष्ये न ह्यपरोक्षतः ।**
**देवाः परोक्षतश्चैव वदन्ते नापरोक्षतः ।।६५।।**

**परोक्षे च प्रिया देवास्त्वपरोक्षप्रिया नराः ।**
**उभये च प्रिया दैत्याः अप्रिया उभये च ते (के?) ।।६६।।**

(अन्वयः) अहं परोक्षतः एव च न अपरोक्षतः वक्ष्ये । देवाः परोक्षतः एव न अपरोक्षतः वदन्ते च । हि । देवाः च परोक्षे प्रियाः; नराः अपरोक्षप्रियाः; दैत्याः उभये च प्रियाः । उभये अप्रियाः च के?

(व्या) यस्माद्देवाः परोक्षप्रियाः तस्मादहं परोक्षतो वक्ष्ये ।

**तस्मात्परोक्षनिर्देशप्रियास्ते देवतांशकाः ।**
**अपरोक्षस्य निर्देशे प्रियास्ते नृशरीरिणः ।।६७।।**

**उभयेऽपि प्रिया ये वै दैत्यांशास्ते न संशयः ।**

(अन्वयः) तस्मात् (ये) परोक्षनिर्देशप्रियाः ते देवतांशकाः । अपरोक्षस्य निर्देशे प्रियाः ते नृशरीरिणः । ये उभयेऽपि प्रियाः ते दैत्यांशाः वै; (अत्र) न संशयः ।

(व्या) जनाः तावत् त्रिविधाः । परोक्षप्रियाः, अपरोक्षप्रियाः, उभयप्रियाश्चेति । तत्र ये परोक्षप्रियाः मदुक्ताभिप्रायं जानन्ति ते देवपक्षिणः । ये अपरोक्षप्रियाः 'स्पष्टोक्तिर्नास्ति' इति संशयवन्तः ते मनुष्याः । ये तूभयप्रिया अपि मदुक्ततात्पर्यं न जानन्ति । ते विपरीतज्ञानरूपाः दैत्यपक्षिणः । उभयत्राप्यप्रियास्तु केपि न सन्ति ।

**तस्मान्मद्वचने ये च प्रियवन्तः प्रिया हि मे ।।६८।।**

**अप्रिया ये च पापास्ते ह्यप्रियाः सर्वथा मम ।**
**तस्मान्मम प्रिया ये वै प्रीतिं कुर्वन्तु मत्कृतौ ।।६९।।**

**अप्रियं नैव कुर्वन्तु मत्प्रियास्ते न संशयः ।।७०।।**

(अन्वयः) तस्मात् ये मद्वचने प्रियवन्तः च, (ते) मे प्रियाः हि । ये पापाः अप्रियाः च ते मम सर्वथा अप्रियाः । तस्मात् ये मम प्रियाः ते मत्कृतौ प्रीतिं कुर्वन्तु, अप्रियं नैव कुर्वन्तु । ते मत्प्रियाः; अत्र न संशयः ।

(व्या) तस्मात् ज्ञानिन एव मम प्रियाः ।।६५-७०।।

**''यत्र प्रतीतार्थबाधस्तत्रान्तर्यामिसङ्ग्रहः ।**
**कर्तव्यः''[(१)] इति पूर्वोक्तिं अनुसन्धत्स्व बुद्धिमन् ।।७१।।**

**तस्मादुक्तार्थबाधे सत्यन्तर्यामी हरिः स्वयम् ।**
**करोति घटनां तस्य शक्तिं दत्वा च तादृशीम् ।।७२।।**

**तस्मान्न कार्या शूकाऽपि शङ्कायाः शुष्कबुद्धिभिः ।**
**लोकवार्तापरैः काकबुद्धिभिर्नरकाप्तिभिः ।।७३।।**

**इयं शङ्का च सर्वत्र कुतो वा जायते नृणाम् ।**
**विप्रस्य वा कृतिरियं मम वेत्यज्ञसंशयात् ।।७४।।**

(अन्वयः) हे बुद्धिमन्! तस्मात् उक्तार्थबाधे सति 'यत्र प्रतीतार्थबाधः ..' इति पूर्वोक्तिम् अनुसन्धत्स्व । अन्तर्यामी हरिः तादृशीं घटनां तस्य शक्तिं च दत्वा

---

(१) (पूर्वोक्तं = ७।५७)

**करोति । तस्मात् लोकवार्तापरैः काकबुद्धिभिः नरकाप्तिभिः शुष्कबुद्धिभिः शङ्कायाः शूका अपि न कार्या । इयं शङ्का च सर्वत्र नृणां कुतो वा जायते? 'विप्रस्य वा मम वा इयं कृतिः?' इति अज्ञसंशयात् (जायते) ।**

**(व्या)** यत्र विभिन्नदेशगतानां मेलनं तत्तात्पर्यग्रहणमित्यादिकं बाध्यत्वेन न प्रतीयते । **तत्रान्तर्यामिणो** हरेः **सङ्ग्रहः कर्तव्यः** ।।७१।। **हरिः** एव **घटनां** कृत्वा येन यत्कार्यं भवितव्यं तेन तत्कार्ये **तस्य शक्तिं दत्वा** कारयति' इति ज्ञातव्यम् (**तस्मात् शङ्कायाः शूकापि** लेशोपि न कार्यः । प्रमाणं विना निर्मूलशङ्का करणं नरकप्रापकम् ।।) ।।७१ऽ७२।।

'इदं आख्यानं मया कृतं न वा' इत्यज्ञानामाश्रयबलेन संशयं कुर्वन्ति । तस्मादज्ञानिनां प्रसङ्गः सर्वथा न कर्तव्यः ।।७३-७५।।

**संशयात्मा नश्यतीति मानसिद्धं विनाशिनः(१) ।**
**श्वानयोनिं व्रजत्याशु भुक्त्वा कीनाशयातनाम् ।।७५।।**

**तस्मादज्ञानिनो हित्वा ज्ञानिभिः सुयशस्विभिः ।**
**सन्मानं मम चामुत्र ध्रियतां मनसि स्फुटम् ।।७६।।**

**(अन्वयः) विनाशिनः (गतिं) 'संशयात्मा विनश्यति' इति मानसिद्धम् (हि); (ते) कीनाशयातनां भुक्त्वा श्वानयोनिम् आशु व्रजति । तस्मात् ज्ञानिभिः सुयशविभिः अज्ञानिनः हित्वा, मम अमुत्र च सन्मानं मनसि स्फुटं ध्रियताम् ।**

**(व्या)** (**मानसिद्धविनाशिनः** मानसिद्धं विनाशनं यस्य सः मानसिद्धविनाशनः; अज्ञः श्वानयोनिं व्रजति)(यस्मात् अज्ञानी ऋजुत्वसंशयेन नरकयातनां शेषेण श्वानयोनिम् आशु व्रजति तस्मात्) **सुयशस्विभिः ज्ञानिभि**रेव (गुरुराजऋजुत्वनिर्णयवद्भिरेव) प्रसङ्गः कर्तव्यः । (तस्मादज्ञानिभिः साकं स्नेहं त्यक्त्वा । **ज्ञानिभिः** उत्तमयशः सम्पादकयोग्यतावद्भिः प्रसङ्गं कृत्वा, यमादिभिः **अमुत्र च मम** क्रियमाणं सन्मानं **स्फुटं मनसि** विवेकिभिः **ध्रियताम्** ।।७६।। (ज्ञानिभिः सह सत्प्रमाणं च विचार्यताम्; मम च सन्मानं ध्रियताम्;

---

(१) (मानसिद्धविनाशनः एन्दु स्वा. स्वादल्लि 'शि' होडेदु 'श' बरेदिद्दारे. वृं.नल्लि विनाशिनः एन्दिदे. एन्दु अन्वयवागुत्ते. 'विनाशिनः' एम्ब बहुवचनपद अनन्वितवागिदे. 'भी' नोडबेकु. अथवा ७९ने श्लोकदल्लि हेगो हागे बहुवचन, एकवचनगळु मिश्रवागि २ वाक्यगळिवे.)

पूजा क्रियताम् अथवा मम अत्र अमुत्र च यमलोकादिषु ज्ञानिभिः यमादिभिः क्रियमाणं सन्मानं मनसि स्फुटं ध्रियताम् – इति योजना ।)

**मन्दा शङ्का मदान्धानामेवं स्यान्न तु ज्ञानिनाम् ।**
**ज्ञानप्रकाशने नष्टाज्ञानान्धतमसश्च ते ।।७७।।**

**तस्मात् ज्ञानी सदा पूज्यः पूज्यात्पूज्यतमः स्मृतः ।**
**नैवाज्ञानी मानबाह्यः कीनाशवशगः सदा ।।७८।।**

**अज्ञानिनां प्रसङ्गोऽयं न कर्तव्यः सुखेप्सुभिः ।**
**श्वानेन सदृशं मत्वा पापिनं तं महात्मभिः ।।७९।।**

**(अन्वयः) एवं मन्दा शङ्का मदान्धानाम् स्यात्; ज्ञानप्रकाशने (सति) नष्टाज्ञानान्धतमसः ज्ञानिनां तु न च । तस्मात् ज्ञानी सदा 'पूज्यात् पूज्यतमः' (इति च) स्मृतः । अज्ञानी न पूज्यः; मानबाह्यः सदा कीनाशवशगः । (तस्मात्) महात्मभिः सुखेप्सुभिः तं पापिनं श्वानेन सदृशं मत्वा, अयम् अज्ञानिनां प्रसङ्गः न कर्तव्यः ।**

**(व्या)** स्पष्टप्रमाणसद्भावेपि इयं मन्दाशङ्का 'वादिराजमुनिः ऋजुर्वा न वा' इति । विचारकार्ये एव द्वेषयुक्तैः मदान्धैः क्रियते । **ज्ञानिनः** विवेकिनः ये ते **ज्ञानप्रकाशने** विचारजनितनिर्णयज्ञाने जाते सति । नष्टाज्ञानाख्य अन्धकारयुक्ताः ।।७२।। तस्मात् ज्ञानिनः निर्णीतऋजुत्वज्ञानप्रयोज्यउपासनाशीलत्वात् सः सदा पूज्य एव । तत्रापि पूज्यकर्मिभ्यः अतिशयेन पूज्यः । अज्ञानी नैव पूज्यः, निन्द्यश्च । यस्मात् मानं बाह्यं यस्मात् सः । सदूरीकृतप्रमाणविचारादिकः । अत एव मरणानन्तरं यमवशो भवति दुःखानुभवार्थम् ।।७८।। एवं **महात्मभिः** पुरुषार्थलिप्सुभिः । **अज्ञानिभिः** साकं स्नेहो वा तत्वविचारो वा न कर्तव्यः । किन्तु तादृशऋजुत्वसंशययुक्तं पुरुषं **श्वानसदृशं मत्वा** त्यजेदेव विवेकीति भावः ।।७९।।)

अस्मिन्प्रकरणे शेषस्य पुत्रलाभरूपं निदर्शनम् । तथा लेखकव्याख्यातृघटनं तत्तात्पर्यार्थकथनं च इत्यादिनिदर्शनं प्रतिपादितम् ।।७९।। इति विप्रश्रोतृकप्रकरणं सं।।

### १६–०८०–०९०–लक्ष्मीपतिप्रकरणम्

(व्या) ‘लक्ष्मीपते’ इत्यारभ्य ‘स गौणीमवात्यज’ इत्यन्तं लक्ष्मीपतिश्रोतृकपञ्चमं प्रकरणम् ॥

**लक्ष्मीपते मम कृतिं च सतां सभासु**
**निःशङ्क एव वद सादरमत्र नित्यम् ।**
**त्वं नः प्रिये प्रथमतः प्रथितां च कृत्वा**
**मत्प्रीतिमेव कृतवानसि वाचकेश ॥८०॥**

(अन्वयः) हे वाचकेश लक्ष्मीपते! नित्यं सतां सभासु निःशङ्क एव (सन्) मम कृतिं सादरं वद । अत्र त्वं नः प्रिये च प्रथमतः प्रथितां कृत्वा मत्प्रीतिम् एव कृतवानसि ।

(व्या) ‘विप्रान्तरमुखेनैव तत् शृणु चित्रं त्वकृत्रिमम्’ इति यदुक्तं तल्लक्ष्मीपतिमुखेन भवितव्यमिति मनसि निधायाह – **लक्ष्मीपते इति** ॥ **वाचकेश** कथकेश हे **लक्ष्मीपते!** सज्जनानां **सभासु निःशङ्कः** सन् **सादरं** यथा भवति तथा मत्कृतिं **वद** । **(नः=)** अस्माकं **प्रिये** (अस्माकं प्रिये = मद्भक्तिविषये तस्मै उपदेशं कृत्वा इति यावत्) त्वं **प्रथमतः** मत्कृतिं **प्रथितां कृत्वा** = ख्यातां कृत्वा **मत्प्रीतिं कृतवानसि** = मत्प्रसादं सम्पादितवानसि ॥८०॥

**यस्य देवा न प्रसन्नाः मुनयश्च तपोधनाः ।**
**गुरुः सर्वार्थदश्चैव स हरिः सागरालयः ॥८१॥**

**अस्मद्वृन्दावनं तस्मै भस्मानाऽच्छादिताग्निवत् ।**
**स्वस्मिन्नन्तर्गतं नैव स्वामिनं स्मारयत्यहो ॥८२॥**

**शिलामात्रामयं विष्णोः कलाभिश्च समन्वितम् ।**
**फलानि प्रतिदद्यान्मे मलानि प्रहरिष्यति ॥८३॥**

**इति न स्मारयत्येतच्छारदाद्रोहिणश्च मे ।**
**चोरवृत्त्या जीवतो वै नरकाननुगच्छतः ॥८४॥**

(अन्वयः) यस्य सर्वार्थदः सागरालयः सः हरिः, गुरुः, मुनयः तपोधनाः न

**प्रसन्नाः तस्मै भस्मनाच्छादिताग्निवत् अस्मद्वृन्दावनं स्वस्मिन् अन्तर्गतं स्वामिनं नैव स्मारयति । अहो ।**

**चोरवृत्त्या जीवतः, नरकाननुगच्छतः एतत् मे शारदाद्रोहिणः (प्रति) 'शिलामात्र-मयं (इदं वृन्दावनं) विष्णोः कलाभिः समन्वितं च फलानि प्रतिदद्यात्, मे मलानि प्रहरिष्यति' इति न स्मारयति । वै ।**

**(व्या) यस्य** पुरुषस्य हरिगुरुदेवाः **न प्रसन्नाः** तस्य पुरुषस्य **(अस्मद्वृन्दावनं)** भूमौ **भस्मनाच्छादिताग्निवत्** स्वान्तर्गतं **स्वामिनं** परमात्मानं **न स्मारयति** ।।८१-८२।।

इदं वृन्दावनं केवलं शिलात्मकं (किन्तु तदन्तः) । **विष्णोः कलाभिः** हयवदनादिरूपाभिः **समन्वितम्** । **मे** (अधिकारिणं मम) **फलानि प्रतिदद्यात्** = (सेवया) प्रदद्यात् । **मलानि** पापानि **(प्रहरिष्यति =)** परिहरिष्यति' **इति न स्मारयति** ।।८३।। = इति स्मृतिं नोत्पादयति । ये **मे** मम **शारदाद्रोहिणः** = वाग्विरोधिनः (कृतिविश्वासहीनाः) तान् **चोरवृत्त्या जीवतः नरकाननुगच्छतः** पुरुषान् प्रति मम वृन्दावनं स्वान्तर्गतं परमात्मानं न स्मारयति । इति पूर्वेणान्वयः ।।८४।।

अनेन 'यस्य देवादयो न प्रसन्नाः तद्विवक्षया मद्वृन्दावनं भस्मनाच्छादिताग्निवत्' इति कथनेन 'यस्य देवादयः प्रसन्नाः तस्य वृन्दावनं स्वान्तर्गतपरमात्मस्मृतिमुत्पादयति' इत्युक्तं भवति ।।८३-८४।।

**(अव)** स्थालीपुलाकन्यायेन प्रसन्नदेवादिषु भक्तेषु मध्ये वासुदेवमुनेर्वृत्तान्तमाह – **अयं त्विति** ।।

**अयं तु वासुदेवाख्यः कर्मन्दी मम मन्दिरे ।**
**मन्दराद्रिनिभे वृन्दावने सम्पूज्य मां सदा ।।८५।।**

**भीमं हनूमन्तमनन्तलोकाचार्यं जगद्गुरुम् ।**
**आगन्ता मत्समीपं तु भुक्त्वाऽयुष्यं च शेषितम् ।।८६।।**

**ममावसाने नाहं तु वसामीत्यतिदुःखितः ।**
**सुवासिनी पतिं यद्वद्वासुदेवाभिधो मुनिः ।।८७।।**

**तीर्थयात्रां तु कृत्वा च सार्थीकृत्य कळेवरम् ।**
**मामवेक्ष्येत्याशया तु स चाऽयातः शुचार्दितः ॥८८॥**

(अन्वयः) वासुदेवाख्यः अयं कर्मन्दी मम मन्दिरे सदा मन्दाराद्रिनिभे वृन्दावने भीमं हनुमन्तमनन्तलोकाचार्यं मां च सम्पूज्य शेषितम् आयुष्यं च भुक्त्वा मत्समीपं तु आगन्ता । यद्वद् सुवासिनी पतिं (तद्वत्) वासुदेवाभिधः मुनिः ममावसाने 'नाहं वसामि' इति अतिदुःखितः । तीर्थयात्रां च कृत्वा कलेवरं तु सार्थीकृत्य 'माम् अवेक्ष्ये' इत्याशया शुचार्दितः सः च आयातः ।

(व्या) वासुदेवाख्यः अयं कर्मन्दी यतिः मन्दरपर्वतसदृशे मम वृन्दावने स्थितं भीमं हनूमन्तं पूर्णप्रज्ञाचार्यं मां च सम्पूज्य, शेषितम् आयुष्यं भुक्त्वा मत्समीपं प्रति आगमिष्यति ॥८५-८६॥

'केन पुण्येन तादृशी सेवा अनेन कृता' इत्यत आह – ममेति ॥ अयं मद्भक्तः ममावसाने = मम जनदृष्टिविषयत्वत्यागानन्तरं 'अहमपि न जीवामि' इत्यचिन्तयत् । तत्र दृष्टान्तमाह – सुवासिनीति ॥ यथा सुवासिनी सुमङ्गली पत्युरवसाने 'नाहं जीवामि' इति चिन्तयति । किन्तु 'तेनैव सह गच्छामि' इति । तथायमपि चिन्तयित्वा तीर्थयात्रां कृत्वा मद्दर्शनेच्छया आगतः ॥८८॥

**दैवाद्वृन्दावनस्थस्य मानं कृत्वा स वै मम ।**
**भीमादिसार्वभौमानां कामादिभिरतन्द्रितः ॥८९॥**

**तेन पुण्येन पुण्यात्मा पुण्यां गतिमवाप्स्यति ।**
**शाणावलीढमाणिक्यवत् स गौणीमवात्यजत् ॥९०॥**

(अन्वयः) दैवात् सः कामादिभिरतन्द्रितः मम वृन्दानवस्थस्य भीमादिसार्वभौमानां मानं कृत्वा, तेन पुण्येन पुण्यात्मा सः शाणावलीढमाणिक्यवत् गौणीम् अवात्यजत्; पुण्यां गतिम् अवाप्सति ।

(व्या) दैवात् = परदैवस्य हरेः सङ्कल्पात्, कृतवृन्दावनप्रवेशं मां श्रुत्वा शुचार्दितः सन्, मद्वृन्दावनस्थानां भीमादीनां सन्मानं कृत्वा ॥८९॥

**तेन पुण्येन गौर्णी** = गुणकृतां पापावळिं त्यक्त्वा, **शाणावलीढमाणिक्यवत्** निर्मल-चित्तो भूत्वा **पुण्यां गतिं** प्राप्नोति ।।८९-९०।। अनेन स्वकृतिद्रोहिणां स्वस्मिन् द्वेषाभिवृद्धिः तदन्येषां योग्यानां स्वयोग्यतानुसारेण स्वस्मिन् स्वान्तर्गतपरमात्मनि च भक्तिर्भविष्यतीति निदर्शनमुक्तं भवति ।। ल.श्रो.प्र.सं. ।।

### १६–०९१–०९३–विप्रप्रकरणम्

**(व्या) 'अचिन्त्याद्भुतमाहात्म्यम्'** इत्यारभ्य **'वैभवं न पराहतम्'** इत्यन्तं षष्ठं विप्रश्रोतृकप्रकरणम् ।

**अचिन्त्याद्भुतमाहात्म्यमहं हयमुखं भजे ।**
**महिमा तस्य केनेह वर्णितुं शक्यते विना ।।९१।।**

**तादृशं हरिमाराध्य सर्वाराध्ये मयि द्विज ।**
**करादिस्पर्शने तेन कृते सति च मूर्धनि ।।९२।।**

**किमसम्भावितं पूर्वं चोक्तं सम्भावितं ततः ।**
**असम्भावनया तस्माद्वैभवं न पराहतम् ।।९३।।**

(अन्वयः) अहम् अचिन्त्याद्भुतमाहात्म्यं हयमुखं भजे । इह तस्य महिमा केन वर्णितुं शक्यते? विना (मया) हे द्विज! सर्वाराध्ये मयि तादृशं हरिम् आराध्य, तेन (तव) मूर्धनि च करादिस्पर्शने कृते सति किमसम्भावितम्? ततः पूर्वम् उक्तं च सम्भावितम् । तस्मात् असम्भावनया (मद्)वैभवं न पराहतम् ।

**(व्या) हे द्विज! सर्वाराध्ये मयि** सन्निहितं **तादृशं** वासुदेवमुनिपूज्यं हयग्रीवं **भजे** । तमाराध्य तव **मूर्धनि मया करादिस्पर्शने कृते सति** । तेन कारणेन **किमसम्भावितं** मदनुग्रहं विना । **तस्य** (अचिन्त्याद्भुतमाहात्म्ययुक्तस्य) हरेः **महिमा केन वर्णितुं शक्यते** ।।९१-९२।।

**तस्मात् असम्भावनया**[१] अकुशलविप्रोपदेष्टृत्वादिकं **वैभवं न पराहतं** भविष्यति ।

---

(१) (असम्भावनया = ई मूकब्राह्मण इन्थ अद्भुतश्लोकवन्नु बेळिग्गे एद्दु उपदेशमाडुत्तानेन्दरे, 'मण्णु मातनाडितु' एम्बन्ते असम्भावितवु एम्ब रीतियल्लि मातनाडुव जनर शङ्केयिन्द एन्दर्थ. नानु देवरन्नु

अकुशलविप्रस्य बहुग्रन्थावधारण,वचनसामर्थ्यं मम करस्पर्शनेनेति अस्मिन् प्रकरणे कथितं भवति ।।९३।। विप्रप्रकरणं सम्पूर्णं ।।

## १६–०९४–१००–बहुपुरुषश्रोतृकप्रकरणम्

(व्या) 'हे पापपुरुषाः' इत्यारभ्य 'जिह्वागतं त्वहो' इत्यन्तं बहुपुरुषश्रोतृकप्रकरणं सप्तमम् ।।

**हे(ऽ?) पापपुरुषाः सर्वे मारिषं मां विजानथ ।**
**सौरेर्विषार्दिता यूयं पौरुषेण भविष्यथ ।।९४।।**

**एको वा वक्ति चेत् श्लोकं त्वेकं मत्सम्मतार्थकम् ।**
**तर्ह्ययं पुत्र तद्गेहे जलाद्याहरणं चरेत् ।।९५।।**

**एकस्मिन्नहनि श्लोकसाहस्रं मदनुग्रहात् ।**
**वक्त्ययं वाक्सहायेन ममेह प्रहरामि तत् ।।९६।।**

(अन्वयः) हे अपापपुरुषाः! (यूयं) सर्वे मां मारिषं विजानथ; (नो चेत्) यूयं सौरेः पौरुषेण विषार्दिता भविष्यथ । मत्सम्मतार्थकं एकं श्लोकम् एकः वा वक्ति चेत्; तर्हि अयं पुत्रः तद्गेहे जलाद्याहरणं चरेत् । अयं (विप्रः) इह मदनुग्रहात् एकस्मिन् अहनि मम वाक्सहायेन श्लोकसाहस्रं वक्ति; (तान् श्लोकान् स्वप्नानन्तरं) प्रहरामि ।

(व्या) हे अपापपुरुषाः मां मारिषं विजानथ = उत्तमं विजानथ । नो चेत्, यूयं (सौरेः) यमस्य पौरुषेण विषार्दिता भविष्यथ ।।९४।।

एकः पुरुषः मत्सम्मतार्थकं यथा भवति तथा एक श्लोकं वक्ति चेत्, तद्गृहे तत्संरक्षणाद्यर्थं (अयं श्लोकः = श्री) जलाद्याहरणं चरेत् । तृषाद्यार्तस्य जलादिकं दत्वा तत्पालनं कुर्यादिति भावः ।।९५।।[(१)])

---

नोडिद्देनादरिन्द ननगे एल्ला शक्य; नन्न कैय्यिट्टु नानु अनुग्रहिसिरुवुदरिन्द जडविप्रनिगू श्लोकवृक्तृत्वधारकत्वादि कार्यवु शक्य एन्दु भाव.)

(१) (श्लोक ९५ ओन्दोन्दू नन्न श्लोकवु शोकनाशकमन्त्रवागिदे. अन्थ श्लोकवन्नु इन्नोब्बनु माडिदरे आ अन्थश्लोकवु तत्कर्तनिगे नित्यमङ्गळवन्ने उंटुमाडबेकु. अवनन्नु निर्दुःखनन्नागि माडबेकु. हागे

एतादृशपुण्यसाधनानां (श्लोकसहस्रं =) श्लोकानां सहस्रं **अयं ब्राह्मणः वाक्सहायेन वक्ति** । एवमन्योपि वक्ति चेत्, तर्हि सोऽपि विप्रसमः स्यात् ।।९६-९७।। (**मम वाक्सहायेन** शतं सहस्रं वा श्लोकान् प्रतिदिनं विप्रः **वक्ति** । तथापि तान् श्लोकान् प्रातःकाले स्वप्रानन्तरं **प्रहरामि** । तस्य स्मृतौ न स्थापयामि । अन्येषां तादृशसङ्ख्याक-श्लोकधारणसामर्थ्यं स्वप्नेपि नास्ति । तस्मात् विप्र एवाधिकृतः इति भावः ।।)

**अहमप्यत्र वक्ष्यामि श्लोकान् यः कश्चनाधमः ।**
**वदन्निति वदेद्विप्रसदृशस्तु भवेदिह ।।९७।।**

**कृत्रिमश्लोककर्ता यो ह्यसूयासुपरो नरः ।**
**मरिष्यत्यमरैः शप्तो निरये स चरिष्यति ।।९८।।**

**तस्मात्कुवादो दुर्वादिन्न कर्तव्यस्त्वयाऽधुना ।**
**यदा विधिबलं जीर्णं तदा कर्तव्य एव ते ।।९९।।**

**तस्मादत्यद्भुतार्थानां श्लोकानां तु प्रवर्तकम् ।**
**करोमि शारदासन्निधानं जिह्वागतं त्वहो ।।१००।।**

(अन्वयः) अत्र यः कश्चन अधमः 'अहमपि श्लोकान् वक्ष्यामि' इति वदन् (दृश्यते, तर्हि) इह विप्रसदृशस्तु भवेत् (इति) वदेत् । यः असूयासुपरोनरः कृत्रिमश्लोककर्ता सः अमरैः शप्तः (सन्) मरिष्यति; (ततः) निरये चरिष्यति ।

तस्मात् हे दुर्वादिन्! त्वया अधुना कुवादः न कर्तव्या । यदा विधिबलं जीर्णं तदा एव कर्तव्यः (इति) ते (बुद्धिः जायते) । तस्मात् (विप्रं) अत्यद्भुतार्थानां श्लोकानां प्रवर्तकं (विप्रस्य) जिह्वागतं शारदासन्निधानं तु करोमि ।

(व्या) एवं शक्तिरहितः सन् यः (कोऽपि) कृत्रिमश्लोककर्ता सन् । अन्यथा वदन्

---

यारिगू अन्थ श्लोक माडलु आगिल्ल एन्दु भाव. नन्न श्लोक ओन्दोन्दू इष्टार्थपूरैसुत्ते. श्लोकनाशवन्नु माडुत्ते. अदे नन्न श्लोकवेम्बुदक्के गुरुतु. साक्षि. कर्तनिगे माडुत्तदेन्दु अष्टे अल्ल. श्रोतृजनरिगू पारायण माडुववरिगू माडुत्ते एन्दू तात्पर्य. याव इतररू भविष्यदर्थश्लोक माडि वेदतुल्यत्ववन्नु आ श्लोकक्के कोडलाररु. विप्रनु निमित्तमात्रनु. इतररु सर्वथा अतपस्विगळु एन्दरे आ दर्जेय तपस्सन्नु यारू होन्दिल्ल. गुरुराजरिगे मत्तु ऋजुगळिगे अन्थश्लोककर्तृत्व शक्य एन्दर्थ.

दृश्यते । तं प्रति ''सः देवैः शप्तः सन् मरिष्यति'' ।।९८।। हे कुवादिन् त्वया दुर्वादो न कर्तव्यः इति तस्यहितः पुरुषः (तं प्रति) वदेत् । कर्तृपदमर्थात् सिद्धम् ।।९९।।

तस्मात् अत्यद्भुतानां श्लोकानां प्रवर्तकं विप्रं करोमि । तस्य जिह्वायां शारदासन्निधानं च करोमि । सर्वैः सज्जनैः विप्रद्रोहिणाम् अनिष्टं श्रुत्वा, विप्रोपदेष्टुः गुरुराजस्य महत्वं ज्ञातव्यमिति निदर्शनमुक्तं भवति[१] ।। बहुपुरुषश्रोतृकप्रकरणं सं.।।

### १६–१०१–१०७–विप्रप्रकरणम्

(व्या) 'हे वृद्ध' इत्यारभ्य अध्यायान्तम् अष्टमं विप्रप्रकरणम् ।।

**हे वृद्ध विदुषां मध्ये श्रद्धारहितपूरुषम् ।**
**विद्धि तल्लक्षणं वक्ष्ये मुण्डवद्विधवाऽर्दितः ।।१०१।।**

**विधवादर्शनाद्भीतस्तथैक द्विजदर्शनात् ।**
**धवलास्नानमप्यस्मद्वृन्दावनसुदर्शने ।।१०२।।**

**त्यक्तवान् वित्तलाभार्थं कृत्वा पाण्डित्यमप्यहो ।**
**अत्यन्तं मानितो नासीत् कुजनैर्हास्यतां गतः ।।१०३।।**

**त्रिलक्षगणितं कृत्वा दक्षवन्मत्प्रदक्षिणम् ।**
**आशुशुक्षणिवत्पूर्वकर्मकक्षं क्षिणोत्यसौ ।।१०४।।**

(अन्वयः) हे वृद्ध! विदुषां मध्ये श्रद्धारहितपूरुषं विद्धि; तल्लक्षणं वक्ष्ये । (सः) मुण्डवत् (दृश्यते); विधवार्दितः विधवादर्शनाद् तथा एक द्विजस्य दर्शनात् भीतः (सन्) धवलगङ्गास्नानम् अस्मवृन्दावनसुदर्शने अपि त्यक्तवान् ।

पाण्डित्यं वित्तलाभार्थं कृत्वा, अन्त्यमानितः नासीत् । कुजनैः हास्यतां गतः अपि । अहो! असौ दक्षवत् त्रिलक्षगणितं मत्प्रदक्षिणं कृत्वा अशुशुक्षणिवत्

---

(१) ('यदा विधिबलं जीर्णं तदा कर्तव्य एव ते' नानू इन्थ पुण्यप्रदश्लोकगळन्नु माडुत्तेनेन्दु इन्नोब्बनु हेळिदरे अदु सुळ्ळागुवुदरिन्द, सामर्थ्यविल्लदे होट्टेकिच्चिनिन्द आ मातन्नु नुडिदद्दक्के अपमृत्यु बरुत्ते. 'विनाशकाले विपरीतबुद्धिः' एम्ब गादेयिदे. मृत्यु सन्निहितवागिद्दरेने अन्थ दुर्बुद्धि बरुत्ते. मत्तु नानू अन्थ श्लोकवन्नु माडुत्तेनेन्दु हेळुत्ताने एन्दर्थ.)

**पूर्वकर्मकक्षं क्षिणोति ।**

**(व्या)** 'लक्ष्मीपतिना कृतिख्यापनं कर्तव्यम्' इत्युक्तम् । तस्य कृतिख्यापनानुकूल-सामर्थ्यसाधनमाह – **हे वृद्धेत्यादि ।। हे वृद्ध!** विप्र! विदुषां मध्ये कश्चित् शद्धयारहितः तं पुरुषं **विद्धि** । तस्य लक्षणं वक्ष्यामि । सः **मुण्डवत्** यतिवत् दृश्यते । वस्तुतो न यतिः । वृन्दावनदर्शनार्थं गमनसमये मार्गे काचिद्विधवा । तस्यां दोषविशेषसन्देहेन तस्याः पुरतः भगवत्पूजादिकं कथं कार्यमिति विषण्णचित्तो जातः । तस्माद् **विधवार्दितः** ।।१०१।।

एवं **विधवादर्शनात् एक विप्रदर्शनाच्च** । तयोः कुबुद्धिनिश्चयेन भीतः । ततः परं **धवळास्नानं अस्मद्वृन्दावनसुदर्शने** पाण्डित्यं कृत्वा वित्तलाभार्थं वित्तलाभरूपमर्थप्रयोजनं त्यक्तवान्(१) ।। तस्मात्कुजनैः कमलनाभादिभिः अत्यन्तं मानितो नासीत् । हास्यतां च अपहासविषयत्वं गतः प्राप्तः ।।१०३।।

सः **मत्प्रदक्षिणं कृत्वा दक्षवत्** समर्थवत् **त्रिलक्षगणितं चकार** । त्रिलक्षसङ्ख्याकत्वेन प्रदक्षिणसमये कृतानां पादविन्यासानां गणितं कृतवान् । **आशुशुक्षणिवत्** = अग्निवत् **पूर्वकृतं कर्मकक्षं** पापकर्मसमूहं **क्षिणोति** ।।१०४।।

**तत्पाण्डित्यभयादेव हृदि कम्पितवादिनः ।**
**दिक्षु धावन्ति ते शुष्कवदनाः कदनं विना ।।१०५।।**

**राजानो नैव जानन्ति मानं तस्य न चक्रिरे ।**
**मम नन्दनपाण्डित्यानन्तरं स तु पण्डितः ।।१०६।।**

**मम नन्दनवैदुष्यं तद्वैदुष्यं तथैव च ।**
**भविष्यज्ज्ञानिना पोष्यं मया सत्सु न संशयः ।।१०७।।**

**(अन्वयः) तत् पाण्डित्यभयात् एव हृदि कम्पितवादिनः (सन्तः) ते शुष्कवदनाः कदनं विना दिक्षु धावन्ति । राजानः नैव जानन्ति; तस्य मानं न चक्रिरे । स**

---

(१) (इल्लि एनो क्लिष्टान्वयविदे. स्वरसवाद १०२ने १०३ने श्लोकार्थवेनेन्दरे, ई पण्डितनु विधवादर्शनदिन्दलू, ओंटिब्राह्मणन दर्शनदिन्दलू भीतनागि धवळगङ्गास्नानवन्नू मत्तु नम्म वृन्दावनद सुदर्शन इवेरडन्नू बिट्टुबिट्टनु. (सुदर्शने एम्बुदु द्वितीया द्विवचन) मत्ते द्रव्यलाभक्कोस्कर पाण्डित्यप्रदर्शनवन्नू माडिबिट्टनु – एन्दु. श्रीमुष्णाचार्यर व्याख्यानद प्रकार द्रव्यलाभवन्नु होन्ददे बिट्टुबिट्टनु एम्बर्थ बरुत्तदे)

**तु ममनन्दनपाण्डित्यानन्तरं पण्डितः । (यथा) मम नन्दनवैदुष्यं तथा एव तद्वैदुष्यं च । भविष्यज्ज्ञानिना मया सत्सु पोष्यम्; अत्र न संशयः ।**

(व्या) तस्य पाण्डित्यभयेन दुर्जनाः हृदिकंपितानुवादवन्तो भवन्ति । ततः तेन सह **कदनं** विहाय **शुष्कवदनाः** सन्तः **दिक्षु धावन्ति** । भविष्यत् फलमेतत् ।।१०५।।

**राजानः** तत्स्वरूपं **न जानन्ति** । **मम** **(नन्दनपाण्डित्यानन्तरं)** नन्दनस्य शेषाद्यन्यतमस्य तव वा पाण्डित्यानन्तरं **सः पण्डितः** ।।१०६।। मम नन्दनस्य यद्वैदुष्यं विद्वत्त्वं तदनुसारि तस्यापि वैदुष्यम् । एवं **भविष्यज्ज्ञानिना** भविष्यज्ञानवता **मया पोष्यं** तं विद्धि । इति पूर्वेणान्वयः ।। एवमुक्तकार्योपलम्भेन अस्मिन् पुरुषे आप्तत्वं विज्ञाय विप्रेणाङ्गीकर्तव्यमिति सूचनेन 'विप्रान्तरमुखेनैतत्शृणु' इत्युक्तं युक्तमिति निदर्शनमुक्तं भवति ।।

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

**(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।**

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

**(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाह-**

कत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि- राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्रपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र

बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि षोडशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**

## ।। अथ सप्तदशाध्यायः ।।

### १. शेषभूपश्रीपतिप्रकरणम्।। श्लोकाः (१-१८)

(व्या) श्रीवादिराजगुरुभ्यो नमः ।। ओं प्रायशः सर्वभक्तानां अभक्तानां च वृत्तान्तं कथयत्यस्मिन्नध्याये । 'अयं विप्रः सुप्रशस्तं' इत्यारभ्य 'निग्राह्या न वदन्ति ये' इत्यन्तं प्रथमं शेषश्रोतृकप्रकरणम् ।। शेषश्रोतृकत्वेन वा, भूपश्रोतृकत्वेन वा, श्रीपतेः श्रोतृकत्वेन वा व्याख्यातृश्रोतृकत्वेन वा योजयितुमवकाशो दृश्यते ।।

**ॐ ।। अयं विप्रः सुप्रशस्तं मम पादाब्जमुत्तमम् ।**
**पश्यति स्वप्नकाले तु नित्यं निर्मलचेतनः ।।१।।**

**स तेन लब्धातिशयः शेषशायिप्रिये मयि ।**
**मन आवेश्य काश्यां च मृतस्तत्पुण्यमाप्नुयात् ।।२।।**

**तस्माद्विप्रः प्रशस्तोऽयं प्रमृष्टज्ञानवान् मम ।**
**प्रकृत्या यत्प्रदातव्यं तदस्मै सम्प्रदीयताम् ।।३।।**

**अन्वयः** - निर्मलचेतनः अयं विप्रः सुप्रशस्तम् उत्तमं मम पादाब्जं स्वप्नकाले तु नित्यं (विशेषेण) पश्यति ।।१।। सः विप्रः तेन (मम पादाब्जदर्शनेन) लब्धातिशयः सन् शेषशायी (श्रीहरेः) प्रिये मयि मनः अवेश्य, काश्यां मृतः (पुरुषः) च (यादृशं पुण्यमाप्नुयात्) तत् पुण्यं च सः आप्नुयात् (प्राप्नोति) ।।२।। तस्मात् (काशीमरणजन-यपुण्यसदृशपुण्यात्) मम (विषये) प्रमृष्टज्ञानवान् अयं विप्रः प्रशस्तः । (तस्मात्) प्रकृत्या (स्वभावेन) यत् प्रदातव्यं तत् अस्मै सम्प्रदीयताम् ।

(व्या) पूर्वाध्याये (१६।२३) 'तस्मान्मत्पादकमलध्यानात् ते निर्मलं मनः' इत्युक्तम् । तस्य स्वप्नकाले दर्शनफलमाह – **अयमित्यादि ।। निर्मलचेतनोऽयं विप्रः ।** अतिप्रशस्तं उत्तमं ममपादाब्जं स्वप्नकाले नित्यं विशेषेण पश्यति ।।१।।

स विप्रः तेन दर्शनेन लब्धातिशयः सन् प्राक्कल्पीय काशीक्षेत्राभिमानिशिवात्मक- शेषशायिनो हरेः **प्रिये मयि मन आवेश्य, मृतः** पुरुषः यादृशं **पुण्यं प्राप्नुयात्** तादृशं पुण्यं प्राप्नोति ।।२।।

**तस्मात्** काशीमरणजन्यपुण्यसदृशपुण्यवत्वात् **अयं विप्रः प्रशस्तः । मम** विषये

**प्रमृष्टज्ञानवान्** । तस्मात् **प्रकृत्या** स्वभावेन **यत्प्रदातव्यं,** प्रदातव्यत्वेन सङ्कल्पितं तण्डुलादिकं, **तदस्मै** त्वया सम्प्रदीयताम्'' इति भूपपरत्वेन व्याख्येयम् । अन्यपरत्वे तु भूपेन सम्प्रदीयताम् इति व्याख्येयम् ।।३।।

**मयोक्तश्लोकार्थमपि न जानाति ह्ययं द्विजः ।**
**अर्थं बुध्वा तु वाक्यं तु करोतीह कवीश्वरः ।।४।।**

**तस्माद्विप्रकृतिर्नैव मत्कृतिः सर्वथा सुत ।**
**सत्कृतिश्चास्य कर्तव्या त्वत्कृतिश्चाग्रपङ्क्तिका ।।५।।**

**अन्वयः – अयं द्विजः, मया उक्तश्लोकार्थम् अपि न जानाति हि । इह (लोके) कवीश्वरः अर्थं बुध्वा तु वाक्यं (शब्दरचनां) तु करोति ।।४।। तस्मात् विप्रकृतिः न । (किन्तु) हे सुत! (शेष) सर्वथा मत्कृतिः एव । (तस्मात्) सत्कृतिश्च अस्य (व्याख्यारूपा सत्कृतिः) कर्तव्या; त्वत्कृतिः च अग्रपङ्क्तिका (भविष्यति) ।।**

(व्या) ''मयोक्तस्यास्य श्लोकस्य अयं (विप्रः) अर्थमपि न जानाति । लोके कवीश्वरः अर्थं बुध्वा शब्दरचनं करोति ।।४।। 'तस्मात् विप्रस्य एतदर्थज्ञानरहितत्वात् इयं विप्रकृतिर्न; किन्तु मत्कृतिः । तस्मादस्य सर्वथा सत्कृतिः व्याख्यारूपा सत्कृतिः कर्तव्या' – इति व्याख्यातृपरत्वे व्याख्येयम् । अन्यत्र ''सत्कारःकर्तव्यः'' इति व्याख्येयम् । व्याख्यातृपरत्वे 'त्वत्कृतिश्चाग्रपङ्क्तिका' इत्येतत् । त्वया व्याख्याने कृते सति, तदनुसारेण बहवः (व्याख्यानं कृत्वा) प्रवचनं कुर्वन्तीति व्याख्येयम् । अन्यत्र त्वयोपकारे कृते सति, बहवः उपकुर्वन्तीति व्याख्येयम् । तत्र 'भूपशेषयोः साक्षादुपकर्तृत्वं, श्रीपतेस्तु वासुदेवमुनिबोधनादिना' इति ज्ञातव्यम् ।।५।।

**मामाश्रित्य मया दत्तमाचार्यत्वं समाप्य च ।**
**मम वृन्दावनस्यैव नाम्ना समनुवर्तितम् ।।६।।**

**भोजनायान्नमेवात्र नास्तीति जनता मनाक् ।**
**मनुते किमन्नहीनेनाऽचार्यत्वेन नन्द च (न) ।।७।।**

**नागाख्यपण्डितस्यापि स्वप्ने चोक्तं मया सुत ।**

**तेनापि न कृतं किञ्चिन्मृषावाक्यपरोऽभवत् ।।८।।**

(व्या) **माम् आश्रित्य, मयादत्तं** मम वृन्दावनस्य नाम्ना समनुवर्तितम् **आचार्यत्वं** सं सम्यक् प्राप्य ।।६।। **भोजनाय** अर्थज्ञानजन्यसुखभोगाय प्रसिद्धभोजनार्थं वा । **मनाक्** किञ्चित् । **अन्नं नास्तीति** विप्रो मनुते । तस्य **जनतापि अन्न(द)हीनेन**[१] अन्नस्य = अर्थज्ञानस्य प्रसिद्धस्य वा दातृरहितेन आचार्यत्वेन ननन्द । किं ननन्द? 'आचार्यत्वे ननन्द च' इति पाठो दृश्यते । तस्य लेखकदोषमूलत्वाभावे अलौकिकप्रयोगः । 'मनुते किन्त्वन्नहीनेनाचार्यत्वेन ननन्द च' इति पाठे तस्य जनतापि किं मनुते? अन्नरहिते आचार्यत्वे ननन्देति योजनीयम् ।७।।

**नागाख्यपण्डितस्य** शेषाद्रिपण्डितस्य स्वप्ने च **मयोक्तम्** । तेनापि न किञ्चित्कृतम् । भवान्[२] मृषावाक्यपरो न । व्याख्यातृपक्षे 'नागाख्यपण्डितस्येतत् शेषस्य इति व्याख्येयम् ।।८।।

**तस्मात्त्वं चान्नमात्रस्य यत्नं कुरु सुमानव ।**
**नोचेत्स माधवीं वृत्तिं करिष्यत्येव नान्यथा ।।९।।**

**अहं विप्रस्य सौचित्यं करिष्यामीति मन्मतम् ।**
**सौचित्यं कुरु कल्याण गुरोर्वाक्यस्य गौरवात् ।।१०।।**

**हे नन्दन त्वं मम नन्दनेऽवने वृन्दावने कन्दफलाशिमन्दिरे ।**
**सुनन्दनन्दादिभिरिन्दिरापतिः स्वानन्ददो यद्वदिहा(ऽ)भवप्रियः ।।११।।**

अन्वयः – तस्मात् त्वं सुमानव त्वं (भौतिक) अन्नमात्रस्य च (अर्थज्ञानस्य, प्रसिद्धस्य वा) यत्नं कुरु । नो चेत्, सः (विप्रः) माधवीं वृत्तिं करिष्यति एव । (तत्र अस्मिन् विषये) अन्यथा न ।।९।।

हे कल्याण! 'अहं विप्रस्य सौचित्यं करिष्यामि' इति मन्मतम् । (तस्मात्) गुरोः (मम) वाक्यस्य गौरवात् (विप्रस्य अन्नप्राप्त्यर्थं) सौचित्यं (सहायं) कुरु ।।१०।। अभवप्रियः स्वानन्ददः सुनन्दनन्दादिभिः (अन्वितः) इन्दिरापतिः कन्दफलाशिमन्दिरे

---

(१) ''मनुते किमन्नदहीनेनाचार्यत्वे ननन्द' - श्रीमुष्णाचार्यस्य पाठः इति भाति ।
(२) मूले 'भवान्' इति नास्ति, किन्तु 'मृषावाक्यपरः अभवत्' इत्यस्ति ।

**मम वृन्दावने यद्वत्, (तद्वत्) इह मम नन्दने अवने (सन्निहितः) । (तस्मात्) हे नन्दन (शेष!) त्वं (विप्रस्य सौचित्यं कुरु) ।।११।।**

(व्या) **तस्मात्**[१] तव मृषावाक्यपरत्वाभावात्, त्वं, **अन्नमात्रस्य** = अर्थज्ञानस्य प्रसिद्धान्नस्य वा (यत्नं कुरु । हे सुमानव!) । **नो चेत्, सः माधवीं वृत्तिं करिष्यति** । मधुकरवृत्तिं करिष्यति । नानाजनेभ्यः अर्थज्ञानयत्नं प्रसिद्धान्नयत्नं वा करिष्यति ।।९।।

सौचित्यं = सहायः । ('विप्रस्य सहायं करोमि' इति मम सङ्कल्पः । त्वं तु गुर्वाज्ञायाः अनुल्लङ्घनीयत्वात् मदाज्ञया तस्य सहायं कुरु । 'कल्याण' इति हेतुगर्भसम्बोधनेन 'विप्रसेवा शुभप्रदा इहापि' इति सूचितं भवति ।।१०।।)

**हे नन्दन! अभवप्रियः** मुक्तानां विरिञ्चस्य च प्रियः । **सुनन्दनन्दादिभिः** सहित **इन्दिरापतिः । स्वानन्ददः । कन्दफलाशिमन्दिरे** इह मम वृन्दावने **यद्वत्** तद्वत् **मम नन्दने** विप्रे अवनार्थं सन्निहितः । 'तस्मात् (तस्य) सौचित्यं कुरु' इति पूर्वेणान्वयः ।।११।।[२]

**तवेह को वा गणयेद्गुणौघान् विना तु मां नास्ति सुनामधेय ।**
**यथा सुरेन्द्रस्य करीन्द्रगस्य गर्वोऽपि सर्वापहरः सुतेह ।।१२।।**

**औदार्यशस्त्रेण विदार्य विप्र दारिद्र्यवृक्षं करदैरिह त्वम् ।**
**धरासुराद्यै : परमादरेण त्वाराधितः सन् धरणीं वृणीष्व ।।१३।।**

**अन्वयः – हे सुनामधेय! सुत (शेष) तव गुणौघान् मां विना को वा गणयेत्? (गणयिता) । न कोपि अन्यः इह नास्ति । यथा करीन्द्रगस्य (ऐरावतस्य) सुरेन्द्रस्य (देवेन्द्रस्य) गर्वः सर्वापहरः अपि इह (अभूत्) । (तथा सर्वापहर इव दृश्यमानं) विप्रदारिद्र्यवृक्षं इह औदार्यशस्त्रेण विदार्य करदैः धरासुराद्यैः परमादरेण आराधितः सन् धरणीं (वासयोग्यां भुवं) वृणीष्व (इति) ।**

(व्या) **हे सुत! यथा सुरेन्द्रस्य** देवेन्द्रस्य **करीन्द्रस्य** ऐरावतगतस्य **गर्वः सर्वापहरः**, तथा

---

(१) 'तस्मात्' एम्बुदक्के 'तेन मृषोक्तत्वात्' एन्दु अर्थवागबेकु. श्रीमुष्णाचार्यरु पाठव्यत्यासमाडिकोण्डिद्दरिन्द 'नीनु सुळ्ळुगारनल्लवादरिन्द' एन्दु व्याख्यान माडिद्दारे.

(२) हन्नोन्दनेय श्लोकद 'त्वं' एम्ब कर्तृपदवु १०ने श्लोकद 'कुरु' एम्ब क्रियेगे अन्वितवागुत्ते.

**विप्रदारिद्र्यवृक्षं** ज्ञानदारिद्र्यरूपं धनदारिद्र्यरूपं वा वृक्षम् । औदार्यशस्त्रेण अर्थज्ञानरूपवित्तदानानुकूलेन द्रव्यादिदानानुकूलेन वा । औदार्यात्मकेण **शस्त्रेण** औदार्यरूपशस्त्रवतापुरुषान्तरेण वा । शीघ्रं परिहृत्य **करदैः** मह्यं करदः **धरासुराद्यैः** विप्रोत्तमैः **आराधितः सन् धरणीं** वासयोग्यां भुवं **वृणीष्व** । भूलोकवासं वृणीष्वेति यावत् । भूपपक्षे स्वीयां धरणीं वृणीष्वेति यावत्[1] ।। ( अपरम् अन्वयमपि योज्यं यथाहि – हे शेष! सुनामधेय! यथा ऐरावतगतस्य सुरेन्द्रस्य गुणौघान् मां विना कोपि गणयेत् तथा तव गुणगणकः मां विना नास्ति । त्वमपि तादृशऔदार्यवान् । तस्मात् सौचित्यं कुरु इति पूर्वेणान्वयः । इह लोके गर्वोपि निन्दितः अहङ्कारश्च । गुर्वाज्ञया दरिद्रविप्रपोषणेन किं प्रयोजनम् इति अहङ्कारः । सर्वापहरः सर्वपुण्यनाशकः । तस्मात् त्वम् अहङ्कारं परित्यज्य, ब्राह्मणसमीपं गत्वा, तस्य सौचित्यं कुरु इति पूर्वेणान्वयः ।।)

**पिता पुत्रस्तुतिं कुर्याद्भर्ता भार्यास्तुतिं गुरुः ।**
**शिष्यस्य संस्तुतिं कुर्यात्स्वामी भृत्यस्तुतिं तथा ।।१४।।**

**तदन्तर्यामिणं श्रीमन्नादाय परमार्थतः ।**
**कुर्यात् स्तुतिं न दोषाय न तु देहाभिमानिनः ।।१५।।**

**तस्मान्नन्दन ते चान्तर्यामिणः कन्दिना मया ।**
**क्रियते गुणवृन्देन मम वृन्दावने यथा ।।१६।।**

**अन्वयः - हे श्रीमन्! (शेष) पिता पुत्रस्तुतिं कुर्यात् । भर्ता भार्यास्तुतिं (कुर्यात्) । गुरुः शिष्यस्य स्तुतिं कुर्यात् । तथा स्वामी भृत्यस्तुतिं कुर्यात् । तथा त्वदन्तर्यामिणम् (अपि) परमार्थतः आदाय स्तुतिं कुर्यात् (तत्) न दोषाय । देहाभिमानिनः तु न ।।१५।। तस्मात् हे नन्दन! (शेष) मम वृन्दावने यथा (तथा)**

---

(१) हन्नेरडनेय श्लोकवन्नु हदिमूरनेय श्लोकदोन्दिगे सेरिसिकोण्डु श्रीमुष्णाचार्यरु अर्थवन्नु हेळिद्दारे. हे सुनामधेय शेष! तव गुणौघान् मां विना को वा गणयेत् तादृशः गणकः नास्ति । तादृशे मयापि स्तुत्य औदार्यवान् भवान् । तस्मात् ऐरावतमदः सर्ववृक्षनाशकः यथा, तथा त्वं औदार्याख्यशस्त्रेण विप्रदाद्र्यवृक्षं छित्वा । 'ब्राह्मणैः स्तुतः सन् भूमिं अलं कुरु' एन्दु अवर अर्थ. आदरू हन्नेरडनेय श्लोकवन्नु हिन्दन श्लोकगळोन्दिगे सेरिसिकोण्डू अर्थवन्नु हेळबहुदु.

**गुणवृन्देन ते अन्तर्यामिणः च कन्दिना मया (स्तुतिः) क्रियते ।।१६।।**

(व्या) **यथा** पित्रादिभिः कृता पुत्राद्यन्तर्यामिणः स्तुतिः **परमार्थतः क्रियते**, तथा त्वदन्तर्यामिणोपि ।।१४।१५।१६।। (गुरुणा श्लाघितः शिष्यः परां कीर्तिमवाप्नुयात्' इत्यादिप्रमाणसद्भावात् । पिता स्वपुत्रं श्लाघयेदेव । एवं साध्वीं भर्ता श्लाघयेत् । गुरुः शिष्यस्य गुणान् । स्वामी सत्यभृत्यस्य च गुणान् श्लाघयेत् ।।१४।। तदा श्लाघितॄणां प्रत्यवायो नास्ति । श्लाघ्यानां नीचत्वेपि तदन्तर्यामिप्रशंसनरूपेण स्तोत्रस्य प्रवर्तनात् । केवल देहाभिमानिजीवविवक्षया स्तुतिः पापप्रदा ।।१५।। तस्मात् हे नन्दन शेष! कन्दिना यतिना मया ते अन्तर्यामिणः गुणवृन्देन व्यक्तगुणवृन्देन निमित्तेन स्तुतिः क्रियते । तत्र दृष्टान्तः मम वृन्दावने यथा अन्तर्यामिणः हयग्रीवस्य गुणवृन्दव्यक्तीकरणार्थं (१४।९०) (१५।१०४ रामचन्द्रस्तुति, १४।८८-९० केशवस्तुतिः) पुनः पुनः स्तुतिः क्रियते । स्वोत्तमैः स्तुतिः श्लाघितस्य पुण्यहारिणीति न भेतव्यमिति भावः ।)

**मयि जीवति यच्चोक्तं मम वृन्दावनं सुत ।**
**भविष्यति प्रसिद्धं तदनुसन्धत्स्व बुद्धिमन् ।।१७।।**

**तत्प्रसिद्ध्यर्थमेवात्र तन्नामापि द्विजस्य तु ।**
**मया दत्तं त्वया तस्मान्निग्राह्या न वदन्ति ये ।।१८।।**

अन्वयः - (हे बुद्धिमन्!) सुत! (शेष) मयि जीवति (सति, दृग्विषये सति) 'मम वृन्दावनं प्रसिद्धं भविष्यति (इति) यत् च (मया) उक्तं तत् अनुसन्धत्स्व ।।१७।। तत् प्रसिद्ध्यथम् एव अत्र तन्नाम अपि द्विजस्य तु मया दत्तम्; तस्मात् ये न वदन्ति त्वया निग्राह्याः ।।१८।।

(व्या) **मयि जीविते सति**, जनदृग्विषये सति **मम वृन्दावनं प्रसिद्धं भविष्यतीति यदुक्तं, तदनुसन्धत्स्व** (हे बुद्धिमन् शेष!)।।१७।। तस्य **प्रसिद्धर्थं द्विजस्य तन्नाम** वृन्दावननाम **दत्तम्** । तेन नाम्नः ये विप्रं **न वदन्ति**, ते **त्वया निग्राह्याः** ।।१८।। उक्त भूपा दिसत्कृतिरूपनिदर्शनमत्र प्रतिपादितम् ।।शेष.प्र. सं.।।

२. विप्रप्रकरणम्।। श्लोकाः (१९-२१ १/२)

(व्या) 'हे विप्र' इत्यारभ्य 'न वक्ष्ये मानवोत्तम' इत्यन्तं विप्रश्रोतृकं द्वितीयं प्रकरणम् ।।

**हे विप्राद्याशनं नास्ति पुत्रमित्रकळत्रकैः ।**
**कथं करोषि चान्नार्थं कुरु वृत्तिं च माधवीम् ।।१९।।**

**प्रतापत्रयमध्ये तु ह्येकं वाऽप्यस्मदीयकाः ।**
**न प्रयच्छन्ति सच्छास्त्रवक्त्रे तव न संशयः ।।२०।।**

**अगन्ता गन्तुकामस्त्वं घोषपर्यन्तमेव च ।**
**अशक्तः सन् कथं पुत्र पोषणं तु भवेदिह ।।२१।।**

**तवान्नसिद्धिपर्यन्तं न वक्षे मानवोत्तम ।।**

अन्वयः – हे विप्र! पुत्रमित्रकळत्रकैः (सहितः तव) अद्य अशनं नास्ति । अन्नार्थं च कथं करोषि? माधवीं वृत्तिं कुरु । हे पुत्र (तदा अपि) अस्मदीयकाः तव प्रतापत्रयमध्ये तु एकं वा अपि (कुत्सिताः अधिकारिणः) सच्छास्त्रवक्त्रे (ते) न प्रयच्छन्ति हि (अत्र) न संशयः । (तस्मिन् समये) गन्तुकामः त्वं घोषपर्यन्तमेव गत्वा अगन्ता सन्, इह कुटुम्बपोषणं तु कथं भवेत्? (इति चिन्तयसे) । हे मानवोत्तम विप्र! तव अन्नसिद्धिपर्यन्तं (स्वप्ने) न वक्ष्ये ।।

(व्या) (हे विप्र!) एतदाख्यानोपदेशयोग्यजन्मनि त्वं **पुत्रमित्रकळत्रैः** सहितः । **तवाशनं नास्ति** । अन्नार्थे कथं करोषि? किं प्रयत्नं करोषि? **माधवीं वृत्तिं कुरु** । याचनावृत्तिं कुरु । अस्मिन् जन्मनि तव 'मयोक्तश्लोकार्थमपि जानाति' (१७।४) इति पूर्वप्रकरणोक्तरीत्या, श्लोकार्थज्ञानरहितत्वात् अस्मिन् जन्मनि अशनं नास्तीत्येतावदेव न । किन्तु आगामि जन्मनि त्वं भगवत्पादकृतसच्छास्त्रस्यापि प्रवक्ता भविष्यसि[१] ।।१९।।

---

(१) ('प्रवक्ता' पदवु इल्लि मूलक्के विरुद्धवागिदे. मूलदल्लि माधवीवृत्ति माडुत्ती एन्दिदे; एन्दरे बहुजनगुरुगळल्लि विद्याभ्यासमाडबेकागुत्ते एन्दर्थवागुत्ते. 'बहुजनरिगे मध्वशास्त्र पाठ हेळुत्ति' एन्दु श्रीमुष्णाचार्यर व्याख्यान मूलारूढवागिल्ल. 'बहुगुरूपसत्तिं करोषि' एन्दु हेळबेकागिदे. आदरे श्रीमुष्णाचार्यर ई व्याख्यानवन्नु हागे विरुद्धवेन्दु इट्टुकोळ्ळबारदु. १९ने श्लोकदल्लि 'निनगे ईग अन्नविल्ल' एन्दु हेळि २०ने श्लोकक्के सङ्गति हेळबेकागि उपोद्घातरूपवागि नीनु मुन्दिन जन्मदल्लि प्रवक्तृगुरुवागुत्ति; आगलू निनगे अन्नविल्लदन्ते हिंसे आगुत्ते. बडतन, मठदवर सहायराहित्य इत्यादि कारणगळिन्द हिंसे आगुत्ते एन्दु हेळि,

तदापि तव दातव्यत्वेन क्लृप्तम् । एवमपि **प्रतापम्** अस्मदीया अप्यधिकारिणः कुत्सिताः न प्रयच्छन्ति ॥२०॥ (सच्छास्त्रवक्त्रे तव आख्यानप्रवचनशीलः त्वं । तथापि किमपि न प्रयच्छन्ति ॥)

तस्मिन् समये त्वं **गन्तुकामो** भविष्यसि । त्वं **घोषपर्यन्तमेव** । पल्लीविशेषपर्यन्तमेव गमिष्यसि । ततः परम् **अगन्ता** सन् कुटुम्बपोषणं **कथं भवेत्** इति चिन्तयसे । चिन्ता करोषि । एवं चिन्तयतस्तव **अन्नसिद्धिपर्यन्तं न वक्ष्ये** । विप्रस्य यतित्वसमये दिने दिने व्ययार्थं प्रतापत्रयमावश्यकम् । तत्र प्रकृत्या प्रदातव्ये भूपेन विप्राय दातव्यत्वेन क्लृप्तम् । अस्मदीयानामधिकारसमये न प्रयच्छन्ति । इति द्वितीयजन्म निदर्शनं । अन्नसिद्धिपर्यन्तं न वक्ष्ये इति प्रथमजन्म निदर्शनम् ॥२१ १/२॥

### ३. श्रीपतिप्रकरणम्॥ श्लोकाः (२२-२५)

(व्या) **'मानं तत्याज माधव्या'** इत्यारभ्य **'प्राप्तवान् वै ममान्नदः'** इत्यन्तं तृतीयं श्रीपतिश्रोतृकं प्रकरणम् ।

**मानं तत्याज माधव्या मानो हि महतां धनम् ॥२२॥**

**मयोदितं वचः सत्यं तस्य गेहे च पश्य वै ।**

**श्रीपते श्रीमतो वाक्यं शृणु मे गुणभूषण ॥२३॥**

**अन्वयः – हे गुणभूषण! श्रीपते! माधव्या मानं तत्याज । मानं महतां धनम् हि । मया उदितं वचः सत्यं (अस्ति इति) । तस्य गेहे च पश्य वै । हे श्रीपते! श्रीमतः (जीवोत्तमतः) मे वाक्यं शृणु ॥**

---

आग विप्रनु ग्रामान्तरक्के प्रयाणबेळेसुव यत्न माडुत्तानेन्दु मुन्तागि विवरिसिद्दारे. आद्दरिन्द 'प्रवक्ता भविष्यसि' एम्बुदु तप्पल्ल. व्याख्यानकारर स्वन्तमातु. एरडु जन्मदल्लू अन्नक्के कष्ट एम्बुदक्के उपपादक; २०ने श्लोकद 'सच्छास्त्रवक्त्रे' एम्ब पदवु एडमूक जन्मक्के अन्वयिसुवुदिल्ल. आद्दरिन्द आगामि जन्मद परवागि व्याख्यानमाडिद्दारे. प्रतापत्रय ऽ त्रि इटेम्स् आफ् एक्स्पेण्डिचर् इन् दि डैलि बड्जेट् आफ् मठ ऽ स्वामिगळ दैनन्दिन भिक्षेय खर्चु, प्रयाणद खर्चु, अतिथिगळिगे दक्षिणे खर्चु. आ मूरर पैकि एल्लादरू न्दु हत्तु रूपायि खर्चुहाकि निनगे कोडबहुदित्तु. अदन्नु माडिल्ल एन्दु तात्पर्य. विप्रने स्वामिगळादरे राजधनवेम्ब प्रताप मठक्के बरदे स्वामिगळिगे अन्नक्के कष्ट एन्दू अर्थवागुत्ते.)

**विप्रहस्ते प्रतापोऽपि नास्ति तद्गेहगा अपि ।**
**तण्डुलाश्च न सन्तीति वासुदेवमुनिं वद ।।२४।।**

**श्रीपते श्रीनिवासस्ते प्रसन्नोऽस्तु प्रभुः प्रियः ।**
**ब्राह्मणस्यान्नयत्नं त्वं प्राप्तवान् वै ममान्नदः ।।२५।।**

अन्वयः – हे श्रीपते! विप्रहस्ते प्रतापः अपि नास्ति । तद्गेहगाः अपि तण्डुलाः अपि न सन्ति इति च वासुदेवमुनिं वद ।।२४।। (तेन) प्रियः प्रभुः श्रीनिवासः ते प्रसन्नः अस्तु । ब्राह्मणस्य अन्नयत्नं प्राप्तवान्; त्वं मम (एव) अन्नदः वै ।।२५।।

(व्या) **हे श्रीपते!** 'इह अस्मिन् जन्मनि, विप्रः माधव्यावृत्त्या मानं तत्याज' इति **वासुदेवमुनिं प्रति वद** । इह सः प्रपन्नोस्तु[१] ।।२२-२३।। उत्तरत्र अन्यं प्रति, 'विप्रहस्ते प्रतापो नास्ति । तद्गेहगाः तण्डुलाश्च न सन्ति' इति श्रीनिवासं प्रति वद । **प्रियः प्रभुः श्रीनिवासः प्रसन्नोस्तु** । **'प्रियः'** इत्यनेन 'अस्मदीयकैरप्रियैः प्रतिबद्धं प्रियत्वादयं दापयति' इति सूचितं भवति । इह उत्तरत्र च त्वं ब्राह्मणस्य अन्नयत्नं प्राप्तवान् । तस्मात् त्वं ममैव अन्नदः । अनेन प्रथमजन्मनि विप्रोपकारार्थं वासुदेवमुनिं प्रति श्रीपतेर्वचनम् ।

द्वितीयजन्मनि अस्मदीयकैः प्रतिबद्धप्रतापदापनार्थं श्रीनिवासाख्यं प्रभुं प्रति कथनम् । तेन कार्यसिद्धिरिति निदर्शनमुक्तं भवति । अत्र वासुदेवमुनिं प्रत्येव कथनम् अभिप्रेतं चेत्, 'वासुदेवमुनिः प्रसन्नोस्तु' इति वक्तव्यम् । श्रीनिवासाख्यं प्रभुं प्रत्येव कथनमभिप्रेतं चेत्, अत्र 'वासुदेवमुनिम्' इत्यस्य अनुक्तिश्च स्यात् । श्रीनिवासस्य हरेः प्रसन्नत्वकथनं तु न प्रकृतसङ्गतम् । हरेः प्रसादस्य सर्वत्राप्यपेक्षितत्वात् । तस्मादयुक्तमिति भाति ।। (अत्र व्याख्यानं

---

(१) (इल्लिन व्याख्यानदल्लि अर्थ स्पष्टवागिल्ल. अर्थवेनेन्दरे, विप्रनु माधव्यावृत्त्या = भिक्षावृत्तियिन्द, मानं तत्याज = मानवन्नु कळेदुकोण्डु बिट्टनु. 'मानो हि महतां धनम्' दोड्डवरिगे मानवे दोड्ड आस्ति।।२२।। नन्निन्द हेळल्पट्ट मातु सत्य. तस्य गेहे च पश्य – अवन मनेयल्लि नीनु होगि नोडु. हे श्रीपते गुणभूषण श्रीमतः वाक्यं शृणु = दोड्डवर मातन्नु नीनु केळु ।।२३।। विप्रहस्ते ब्राह्मणन मनेयल्लि प्रतापद दुड्डू दवसवू इल्ल. तद्गेहगाः अपि तण्डुलाश्च न सन्ति । अवन मनेयल्लि अक्कियू इल्ल; हीगेन्दु वासुदेवमुनिगे हेळु ।।२४।। हे श्रीपते प्रिय प्रभुवाद श्रीनिवासनु निनगे प्रसन्ननागलि. एकेन्दरे नीनु ब्राह्मणनिगागि अन्न यत्नवन्नु माडिदवनागिदि. अदरिन्द ननगेने अन्न कोट्टवनागिद्दीये।।२५।। – एन्दु श्लोकार्थवन्नु तिळियबेकु.)

किञ्चिदसमञ्जसम् । वस्तुतस्तु श्रीपतिः विप्रावस्थां वासुदेवमुनिं प्रति जगाद । स च मुनिः समर्थत्वात् साक्षाद् वा परम्परया वा सकुटुम्बस्य विप्रस्य भोजनव्यवस्थां चकार । अनेन 'वृन्दावनस्थश्रीनिवासः श्रीपतिनामकाय मङ्गळं करोतु' इति गुरुराजः आशीर्वचनं करोति । एवं व्याख्यानस्य विवक्षितत्वात् किमप्ययुक्तं नास्ति । एतत् सप्तदशाध्यायव्याख्यानं श्रीमुष्णाचार्यभिन्नैः कृतमिति भाति ।।)

## ४. विप्रप्रकरणम् ।। श्लोकाः (२६–३७)

(व्या) **'विप्र त्वं मासपर्यन्तं'** इत्यारभ्य **'अतर्क्याणां दुरुक्तिभिः'** इत्यन्तं चतुर्थं विप्रश्रोतृकं प्रकरणम् ।।

**विप्र त्वं मासपर्यन्तं वासुदेवाभिधं मुनिम् ।**
**स्मरन् भुङ्क्ष्व करं तस्मै दातुं तव न विद्यते ।।२६।।**

**मम नन्दनधर्मेण चान्नं त्वं प्राप्तवानसि ।**
**पुण्यं भवेत्तस्य पुत्रकलत्रैः सह भोजनात् ।।२७।।**

**तस्याऽगमनपर्यन्तं तातहीनसुतोपमः ।**
**ब्राह्मणासि[१] सदाऽगण्यगुणं मां स्मर रक्षकम् ।।२८।।**

अन्वयः – हे (मम नन्दन?) विप्र! त्वं मासपर्यन्तं वासुदेवाभिधं मुनिं स्मरन् भुङ्क्ष्व । (अन्नदाय) तस्मै करं दातुं तव न विद्यते ।। मम नन्दनधर्मेण च त्वम् अन्नं प्राप्तवान् असि । पुत्रकलत्रैः सह भोजनात् तस्य (एव) पुण्यं भवेत् ।। हे ब्राह्मण! तस्य आगमनपर्यन्तं तातहीनसुतोपमः असि । (तस्मात्) अगण्यगुणं (तव) रक्षकं मां सदा स्मर ।।२६-२८।।

(व्या) **हे विप्र!** इह अस्मिन् जन्मनि तवोपकारकं वासुदेवाभिधं मुनिं **स्मरन्** सन् पुत्रमित्रकळत्रैः सह **मासपर्यन्तं भुङ्क्ष्व** । उत्तरत्र[२] तद्वदुपकारकं अन्यं स्मरन् भुङ्क्ष्व । तस्य प्रतिबद्धप्रतापसम्बन्धिनः **करं** प्राक् भुक्तक्रयरूपं पुनर्दातुं **तव** शक्तिर्न **विद्यते** ।। (त्वं **मम**

---

(१) (ब्राह्मणोऽसि) – पा

(२) (उत्तरत्र एन्दरे उत्तरजन्मनि एन्दर्थ. आदरे ई व्याख्यानद मूलदल्लि उत्तरजन्मद विषयवेनू हेळिल्ल.)

**नन्दनधर्मेण** श्रीपतिसहायेन अन्नं प्राप्तवानसि) पुत्रकळत्रैः सह तव भोजनात् **पुण्यं** इह वासुदेवमुनेः स्यात् । उत्तरत्र पुत्रमित्रसहितानां ब्राह्मणानां तव च भोजनात् **पुण्यं** श्रीपतेः श्रीनिवासाख्यस्य च भवेत् ।। **तस्य** श्रीपतेरुपकारकस्य अन्यस्य वा **आगमनपर्यन्तं** त्वं पितृहीनपुत्रसदृशोसि । **हे ब्राह्मण अगण्यगुणं रक्षकं मां स्मर** ।।२८।।

**तवोदरे वेदनादिव्याधिर्निस्सारितो मया ।**
**त्वत्पुत्रीं प्रति तत्रापि मर्दितश्चित्रमेव तत् ।।२९।।**

**तस्मात्सदाऽनुसन्धानमेवमेवास्तु ते बुध ।**
**कदा यास्यति मे पुत्रश्चेति चिन्तां त्यज द्विज ।।३०।।**

अन्वयः – (हे विप्र!) तव उदरे (उत्पन्नः) वेदनादिव्याधिः मया निस्सारितः । तत्र त्वत्पुत्रीं प्रति (प्राप्तः व्याधिः) अपि मर्दितः एव । तत् चित्रम् ।। तस्मात् हे बुध! द्विज! एवं सदा अनुसन्धानम् एव ते अस्तु । मे पुत्रः कदा यास्यति? इति चिन्तां च त्यज ।।

**(व्या) तव उदरे वेदनादिः व्याधिः मया निःसारितः** । **त्वत्पुत्रीं प्रति** प्राप्तः । **तत्रापि** मया स व्याधिः **मर्दितः** । **(एतच्चित्रम्** अद्भुतम् । औषधं विना रोगनिवारणम् । मया कृतमनुग्रहं नित्यं स्मर इति भावः) । आपाततः प्रतीतमेतत् । प्रथमजन्मनि सम्भावितम् । उपचारेण पुत्रिकां प्राप्तव्याधिमर्दनं तु द्वितीयादि जन्मन्यपि सम्भावितम्[१] ।। **(हे बुध! एवमेव)** 'तस्माद्रक्षकत्वेन एव **अनुसन्धानम**स्तु । **मे पुत्रः कदा यास्यति इति चिन्तां** त्यजस्व'[२] इति । 'क्रोधं त्यजस्व' इतिवत् । साक्षात् पुत्रागमनचिन्ता तु प्रथमजन्मन्येव सम्भाविता । करकमलजातादेरनागमनचिन्ता तु अन्यत्रापि सम्भाविता ।।३०।।

**(व्या)** एवमुपकारकाणां वासुदेवमुनिप्रभृतीनां वृत्तान्तमुक्त्वा, अपकारकस्य कमलनाभस्य

---

(१) (ई व्याख्यानकाररु मूलश्लोकोक्तप्रमेयगळन्नु विप्रन एल्ला जन्मगळिगू अन्वयिसलु यत्निसिद्दारे. विप्रन जन्मगळेष्टु प्रथमवु यावुदु द्वितीयवु यावुदु तृतीयवुण्टे स्पष्टवागि हेळिल्ल. एल्ला ऊहे. शोधने नडेसि इवन्नु तिळियबेकु.)

(२) (इल्लि सूचितवाद पुत्रनु यारु अदन्नु शोधने माडि तिळियबेकु. श्रीश्रीगळवरन्नू केळबेकु)

वृत्तान्तमाह – संसाराब्धेश्चेति ॥

**संसाराब्धेश्च यन्नेतृ होतृवत्कर्मवारिधेः ।**
**क्षेत्रवत्पुत्रपौत्राणां नेत्रं सज्ज्ञानमुच्यते ॥३१॥**

**तन्नष्टमासीद् भ्रष्टे च शिष्टवल्लोकवञ्चके ।**
**तर्हि भट्टस्य दृष्टान्ते दार्ष्टान्तिकविरुद्धता ॥३२॥**

**इति चेन्न च तत्रापि दृष्टिशब्देन सौष्टवात् ।**
**विङ्कलज्ञानमेवाग्र्य स्पष्टं ग्राह्यं न संशयः ॥३३॥**

अन्वयः – यत् संसाराब्धेः नेतृ, यत् कर्मवारिधेः च होतृवत्, यत् पुत्रपौत्राणां क्षेत्रवत्, तत् सज्ज्ञानं नेत्रम् उच्यते । शिष्टवत्लोकवञ्चके (कमलनाभे) भ्रष्टे च तत् (तादृश- ज्ञानं) नष्टमासीत् । तर्हि भट्टस्य दार्ष्टान्तिकविरुद्धता, इति चेत् न । तत्रापि दृष्टिशब्देन सौष्टवात् अग्र्यं (श्री) विट्ठलज्ञानम् एव स्पष्टं ग्राह्यं न च संशयः ॥

(व्या) संसारसमुद्रस्य नेतृ तारकम्, कर्मवारिधेः (नेतृ) होतृवत् । तत्फलसमृद्धि-सम्पादकं समीचीनं ज्ञानं नेतृशब्देन विवक्षितम् । तादृशं ज्ञानम् । शिष्टवल्लोकवञ्चके कमलनाभे नष्टमासीत् । कमलनाभे भट्टस्य सादृश्यकथनं कथम्? इति चेत्, न । तत्रापि विट्ठलज्ञानरूपायाः दृष्टेः (लुपत्वात्) लुप्तत्वेनैव भट्टदृष्टान्तकथनम् । न बाह्यदृष्टिलोपेन सादृश्यम् । यथा अज्ञानस्य तमसश्च । ज्ञानसूर्ययोश्च सादृश्यकथनेऽपि वैजात्यं विवक्षितम् । तथाऽत्रापि विवक्षितम् ॥३१-३३॥ (अग्र्य! हे श्रेष्ठ! विट्ठलज्ञानं यथा भट्टस्य नासीत् । तथा कमलनाभस्यापि नासीत् । एकः अवैष्णवकुले जातः । कमलनाभस्तु वैष्णवकुलजोऽपि न विष्णुभक्तः इत्यर्थः ॥)

**उभयाभिप्रायतश्च नेत्रशब्दार्थ उच्यते ।**
**उभयार्थेऽपि वाप्ये(ण्ये)कविषये वा तथैव च ॥३४॥**

**प्रामाण्यं मम वाक्यस्य ग्राह्यं लोके विचक्षणैः ।**
**निर्गुणैः पुरुषैः परुषवाक्येर्न शृणु दूषणम् ॥३५॥**

**अत एव पदं नेत्रं गृहीतं नयनादिकम् ।**
**न गृहीतं पदं विद्वन् उभयार्थस्य सङ्ग्रहे ।।३६।।**

**तस्मान्न कार्या शङ्का च वञ्चकानां दुरात्मनाम् ।**
**शुनकात्ममतस्थानामतर्क्याणां दुरुक्तिभिः ।।३७।।**

**अन्वयः – नेत्रशब्दार्थः उभयाभिप्रायतः च उच्यते । उभयार्थेऽपि, तथैव एक विषये अपि वा (मुख्यस्पष्टार्थे) एव उच्यते ।। लोके विचक्षणैः मम वाक्यस्य प्रामाण्यं च (तथैव) ग्राह्यम् । निर्गुणैः पुरुषैः परुषवाक्यैः (क्रियमाणं) दूषणं (हे विप्र, त्वं) न शृणु ।। हे विद्वन्! (विप्र!) अत एव उभयार्थस्य सङ्ग्रहे नेत्रं पदं गृहीतम् । नयनादिकं पदं न गृहीतम् ।। तस्मात् वञ्चकानां दुरात्मनां शुनकात्ममतस्थानाम् अतर्क्याणां दुरुक्तिभिः च (मत्कृतौ) शङ्का (कुशङ्का) न कार्या ।।३४-३७।।**

**(व्या)** 'नेत्रशब्देन अब्धितारकस्य नयनस्य च सङ्ग्रहः स्यात्' इति भावेन नेत्रशब्दप्रयोगः कृतः । नयनचक्षुरादिशब्दप्रयोगे तु तेनाब्धितारकस्याप्रतीतेः चक्षुरादिशब्दप्रयोगो न कृतः । नेत्रशब्देन गृहीतस्य कमलनाभपूज्यप्रतीकसन्निहितविठ्ठलज्ञानस्य कमलनाभे लुप्तत्वात्, भट्टस्य बाह्यनेत्रस्य लुप्तत्वात्, लुप्तैकनेत्रत्वसाम्येन भट्टदृष्टान्तकथनम् ।।३४ऽ३६।।

**तस्मात्** कुशङ्का **न कार्या ।।** अनेन ''मठदाहसमये । अग्निसम्बद्धप्रतीके पुनः सन्निधानं यत्प्रार्थनप्राप्तं, तस्य महत्वं श्रुत्वा कमलनाभः कुपितो भविष्यति । तद्भक्तवर्गे (गुरुराजभक्तवर्गे) भवदादौ द्वेषं करोति'' इति । उदरव्याधिनिःसारणं, श्रीपतेरुपकारश्चेति निदर्शनत्रयमस्मिन् प्रकरणे कथितं भवति ।[(१)]

## ५. विप्रशिष्यतम्मणप्रकरणम् ।। श्लोकाः (३८-४२)

---

(१) (सीरूरु मठदल्लि श्रीमदाचार्यदत्तविठ्ठलप्रतीकवित्तु. अदु मठदाहकालदल्लि बेङ्कि तगुलि दग्धप्रायवायितु. आग श्रीवादिराजस्वामिगळु आ प्रतीकवन्नु सरिपडिसि स्वप्रार्थनेयिन्द पूर्वदन्ते विठ्ठलस्वामि सन्निधानयुक्तवन्नागि माडिकोट्टु, आगिन सीरूरु मठद यति (श्रीश्री...)गळन्नु अनुग्रहिसिदरु. तम्मिन्द प्रतिष्ठितवाद हयग्रीवप्रतिमेयन्नू कोट्टरु. हीगे उपकृतमठद वंशदल्लि प्राप्तराद 'कमलनाभ'यतिगळु वादिराजरल्लि भक्तिमाडदे वादिराजर वंशदल्लि प्राप्तराद वृन्दावनाचार्यरल्लि द्वेषकार्यवन्ने नडेसिदरेन्दु भाव. कुमारभट्ट द्वैतज्ञानशून्य. हागेये कमलनाभनू द्वैतज्ञानरहितनु.

(व्या) 'हे तम्मण' इत्यारभ्य 'भज मां भुजगेश्वरम्' इत्यन्तं तम्मणश्रोतृकं प्रकरणं पञ्चमम् ।।

**हे तम्मण शृणुष्वाद्य भणस्व त्वं गुणाधम ।**
**मद्वाणीं श्लोकसुश्रेणीं ब्राह्मणेन च वर्णिताम् ।।३८।।**

**नोचेत्त्वां प्रति यास्यन्ति शीघ्रं तु यमकिङ्कराः ।**
**मद्द्रोहकरमाराद्वै शरणं व्रज मां ततः ।।३९।।**

**रदनैर्लोहितश्मश्रुकराळवदनैरपि ।**
**दमनैर्भीषयन्तस्त्वां दमनैर्भ्रष्टमानसम् ।।४०।।**

**तदा मोचक एवाहं सूचकैरतिदोषिणम् ।**
**कीचकादतिदुर्बुद्धिं शोचकं मामकं द्विजम् ।।४१।।**

**तस्मान्मदुक्तमर्यादां मा त्यज त्वं द्विजाधम ।**
**वृन्दावनगतं नित्यं भज मां भुजगेश्वरम् ।।४२।।**

अन्वयः – हे गुणाधम! तम्मण! अद्य त्वं ब्राह्मणेन वर्णितां श्लोकसुश्रेणीं मद्वाणीं शृणुष्व । (श्रोतॄन् प्रति) भणस्व च ।। नो चेत्, मद्द्रोहकरं त्वां प्रति यमकिङ्कराः (यमदूताः, दण्डाधीशस्य दूताः वा) शीघ्रं तु यास्यन्ति वै । ततः आरात् (शीघ्रं) । (तदा) मां शरणं व्रज ।। (यदा) दमनैः (शिष्टोपद्रव्यैः) सूचकैः (विप्र अपवादिभिः) अतिदोषिणं, भ्रष्टमानसं, अतिदुर्बुद्धिं, मामकं द्विजं शोचकं त्वां (प्रति) लोश्मस्मश्रुकराळवदनैः दमनैः रदनैः अपि भीषयन्तः (सन्तः) आरात् (शीघ्रं यास्यन्ति) । तदा कीचकात् (कीचकवनात्) अहमेव (तव) मोचकः ।। तस्मात् हे द्विजाधम! मदुक्तं मर्यादां त्वं मा त्यज । वृन्दावनगतं भुजगेश्वरं (स्वरूपज्ञानपूर्वकं) मां नित्यं भज ।।३८-४२।।

(व्या) अयं तम्मणो विप्रशिष्यः । तदन्यः कमलनाभसखा च । **हे तम्मण । हे गुणाधम! ब्राह्मणेन वर्णितां** = तेनोपदिष्टां तन्मुखनिर्गतां, **मद्वाणीं श्लोकसुश्रेणीं शृणु । भण!** श्रोतॄन् प्रति वद । पारायणं कुरु ।। ३८।। **नो चेत्,** श्रवणपठनाभावे **त्वां प्रति यमकिङ्कराः** यमदूताः,

दण्डाधीशस्य दूता वा[१] **शीघ्रं यास्यन्ति** ।।३९।। **दमनैः** शिष्टोप- द्रव्यैः **भ्रष्टमानसं आरात् शीघ्रं मद्द्रोहकरं** त्वां **लोहितश्मश्रुकराळवदनैः भीषयन्तः** सन्तः **यास्यन्ति** । **तदा कीचकात्** कीचकवनादहं मोचकः । अन्यपक्षे कीचकात् अतिदुर्बुद्धिं त्वां यदा दण्डाधिपतिदूताः भीषयन्ति, तदाहं दण्डाधिपतेः सकाशात् तव **मोचकः** । **वृन्दावनगतं मां भज** । विप्रशिष्यपरत्वे वृन्दावनपूजको भवेत्यर्थः । तदन्यपरत्वे वृन्दावनगतत्वेन मां स्मर । किञ्चिद्भक्तिमात्रेण तम्मणयोः प्राणपालनरूपं निदर्शनमत्रोक्तं भवति ।।४१-४२।।

## ६. भूपप्रकरणम् ।। श्लोकाः (४३-५२१/२)

**(व्या) 'हे भूप'** इत्यारभ्य **'राज्यं ते रक्षयिष्यति'** इत्यन्तं भूपश्रोतृकं षष्ठं प्रकरणम् ।

**हे भूप भक्त शुभदेऽत्र भवे भवे च भक्तिं कुरु त्वमपि ते च सुसौभगाय ।**
**वृन्दावने कदनकोविद चेति पूर्वं केदारकाख्यमपि घोषमिह त्यजस्व ।।४३।।**

**एवं चेत्तव चायुष्यवृद्धिर्हि भविता सदा ।**
**समृद्धिर्धनधान्यं च गजवाजिनृणामिह ।।४४।।**

अन्वयः – हे कदनकोविद भक्त भूप! शुभदे अत्र भवे भवे च ते (तव) सुसौभगाय च त्वम् अपि (मयि) वृन्दावने च भक्तिं कुरु । पूर्वं (अपहृतं) केदारकाख्यं घोषं (ग्रामं) अपि इह त्यजस्व । इति पूर्वं (मया उक्तं स्मर) ।। एवं चेत् तव आयुष्यवृद्धिः च भविता हि । इह गजवाजिनृणां धनधान्यसमृद्धिः च सदा हि भरति ।।४३-४४।।

**(व्या) हे भूप!** शुभप्रदे जन्मनि जन्मनि । **तव सौभाग्याय** । मयिभक्तिं कुरु । 'वृन्दावने मदनमर्दन' इत्यनेन यदुक्तं (१।५१; ११।१९)[२] तदनुसन्धत्स्व । **हे कदनकोविद!** (अथवा कदनकोविद इति ३।५४श्लोकोक्त वेदवेद्यगुणान् अनुसन्धत्स्व) पूर्वं प्राक्तनं (अ१५।

---

(१) (ग्रामरक्षकररु = पोलीस्नवरु)

(२) (पूर्वं ऽ अध्याय १।५१रल्लि वृन्दावने एन्दु आरम्भिसल्पट्टिरुव रामस्तुति इदे. ११।१९रल्लू इदे. अ.१५। श्लोक १६रल्लि ग्रामापहारविषयविदे. अ.३।श्लोक५४रल्लि 'कदनकोविद' एन्दु वेदवेद्यरन्नु स्तुतिसिद्दारे. वेदवेद्यरल्लि भूपभक्ति माडबेकेन्दु सूचने माडुव विशेषण)

श्लो.१६८२३ इत्यत्र वर्णितं) **केदारकाख्यं** ग्रामं त्यजस्व ।।४३।। एवं चेत् **तवायुर्वृद्धिर्भविता** भविष्यति । **धनधान्यं** च भविष्यति । गजवाजनृणां समृद्धिश्च भविष्यति ।।४४।।

(व्या) 'केदारकाख्यं घोषं (ग्रामं) त्यजस्व' इत्युक्तम् । तत् केन कस्मै दत्तम् इत्यत आह – **तवाग्रजेन इति** ।।

**तवाग्रजेन दत्तं वै धारापूर्वं द्विजस्य च ।**
**द्विजेन मम दत्तं च सम्मत्या तेऽग्रजन्मनः ।।४५।।**

अन्वयः – पूर्वं तव अग्रजेन धारापूर्वं द्विजस्य (तत् घोषं) दत्तं वै । ते अग्रजन्मनः सम्मत्या च मम दत्तम् ।

(व्या) **पूर्वं** = पूर्वजन्मनि । **तवाग्रजेन** । ब्राह्मणस्य **दत्तम्** । तवाग्रज**सम्मत्या** ब्राह्मणेन **मम दत्तम्** । प्रागुक्तं घोषं त्यजस्व (**धारापूर्वं** कृष्णार्पणमस्तु इति जलार्पणपूर्वकं यथा भवति तथा) ।।४५।।

(अव) परदत्तपरिपालने किं फलम् तदभावे किमनिष्टम् इत्यत आह – **स्वदत्ता-मिति** ।।

**'स्वदत्ताद् द्विगुणं पुण्यं परदत्तानुपालने ।**
**परदत्तापहारेण स्वदत्तं निष्फलं भवेत्' ।।४६।।**

**'स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम् ।**
**षष्ठिवर्षसहस्राणि विष्ठायां जायते कृ(क्रि?)मिः' ।।४७।।**

**इति पूर्वप्रमाणाभ्यां मद्वाक्यस्य च गौरवात् ।**
**त्यज राजन् सुभीरुः सन् न भारं तव चावनम् ।।४८।।**

**भज राज्यं धराभारं हन त्वं कनकं नय ।**
**कोदां कोलाहलेनैव कुरु वृद्धं समृद्धिमन् ।।४९।।**

**वैरिभिः पौरवृद्धांस्तं पूजयादत्स्व तैर्जयम् ।।**

अन्वयः – (हे भूप!) परदत्तानुपालने स्वदत्ताद् द्विगुणं पुण्यम् । परदत्तापहारेण

**स्वदत्तं (तु) निष्फलं भवेत् । स्वदत्तां परदत्तां वा वसुन्धरां यः हरेत् (सः) षष्टिवर्षसहस्राणि विष्टायां कृमिः जायते ।। इति पूर्वप्रमाणाभ्यां मद्वाक्यस्य गौरवात् च, हे राजन्! (त्वं) सुभीरुः सन् (विप्रस्य तत् घोषं) त्यज । (ते तत्करणं विप्रस्य) अवनं च तव न भारम् ।।**

**हे समृद्धिमन्! त्वं राज्यं भज । धराभारं हन । त्वं वैरिभि कनकं नय । कोदां (कोशं) कोलाहलेनैव वृद्धिं (वृद्धं) कुरु ।। पौरवृद्धान् त्वं पूजय । तैः (आशीर्वादद्वारा) जयम् आदत्स्व । वैरिभिः समृद्धिमन् ।।**

(व्या) (इति पुराणवाक्यद्वयं स्पष्टार्थकम्) । **हे राजन् ! त्वं भीरुः सन्, राज्यं भज** । **धराभारं** भूभाररूपं शत्रुसमूहं हन । **हे समृद्धिमन्! धरां कोदां कुरु** = धर्मेण राज्यं पालयित्वा सुवृष्ट्यादिना धरां सुखसाधनजलवतीं कुरु ।। (हे राजन्! सुभीरुः सन् नरकभीतिः युक्तः, त्यज । मदाज्ञानुसारेण दत्तग्रामं त्यज । अवनं च तव न भारम् । तद्ग्रामरक्षणं च । पूर्वकृतदानपालनं च । नाशक्यं तव ।।४८।। राज्यं भज । तव राज्यं निर्विघ्नं भज । पूर्वदत्तानुपालनेन उत्कटपुण्यं भविष्यति । तेन तव राज्यं सुरक्षितं भवतीति भावः ।। (नियमेन जनैः भुज्येते धर्माधर्मफले मृतौ । कैश्चिदत्रैव भुज्येते तस्मान्नाधर्ममाचरेत् ।। इति भागवतविजयध्वजीयव्याख्याने) धरायाः भारं भारभूतं दुर्जनवर्गं हन । **कनकं नय** सुवर्णादि धनसङ्ग्रहं कुरु । **हे समृद्धिमन्** पुण्यशील । कोदां = कोशम् । सन्तोषेण वृद्धं कुरु ।।) पौरेषु ये वृद्धाः तान् **पूजय** । तैः जयं सम्पादय । **वैरिभिः समृद्धिमन्** इत्यनेन वैरिणा अपि भूपस्य किञ्चिदुपकर्तृत्वं सूचितं (भवति) ।।४९ १/२।।

### भूपप्रकरणान्तर्गतविप्रप्रकरणम् ।। श्लोकाः (५०-५१)

(व्या) 'भज त्वं द्विज' इत्यारभ्य सार्धपद्यं 'बहु हातुं त्वमिच्छसि' इत्यन्तं भूपप्रकरणान्तर्गत विप्रश्रोतृकमवान्तरप्रकरणम् ।।

**इति त्वं द्विज सार्धं च श्लोकद्वयमनुत्तमम् ।।५०।।**

**त्यक्तवानसि त्वच्छोकछेदकोऽहं न संशयः ।**
**तस्मादालस्यहेतोस्तु बहु हातुं त्वमिच्छसि ।।५१।।**

अन्वयः – हे द्विज! (विप्र!) इति सार्धम् अनुत्तमं श्लोकद्वयं त्वं त्यक्तवानसि ।

तस्मात् आलस्य हेतोः तु बहु हातुं त्वम् इच्छसि ।।५०-५१।।

(व्या) (हे विप्र! 'इति पूर्वप्रमाणाभ्यां ..... तैर्जयं' इति सार्धश्लोकद्वयम् अनुत्तमं सर्वोत्तमं, धर्मबोधकत्वात् परमश्रेष्ठं त्यक्तवानसि ।।५०।। अनेन त्यागेन प्रसक्तशोकम् अहं परिहरामि । तस्मात् 'मद्गुरुः मां रक्षति' इति धैर्यातिशयेन आलस्यं पाप्य, उक्तश्लोकान् विस्मृतवानसि । न तथा कुरु इति भावः ।।)

पुनर्भूपविप्रप्रकरणम्।। श्लोकाः (५२ऽ५२१/२)

**समस्तधर्मरक्षार्थी राघवो राज्यहा परैः ।**
**विप्रक्षेत्रापहारं तन्मा कुरु त्वं करानपि ।**
**नाऽदत्स्व तव नाथश्च राज्यं ते रक्षयिष्यति ।।५२।।**

अन्वयः – (हे भूप!) समस्तधर्मरक्षार्थी राघवः परैः (अपहृत) राज्यहा । (तस्मात्) त्वं विप्रक्षेत्रापहारं च मा कुरु । करान् अपि न आदत्स्व । तव नाथः (श्रीरामः) ते राज्यं च रक्षयिष्यति ।।५२।।

(व्या) समस्तधर्मपालको रामः । शत्रुवशं गतं राज्यं ते दत्वा रक्षयिष्यति । त्वं विप्रक्षेत्रापहारं मा कुरु । पूर्वप्रकरणोक्ततम्मणयोः किञ्चिद्भक्तिमात्रेण प्रसक्तानिष्टपरिहारकः; तव तु विशेषेणाहमनुग्राहकः । मदुक्तरीत्या परदत्तपालने कृते सति राघवो राज्यं पालयिष्यति इति निदर्शनमुक्तं भवति ।।भू.प्र.सं.।।

७. विप्रप्रकरणम्।। श्लोकाः (५३-५७) (अपमृत्यु अपरिहारः)

(व्या) 'हे शुण्ठ विप्र' इत्यारभ्य 'सर्वैरप्यनिवारितम्' इत्यन्तं विप्रश्रोतृकं सप्तमं प्रकरणम् ।।

**हे शुण्ठ विप्र तव कण्ठगतं च प्राणं शौण्ठामि कुण्ठितगतेरहमेव शीघ्रम् ।**
**मन्मण्टपं तव हृदन्तिकमश्रमात्रमौत्कण्ठ्यतो यदविकुण्ठगतेः प्रियं तत् ।।५३।।**

**तस्मात्प्राणं निस्सरन्तं वारयामि वरेण्यकम् ।**
**मरणं प्रहराम्येवं शरणं व्रज मां मुनिम् ।।५४।।**

अन्वयः – हे शुण्ठ विप्र! कुण्ठितगतेः तव कण्ठगतप्राणं (श्रीमुख्यप्राणं) च शीघ्रम्

अहमेव शौण्ठामि । यत् अविकुण्ठगतेः प्रियं तव हृदन्तिकं मन्मण्टपं तत् औत्कण्ठ्यतः मात्रम् अश्व ।।५३।। (तेन = आराधनेन) निस्सरन्तं वरेण्यकं प्राणं वारयामि । एवं (तव) मरणं प्रहरामि । तस्मात् वरेण्यकं (वरणीयं) मुनिं मां शरणं व्रज ।।५४।।

(व्या) हे शुण्ठ! विप्र कुण्ठितगतेः प्रतिबद्धगतेः तव कण्ठगतप्राणं मुख्यप्राणं शीघ्रम् अहमेव शौण्ठामि = पुनः शरीरे स्थिरं करोमि । अविकुण्ठगतेः प्रियं यत् मदीयं मण्टपं (वृन्दावनं) तव हृदन्तिकं त्वन्मनः सन्निकृष्टं प्राप्य । तद्गतं माम् औत्कंठ्यतः अश्व पूजय ।।५३।। तेन प्रसक्तमरणं परिहृत्य वरणीयं मुख्यप्राणं वारयामि । 'मद्भक्तशरीरं विहाय न गच्छ' इति वारयामि (मां मुनिं शरणं व्रज) ।।५४।।

(व्या) 'शुण्ठ' इत्यस्य 'शोकरहित' इत्यर्थबोधयितुमाह – शुण्ठेति ।।

**शुण्ठेत्यत्र शुशब्देन शोको ग्राह्यः शुभस्य ते ।।५५।।**

**ठेति तच्छून्य एवायं कृष्णभट्टाभिधः पुरा ।**
**उच्यते मुच्यते रोगदुःखेन सुचरित्रिणा ।।५६।।**

**प्रोच्यते चोत्तरग्रन्थः सौचित्येन मया ततः ।**
**पुरेति गुरुणैवेह मया दत्तं नरैर्न ते ।।५७।।**

**आचार्यत्वं स्थिरं तस्मात्सर्वैरप्यनिवारितम् ।**

अन्वयः – शुण्ठ इत्यत्र 'शु'शब्देन शुभस्य ते शोकः ग्राह्यः । ठ इति अयं तत् शून्य एव । पुरा कृष्णभट्टाभिधः उच्यते । (तेन) रोगात् (तज्जन्यं) दुःखेन मुच्यते । ततः सुचरित्रिणा मया उत्तरग्रन्थः च सौचित्येन प्रोच्यते ।। पुरा इह (लोकैक)गुरुणा मया एव दत्तं, नरैः न । (किन्तु) कृष्ण(गोपाल)भट्टेन ते आचार्यत्वम् इति स्थिरं (जातम्) । तस्मात् सर्वैः अपि अनिवारितम् ।।५७।।

(व्या) एवं सम्बोधनेन तव प्रसक्तशोकपरिहारो भविष्यति । पुरा[१] आचार्य सुचरित्रिणा

---

(१) (त्वस्थै या पूर्वं कृष्णभट्टाभिधः गोपालभट्टनामकः विप्रोपकारी रोगान्मुच्यते । (दुःखेन च मुच्यते) – इह्लि तस्मात् एम्ब पदक्के कृष्णभट्टात् एन्दु, कृष्णभट्टात् एन्दरे गोपालभट्टात् एन्दु सांप्रदायिकव्याख्यान

**मया सौचित्येन** सुचित्तत्त्वेन **उत्तरग्रन्थः** = उत्तरत्र भविष्यवृत्तान्तबोधको ग्रन्थः **उच्यते** ।। (पुरा) पूर्वं **मया** परमहंसपरिव्राजकाचार्यत्वं **दत्तम्** । तत् मदीय वरलब्धस्य आचार्यत्वस्य प्राप्त्यनन्तरं सर्वैः विप्रद्वेषिभिः निवारितं प्रतिबद्धम् । **'तस्मात्'** = गोपालभट्टात् स्थिरं जातम् । बहूनां प्रतिबन्धे सत्यपि गोपालभट्टसहायेन विप्रस्याचार्यत्वं स्थिरं जातमित्यर्थः ।।

'न केवलं तम्मणभूपादीनां अनिष्टपरिहारः । विप्रोपकारकस्य कृष्ण(गोपाल)भट्टस्यापि प्रसक्तानिष्टपरिहारो भविष्यति' इति किमुवक्तव्यमिति निदर्शनमुक्तं भवति ।।

## ८. सूर्यभट्टप्रकरणम्।। श्लोकौ: (५८-५९ १/२)

**(व्या) 'हे सूर्यनामधार'** इत्यादि पद्यद्वयं सूर्यनामकश्रोतृकं प्रकरणं अष्टमं ।।

**हे सूर्यनामधाराद्य सूर्यवत्सुप्रभान्वित ।।५८।।**

**सूर्यवन्मम गूढार्थकृतिं सूरिजनेष्विह ।**
**प्रकाशय विकासन्ते मतयस्ते सकाशतः ।।५९।।**

**वराका अपि शोकार्ताः निःशोकाश्च भवन्तु ते ।**

अन्वयः – सूर्यवत् सुप्रभान्वित हे सूर्यनामधार इह सूरिजनेषु मम गूढार्थकृतिं सूर्यवत् अद्य प्रकाशय । (ततः तेषां) मतयः ते सकाशतः विकासन्ते । शोकार्ता वराका अपि ते निश्शोकाश्च भवन्तु ।।

**(व्या) हे सूर्यनाम** वाच्य! **सूर्यवत्** प्रभया प्रतिभारूपया युक्त ।।५८।। ज्ञानिजनेषु **मम गूढार्थकृतिं** गूढार्थकां कृतिं वद । तव सकाशात् इह कृत्यर्थविषये **मतयः विकासन्ते** ।।५२।। **शोकार्ताः वराकाः** तुच्छा अपि । **ते** त्वदीयाः त्वन्मुखतः श्रुत्वा, **निःशोका भवन्तु** । यथा विप्रसम्बन्धिनः कृष्ण(गोपाल)भट्टस्य रोगपरिहारः तथा मद्भक्तस्य तव सम्बन्धिनामपि निःशोकत्वमभवत् इति निदर्शनमुक्तं भवति ।।सू.भ.प्र.सं.।।

## ९. लक्ष्मीपतिप्रकरणम्।। सार्धश्लोकः (६०-६० १/२)

**(व्या) 'लक्ष्मीपते'** इत्यारभ्य एकं पद्यं लक्ष्मीपतिश्रोतृकं नवमं प्रकरणम् ।।

---

तिळियबेकु)

**लक्ष्मीपते वदस्व त्वं भूसुरोत्तम सूरु(र)णम् ।।६०।।**

**कारणं पुण्यराशीनां वचनं मम जानताम् ।**

अन्वयः – भूसुरोत्तम हे लक्ष्मीपते! त्वं जानतां पुण्यराशीनां कारणं मम वचनं सूरणं वदस्व ।।

(व्या) (हे लक्ष्मीपते) जानतां पुरुषाणां पुण्यराशीनां कारणं मम वचनं सूरणं प्रति सूर्यनामधारकं प्रति वद । लोकव्यवहारानुसारेण सूर्यस्य 'सूरण' इत्युक्तिरिति भाति । लक्ष्मीपतेः मुखतः श्रुत्वा, सूर्यः मतिविकासं प्राप्नोतीति निदर्शनमुक्तं भवति ।।ल.प.प्र.सं.।।

### १०. उपेन्द्रभट्टश्रोतृक प्रकरणम्।। सार्धश्लोकौः(६१-६२ १/२)

(व्या) 'उपेन्द्रभट्ट तां शिष्ट' इति पद्यद्वयम् उपेन्द्रनामकभक्तश्रोतृकं प्रकरणं दशमम् ।।

**उपेन्द्रभट्ट तां शिष्ट कामधेनुरिति स्फुटम् ।।६१।।**

**सर्वाभीष्टानि दातुं ते पद्वीं मत्कृतिकां पठ ।**
**उपेन्द्रनामधेयाद्य कामधेनुरिव प्रिय ।।६२।।**

**सर्वाभीप्सितदात्रीं मे वृन्दावनकृतिं वद ।**

अन्वयः – हे शिष्ट उपेन्द्रभट्ट! (ते) सर्वाभीष्टानि दातुं पद्वीं मत्कृतिकां पठ । 'कामधेनुः' इति (पद्यं च श्लोकं च) स्फुटं पठ (जप) ।। हे प्रिय! उपेन्द्रनामधेय अद्य कामधेनु इव सर्वाभीप्सितदात्रीं मे (मम) वृन्दावनकृतिं वद ।।

(व्या) हे उपेन्द्रभट्ट । ते सर्वाभीष्टानि दातुं पद्वीम् ।।६१।। मत्कृतिकां पठ । 'कामधेनुः' इति पद्यं जप । प्रिय! हे उपेन्द्रनामधेय! कामधेनुरिव सर्वाभीप्सितदात्रीं मे वृन्दावनकृतिं वद । सूर्याख्यवत् उपेन्द्राख्यस्यापि कृतिपठनकथनरूपनिदर्शनमत्रोक्तं भवति ।।

### ११. विप्रप्रकरणम्।। श्लोकाः (६३-७६ १/२)

**कनकाकृष्णभट्टोऽपि कनकार्जनतत्परः ।।६३।।**

**मनसा तृप्तिहीनः सन् मनाग्गच्छति गच्छति ।**
**हिरण्यभट्ट एवायं हिरण्यार्जनतत्परः ।।६४।।**

**हिरण्य इव कारुण्यविषयोऽत्र भभूव ह ।**

अन्वयः – हे विप्र! कनकार्जनतत्परः कनकाकृष्णभट्टः अपि मनसा तृप्तिहीनः (सन्) मनाक् गच्छति । (उपरितनअध्यायान्) गच्छति ।। हिरण्यार्जनतत्परः अयं हिरण्यभट्टः हिरण्य इव अत्र कारुण्यविषयः बभूव ह ।।

**(व्या) हे विप्र! मनसा** तृप्तिहीनत्वे सति कनकार्जनतत्परत्वरूपलक्षणोपेतः कनकाकृष्णभट्टः ।।६३।। (सः) मत्कृतिं मनाक् किञ्चित् अध्यायचतुष्टयपर्यन्तं गच्छति अधिगच्छति । (तथैव) बह्वपिलब्धं धनं मनाक् अधिगच्छति । स्वल्पत्वेन जानाति । एवं हिरण्यभट्टः (अन्यः हिरण्यभट्टनामकः) हिरण्यार्जनतत्परत्वे सति हिरण्यवत् कारुण्यविषयत्वरूपलक्षणोपेतः (जनैरादृतः इत्यर्थः) । मत्कृतिं मनाक् अधिगच्छति । (अत्र कृतौ एव एवं बभूव ह) ।।

**सरसा भारती या वै तस्या नामधरोऽपि सन् ।।६५।।**

**विरसोऽपि भवेदत्र नारसिंहो नराधमः ।**

अन्वयः – नराधमः नरसिंहः या सरसा भारती तस्याः नामधरः सन् अपि अत्र (मत्कृतौ) विरसः अपि भवेत् वै ।।

**(व्या) या भारती** वाणी सरसा रससहिता । **तस्याः** सहिता । तस्याः सकाशात् **नामधरः** । प्रसिद्धिमान् सरसभारत्याख्यातः नरसिंहः मौद्गलनारसिंहः । **अत्र विरसः** विविधा रसाः यस्येति विलक्षणा रसाः यस्येति वा भवेत् । **नराधमः ।** नरश्रेष्ठेति वक्ष्यमाणानुसारेण स्तुतौ तात्पर्यं चेत् । नराः अधमाः यस्मात् इति विग्रहो मन्तव्यः[१] ।

---

(१) (श्रीसत्यधर्मतीर्थरु १७९७ऽ १८३० रवरेगे पट्ट. सत्यधर्मर पूर्वाश्रमद हेसरु अण्णय्याचार्यरेम्बुदु. अवरु मुद्गलाचार्यर मक्कळु. मुद्गलाचार्यरु 'नवरत्न' वंशदवरु. अवर कुलदेवरु लक्ष्मीनरसिंहदेवर अनुग्रहदिन्द मुद्गलाचार्यरिगे पुत्र सन्तानवायितु. शिशुविगे पुरुषोत्तमनेन्दु नामकरण माडिदरु. आदरे गुत्तियल्लि पाठ हेळिकोण्डु अवरु अण्णय्याचार्यरेन्दे प्रसिद्धरादरु. अवर काल सुमारु १७५०ऽ१८३०. अवरिगे सत्यबोधरल्लि पाठ. सत्यवररु इवरिगे आश्रमकोट्टु सत्यधर्मरेन्दु करेदरु. दिवान् पूर्णय्यनवरु सत्यधर्मर शान्तिपाठद शिष्यरु. शरीगळु १६सल सुधामङ्गळ माडिदरु. इवरु सरसकवि. विकृतसं. श्रावणशुद्ध १३नेय दिन होळेहोन्नूरल्लि इवर वृन्दावनवायितु. ८०वर्ष इद्दरु. इवरिगे गङ्गाप्रत्यक्ष. इवर वृन्दावनद मुम्भागदल्लि एरडु लिङ्गगळु उद्भविसिवे. इवरु रुद्रांशरेन्दु प्रसिद्धि इदे. इवरिगे सवणूरिनल्लि पूर्वाश्रमदल्लि नवाबनिन्द

**दाम्बळौ पित्तमौळी द्वौ हरिनारायणावपि ।।६६।।**

**ब्राह्मणाचार्यनामापि युक्तं वृन्दावनेन च ।**
**न वदन्तौ सुधान्तेषु ग्रन्थेषु कुशलाविव ।।६७।।**

**मदवन्तौ मदान्धौ तौ मत्कृतौ भक्तिबाह्यकौ ।**

(अन्वय:) – सुधान्तेषु ग्रन्थेषु (अकुशलौ अपि) कुशलौ इव मदवन्तौ मदान्धौ, मत्कृतौ भक्तिबाह्यकौ दाम्बळौ पित्तमौळी हरिनारायणौ द्वौ अपि वृन्दावनेन युक्तं च ब्राह्मण नाम अपि (तत्) न वदन्तौ ।।

(व्या) **हरिनारायणनामकौ** दम्बलाख्यग्रामसम्बन्धिनौ । **पित्तमौळी** = शिरसि पित्तरोगयुक्तौ ।।६६।। **द्वौ सुधान्तेषु ग्रन्थेषु** अकुशलावपि **कुशलाविव** अहङ्कारिणौ । वृन्दावननामसहितं ब्राह्मणस्य यदाचार्य (इति) नाम । तत् **न वदन्तौ** । मत्कृतौ (वृन्दावनाख्याने) **भक्तिरहितौ** ।।६६।।

**इत: परं जना: सर्वे चौदासीन्यपरा मयि ।।६८।।**

**मत्कृतिं न वदन्त्यत्र पश्यन्त: पुत्र तत्फलम् ।**

---

निगडबन्धवागतक्क प्रसङ्ग बन्तु. आग वादिराजर सेवे माडिदरु. कूडले परिहारवागि आ प्रसङ्ग तप्पि सुखियादरु. आ ज्ञापक अवरिगे सत्तमेलू होगलिल्ल. एकेन्दरे वृन्दावनस्थराद मेले सोदेवादिराजरिगे नैवेद्य माडि ननगे माडेन्दरु. ईगलू आ वृन्दावनदल्लि हागेये नडेयुत्तिदे. अवरिगे सरसभारतीविलास कंठपाठ बरुत्तित्तु. अवरन्नु 'नरश्रेष्ठ' एन्दु मुन्दे ई ग्रन्थदल्लि गुरुराजरु करेदिद्दारे. इल्लि नराधम: एन्दिरुवुदु एकेन्दरे एन्थ पण्डितनादरू वृन्दावनाख्यानवन्नु नोडि, पारायणादिगळिन्द अभ्यासमाडिदमेले स्वप्रतिभेयन्नु चेन्नागि पडेयुत्तानेन्दु सूचिसुवुदक्कागि. हागे अण्णय्याचार्यरु मुन्दे आख्यानग्रन्थदल्लि विश्वासवुळ्ळवरादरु. सोदे मठद श्रीवृन्दावनाचार्यरिगे स्वमठदल्लि पूजे माडिसि सत्कारमाडि कळुहिसिदरेन्दु विश्वप्रियविलासदल्लि हेळिदे. 'श्रीसत्यवरवाराशिसम्भूतश्चिन्तितार्थद: । चिन्तामणि: सत्यधर्मशर्मास्याच्छर्मद: सदा ।।' एन्दु चरमश्लोक. पट्ट ३२वर्ष आळिदरु. भागवतद ६,७,८,९,१०,१२ स्कन्धगळ टिप्पणि बरेदिद्दारे. गङ्गास्तुति, तत्वसङ्ख्यानटिप्पणि इत्यादि ग्रन्थ रचिसिद्दारे. इवर कालदल्लि होळे नरसीपुरदल्लि मठ सुट्टु होगि चिन्न बेळ्ळिगळेल्ला करगि होयितु. पुन: संपादिसिदरु. बेङ्कि हत्ति उरियुत्तिद्दाग देवर पेट्टिगेयन्नु न्दन्नु तेगेदुकोण्डु होरगे स्वामिगळु बन्दरु. वृन्दावनाख्यानदल्लि नारसिंह, नरश्रेष्ठ, पुरुषोत्तम मुन्ताद नामगळिन्द गुरुराजरु अवरन्नु सूचिसिद्दारे.)

**महापुण्यं गुणाढ्यस्य भवतीह दिने दिने ॥६९॥**

**लेखनाद्वाचनाल्लक्ष्मीपतिभट्टस्य नन्दन ।**

अन्वयः – हे पुत्र (विप्र)! अत्र इतःपरं मयि औदासीन्यपराः सर्वे जनाः च तत्फलं पश्यन्तः (अपि) मत्कृतिं न वदन्ति । (किन्तु) हे नन्दन! गुणाढ्यस्य लक्ष्मीपतिभट्टस्य (एतत् कृतेः) लेखनात् वाचनात् (च) दिने दिने, महापुण्यं (महत्पुण्यं) इह भवति ॥

(व्या) एतदादयो दुर्जनाः मत्कृतौ भक्तिरहिताः । (मयि **औदासीन्यपराश्च** । मदृजुत्वे अनिर्णीतमनस्काश्च) ॥६८॥ (अत एव प्रायेण सर्वे जनाः **मत्कृतिम्** अत्र साधनशरीरे प्राप्तेपि **न वदन्ति** । इतरेषां परायणकर्तॄणां प्राप्तमङ्गळफलं [१]पश्यन्तोऽपि आख्यानपारायणं नैव कुर्वन्तीति भावः) **सत्फलं न पश्यन्तः** कुत्सितफलं प्राप्नुवन्ति ।

(एतत् कृते प्रतिदिनपारायणात् गुणाढ्यस्य ऋजुत्वज्ञानवतः अधिकारिणः महत्पुण्यं भवति । तत्र दृष्टान्तमाह) **एतत्कृतेर्लेखनात् वाचनाच्च लक्ष्मीपतिभट्टस्य** (लक्ष्मीपतिभट्टस्य एन्दु मूलदल्ले इरुवुदरिन्द लक्ष्मीपते एन्दु पूर्वदल्लि हेळल्पट्टिरुव लक्ष्मीपतिय देसेयिन्द ई भट्टनु बेरे इरबहुदु.) **महत्पुण्यं भवेत्** ॥

**हे विप्र तव पुत्रस्य चरणाद्रौप्यभूषणम् ॥७०॥**

**स्त्रीवशं प्राप तद्धस्तादन्तकस्य वशं गतम् ।**

अन्वयः – हे विप्र! (यथा पूर्वं) तव पुत्रस्य चरणात् रौप्यभूषणं (तथा कालविशेषे) स्त्रीवशं प्राप, तद्धस्तात् अन्तकस्य वशं गतम् ।

(व्या) **हे विप्र!** यथा पूर्वं(१०।४१) तव पुत्र चरणभूषणं नारायणेनापहृतमित्युक्तं (१०।४) । तथा कालविशेषे **स्त्रीवशं याति । तद्धस्तात् ।** स्त्रीहस्तात् । **अन्तकस्य वशं गतम्** । जानीहि ॥७१॥

---

(१) ('पश्यन्तोऽपि' एन्दरे वृत्तरत्नसङ्ग्रहदल्लि मत्तु वादिराजचरितामृतदल्लि हेळल्पट्ट महिमे विद्वांसरिगे गोत्तागुत्ते. आदरू नम्बिकेयिन्द पारायण माडुवुदिल्लवेन्दर्थ.) ॥६९॥ (व्याख्यानकाररु 'मत्कृतिं न वदन्त्यत्रापश्यन्तः पुत्र सत्फलं' एन्दु पाठवन्निट्टुकोण्डु व्याख्यानमाडिद्दारे.)

**इतः परं न वक्षेऽहं लौकिकं वाऽप्यलौकिकम् ।।७१।।**

**मत्तोकागमपर्यन्तं काकबुद्धीन् जनान् प्रति ।**
**एको वदति विप्रस्य कृतिरेवेति सर्वथा ।।७२।।**

**वरतो गुरुमुख्यस्य तं वरं प्राप्नुयाम्यहम् ।**
**पुनरेको वदत्येव लौकिकं ब्राह्मणोदितम् ।।७३।।**

**अलौकिकोक्तिमात्रं तु गुरुणैवोदितं हि तत् ।**
**अयं तु तम्मणो वक्ति बाणवत् प्राणघातकः ।।७४।।**

**ब्राह्मणोऽयं स्वकार्पण्यं कुतो वक्तीति निर्गुणः ।**

(अन्वयः) – हे पुत्र! (विप्र) मत्तोकागमपर्यन्तं काकबुद्धीन् जनान् प्रति लौकिकं वा अलौकिकम् अपि (श्लोकं) अहं न वक्ष्ये ।। (हे विप्र!) गुरुमुख्यस्य वरतः (विचारिता इयं) सर्वथा विप्रस्य कृतिः एव । तं वरं अहं (अपि) प्राप्नुयामि । इति एकः वदति ।। तत् (कृतौ) लौकिकं ब्राह्मणोदितम्, अलौकिकोक्तिमात्रं तु गुरुणा एव उदितं हि । अयं बाणवत् प्राणघातकः निर्गुणः तम्मणः तु 'अयं ब्राह्मणः स्वकार्पण्यं कुतो वक्ति?' इति वक्ति ।।

**(व्या) मत्तोकागमपर्यन्तं** मत्तोकस्य शेषस्य । वेदनिधेर्वा । मत्तोकानां आगमन-पर्यन्तमिति वा[१] प्रथमजन्मनि द्वितीयादिजन्मसु वा । श्रोतव्यार्थान् श्रोतुः (श्रोतॄणां वा) आगमनपर्यन्तम् । यद्वृत्तान्तं तत् लौकिकं अलौकिकं वा न वक्ष्ये । एवं च प्रथमजन्मनि पद्यानां श्रवणाधिकारिणामागमनपर्यन्तम् । तव स्वप्ने श्लोकान् न वक्ष्ये । शेषादीनां नन्दनानां भूमौ जनन पर्यन्तं भवितव्यान् कार्यविशेषान् न वक्ष्ये । (एवं च क्रिस्ताब्द १६५० आरभ्य १७६० वा १७८० पर्यन्तं सञ्चलितवृत्तान्तं न वक्ष्ये) इति च प्रतिपादितं भवति ।।७१-७५।।

(वृत्तान्तकथनाभावे कारणान्तरमाह – **'काकबुद्धीन् जनान् प्रति'** इति । जनाः केवलम्

---

(१) ('मत्तोकानां वा आगमनपर्यन्तं' एन्दु श्रीमुष्णाचार्यर मूल. अर्थसौकर्यक्कागि स्वल्पव्यत्यासमाडि 'मत्तोकानामामागमनपर्यन्तमिति वा' एन्दु बरेयलागिदे.)

उदरपोषणरताः इत्यर्थः । किञ्च काकस्य यथा तथा एकनेत्रकाः[१] ते सर्वे । परलोकविषयकज्ञानशून्याः । अत एव वृन्दावनाख्यानश्लोकविषयेपि स्वकपोलकल्पित ऊहया वाक्यार्थं (विचारं) कुर्वन्ति । इयं कृतिः सर्वथा विप्रकृतकृतिः ।।७२।। किन्तु वादिराजगुरोः **वरतः** विप्रेण रचिता इति **एको** मूढः **वदति** । तादृशवरम् **अहमपि** तपसा लभे इति स एव वदति । अपरः वक्ति । लौकिकभागः विप्रेण रचितः । अलौकिकभागः वादिराजगुरुभिरेव रचित इति । **अयं बाणवत् प्राणघातक**वचनवक्ता **तम्मणः** । कल्पनान्तरं वक्ति ।) (किमिति चेत् तदाह – **ब्राह्मणोयं इति ।। अयं ब्राह्मणः निर्गुणः** = सद्गुणरहितः । अत एवाहं पृच्छामि । स्वप्नादुत्थाय प्रतिदिनं स्वकार्पण्यं कुतः वक्ति' इति ।)

**सर्वे वदन्ति दातारं स्वकार्पण्यं कदाचन ।।७५।।**

**नादातारं कुतः श्रेयोहानिं तु कुरुषे वृथा ।**
**तस्मान्न निन्द्यं त्वार्षेयं पुरुषैः परुषोक्तिभिः ।।७६।।**

**असूया(ऽ)कारिभिः श्रेयो(ऽ)हारिभिः शापभीरुभिः ।**

**अन्वयः – (लोके) सर्वे दातारं (प्रति) स्वकार्पण्यं वदन्ति । अदातारं (प्रति) कदाचन न (वदन्ति) । पुरुषे (कुरुषे?) वृथा श्रेयोहानिं तु कुतः? (वदन्ति) ।। तस्मात् असूयाकारिभिः पुरुषैः परुषोक्तिभिः निन्द्यम् आर्षेयं, श्रेयोहारिभिः शापभीरुभिः (पुरुषैः) तु न (निन्द्यम्) ।।**

**(व्या) सर्वे** = भिक्षुकाः कामियाचकाश्च, **कदाचन स्वदातारं** प्रति स्वदारिद्र्यं वर्णयन्ति । **अदातारं** प्रति न वर्णयन्ति । अदातृपुरुषसमीपे वृथा प्रयोजनं विना **कुतः श्रेयोहानिं** स्वदारिद्र्यवर्णनेन प्राप्नुवन्ति । तस्मादयं ब्राह्मणः न साधुरिति वक्ति । **तस्मात्** तम्मणादिवाचां पापिष्ठवाक्यत्वात् **शापभीरुभिः पुरुषैः** अधिकारिभिः **आर्षेयम्** इदं वृन्दावनाख्यानं न **असूयाकारिभिः श्रेयोहारिभिः परुषोक्तिभिः**[२] निन्द्यम् ।।) असूयादिदोषयुक्तैः इदम् आर्षेयं

---

(१) (कागेगे एरडु नेत्रगोळकगळिद्दरू अदक्के उन्दु गोळक मात्र उपयोगिसिकोण्डु नोडुव शक्ति इदे. मनुष्यरु युगपत् एरडु कण्णिनिन्दलू उद्दिगे नोडुत्तारे)

(२) (असूयाकारिभिः, असूयादिवृद्धिकारिभिः श्रेयोहारिभिः श्रेयोनाशकैः इत्यर्थः । अथवा ई मूरु विशेषणगळन्नु अबाधितरीतियल्लि 'पुरुषैः' एम्बुदक्के अन्वयिसबहुदु. असूया अकारिभिः होट्टेगिच्चु माडबारदेन्दु

सज्जनैर्न निन्द्यम् । अनेन सूर्य, लक्ष्मीपति, उपेन्द्रभट्ट, कनककाकृष्णभट्ट, हिरण्यभट्ट, नारसिंह, हरिनारायणादीनां भक्तानां अभक्तानां (च) वृत्तान्तरूपं निदर्शनं सङ्क्षेपेण प्रतिपादितं ।। विप्र.प्र.सं.।।

### १२. श्रीपतिप्रकरणम्।। श्लोकाः (७७-९६१/२)

(व्या) 'हे श्रीपते त्वम्' इत्यारभ्य 'विना ते नच को महान्' इत्यन्तं श्रीपतिश्रोतृकं द्वादशं प्रकरणम् ।।

**हे श्रीपते त्वं च श्रमान्वितोऽसि श्रीदेवि ते सुप्रसन्नाऽस्तु शश्वत् ।**
**सुतो नः आयास्यतु तेन सूक्षं वासोऽवश्यं दापयिष्ये सुशिष्य ।।७७।।**

**अयं वृद्धः स्तब्ध एवातिव्याधिस्तब्धश्चासीन्मुग्धभावोऽपि तेन ।**
**हे बुद्धिमन् मत्कृतेः सुप्रसिद्धिस्त्वया जाता विबुधेषु प्रधाना ।।७८।।**

अन्वयः – हे श्रीपते! त्वं च (दारिद्र्येण) श्रमान्वितः असि । श्रीदेवी शश्वत् सुप्रसन्ना अस्तु । नः (अस्माकं) सुतः (विप्रः) आयास्यतु । हे सुशिष्य! तेन विप्रेण (तुभ्यं) सूक्ष्मं वासः अवश्यं दापयिष्ये ।।

हे बुद्धिमन्! अयं वृद्धः स्तब्धः एव । अतिव्याधिस्तब्धश्च आसीत् । तेन मुग्धभावः अपि जातः । (एवं सति) विबुधेषु मत्कृतेः प्रधाना सुप्रसिद्धिः त्वया जाता ।।

(व्या) **हे श्रीपते! त्वं** दारिद्र्यादिकृतेन श्रमेण युक्तोसि । **ते श्रीदेवी** रमाभारती च । **सुप्रसन्नास्तु** । वागभिमानिन्याः प्रसादस्य कृत्यर्थज्ञानहेतुत्वेन । तस्याः श्रीपतिना स्मर्तव्यत्वमनेन सूचितम् । **नः** अस्माकं **सुतः** विप्रः आगच्छतु । **तेन** विप्रेण उत्तमत्वेन वा, अनुत्तमत्वेन वा सुसूक्ष्मं वस्त्रं **दापयिष्ये** ।।७७।।

**अयं** = ब्राह्मणः **आदौ स्तब्धः** । **अतिव्याधिना** अधिकं स्तब्धतां प्राप्तः । तस्य तेन

---

तिळिदु इरुव; श्रेयो अहारिभिः – दोड्डवर निन्दे माडि पुरुषार्थनाशमाडिकोळ्ळबारदेन्दिरुव, शापभीरुभिः = गुरुराजर शापद देसेयिन्द तप्पिसिकोळ्ळबेकेन्दिरुव; पुरुषैः = सज्जन अधिकारिगळिन्द ऋषिमूलकवाद ई आख्यानवु निन्दिसल्पडकूडदु.)

व्याधिना मूढभावोऽपि जातः[१] । एवं सति त्वया मत्कृतेः प्रसिद्धिर्जाता[२] ।।७८।।

**मत्सख्याद्विप्रदेहे तु मुख्यप्राणः स्थितोऽभवत् ।**
**सखा सार्धं मयाऽप्यत्र सुखावहगतिप्रदः ।।७९।।**

**तस्मात्प्राणावधिर्विप्रे त्वेकश्चासीत्सुपुत्रक ।**
**द्वितीयावधिपर्यन्तमहं वक्ष्येऽथवा न वा ।।८०।।**

अन्वयः – (हे श्रीपते!) सुखावहगतिप्रदः मुख्यप्राणः मत्सख्यात् सखा मया अपि सार्धं अत्र विप्रदेहे तु स्थितः अभवत् ।। तस्मात् हे सुपुत्रक! विप्रस्य एकः प्राणावधिश्च आसीत् । द्वितीयावधिपर्यन्तं अहं वक्ष्ये वा अथवा न ।।८०।।

**(व्या) तस्मात्** (विप्रदेहे मम स्नेहेन मुख्यप्राणस्य स्थितत्वात् । अहं निर्दोषः ।) **(मत्सख्यात्** साम्यप्रयुक्तस्नेहात् **मुख्यप्राणः विप्रदेहे स्थितः अभवत्** । **सखा** मित्रं भूत्वा, **मयापि सार्धम् अत्र** ब्राह्मणस्य वृद्धदेहे **सुखावहगतिप्रदः** आयुर्वृद्धिं कुर्वन् सन् **स्थितो अभवत्)** ।।७९।।

**(हे सुपुत्रक!** श्रीपते! **तस्मात्** = मुख्यप्राणानुग्रहात् । **विप्रे एकः प्राणावधिः आसीत्** । एकवारं मृत्युः परिहृतः । **द्वितीयावधिपर्यन्तं अहं** स्वाप्नव्याख्यानं **वक्ष्ये । अथवा न** वक्ष्ये ।।८०।।)

**अव** – (कुतः न वक्ष्ये इत्युक्तिः इत्यत आह – **यदि वा नैवेति** ।।)

**यदि वा नैव वक्षामि त्वलं बुद्ध्या कलौ युगे ।**
**तर्हि प्रतिज्ञाहान्यादिदोषो मम न विद्यते ।।८१।।**

---

(१) (मूढभावोपि जातः – मूकत्ववु बन्दु होयितु. पेद्दनन्ते आदनु एन्दू अर्थ. व्याधियु बुद्धिशक्तियन्नु अपहरिसितु. आदरे स्वप्नकालदल्लि विप्रनु स्वयोग्यबुद्धिविकासयुक्तनागिये इद्दनेन्दु तिळियबेकु. बेळिग्गे एद्दु बरेयिसुवाग मात्र अवन स्मृतिशक्ति मात्र जागरूकवागित्तु. श्लोक हेळलिक्के बायि बरुत्तित्तु)
(२) (श्रीपतियु आख्यानद कोनेय भागद लेखकनागिरबहुदु. याव रीति आतनु ग्रन्थप्रसिद्धिगे कारणनेम्बुदु स्पष्टवागिल्ल. आतनु भविष्यकालदल्लि व्याख्यानमाडिदरू माडबहुदु. 'व्याख्यास्यत्येष गोराट्' एम्बन्ते ई वचनक्के सार्थक्य हेळबहुदु. अथवा नीनु अन्नहाकिदरिन्द विप्रनु सुखवागि बदुकि कृतिप्रचारक्के अनुकूलनादनु. आद्दरिन्द नीने कृतियन्नु प्रचारमाडिदन्तायितु एन्दू अर्थ.)

**प्रथमावधिमादाय प्रतिज्ञार्थोपपत्तितः ।**
**तस्मात् प्रतिज्ञाहानिर्वाऽप्यन्यं वा मम दूषणम् ।।८२।।**

**नास्ति नास्ति न सन्देहो मधुसूदनशासनात् ।**
**तस्मान्निर्दोष एवाहं यो दूषयति दोषयुक् ।। ८३।।**

अन्वयः – (अस्मिन्) कलौ युगे अलं बुद्ध्या तु यदि वा नैव वक्ष्यामि, तर्हि प्रतिज्ञाहान्यादिदोषः मम न विद्यते ।। तस्मात् प्रथमावधिमादाय अपि प्रतिज्ञार्थोपपत्तितः प्रतिहानिर्वा अन्यं वा दूषणं मम नास्ति नास्ति, न सन्देहः । तस्मात् अहं निर्दोषः एव । यः दूषयति (सः) मधुसूदनशासनात् दोषयुक् (भवति) ।।

**(व्या)** (कलियुगे **अलं बुद्ध्या** कलियुगस्थजनानाम् उद्धारः एतावद्भिरेव श्लोकैः भविष्यतीति **बुद्ध्या, नैव वक्ष्यामि**' इत्युक्तम् । **यदि न वक्ष्यामि प्रतिज्ञाहान्यादिदोषो नास्ति** ।।८१।। कुतः? 'विप्रस्य मरणपर्यन्तं वक्ष्यामि' इति प्रतिज्ञा कृता । **प्रथमप्राणा- वधिमादाय** सा प्रतिज्ञा सफला इति वक्तुं शक्यते । **अन्यं वा दूषणम्** = अन्यद्वा दूषणं । अलौकिकप्रयोगः । मम नास्ति । शुद्धमनस्कस्य सर्वज्ञस्य ऋजोः कोऽपि दोषो नास्ति ।।८२।। अपरोक्षविषयीभूतमधुसूदनस्य हयग्रीवस्य नित्यानुग्रहात् अहं स्वेच्छानियतज्ञानी । **तस्मात् अहं निर्दोषः**[१] । यो मां दूषयति स दोषी भवति । मिथ्याज्ञानप्रयुक्तनिन्दया पापी भवति ।।८३।।)

**ब्राह्मणस्य कु(कृ?)तो[२] मानस्तदन्तर्यामिणो मम ।**
**शृणु लज्जाविहीनस्त्वं कृणु मानं द्विजोत्तमे ।।८४।।**

**इदं तत्पुरतः श्लोकं लोकस्य च समक्षतः ।**

---

(१) (ज्ञानिगळु मूरुविध. विधिनियताः मनुष्याः, अनियता हि देवाः, ब्रह्मैव स्वेच्छानियतः इति एन्दु गौपवनश्रुति । ब्र.सू.भा. ३।४।२३रल्लि इदे. ऋजुगळु स्वेच्छानियतरु.)

(२) (ब्राह्मणस्य कुतो मानः' एन्दु स्वा. श्री. प्रिं.गळल्लिदे. वृं.नल्लू हागे इदे. आदरू कृतः एन्दु अर्थविवक्षे स्पष्टवागिरुवुदरिन्द नानु कृतः एन्दु बरेदिरुत्तेने. भी नोडबेकु. १७।१०२रल्लू विठ्ठल प्रकरणदल्लि 'तस्याभीप्सितकृत्यं त्वं कुरु तच्च भवेन्मम' एन्दिदे).

**भेकवद्वद तच्छोककारणं शतवारतः ॥८५॥**

**श्रवणानन्तरं चित्रं सुवर्णं निकषाश्मवत् ।**
**निर्णीयते स्वयोग्यत्वं चरणीयं रजो भज ॥८६॥**

अन्वयः – (हे श्रीपते) ब्राह्मणस्य कुतो मानः? तदन्तर्यामिणः मम (एव मानः) । लज्जाविहीनः त्वं द्विजोत्तमे मानं कृणु ॥ तत्पुरतः लोकस्य च समक्षतः तत् शोककारणं इदं (वृत्तान्तं) श्लोकं भेकवत् शतवारतः वद ॥ (हे श्रीपते! लक्ष्मीपते!) (यथा) निकषाश्मवत् सुवर्णं निर्णीयते (तथा) श्रवणानन्तरं स्वयोग्यत्वं (निर्णीयते । एतत्) चित्रम् । चरणीयं रजो भज ॥

**(व्या)** दुर्जनापहासादिना **त्वं लज्जाविहीनः** ॥८४॥ **इदं** वृत्तान्तं **श्लोकं** = कीर्तिं वद ॥८५॥ तया (त्वया) श्रोतॄणां स्वयोग्यत्वज्ञानं च भविष्यति **(हे श्रीपते! ब्राह्मणस्य कुतः मानः** सत्कारः **तदन्तर्यामिणः** विप्रे विशेषान्तर्यामिरूपेण विद्यमानस्य ममैव पूजा भवति । मदुपदेशं **शृणु** = मनसि धारय । **त्वं लज्जाविहीनः** सन् 'अज्ञविप्रपूजां कथं करोमि?' इति लज्जाम् अकृत्वा, **द्विजोत्तमे** सन्मानं **कुरु** = प्रणामादिकं कुरु ॥८४॥ किञ्च पूर्वश्लोकम् । 'विप्रे गुरुराजः आवेशरूपेण विद्यते' इति **वृत्तान्तं वा** । **तत्पुरतः** = दूषकपुरुषपुरतः जनसमक्षतश्च । तेषां अग्रभागे । **शतवारं तच्छोककारणं** यथा भवति तथा वद । भेकवत् व्याख्यानं विना श्लोकमात्रम् आवर्तय(१) ॥८५॥ **श्रवणानन्तरं** श्रोतृपुरुषाः स्वस्वस्वरूपगुणानाविष्कुर्वन्ति । **चित्रम्** अद्भुतं यथा भवति तथा । यथा **सुवर्णं निकषात्मनि** मर्दनेन शुद्धं मिश्रं वा इति **निर्णीयते** तथा श्रोतृजनानां स्वरूपस्वभावः निर्णीयते । त्वं तु **चरणीयं रजः भज** । विप्रपादधूळिं शिरसा धारय) ॥८६॥

**'मद्भूमिं यो वहेद्विद्वानपि शीघ्रं तु नश्यति' ।**
**इत्युवाच यमः श्रीमान्प्रति मार्ताण्डिरात्मनः ॥८७॥**

**तस्माल्लक्ष्मीपते भूमिं याम्यां माऽऽदत्स्व साधिताम् ।**
**कदाऽपि कोविदस्त्वं हि मा त्यजस्व बुधोदिताम् ॥८८॥**

---

(१) (ब्राह्मणस्य कृतो मानः' एम्ब ८४ने श्लोकवन्नु आवर्तिसु एन्दर्थ)

**मम पुत्रोऽपि मद्वाक्यविश्वासेन महामतिः ।**
**मया दत्तेन सन्मानात् समाह्वयति ब्राह्मणम् ।।८९।।**

अन्वयः – मद्भूमिं यः वहेत् (सः) विद्वान् अपि शीघ्रं तु नश्यति । इति श्रीमान् मार्तण्डिः (यमः) आत्मनः (जीवान्) प्रति उवाच ।। तस्मात् हे लक्ष्मीपते (श्रीपते) (पूर्वं राज्ञः) साधितां (त्वदीयैः साधितां) याम्यां भूमिं (साम्प्रतराज्ञः हस्तगतं) मा आदत्स्व । कोविदः त्वं बुधोदितां (विप्रोक्तां मम कृतिं) कदापि मा त्यजस्व हि ।। महामतिः मम पुत्रः (शेषः) अपि (अस्मिन् काले) मद्वाक्यविश्वासेन मया दत्तेन (वृन्दावनाचार्य) सन्मानात् ब्राह्मणं समाह्वयति ।।

**(व्या) (श्रीमान्) मार्ताण्डिर्यमः मद्भूमिं** दक्षिणदिग्गतां भूमिं **यः** स्वीकरोति । सः **(विद्वानपि) शीघ्रं नश्यति**' इति **आत्मनः** जीवान् प्रति **उवाच** ।।८७।।

**तस्मात् (हे लक्ष्मीपते!**[१] श्रीपते!) **(याम्यां=)** दक्षिणदेशगां त्वदीयैः **साधितां भूमिं (मा आदस्व)** त्यज । **(बुधोदितां=)** विप्रोक्तां कृतिं **(कदापि)** न त्यज ।।८८।। (त्वं **कोविदः** = विद्वानसि) ।।८८।। मत्पुत्रः **शेषः । (सोऽपि महामतिः** । **मद्वाक्य- विश्वासेन) मयादत्तेन नाम्ना** । सन्मानं कृत्वा **(सन्मानात्) समाह्वयति** ।।८९।।

**अयं तु दाम्बळः पित्तमौळिरास्यात्प्रधूळिकः ।**
**चन्द्रमौळिर्गले यद्वद् हृदि हालाहलान्वितः ।।९०।।**

**नारायणाह्वयोऽपीह तज्जिह्वा नाऽह्वयत्यहो ।**
**मदुक्ताह्वयमप्यस्मिन् दह्येतासह्यवादिनी ।।९१।।**

**भरण्यामागतोऽसि त्वं धरण्यां सातिनिन्दितः ।**
**स्मरणीयश्च मत्पादो मरणार्तिहरस्तव ।।९२।।**

अन्वयः – अयं तु पित्तमौळिः, आस्यात् प्रधूळिकः दाम्बळः नारायणाह्वयः अपि

---

(१) (इल्लि 'लक्ष्मीपते' एन्दिरुव मूलवन्नु श्रीमुष्णाचार्यरु हिडिदे इल्ल. ई श्लोकस्थलक्ष्मीपति श्रीपतिये इरबहुदेन्दु नानु सूचिसिद्देने. अथवा पूर्वदल्लि अनेक प्रकरणगळल्लि बरुव लक्ष्मीपतियु बेरे अधिकारियष्टे. अवन सम्बुद्धि एन्दादरू इट्टुकोळ्ळबहुदु. ई प्रकरणान्त्यदल्लि व्याख्यानदल्लि श्रीपतिये पूर्वप्रकरणदल्लि (हन्नोन्दनेय प्रकरणदल्लि) लेखन वाचन जन्यपुण्यप्राप्तत्वेन उक्त लक्ष्मीपतिभट्ट एन्दु बरेदिद्दारे.)

चन्द्रमौळिः गळे यद्वत् (तद्वत्) हृदि हालाहलान्वितः ।। (नारायणाख्योऽपि) इह मदुक्ताह्वयम् अपि न आह्वयति, अहो! अस्मिन् (विप्रविषये) असह्यवादिनी तत् (तस्य) जिह्वा दह्येत ।।

(हे श्रीपते, लक्ष्मीपते!) त्वं सातिनिन्दितः (सन्) धरण्यां भरण्यां आगतः असि । (तस्मात्) तव मरणार्तिहरः मत्प्रसादः स्मरणीयः च ।।

**(व्या) (अयं) आस्यात् प्रधूलिकः** = नासिकाचूर्णरूपायाः धूलेः स्वीकर्ता । शिरसि पित्तरोगी । **दाम्बळः** (दाम्बलस्थहरिनामकः) । शिव इव गळे (हृदि मनसि द्वेषेण कण्ठे) विशेषेण दुर्वाक्यरूपेणयुक्तः ।।९०।। **नारायणाख्योपि** (हरिनामकस्य पुत्रः दाम्बलस्थः) मदुक्तनामकं **नाह्वयति** । **असह्य**वचनानुकूला । तस्य **जिह्वा दह्येत** । (यमकिङ्करैः इति शेषः) ।।९१।। (तस्य जिह्वा दह्येतापि तथापि 'वृन्दावनाचार्याः' इति नाम्ना अह्वानं कृत्वा, गुरुं न सत्करोतीति भावः ।।९१।।) **त्वं भरणीनक्षत्रे** मद्भूम्याम् (**सातिनिन्दितः** = अतिनिन्दितैः सह वर्तते इति सातिनिन्दितः) अतिनिन्दितजनयुक्तः सन्[१] आगतोऽसि। **तव मरणार्ति**परिहारकः **मत्पादः** स्मर्तव्यः ।।९२।।

**चिन्तामण्याह्वयाचार्यः चिन्तामणिसमप्रभः ।**
**चिन्तामात्रेण तत्वार्थवेत्तारश्छन्दसामपि[२] ।।९३।।**

**श्रान्ताश्चाप्यरयस्ते वै भयात्कान्तारमाश्रिताः ।**
**अद्यापि मरणे चक्रुरापणं पापकर्मणाम् ।।९४।।**

**सर्वोपकरणं तच्चाप्याचरच्च ऋणं विना ।**
**एतादृशविनोदेन व्याख्यानादेन चान्विताः ।।९५।।**

**तादृशानां नन्दनो नो वृन्दावनकृतिं वदेत् ।**

---

(१) (नन्न वृन्दावनभूमिगे भरणीनक्षत्रदल्लि बन्दिरुत्ति. अथवा ई भूलोकक्के भरणीनक्षत्रदल्लि बन्दिरुत्ति एन्दरे हुट्टिरुत्ति. पटिङ्गरन्नु जोतेयल्लि करेदुकोण्डु क्षेत्रक्के बन्दिदि. निनगे मरणवे आगुवुदित्तु. नन्न पादवन्नु स्मरिसु. तप्पिसुत्तेनेन्दु भाव.)

(२) (श्लोक ९३रल्लि तत्वार्थवेत्तारः; कान्तार्थवेत्तारः' एम्ब एरडु पाठवन्नू वृं.प्रतियल्ले कोट्टिरुत्तारे. 'कान्तार्थवेत्तारः' एन्दे व्याख्यानदल्लि हिडिदिरुत्तारे.)

**अन्वयः – चिन्तामणिसमप्रभः चिन्तामण्याह्वयः आचार्यः चिन्तामात्रेण छन्दसां तत्वार्थवेत्तारः (आसीत्) । (तस्य) ते (छन्दसां = सच्छास्त्राणां) अरयः (ये पुरुषाः ते) श्रान्ताः । (केचित्) भयात् कान्तारं (अरण्यं) च आश्रिताः । अद्यापि पापकर्मणां आपणं मरणे चक्रुः । तत् सर्वोपकरणम् ऋणं विना अपि आचरत् । (ये पुरुषाः) एतादृशविनोदेन व्याख्यानादेन च अन्विताः तादृशानां (तेषामहं) नन्दनः (नन्दकः सन्) वृन्दावनकृतिं नो वदेत् ।।**

(व्या) **मणि**शब्दस्य प्रधानवाचित्वात्, चिन्तासु प्रधानया = दुश्चिन्तया । सम्पादित-नामकत्वेन **चिन्तामण्याह्वयाचार्यः** । दुश्चित्तानुरूपया प्रतिभया युक्तत्वात् **चिन्तामणि समप्रभः** । कश्चित्पुरुषः । तदीयास्तु । चिन्तामात्रेण कान्तारूपस्य स्त्रीरूपस्य प्रयोजन-वेत्तारः ।।९३।।

**छन्दसां** = सच्छास्त्राणाम् **अरयः** । ये पुरुषाः **ते भयात् कान्तारम्** अरण्यम् अद्यापि **आश्रिता** इव विप्रस्य देशान्तरस्थितिसमये **मरणे** मृषा वार्तां **चक्रुः । पापकर्मणाम् आपणं** प्रापुः । **ऋणं विना** स्वाभीप्सितं किञ्चिदपि न चक्रुः ।।९४।।

**तत्** विप्रस्य **सर्वोपकरणं** सर्वोपकाररूपत्वेन चरितं जातम् । ततः परं तादृशपुरुषे अनाप्तनिश्चयेन तद्वशे प्रतिमास्थापनस्य परित्यक्तत्वात् । (एवं) नैरन्तर्येण हयवदनबाद-रायणपूजोपयुक्तत्वाच्च ।।९५।।

यद्वा । उक्तरीत्या दुश्चिन्तायुक्तः कश्चित्पुरुषः तदीयाश्च तादृशाः । सच्छास्त्रमार्ग- रहिताः । ऋणं विनापि कृत्रिमं पत्रं निर्माय पापकर्मणां पुरुषाणाम् आपणम् आपणस्थानं राजधानीप्रदेशं प्राप्य, कुत्सितं प्रयत्नं चक्रुः । तदा केचित्तदीयाः भयात् कान्तारं प्राप्ताः । तस्य मानभङ्गसमये मरणे निश्चयं चक्रुः । एतदपि सर्वेषां उपकरणम् उपकाररूपम् । अन्यथा तेन सर्वेषां वित्तापहारादिप्रसक्तेः ।

अथवा कश्चित्पुरुषो हयग्रीवमुनिविरोधी । सः तदीयाश्च प्रागुक्तरीत्या दुश्चिन्तया युक्ताः । स्वकीयचिन्तामात्रेण कान्तार्थवेत्तारः । कान्तस्य स्वामिनः । अर्थापहारप्रकार-वेत्तारः । ते ऋणाभावेपि पापकर्मणां राज्ञां पुरुषाणां च । आपणम् आपणसदृशम् । न्यायस्थानं

प्राप्य । [१]यत्नं कृतवन्तः । तेपि श्रान्ताः । भयात् = पराजयभयात् । वनं प्राप्ताः । तदपि सर्वोपकरणम् । सर्वेषां गुरोः हयग्रीवमुनेः उपकाररूपत्वेन सर्वेषाम् उपकाररूपं जातम् । व्याख्यानत्रयमिदं चिन्तामण्याख्यस्य निन्दामात्रे अभिप्रायपक्षे ।[२]

निन्दायां स्तुतौ च अभिप्रायपक्षे तु । कश्चित्पुरुषः चिन्तामण्याख्यः तदीयाश्च पुरुषाः चिन्तामात्रेण श्रुत्यर्थाभिज्ञाः । ते ऋणं विना । पापकर्मणाम् आपणं प्राप्य । मानभङ्गरूपमरणार्थं यत्नं चक्रुः । तेपि केषाञ्चिच्छत्रवः । भीताः वनं प्रविष्टाः । तेषां भय- रूपमपि तदन्येषां सज्जनानाम् उपकाररूपं जातं । [३]लेखकदोषाभावे अलौकिकवद्भाति । लेखकदोषे तु

---

(१) (मरणे मानभङ्गार्थं एन्दु स्वा. मानभङ्गे मरणार्थं एन्दु श्री.)

(२) (चिन्तामणि आचार्य मत्तु अवन अनुयायिगळेम्ब जनरु दुष्टचित्तरु. शास्त्रवाक्यगळिगेल्ला स्त्रीपरवागि अर्थ माडुववरु. आ विनोदवे अवर व्याख्यानविलास. अवरु इस्पीटु कछेरियन्ते पापसभे माडि, विप्रनु मरणहोन्दिदनेन्दु सुळ्ळुवार्ते हब्बिसि, सालविल्लदे विप्रभक्तरिन्द दुड्डु शेखरिसि काडुपालादवरन्ते ओडिहोदरु. अथवा पापजनर आश्रयवाद राजधानियन्नु सेरिदरु. अवर दुष्टप्रयत्नवु विप्रनिगे तन्न बळिगे वञ्चकजनरु बरुवुदन्नु तप्पिसि एकान्तदल्लि हयग्रीवव्यासरपूजे माडिकोण्डु शास्त्राभ्यासमाडिकोण्डिरलु अनुकूलवायितु. आ चिन्तामणि जनरिगे मठद नौकरिगळन्नु कोडबारदु, देवर पेट्टिगे अवर कैय्यल्लि सेरुवन्थ एडबलसेवेयन्त केलसक्के अवरन्नु इट्टुकोळ्ळबारदेन्दू सज्जनरिगे व्यक्तवायितु. पत्रविल्लदे सालमाडि ओडिहोदवरु पुनः मुखवन्नु तोरिसुवुदिल्लवाद्दरिन्द मठक्के आ पुण्डर आगमन तप्पितु. आ कळ्ळरु हळ्ळियल्लि माडुव कळ्ळतनक्कू अवकाश तप्पितु. ई रीति आ पापिगळ पलायन उपकारवायितु एन्दु तात्पर्य काणुत्ते. चिन्तामणि आचार्यरू अवर अनुयायिगळू काडिगे होगि अल्लि तम्म मुखण्डनिगे मानभङ्गवादाग तावू सायबेकेन्दु यत्निसिदरु. इष्टु दुरवस्थेगे अवरु इळिदिद्दु सर्वसज्जनरिगू उपकारवायितु एन्दु भाव. इदरल्लि ३रीति अवरु तन्त्र माडिदहागे काणुत्ते. (१) पत्रविल्लदे दुड्डु संपादिसि काडिगे ओडिदरु एन्दु १रीति. (२) राजधानिगे होगि अल्लि मसलत्तु माडि दुड्डु संपादिसि काडुपालादवरन्ते अडगिकोण्डिद्दरु एन्दु उन्दु रीति. (३) मूरने रीति एनेन्दरे, चिन्तामण्याचार्यरू अवर अनुयायिगळू हयग्रीवमुनिगळ विरोधिगळन्नु कूडिकोण्डु राजधानिगे होगि पत्र हुट्टिसि छद्म रुजु माडि (हयग्रीवमुनिगळु साल तेगेदुकोण्डन्ते पत्र बरेदु तावे रुजु माडि) न्यायस्थानदल्लि हयग्रीव मुनिगळ मेले दावे तन्दरु. मानभङ्गप्रसक्ति बन्दाग मरणहोन्दलु यत्निसिदरु. कोर्टिनल्लि लञ्चकोट्टु श्रान्तरादरु. अवरु माडिद्देल्ला गुरुगळिगू, हयग्रीवमुनिगळिगू, मठीयरिगू दुर्जनरन्नु दूरमाडि एकान्तदल्लिरलु अनुकूलवायितु. हीगे मूरु अर्थ. नाल्कनेयदु प्रशंसापर. हीगे अवरु अन्याय माडिद्दरू अवर मगनन्नु आख्यानपारायणमाडिदरे उद्धरिसुत्तेने एन्दिद्दारे.)

(३) (मूलपुस्तके सर्वोपकरणं तच्चाप्याचाराच्च ऋणं विना इति श्री ।) (सर्वोपकरणं तच्चाप्याचरणं

सर्वोपकरणमाचरत् । सर्वोपकाररूपं चकारेत्यर्थः प्रतीयते ।।९५।।

ये पुरुषाः एतादृशविनोदेन व्याख्यानादेन युक्ताः । तेषामहं नन्दनः नन्दकः सन् वृन्दावनकृतिं वदे ।।

(तादृशानां नन्दनो नो वृन्दावनकृतिं वदेत् ।)[१]

**लक्ष्मीनारायणाह्वोऽयमंहोमुग्वचनं मम ।।९६।।**

**सिंहवद्वदतु ह्यत्र विना तेन च को महान् ।**

(व्या) **अयं** बुद्धिसन्निहितो **नारायणाह्वयः**[२] । महान् चेत्, मम अंहो मुग्वचनं । सिंहवदुच्चैर्वदतु । तर्हि तं विना को महान् वदति (वद)[३] तस्मात् तं विना महान् कः न कोपि ।। अस्मिन् प्रकरणे श्रीपतेर्द्रारिद्र्यादिना श्रान्तत्वम् । वागभिमानिन्याः श्रीदेव्याः प्रसादेन कृतिख्यापकत्वम् । विप्रेण सूक्ष्मवस्त्रप्राप्तिः । विप्र(स्य) मानकर्तृत्वम् । भक्ता- भक्तपरीक्षकत्वम् । याम्यभूमेः परित्यागः । स्वज्ञातशेषादिव्यवहृतं वृन्दावनाचार्यनामकत्वम् । (दाम्बलस्थ) हरिनारायणचिन्तामण्याचार्य, तदीय(तन्नन्दनस्य च)वृत्तान्ताभिज्ञत्वम् । लक्ष्मीपति(भट्ट)वृत्तान्ताभिज्ञत्वम् । (दाम्बलस्थयोः) भरण्यां सोदापुरं प्रत्यागमनम् । अतिनिन्दितजनसहितत्वं तस्मिन् समये । इत्येतावन्निदर्शनमुक्तं भवति ।। अयं श्रीपतिः

---

'चरणं विना' इति पाठो दृश्यते । इति स्वा. पाठो दृश्यते )

(१) (वदेत् एन्दु वृं.पाठ. आदरे वदे एन्दु स्वा.दल्लिदे. व्याख्यानदल्लि वदे एन्दु हिडिदु अर्थ हेळिद्दारे. भी.नोडि पाठनिर्णय तिळियबेकु. वदेत् एम्ब पाठवु वृं.सम्मतवाद्दरिन्द ९६-९७ श्लोकगळिगे बेरे अर्थ योग्यवागि काणुत्ते. एनेन्दरे – 'पूर्वोक्तचिन्तामणि आचार्यर नन्दननाद लक्ष्मीनारायणनामकनु नन्न वृन्दावनाख्यानवन्नु पारायणमाडलि. सिंह गर्जिसिदन्ते नन्न वृन्दावनसन्निधियल्लि पारायण माडलि. अवनिगे सदृशरे इल्ल एम्बन्ते अवनन्नु माडिबिडुत्तेने' एन्दु अर्थ. ई अर्थ श्रीमुष्णाचार्यर व्याख्यानदल्लि इल्ल. ९६नेय श्लोकदल्लि उक्तनाद 'लक्ष्मीनारायणनु' चिन्तामणि आचार्यसम्बन्धिये अल्ल. बेरेयवनु एम्बन्ते इट्टुकोण्डु व्याख्यान माडिद्दारे.)

(२) (बुद्धिसन्निहितो नारायणाह्वयः एम्बुवनु यारु मूलश्लोकगळन्नु वदेत् एम्ब पाठविट्टुकोण्डरे ईतनु चिन्तामणि आचार्यर साक्षात् पुत्र, अथवा अण्ण, तम्मन्दिर पुत्र. अवर कुलक्के कीर्तितरुव मग)

(३) (वदति एन्दु श्री इदे. अदु तप्पिरबहुदु. वदेति एन्दु बरेदिद्दारो एनो. मुन्दे विपर्यय पर्यवसानविरुवुदरिन्द 'को महान् वद' एम्बु विवक्षितपाठ तोरुत्ते.)

पूर्वप्रकरणे(१७।७०) लेखनवाचनजन्यपुण्यपात्रत्वेनोक्तलक्ष्मीपतिरिति ज्ञातव्यम् ।।

१३. भक्तकृष्णभट्टप्रकरणम्।। श्लोकः (९७ऽ९७१/२)

(व्या) 'हे कृष्ण' इत्येकं पद्यं कृष्णाख्यभक्तश्रोतृकं त्रयोदशं प्रकरणम् ।।

**हे कृष्ण तात पुष्णामि भक्तो विष्णोर्मम प्रियः ।।९७।।**

**निष्णाता यस्य तृष्णाऽपि संसृतेर्नास्ति चोष्णता ।**

(व्या) हे कृष्ण! कृष्णाख्य! त्वं विष्णोर्भक्तः । मम प्रियः । तस्मात् त्वां पुष्णामि । यस्य तव तृष्णा अपि, धनभूम्यादितृष्णापि । निष्णाता = हरिपादयोः निष्ठावती, यस्य तव । संसृतेः उष्णतापि नास्ति । तृष्णया आर्जितस्यापि तदीयभूम्यादेः । 'गुर्वन्तर्गत-हर्यर्पणोपयुक्तत्वात् तदीयसंसृतेरुष्णतापि नास्ति' इति भावः ।। अभक्तानां वृत्तान्तमुक्त्वा, भक्तस्य कृष्णस्य तृष्णापि साधनहेतुरिति निदर्शनमत्र कथितं भवति ।।भ.कृ.भ.प्र.सं.।।

१४. सीतापतिप्रकरणम्।। श्लोकौ: (९८ऽ९९१/२)

(व्या) 'तस्य सीतापते त्वम्' इत्यारभ्य पद्यद्वयं सीतापतिश्रोतृकं चतुर्दशं प्रकरणम् ।।

**तस्य सीतापते त्वं हि जाड्यता कामतिर्न ते ।।९८।।**

**भक्तिर्मे मत्कृतौ याऽस्ति गोपतिस्त्वत्सुतो यतः ।**
**तस्मात्त्वं जीवलोकेऽस्मिन् सञ्जीव शरदां शतम् ।।९९।।**

**मञ्जीरध्वनिसंयुक्तः सञ्जाघटि सुतस्तव ।**

अन्वयः – हे सीतापते! त्वं तस्य हि । ते (तव) कामतिः कुबुद्धिः जाड्यता (च) न । मे मत्कृतौ च (ते) भक्तिः अस्ति । यतः त्वत् सुतः गोपतिः (तस्मात्) मञ्जीरध्वनिसंयुक्तः तव सुतः सञ्जाघटिः । (तस्मात् सुपुत्रत्वादेः) अस्मिन् जीवलोके (त्वं) शरदां शतं सञ्जीव ।।

(व्या) हे सीतापते! त्वं (पूर्वोक्त) कृष्णस्य बन्धुरसि । ते = तव कामतिः = कुबुद्धिः जाड्यता च नास्ति ।।९८।। मम विषये मत्कृतौ च भक्तिरस्ति । (यतः=) यस्मात् गोपतिस्तवपुत्रः तस्मात् । तस्यापि मत्कृतौ भक्तिरस्ति । अस्मिन् जीवलोके तस्मात्

सुपुत्रत्वादेः । **शरदां शतं जीव** ।।९९।। **तव मञ्जीरध्वनिसंयुक्तः सुतः सञ्जाघटि** ।।९९ १/२।। अस्मिन् प्रकरणे वाचाम्पतेर्हयग्रीवस्य नामयुक्तः सुध्वनिः । भक्त्यादियुक्तः सुतः सीतापतेर्भविष्यतीति निदर्शनमुक्तं भवति ।।इति.सी.प्र.सं.।।

### १५. विट्ठलप्रकरणम् ।। श्लोकाः (१००-१०२ १/२)

**(व्या) हे विट्ठल'** इत्यारभ्य **'मायेव स्त्री भविष्यति'** इत्यन्तं विप्रगुरुश्रोतृकं पञ्चदशं प्रकरणं ।।

**हे विट्ठल श्रेष्ठभृत्यः पट्टभद्रस्य मे स्फुटम् ।।१००।।**

**स्वेष्टं सुष्ठु करोषि त्वं ब्राह्मणेष्टं न चेष्टसे ।**
**ब्राह्मणोऽयं प्रेत्य जातस्त्वपमृत्युं हराम्यहम्।।१०१।।**

**तस्याभीप्सितकृत्यं त्वं कुरु तच्च भवेन्मम ।**
**एवं चेदायुरारोग्यं स्यात्काये तव सर्वदा ।।१०२।।**

**आये निर्विघ्नता स्यात्ते मायेव स्त्री भविष्यति ।**

अन्वयः – हे विट्ठल! (त्वं) पट्टभद्रस्य मे (मम) श्रेष्ठभृत्यः (असि) । त्वं स्वेष्टं स्फुटं सुष्ठु करोषि । (किन्तु) ब्राह्मणेष्टं न चेष्टसे ।। अयं ब्राह्मणः प्रेत्य, (पुनः) जातः । (प्रसक्तं तस्य) अपमृत्युं अहं हरामि । त्वं तस्याभीप्सितकृत्यं कुरु । तच्च मम भवेत् ।। एवं चेत्, तव आयुः, काये (अपि) आरोग्यं सर्वदा स्यात् । आये तव निर्विघ्नता (अपि) स्यात् । ते (आये) मायेव (अविवाहिता नारी) स्त्री भविष्यति ।।

**(व्या) हे विट्ठल! त्वं पट्टभद्रस्य मम । श्रेष्ठभृत्यः** ।।१००।। **(स्वेष्टः=)** स्वकीयमिष्टं **(सुष्ठु)** सम्यक् करोषि । (ब्राह्मणस्य इष्टं प्रति **न चेष्टसे** = न प्रवर्तसे) । **अयं ब्राह्मणः प्रेत्य** पुनर्जातः । सद्यः प्रसक्तम् अस्य **अपमृत्युं हरामि** ।।१०१।। **त्वं तस्य अभीप्सित- कृत्यं कुरु** । **(तच्च भवेन्मम=)** तन्ममाभीप्सितकृत्यं भवेत् (१७/८४) । **एवं चेत्** = प्रेत्य पुनरुत्पन्नस्य विप्रस्य संस्थानप्रदानादिना इष्टं कृतं चेत्, **तवायुः** शरीरेपि **आरोग्यं सर्वदा स्यात्** ।।१०२।। **आये** = लाभे **(ते=)** तव **निर्विघ्नता स्यात्** । **मायेव** = अविवाहिता काचिन्नारी

**तव आये** लाभार्थं भविष्यति ।।

विप्रापकारिणां दाम्बळादीनां विप्रोपकारिणां कृष्णसीतापतिगोपतीनां वृत्तान्तमुक्त्वा, पूर्वप्रकरणेषु तद्गुरोर्विठ्ठलस्य कतिपयकालेषु विप्रविषये औदासीन्यं, तदा विठ्ठलाख्यस्य विप्रगुरोः शरीरे रोगः । विप्रस्य संस्थानदानानन्तरम् अविवाहितया स्त्रिया बहुदानलाभः । रोगाद्यनिष्टनिवृत्तिश्च इति निदर्शनमस्मिन् प्रकरणे उक्तं भवति ।।विप्रगुरु विठ्ठलप्र. सं.।।

## १६. विप्रप्रकरणम् ।। श्लोकाः (१०३-११२)

**(व्या) 'इत्येकं श्लोकमुख्यं मे'** इत्यारभ्य अध्यायान्तं विप्रश्रोतृकं षोडशं प्रकरणं ।।

**इत्येकं श्लोकमुख्यं मे त्यक्तवानसि विप्रक ।।१०३।।**

**आकरस्थं लेखनं च कारय प्राङ्ग्येरितम् ।**
**शिष्येषु संस्थिताऽशेषगुणान्येव[१] मनीषिणः ।।१०४।।**

**पोषयन्ति तथा दोषरूपिणं दूषयन्ति च ।**
**तस्माद्गुणिषु वक्तृत्वं गुणानां दोषरूपिणाम् ।।१०५।।**

**अहं परमहंसोऽपि जनानां राजहंसवत् ।**
**अंहो वेत्ता दुर्जनानां सज्जनानां निरंहताम् ।।१०६।।**

**क्षीरे च सारमेवाहं नीरे चासारमेव च ।**
**राजहंसो यथा वेत्ति तथा पारमहंस्यगः ।।१०७।।**

अन्वयः – हे विप्रक! (पूर्वोक्तं 'एवं चेदायुरारोग्यं') इति एकं मे मुख्यं श्लोकं (त्वं) त्यक्तवानसि । (तस्मात्) प्राङ्ग्येरितम् (तत् श्लोकं) आकरस्थं लेखनं च कारय ।। मनीषिणः शिष्येषु संस्थिताशेषगुणानि पोषयन्ति, तथा दोषरूपिणं (कार्यं) दूषयन्ति च ।। तस्मात् गुणिषु (योग्येषु) गुणानां वक्तृत्वं (मम योग्यं) । अपि च (तथा) दोषरूपिणं दुर्जनानां जनानां (अहं) अंहो वेत्ता (पाप अभिज्ञः) सज्जनानां निरंहतां (पापराहित्यं च) । अहं परमहंसः अपि राजहंसवत् जानामि ।

---

(१) (गुणानेव' एन्दु वृं.पाठ. आदरे व्याख्यानदल्लि 'गुणान्येव' एन्दु हिडिदु बहुव्रीहिसमास माडिद्दारे. भी. नोडबेकु)

यथा राजहंसः क्षीरे (विद्यमानं गुणं) सारमेव च, नीरे असारं (दोषं) एव च वेत्ति (जानाति) ।।

(व्या) हे विप्रक! 'एवं चेत्' इत्येकं श्लोकमुख्यं त्यक्तवानसि ।।१०४।। आकरस्थं यथा भवति तथा मयेरितं लेखनं कारय ।। मनीषिणः ज्ञानिनः शिष्येषु संस्थिताशेषगुणानि । अशेषाः गुणाः येषु कार्येषु तानि अशेषगुणानि (उत्तमकर्माणि) तानि पोषयन्ति ।।१०४।। तथा दोषरूपिणं (कर्म) दूषयन्ति । तस्मात् मम गुणिषु योग्येषु गुणानां वक्तृत्वं युक्तम् । अपिच अहं दोषरूपिणां दुर्जनानाम् अंहो वेत्ता । पापाभिज्ञः सज्जनानां निरंहतां पापराहित्यं च । परमहंसोऽपि राजहंसवत् जानामि ।।१०६।। यथा हंसः क्षीरे विद्यमानं गुणं जानाति । नीरे असारं दोषं जानाति । तथा पारमहंस्यगः परमहंससन्यासाश्रमस्थः (सज्जनासज्जनगुणदोषाभिज्ञः) ।।१०७।।

**भो सारासारयोर्मौनिन् वेत्तृत्वं न तु दूषणम् ।**
**प्रत्युतास्य गुणश्रेष्ठस्तद्वन्मम न दूषणम् ।।१०८।।**

**मम सत्सु च सन्तोषो जायते न त्वसत्सु च ।**
**हंसस्य मानसे यद्वन्न वायससरस्यहो ।।१०९।।**

**सन्तः सत्सु प्रमोदन्ते न त्वसत्सु कदाचन ।**
**असत्सु च त्वसन्तश्च प्रमोदन्ते न सत्सु च ।।११०।।**

अन्वयः – यथा राजहंसः वेत्ति, तथा पारमहंस्यगः अहं च (वेद्मि) । भो मौनिन्! सारासारयोः वेत्तृत्वम् अस्य (राजहंसस्य) दूषणं न तु ।। प्रत्युत अस्य गुणश्रेष्ठः, तद्वत् मम न दूषणम् । मम च सत्सु सन्तोषः जायते न तु असत्सु च ।। हंसस्य यद्वत् मानसे वायस- सरसि सन्तोषो न जायते, (तद्वत्) मम च सत्सु सन्तोषो जायते, न तु असत्सु च, अहो! सन्तः सत्सु प्रमोदन्ते, असत्सु न तु कदाचन ।। असन्तः तु असत्सु च प्रमोदन्ते, न च सत्सु ।

(व्या) हे मौनिन्! (सारासारवेत्तृत्वं) मम दुर्जनदोषाभिज्ञत्वं सज्जनगुणाभिज्ञत्वं च न दूषणम् । किन्तु भूषणमेव । (अस्य ज्ञातुः गुणेषु श्रेष्ठगुणः । तद्वत् ममापि न दूषणं न दोषः किन्तु गुण एव ।) ।।१०८।। (मम) सत्सु प्राप्तेषु सन्तोषो जायते । असत्सु प्राप्तेषु न तु

= न सन्तोषः । अत्र दृष्टान्तः – हंसस्य मानससरोवरे वासे कृते सति सन्तोषः । वायससरसि उदकरहितकासारे न सन्तोषो जायते, तद्वत् ।।१०९।। **सत्सु** = सज्जनानां सन्तोषो जायते । **असत्सु** न सन्तोषो जायते । एवं दुर्जनानां सत्सु सन्तोषो न जायते । असत्सु च जायते ।। (अयं स्वभावनियमः) ।।११०।।

**तस्माद्रागो भाग्ययुक्ते दरिद्रे द्वेष एव च ।**
**विद्रावितौ मया मूर्ध्नि दधाते मत्पदे सदा ।।१११।।**

**तस्मादरागद्वेषोऽहं विष्णोः पादपरागभाक् ।।११२।।**

**अन्वयः – तस्मात् भाग्ययुक्ते(पि दुर्जने) रागः (स्नेहः) एव च (सज्जने) दरिद्रे (सति अपि) द्वेषः मया विद्रावितौ । तस्मात् श्रीविष्णोः पादपरागभाक् अहम् अरागद्वेषः (अस्मि)।।**

**(व्या) तस्मात्** (स्वभावनियमस्य अचाल्यत्वात्) सज्जने दारिद्र्ये सत्य(पि) स्नेहः । **भाग्ययुक्ते(ऽपि)** (इल्लि 'अपि'पद एरडु कडेगळल्लियू त्याज्य) दुर्जने स्नेहश्च । **मया विद्राविततौ** । सज्जनानां **मूर्ध्नि** पापपरिहारार्थं **मत्पदे** निक्षिप्ते । दुर्जनानां **मूर्ध्नि** पुण्यापहारार्थं **मत्पदे** निक्षिप्ते । रागद्वेषौ मम पादौ शिरसि धारयतः । **अहं रागद्वेषहीनः** इति यावत् ।।१११।।

तस्मात् दुर्जनेषु रागरहितत्वात् सज्जनेषु कृतापराधेष्वपि द्वेषरहितत्वादहम् **अरागद्वेषः । विष्णोः पादपरागभाक्** । हरिपादपांसु भूषणः । 'हरिभक्तेषु दोषज्ञानम्, तदभक्तेषु गुणज्ञानं च अनिष्टसाधनम् । तस्माद् भक्तैः सज्जनगताः गुणाः ज्ञातव्याः । दोषास्तु परित्याज्याः । विठ्ठलादिषूक्ताः दोषाः परिहृताः भविष्यन्ति । कमलनाभादिषूक्ताः सुस्थिराः भविष्यन्ति । तस्माद् विष्णुभक्तोत्तमत्वेन विष्णोर्विशिष्टप्रतिमारूपे मयि सन्निहितस्य हरेरुपासनं सर्वारिष्टनिवारकं सर्वाभीष्टसाधनं चेति प्रतिपादितं भवति ।।विप्र.प्र.सं.।।

वादिराजगुरोर्वृन्दावने श्रीबादरायणः ।
हयास्यरामकृष्णात्मा प्रीयतां इन्दिरापतिः ।।
व्याख्या वृन्दावनाख्याने पूर्वप्राणावधेरियम् ।
यथामति कृता भूयादेढमानद्विडर्पिता ।।

**।।ओं इति श्रीस्वाप्नवृन्दावनाख्यानव्याख्याने अलौकिकविभागे प्रथमप्राणावधौ**

सप्तदशोध्यायः ।। श्रीतुङ्गभद्रातीरस्थविट्ठलार्पणमस्तु ।।

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाह-कत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि-राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

**(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।**

(व्या) एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि सप्तदशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**

**तीर्थराजपुरे वासिना नागराजभट्टेति सञ्ज्ञवान् ।**
**इदं वृन्दावनाख्यानमलिखद्गुर्वनुज्ञया ।। इत्यस्ति ।**

नन्तरं 'इति श्री श्रीमुष्णाचार्यव्याख्यानसह वृन्दावनाख्यानं संपूर्णं' इत्यस्ति ।।

## ।। अथ अष्टादशाध्यायः ।।(१)

### १. विप्रप्रकरणम्।। श्लोकाः (१ऽ१२)

(व्या) अथाष्टदशाध्यायः प्रारभ्यते ।। ॐ श्रीवादिराजगुरुभ्यो नमः ।।

सदा सर्वज्ञत्वादिगुणविशिष्टश्रीमद्धयास्यचरणारविन्दमकरन्दपानमधुपायितमानसः भाविकल्पभारतीशः श्रीवादिराजमहामुनिः स्वस्य भौमाभौमसौभाग्यप्रदर्शकमहामाहात्म्यं सप्तदशाध्यायसमाप्तिपर्यन्तं सवंर्णयित्वा, अधुना अष्टादशाध्यायमारभ्य आख्यानसमाप्तिपर्यन्तं योग्यजगदानन्दकरं स्वभक्तोद्धारकं पुनर्वर्णयति – इदमिति ।।

**हरिः ओं ।।**
**इदं सर्वं(२) शर्वगुर्वेन्द्रपूर्वैर्गीर्वाणेन्द्रैर्गर्वराहित्यवद्भिः ।**
**सर्वोत्तमः पर्वणि पार्वतीयैर्मौर्व्या दर्व्याऽऽराधितस्तत्कृतं मे ।।१।।**

**मौर्व्यादर्व्याराधितश्चेत्यस्यार्थं बुद्धिशौर्यताम् ।**
**गुर्व्यामुर्व्यां विना को वाक् शौर्यवानपि वाचकः ।।**

**विद्वत्सु बुद्धिचातुर्यरहितः स्वहितोऽपि यः ।**
**नन्दनस्तु ममानन्दं करिष्यन् व्याह(क)रिष्यति ।।३।।**

अन्वयः – (हे विप्र!) पार्वतीयैः गर्वराहित्यवद्भिः शर्वगुर्वेन्द्रपूर्वैः गीर्वाणेन्द्रैः पर्वणि सर्वोत्तमः मौर्व्या दर्व्या आराधितः । इदं सर्वं मे (मया) कृतम् ।।

विद्वत्सु वाक् शौर्यवान् अपि गुर्व्याम् उर्व्यां बुद्धिशौर्यतां विना को वा । 'मौर्व्या

---

(१) (ई कोनेय अध्यायपञ्चकक्के व्याख्यानवन्नु श्रीमुष्णाचार्यरु माडिल्ल. ई नाल्कु मङ्गळश्लोकगळू प्रतिज्ञे सह बेरे ग्रंथकर्तरदु. ई व्याख्यानकाररु तम्म हेसरन्नु हेळिल्ल. बुक्केबाग् श्रीनिवासाचार्य एंबुवरु ई कोनेय अध्याय पञ्चकक्के व्याख्यान माडिदवरेन्दु गोविन्दरायरु श्रवण माडिद्दारे. हुब्बळ्ळिगे नानु जून् १९६७रल्लि होगिद्दाग अल्लिन श्रीविजयींद्राचार्य अवर मक्कळू उप्पिदरु. श्रीनिवासाचार्यरु बेळगाविजिल्लेयवरु. अवरु वृन्दावनाचार्यर कालदिन्द ईचिनवरु. हत्तोंभत्तनेय शतमानद कोनेय भागदवरु. इप्पत्तनेय शतमानद आरंभदल्लि अवसान होंदिदवरु. बेळगाविय वाळवेकर् वेङ्कण्णाचार्यरल्लि अवरु ओदिद्दारे.)

(२) (इदं सर्वं' एंब ई श्लोकवु ई व्याख्यानग्रंथ देवताकार्य, हरिय आज्ञेयिन्द कृतवादद्दु एंबल्लि प्रमाणवागुत्ते.)

**दर्व्या आराधितः च' इत्यस्य अर्थं वाचकः (वर्तते?) । यः विद्वत्सु बुद्धिचातुर्यरहितः स्वहितः अपि मम नन्दनः (लक्ष्मीपतिः) तु मम आनन्दं करिष्यन् (सन्) व्याकरिष्यति ।।**

**(व्या) –**

गुरूत्तुङ्गान्तरङ्गान्ते रङ्गन्तं मङ्गळाम्बरम् ।
नमामी(स्मरामी)शं भृङ्गसेव्याङ्घ्रिपङ्कजम् ।।१।।

श्रीभारतीशं श्रीवादिराजेंद्रं श्रीजयार्यकम् ।
श्रीराघवेन्द्रं श्रीसत्यबोधमुख्यान् गुरून् परान् ।।२।।

उत्तुङ्गतुङ्गभद्राख्यसङ्गमे कुण्डलीपुरे ।
वृन्दावनस्थान् प्रणमे शान्ततीर्थान् रघूदितान् ।।३।।

श्रीमद्वृन्दावनाख्यानचरमाध्यायपश्चकम् ।
व्याकरोमि यथाशक्ति क्षाम्यन्तु मम सूरयः ।।४।।

**इदमिति ।।** पूर्वाध्यायान्ते विप्रप्रकरणस्य सत्वात् । तदनुषङ्गत्वेन अस्मिन्नध्यायारम्भेऽपि **'इदं सर्वं'** इत्यारभ्य **'शिष्येष्वधिष्ठिता भविष्यति'** इत्यन्तं विप्रश्रोतृकं प्रथमं प्रकरणम् । हे विप्र! **गर्वराहित्यवद्भिः** = गर्वस्य स्वोत्तमतारूपस्य राहित्य तद्वद्भिः । **शर्वगुर्वेन्द्रपूर्वैः** शर्वः शङ्करः गुरुर्यस्य तादृश इन्द्रः पूर्वः मुख्यः येषु तैः । **गीर्वाणेन्द्रैः** = देवश्रेष्ठैः । **पार्वतीयैः**= मन्दरपर्वतस्थैरित्यर्थः । **पर्वणि** = पूर्णिमादौ । **सर्वोत्तमः** = मदन्तर्यामी हरिः तदनन्तरमहं च ।। **मौर्व्यादर्व्यामूर्वानां** नो तृणविशेषः । महाराष्ट्रभाषया मोरवेल 'मोरवेल' इति ख्यातः । तं च धनुर्गुणत्वेन क्षत्रिया धनुषि यो जयन्ति । तदात्मिकया दर्व्या हवनं कृत्वा, यज्ञविशेषे आराधितः । **मे** मया । तत्कृतं तस्य प्रीत्यर्थं कृतम् । तत्कृतम् इदं सर्वं साधुत्वादिपरीक्षणरूपम् आख्यानं कृतम् ।

एतस्य **वाचकः** = पाठकः । **विद्वत्सु** शौर्यवानपि पाण्डित्यरूपशौर्यवानपि । अस्यां **गुर्व्यां** श्रेष्ठायाम् । **उर्व्यां** = पृथिव्यां कर्मभूमौ इत्यर्थः । बुद्धिशौर्यतां विना गुर्वनुगृहीत-बुद्धिनैपुण्यं विना । को वा[१] मौर्व्या दर्व्याराधितश्चेति पदस्य अर्थं करोति ।।२।।

तर्हि व्याख्यात्रभावेन तस्य व्यर्थत्वं वा । तदपि संशयास्पदमेव (वा) कुतः? 'निर्दोषाणां

(१) (को वा शौर्यवान् एन्दु ई व्याख्यानकारर पाठ. आदरे स्वा.प्रिं.वृं.नल्लू 'को वा शौर्यवानपि' एन्दिदे.)

मृषावाणी न भविष्यति सर्वथा' इति गुरूक्तेः इत्यत आह – **बुद्धीति ।। यः स्वहितः** (स्वहितः = सुशिक्षितः अपि एन्दु तात्पर्य) । स्वस्य कृतं हितं येन सः । तादृशोपि **हे बुद्धिचातुर्यरहित**(१) विप्र! मम **नन्दनः ममानन्दं करिष्यन्** सन् **व्याकरिष्यति** व्याकरोतीत्यर्थः ।।

**अस्यार्थं पश्यतां स्वस्य विदुषां कस्य वश्यता ।**
**हयग्रीवस्य साऽस्तीह तस्य सेवासु सत्फलम् ।।४।।**

**तस्माद्वै विदुषां मध्ये विद्वान् मन्नन्दनस्य च ।**
**सदृशो नास्ति सादृश्यं मम वृन्दावने यथा ।।५।।**

**आयातु मम पुत्रोऽसौ कायात्सुपरिणामवान् ।**
**माया तस्य सहाये च त्वायातार्थप्रदायिनी ।।६।।**

**अन्वयः – (हे विप्र!) विदुषां (मध्ये) अस्य अर्थं पश्यतां कस्य स्वस्य वश्यता? सा (वश्यता) इह हयग्रीवस्य (हयग्रीवमुनेः) अस्ति । तस्य सेवासु सत्फलं (मोक्षरूपफलम् अस्ति) ।। तस्मात् विदुषां मध्ये यथा मम वृन्दावने (अन्य वृन्दावनानां) सादृश्यं नास्ति, (तथा) मन्नन्दनस्य (हयग्रीवमुनेः) च सदृशो विद्वान् (नास्ति) वै ।। कायात् सुपरिणामवान् असौ मम पुत्रः (हयग्रीवमुनिः) आयातु । तस्य सहाये च अर्थप्रदायिनी माया तु आयातु ।।**

**(व्या)** सः कः? इत्यत आह – **अस्यार्थमिति ।।** हे विप्र! **अस्य** = पूर्वोक्तस्य 'मौर्व्या दर्व्याराधितश्च' इति वाक्यस्य, **अर्थं** को वा अस्यार्थो भवेत् इति **पश्यतां विदुषां** मध्ये **कस्य** स्वस्य मनसः वश्यता को वा अस्यार्थकरणे स्वतन्त्रत्वेन स्वतन्त्रत्वेन मनः प्रयोजयतीत्यर्थः ।

---

(१) (ई मूरने मूलशोक वृं.नल्लू 'बुद्धिचातुर्यरहितः' एंदिदे. आदर ई व्याख्यानकाररु विसर्गबिट्टु 'हे बुद्धिचातुर्यरहित' एन्दु हिडिदु व्याख्यानमाडिद्दारे. हागेये 'व्याकरिष्यति' एन्दु प्रतीक हिडिदु व्याख्यान माडिद्दारे. 'भी' नोडि पाठगळन्नु निश्चयिसबेकु. 'विद्वत्सु' एंब पदक्के व्याख्यानमाडिल्ल. 'विद्वत्सु बुद्धिचातुर्यरहितः' एन्दे पाठविद्दरे 'वैष्णवपण्डितानां मध्ये स्वचातुर्यं अप्राकट्यं कुर्वन् विनयेन मौनधारी' एन्दर्थ. इदु व्याख्यानकारन लक्षण. विठ्ठल, लक्ष्मीपति, श्रीपति, हयग्रीवमुनिगळ मध्यदल्लि यारिगे अन्वयिसुत्तेयो नोडबेकु. ई अध्यायदल्लेनो 'मम नन्दनः' एंब मूरने शोकद पदवु हयग्रीवमुनिगळिगे अन्वयिसुवन्ते तोरुत्ते)

इति वदसि चेत्, शृणु । सा **वश्यता** । **हयग्रीवस्य** = हयग्रीवमुनेः । **इह अस्ति** । **तस्य** च **सेवासु सत्फलं** मोक्षरूपफलमस्ति ।।४।।

**तस्माद् विदुषां मध्ये** विद्वान् **मन्नन्दनस्य** हयग्रीवमुनेः **सदृशः नास्ति; यथा मद्वृन्दावने** अन्यवृन्दावनानां सादृश्यं नास्ति तथा इत्यर्थः ।।५।।

**असौ मम पुत्रः कायात्** तृतीयार्थे पञ्चमी, कायेन देहेन **सुपरिणामवान्** आरोग्यवान् इत्यर्थः । **तस्य सहाये** = द्रव्यादिदानरूपसहाये **अर्थप्रदायिनी माया** लक्ष्मीः **आयातु** = आयास्यतीत्यर्थः ।।६।।

**नन्दनस्तादृशोऽसौ मे वृन्दावनकृतिं त्विमाम् ।**
**मुकुन्दजनतासेव्यां मन्दानामपि तुष्टिदाम् ।।७।।**

**षोडशाध्यायिकां कृत्वा एधमानद्विडर्पिताम् ।**
**करोतु जाड्यराहित्यं जनानां गौडदेशिनाम् ।।८।।**

**कर्णाटकजनानां च कर्णश्राव्यं करिष्यति ।**
**अर्णवोत्थमणिर्यद्वदर्णवे शायिनः प्रिया (यः)[१] ।।९।।**

**अन्वयः – तादृशः असौ मे (मम) नन्दनः (हयग्रीवमुनिः) इमां मे वृन्दावनकृतिं मुकुन्दजनतासेव्यां मन्दानां तुष्टिदाम् ।। (तादृशीं) षोडशाध्यायिकां (इमां वृन्दावनकृतिं) एधमानद्विडर्पितां कृत्वा, गौडदेशिनां जनानां जाड्यराहित्यं करोतु ।। अर्णवोत्थमणिः (= कौस्तुभः) अर्णवे शायिनः (श्रीहरेः) यद्वत् प्रियः (तद्वत्) कर्नाटकननानां च (प्रियत्वेन) कर्णश्राव्यं करिष्यति ।।**

**(व्या) तादृशः** । सहायवान् **असौ मे नन्दनः इमां वृन्दावनकृतिं** स्वव्याख्यातेन मुकुन्दजनतासेव्यं(व्याम्) । मुकुं ददातीति मोक्षदस्य हरेः या जनता जनसमूहः, तया सेव्यां सेवायोग्याम् । **मन्दानां** = मुक्तियोग्यत्वेपि मन्दबुद्धीनां जनानाम् । **तुष्टिदां** = तुष्टिं सन्तोषं ददातीति ।।७।।

---

(१) (प्रिया एन्दु वृं.पाठ. व्याख्यानदल्लि प्रियः एन्दु हिडिदिद्दारे. 'प्रियः' एंबुदे व्याकरणकोशादिगळिगे सम्मतवागिदे. आदरिन्द भी नोडि पाठ निश्चयिसबेकु.)

षोडशाध्यायिकामिति ।। षोडशाध्यायाः तदात्मिकां कृत्वा, एधमानद्विडर्पितां "एधमानद्विड्भयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्'' इति श्रुतेः । एधमानद्विट् = श्रीकृष्णः । तदर्पितां करोतु । गौडदेशिनां जनानामपि जाड्यराहित्यं करोतु ।।८।।

अर्णवे शायिनः = समुद्रशयनस्य हरेः । यथा अर्णवोत्थमणिः = कौस्तुभः प्रियः । तथा कर्णाटकजनानां प्रियत्वेन कर्णश्राव्यं करिष्यति ।।९।।

**औत्तराणां जनानां तु संसारोत्तारणं भवेत् ।**
**उत्तमशोकगेहस्य चोत्तमद्वारयापकम् ।।१०।।**

**चोलमण्डलदेशीयैर्बालकैरपि नन्दन ।**
**काले चाभ्यस्तमेवैतत्पालयिष्यति तानपि ।।११।।**

**नानादेशजनैरेवं नानाविद्याविशारदैः ।**
**नानाविधतया व्याख्या नानाशिष्येष्वधिष्ठिता ।।१२।।**

(व्या) एवं चैतत्कारणेन औत्तराणाम् = उत्तरदेशस्थानां गोदावर्यादितटाकस्थानाम् । संसारोत्तारणं भवेत् । एतच्च सव्याख्यानमाख्यानम् । उत्तमश्लोकगेहस्य उत्तमश्लोको हरिः । 'पद्ये यशसि च श्लोके' इत्यमरः । (उत्तमद्वारयापकम् =) उत्तमश्लोकः कीर्ति- र्यस्य । तादृशो हरिरित्यर्थः । तस्य गेहस्य वैकुण्ठस्य द्वारं यापयति प्रापयतीति तादृशम् ।।१०।। चोलमण्डल इति ।। हे नन्दन चोळमण्डलदेशीयैः बालकैरपि काले = योग्यकाले अभ्यस्तमपि । तानपि एतत् पालयिष्यति ।।११।। नानादेश इति ।। नानाविधतया कृता व्याख्या नाना शिष्येषु अधिष्ठिता भविष्यति ।। विप्र.प्र.सं.।।

२. लक्ष्मीपतिप्रकरणम्।। सुषेणाग्र्येत्यारभ्य श्लोकाः (१३-२०)

**भविष्यति सुषेणाग्र्य मृषा न हि कुरुष्व तत् ।**
**षोडशाध्यायि निर्दोषं पोषयस्व ऋषेर्वचः ।।१३।।**

**आषाढमासपर्यन्तं षोडशाध्यायमालिका ।**
**अस्तु श्रौषडिति प्रोक्ता क्रतुकोटिफलप्रदा ।।१४।।**

**षोडशाध्यायपाठं तु यः करोति स तुष्टिभाक् ।**

**शिष्टः स तु ममेष्टश्च मृष्टान्नं लभते नरः ।।१५।।**

अन्वयः – हे सुषेणाग्र्य शेष! निर्दोषम् ऋषेः (मम) वचः पोषयस्व । तत् वचः (कृतिः) मृषा न हि (= न) कुरुष्व ।। आषाढमासपर्यन्तं (इयं) षोडशाध्यायमालिका 'अस्तु श्रौषट्' इति प्रोक्ता तर्हि क्रतुकोटिफलप्रदा ।। यः तु षोडशाध्यायपाठं करोति, सः नरः तु तुष्टिभाक् (सन्) शिष्टः मम इष्टः च (भूत्वा) सः (नरः) मृष्टान्नं लभते ।।

**(व्या) (हे सुषेणाग्र्य)** तत् **षोडशाध्यायि** = षोडश अध्यायाः सन्त्यस्मिन् इति षोडशाध्यायि । **निर्दोषम् ऋषेः** मम **वचः पोषयस्व** = पालय । मृषा न कुरु ।।१३।। **आषाढमासमिति ।। आषाढमासपर्यन्तं** = चातुर्मासप्रारम्भपर्यन्तम् । चातुर्मास्ये यज्ञादयो न भवन्तीत्यर्थः । इयं **षोडशाध्यायमालिका । 'श्रौषट्' इति** उच्चारसहिता । को अर्थः? 'देवेभ्यो हविर्दानविशेषे प्रोक्ता आख्यानस्य वेदतुल्यत्वेन' इत्यर्थः । तत्प्रकारश्चैवं –

**'ॐ कामधेनुर्यथापूर्वं सर्वाभीष्टफलप्रदा ।**
**तथा कलौ वादिराजश्रीपादोभीष्टदः सताम् ।। ॐ श्रौषट् ।।'**

इत्युच्चारं कृत्वा, अग्नौ हविर्दानं कर्तव्यम् । एवमेव सर्वमाख्यानमिति ।। एवं चेत् तत्कृतौ, तर्हि **क्रतुकोटिफलप्रदा** स्यात् ।।१४।।

**षोडशाध्यायपाठमिति ।। यः** च **षोडशाध्यायपाठं** करोति **सः तुष्टिभाक्** । तुष्टिं सन्तोषं भजतीति तादृशः । अपि च स तु **मम इष्टः शिष्टश्च** भूत्वा, **नरः मृष्टान्नं लभते** ।।१५।।

**द्वादशाध्यायपाठं वा यः करोति द्विजोत्तमः ।**
**सोऽप्यविद्वानपि स्वर्गे त्रिदशैः पूज्यते सदा ।।१६।।**

**अष्टाध्यायस्य पाठं तु यः करोति ममेष्टकृत् ।**
**स विठ्ठलप्रियः सर्वैरभीष्टैः पुष्टिमान् सदा ।।१७।।**

**इदं सर्वं वद वृन्दावनाग्रे मन्नन्दने कन्दमन्दाशनस्य ।**
**वृन्दावने प्रीयतामिन्दिरेशो मन्नन्दने चाहमेव द्विजाद्य ।।१८।।**

अन्वयः – यः द्विजोत्तमः द्वादशाध्यायपाठं वा करोति, सः अपि अविद्वान् अपि, स्वर्गे त्रिदशैः सदा पूज्यते ।। यः तु अष्टाध्यायस्य पाठं करोति सः विठ्ठलप्रियः सर्वैः

**अभीष्टैः सदा पुष्टिमान् (भूत्वा) मम इष्टकृत् (भवति) ।। हे द्विज!(शेष!) इदं सर्वं मन्नन्दने (वेदवेद्यसमीपे) कन्दमन्दाशनस्य (मम) वृन्दावनाग्रे यद्वा (वृन्दावनाचार्यस्याग्रे) च वद । (तेन) अद्य वृन्दावने (सन्निहितः) इन्दिरेशः (श्रीहयवदनः) प्रीयताम् । मन्नन्दने (सन्निहितः) अहं एव च (प्रीतो भवेयम्) ।।**

**(व्या) द्वादशाध्यायमिति ।। यो वा द्वादशाध्यायपाठं द्विजोत्तम करोति सः अविद्वानपि त्रिदशैः** देवैः **सदा स्वर्गे पूज्यते** ।।१६।। यस्तु **अष्टाध्यायस्य पाठं करोति स विठ्ठलप्रियः**[१] । **मम इष्टकृत् च** भूत्वा, **सदा सर्वैः अभीष्टैः पुष्टिमान्** भवति ।।१७।।

हे शेष![२] **इदं कन्दमन्दाशनस्य** = 'कन्दमूलानां मन्दत्वेन श्रीहयास्यः प्रथमं भोक्ता ततश्चाहमित्यभिप्रायेण अशनं यस्य' तादृशस्य मम सर्वं वचः **वृन्दावनाग्रे** = वृन्दावनसमीपे । यद्वा वृन्दावनाचार्यस्य अग्रे **मन्नन्दने** (वेदवेद्यवृन्दावनसमीपे) **वद** । तेन च **अद्य** हे द्विज! **वृन्दावने** स्थितः इन्दिरेशो = हयवदनः, प्रीयताम् । मन्नन्दने च स्थितः । **अहम्** अपि प्रीतो भवेयम् ।।१८।।

**इदं तु नान्दीपद्यं मे मन्दानामपि नन्दन ।**
**श्रुतमानन्ददं नृणां नान्दीकर्मणि नान्यथा ।।१९।।**

**इति श्रीत्यादिवाक्यानि मयाऽनुक्तान्यपि प्रिय ।**
**प्रत्यध्याये प्रयोक्तव्यानीति संस्मर बुद्धिमन् ।।२०।।**

**अन्वयः – (हे नन्दन शेष!) इदं तु नान्दीपद्यं ('आषाढमासपर्यन्तं' इत्यारभ्य 'पुष्टिमान् सदा' इत्यन्तं नान्दीपद्यसदृशं श्लोकचतुष्टयं) श्रुतं (चेत्) (यथा) नान्दीकर्मणि मन्दानां नृणाम् अपि आनन्ददं (तथा) । अन्यथा न ।। (हे विप्र!) (प्रिय शेष!) मया अनुक्तानि अपि 'इति श्री' इत्यादिवाक्यानि प्रति अध्याये (अन्ते) त्वया प्रयोक्तव्यानि । इति हे बुद्धिमन् (मां) संस्मर ।।**

**(व्या) इदमिति ।। हे नन्दन! इदं तु मे नान्दीपद्यं** । नान्द्या युक्तं पद्यम् ।

---

(१) (विठ्ठलप्रियैः एन्दु स्वा. प्रिं.वृ. पाठगळल्लिदे)

(२) (हे शेष एन्दु इल्लिदे. आदरे गोविन्दरायर प्रतियल्लि ई प्रकरण लक्ष्मीपतिप्रकरणवेन्दिदे. बेरे आकरग्रन्थ नोडबेकु.)

'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रवर्तते ।
देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते ।।'

इति भरतशास्त्रे । एतत्पद्यं श्रुतं चेत्, **मन्दानामपि नृणां** नान्दीकर्मणि, पुण्याहवाचनादौ **आनन्ददम्** । अन्यथा न ।।१९।। **इतीति ।। हे विप्र! प्रिय!** यद्यपि **मया अनुक्तानि ।** तथापि **'इति, श्री' इत्यादि वाक्यानि प्रत्यध्याये त्वया प्रयोक्तव्यानि** । **हे बुद्धिमन्! इति संस्मर** ।। लक्ष्मीपतिश्रोतृक(शेष)प्र.सं.।।

### ३. विप्रप्रकरणम्।। श्लोकाः (२१ऽ२८)

**(व्या) 'ब्राह्मण'** इत्यारभ्य **'पक्षपातेन सुविचक्षणः'** इत्यन्तं विप्रश्रोतृकं प्रकरणं तृतीयम् ।।

**ब्राह्मण शृणु संवादं मुख्यप्राणस्य मे गुणिन् ।**
**तन्मतं देहमुत्सृज्य गमिष्यामीति मन्मतम् ।।२१।।**

**मा मेति माधवेनोक्तो मत्कृते माधवस्तदा ।**
**मासिमासि महात्मा सः मातृवत्त्वां न तु त्यजेत् ।।२२।।**

**अन्वयः – हे गुणिन् ब्राह्मण! मे मुख्यप्राणस्य संवादं शृणु । देहम् उत्सृज्य गमिष्यामि' इति तन्मतम् । 'मा मा' इति माधवेन उक्तः । (तत्) मन्मतम् । तदा माधवः मत्कृतेः (आख्यानोपदेशपर्यन्तं) मासि मासि स महात्मा त्वां तु मातृवत् न त्यजेत् ।।**

**(व्या) हे गुणिन्! ब्राह्मण! मे** = मम । **मुख्यप्राणस्य** च उभयोः **संवादं शृणु** । कोऽयं संवादः इत्यत आह – **तन्मतमिति ।। तन्मतम्** = तस्य मुख्यप्राणस्य मतम् । तव **देहमुत्सृज्यं गमिष्यामी**ति । मन्मतं च ।।२१।।

**मा** 'मागच्छ' इति । कुतः इत्यत आह – **माधवेनेति ।। अहं माधवेन** = हय- ग्रीवेण उक्तः । किम् इति चेत्, शृणु । **मत्कृतेः**[१] = वृन्दावनाख्यानस्य पूर्त्यर्थं द्विजदेहं परित्यज्य न गच्छेति । मुख्यप्राणोऽप्येवमेवोक्तः । एवं च परस्परसंवादप्रसक्तौ सत्यां, तदा माधवः, हे विप्र! त्वामुद्दिश्य, मामेवं उक्तवान् । किमिति चेत्, शृणु । 'हे वादिराज! **सः** मुख्यप्राणः **महात्मा**

---

(१) ('मत्कृते' एन्दु वृं.पाठविदे. आदरे व्याख्यानकाररु मत्कृतेः एन्दु षष्ठीविभक्त्यन्तपाठविट्टुकोंडु अर्थ बरेदिद्दारे.)

मासि मासि । पक्षे पक्षे[१] । पुत्रं मातृवत् तं विप्रं न त्यजेत्' इति । न त्यजति ॥२२॥

**'ऊर्ध्वं प्राणं चोन्नमयत्यपानं प्रत्यगस्यति ।**
**मध्ये वामनमासीनं विश्वेदेवा उपासते' ॥२३॥**

**इति पूर्ववदेवायं देहस्ते मत्कृतः कृतिन् ।**
**मया जीवित एव त्वं मत्कृतिं स्मर विप्रक ॥२४॥**

अन्वयः – 'ऊर्ध्वं प्राणं उन्नमयति, अपानं प्रत्यगस्यति, मध्ये आसीनं वामनं विश्वेदेवा उपासते' इति ॥ हे कृतिन् अयं ते देहः पूर्ववत् एव मत्कृतः । हे विप्रक! मया जीवित एव त्वं मत्कृतिं स्मर ॥२४॥

(व्या) ऊर्ध्वमिति ॥ ननु –

'अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः' इत्युक्तेः । 'ब्रह्मैव स्वेच्छानियतः' इत्यनेन च । तत्पदोचितवायोरपि स्वच्छन्दवृत्तित्वात् कथमेतच्छक्यं भवेत् इत्यतः, वायुर्न स्वतन्त्रः । भाष्योक्तश्रुतौ 'स्वेच्छानियतः' इत्यत्र 'स्वस्य स्वतन्त्रस्य विष्णोः इच्छानियतत्वमेव तस्य' इत्याह – ऊर्ध्वमिति ॥ प्राणापानयोर्धारको वामननामा हरिः । विश्वेदेवोपास्यत्वेन सर्वप्राणिषु । समानान्तर्गतः सन्, जगज्जीवयतीत्यर्थः । श्रुत्या चोदाहरति । वामननामा समानान्तर्गतो हरिः प्राणं चोर्ध्वमुन्नमयति । अपानं च प्रत्यक् अधः अस्यति । एतादृशं वामनं विश्वेदेवाः उपासते इति ॥२३॥ तस्मात् ते अयं देहः । हे कृतिन् पूर्ववत् मत्कृतः । हे विप्रक! मया जीवित एव त्वं मत्कृतिं स्मर ॥२४॥

**'कर्तुं चाकर्तुमप्येवमन्यथा कर्तुमेव च ।**
**समर्थोऽहं न सन्देहश्चेश्वरस्य सदाज्ञया' ॥२५॥**

**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।**
**अन्यथा देहहानिं तु पश्यसि त्वं न संशयः ॥२६॥**

**तत्ते मद्दत्तमायुष्यं वृद्ध त्वं जीव तेन च ।**

---

(१) (मासि मासि एन्दरे तिङ्गळु तिङ्गळुगळल्लि देह बिडुवुदिल्ल एन्दरे, इन्नू एरडु तिङ्गळु एन्दर्थ सूचितवागुत्ते. प्रथमप्राणावधिगू द्वितीयप्राणावधिगू एष्टु अन्तर एंबुदन्नु श्रीश्रीगळवरन्नु केळि तिळिदुकोळ्ळबेकु.)

**वृद्ध त्वां जीवयानीह दग्धमौत्तरगर्भगम् ।।२७।।**

**परीक्षितं कुरुक्षेत्रे यथा लक्ष्मीपतिः क्षितौ ।**
**क्षणाद्रक्षितवान् पक्षपातेन सुविचक्षणः(१) ।।२८।।**

अन्वयः – ईश्वरस्य आज्ञया कर्तुम् अकर्तुम् अपि च एवं अन्यथाकर्तुं च अहं सदा समर्थः एव । अत्र न सन्देहः ।। इति पूर्वं मया प्रोक्तम् हे बुद्धिमन् (विप्र!) अनुसन्धत्स्व । अन्यथा त्वं देहहानिं तु पश्यसि । (अत्र) न सन्देहः ।। हे वृद्ध! तत् मद्दत्तम् अयुष्यम् । तेन च त्वं जीव । यथा लक्ष्मीपतिः क्षितौ कुरुक्षेत्रे दग्धम् औत्तरगर्भगं परीक्षितं क्षणाद् रक्षितवान् (तथा) सुविचक्षणः (अहं) त्वाम् इह जीवयानि ।।

(व्या) कर्तुमिति ।। हे बुद्धिमन्! 'कर्तुं चाकर्तुम्' (३।६५) इत्यादिश्लोकः पूर्वं मया प्रोक्तं तम् अनुसंधत्स्व । अन्यथा त्वं देहहानिं तु पश्यसि । न संशयः ।।२६।।

तत्ते इति ।। तत् तस्मात् हे वृद्ध! मद्दत्तं ते आयुष्यम् । तेन च त्वं जीव । हे वृद्ध! त्वां यथा लक्ष्मीपतिः श्रीकृष्णः क्षितौ कुरुक्षेत्रे अश्वत्थाम्ना अस्त्रेण दग्धम् औत्तरगर्भगं उत्तरायाः अयम् औत्तरः । स च गर्भः । तद्गं परीक्षितं क्षणाद् रक्षितवान् । तथा सुविचक्षणः अहम् । इह जीवयानि । जीवयामि ।।२८।। विप्र.प्र.सम्पूर्णम्।।

### ४. शेषप्रकरणम्।। श्लोकाः (२९-३८)

**मद्दत्तजीवनं यद्वदृणबन्धनमोचनम् ।**
**भविता मे नन्दनस्य चरणद्वन्द्ववन्दनम् ।।२९।।**

**कराभ्यां शिरसाऽप्यत्र कुरु विप्र सुगौरवात् ।**
**वराभ्यां वरसारं तमिहामुत्रार्थदं गुरुम् ।।३०।।**

**तस्माद् ऋणविनिर्मुक्तो मरणेनापि ब्राह्मण ।**
**स्मरणं मे चरणयोः पौराणिक सदा कुरु ।।३१।।**

---

(१) (सुविचक्षण एन्दु वृं.मूलपाठ. आदरे 'सुविचक्षणः' एन्दु सविसर्गपाठमाडिकोंडु व्याख्यानकाररु अर्थ हेळिद्दारे. भी.नोडि पाठ निर्णयिसबेकु.)

अन्वयः – यद्वत् मद्दत्तजीवनं (तद्वत्) ऋणबन्धविमोचनं भविता । हे विप्र! मे नन्दनस्य चरणद्वन्द्ववन्दनं शिरसा कराभ्याम् अपि सुगौरवात् कुरु । अत्र वराभ्यां तम् इह अमुत्र अर्थदं वरसारं गुरुं (नियतगुरुं जानीहि) । तस्मात् (तादृशानुसन्धानात्) हे पौराणिक ब्राह्मण ऋणविनिर्मुक्तः मरणेन अपि (मुक्तः भवसि) । मे चरणयोः स्मरणं सदा कुरु ॥

(व्या) हे शेष! मद्दत्तजीवनम् । यद्वत् यथा मे नन्दनस्य विप्रस्य । ऋणबन्धन-मोचनं ऋणरूपबन्धनस्य मोचनम् । मोचकं भविता भवेत्, तथा हे विप्र (शेष) तज्जीवनावधिपर्यन्तम् ऋणान् मोचयित्वा इत्यर्थः । वराभ्यां कराभ्याम् । शिरसि । अत्र सुगौरवात् । चरणद्वन्द्ववन्दनं कुरु । अपि च । तं इहामुत्रार्थदं वरसारम् । मम वरेण सारं श्रेष्ठं गुरुं जानीहि ॥२९-३०॥

तस्मात् तादृशानुसन्धानात् हे ब्राह्मण! त्वमपि तद्वद् ऋणविनिर्मुक्तः । मरणेनापि (अपरोक्षं प्राप्य, जनिमृतिरहितो भवसि । मुक्तो भवसि इत्यर्थः) मुक्तः भवसि । अयमेव । गुरूपसत्तिरूपो लघूपायः । (हे पौराणिक! शेष मे चरणयोः स्मरणं । सदा कुरु । अह-मेव प्रधानगुरुः । विप्रे स्थित्वा, त्वाम् अनुगृह्णामि ॥) ॥३१॥

**अहं संयमिनीं गत्वा दमनाय सुपापिनाम् ।**
**कमनीयं तु मां तेषां सुमनोभिः समन्वितम् ॥३२॥**

**दर्शयित्वा च तत्पापं कर्शयित्वा सुदर्शनैः ।**
**परशुच्छेदनं तेषां मर्शयित्वा सुकर्षये ॥३३॥**

**एवं संयमिनीवासं दमनीयसुपापिनाम् ।**
**शमनाय तदा तेषां गमनाय मनस्त्वभूत् ॥३४॥**

अन्वयः – अहं संयमिनीं गत्वा (तत्र) दमनीयसुपापिनां तेषां सुमनोभिः समन्वितं कमनीयं मां तु दर्शयित्वा, सुदर्शनैः तत्पापं कर्शयित्वा, तेषां परशुच्छेदनं च मर्शयित्वा सुकर्शये ॥ एवं दमनीयसुपापिनां तेषां संयमिनीवासं शमनाय (यमाय समादिश्य, मम सत्यलोकादीन् प्रति) गमनाय मनः तु अभूत् ॥

(व्या) पुनः स्वमाहात्म्यं वर्णयति – अहमिति ॥ हे पौराणिक शेष! शृणु । अहं

**संयमिनीं** = यमपुरीं, **गत्वा**, तत्र **दमनीयसुपापिनां** = दमयितुं मर्दितुं योग्याश्च ते सुपापिनश्च । दमनीय सुपापिनः । तेषां पापस्यैवं विभागः । सुपापं दुष्पापं च । तत्र सुपापं मुक्तियोग्यजीवैः क्रियमाणम् । दुष्पापं च तदितरैः क्रियमाणम् । तत्र ये । मद्भक्ता भूत्वा पापिनः **तेषां सुमनोभिः** शुद्धमनोभिः सुपुष्पैश्च समन्वितं 'भो यम! पश्य माम् एवं सुपूजितं **कमनीयं** सुन्दरम् । मोचयैतान् नरकात्' इति तं प्रति **मां दर्शयित्वा** ।।३२।।

**सुदर्शनैः** = मध्वसिद्धान्तरहस्योपदेशैः । **तत्पापं** = तेषां पापम् । **कर्शयित्वा** = क्षीणीकृत्य, **परशुछेदनं च** । यमदूतैः क्रियमाणं मर्शयित्वा, 'नेमे परशुच्छेदनयोग्याः' इति विचार्य । तत् छेदनम् । **सुकर्शये** = कृशं करोमि = नाशयामि = परिहरामि इत्यर्थः ।।३३।।

**एवमिति ।।** एवं च । तेषां **दमनीयसुपापिनां संयमिनीवासं** परिहृत्य । **तदा** । हे शेष! **शमनाय** यमाय । एवमेव 'मद्भक्तान् नरकात् मोचय' इति समादिश्य, मम सत्यादिलोकान् प्रति **गमनाय । मनस्तु अभूत्** ।।३४।।

**यमोऽपि मां तदा प्राह त्वां ये निन्दन्ति मानवाः ।**
**तान्नैव मुञ्चामि धीमन् ब्रह्मकल्पक्षयेप्यहम् ।।३५।।**

**वृन्दावनकृतौ चोक्तमहिमा घटते न ते ।**
**इति ये कथयन्तीह न मुञ्चाम्याततायिनः ।।३६।।**

**येन वृन्दावनाख्यातिर्जाता चात्र दिने दिने ।**
**तस्मै नन्दन धान्यं वा धनं वा किं न दीयते ।।३७।।**

**मत्करादागतं वित्तं तस्मै दत्वा तु पोषय ।**
**तोषयाद्य दिनारभ्य यद्वा पुण्यदिने मम ।।३८।।**

अन्वयः – तदा यमः अपि 'हे धीमन्! ये मानवाः त्वां निन्दन्ति, तान् अहं ब्रह्मकल्पक्षयेऽपि नैव मुञ्चामि' (इति) मां प्राह । 'वृन्दावनकृतौ उक्तमहिमा च न घटते' इति ये इह कथयन्ति ते आततायिनः न मुञ्चामि' ।।

अत्र येन वृन्दावनाख्यातिः जाता, तस्मै दिने दिने हे नन्दन! (अकर्तुं चाकर्तुं

**अन्यथापि कर्तुं समर्थः मया) धान्यं वा धनं न दीयते किम्? तस्मै (विप्राय) अद्य दिनारभ्य यद्वा मम पुण्यदिने मत्करात् आगतं वित्तं दत्वा तु पोषय, तोषय ।।**

(व्या) ननु ततः किमब्रवीत् यमः इत्यत आह – यमोपीति ।। तदा यमोऽपि । हे वादिराजगुरो! त्वां ये मानवा निन्दन्ति । तान् हे धीमन्! ब्रह्मकल्पक्षयेऽपि । ब्रह्मणः कल्पः = सृष्टिः । क्षयः = शयनम् । तत्कालेऽपि । न मुञ्चामि' इति मां प्राह ।।३५।।

वृन्दावनमिति ।। पुनश्चैवमाह इति कथयति – वृन्दावनकृतौ इति ।। 'हे गुरो! ते वृन्दावनकृतौ । उक्तमहिमा च न घटते । इति ये कथयन्ति । तान् आततायिनः = घातकान् नैव मुञ्चामि ।।३६।।

येन इति ।। येन च अत्र वृन्दावनख्यातिर्जाता तस्मै हे नन्दन! दिने दिने । धान्यं धनं वा न दीयते किम् ।।३७।।

मत्करादागतमिति ।। हे शेष! मत्करात् । मम यः करः ग्राह्यभागः । तस्मात् आगतं वित्तं तस्मै = ब्राह्मणाय दत्वा तु तं पोषय । अद्य दिनमारभ्य तोषय = सन्तोषय । यद्वा मम पुण्यदिने तं प्रति द्रव्यं दत्वा तोषय ।।३८।। शे.प्र.सं.।।

### ५. विप्रप्रकरणम् ।। श्लोकाः (३९-४३)

(व्या) 'हे विप्र' इत्यारभ्य 'तद्वै स्यात्तव नान्यथा' इत्यन्तं पञ्चमं विप्रश्रोतृकं प्रकरणम् ।

**हे विप्र कविवृत्तेन श्लोकेन तु ममाग्रतः ।**
**नृत्तं कुरु सुवृत्तेन वित्तं तव भविष्यति ।।३९।।**

**एवं क्रमेण चाध्यायानागतः कुरु नन्दन ।**
**पूर्वस्मिन् वै परिच्छेदे शीघ्रं पञ्चदशैव तु ।।४०।।**

**पूर्वं दिग्विजयं कृत्वा भीमसेनो यथा मखम् ।**
**चकार राजसूयं च कुरुनन्दन एव च ।।४१।।**

**तद्वद्दिग्विजयं कृत्वा चाग्रतः कुरु नन्दन ।**

**अध्यायांस्तव तद्वत् स्याद्राजसूयफलं महत् ॥४२॥**[(१)]

**इत्यभिप्रायतत्वोक्तिं कुरु नन्दन तत्पदम् ।**
**यत्फलं भीमसेनस्य तद्वै स्यात्तव नान्यथा ॥४३॥**

अन्वयः – हे विप्र! कविवृत्तेन श्लोकेन मम अग्रतः सुवृत्तेन तु नृत्तं कुरु । (ततश्च) तव वित्तं भविष्यति (प्राप्स्यति) ॥ हे नन्दन! एवं च क्रमेण आगतः (सञ्चारात् इत्यर्थः) पूर्वस्मिन् परिच्छेदे वै पञ्चदश एव तु शीघ्रम् अध्यायान् कुरु ॥ (हे विप्र!) यथा पूर्वं कुरुनन्दनः (श्रीभीमसेनः) दिग्विजयं कृत्वा, राजसूयमखं च चकार. (तथा) एव च (त्वं कुरु) ॥ तद्वत् हे नन्दन! दिग्विजयं (सञ्चारं) कृत्वा (मम वृन्दावन) अग्रतः अध्यायान् (कृतेः सम्पूर्ण अध्ययनानि) (पूर्वोक्तान्) कुरु । (तेन) तद्वत् (श्रीभीमसेनवत्) महत् राजसूयफलं तव च स्यात् ॥ हे इत्यभिप्राय! नन्दन! (विप्र!) तत्पदं (मम भाविसमीरत्वं ज्ञात्वा, मे) तत्वोक्तिं कुरु । (तेन) भीमसेनस्य यत्फलं तत् (फलं) तव (अपि) स्यात् वै । न अन्यथा ॥

**(व्या) हे विप्र! कविवृत्तेन** = कवेः मम वृत्तानि शार्दूलविक्रीडितादीनि यस्मिन्, तादृशेन श्लोकेन; श्लोकैरित्यर्थः । **ममाग्रतः । सुवृत्तेन** = सदाचरणयुततया **नृत्तं कुरु** । ततश्च **तव वित्तं भविष्यति** ॥३९॥ **एवमिति ॥** एवं क्रमेण च । **हे नन्दन! आगतः** 'सञ्चारात्' इत्यर्थः । **पूर्वस्मिन् परिच्छेदे । पूर्वार्धे । पञ्चदशैव अध्यायान् कुरु** ॥४०॥

**पूर्वमिति ॥ यथा पूर्वं कुरुनन्दनः भीमसेनः । दिग्विजयं कृत्वा, राजसूयं** = राज्ञा लतात्मकः सोमः सूयते अस्मिन्निति; तं । **मखं चकार** ॥४१॥

**तद्वदिति ॥ तद्वत्** हे नन्दन! **दिग्विजयं कृत्वा** = सञ्चारं कृत्वेत्यर्थः । **ममाग्रतः** स्थित्वा, **अध्यायान्** पूर्वोक्तान् कुरु । तेन तद्वत् भीमसेनवत् राजसूयफलं **तव** स्यात् ॥४२॥

**हे इत्यभिप्राय!** = 'इति राजसूयफलं मे भविष्यति' इत्यभिप्रायो यस्य सः, तादृशः । **हे नन्दन!** विप्र! **तत्पदं** तस्य पदं यस्य सः । तादृशं मां ज्ञात्वा । मे **तत्वोक्तिम्** = रहस्योक्तिं

(१) ('चाग्रतः कुरु' एन्दु स्वा.पाठ. आदरे वृं.नल्लि चागतः कुरु' एंदिदे. व्याख्यानदल्लि 'अग्रतः स्थित्वा कुरु' एन्दु अर्थविदे. स्वा.पाठक्के व्याख्यानवु अनुकूलवागिदे. भी. नोडबेकु.)

कुरु । तेन यत् भीमसेनस्य फलं तत् तव स्यात् । **अन्यथा न** = न स्यात् ।।४३।।

### ६. हयग्रीवकर्मन्दिप्रकरणम् ।। श्लोकाः (४४-५० १/२)

**(व्या) 'हयकन्धरसन्नाम'** इत्यारभ्य **'केन यास्यन्त्युपस्थितम्'** इत्यन्तं हयग्रीव-कर्मंदिप्रकरणं षष्ठम् ।।

**हयकन्धर सन्नामधर विद्वद्धुरन्धर ।**
**कर्मन्दीश्वर मद्वृन्दावनमन्दिरगं हरिम् ।।४४।।**

**भज तद्भजकं मां च त्यज दुर्जनसङ्गतिम् ।**
**द्विजे सुजनतां पश्य भजते निजसेवया ।।४५।।**

**वृन्दावनकृतौ चोक्तमहिमा घटते न वा ।**
**इति ते संशयो मास्तु यमोक्तं शृणु तत्र च ।।४६।।**

अन्वयः – हे विद्वद्धुरन्धर! हयकन्धरसन्नामधर! कर्मन्दीश्वर मद्वृन्दावनगं हरिं, तद्भजकं मां च भज । दुर्जनसङ्गतिं त्यज । निजसेवया भजते द्विजे सुजनतां पश्य ।। (हे हयग्रीवकर्मन्दिन्!) वृन्दावनकृतौ (मया) उक्तमहिमा घटते वा न (घटते) इति ते संशयः च मास्तु । तत्र (संशयपरिहारविषये) यमोक्तं च शृणु ।।

**(व्या) हे विद्वद्धुरन्धर!** विदुषां धरम् अग्रेसर त्वं धरतीति तादृश । 'विद्वत्पक्षपातिन्' इत्यर्थः । **हयकन्धरसन्नामधर! कर्मन्दीश्वर** = यतीश्वर । वृन्दावनमन्दिरगम् = वृन्दावन-स्थहरिम् । **तद्भजकं मां च । भज** ।।४४।।

**दुर्जनसङ्गतिं त्यज** । **द्विजे** अस्मिन् द्विजे **सुजनतां** सुजनत्वं **पश्य** विचारय । कथं पश्यामि? इत्यत आह – **भजते इति ।।** सः **निजसेवया मां भजते** । निजाः मामकाः तेषां यथा तथा सेवया मां भजते ।।४५।।

**'वृन्दावनकृतौ च । तदन्तर्यामिणा मया उक्तमहिमा घटते न वा' इति ते संशयः मास्तु** । कथं संशयापहारः? इत्यत आह – **यमोक्तमिति ।।** तत्र च संशयविषये **यमोक्तं** 'वृन्दावनकृतौ चोक्तमहिमा घटते न वा'(१८।३६) इत्याद्युक्तं ब्राह्मणमुखात् **शृणु** ।।४६।।

**हयकन्धरनामधेय जय विद्वज्जयाङ्कुर ।**
**दुर्वादीभ महासिंह दुःसिद्धान्तं च दुःसहम् ।।४७।।**

**हे हयग्रीवकर्मन्दिन् तव सुन्दरविग्रहः ।**
**मम सन्दर्शनादेव ह्यभूदानन्दविग्रहः ।।४८।।**

**अहं जानामि ते नाम मम नाथस्य मानितम् ।**
**तेन मन्नन्दनादीनां मान्यस्त्वं नात्र संशयः ।।४९।।**

**मम वृन्दावनाख्यानं तव सुन्दरकर्णतः ।**
**मन्नन्दनवदेव त्वं नन्दयन् मां शृणुष्व तत् ।।५०।।**

**तेन ते भविता श्रेयः के न यास्यन्त्युपस्थितम् ।।**

अन्वयः – हे हयकन्धरनामधेय! विद्वज्जयाङ्कुर! दुर्वादीभमहासिंह! दुःसहं दुःसिद्धान्तं च जय ।। हे हयग्रीवकर्मन्दिन्! मम सन्दर्शनादेव तव सुन्दरविग्रहः अनन्दविग्रहः अभूत् हि ।। मम नाथस्य मानितं ते नाम अहं जानामि । तेन त्वं मन्नन्दनादीनां मान्यः, अत्र न संशयः ।। मम वृन्दावनाख्यानं मम नन्दनवत् एव तव सुन्दरकर्णतः मां नन्दयन् तत् श्रुणुष्व ।। तेन ते श्रेयः भविता । (तेन) उपस्थितं के न यास्यन्ति?

(व्या) यथा तात तातेति प्रेम्णा पुत्रमाह्वयति; तथा पुनराह्वयति – **हयकन्धरेति ।। हे विद्वज्जयाङ्कुर!** विदुषां जयस्य अङ्कुर । **हयकन्धरनामधेय! हे दुर्वादीभमहासिंह!** दुर्वादिगजानां सिंहसदृश । **दुःसहं दुःसिद्धान्तम्** । 'कृष्णपत्नीकशेर्वोरवतारोहम्' इति यो दुःसिद्धान्तः तं जय । मद्वचनादित्यर्थः[१] ।।४७।।

---

(१) ('यो मां देवं विजानाति ऋजुस्थं पुण्यकृन्नरः' इत्यादिवाक्यान्युदाहृत्य जय इति भावः । 'ममापि जीवोत्तमत्वं श्रुत्वा सर्वे मम प्रियाः'अध्याय ८।५२; 'अधिकारिषु सर्वेषु चोत्तमोहं न संशयः' ८।९७ मुन्ताद अनेक वचनगळु इवे. ब्रह्मवैवर्त, पाद्म, स्कान्द मत्तु ऋक्संहितावचनगळिवे. अवु ऋजुत्वमंडन ग्रंथदल्लि १६,१७,१८,१९ने पुटगळल्लि उदाहृतवागिवे. विजयदासरु मुन्ताद ज्ञानिगळु इवर ऋजुत्ववन्नु होगळिद्दारे. 'कर्नाटकभक्तविजय' भाग १ पुट १८५-१८९; 'वादिराजगुरुवरकीर्तनमंजरी' १९६३ सह ई विषयदल्लि आधारवागिवे. त्रिविक्रमप्रतिष्ठा, लक्षालङ्काररचना, वेदवेद्य, भूतराजादिगळ पूज्यत्वादि लिङ्गगळु साधकवागिवे. ध्वजस्तंभद हंसवाहनयुक्तमूर्ति ईगलू प्रत्यक्षवागिदे सोदेयल्लि. वृन्दावनाचार्यर अनुभवगळु

**हे हयग्रीवकर्मन्दिन्! ते नाम । मम नाथस्य** हयग्रीवस्य **मानितं** मानयुतम् इति **जानामि** । **तेन च** नाम्ना **मन्नन्दनादीनां** मन्नन्दनाः विप्रादयः तेषां **त्वं मान्योसि । अत्र संशयः न** ।।४९।।

**ममेति ।। मम वृन्दावनाख्यानम् । मन्नन्दनवदेव** विप्र इव । **तव सुन्दरकर्णतः । मां नन्दयन्** । आनन्दयन् सन् । **तत्** आख्यानं **शृणुष्व** ।।५०।।

**तेनेति ।। तेन** श्रवणेन । **ते श्रेयः** मोक्षं **भविता । के वा उपस्थितम् ।** यदृच्छया प्राप्तं श्रेयः न **यास्यन्ति** । प्राप्स्यन्ति । अतो मम वचः शृणु । श्रेयश्च सम्पादय । नोदासीनो भव । पूर्वोक्तप्रकरणेन निःसंशयो भव ।। इति हयग्रीवकर्मंदिश्रोतृकं षष्ठं प्रकरणं सं.।।

## ७. विठ्ठलप्रकरणम्।। श्लोकाः (५१-५५)

**(व्या) 'हे पयःफेनवत्'** इत्यारभ्य **'सविता वेत्ति सर्वथा'**(१) इत्यन्तं विठ्ठलश्रोतृकं सप्तमं प्रकरणं ।

**हे पयःफेनवच्छुभ्रकीर्तिमन् मे मनःप्रिय ।।५१।।**

**विप्रोऽयं त्वत्करे दत्तो मया पुत्र इव प्रियः ।**
**तच्छिशोः क्षीरपानार्थं गां तु दापय भूपतेः ।।५२।।**

**स्वस्य पुत्रोऽपि नास्त्यत्र कस्य वक्ष्ये रुजं द्विजे ।**
**पश्य विप्रोऽद्यान्नशून्यो नश्यते चास्मदाश्रयी ।।५३।।**

**मत्पुत्रागमपर्यन्तं त्वत्पुत्रोऽयं न संशयः ।**
**तत्पुत्रक्षीरपानार्थं सत्प्रभोर्गां प्रदापय ।।५४।।**

**एवं चेत्तव चायुष्यवृद्धिर्हि भविता सदा ।**
**कविता विप्रके नास्ति सविता वेत्ति सर्वदा ।।५५।।**

**अन्वयः – हे पयःफेनवत् शुभ्रकीर्तिमन्! मे मनःप्रिय! हे विठ्ठल! ।। पुत्र इव (मे) प्रियः अयं विप्रः मया त्वत्करे दत्तः । तत् शिशोः क्षीरपानार्थं भूपतेः (सकाशात्) तु**

---

एरडु विश्वप्रियविलासगळल्लिवे.)

(१) ('सर्वदा' एन्दु व्याख्यानवित्तु. 'सर्वथा' एन्दु वृं. आनुगुण्यक्कागि तिद्दिदेने.)

**गां दापय ।। हे द्विज! (विठ्ठल) स्वस्य पुत्रः (पुत्रसदृशः लक्ष्मीपतिः) अपि अत्र नास्ति । तस्मात् कं (प्रति विप्रस्य दारिद्र्य) रुजं वक्ष्ये । अस्मदाश्रयी विप्रः अद्य अन्नशून्यः (सन्) नश्यते च ।।**

**हे सत्प्रभोः(?) (आज्ञाधारकभूपतेः गुरो हे विठ्ठल! विश्वेश!) अयं (विप्रः) त्वत् पुत्रः न संशयः । तत् (तस्मात् कारणात्) मत्पुत्र (लक्ष्मीपतेः) आगमपर्यन्तं पुत्रक्षीरपानार्थं गां प्रदापय ।। एवं चेत् सदा तव आयुष्यवृद्धिः भविता हि । विप्रके कविता नास्ति, सविता सर्वदा वेत्ति ।।**

**(व्या) हे पयःफेनवच्छुभ्रकीर्तिमन्!** शास्त्रेषु कीर्तेः शुभ्रत्ववर्णनस्य सत्वात् एव- मुक्तिः । **मे मनःप्रिय!** विठ्ठल! **शृणु** ।।५१।। **विप्रोयमिति ।। अयं प्रियो विप्रः । मया पुत्र इव । त्वत्करे दत्तः । तच्छिशोः** तत्पुत्रस्य **क्षीरपानार्थं भूपतेः** सकाशात् **तु गां दापय** ।।५२।।

**स्वस्येति ।।** 'ननु लक्ष्मीपत्यादयः सन्ति । ते दापयन्तु' इत्यत आह– **स्वस्येति ।। स्वस्य** स्वतन्त्रस्य मम पुत्रोऽपि । लक्ष्मीपतेरपि । **अत्र नास्ति । हे द्विज! कस्य** कं प्रति द्वितीयार्थे षष्ठी । इमां **रुजं दारिद्र्यरोगम्** । **वक्ष्ये । अद्य अन्नशून्यो** (अनुतपन्तं) विप्रः । **पश्य** । **अस्मादाश्रयी** = अस्माकम् आश्रयो अस्यास्तीति तादृशः । अयं **नश्यते** नश्यति ।।५३।।

**मत्सुतागमपर्यन्तमिति ।।** नन्वहं किं करोमि? इत्यत आह – **मदिति ।। हे विठ्ठल! मत्पुत्रागमपर्यन्तम् । अयं त्वत्पुत्रः,** संशयो न । **तत्** तस्मात् कारणात् । **हे सत्प्रभो!** सन् साधुः प्रभुः राजा यस्य सः, तस्य सम्बुद्धिः । हे तादृश । **क्षीरपानार्थं** तं प्रति **गां प्रदापय** ।।५४।।

**एवं** करोषि **चेत्, तव** चायुर्वृद्धिः **सदा भविता** । ननु ''किमप्ययं वदिष्यति स्वयमेव श्लोकान् कृत्वा स्वदैन्यं वदति । कथमहं करोमि?'' इत्यत आह – **कवितेति ।।** हे विठ्ठल! अस्मिन् **विप्रके** द्विजे **कविता** कवेर्भावः कविता सा **नास्ति** । तत्कथम्? इति मा वद ।। **सविता** जगत्सृष्ट्यादिकर्ता श्रीहयवदनः इदं **वेत्ति** ।।५५।। विठ्ठलप्रकरणं संपूर्णं।।

## ८. नारसिंहप्रकरणम् ।। श्लोकाः (५६-७४)

**(व्या) 'नारसिंह नरश्रेष्ठ'** इत्यारभ्य **'हरिष्ये म्लेच्छबन्धनम्'** इत्यन्तं नरसिंहश्रोतृकं

अष्टमं प्रकरणम् ।।

**नारसिंह नरश्रेष्ठ यथा सरसभारती ।**
**तव जिह्वाग्रगा तद्वद्वृन्दावनकृतिर्भवेत् ।।५६।।**

**नारसिंह नरश्रेष्ठ नरके रविनन्दनः ।**
**आह यद्वचनं चाग्रे हयग्रीवमुनिं वद ।।५७।।**

**भूपोऽस्मद्धनमादाय पाप्मानं पोषयत्यहो ।**
**दोषोऽपि मम नास्त्येव शेषशायिपदे शपे ।।५८।।**

अन्वयः – नरश्रेष्ठ! नरसिंह! यथा सरसभारती तव जिह्वाग्रगा (अस्ति) तद्वत् वृन्दावनकृतिः भवेत् ।। नारसिंह! नरश्रेष्ठ! रविनन्दनः यद्वचनं नरके आह (तत्) हयग्रीवमुनिम् अग्रे च वद ।। भूपः अस्मत् धनम् आदाय पाप्मानं पोषयति, अहो । मम दोषः अपि नास्ति एव, शेषशायिपदे शपे ।।

(व्या) पूर्वोक्तनरसिंहसरसभारतीभट्टाह्वयं मौद्गलनरसिंहमुपदिशति – **नरसिंहेति** ।। **हे नरश्रेष्ठ** (पुरुषोत्तमनामक) **नरसिंह** (नरसिंहकुलदेवताभक्त) । यथा तव **जिह्वाग्रगा सरस-भारती** । तदाख्यं काव्यं मत्कृतमित्यर्थः । तथा **वृन्दावनकृतिर्भवेत्** ।।५६।।

**हे नरश्रेष्ठ! नरसिंह! रविनन्दनो** यमः । **नरके** नरकविषये । **अग्रे** पूर्वं । मां प्रति यद्वचनमाह । **तच्च । हयग्रीवमुनिं** प्रति **वद** ।।५७।।

**भूप इति ।। भूपो** मद्वचनमनादृत्य । पुनः **अस्मद्धनमादाय । पाप्मानं पोषयति** । अपि च मम दोषोपि नास्तीति वदति । **अहो** आश्चर्यम् । एतत्सत्यमिति । **अहं शेष- शायि पदे शपे** । शपथं करोमि ।।५८।।

**शेषाद्रिपण्डितः पापशेषात् स्वस्य सुचक्षुषः ।**
**शोषकस्त्वयमेवासीत्त्वद्द्रोहाच्च विशेषतः ।।५९।।**

**यथा च द्रुपदो द्रोणद्रोहतः समुपद्रुतः ।**
**सुभद्रापतिना दृप्तस्तद्रथोपरिमर्दितः ।।६०।।**

**तच्छिष्यैरेव पाञ्चालः शोषितस्तृषितो यथा ।**

**तद्वत्त्वच्छिष्यतश्चायं शेषाद्रिः शोषितस्त्विह ॥६१॥**

**तस्मात्त्वमेव तं पापं मोचयाद्य सुशोच्यताम् ।**
**गतः कुचोद्यकृद्भिश्च ह्यनाथं च समुद्धर ॥६२॥**

अन्वयः – (हे नरश्रेष्ठ! नारसिंह!) शेषाद्रिपण्डितः स्वस्य पापशेषात् विशेषतः त्वत् द्रोहात् च अयमेव स्वस्य सुचक्षुषः शोषकः तु आसीत् ॥ यथा च द्रोणद्रोहतः समुपद्रुतः द्रुपदः सुभद्रापतिना आहृत्य तत् रथोपरिमर्दितः । यथा च तृषितः पाञ्चालः तत् शिष्यैः एव न मारितः, तद्वत् इह अयं शेषाद्रिः तु त्वत् शिष्यतः च शेषितः ॥ तस्मात् कुचोद्यकृद्भिः च सुशोच्यतां हि गतः । अद्य तं पापं मोचय । अनाथं त्वं त्वम् एव समुद्धर ॥

(व्या) शेषाद्रिपण्डित इति ॥ शेषाद्रिपण्डितश्च स्वस्य पापशेषात् सुचक्षुषः । शोषकश्च आसीत् । अन्ध आसीदित्यर्थः । विशेषतः त्वद्द्रोहात् अयम् आसीत् ॥५९॥

दृष्टान्तमाह – यथा चेति ॥ यथा च द्रुपदः द्रोणद्रोहतः । समुपद्रुतः । सम्यगुपद्रव-युक्तः । सुभद्रापतिना = अर्जुनेन । आहृत्य[1] (आद्रुत्य) । तद्रथोपरि = तस्यैव रथोपरि मर्दितः । बद्धश्च ।

पुनः तच्छिष्यैरेव = द्रोणशिष्यैरेव । पाञ्चालः पाञ्चालदेशाधिपः । स च शेषितः[2] = न मारित इत्यर्थः । तृषितः यथा येन केनापि जलदानेन शेषितः भवति । तद्वत् । तच्छिष्यतश्चापि अयं शेषाद्रिः इह शेषितः ॥६१॥

तस्मादिति ॥ कुचोद्यकृद्भिः च कु कुत्सितं चोद्यम् । तर्कं कुर्वन्ति ते कुचोद्यकृतः । तैः सुशोच्यतां गतः । दुःखित्वं प्रापितः । तस्मात् त्वमेव तत्पापं मोचय। अद्य तम् अनाथं समुद्धर ॥६२॥

**अहं जानामि ते मानिन् तेन जातमनादरम् ।**
**शुना समानतां प्राप्तः कुमानवगतिं मनाक् ॥६३॥**

---

(१) 'आहृत्य' 'आद्रुत्य' एरडू स्वा.पाठ. श्रीपाठ. आदरे वृं.नल्लि 'दृप्तः' एंदिदे.

(२) (शेषितः एंबुदु स्वा.पाठ. शोषितः एन्दे वृं. इदे. व्याख्यानवु 'स्वा'पाठक्के अनुगुणवागिदे. हागे इल्ल मुन्दे 'शेषितः' एंबुदु स्वा.पाठवे. 'तं' एंबुदु स्वा.पाठ. वृं.मूलदल्लि तं इल्ल.)

**ब्रह्माधिक्करणात् ते वै निम्नं दुःखमवाप्तवान् ।**
**द्युम्नधृष्टो यथा द्रोणविरोधान्मृतिदुःखभाक् ।। ६४।।**

**व्यत्यस्तनामतस्तस्मिन् मतिव्यत्यास एव च ।**
**गृहीतस्तद्वदेतस्मिन् व्यत्यस्तमतिरप्यभूत् ।।६५।।**

**तथा हि लोके मर्त्यानां कलिनाऽऽविष्टचेतसाम् ।**
**विनाशकाले सम्प्राप्ते तन्मतिश्चालिता भवेत् ।।६६।।**

**तस्मात्तत्कलिना सर्वं कृतमन्तर्निवासिना ।**
**स्वाज्ञानादिति मत्वा च ह्यनाथं तं समुद्धर ।।६७।।**

अन्वयः – हे मानिन्! नारसिंह! तेन ते जातम् अनादरम् अहं जानामि । शुना समानतां प्राप्तः । मनाक् कुमानवगतिं प्राप्तो भवति ।। यथा द्युम्नधृष्टो द्रोणविरोधात् मृतिदुःखभाक् (अभूत् तथा) ते ब्रह्माधिक्करणात् निम्नं दुःखमवा- प्तवान् ।। व्यत्यस्तनामतः (च) तस्मिन् मतिव्यत्यासः एव गृहीतः । तद्वत् च एतस्मिन् अपि व्यत्यस्तमतिः अभूत् ।। तथा लोके कलिनाविष्टचेतसां मर्त्यानां विनाशकाले सम्प्राप्ते (सति) तन्मतिः चालिता (विपरीता) भवेत् ।। तस्मात् अन्तर्निवासिना तत् कलिना, स्वाज्ञानात् सर्वं कृतम् हि इति मत्वा, तम् अनाथं समुद्धर ।।

**(व्या) हे मानिन्! नरसिंह!** तेन तव **अनादरं जात**मिति **अहं जानामि** । तेन च सः **शुना** श्वानेन **समानतां कुमानवगतिं** च **प्राप्तः ।** प्राप्स्यतीत्यर्थः ।।६३।।

ते तव मनाक् स्वल्पमपि **ब्रह्माधिक्करणात् =** ब्राह्मणत्वधिक्करणात् **निम्नं** = गम्भीरं **दुःखम् अवाप्तवान्** । अवाप्स्यतीत्यर्थः । दृष्टान्तमाह – **द्युम्नधृष्टेति ।। द्युम्नधृष्टः** = धृष्टद्युम्नः । **द्रोणविरोधात् मृतिदुःखभाक्** = मृतेः मरणस्य दुःखं भजते इति दुःखभाक् । तादृशोऽभूत् । तथेत्यर्थः ।।६४।।

ननु धृष्टद्युम्नशब्दस्य व्यत्यासः कुतः इत्यत आह – **व्यत्यस्तेति ।। व्यत्यस्तना- मतश्च** । तस्मिन् मतिव्यत्यास एव । 'अश्वत्थामा हतः' इति धर्मराजेनोक्ते द्रोणस्य समाध्यवस्थायां तच्छिरश्छेदको मतिव्यत्यासः । स एवात्र व्यत्यासशब्देन **गृहीतः** इत्यर्थः । **तद्वत् एतस्मिन्** शेषाद्रिपण्डितेऽपि **व्यत्यस्तमतिरभूत्** ।।६५।।

ननु शेषाद्रिपण्डितस्य सात्विकत्वात् कथमयं व्यत्यासः इत्यत्र दृष्टान्तमाह – **यथा हीति**[१] ।। **लोके कलिना आविष्टचेतसां विनाशकाले सम्प्राप्ते** सति, तन्मतिः चालिता विपरीता भवेत् । तथेत्यर्थः ।।६६।।

उपसंहरति – **तस्मादिति** ।। हे नरसिंह! तत्सर्वं त्वदपयानादिकम् अन्तर्निवासिना कलिना, स्वस्य अज्ञानाच्च तेन कृतमिति मत्वा, च **तं** हि अनाथं **समुद्धर** ।।६७।।

**हयास्यनामधेयिनो प्रकाश्यमेव मे प्रियम् ।**
**वृथाऽस्य नोच्यते वचः कृपाऽस्य तत्र जायते ।।६८।।**

**अतो मयोदितं हि यत्सुतोदितं यथा तथा ।**
**वृथा न जायते कृतिन् भवत्यवश्यमेव तत् ।।६९।।**

**सुतोऽपि मे प्रवक्ष्यते तवानुमत्यनुव्रतः ।**
**इहाऽगतः श्रुतं ममेह सन्मतं कुरुष्व तत् ।।७०।।**

अन्वयः – (हे नारसिंहमुने!) अस्य हयास्यनामधेयिनः (निकटे) मे प्रियं (श्रीवृन्दावनाख्यानं) प्रकाश्यं एव । (इदं) वचः (मया) वृथा न उच्यते । अस्य (विषये) तव कृपा जायते (च) ।। अतः हे कृतिन्! यत् तत् मया उदितं हि सुतोदितं (अतः) तथा तत् अवश्यम् एव भवति । वृथा न जायते ।। मे सुतः (विप्रः) अपि इह आगतः तव अनुमति अनुव्रतः प्रवक्ष्यते । इह श्रुतं मम सन्मतं तत् (त्वं) कुरुष्व ।।

**(व्या) हयास्यनामधेयिन इति ।। हे नरसिंह!** त्वया अस्य हयास्यनामधेयिनो निकटे **मे प्रियम्** आख्यानं **प्रकाश्यमेव । वृथा वचः** मया **नोच्यते । अस्य** विषये तव **कृपा च जायते** ।।६८।।

**अतः मत् सुतोदितं यत्** सुतेन ब्राह्मणेन उदितम् उक्तं, तद्धि मयोक्तं विद्धि । **हे कृतिन्! यथोदितं** तथा **तदवश्यमेव भवति** । वृथा न जायते ।।६९।।

**सुतोपीति** ।। मे **सुतः** विप्रोपि **इहाऽगतः** । **तव अनुमत्यनुव्रतः** सम्मत्यनुसारी । **ते**

(१) ('यथा हि' एन्दु व्याख्यान; तथा हि एन्दु वृं.मूल. भी द्रष्टव्या)

तुभ्यं । **प्रवक्ष्यते** प्रवक्ष्यति । तस्मात् इहश्रुतं **सन्मतं तत् कुरुष्व** ।।७०।।

**इत्थं मयोक्तमेवैतत् न विप्रोक्तं कदाचन ।**
**कथं ते भविता चित्ते विप्रोक्तिर्मम वा कृतिः ।।७१।।**

**संशयं वद विद्वंस्ते मदवज्ञानतो भवेत् ।**
**सदवज्ञा महत्पापं त्रिदिवात्पातयत्यधः ।।७२।।**

**स्वैरं गुरूक्तं कुरु मारदूर धीर त्वरन् पौरजनप्रियार्थम् ।**
**स्मरन् मुरारेः परमार्थसारं न तत्कृतं संस्मर सज्जनाग्र्य ।।७३।।**

**हे मौद्गलनारसिंह तव सन्ततसेवया ।**
**मा भूत्कलत्रपुत्राणां हरिष्ये म्लेञ्छबन्धनम् ।।७४।।**

अन्वयः – इत्थं मया उक्तम् एव एतत् कदाचन न विप्रोक्तम् । (अतः) विप्रोक्तिर्वा मम कृति(र्वा इति) ते चित्ते (संशयः) कथं भविता? हे विद्वन्! ते (तव) संशयं वद । (तव संशयकरणं) मत् अवज्ञानतः भवेत् । सदवज्ञा महत्पापं, (तस्मात्) त्रिदिवात् अधः पातयति ।। हे सज्जनाग्र्य! मारदूर! धीर! पौरजनप्रियार्थं स्वैरं गुरूक्तं कुरु । मुरारेः परमार्थसारं स्मरन् (आख्यानं) न तत्कृतं (विप्रकृतम् इति) संस्मर ।। हे मौद्गलनारसिंह! तव सन्ततसेवया कलत्रपुत्राणां (बाधः) मा भूत् । (तव) म्लेञ्छबन्धनं हरिष्ये ।।

**(व्या) इत्थं** पूर्वोक्तं श्लोकद्वयं 'हयास्यनामधेयिनः' इत्यादि । **मयोक्तमेवैतत् । कदाचन न विप्रोक्तम् । ते चित्ते 'विप्रोक्तिर्वा मत्कृतिर्वा इति कथं भविता** ।।७१।।

**संशयमिति ।। हे विद्वन्! वद संशयम्** । स च **मदवज्ञानतः** मदपमानतः अभवत् । नापमानय । मां सदवज्ञा सतां अवज्ञा अपमानं महत्पापम् । तत् पापं कुर्वाणम् । **त्रिदिवात्** स्वर्गात् **अधः पातयति** ।।७२।।

**स्वैरमिति ।। हे मारदूर** । मारः कामः दूरं यस्य सः । तादृशनिष्काम इत्यर्थः । **हे धीर! पौरजनप्रियार्थं** पौराः सोदापुरस्थाः जनाः तेषां प्रियार्थम् । **स्वैरं** स्वच्छन्दं यथा स्यात् तथा । **गुरूक्तं** गुरुणा मयोक्तम् । **त्वरन्** सन् कुरु । **मुरारेः** हयवदनस्य **परमार्थसारं** सर्वोत्तमत्वाद्यर्थयुक्तं

श्रेष्ठं मदाख्यानं स्मर । **हे सज्जनाग्र्य!** तत्कृतं तेन विप्रेण कृतं इति न संस्मर । मा संशयं कुरु इत्यर्थः ।।७३।।

**हे मौद्गलनारसिंह!** मुद्गलाख्यो नारसिंहः कुलदेवता यस्येति । तादृशब्राह्मण । **तव सन्ततसेवया । कलत्रपुत्राणां** बाधा **मा भूत् ।** न भविष्यति । **म्लेञ्छबन्धनं हरिष्ये ।** माभीः । अयमर्थः श्रीसत्यधर्मस्वामिनः पूर्वाश्रमे सवणूरग्रामे ऊषुः । तत्र केनचिद्धेतुना तद्ग्रामाधिपेन म्लेञ्छेन एतेषु शासनं घुष्टम् । तस्य परिहारार्थं सोदापुरस्थं वादिराजेन्द्रगुरुं सन्ततसेवया प्रसन्नमकुर्वन्(त्) । तदा श्रीगुरुणा तद्बन्धनं परिहृतम् । अपि च अद्यापि होळेहोन्नूरग्रामे श्रीगुरुराजाः तदनुग्रहार्थं निवसन्ति । तेभ्यश्च हस्तोदकमपि तद्बृन्दावनपूजकैः दीयते । अहो महामाहात्म्यं गुरुराजानामिति शिष्टाः प्रवदन्ति । एतच्च भविष्यमुक्तमिति ज्ञातव्यम् । तदिदानीं दृश्यते ।। मौद्गलनारसिंहप्रकरणं सम्पूर्णम् ।।

## ९. विप्रप्रकरणम् ।। श्लोकाः (७५-७७)

**(व्या) 'मुग्धेति'** इत्यारभ्य **'यत्कृतं त्वज्ञतार्पकम्'** इत्यन्तं विप्रश्रोतृकं नवमं प्रकरणम् ।।

**मुग्धेति सम्बोध्य मया दुग्धवारिधिरीरितः ।**
**दग्धजिह्ववदेव त्वं स्तब्धवृद्धेति भाषसे ।।७५।।**

**किं करोमि तवाज्ञाद्याहं करोम्यज्ञतान्तकः ।**
**अहङ्कारेण हीनं त्वां यं करेणाभिमर्शये ।।७६।।**

**मत्करस्पर्शनं विप्र त्वच्छिरस्यतिसत्कृतम् ।**
**तत्कृच्छ्रं हरते नित्यं यत्कृतं त्वज्ञतार्पकम् ।।७७।।**

**(व्या) मुग्ध इति ।।** हे विप्र! पूर्वं (९।४६) 'हे मुग्धविप्र दधिदुग्धपयोनिधौ' इति श्लोके त्वां 'मुग्धविप्र' इति **सम्बोध्य, दुग्धवारिधिः मया ईरितः =** उक्तः । तत्र **त्वं दग्धजिह्ववत् । हे स्तब्धवृद्ध!** दधिदुग्धेति भाषसे ।।७५।।

**किम् इति ।। हे अज्ञ! अद्य तव किं** शासनं **करोमि अहम् अज्ञतान्तकः** । अज्ञतायाः मूढतायाः अन्तकः नाशकः । **यं त्वाम् अहङ्कारेण हीनम् । करेणाभिमर्शये ।** स्पृशामि ।।७६।।

**मत्करेति** ।। **हे विप्र! त्वच्छिरसि मत्करस्पर्शनं यत्कृतं तत् अतिसत्कृतं** अतिसत्कारयुक्तम् । तच्च **अज्ञतार्पकम्** अज्ञताम् अर्पयतीति तादृक् । **तत् कृच्छ्रं** पापं नित्यं हरते नाशयति ।।७७।। इति विप्रप्रकरणं सं.

## १०. मौद्गलनारसिंहप्रकरणम् ।। श्लोकाः (७८-८१)

(व्या) **'द्वे सहस्रे'** इत्यारभ्य **'लक्षयाम्यहम्'** इत्यन्तं मौद्गलनारसिंहश्रोतृकं दशमं प्रकरणम् ।।

**द्वे सहस्रे च पद्यानां खद्योतोपमतेजसाम् ।**
**देहिनां बोधनोद्दामसाधनं तु भविष्यति ।।७८।।**

**तावत्पर्यन्तमेवाहं वक्ष्ये पक्षीकृतद्विजात् ।**
**यावत्पद्यसहस्रे द्वे पूर्णे सुत भविष्यतः ।।७९।।**

**तदनन्तरमेवाहं यथा मन्वन्तरे तथा ।**
**अनन्तशयनं दृष्ट्वा ह्यनन्तसुखमाप्नुयाम् ।।८०।।**

**तत ऊर्ध्वं प्रवक्ष्यामि न वक्ष्याम्यथवा क्षणम् ।**
**न शिक्षयामि प्रेक्षावत्प्रवृत्तिं लक्षयाम्यहम् ।।८१।।**

अन्वयः – देहिनां तु बाधनोद्दामसाधनं खद्योतोपमतेजसां द्वे सहस्रे पद्यानां च भविष्यति । पक्षीकृताद् द्विजात् यावत् द्वे पद्यसहस्रे पूर्णे भविष्यतः तावत्पर्यन्तं एव हे सुत! अहम् वक्ष्ये ।। तदनन्तरम् एव यथा मन्वन्तरे (स्वायम्भुवादि मन्वन्तरे) श्री अनन्तशयनं दृष्ट्वा (अनुग्रहीतः सन्) अनन्तसुखम् आप्नुयाम् हि (प्राप्स्यामि) ।। ततः ऊर्ध्वं प्रवक्ष्यामि । (नित्यं) न वक्ष्यामि, अथवा क्षणं न शिक्षयामि । प्रेक्षावत् प्रवृत्तिम् अहं लक्षयामि ।।

(व्या) हे विप्र! नारसिंह! **खद्योतोपमतेजसां** = खद्योतः खं आकाशं द्योतयतीति खद्योतः सूर्यः । तस्य उपमा दृष्टान्तः । येषां तानि खद्योतोपमानि । खद्योपमानितेजांसि येषां तानि । तादृशानां च **पद्यानां द्वे सहस्रे** । **देहिनां** योग्यानां नराणाम् । **बोधनोद्दाम- साधनं** = बोधने उद्दानम् उत्तमं साधनं भविष्यति । **तु** = निश्चयः ।।७८।।

**तावदिति** ।। **हे सुत!** यावत्पद्मानां **द्वे सहस्रे पूर्णे भविष्यतः** । **तावत्पर्यन्तमहं** पक्षीकृताद् द्विजात् । मत्पक्षपातपात्रद्विजात् । तत्सकाशादित्यर्थः । **वक्ष्ये** ।।७९।। **तद-नन्तरमिति** ।। **तदनन्तरमेव** । **यथा मन्वन्तरे** स्वायम्भुवादिमन्वन्तरे **तथा अनन्तशयनं दृष्ट्वा,** अनन्तं सुखम् **आप्नुयां** = प्राप्स्यामि ।।८०।। **तत ऊर्ध्वमिति** ।। **ततः ऊर्ध्वम्** । **क्षणं** क्षणपर्यन्तम् । वक्ष्यामि । अथवा न **प्रवक्ष्यामि** । **न शिक्षयामि** । किंतु **प्रेक्षावत्प्रवृत्तिं** प्रवर्तनम् । मदाख्याने इत्यर्थः । **लक्षयामि** पश्यामीत्यर्थः ।।८१।। मौद्गलनारसिंहप्रकरणं सं।।

## ११. हयग्रीवमुनिप्रकरणम् ।। श्लोकाः (८२-८५)

**(व्या)** **'हयकन्धर'** इत्यारभ्य **'दैवं भूदैवतं च वा'** इत्यन्तं हयग्रीवकर्मन्दिश्रोतृकं एकादशं प्रकरणम् ।।

**हयकन्धरकर्मन्दिन् जयकन्दरभे दिने ।**
**नतकन्धर पद्मानां शतकं धर ब्राह्मणे ।।८२।।**

**स्नेहं कुरु मम स्नेहपात्रे शास्त्रज्ञ सज्जने ।**
**मत्सुतोऽप्यतिसुस्नेहं करोति पुरुषोत्तमः ।।८३।।**

**विप्रोऽयं कृत्रिमो भृत्यो मम नैव सुमानवः ।**
**पुत्रवत्पोष्य एवासौ मा त्यज त्वं द्विजोत्तमम् ।।८४।।**

**मत्पुत्रेण विना विप्र तत्र तत्र कृतं महत् ।**
**न शोभते शुभं कर्म दैवं भूदैवतं च वा ।।८५।।**

अन्वयः – हे नतकन्धर हयकन्धरकर्मन्दिन्! जयकन्धरभे दिने (सुमुहूर्ते) पद्मानां शतकं धर ।। हे शास्त्रज्ञ! मम स्नेहपात्रे सज्जने ब्राह्मणे (वृन्दावनाचार्ये) स्नेहं कुरु । मत्सुतः पुरुषोत्तमः अपि (तस्मिन् ब्राह्मणे) अतिसुस्नेहं करोति ।। अयं विप्रः मम कृत्रिमभृत्यः नैव । (किन्तु) सुमानवः । असौ पुत्रवत् पोष्य एव । त्वं द्विजोत्तमं मा त्यज ।। तत्र तत्र कृतं दैवं वा भूदैवतं च शुभं महत् कर्म मत्पुत्रेण विना न शोभते ।।

**(व्या)** **हयकन्धरेति** ।। **हे नतकन्धर!** नता कन्धरः ग्रीवा यस्य सः, तादृश । 'नम्रशिरस्कः' इत्यर्थः । **हे हयकन्धरकर्मंदिन्! जयकन्धरभे!** जयश्च कं सुखं च जयके ।

जयके धरतीति तादृशे दिने । सुमुहूर्ते इत्यर्थः । **पद्यानां** = आख्यानोक्तपद्यानाम् । **शतकं** = 'प्रत्यध्याये शतपरिमितम्' इत्यर्थः । **धर** = स्वीकुरु ।।८२।।

**स्नेहमिति ।। हे शास्त्रज्ञ!** मम स्नेहपात्रे **सज्जने स्नेहं कुरु** । **मत्सुतः पुरुषोत्तमः** अपि = नारसिंहाख्य विप्रोपि । तस्मिन् अपि **स्नेहं करोति** ।।८३।।

**विप्रोऽयमिति ।। कृत्रिमो भृत्यो नैव । किन्तु सुमानवः** । **असौ** मम **पुत्रवत् पोष्य एव** । अतः **त्वं द्विजोत्तमम्** एवं न त्यज ।।८४।।

**मत्पुत्रेणेति ।। हे विप्र! मत्पुत्रेण** मत्पुत्रो द्विजः । तेन **विना । तत्र तत्र कृतं महत्** = दैवसम्बन्धिभोजनादिकमित्यर्थः । **शुभं कर्म न शोभते** । अतस्त्वं मा त्यजेत्यर्थः ।।८५।। हय.क.प्र.सं.।।

### १२. बहुभक्तशोतृकप्रकरणम् ।। श्लोकाः (८६-९६)

**(व्या) 'मन्नन्दनेन'** इत्यारभ्य **'का मतिं त्यजथाशु च'** इत्यन्तं बहुभक्तश्रोतृकं प्रकरणं द्वादशम् ।।

**मन्नन्दनेन कर्मन्दीश्वरेणाद्य विना कृते ।**
**कर्मण्यानन्दरूपेऽपि ममानन्दो न जायते ।।८६**

**शून्यागारवदेवेदं नगरं शून्यमेव च ।**
**तं विना नगरं यद्वद्दिवा दिनकरेण वा ।।८७।।**

**तदागमनसिद्ध्यर्थं मन्मनोरथसारथिम् ।**
**प्रेषयामि तमाहर्तुं शीघ्रगामिनमध्वनि ।।८८।।**

**सोऽपि गत्वा तु गोविन्दसङ्कल्परथमेव च ।**
**आरोप्य भूपप्रभृतिभृत्यवागश्वसंयुतम् ।।८९।।**

**आनयिष्यति मानार्हं कृष्णं दानपतिर्यथा ।**
**मधुरां सोदरयुतं तद्वत् सोदापुरीं सुतम्।।९०।।**

अन्वयः – अद्य मन्नन्दनेन कर्मन्दीश्वरेण विना कृते अनन्दरूपेऽपि कर्मणि मम आनन्दो न जायते ।। तं विना इदं नगरं शून्यागारवदेव शून्यम् एव । दिनकरेण

**विना दिवा यद्वत् तद्वत् । तदागमनसिद्ध्यर्थम् अध्वनि शीघ्रगामिनं मन्मनोरथसारथिं तम् आहर्तुं प्रेषयामि ।। सः अपि गत्वा भूपप्रभृतिभृत्यवागश्व- संयुतं गोविन्दसङ्कल्परथम् एव तु आरोप्य, यथा दानपतिः(अक्रूरः) सोदरयुतं मानार्हं कृष्णं मधुराम् आनयिष्यति तद्वत् सुतं सोदापुरीम् (आनयिष्यति) ।।**

**मन्नन्दनेनेति ।।** हे मामकाः! शृणुत । **मन्नन्दनेन कर्मन्दीश्वरेण** । हयग्रीवयतीश्वरेण **अद्य आनन्दरूपेऽपि कर्मणि कृते मम आनन्दो न जायते** ।।८६।।

**शून्यागारवदिति ।।** अरण्यमिवेत्यर्थः । **वा** अथवा । **दिनकरेण** सूर्येण **विना दिनं यद्वत्** । तद्वत् **तं विना इदं नगरम्** ।।८७।।

ननु यदा गतिं विना श्रीमतां न मन आनन्दः, तदागमनं कथं भविष्यति? इत्यत आह – **तदागमनेति ।। तदागमनसिद्ध्यर्थम्, अध्वनि मार्गे शीघ्रगामिनं मन्मनोरथ- सारथिम्** । मम मनोरथ एव सारथिः । तं प्रति **आहर्तुम्** आनयितुं **प्रेषयामि** ।।८८।।

ननु रथाभावात् सारथिप्रेषणं व्यर्थम्? इत्यत आह – **सोऽपीति ।। सोऽपि** स सारथिरपि गत्वा, गोविन्दसङ्कल्परथं = गोविन्दो हरिः तस्य सङ्कल्प एव रथः तम् । **भूपप्रभृतिभृत्यवागश्वसंयुतम्** = भूतप्रभृति रामराजाख्यभूपप्रभृति । ये भृत्याः तेषां वाचः एव अश्वाः । तैः संयुतं युक्तं कृत्वा, तं यतीश्वरं हयग्रीवाख्यम् । तस्मिन् रथे आरोप्य यथा **दानपतिः अक्रूरः मानार्हं कृष्णं सोदरयुतं आनयिष्यति** = आनयामास; तद्वत् अयं मनोरथसारथिः सुतं हयग्रीवाख्यं सोदापुरम् आनयिष्यति ।।८९ऽ९०।।

**द्वारकावासिनं कृष्णं मधुरापुरवासिनः ।**
**सदाराः पूजयन्ति स्म सुदामोदारमुक्तिदम् ।।९१।।**

**तद्वन्मन्नन्दनमपि नन्दनैः सहिता नराः ।**
**निन्दन्तश्चात्मपापानि सानन्दं पूजयन्त्यहो ।।९२।।**

**अन्वयः – सुदामोदारमुक्तिदं द्वारकावासिनं कृष्णं सदाराः मधुरापुरवासिनः (यद्वत्) पूजयन्ति, तद्वत् नन्दनैः सहिता नराः, आत्मपापानि निन्दन्तः च मम नन्दनमपि सानन्दं पूजयन्ति स्म । अहो ।।**

**(व्या) द्वारकेति ।।** यथा च **मधुरावासिनः । द्वारकावासिनं कृष्णं । सुदामोदरमुक्तिदं**

= सुदामो विप्रस्य । उदारां मुक्तिं ददातीति तादृशम् । **सदाराः** सन्तः **पूजयन्ति स्म** । अपूजयन्नित्यर्थः ।।९१।।

**तद्वदिति ।। तद्वत्** तदागमनानन्तरं **मन्नन्दनमपि नन्दनैः** पुत्रैः **सहिताः । हे नराः!** यूयम् **आत्मपापानि** = 'इदमाख्यानं द्विजकृतिः न स्वाप्नोक्तिः' इत्युक्तिजातानि पापानि, **निन्दन्तश्च** 'अहो अस्माभिः प्रमादः कृतः' इति निन्दन्तश्च पूजयन्ति ।।९२।।

**सोदापुरे वसन्तो ये सदाराः प्रत्युपस्थिताः ।**
**उदारगुणसम्पन्नाः सदा रयिविवर्धकाः ।।९३।।**

**इत्थं मम सुतेऽप्यत्र चागते स्वागतोक्तिभिः ।**
**पूजयिष्यन्ति सन्तस्ते तान् दृष्ट्वा तोषितोस्म्यहम् ।।९३।।**

अन्वयः – सोदापुरे वसन्तो ये सदाराः उदारगुणसम्पन्नाः सदा रयिविवर्धकाः (त्रिविक्रमरथोत्सवं) प्रति उपस्थिताः ते अत्र आगते मम सुते अपि इत्थं स्वागतोक्तिभिः (सन्तः) पूजयिष्यन्ति । अहं तान् दृष्ट्वा तोषितः अस्मि ।।

**(व्या) ये** च **सदाराः** । त्रिविक्रमस्य उत्सवार्थं **प्रत्युपस्थिताः । उदारगुणसंपन्नाः । सदा रयिविवर्धकाः** = द्रव्यवर्धकाः ।।९३।।

**ते**ऽपि **इत्थं** पूर्वोक्तप्रकारेण **मम सुतेऽपि** = मम पुत्रे द्विजेपि । **अत्र चागते** सति, **स्वागतोक्तिभिः** सन्तः **पूजयिष्यन्ति** । **तान्** पूजकान् **दृष्ट्वा, अहं तोषितोऽस्मि** । तुष्टोऽस्मि।।९४।।

**एवं सङ्कल्पसिद्धं मां कल्पयन्ति मनीषिणः ।**
**स्वल्पापराधोऽपि मम महापापाय कल्पते ।।९५।।**

**तस्मान्मन्नन्दनं मां च नैव द्रुह्यथ मामकाः ।**
**दामोदरप्रियं मत्वा काममतिं त्यजथाशु च ।।९६।।**

अन्वयः – मां एवं सङ्कल्पसिद्धं मनीषिणः कल्पयन्ति । मम स्वल्पापराधः अपि महापापाय कल्पते ।। तस्मात् हे मामकाः मन्नन्दनं मां च नैव द्रुह्यथ । (किन्तु) दामोदरप्रियं च मत्वा आशु काममतिं त्यज ।।

(व्या) एवं मां । सङ्कल्पसिद्धं हरिसङ्कल्पसिद्धं (सिद्धाः सङ्कल्पाः यस्य सः । विशेषणस्य परनिपातः । मयूरव्यंसकादिवत् । सिद्धसङ्कल्पः अमोघसङ्कल्पः ज्ञातहरिसङ्कल्पः इति वा इत्यर्थः ।) मनीषिणः कल्पयन्ति जानन्ति । मम (मद्विषये) स्वल्पापराधः अपि महापापाय कल्पते = समर्थो भवति ।।९५।।

उपसंहरति ।। तस्मादिति ।। तस्मात् हे मामकाः मन्नन्दनं मां च नैव द्रुह्यथ । अपि च दामोदरप्रियं = श्रीकृष्णप्रियं मत्वा = ज्ञात्वा, कामतिं कुत्सितमतिं आशु त्यजथ ।।९६।। बहुभक्तश्रोतृकप्रकरणं सम्पूर्णम् ।।

### १३. विप्रप्रकरणम् ।। श्लोकाः (९७-१०४)

**तस्थिवांसीति मे प्रोक्ते तस्थुषांसीति चोच्यते ।**
**विप्र स्वस्थांश्च तेऽस्थीन् वै करिष्ये शिथिलानहम् ।।९७।।**

**ममास्थिनिचये विप्र क्लीबशब्दः प्रयोजितः ।**
**तवास्थिष्विह पुंलिङ्गशब्दः प्रायः प्रयोजितः ।।९८।।**

अन्वयः – मे (मया) 'तस्थिवांसि' इति प्रोक्ते (त्वया) 'तस्थुषांसि' इति उच्यते च । हे विप्र! अहं ते स्वस्थां च अस्थीन् शिथिलान् करिष्ये वै ।। हे विप्र! मम अस्थिनिचये क्लीबशब्दः प्रयोजितः । इह तव अस्थिषु पुंलिङ्गशब्दः प्रायः प्रयोजितः ।।

(व्या) तस्थिवांसीति ।। हे विप्र! पूर्वं 'ममास्थि जातान्यपि तस्थिवांसि चक्राङ्कितान्येव' (९।४१) इति पद्ये 'तस्थिवांसि' इति मे = मया प्रोक्ते त्वया 'तस्थुषांसि' इति उच्यते । हे विप्र! ते अस्थीन् वै शिथिलान् संसारप्रापणे शैथिल्ययुक्तान् (अशक्तान्) कृत्वा, स्वस्थान् करोमि ।।९७।।

ननु अस्थिशब्दस्य नपुंसकत्वात् पुंलिङ्गशब्दप्रयोगः कथम्? इत्यत आह – ममास्थि-निचये इति ।। ममास्थिनिचये क्लीबशब्दः तवास्थिषु पुंलिङ्गत्वेन योजितः ।।९८।।

**को वाऽभिप्राय इत्युक्ते वक्ष्येभिप्रायमञ्जसा ।**
**ममास्थीन्यपि कृष्णस्य शङ्खचक्राङ्कितानि च ।।९९।।**

**पुनः संसृतिदातृत्वशक्तिहीनानि मानव ।**
**जातान्यत्यन्तशैथिल्यात् क्लीबशब्दः प्रयोजितः ।।१००।।**

अन्वयः – 'को वा अभिप्रायः?' इत्युक्ते अभिप्रायम् अञ्जसा वक्ष्ये । मम अस्थीनि कृष्णस्य शङ्खचक्राङ्कितानि अपि हे मानव! अत्यन्तशैथिल्यात् पुनः संसृतिदातृत्वशक्तिहीनानि जातानि (तस्मात्) क्लीबशब्दः प्रयोजितः ।।

(व्या) को वा इति ।। अत्र को वा अभिप्रायः? इत्युक्ते अभिप्रायम् अञ्जसा वक्ष्ये । ममास्थीनि कृष्णस्य शङ्खचक्राङ्कितानि । अपिशब्देन सर्वऋजूनामिति सूच्यते ।।९९।। पुनरिति ।। पुनश्च हे मानव! संसृतिदातृत्वशक्तिहीनानि अत्यन्तशैथिल्यात् जातानि । तस्मात् क्लीबशब्दः प्रयोजितः ।।१००।।

**एतस्य वैपरीत्येन तवास्थिनिचयेऽपि च ।**
**पुनः संसृतिदातृत्वसामर्थ्यात् पुंस्त्वमेव हि ।।१०१।।**

**अतः पुंलिङ्गशब्दस्तु प्रायो विप्र प्रयोजितः ।**
**यद्वा शब्दद्वयेनापि वाच्यत्वं तूच्यते मया ।।१०२।।**

अन्वयः – एतस्य (क्लीबशब्दस्य) वैपरीत्येन तव अस्थिनिचये अपि च पुनः संसृतिदातृत्वसामर्थ्यात् पुंस्त्वं एव हि ।। हे विप्र! अतः (तव अस्थिनिचये) पुंलिङ्ग शब्दः तु प्रायः प्रयोजितः । यद्वा शब्दद्वयेन अपि (विद्वत्कण्ठीरवेण) मया वाच्यत्वं तु उच्यते ।।

(व्या) एतस्येति ।। एतस्य । क्लीबशब्दस्य वैपरीत्येन पुंलिङ्गत्वप्रयोगेणेत्यर्थः । नच तद्वैपरीत्यं स्त्रीलिङ्गे वर्तते । किंतु पुरुषत्ववैपरीत्यमेव क्लीबत्वमित्यर्थः । तवास्थिनिचयेपि च । पुनः संसृतिदातृत्वसामर्थ्यात् । पुंस्त्वमेव हि ।।१०१।।

अत इति ।। अतः पुंलिङ्गशब्दः प्रायस्तु प्रयोजितः ।। (अथवा अस्थिशब्दः पुंलिङ्गे नपुंसकलिङ्गे च वर्तते इति मया उच्यते ।।१०२।।)

**नैघण्टिक शृणुष्वाद्य विद्वत्कण्ठीरवेण च ।**
**अतोऽज्ञतापि नास्त्येव मम मानव धीमतः ।।१०३।।**

**कामतिं त्यज ते विद्वन् भज मत्पादमेव च ।।१०४।।**

**अन्वयः – हे नैघण्टिक! अद्य विद्वत्कण्ठीरवेण च (मया) श्रुणुष्व । हे मानव! अतः अज्ञता अपि धीमतः मम नास्त्येव ।। हे विद्वन्! ते कामतिं त्यज । मत्पादमेव भज च ।।**

**(व्या) नैघण्टिक इति ।।** यद्वा **हे नैघण्टिक! अद्य विद्वत्कण्ठीरवेण** विदुषां कण्ठीरवः सिंहः श्रेष्ठः इत्यर्थः । 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः । अत्र सिंहशब्द-पर्यायभूतकंठीरवशब्दः आद्य पदेन गृह्यते । 'उपमितिं व्याघ्रादिभिः सामान्याप्रयोगे' इति विशेष्यस्य पूर्वनिपाते । व्याघ्रादेरुत्तरपदत्वम् । तेन मया शब्दद्वयेनापि । क्लीबत्वपुंलिङ्गत्व-रूपास्थिशब्दद्वयस्यापि वाच्यत्वं तूच्यते । त्वं **शृणुष्व । हे मानव! अतः धीमतः ममाज्ञता नास्त्येव ।** अपि निश्चयः ।।१०३।।

**कामतिमिति ।। अतो** मद्विषये **कामतिं त्यज । हे विद्वन् मत्पादं भज** । ते निर्मलैव मतिर्भविष्यति ।।१०४।। विप्र.श्रो.प्र.सं.।।

## ।। अथ एकोनविंशाध्यायः ।।

१. विप्रप्रकरणम् ।। श्लोकाः (१८३)

(व्या) 'हे ब्राह्मण' इत्यारभ्य 'मा त्यज त्वं द्विजोत्तम' इत्यन्तं विप्रश्रोतृकप्रथमं प्रकरणम् ।

**हरिः ॐ ।।**

**हे ब्राह्मण त्वं शृणु मे सुवाणीं कार्पण्यभावं न भणाद्य धीमन् ।**
**गुणैर्विहीनस्य गणाद्धि चान्नं गृहाण सुब्राह्मणसद्गृहस्थैः ।।१।।**

**भोज्यवित्तं प्रदत्वा तु ऋणान्मुक्तः शनैः शनैः ।**
**भोजनार्थं मधुकरवृत्तिं कुरु यथा पुरा ।।२।।**

**इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।**
**वृन्दावने च मत्सेवां मा त्यज त्वं द्विजोत्तम ।।३।।**

(पूर्वं ११।८७रल्लि हागेये विप्र.प्र. १।३, ६।३६, १४।१२, १७।१९, १७।१९रल्लू आनुपूर्वीभेददिन्द अदे विषयविदे.)

अन्वयः – हे ब्राह्मण! मे सुवाणीं शृणु, अद्य हे धीमन्! कार्पण्यभावं न भण, गुणैर्विहीनस्य (मन्मठीयं) गणात् सुब्राह्मणसद्गृहस्थैः अन्नं हि गृहाण ।। (हे विप्र!) भोज्यवित्तं (यद्वेतनत्वेन दीयते, तत्) प्रदत्वा शनैः शनैः ऋणान् मुक्तः भोजनार्थं तु यथा पुरा (तथा) मधुकरवृत्तिं कुरु ।। हे बुद्धिमन् (विप्र!) इति पूर्वं मया प्रोक्तं त्वम् अनुसन्धत्स्व । हे द्विजोत्तम! वृन्दावने मत्सेवां च (त्वं) मा त्यज (त्यजस्व) ।।३।।

(व्या) **हे ब्राह्मण! मे सुवाणीं श्रुणु** । किं शृणोमि? इत्यत अह – **कार्पण्यभावमिति** ।। **हे धीमन् ज्ञानिन्!** अद्य कार्पण्यभावं = मम अन्नानुकूल्यं नास्तीति दीनत्वं न भण । मा वद । **सद्ब्राह्मण** (सद्ब्राह्मण एन्दु व्याख्यानदल्लिदे. सुब्राह्मण एन्दु वृं.पाठ. भी नोडबेकु.) **सद्गृहस्थैः** । सद्ब्राह्मणाः = शेषादयः । च सद्गृहस्थाः = सीतापत्यादयश्च । **तैः** तद्द्वारा इत्यर्थः । गुणैर्विहीनस्य निर्गुणस्य इत्यर्थः (गुणैः राजसतामसैः विहीनस्य रहितस्य इति वा । गुणैः शुभगुणैः विहीनस्य अहीनस्य । तद्विप्रमाकर्ण्य इत्यत्र भागवते यथा इत्यर्थः शक्यः । गुणैर्विहीनस्य

निर्गुणस्य नारायणस्य तन्निवेदितस्य तत्स्वामिकस्य अन्नं मठीयशिष्यगणद्वारा गृहाण इति वा अर्थः)। **गणात्** = मन्मठीयगणात् । **अन्नं च गृहाण** ।।१।। मासि मासि यद् **भोज्यवित्तं** भुक्तियोग्यवित्तं वेतनत्वेन दीयते । तत् **प्रदत्वा शनैः शनैः** ऋणमुक्तो भव । पुत्रादीनां भोजनार्थं च । **यथा पुरा** तथा **मधुकरवृत्तिं कुरु** ।।२।। **हे बुद्धिमन्! इति पूर्वम्** । (आनुपूर्वीव्यत्यासं विना) **मया प्रोक्तम् अनुसन्धत्स्व** । हे **द्विजोत्तम! त्वं वृन्दावने च । मत्सेवां मा** त्यजस्व ।।३।। विप्र.प्र.सं.।।

२. अप्पण्णकृष्णभट्टप्रकरणम्।। श्लोकाः (४ऽ१४ १/२)

(व्या) **'लज्जाविहीन'** इत्यारभ्य **'श्रीमान् यथा श्रिया'** इत्यन्तम् अप्पण्णकृष्णभट्ट श्रोतृक द्वितीयं प्रकरणम् ।

**लज्जाविहीन कुब्जायाःपतेर्नाम्नः प्रभञ्जन ।**
**त्वज्जातिधर्ममनृतं मा त्यजाद्यापि दुर्जन ।।४।।**

**वृन्दावनाचार्यनाम्ना त्वं निन्दावचनादिना ।**
**तथा लक्ष्मीपतिर्नापि कवितां वेत्ति सर्वथा ।।५।।**

**सविता वेत्ति तत्सर्वं कर्मसाक्षी तवाप्यहो ।**
**मम मातुः कृते श्राद्धे भोक्ता त्वं गर्भिणीपतिः ।।६।।**

**(अन्वयः) – हे लज्जाविहीन! कुब्जायाः पतेः (कृष्णस्य नाम इव) नाम्नः प्रभञ्जन हे दुर्जन! त्वत् जातिधर्मम् अनृतम् अद्यापि मा त्यज ।। त्वं (विप्रं) वृन्दावनाचार्यनाम्ना निन्दावचनादिना (आहूयसि); तथा लक्ष्मीपतिः अपि (स्वाप्नकवितां) सर्वथा न वेत्ति ।। तव अपि तत् सर्वं कर्मसाक्षी सविता वेत्ति अहो! मम मातुः श्राद्धे कृते त्वं गर्भिणीपतिः भोक्ता ।।**

(व्या) **हे लज्जाविहीन! कुब्जायाः पतेः** कृष्णस्य नाम इव **नाम्नः** । **प्रभञ्जन** । त्वं नाम्नः प्रभञ्जनः प्रकर्षेण भञ्जयति नाशयतीति तादृशः । तस्य सम्बुद्धिः । स्वनाम-प्रतिकूलता(कार्य)युक्त इत्यर्थः । तत्कथम् इति चेत्, तत्राह – **त्वदिति** ।। (त्वज्जातिधर्मं) तव जातेः सामान्यधर्मः यस्मिन् तत् । **अनृतं** = मृषाभाषणम् । **अद्यापि हे दुर्जन! मा त्यज**

। सक्रोधवचनमेतत् । 'मा त्यजसि' इत्यर्थः ।।४।। ननु किमनृतं मयोक्तम्? इत्यत आह – **वृन्दावनेति** ।। त्वं **निन्दावचनादिना,** निन्दावचनम् 'अहोऽयं विप्रः निर्गुणोऽप्यभूत्, आचार्यनामा अत्याश्चर्यमेतत्' इत्यादिर्यस्य तत् । तादृशेन **वृन्दावनाचार्यनाम्ना विप्रम्** आह्वयसि । एतदुक्तां स्वाप्रकवितां न वेत्सि । **तथा** तद्वत् । **लक्ष्मीपतिरपि न वेत्ति** । किन्तु **सर्वथा** संशयवानेव भवति ।।५।। मत्कृतौ यद्यत् युवाभ्यां संशयितं **तत्सर्वं कर्मसाक्षी । सविता** = श्रीहयवदनः **वेत्ति** । 'गर्भिणीपतिः श्राद्धानर्हः' इति स्मार्तं प्रमाणमपि त्वया परित्यक्तम् । **मम मातुः श्राद्धे** त्वया भुक्तम् । एतेनाप्यप्पण्णकृष्णभट्टस्य दुर्जनत्वं सूचितं भवति ।।६।।

**वैपरीत्येनोभयतः श्रीवत्सं धृतवानसि ।**
**अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ।।७।।**

**पुण्यक्षेत्रे कृतं पापं कृष्णक्षेत्रे विनश्यति ।**
**कृष्णक्षेत्रे कृतं पापं वज्रलेपो भविष्यति ।।८।।**

**तादृशे कृष्णगेहे त्वं मृषावचनमब्रवीः ।**
**इत्याद्या बहवो दोषाः त्वयि सन्ति कृतान्तक ।।९।।**

**(अन्वयः) – उभयतः वैपरीत्येन श्रीवत्सं धृतवानसि । 'अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति, पुण्यक्षेत्रे कृतं पापं कृष्णक्षेत्रे विनश्यति, कृष्णक्षेत्रे कृतं पापं वज्रलेपो भविष्यति' । त्वं तादृशे कृष्णगेहे मृषावचनम् अब्रवीः । हे कृतान्तक! इत्याद्याः बहवो दोषाः त्वयि सन्ति ।।**

**(व्या) हे अप्पण्ण कृष्ण!** त्वम् **उभयतः** = नामतः कर्मतश्च गर्भिणीपतित्वे सति । श्राद्धभोक्तृत्वं, विप्रनिन्दकत्वम्, आख्यानाविश्वासित्वं चेति । एवम् उभयतः **श्रीवत्सं** कृष्णस्य श्रीवत्सधारित्वं प्रसिद्धम् । तदभावात् । तव नामवैपरीत्यम् । श्रीवत्सशब्दोऽप्येवमेवोह्यः । तथाहि श्रीवत्सशब्दस्य वैपरीत्यं च । वत्सश्रीरिति । तदर्थश्चैवम् – 'वत्सवत् मूर्खवत्' इत्यर्थः, कान्तिर्यस्य तादृशं श्रीवत्सं **धृतवानसि** इति चमत्कारः ।। 'भुवि बहवोऽनृतवादिनः । तेष्वेकोहं किं तेन?' इत्यत आह – **अन्यक्षेत्रे इति** ।। **अन्यक्षेत्रे कृतं** (पापं) **पुण्यक्षेत्रे; पुण्यक्षेत्रे कृतं** (पापं) **कृष्णक्षेत्रे विनश्यति** । **कृष्णक्षेत्रे** = रजतपीठादिक्षेत्रे **कृतं पापं**

वज्रलेप इव भविष्यति । भोगाभावे कदापि न नश्यतीत्यर्थः ।।७-८।। तादृशे कृष्णगेहे 'रजतपीठपुरे' इत्यर्थः । मृषावचनमब्रवीः = उक्तवानसि । हे कृतान्तक कृतस्य उपकारस्य अन्तकः नाशकः हे कृतघ्न इत्यर्थः । इत्याद्याः त्वयि बहवो दोषाः सन्ति ।।९।।

**अत एव हि सन्तानरहितोऽसि कुलान्तक ।**
**काकोदरेत्यादिश्लोकत्रयेणोक्तान् सुदुर्गुणान् ।।१०।।**

**गुणाधम शृणुष्वाद्य तूष्णीं तिष्ठ ममाग्रतः ।**
**इदमप्यमुतश्चोक्तं कुमतिर्न तु तेऽप्यहो ।।११।।**

**सुमतिः स्वमते नास्ति सुमतं मम जानते ।**

(अन्वयः) – हे कुलान्तक! अत एव सन्तानरहितः असि हि । 'काकोदर' इत्यादिश्लोकत्रयेणोक्तान् सुदुर्गुणान् शृणुष्व । हे गुणाधम! मम अग्रतः तूष्णीं तिष्ठ । अमुतः इदम् अपि च उक्तम्, ते कुमतिः अपि न तु । अहो! ।। हे ब्राह्मण! (ते) स्वमते (मध्वमते) सुमतिः नास्ति । जानते (तुभ्यं) मम सुमतं (नास्ति) ।।

(व्या) किं तत्फलम्? इत्यत आह – अत एवेति ।। हे कुलान्तक! अत एव त्वं सन्तानरहितोऽसि । हे गुणाधम! अद्य 'काकोदर' इत्यादिश्लोकत्रयेण (६।७९-८१) उक्तान् सुदुर्गुणान् शृणुष्व ।।१०।। ममाग्रतः तूष्णीं तिष्ठ । इदमपि श्लोकत्रयमपि अमुतः = अमुष्मात् विप्रात् 'विप्रमुखत एव' इत्यर्थः । उक्तम् । अहो न तु ते कुमतिः स्यात् ।।११।। स्वमतेऽपि = मध्वमतेऽपि । तव सुमतिर्नास्ति । एवं चानेकवैपरीत्यं जानते तुभ्यं मम सुमतं कथं प्राप्यं स्यात्?

(व्या) ननु 'श्रीमतां सुमता प्रापणेन । मम का हानिः स्यात्?' इत्यतः दृष्टान्तमाह – तासामिति ।।

**तासां स्त्रीणां यथायोगं फलं भवति ब्राह्मण ।।१२।।**

**रथरोधनकर्त्रीणां पूर्वकर्मानुरोधनात् ।**
**प्रत्येकफलदातृत्वे तत्तत्कर्माख्यशैवलैः ।।१३।।**

**स्त्रीनीराणि परिच्छिन्नानीति तद्धानिनैव हि ।**

**अतः सामान्यतो योग्यं फलं भवति नान्यथा ।।१४।।**

**का मान्यता विना पुत्रं स्त्रीणां श्रीमान् यथा श्रिया ।**

**('कामान् यथा विना पुत्रं स्त्रीमान् श्रीमान् यथा श्रिया एन्दु स्वा.पाठ व्याख्यानानुगुणवागिदे. आदरे 'का मान्यता विना पुत्रं स्त्रीणां श्रीमान् यया श्रिया एन्दु वृं.पाठविदे. )**

**(अन्वयः) – हे ब्राह्मण! पूर्वकर्मानुरोधनात् रथरोधनकर्त्रीणां तासां स्त्रीणां यथायोगं फलं भवति । स्त्रीनीराणि परिच्छिन्नानि इति तत्तत् कर्माखशैवलैः प्रत्येकफलदातृत्वे तत् हानिः नैव हि ।। अतः सामान्यतः योग्यं फलं भवति, अन्यथा न । यथा स्त्रीणां पुत्रं विना, श्रिया विना श्रीमान् (तथा) का मान्यता?**

**(व्या) हे ब्राह्मण! तासां** पूर्वं गरदाः स्वपतौ च याः इत्यादिनोक्तानां **स्त्रीणां पूर्वकर्मानुरोधनात्** । पूर्वकृतकर्मानुसरणादित्यर्थः । रथरोधनकर्तॄणां रथः श्रीकृष्णस्य रथः तद्रोधनकर्तॄणां **यथा फलं भवति तथा** (यथायोगं) (यथायोग्यं एन्दु श्रीपाठ. यथायोगं एन्दु वृं.पाठ) । (इल्लि तात्पर्यवेनेन्दरे, गुम्पुमाडिकोण्डु रथवन्नु तडेदु एल्लरू सामूहिकवागि पाप संपादिसिद्दरिन्द अन्थ कर्मद योगानुसारवागि गुंपागि योजने माडिकोण्डु पापमाडिदक्कनुगुणवागि निनगू इतर पापिगळ जोतेयल्लि आ पापफलवु बन्दोदगुत्ते. रैलु बिद्दु १३० जनरु सायुवुदु, एरोप्लेन् बिद्दु ६७जन सायुवुदु, दोणि मुळुगि ३१जन सायुवुदु. हीगे आ गुंपिनवरिगेल्ला 'सामान्यतः' ओट्टागि सदृश केट्टफलवु बरुत्ते एन्दर्थ. अदरल्लि दृष्टान्त शैवलवु = पाचियु अथवा अन्तरगङ्गेयु, नीरन्नु काणगोडदन्ते मेलेल्ला पूर्णवागि व्यापिसिकोण्डु बिडुत्तदे. हागेये आ स्त्रीयरेल्लरू ओट्टागि पाप माडिद्दरिन्द अवर पापगळु अवरेल्लरन्नू ओट्टागि आक्रमिसुत्ते. आद्दरिन्द योग्य केट्टफलवु अवरेल्लरिगू जोतेयल्लिरुवाग ओट्टागि बरुवुदु. हागे अप्पण्णने! हुच्चर मातु केळिकोण्डु आख्यानदल्लि संशयादिगळन्नु माडिदि. अवरोन्दिगे दुःखहोन्दुत्ति एन्दर्थ.) तवापि स्यात् । तत्प्राप्तिरेव तव हानिरित्यर्थः ।।१२।।

ननु ताभिः रथरोधनादि यद्यत्कृतं तत्फलं च समुदायत्वेन वा प्रत्येकं वा तद्धानिकरम्? इत्यत आह – **प्रत्येकमिति ।। प्रत्येकं** यथा स्यात् तथा **फलवक्तृत्वे** फलस्य वक्तृत्वे फलकथनविषये इत्यर्थः । **तत्तत् कर्माख्यशैवलैः** 'जलनीली तु शैवालं शैवलम्' इत्यमरः ।।१३।।

**स्त्रीनीराणि** स्त्रीरूपाणि नीराणि जलानि । **परिच्छिन्नानि** = व्याप्तानि । यथा जलानि

शैवालैराच्छादितानि तथैव ताः स्त्रियः पापव्याप्ताः इत्यर्थः । व्याप्तानां प्रत्येकत्वं न सम्भवतीत्यर्थः । **तद्धानिनैव** = तद्भोगेनैव ताः शुद्धा भवन्तीत्यर्थः । तथा त्वमपि अतः तत्पापसामान्यतः तत्तद्योग्यफलं भवति । **अन्यथा न** (एतत्) सत्यमित्यर्थः ।।१४।।

तत्र दृष्टान्तमाह – **कामानिति ।। यथा स्त्रीमानपि श्रीमान् । पुत्रं विना । श्रिया** सम्पत्त्या । **कामान्** यथा । पुत्रोपनयन,विवाह,तत्पुत्रप्रेक्षणादिकामान् यथा नाप्नोति तथा पुण्यपुत्रं विना सुखं मोक्षं वा कोपि नाप्नोतीत्यर्थः ।। (**पाठान्तरेण अर्थभेदः अपि ग्राह्यः । यथा हि** – 'यथा श्रिया पुरुषः श्रीमान् भवति । तथा स्त्रीपुत्रेण (जातेन) मान्या भवति । तस्मात् स्त्रीणां पुत्रं विना का मान्यता कथं पूज्यत्वमित्यर्थः । एवं पापे सति योग्य पुत्रो न जायते । सा स्त्री दुःखयुक्ता भवति । श्रियं विना पुरुषः श्रीमान् न भवति । दुःखयुक्तो भवति । एवं अप्पण्णकृष्णभट्ट त्वमपि दुर्जनमित्रैः सार्धं कृतकृतिसंशयवृन्दावनाचार्यनिन्दादिद्रोहेण दुःखयुक्तो भवसि । तेपि दुर्जनसखायः दुःखयुक्ता भवन्ति । उत्तमद्रोहफलमवश्यमनुभोक्तव्यमिति भावः ।।)
(ई व्याख्यानकाररु 'का मान्यतेपि' एन्दु हिडियदे 'कामान्' इति एन्दु हिडिदिद्दारे. अदरिन्द अर्थभेदविदे. अवर अर्थवेनेन्दरे श्रीमन्तनागिद्दरू पुण्यपुत्रसन्तानविल्लदे होदरे अभीष्टवाद पुत्रलालने, पुत्रनिगे चौलादिसंस्कार माडुव सुख मुन्ताद काम्यगळन्नु होन्दलारदे दुःखितवागिये इरुवनु. हागे 'सामान्यतः' पापमाडिद अप्पण्णादिगळिगे एष्टु संपत्तिद्दरू ष्टिनल्लि बरुव दुःखवु एन्दरे ऊरेल्ला शत्रुराजरिन्द कोळ्ळे होडेयल्पडोण, न्दे दोणियल्लि एल्लरू इद्दाग दोणि मुळुगोण, जलप्रवाहदिन्द ऊरिगे ऊरे तुम्बि होगोण, इन्तह केट्ट फलदिन्द दुःख होन्दबेकागुत्तदे. प्रकृत सन्तानराहित्यवु अप्पण्णनिगे हेळल्पट्टिदे. 'का मान्यता' एन्दु पदच्छेदमाडिदरे अप्पण्णभट्ट उत्तमद्रोह माडिद मेले याव पुण्यवू प्रयोजनक्के बरदे दुःखवे मेलागि भोक्तव्यवागि उळियुत्ते एन्दु अर्थ बरुत्ते.)

अप्पण्णकृष्णभट्टश्रोतृकप्रकरणं सम्पूर्णम् ।

## ३. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (१५- २२ १/२)

**ममैवं दैविकग्रन्थं हृदयग्रन्थिसंयुताः ।।१५।।**

**ये न गृह्णन्ति तान् सर्वान् गृह्णन्ति यमकिङ्कराः ।**
**ममाख्यानं प्रवक्तारं यमाज्ञया(ऽऽ)गता भटाः ।।१६।।**

**ते मया वारिताः सर्वे को वा मत्सदृशो यतिः ।**
**हे वृन्दावनगस्वामिन् ममानन्दं कुरु प्रभो ।।१७।।**

**(अन्वयः) – एवं मम दैविकग्रन्थं ये हृदयग्रन्थिसंयुताः न गृह्णन्ति, तान् सर्वान् यमकिङ्कराः गृह्णन्ति । ममाख्यानं प्रवक्तारं (प्रति) यमाज्ञया आगताः भटाः ते सर्वे (अपि) मया वारिताः । कः मत्सदृशः यतिः वा? हे प्रभो! वृन्दावनग- स्वामिन्! मम आनन्दं कुरु ।**

(व्या) ननु किं तत्पुण्यं येनोभयलोकप्राप्तिः स्यात्? इत्यत आह – **ममैवेति** ।। (ममैवं इति ।।) हे लक्ष्मीपते! **एवम्** उभयलोकाप्तिकरम् । **मम दैविकग्रन्थम्** आख्यानं **ये हृदयग्रन्थिसंयुताः** हृदयेन मनसा ग्रथयतीति ग्रन्थिः तेन संयुताः । संसारिणः इत्यर्थः ।।१५।।

**न गृह्णन्ति** 'श्रवणपठनादिना' इत्यर्थः । **तान् यमकिङ्कराः** यातनादानाय स्वीकुर्वन्ति । तत्प्रकारमाह – **ममेति** ।। हे लक्ष्मीपते! एकदा च **यमाज्ञया** यमभटाः **मम आख्यानप्रवक्तारं** विप्रं स्वलोकं नेतुं **गताः** = प्राप्ताः । तदा स मम भक्तः आख्यानप्रवक्ता 'हे दयानिधे! श्रीगुरुराजप्रभो पाहि मां' इति चक्रन्द ।।१६।।

तदा विष्णुपार्षदैः अजामिलगृहीतार इव मया ते वारिताः । को वा मत्सदृशः यतिः? स्यात् इति विचारय । हे (वृन्दावनगस्वामिन्) वृन्दावनगः श्रीहयवदनः स्वामी यस्य सः । तादृश । हे लक्ष्मीपते! **प्रभो** = समर्थ! **ममानन्दं कुरु** ।।१७।। ('हे वृन्दावने विद्यमान हयवदनप्रभो । ममानन्दं कुरु' इति प्रार्थना. इयं प्रार्थना शिष्योद्धारार्थं कृता । सात्विकतमा । न हि निष्कामधर्मविरोधिनी इति ज्ञातव्यम् ।) (श्लोक १२र कोनेय अर्थवन्नु ई व्याख्यानकाररु लक्ष्मीपति एम्ब अप्पण्णभट्ट प्रतिभाग्रस्त द्विजन परवागि व्याख्यानमाडिदारे. मुन्दे हरे, गुरो इत्यादि सम्बुद्धिगळन्नु विमर्शिसि नोडिदरे ई श्लोकार्धवू हयग्रीवदेवरिगे अन्वयिसुत्ते.

**अन्नं ददस्व विप्रस्य मन्नन्दनमुखेन च ।**
**नोचेत्तव करं विप्रे वितराऽर्य हरे गुरौ ।।१८।।**

**शरणागतसंसरणं मरणार्तिं हर प्रिय ।**
**एकवाक्यप्रतिष्ठापनाचार्याद्य त्वयोदितम् ।।१९।।**

**(अन्वयः) – हे आर्य! मन्नन्दनमुखेन विप्रस्य अन्नं ददस्व । नो चेत् तव करं विप्रे वितर, हरे गुरौ (सति मा शङ्कीः) ।। हे प्रिय! मरणार्तिं (इव) शरणागतसंसरणं हर । हे एकवाक्यप्रतिष्ठापनाचार्य! अद्य त्वया उदितं (स्मर) ।।**

(व्या) **मन्नन्दनमुखेन** मन्नन्दनः शेषाद्रिः, तस्य मुखेन तद्द्वारा इत्यर्थः । **विप्रस्य** भोज्यम् **अन्नं ददस्व । नो चेत्, तव** मन्मठतो दीयमानं **करं विप्रे वितर** = देहि । **हे आर्य! हरे** सर्वदुःखपरिहारके, **गुरौ**मयि सति । **मा शङ्कीः** ।।१८।। (हरे गुरो एन्दु वृं. इदे. गुरौ एन्दु पाठविद्दुकोण्डु माशङ्कीः एन्दु अथवा माशोकः कार्यः एन्दो अध्याहार माडिकोण्डु ई व्याख्यान प्रवृत्तवागिदे. आदरे परमात्मन परवागि ई एरडु श्लोकगळु(१८-१९) स्वरसवागि अर्थप्रदवागिवे. (यथाहि हे हरे गुरो हयग्रीवस्वामिन् विप्रस्य मन्नन्दनमुखेन वेदनिधिमुखेन शेषमुखेन भूप सीतापतिप्रभृति ामच्छिष्यमुखेन अन्नं ददस्व । नो चेत् । प्रबलप्रारब्धे सति हे आर्य करुणानिधे विप्रे तव करं वितर । आशीर्वादं कुरु । तव अनुग्रहेण सुखेन अन्नं लभ्यते ।।१८।। हे प्रिय देव मरणार्तिं मरणदुःखजनकं शरणागतसंसरणं अस्माकं शरणागतानां भक्तानाम् (भक्तकर्तृकं) अन्नकामेन भिक्षाटनं हर परिहर ।। एन्दर्थ. (दुःखजनकं भिक्षाटनं इत्यन्वयः)

**हे प्रिय! शरणागतसंसरणं** मरणार्तिमिव विद्यमानं शरणागतस्य ब्राह्मणस्य संसरणम् । अन्नार्थं मधुकरवृत्त्या संसरणम् = सञ्चरणम् । **हर** = परिहर । ननु मामकं करं तस्मै दत्वा कथमहं जीवामि? इत्यत आह – **एकवाक्येति** ।। **एकवाक्यप्रतिष्ठापनाचार्य** 'एको नारायण आसीत्' इतिश्रुत्या 'एको नारायणः सर्वोत्तमः' इति वाक्यस्य प्रतिष्ठापनं तस्य आचार्य लक्ष्मीपते **अद्य त्वया उदितं** स्मर ।।१९।।

**गां दापयामीति भूपात्समं कुरु यथेष्टतः ।**
**त्रिवाचाऽपि मया प्रोक्तं तव बुद्धिर्यथा तथा ।।२०।।**

**कुरु विप्रस्य वचनं न मृषेति विचिन्तय ।**
**अनृतं तु प्रवक्तारो वैराग्यरहिताश्च ये ।।२१।।**

**चरणं तच्छिरसि ते कुरु तामरसोपमम् ।**
**श्रेयांसि तव दास्यामि हयास्याऽराधनं कुरु ।।२२।।**

**आशान्ते यान्ति पापानि स्वाशां त्यक्त्वा त्वयि प्रिय ।**

(अन्वयः) 'भूपात् गां दापयामि' इति यथा इष्टतः समं कुरु । मया त्रिवाचा अपि प्रोक्तम्, तव बुद्धिः यथा तथा कुरु ।। 'विप्रस्य वचनं (ममाख्यानं) मृषा' इति न विचिन्तय । ये वैराग्यरहिताः अनृतं तु प्रवक्तारः तत् शिरसि ते तामरसोपमं चरणं

कुरु । हयास्य आराधनं कुरु, (तेन) तव श्रेयांसि दास्यामि, । हे प्रिय! पापानि त्वयि स्वाशां त्यक्त्वा, आशान्ते (दिगन्ते) यान्ति ।।

(व्या) किं तदिति चेत्, श्रुणु । विप्रं प्रति । भूपात् गां दापयामीति । तत् यथेष्टतः = यथेष्टं(च्छं) समं कुरु । एतत् त्रिवाचापि त्रिवारं वाक्यव्यवहारेणापि तुभ्यं मया प्रोक्तम् । तव बुद्धिर्यथा तथा कुरु ।।२०।।

त्वत्करं (त्वत्करं एन्दरे 'निन्न कैय्यन्नु' एन्दर्थवल्ल. इल्लि करवेन्दरे 'सम्बळ' वेतन. निन्न सम्बळद हणवन्ने अवनिगे कोट्टु नीनु पुराणादिगळिन्द लब्ध द्रव्यदिन्द जीविसु. अथवा राजनिगे हेळि अरमनेयिन्द गोदानवन्नो भूदानवन्नो कोडिसि विप्रनु सुखवागि बदुकुवन्ते माडु. कृतिरूप नन्न मातन्नु नम्बु. वृन्दावनाख्यानदल्लि सुळ्ळिरुत्ते एन्दु शङ्किसबेड.) देहि । अथवा गां दापय । एतत् मया विप्रस्य स्वप्ने उक्तं वचनं मृषेति न (वि)चिन्तय । 'सकृद्वदन्ति राजानः सकृज्जल्पन्ति पण्डिताः' इति न्यायेन । एकवाक्येति विशेषणेन उक्तोऽसि (एकवाक्यप्रतिष्ठापनाचार्य एन्दु विशेषण कोट्टु निन्नन्नु सम्बोधिसिरुवुदु एकेन्दरे, नीनू पण्डित. ओन्दावर्ति नानु हेळिदेनेन्दरे आगिहोयितु एन्दु हेळिदवनु नीनु. इन्तहवनु 'राजरिगे हेळि ई विप्रनिगे एनादरू कोडिसुत्तेने' एन्दु अनेकर एदुरिगे हेळि आ निन्न वाक्यवन्नु सुळ्ळुमाडबेड एन्दर्थ.) । तदपि पुनश्चिन्तय । ये च वैराग्यरहिताः अनृतं तु प्रवक्तारः अप्पण्ण कृष्णभट्टादयः ।।२१।।

तच्छिरसि ते तामरसोपमं = पद्मोपमं चरणं कुरु । हयास्याराधनं च कुरु । तव श्रेयांसि दास्यामि ।।२२।। तेन च पापानि । त्वयि आशां त्यक्त्वा हे प्रिय आशान्ते दिगन्ते यान्ति । निष्पापो भविष्यसीत्यर्थः ।। ल.श्रो.प्र.सं. ।।

४. श्रीपतिप्रकरणम्।। श्लोकाः (२३ऽ२५१/२)

**समागतोऽसि श्रीपते त्वमागतः सरोवरम् ।।२३।।**

**सुमानसं यतीश्वरे प्रमां वदाशु मत्कृतेः ।**
**हयास्यनामधेयिनो मयाऽस्य चोदितो मनुः ।।२४।।**

**कुहास्यवर्जितो मुनिः सुहासमिश्रिताननः ।**
**मानसं राजहंसीव मत्सरोवरमागतम् ।।२५।।**

**मत्कथाक्षीरपानं तु मामकं तं प्रकारय ।**

(अन्वयः) हे श्रीपते! त्वं सरोवरम् समागतः असि । (अस्मिन्) यतीश्वरे सुमानसं मत्कृतेः प्रमाम् आशु वद ।। अस्य हयास्यनामधेयिनः मनुः च उदितः ।। सुहासमिश्रिताननः कुहास्यवर्जितः मुनिः मानसं मत्सरोवरं राजहंसी इव आगतम् ।। मामकं तं मत्कथाक्षीरपानं तु प्रकारय ।।

(व्या) समागतोऽसि । हे श्रीपते! यत् त्वं सरोवरं धवळाख्यम् आगतः = तत् समागतोऽसि = सम्यक् अनुकूलकाले आगतोऽसि ।।२३।। किं तदानुकूल्यमित्यत आह – सुमानसमिति ।। अस्मिन् यतीश्वरे । सुमानसं यथा भवति तथा । 'निष्कापट्येन' इत्यर्थः । मत्कृतेः = आख्यानस्य, प्रमाम् = रहस्यम्, आशु वद । अस्य = हयास्यनामधेयिनः मया मनुः = कामधेनुरिति मन्त्रः जपार्थं चोदितः = उपदिष्टः ।।२४।। स च कुहासवर्जितः कुत्सितानां हासने वर्जितः, अपि च सुहासमिश्रिताननः = आनन्दमन्दहासमुखयुतः । मुनिः ज्ञानी च राजहंसी मानससरोमिव । अतिप्रेम्णा इत्यर्थः । मत्सरोवरं धवळाख्यं प्रति आगतम् ।।२५।। तं मामकं प्रति । मत्कथाक्षीरपानम् = मम कथायाः = आख्यात्मिकायाः यत् क्षीरभूतं रहस्यं तत्पानं तदनुष्ठानप्रकारम् । प्रकारय (प्रकाशय) ।। श्री.श्रो.प्र.सं.।।

### ५. हयग्रीवकर्मन्दिप्रकरणम् श्लोकाः (२६-२९१/२)

(व्या) हे हयग्रीवकर्मन्दिन् इत्यारभ्य 'अपाकुरु पुरो मम' इत्यन्तं पञ्चमं हयग्रीव-कर्मन्दिश्रोतृकप्रकरणम् ।।

**हे हयग्रीवकर्मन्दिन् मन्दराद्रिनिभं मम ।।२६।।**

**वृन्दावनं पश्य सान्द्रानन्दयुक्तो भवाऽशु च ।**
**मत्सरोवरमायासि राजहंसीव मानसम् ।।२७।।**

**मत्कथाक्षीरपानं त्वं स्नानं कृत्वा कुरु प्रिय ।**
**हंसो यथा क्षीरपानं कुरुते नीरकं विना ।।२८।।**

**तद्वदंहोनामनीररहितं मत्कथामृतम् ।**
**पिब पापहरं कोपरहितश्चेत्सुपावनम् ।।२९।।**

**तपसा पापपूगं त्वमपाकुरु पुरो मम ।**

**(अन्वयः) – हे हयग्रीवकर्मन्दिन्! मन्दराद्रिनिभं मम वृन्दावनं पश्य, आशु सान्द्रानन्दयुक्तः भव । राजहंसी इव मानसं मत्सरोवरम् (प्रति) आयासि ।। हे प्रिय! त्वं स्नानं कृत्वा, कोपरहितः चेत्, मत्कथाक्षीरपानं यथा नीरकं विना क्षीरपानं हंसः कुरुते, तद्वत् अंहोनामनीररहितं पापहरं सुपावनं मत्कथामृतं पिब. त्वं तपसा मम पुरः पापपूगं अपाकुरु ।।**

(व्या) **हे हयग्रीवेति** ।। **हे हयग्रीवकर्मन्दिन्! मम मन्दराद्रिनिभम्** । **वृन्दावनं पश्य** । ततश्च **आशु सान्द्रानन्दयुक्तो भव** । मानससरोवरं **राजहंसीव मत्सरोवरम् आयासि** = आगतवान् ।।२७।। '**त्वं स्नानं कृत्वा**, मत्कथाक्षीरपानं श्रीपतिचोदितम्' इत्यर्थः । **हे प्रिय! कुरु**, दृष्टान्तमाह – **हंस इति** ।। यथा **हंसः** नीरमिश्रितक्षीरं स्वपुरःस्थं दृष्ट्वा तत्स्थं **क्षीरपानं नीरकं** विना जलं विहायेत्यर्थः । **कुरुते** ।।२८।। **तद्वत् अंहोनामनीररहितं** = पापनामकनीररहितं **मत्कथामृतं** मत्कथादुग्धं **कोपरहितश्चेत्** = 'विप्रः किमपि वदति न विश्वसनीयमेतत्' इति कोपेन रहितश्चेत् असि । तर्हि **पापहरं** पापपरिहारकं पापरहितं **सुपावनं पिब** ।।२९।। ननु कोपरहितत्वं मम कथं भवेत्? इत्यत आह – **तपसेति** ।। **तपसा** = कृच्छ्रचान्द्रायणादिना, मम पुरःस्थित्वेत्यर्थः । **त्वं पापपूगं** = पापसमूहम् **अपाकुरु** = दूरीकुरु ।।२९।। हय.श्रो.प्र.सं. ।।

६. शेषप्रकरणम्।। श्लोकाः (३०ऽ३५१/२)

(व्या) '**नन्दनायं मन्दबुद्धिः**' इत्यारभ्य '**मरणार्तिसमं भवेत्**' इत्यन्तं शेषश्रोतृक-षष्ठप्रकरणम् ।

**नन्दनायं मन्दबुद्धिः कन्दाशनकृतिं पराम् ।।३०।।**

**वृन्दावने सान्द्रभक्त्या ह्यधरस्यन्दनादिना ।**
**दिने दिने वदत्येवं कदनेन विना जनैः ।।३१।।**

**मदनेनाभिहीनोऽयं सदनं तस्य दापय ।**
**त्वत्करे चार्पितोऽयं तु मत्करं त्वस्य दापय ।।३२।।**

**सत्कारं कुरु विप्रे च मत्कृतिं(?) प्रार्पकेऽत्र च ।**

**कृष्णाचार्यसुतश्चायं निष्णातो हरिपादयोः ॥३३॥**

(अन्वयः) – हे नन्दन! अयं मन्दबुद्धिः परां कन्दाशनकृतिं सान्द्रभक्त्या वृन्दावने दिने दिने अधरस्यन्दनादिना जनैः कदनेन विना वदति हि । अयं मदनेन अभिहीनः । तस्य सदनं दापय । अयं तु त्वत्करे अर्पितः च । अस्य मत्करं तु दापय । अत्र मत्कृतिं प्रार्पके विप्रे सत्कारं च कुरु । अयं कृष्णाचार्य- सुतः हरिपादयोः निष्णातः ॥

(व्या) हे शेष! अयं मन्दबुद्धिः ब्राह्मणः परां = श्रेष्ठां कन्दाशनकृतिं = कन्दाशनस्य मम कृतिम् = आख्यानम् ॥३०॥ वृन्दावने = सत्समीपे इत्यर्थः । सान्द्रभक्त्या = दृढ-भक्त्या, अयं मदनेन = कामेन अभिहीनः = रहितः । 'जनैः कदनेन विना निर्विवादम्' इत्यर्थः । अधरस्यन्दनादिना अधरात् ओष्ठात् । स्यन्दनं लालास्रवणं आदिशब्देन सिङ्घाणम् । तेन रहितः सन् । दिने दिने प्रतिदिनं वदति पठति ॥३१॥ तस्य स्थित्यर्थम् । भूपतः (भूपादित्यर्थः) । सदनं गृहं दापय । अयं तु त्वत्करे अर्पितः । मयेत्यर्थः । अपि च तस्य मत्करं मम मठाद्दीयमानं करं दापय ॥३२॥

अत्र च मत्कृतिप्रार्पके (मत्कृतिप्रापके एन्दु बरेदु अर्थमाडुवाग अर्पयतीति तादृशे एन्दु बरेदिरुवुदरिन्द व्याख्यानकाररिगू विवक्षितवाद मूलवु 'प्रार्पके एन्दे' एन्दु सिद्धवागुत्तदे. हागिल्लदे प्रापके एम्बुदे पाठवागिद्दरे प्रकर्षेण आपयतीति तादृशे एन्दिरबेकागित्तु. आद्दरिन्द प्रापके एन्दु बरेदिरुवुदु प्रामादिक.) मत्कृतिं प्रकर्षेण अर्पयतीति तादृशे विप्रे च । सत्कारं कुरु = नोदासीनो भव ॥ अयं कृष्णाचार्यसुतो श्रीनिवासाह्वयः । (कृष्णाचार्यसुत श्रीनिवासनेन्दु श्लोक ४३रल्लिदे. चिन्तामण्याचार्यर पुत्र लक्ष्मीनारायणनामक) हरिपादयोः निष्णातः = निपुणः (निरतः) 'सेवायै' इत्यर्थः ॥३३॥

**पुष्णाति वेदशास्त्राणि तृष्णाऽथापि गता न हि ।**
**सोऽत्यन्ततृष्णया युक्तः कृष्णसङ्कल्पतः सुत ॥३४॥**

**वैष्णवब्राह्मणांश्चोष्णकरवत्परितापितान् ।**
**कुरुते निष्ठुरवचः किरणैः स्मरणं विना ॥३५॥**

**ब्रह्माधिक्करणं चास्य मरणार्तिसमं भवेत् ।**

(अन्वयः) – हे सुत! वेदशास्त्राणि पुष्णाति अथापि तृष्णा न हि गता ।

कृष्णसङ्कल्पतः सः अत्यन्ततृष्णया युक्तः । (सः च) वैष्णवब्राह्मणान् उष्णकरवत् (सूर्यवत्) निष्ठुरवचः किरणैः (मां) स्मरणं विना परितापितान् कुरुते । ब्रह्मधिक्करणं अस्य मरणार्तिसमं भवेत् ।।

(व्या) वेदशास्त्राणि पुष्णाति = रक्षति । अथापि तस्य तृष्णा गता न हि । हे सुत सः कृष्णसङ्कल्पतः अतितृष्णया युक्तः ।।३४।। वैष्णवब्राह्मणान् = विष्णुभक्तान् विप्रान् उष्णकरवत् = सूर्यवत् निष्ठुरवचः किरणैः = निष्ठुराणि च तानि वचांसि च । तद्रूपकिरणैः स्मरणं विना 'मामनादृत्य' इत्यर्थः । परितापितान् कुरुते = सन्तप्तान् करोति ।।३५।। एवं च ब्रह्मधिक्करणम् अस्य मरणार्तिसमं भवेत् ।।शेष.प्र.सं.।।

७. सीतापतिप्रकरणम्।। श्लोकाः (३६-४२ १/२)

(व्या) 'अयं ग्रामः' इत्यारभ्य 'आददत्स्व कृणुष्व तत्' इत्यन्तं सप्तमं सीतापति-श्रोतृकप्रकरणम् ।

**अयं ग्रामो बहुळब्राह्मणेभ्यो नाम्ना सम्पेसरुरित्थं प्रदत्तः ।**
**राज्ञा दत्तः शेषहस्ते शेषस्तदाज्ञया दत्तवान् विप्रहस्ते ।।३६।।**

**यस्मिन् दत्तं दानमानन्त्यमेव ददाति पुण्यस्य च किञ्चनापि ।**
**तस्मिन् दिने श्रवणद्वादशीति शासनस्थं प्रददौ द्विजेभ्यः ।।३७।।**

**वामनेनेक्षितं ग्रामं शासनस्थं मुनीश्वर ।।३८।।**

(अन्वयः) – राज्ञा इत्थम् अयं सम्पेसरु नाम्ना ग्रामः बहुलब्राह्मणेभ्यो प्रदत्तः । राज्ञा शेषहस्ते दत्तः । सः शेषः तदाज्ञया विप्रहस्ते दत्तवान् ।। यस्मिन् (दिने) दत्तं दानं पुण्यस्य आनन्त्यमेव ददाति, न किञ्चन अपि । तस्मिन् श्रवणद्वादशी इति दिने सः (भूपः) शासनस्थं (स्वराज्यस्थ ग्रामं) द्विजेभ्यः प्रददौ ।। हे मुनीश्वर! (तं) शासनस्थं ग्रामं वामनेन ईक्षितम् ।।

(व्या) अयं ग्राम इति ।। हे सीतापते । शृणु । अयं सम्पेसरु नामको ग्रामः राज्ञा भूपेन बहुलब्राह्मणेभ्यः स्यात् इत्थं विचार्य चालकत्वेन शेषहस्ते दत्तः । स च शेषः तदाज्ञया विप्रहस्ते विप्राणां हस्ते दत्तवान् ।।३६।। स च कदा दत्तः? इत्यत आह – यस्मिन्निति ।।

यस्मिंश्च पुण्यस्य प्राप्त्यै किञ्चन अपि स्वल्पमपि दत्तं दानम् आनन्त्यमेव मोक्षमेव ददाति, तस्मिन् श्रवणद्वादशीति दिने स भूपः शासनस्थं स्वराज्यस्थं ग्रामं द्विजेभ्यः प्रददौ ।।३७।। हे मुनीश्वर! सीतापते! तं शासनस्थं ग्रामम् । वामनेन = वामनं प्रति मया । उपलक्षितं युक्तमिति विद्धि ।।३८।।

**न प्रयच्छन्ति विप्रेभ्यो राजानः के वदस्व तान् ।**
**हा हा कोऽपीह राजानं त्यज ग्रामं द्विजातिनाम् ।।३९।।**

**इति पुण्योक्तिमुक्त्वा तु ब्राह्मणार्थं न जीवति ।**
**ये जीवन्तीति विप्रार्थं ते जीवन्त्येव नेतरे ।।४०।।**

(अन्वयः) – इह कोपि '(हे राजन्) विप्रेभ्यो के राजानः न प्रयच्छन्ति? तान् वदस्व । हा हा (त्वया अन्याय्यं कृतम्) द्विजातिनां ग्रामं त्यज' इति राजानं प्रति पुण्योक्तिम् तु उक्त्वा ब्राह्मणार्थं न जीवति । इति विप्रार्थं ये जीवन्ति ते जीवन्ति एव; इतरे न ।।

(व्या) भवतु । ततः किम् इत्यत आह – नेति ।। हे सीतापते! युष्मासु यः कोऽपि इह राजानं प्रति 'हे राजन् के वा त्वादृशा राजानः विप्रेभ्यो ग्रामं न प्रयच्छन्ति । तान् वदस्व । त्वया च द्विजातीनां दत्तो ग्रामः हृतः । हाहा अन्याय्यं कृतं त्वया । त्यज ग्रामं' इति पुण्योक्तिं ब्राह्मणार्थम् उक्त्वा न जीवति । ननु वयं जीवन्त एव न मृताः इत्यत आह –य इति ।। ये च इति पूर्वोक्तप्रकारेण विप्रार्थं जीवन्ति, ते एव जीवन्ति इतरे तु न जीवन्ति, जीवन्मृता इत्यर्थः ।।३९-४०।।

**स्वार्थं जीवन्ति कान्तारे किराताः किं न निर्दयाः ।**
**तस्माद् वदेति राजानं द्विजग्रामं तु सज्जन ।।४१।।**

**त्यज जीवसमाजे त्वं भज तत्पुण्यसञ्चयम् ।**
**वाङ्मात्रेण च तत्पुण्यराशिं पश्य गुणार्णव ।।४२।।**

**त्वं मेरुणा समं पुण्यमाऽददत्स्व कृणुष्व तत् ।**

(स्वादह्लि आदधत्स्व एन्दिदे. स्वा व्याख्यानप्रतियह्लि आदधत्स्व एन्दिदे. प्रिंटिनह्लि आददत्स्व एन्दिदे.

वृं.नल्लि आदत्स्व एन्दिदे. अनुष्टुप् वृत्तक्के इन्नोन्दक्षर बेकागिदे. आदरिन्द भी नोडबेकु.)

(अन्वयः) – निर्दयाः किराताः कान्तारे (अरण्ये) स्वार्थं न जीवन्ति किम्? तस्मात् हे सज्जन! राजानं द्विजग्रामं तु त्यज इति वद । जीवसमाजे (औदासीन्यं त्यज); तत् पुण्यसश्चयं त्वं भज । हे गुणार्णव! वाङ्मात्रेण तत् पुण्यराशिं च पश्य । मेरुणा समं पुण्यं त्वं आददत्स्व, तत् कृणुष्व ।।

(व्या) ननु जीवति सति, मृत इति व्यवहारः कथम्? इत्यतः दृष्टान्तमुखेनाह –**स्वार्थमिति ।। निर्दयाः किराताः कान्तारे** अरण्ये **स्वार्थं न जीवन्ति किम्** एवं स्वार्थिन एव जीवन्मृताः इत्यर्थः । **तस्मात्** हे सीतापते! **सज्जन! द्विजग्रामं तु त्यज इति राजानं** वद ।।४१।। अस्मिन् ब्राह्मण**जीवसमाजे** तद्विषये इत्यर्थः । त्वम् औदासीन्यं **त्यज । तत्पुण्य-सश्चयं** = तेषां ब्राह्मणानां पुण्यसश्चयं **भज । हे गुणार्णव! वाङ्मात्रेण च** = 'ब्राह्मणेभ्यो दत्तं न हर । किन्तु त्यज' इति (सद्बोधनरूप)वाङ्मात्रेणापि **तत्पुण्यराशिं पश्य** ।।४२।। **त्वं** चैवं कृत्वा **मेरुणा समं पुण्यम् आदद(ध)त्स्व** । तद्राजपापं यद्वा (हितबोधनविषये) औदासीन्य- रूपं पापं **कृणुष्व** = छेदय ।।४२ १/२।। सी.श्रो.प्र.सं.।।

८. श्रीपतिप्रकरणम्।। श्लोकाः (४३-५० १/२)

(व्या) 'श्रीपते' इत्यारभ्य '**करणं तस्य मानव**' इत्यन्तं श्रीपतिश्रोतृकम् अष्टम-प्रकरणम् ।।

**श्रीपते श्रीनिवासोऽयं वृथा गाळीं प्रदत्तवान् ।।४३**

**तां श्रुत्वा यतयोऽपीह मूकीभूता अहो विधे ।**
**काळीयः स्वविषज्वालाज्वलितं यमुनाजलम् ।।४४।।**

**चकार निर्मलं काले गोपालेनैव चालितः ।**
**तद्वद्गोपालकृष्णेन मद्वृन्दावनगेन च ।।४५।।**

(अन्वयः) – हे श्रीपते! अयं श्रीनिवासः वृथा गाळीं प्रदत्तवान् । इह यतयः अपि तां श्रुत्वा मूकीभूताः; अहो विधे! यथा गोपालेन चालितः एव काळीयः स्वविषज्वालाज्वलितं यमुनालयं काले निर्मलं चकार; तद्वत् मद्वृन्दावनगेन गोपालकृष्णेन च (तन्मनो निर्मलमभूत्) ।।

(व्या) श्रीपते इति ।। हे श्रीपते । अयं श्रीनिवासः (श्लोक. ३३ऽ३४ नोडि) कृष्णाचार्यसुतः वृथा व्यर्थं गालीं = 'ब्राह्मणेभ्यो न ग्रामो देयः' इति प्रदत्तवान् ।।४३।। तां श्रुत्वा यतयोऽपि हयग्रीवादयः इह मूकीभूताः अहो विधे दैवम् । तर्हि तन्निवारणं कैरपि न कृतं वेत्यत आह – कालीयः स्वेति ।। हे श्रीपते यथा कालीयः तदाख्यनागः स्वविषज्वाला-ज्वलितं यमुनाजलम् ।।४४।। गोपालेनैव श्रीकृष्णेनैव चालितः सन् रमणकद्वीपं गत्वा; काले = स्वप्रयाणकाले निर्मलं चकार तद्वत् हे श्रीपते मद्वृन्दावनगेन गोपालकृष्णेन च चालितः सन् मूकीभूतयतीनां मनो निर्मलं चकार । 'अहोऽयं नीचः । नास्माभिर्निवारितः' इति पश्चात्तापेन तन्मनो निर्मलमभूदित्यर्थः ।।४५।।

**सद्वन्दनादिभिः शून्यं वदनं भुवि निन्दितम् ।**
**तस्मिन् ब्रह्मन् ब्रह्मनिन्दादोषेण ब्रह्मराक्षसः ।।४६।।**

**बह्वीः समा महावह्निसन्तप्त इव तप्यते ।**
**बह्वीः समा इति श्रुत्या चांहोनाशं करिष्यति ।।४७।।**

(अन्वयः) – सद्वन्दनादिभिः शून्यं वदनं भुवि निन्दितम् (अभूत्) । हे ब्रह्मन्! तस्मिन् (मृते सति सः) ब्रह्मनिन्दादोषेण ब्रह्मराक्षसः च (भूत्वा), बह्वीः समाः (बहुवर्षपर्यन्तं) महावह्निसन्तप्त इव तप्यते । (अतः हे श्रीपते!) 'बह्वीः समाः' इति (श्लोकार्थं) श्रुत्या (श्रवणेन च) अंहो नाशं करिष्यति ।।

(व्या) तस्य वदनं च । सद्वन्दनादिभिः शून्यं वर्जितं सत् भुविनिन्दितमभूत् । हे ब्रह्मन् तस्मिन् मृते सति स च ब्रह्मनिन्दा दोषेण ब्रह्मराक्षसः ।।४६।। भूत्वा 'बह्वी समाः' बहुवर्षपर्यन्तं महावह्निसन्तप्त इव तप्यते । अतः हे श्रीपते 'बह्वी समा' इति श्लोकार्धमेतं तं प्रति वदस्व । स च श्रुत्या = श्रवणेन अंहोनाशम् अंहसः नाशं करिष्यति ।।४७।।

**असह्यमपि यच्छ्रीनिवासो गह्वरमध्यगः ।**
**तत्कृतब्रह्मनिन्दायाः मद्वृन्दावनसन्निधौ ।।४८।।**

**कन्दाशनेन्द्रमनसो दन्दशूकं प्रधारिणः ।**
**अर्पितं शल्यमासीत् सन्तर्पितं रक्तपानतः ।।४९।।**

**न्यक्कृता सा च विद्वद्भिर्धिक्कृतः सोऽपि निन्दकः ।**
**ब्रह्महिंसासमं पापं ब्रह्मधिक्करणे ऋणिन् ।।५०।।**

**मरणार्तिसमं नृणां करणं तस्य मा तव ।**

(अन्वयः) (हे श्रीपते!) तत्कृतब्रह्मनिन्दायाः यत् असह्यमपि पापं गह्वरमध्यगः श्रीनिवासः (परिहरिष्यति) । मद्वृन्दावनसन्निधौ दन्दशूकं प्रधारिणः कन्दा-शनेन्द्रमनसः रक्तपानतः सन्तर्पितम् अर्पितं शल्यम् आसीत् ।। (तेन प्रयोजिता गाळी) सा च विद्वद्भिः न्यक्कृता । सः निन्दकः अपि धिक्कृतः । हे ऋणिन् ब्रह्मधिक्करणे सति ब्रह्महत्यासमं पापं (स्यात्) । हे मानव! नृणां तस्य (तत् पापस्य) करणं मरणार्तिसमं (भवेत्) । तव मा ।।

(व्या) ननु ब्रह्मनिन्दाया महापापत्वात् तत्परिहारः कथम्?

**आज्ञाभङ्गो नरेन्द्राणां विप्रानां मानखण्डनम् ।**
**पृथक्शय्या च नारीणाम् अशस्त्रवध उच्यते ।।**

इत्युक्तेः । इत्यत आह – **अहस्यमपीति** ।। हे श्रीपते! **तत्कृतब्रह्मनिन्दायाः** योग्यानां **यत् असह्यमपि** पापं तत् **गह्वरमध्यगः** वेङ्कटगिरिमध्यगः **श्रीनिवासः** परिहरिष्यति । यच्च तेन कृतं **मद्वृन्दावनसन्निधौ** ।।४८।। **दन्दशूकप्रधारिणः** । दन्दशूकौ = सर्पौ । तौ भुजप्रदेशे प्रकर्षेण धारयतीति । तादृशस्य ''उरगन पेडेयिन्दोप्पुव भुजगळु'' इति वादिवन्द्यतीर्थ श्रीपादैः गुरुराजमूर्तिध्यानात्मकपद्ये प्रोक्तं द्रष्टव्यम् । **कन्दाशनेन्द्रमनसः** । कन्दाशना ऋषयः तेषां इन्द्रोहं तस्य मम मनसः । **रक्तपानतः** तर्पितं रक्तपातेन **सन्तर्पितं शल्यम्** । तद्रूपमित्यर्थः । या तत्कृतब्रह्मनिन्दा । ब्रह्मनिन्दात्मकं पापम् **आसीत्** ।।४९।। एवं ममासह्यमासीत् । याच तेन गाळी प्रचोदिता **सा च विद्वद्भिः न्यक्कृता** । 'नृङ् नीच खर्व ह्रस्वाः स्युः' इत्यमरः । अधः कृता । **सोऽपि निन्दको धिक्कृतः । हे ऋणि! ब्रह्मधिक्करणे** सति । ब्रह्मनिन्दा(हनन)समं **पापं** स्यात् ।।५०।। **हे मानव नृणां तस्य** (ब्रह्महत्या) पापस्य **करणं मरणार्तिसमं** भवेत् । अतः तं प्रति **'बह्वीः समाः'** इति श्लोकार्धं कथयेति पूर्वेणान्वयः ।। श्री.प्र.सं. ।।(ई व्याख्यानकाररु मानव एन्दु हिडिदिद्दारे. आदरे वृं.मूल 'मा तव' एन्दिदे.)

**९. चिन्तामणिपुत्रलक्ष्मीनारायणप्रकरणम्।। सार्धश्लोकः (५१ऽ५२)**

(व्या) 'कृतिश्च' इत्यारभ्य 'नैवाबद्धं वदाबुध' इत्यन्तं लक्ष्मीनारायणश्रोतृकं नवमं प्रकरणम् ।।

**कृतिश्च ब्राह्मणस्येयमिति चिन्तामणेःसुत ।।५१।।**

**प्रमाणं कुरु मद्वृन्दावनाग्रे त्वं प्रणश्यसे ।**
**सप्तमेऽह्नि न सन्देहो नैवाबद्धं वदाबुध ।।५२।।**

(अन्वयः) – हे चिन्तामणेः सुत! इयं कृतिश्च ब्राह्मणस्य इति मद्वृन्दावनाग्रे प्रमाणं कुरु । (तथा कृते) त्वम् (अद्य आरभ्य) सप्तमे अह्नि प्रणस्यसे ।। (अत्र) न सन्देहः । हे अबुध! अबद्धम् एव न वद ।।

(व्या) हे चिन्तामणेःसुत! 'इयं कृतिश्च ब्राह्मणस्य' इति ।।५१।। मद्वृन्दावनाग्रे प्रमाणं कुरु । सत्यमित्युक्तिरूपं –

'प्रमाणं नित्यमर्यादा शास्त्रेषु सत्यवादिनी ।
इयत्ता यां च हेतौ च'

इति मेदिनी । कुरु । करोमि । किं तेन इत्यत आह – त्वमिति ।। तथा कृते त्वम् अद्य आरभ्य सप्तमे अह्नि दिने प्रणश्यसे प्रणश्यसि । अत्र न सन्देहः । तस्मात् हे अबुध मूढ अबद्धं प्रमाविरहितं नैव वद ।।५२।।

## १०. शेषप्रकरणम्।। श्लोकाः (५३ऽ५५१/२)

(व्या) 'यद्वा करिष्यते विप्र' इत्यारभ्य 'यत्पापं तद्भवेत्तव' इत्यन्तं शेषश्रोतृकदशामं प्रकरणं ।।

**यद्वा करिष्यते विप्रस्त्वं पश्याद्यैव तज्जयम् ।**
**तस्मात्कृत्वा पणं चोभौ प्रमाणं कुरुतं द्विजे ।।५३।।**

('विप्र त्वं' एन्दु श्रीपाठ. मत्तु व्याख्यानदल्लू गृहीतवागिदे. वृं.नल्लि विप्रः त्वं एन्दिदे. 'कुरुतो द्विज' एन्दु स्वादल्लिदे. स्वा पाठक्कनुसारियागि व्याख्यानविदे. भी नोडबेकु.)

**चिन्तामणिसुतश्चायं ब्राह्मणोऽयं ममाऽश्रितः ।**
**जयायापजयायापि पापबुद्धिं त्यज द्विज ।।५४।।**

**मम कोपो भवेत्तापो भविता ते सुपापिनः ।**
**करोम्यहं प्रमाणं चेत्युक्तिमात्रेण काण भो ।।५५।।**

**प्रमाणकरणे नृणां यत्पापं तद्भवेत्तव ।**

(अन्वयः) हे विप्र! (शेष) यद्वा (अयं चिन्तामणिसुतः प्रमाणं) करिष्यते (तर्हि) त्वं अद्य एव तज्जयं पश्य । तस्मात् द्विजे प्रमाणं कृत्वा, पणं कुरुतं अयं चिन्तामणिसुतः अयं ब्राह्मणः उभौ च ममाश्रितः ।। हे द्विज! जयाय अपजयाय अपि पापबुद्धिं त्यज ।। भो काण! (शेष) 'अहं प्रमाणं करोमि' इत्युक्तिमात्रेण नृणां प्रमाणकरणे यत्पापं (भवेत्) तद् तव (अपि भवेत्) । ते सुपापिनः तापः भविता (भवेत्) मम कोपः भवेत् ।।

(व्या) यद्वेति ।। हे विप्र! शेष अयं चिन्तामणिसुतः प्रमाणं करिष्यते । करिष्यति । तर्हि त्वं तज्जयं तस्य प्रमाणस्य जयं (पराजितस्य) मरणरूपं पश्य । तस्मात् हे द्विज! कृतेः विषये उभौ पितापुत्रौ (पितापुत्रौ एन्दिरुत्ते. तप्पिरबेकु. विप्रश्च चिन्तामणिपुत्रश्च एन्दु इल्लि विवक्षितवागिदे. मुन्दे 'चिन्तामणिसुतश्च, अयं ब्राह्मणश्च एन्दिदे. आद्दरिन्द आकरग्रन्थनोडि तिद्दबेकु.) प्रमाणं कुरुतः ।।५२।। अयं चिन्तामणिसुतश्च । अयं ब्राह्मणश्च । मम आश्रितः । (आश्रितौ) आश्रितत्वविषये समौ एव एतौ । तस्मात् एकस्य जयाय अन्यस्य अपजयापि कृतां पापबुद्धिं त्यज ।।५४।।

भो काण शेष! अहं प्रमाणं करोमीति उक्तिमात्रेणापि नृणां चिन्तामणिसुतादीनां प्रमाणकरणे यत्पापं भवेत् तत् तवापि भवेत् । ततश्च ते सुपापिनः (प्रथमा बहुवचनवल्ल. प्रमाणमाडलिक्के अवकाश कोट्ट निनगू एन्दर्थ. षष्ठी एकवचन) तापो भविता । न च केवलं तापः । किन्तु मम कोपोपि भवेत् ।।शेष.श्रो.प्र.सं.।।

११. लक्ष्मीनारायणप्रकरणम्।। श्लोकाः (५६ऽ५९१/२)

(व्या) 'चिन्तामणिसुत' इत्यारभ्य 'प्रायश्चित्तं कर्तुं द्विजाधम' इत्यन्तं लक्ष्मी-नारायणश्रोतृकएकादशं प्रकरणम् ।।

**चिन्तामणिसुतासह्य लक्ष्मीनारायणाह्वय ।।५६।।**

**ब्राह्मणस्य कृतिश्चेयमिति ते नन्दनं स्पृश ।**
**अलौकिकं मया प्रोक्तं लौकिकं विप्रवाक्कृतम् ।।५७।।**

**इति संस्पृश मत्पादं दह्यसे मम तेजसा ।**

(अन्वयः) हे असह्य! चिन्तामणिसुत लक्ष्मीनारायणाह्वय! 'ब्राह्मणस्य कृतिः अयम्' इति च ते नन्दनं स्पृश । 'अलौकिकं मया प्रोक्तं, लौकिकं विप्रवाक्कृतम्' इति मत्पादं संस्पृश । (तेन) मम तेजसा दह्यसे ।।

(व्या) हे असह्य! चिन्तामणिसुत । लक्ष्मीनारायणाह्वय ।।५६।।

'इयं च कृतिः ब्राह्मणस्य' इति ते नन्दनं स्पृश ।
अलौकिकं मया प्रोक्तं लौकिकं च विप्रवाक्कृतम् ।।'

विप्रेण स्ववाचाकृतम् ।।५७।। इति चेद्वदसि । तर्हि मत्पादं स्पृश । मम तेजसा दह्यसे ।।

**लक्ष्मीनारायण श्रीमान् ब्राह्मणो वा करिष्यति ।।५८।।**

**गृहाण वृन्दावनाग्रे प्रमाणं प्राणघातक ।**
**यद्वा मद्वृन्दावनाग्रे कुरु सद्वन्दनायुतम् ।।५९।।**

**सकृद्वा तद्वचःप्रायश्चित्तं कर्तुं द्विजाधम ।।**

(अन्वयः) हे लक्ष्मीनारायण! '(अयं) श्रीमान् ब्राह्मणः वा करिष्यति' (इति वदसि चेत्); हे प्राणघातक! वृन्दावनाग्रे प्रमाणं गृहाण ।। यद्वा तद्वचः-प्रायश्चित्तं कर्तुम् (इच्छसि तर्हि) मद्वृन्दावनाग्रे सद्वन्दनायुतं सकृद् वा कुरु ।।

(व्या) हे लक्ष्मीनारायण! अयं श्रीमान् ब्राह्मणो वा करिष्यति ।।५८।। इति वदसि (चेत्) तर्हि । हे प्राणघातक! वृन्दावनाग्रे प्रमाणं गृहाण कुरु । यद्वा, मया अयोग्यं कर्म कृतम्; कथं वा तदपहारः? इति चेत्, सात्विक्या बुद्ध्या चिन्तयसि । तर्हि मद्वृन्दावनाग्रे सद्वन्दनायुतं सद्वन्दनानाम् अयुतं दशसहस्रं कुरु ।।५९।। हे द्विजाधम! तद्वचः प्रायश्चित्तं

कर्तुं सकृद्वा एकवारमपि वन्दनं कुरु ।। ल.ना.प्र.सं.।।

### १२. शेषश्रोतृकप्रकरणम्।। श्लोकाः (६०-७५ १/२)

(व्या) 'नमस्कारः प्रतीकारः' इत्यारभ्य 'निखिलागमनिर्णयैः' इत्यन्तं शेषश्रोतृक-द्वादशं प्रकरणम् ।।

**नमस्कारः प्रतीकारः संरम्भेऽम्बरचारिणाम् ।।६०।।**

**स्वकुमारापराधो हि पिताऽनुस्मरते नु किम् ।**
**अलमलं सुकृतवाक्कलौ युगे कलिमलेन कलुषे यमालये ।।६१।।**

(स्वकुमारापराधं हि एन्दु स्वा. 'राधोपि' एन्दु प्रिंटु. ई व्याख्यानदल्लि राधं हि एन्दु हिडिदिद्दारे. आदरे 'राधो हि' एन्दे वृं. इदे. बहुव्रीहि समास माडबेकु. 'स्वकुमारेण अपराधः यस्य सः = स्वकुमारापराधः एन्दु आगुत्ते.)

**हलहलेन मिळिते च पालयाम्यतुलदोषफलदे मलीमसाम् ।।६१।।**

(अन्वयः) (हे शेष!) अम्बरचारिणां संरम्भे (कोपे सति) नमस्कारः (एव) प्रतीकारः । स्वकुमारापराधः हि पिता अनुस्मरते नु किम्? (अस्मिन्) कलिमलेन कलुषे (मलिने) कलौ युगे सुकृतवान् (अस्ति इति वचनेन) अलम् अलम् ।। मलीमसाम् अतुलदोषफलदे यमालये हलहलेन मिलिते च (अपि) पालयामि ।।

(व्या) हे शेष! **अम्बरचारिणाम्** । अस्मा()दृशां देवानां **संरम्भे** कोपे सति । **नमस्कारः** । तत्कोपस्य **प्रतीकार** एव । अतो मां नमस्कुरु ।।६०।। नमस्कारेण सन्तुष्टः **पिता हि स्वकुमारापराधं स्मरते नु किम्** तथा तवापराधं न स्मरतीत्यर्थः । नन्वहं महापापी, कथं मम उद्धारः यमयातनातः? इत्यत आह – **अलमलं इति** ।। हे शेष! शृणु अस्मिन् **कलिमलेन कलुषे** मलिने **कलौ युगे सुकृतवान्** (सुकृतवान् कलौयुगे एम्ब स्वा.पाठविदे. ई व्याख्यानवु अदन्ननुसरिसिदे.) अस्तीति वचनेन **अलं अलम्** । ननु मम कलियुगोत्पन्नत्वात् । अहमपि पापीति सिद्धमेव । प्रापप्रायश्चित्तं तु यमयातनैव । तस्याः कथमुद्धारः इति प्रश्ने कलियुगे सर्वे पापिन एवेति श्रीमद्भिरुक्तम् । मम का गतिः इत्यत आह – **यमालये इति** ।।६१।। हे शेष! **मलीमसां** मलीमस्शब्दः चन्द्रमाः शब्दवत् । पापिनाम् **अतुलदोषफलदे** अतुला तुलनारहिताः महान्त इत्यर्थः । दोषा ब्रह्महत्यादयः । तेषां फलदे फलप्रदे । यमालये । **हलहलेन** =

हालाहलसदृशेन पापेन त्वया **मिळिते** प्राप्ते सति त्वां **पालयामि च** । 'ममा- ख्यानप्रवक्तारं' (१९।१६) इति श्लोकं विचारय ।।

**मलीमसामागसानि सुधासागरशायिनः ।।६२।।**

**सुधायनसहायेन देहागारनिवासिनः ।**
**न प्रियो यद्वदेतानि चाप्रियाण्येव सर्वदा ।।६३।।**

(यद्वदेत्तानि एन्दु स्वा. व्याख्यानवू ई पाठक्के साधुवागिदे. आदरे वृं.नल्लि यद्वदेतानि एन्दु पाठविदे.)

**(अन्वयः) (हे शेष!) सुधायनसहायेन देहागारनिवासिनः सुधासागरशायिनः प्रियः (तव) मलीमसां (पापिनां) आगसानि (पापानि) न ।। यद्वदेत् (यदि वदेत्) एतानि च अप्रियाण्येव सर्वदा (भवन्ति) ।।**

**(व्या)** हे शेष! **सुधायनसहायेन** = सुधैव अयनं आश्रयः येषां ते देवाः । तेषां तत्तत्वकार्ये (तत्तत् तत्वकार्येषु) सहायरूपेण **देहागारनिवासिनः** (देहादिषु अन्तर्यामिणः) **सुधासागरशायिनः** । 'अरश्च ह वैण्यश्च सुधासमुद्रौ' इति सूत्रभाष्योक्तेः । तच्छायिनो हरेः । **प्रियः** (कर्तृपद = भक्तनु; प्रियः = हरिगे प्रियनाद भक्तनु एन्दर्थ. 'इप्पत्तनाल्कु तत्वदेवतेगळिगे सहायमाडुववनागि, देहागारगळल्लू, अर ण्य एम्ब सुधासागरदल्लू अथवा क्षीरसागरदल्लू वास माडुववनु श्रीहरियु. आ श्रीहरिगे प्रियः प्रीतिपात्रनादभक्तनु सद्वैष्णवनु पापिगळ पापवन्नु तन्न बायियिन्द उक्ति आडबारदु. हागे आडिदरे 'माडिद पाप आडिदवरिगे' एम्ब न्यायदिन्द पापिगळ निन्दकने पापद फलवन्नु अनुभविसबेकागुत्ते. हीगे ई व्याख्यानद अभिप्राय. ई श्लोकोक्त मलीमसरु मुक्तियोग्यराद्दरू दुःसङ्गदिन्द पापमाडिदवरु. स्वरूपतः दैत्यरक्षादिगळल्ल.) **मलीमसां** पापिनाम् **आगसानि** अलौकिकोयं प्रयोगः पापानि (पापिगळन्नु) **न** वदेत् । **यत्** यदि **वदेत्** तर्हि **तानि** तस्यैव **अप्रियाणि** । **सर्वदा** भवन्ति । हरेरेव सर्वकर्तृत्वादित्यर्थः । तदितरेषु (मुख्य)कर्तृत्वा- रोपणमेव पापं (एवं च योग्यानां पापं कथकस्यैव भवति; अदृष्टप्रेरक परमात्मनिन्दलू, कल्यादि आवेशदिन्दलू प्रेरितनागि, पापमाडिद्दानाद्दरिन्द अवनन्ने मुख्यतः निन्दे माडबारदु. औपाधिकवाद पाप, हुचुतनदल्लि माडिदु आ उन्मादादि रोगनिवृत्तियागुववरेगू पापवन्ने माडुत्तानेन्दु तिळिदु सहिसबेकु.)

**तद्वदेवाप्रियं मत्वा मा कुरु त्वं सुतोत्तम ।**
**ममागसं प्रथा चात्र मदुक्तिर्नैव ते भवेत् ।।६४।।**

**कृतोत्तरहठे यद्वत्शठानामेव तत्प्रियम् ।**

**मन्मठस्याभिमानं तु नास्ति तत्कठिनात्मनाम् ।।६५।।**

**(अन्वयः) – हे सुतोत्तम! (शेष) तद्वत् एव त्वं अप्रियम् (इति) मत्वा, मम आगसं (अपराधं) अत्र (कृतिविषये) च मा कुरु, (वृन्दावनाख्यानं) मदुक्तिः नैव इति प्रथा ते (नैव = न) भवेत् ।। यद्वत् कृतोत्तरहठे (तद्विषये हठे = आग्रहे) शठानाम् एव तत् प्रियम् । तत् कठिनात्मनां मन्मठस्याभिमानं तु नास्ति ।।**

**(व्या) हे सुतोत्तम! तद्वदेव त्वं** परपापदर्शनम् **अप्रियमिति मत्वा, मम आगसम्** अपराधम् अत्रविषये **वृथा मा कुरु** । मम निर्दुष्टत्वादित्यर्थः । **मदुक्तिः** आख्यानमित्यर्थः । ते उत्तरहठे परस्परविवादविषये यदुत्तरं तद्विषये हठे आग्रहे 'विप्रस्यैव कृतिः न गुरोः' इति रूपे **ते** तव **नैव भवेत्** । **तत्** कृत्रिमत्ववचनं यद्वत् **शठानां** चिन्तामण्यादीनां **प्रियं** तद्वत् ते न भवतु इत्यर्थः । **मन्मठस्याभिमानं तु तत्कठिणात्मनां** तेषां **नास्ति** । अभिमानाभावे मठाश्रयणा-भावात् । तदर्थं तेषां दुरभिमानस्य सत्वात् । अभिमानशब्दस्य नपुंसकत्वं बोध्यम् ।।६४-६५।। (सद्यक्के नीनु केळिद प्रश्नेगळिगेल्ला उत्तरकोट्टमेलू आख्यानवु विप्रकृतवेम्ब आग्रहविषयदल्लि निन्न मनस्सु होगदिद्दरे साकु. आ रीति हठवचनवु दैत्यशठरिगे योग्यवादद्दु एन्दु व्याख्यानकारर तात्पर्य. मा कुरु त्वं ममागसं एन्दु ६४रल्लिदे. हागेन्दरे नीनु आ चिन्तामणिपुत्र लक्ष्मीनारायणनिन्द प्रमाणमाडिसि अवनन्नु कोन्दे बिडबेकेम्ब सङ्कल्प पूरैसि ननगे अपराध माडबेड. नानु बैदरू आ लक्ष्मीनारायण सायलेन्दु नन्न इच्छे इल्ल. अवनू नन्न आश्रित. नन्न सन्यासधर्मवू ब्राह्मणवधेगे विरोधिसुत्तदे एन्दु भाव.)

**मलीमसामसाधूक्तिः सुधासागरशायिनः ।**
**सदा(ऽ)प्रिया बुधाग्र्यस्य ममापीह बलीयसः ।।६६।।**

**(सदाप्रिया एन्दु वृं. सदाप्रिय एन्दु हिडिदु व्याख्यान नडेदिदे. भी.नोडबेकु)**

**इति मत्वा सतां वृत्तिमङ्गीकुरु सुमङ्गल ।**

**(अन्वयः) हे सुमङ्गल! 'मलीमसाम् असाधूक्तिः (तु) सुधासागरशायिनः (हरेः) सदा अप्रिया; इह बलीयसः बुधाग्र्यस्य मम अपि (अप्रिया एव)' इति मत्वा सतां वृत्तिम् अङ्गीकुरु ।।**

**(व्या) मलीमसां** पापिनाम् **असाधूक्तिः** (निन्दनं) हे सुमङ्गल! शेष **सुधासागरशायिनः सदा अप्रियः** । बुधाग्र्यस्य बुधाः देवाः तेषु श्रेष्ठस्य । अत एव **बलीयसः** अत्यन्तबलीयान्

तस्य **ममापि** अप्रियैव ।।६६।। (इल्लि विवक्षितराद मलीमसरु मुक्तियोग्यराद पापिगळु. ई व्याख्यानकाररु 'अप्रिया एव' एम्ब पदगळन्नु अध्याहार माडिकोण्डु अन्वय हेळिद्दारे. एनु तात्पर्य एन्दरे मुक्तियोग्यरु पापिगळादरे अवरुगळन्नु असाधूक्तियिन्द निन्दिसुवुदु सर्वज्ञतमनाद पूर्णबलवुळ्ळ क्षीरसमुद्रशायि श्रीहरिगागली, बलिष्ठरू ज्ञानिगळू आद गुरुराजरिगागली प्रियवल्ल. सदा अप्रिया एन्दु ६६ने श्लोकदल्लि पदच्छेदमाडिदरे अध्याहारद अवश्यकतेयिल्ल. इदे अर्थ बरुत्ते. 'मलीमसां पापिनां असाधूक्तिः एन्दरे मुक्तियोग्यपापिगळन्नु केट्ट मातुगळिन्द निन्दिसि एल्लरेदुरिगे अवर कीर्ति केडिसुवुदु एन्दर्थ.) **इति मत्वा, हे सुमङ्गल सतां वृत्तिम् अङ्गीकुरु** । (सात्विकभावेन तूष्णीं आस्व । गोवुगळु पैरन्नागली, णगि हाकिरुव तोगरि, अक्कि मुन्ताद धान्यगळन्नागली तिन्नुत्तिद्दरे अदन्नु नोडि तप्पिसबारदु. मनेयवरिगे हेळि आ गोवुगळन्नु होडिसबारदु. नम्म मनेय धान्यवे आदरे उपायदिन्द गोवुगळन्नु ओडिसबेकु. ई न्यायदिन्द योग्यब्राह्मणरु कद्दरू, दुरन्न तिन्दरू, वेश्यागमन माडिद्दरू ऊरल्लेल्ला हेळि अवरन्नु बैय्यबारदु. अवमान पडिसबारदु. तिळियदवरन्ते इरबेकु. स्वशिष्यादिगळिगे तिळिसि आत्मरक्षणे आत्मीयरक्षणे माडिको बेकु एन्दर्थ. आदरे देवरु आ मलीमसरिगे शिक्षे माडुत्ताने. हेगेन्दरे आ स्वोत्तमद्रोहिगळु दुराचारिगळु, शठरु, अनार्यकरू, अनृतवादिगळू एनेनुदान, धर्म, यात्रेगळन्नु माडिदरू अवोन्दक्कू फल कोडुवुदिल्ल. भीष्माचार्यर अन्नवन्ने देवरु बेडवेन्द. द्रोणरु करेदरू होगलिल्ल. विदुरन मनेगे बन्द. आ विवर ६७ने श्लोकद उत्तरार्धदल्लिदे. कैमुत्ययुक्तियिन्द मुक्तियोग्यरल्लद पापिगळ दानगळू अप्रियवे एन्दु प्रमाणसिद्ध.)

**रङ्गनाथस्यान्तरङ्गमिदं तव निरूप्यते ।।६७।।**

**मलीमसां तु दानानि बुधान्तर्यामिणः प्रभोः ।**
**नारायणस्य सर्वत्र चाप्रियाण्येव सर्वदा ।।६८।।**

**(अन्वयः) इदं रङ्गनाथस्य अन्तरङ्गं तव (तवार्थे) निरूप्यते । (तथाहि) बुधान्तर्यामिणः प्रभोः नारायणस्य च मलीमसां दानानि तु सर्वत्र सर्वदा अप्रियाणि एव ।।**

(व्या) **मलीमसां** पापिनां **दानानि तु बुधान्तर्यामिणो नारायणस्य सर्वत्र** काश्यादि सर्वक्षेत्रेष्वपि दत्तानि **सर्वदा अप्रियाण्येव** । अतस्त्वमेव विप्रस्य सदनादि दत्वा मां प्रीणय । **इदं च तव** त्वां प्रति **रङ्गनाथस्य** श्रीहरेः **अन्तरङ्गं** मया **निरूप्यते** ।।६७-६८।।

**ब्राह्मणस्य कृतिश्चेयं नैव नैव मयोच्यते ।**
**दैवदैवं हयग्रीवो वेत्ति सर्वहृदन्तरम् ।।६९।।**

**(अन्वयः) – इयं कृतिः च ब्राह्मणस्य नैव नैव (इति) मया उच्यते । सर्वहृदन्तरं**

दैवदैवं हयग्रीवः वेत्ति ।।

(व्या) इयं च कृतिः । ब्राह्मणस्य नैव नैव किन्तु मया उच्यते । ब्राह्मणद्वारेत्यर्थः । मत्कृति विषये सर्वहृदन्तरं (सर्वहृदन्तरं एन्दे वृं. आदरे व्याख्यानकाररु सर्वं हृदन्तरं एन्दु मूलपाठ इट्टुकोण्डिद्दारे. व्याख्यानवन्नु मात्र सर्वहृदन्तरं एम्बुदक्के माडिद्दारे.) सर्वेषां हृदयस्य अन्तरं भेदम् । (सर्वेषां मनस्सु विद्यमाननिर्णयसन्देहादिकं) दैवदैवं देवतानामपि दैवं श्रीहयग्रीवः वेत्ति ।।६९।।

**ये त्वविश्वासिनः सर्वे मलीमस इति स्म ते ।**
**तस्माद्भूता भविष्यन्ते भस्मीभूता भविष्यते ।।७०।।**

**यमेनैव ममाज्ञया मुच्यन्ते नरकासिभिः ।**
**मुच्यन्ते नरकान्नैव पच्यन्ते नरकाग्निना ।।७१।।**

(अन्वयः) – (हे शेष!) ये तु (मत्कृतिविषये) अविश्वासिनः ते सर्वे मलीमसः स्मः इति । तस्मात् भस्मीभूताः भविष्यति । भूताः (च) भविष्यन्ति ।। मम आज्ञया यमेन एव नरकासिभिः मुच्यन्ते । नरकान् एव मुच्यन्ते । (तत्र च) नरकाग्निना पच्यन्ते ।।

(व्या) ननु मलीमस्शब्दस्य बहुत्वेन प्रयोगात् । तस्य कोऽर्थ इत्यत आह – ये त्विति ।। हे शेष! ये तु मत्कृतिविषये अविश्वासिनः । ते सर्वे मलीमसः । स्म स्युः । इति तस्मात् । अविश्वासात् । ते मच्छापात् । (मदवज्ञारूपद्रोहात् प्राप्तमदन्तर्यामिणा कृतशिक्षा- रूपशापात्) भस्मीभूता भविष्यन्ते भविष्यन्ति भूताश्च भविष्यन्ते भविष्यन्ति । (स्वादल्लि व्याख्यान भस्मीभूताः भविष्यति । भविष्यन्ति । भूताश्च भविष्यन्ति एन्दु आनुपूर्वी इदे. ‘भूताश्च भविष्यन्ति एन्दरे अवरु ‘ईगिल्ल, आगिहोदरु’ एम्ब व्यवहारक्के विषयरागुवन्ते नष्टरागुत्तारे. अपमृत्युग्रस्तरागुत्तारे एन्दर्थ.) (अलौकिकवैदिकप्रयोगेण व्यत्ययेन च शापस्य वेदानुसारित्वं द्योतयति । ‘अहल्यां पतिनाभिशप्ताम् इतिवत्)।।७०।। तद्भवनात्पूर्वं मम आज्ञायाः धारकेण यमेन (१८।१५) नरकाग्निभिः (नरकाग्निभिः एम्ब स्वा मूलवन्नु ई व्याख्यानकाररु हिडिदिद्दारे. नरकासिभिः एन्दु वृं.मूलविदे.) सह मुच्यन्ते इत्यर्थः । कुत्रेत्यत आह – मुच्यन्ते इति ।। नरकान् प्रत्येव मुच्यन्ते । तत्र च नरकाग्निना पच्यन्ते ।।७१।।

(अव) ननु तेषां पापसाक्षिणः के? इत्यत आह – उच्यन्ते इति ।।

**उच्यन्ते मुनिभिर्बोध्यास्ते च्यवन्ते ह्यधोमुखाः ।**
**सूच्यन्तर्नखनेत्राश्च शोच्यन्ते यमकिङ्करैः ।।७२।।**

**सिच्यन्ते तप्तसीसाद्भिः स्वच्छं तेषां सुखं न हि ।**
**इत्यविश्वासिनः सर्वे निर्वाणाः सर्वमेव च ।।७३।।**

**पर्वण्यपार्वणाः प्रेत्य वर्षाणां कर्षणान्विताः ।**
**एवं कळङ्किनः सर्वे ह्यलं कीनाशलोकिताम् ।।७४।।**

**यान्ति कान्तिविहीनास्ते पापिनः शापिनो मम ।**

(अन्वयः) मुनिभिः (पापसाक्षिणः श्रवणनामक) बोध्याः उच्यन्ते । ते हि अधोमुखाः च्यवन्ते । सूच्यन्ते नखनेत्राश्च यमकिङ्करैः शोच्यन्ते ।। तप्त- सीसाद्भिः सिच्यन्ते । तेषां सुखं नहि (इति) स्वच्छं (स्पष्टम्) । इति सर्वे अविश्वासिनः निर्वाणाः एव च ।। पर्वणि अपार्वणाः प्रेत्य वर्षाणां कर्षणा- न्विताः ।। एवं ते सर्वे पापिनः मम शापिनः कळङ्किनः कान्तिविहीनाः (सन्तः) कीनाशलोकिताम् अलम् यान्ति हि ।।

(व्या) **मुनिभिः** श्रवणनामकमुनिभिः 'एते एव महापापिनः' इति **बोध्याः** ज्ञातव्याः । इति यमसमीपे **उच्यन्ते** । ततश्च ते तद्दूतेश्च (यमदूतैः) **अधोमुखाः** सन्तः **च्यवन्ते** । नरके पतन्ति । पतनप्रकारमाह – **सूचीति** ।। **सूच्यन्तर्नखनेत्राः** । सूच्यन्तेषु प्रविष्टनखनेत्राः सन्तः । **यमकिङ्करैः शोच्यन्ते** शोकयुक्ता भवन्ति ।।७२।। अपि च **तप्तसीसाद्भिः** सन्तप्तसीसद्रवैः । **सिच्यन्ते** । **'तेषां सुखं न हि'** इति **स्वच्छं** = स्पष्टम् । हे शेष! **इति सर्वे अविश्वासिनः** । **निर्वाणाः** (निर्वाणाः एन्दरे सुखभोगक्के अर्हवाद उत्तमशरीररहितरागि, केवल यातनादेहदिन्द बद्धरागि एन्दर्थ. उदा : पिशाचिगळिगे नदियल्लि नीरन्नु कुडियलिक्कागुवुदिल्ल.) । निर्गता (बाणाः) वाणा देहाः येषां ते ।।७३।। **पर्वणि** = श्राद्धकाले । **अपार्वणाः** = अप्राप्तपिण्डाः । **प्रेत्य** मृत्वा **वर्षाणां** बहुवर्षाणां पर्यन्तं **कर्षणान्विताः** यमदूताकर्षणयुक्ताः । **एवं** यातनादि()भिः **सर्वे कलङ्किनः** पापिनः ।।७४।। **मम शापिनः** शापयुक्ताः (शापयुक्ताः एम्बल्लि गुरुराजर शापवेन्दरे स्वोत्तमनिन्दे. कृतियल्लि अविश्वासादि अपराधिगळिगे भवितव्यशिक्षानुवादरूपवचन. स्वरूपसङ्कीर्तनरूप मातु. तम्म पुण्यखर्चुमाडिकोण्डु हेळिद कोपद मातल्ल. अन्थ कोप ऋजुगळिगे इल्ल, तमगू इल्लवेन्दु हिन्दे हेळिद्दारे. सिद्धार्थानुवादकवेन्दु १४।७०रल्लि निरूपितवागिदे. आद्दरिन्द शापयुक्ताः एन्दरे मद्रोहिणः एन्दर्थ.)।

**कान्तिविहीनाः** । कीनाशलोकिताः । कीनाशस्य लोको येषाम् अस्तीति तस्य भावः । कीनाशलोकितां तां, **अलं** सम्यक् **यान्ति** ॥

**निष्कळङ्काश्च सर्वेऽपि निष्कळङ्कादरा हरौ ॥७५॥**

**निखिलान् कामितान् यान्ति निखिलागमनिर्णयैः ।**

**(अन्वयः) निष्कळङ्काः सर्वे हरौ निष्कळङ्कादराः (सन्तः) निखिलागमनिर्णयैः निखिलान् कामान् यान्ति ॥**

(व्या) ये च **निष्कळङ्काः** निर्गतः मद्द्रोहरूपः कलङ्कः येषां ते तथोक्ताः । सर्वे हरौ **निष्कलङ्कादराः** निर्गतः कलङ्कः जीवब्रह्मैक्यरूपापवादो यस्य सः । तादृशः आदरो येषां ते । तादृशाः सन्तः ॥७५॥ **निखिलागमनिर्णयैः** निखिलागमेषु ये निर्णयाः तत्तद्योग्यगतिक (गतिप्रतिपादक)सिद्धान्ताः । तैः करणैः । **निखिलान् कामितान्** = इच्छितान् कामान् । **यान्ति** = प्राप्नुवन्ति ॥शे.प्र.सं.॥

१३. चिन्तामणिसुतलक्ष्मीनारायणप्रकरणम् ॥ श्लोकाः (७६-८३)

(व्या) **'कुर्यां प्रमाणं'** इत्यारभ्य **'लक्ष्मीकरमहोत्सवे'** इत्यन्तं चिन्तामणिसुत-लक्ष्मीनारायणश्रोतृकं त्रयोदशं प्रकरणम् ।

**कुर्यां प्रमाणमित्युक्त्या लक्ष्मीनारायणात्र ते ॥७६॥**

**मन्मनो बाणविद्धं यद्यथा स्यात्तद्गुणाधम ।**
**कुर्यां प्रमाणमित्युक्त्या लक्ष्मीनारायणात्र ते ॥७७॥**

**वर्णानां ब्राह्मणादीनां सांशायिकमतिर्भवेत् ।**

**(अन्वयः) हे लक्ष्मीनारायण! ते अत्र 'प्रमाणं कुर्याम्' इति उक्त्या, हे गुणाधम! यथा बाणविद्धं यत् (शरीरं) स्यात् तथा मन्मनः (भवति) ॥ हे लक्ष्मीनारायण! ते अत्र 'प्रमाणं कुर्याम्' इत्युक्त्या ब्राह्मणादीनां वर्णानां सांशायिकमतिः भवेत् ॥**

(व्या) **कुर्यामिति** ॥ **हे लक्ष्मीनारायणः! ते** 'विप्र एव आख्यानं कृतवान्' इत्यत्र 'अहं **प्रमाणं कुर्याम्**' इत्युक्त्या ॥२६॥ **मन्मनः** । **हे गुणाधम! यथा बाणविद्धम्** ।

यच्छरीरं स्यात् तथा त्वद्वाग्बाणविद्धं भवति ।।७७।। अपि च 'कुर्यां प्रमाणम्' इत्युक्त्या ब्राह्मणादीनां शेषादिब्राह्मणादीनां वर्णानां क्षत्रियवैश्यशूद्राणां सांशायिकमतिर्भवेत् । संशय-युक्तामतिर्भवेत् ।

**एवं च मम महात्म्यविषये संशये सति ।।७८।।**

**निःसंशयः कोऽपि मद्वृन्दावनं तु न पश्यति ।**
**तद्दोषोऽपि तवैव स्यात् शेषशायिपदे शपे ।।७९।।**

(अन्वयः) एवं च मम माहात्म्यविषये संशये सति, निःसंशयः कोऽपि तु मद्वृन्दावनं न पश्यति ।। तत् दोषः अपि तव एव स्यात्, (एतद्विषये) शेषशायि पदे शपे ।।

(व्या) एवं च तव मम विषये । मम माहात्म्यविषये संशये सति ।।७८।। निःसंशयः निर्गतः संशयः यस्मात् सः । तादृशः सन् कोपि मद्वृन्दावनं न पश्यति । तद्दोषोपि तवैव स्यात् । ननु मत्संशयं प्रमाणीकृत्य संशयवतां दोषः मम कथं स्यात्? इत्यत आह – शेषेति ।। एतद्विषये शेषशायिपदे श्रीहयग्रीवपदे, शपे = शपथं करोमि ।।७९।।

**माषमात्रं च मद्द्रोहो महादोषाय कल्पते ।**
**तस्मादेतादृशी बुद्धिः नस्यात्ते सर्वथा द्विज ।।८०।।**

**क्षुद्रा मद्द्रोहमापन्ना भज मां भुजगेश्वरम् ।**

(अन्वयः) हे द्विज! माषमात्रं च मद्द्रोहः महादोषाय कल्पते । तस्मात् सर्वथा ते एतादृशी बुद्धिः न स्यात् ।। मद्द्रोहमापन्नाः क्षुद्रा (एव) । (अतः) मां भुजगेश्वरं भज ।।

(व्या) मम (मां प्रति) माषमात्रमपि द्रोहः । महादोषाय कल्पते । भवति तस्मात् हे द्विज एतादृशी बुद्धिः ते सर्वथा न स्यात् ।।८०।। मद्द्रोहमापन्नाः तु । क्षुद्रा एव । नीचाः । नृशंसा एव । 'क्षुद्रो दरिद्रे कृपणे निकृष्टे अल्पनृशंसयोः' इति हैमः । अतः मां भुजगेश्वरं शेषादप्युत्तमं भज ।।८० १/२।।

**लक्ष्मीनारायण इति नराणां यो गुणाधमः ।।८१।।**

**मद्द्रोहेण ब्राह्मणोऽपि विषण्णहृदयो ह्यभूत् ।**

**लक्ष्मीपतिं समुद्दिश्य लक्ष्मीपतिगृहे ह्यसौ ॥८२॥**

**लक्ष्मीनारायणाह्वोऽपि ह्यलक्ष्मीकं वचोऽब्रवीत् ।**
**महाजने भोजनेच्छन् लक्ष्मीकरमहोत्सवे ॥८३॥**

**(अन्वयः) नराणां यो गुणाधमः लक्ष्मीनारायण इति, अस्मिन् लक्ष्मीकर- महोत्सवे लक्ष्मीपतिगृहे महाजने भोजने असौ लक्ष्मीनारायणाह्वयः अपि लक्ष्मीपतिं समुद्दिश्य अलक्ष्मीकं वचः अब्रवीत् ॥ (सः) ब्राह्मणः अपि विषण्ण- हृदयः अभूत् हि ॥**

**(व्या)** हे **लक्ष्मीनारायण** त्वमिव **यः नराणां गुणाधम** । त्वन्नाम सदृशः **असौ** लक्ष्मीनारायणोपि लक्ष्मीपतिगृहे लक्ष्मीकरमहोत्सवे लक्ष्मीप्रदोत्सवे **अस्मिन् महाजने** महान् जनः जनसङ्घो यस्मिन् तादृशे **भोजने** तत्काले इत्यर्थः । **लक्ष्मीपतिं समुद्दिश्य अलक्ष्मीकम्** अमङ्गलम् । 'विप्रस्यैव कृतिः न गुरोः' इति **वचः** । **अब्रवीत्** । स **ब्राह्मणोऽपि विषण्णहृदयः** = विषादयुक्तहृदयः **अभूत्** (इदर तात्पर्यवेनेन्दरे निन्नन्ते लक्ष्मीनारायण एन्दे हेसरुळ्ळ मत्तोब्ब ब्राह्मणाधमनु लक्ष्मीपतिमनेगे लक्ष्मीदायकवाद उत्सवसन्दर्भद भोजनकालदल्लि लक्ष्मीपतिय सङ्गडवे मातनाडुत्ता 'वृन्दावनाख्यानवु विप्रकृत,मान्यग्रन्थवल्ल' एन्दु हेळिदनु. हागे हेळिद स्वल्प होत्तिनल्लिये अवनु मूर्छे बिद्दनु. अल्लिन जनरिगेल्ला अवनु पापि एन्निसितु. ई ग्रन्थद निन्दे उत्कटपापदायकवेन्दु भाव) ॥ अतस्त्वं निःसंशयो भूत्वा । मां भज इत्यर्थः ॥

### १४. लक्ष्मीपतिप्रकरणम्॥ श्लोकाः (८४-१०३)

**हे मञ्जुकञ्जपत्राक्ष त्वं वा शिक्ष द्विजाधमम् ।**
**पापिनां तु गतिं चास्य दत्वा वै मधुसूदन(ः) ॥८४॥**

**(अन्वयः) हे मञ्जुकञ्जपत्राक्ष! (लक्ष्मीपते) त्वं वा द्विजाधमं शिक्ष । मधुसूदनः च अस्य पापिनां गतिं तु दत्वा (दुर्जन्मनि जनयिष्यति) वै ॥**

**(व्या)** हे कोमलकमलपत्राक्ष लक्ष्मीपते! **त्वं वा द्विजाधमम्** एनं लक्ष्मीनारायणं **शिक्ष** = शिक्षय बोधय । किमित्यत आह – **अस्येति** ॥ **अस्य** पापस्य । फलरूपां **पापिनां गतिं मधुसूदनः** हरिः त्वां **दत्वा** दुर्जन्मनि **जनयिष्यति वै** निश्चयेन इति ॥८४॥

**विश्वासिनि ह्यविश्वासं जनयिष्यति नन्दने ।**

**हे पुत्र क्षिपणासक्तो लक्ष्मीनारायणो मम ।।८५।।**

**कृतेस्तच्छिक्षणं चात्र त्वं वा कुरु विचक्षण ।**
**मया तपोहानिभिया शापस्तस्य न दीयते ।।८६।।**

(अन्वयः) हे पुत्र! मम कृतेः क्षिपणासक्तः अयं लक्ष्मीनारायणः विश्वासिनि मम नन्दने अविश्वासं जनयिष्यति ।। हे विचक्षण! त्वं वा अत्र तत् शिक्षणं कुरु । मया तस्य शापः तपोहानिभिया न दीयते ।।

(व्या) अयं च **लक्ष्मीनारायणः** । **मम कृतेः क्षिपणासक्तः** = आक्षेपासक्तः सन् **हे पुत्र! विश्वासिनि** मम **नन्दने** शेषे **अविश्वासं जनयिष्यति** ।।८५।। **तच्छिक्षणं च** = तच्छासनं च । **त्वं वा**, परद्वारा वा । **हे विचक्षण!** पण्डित **कुरु** । ननु श्रीमतामेव तच्छक्यम् इत्यत आह – **मयेति** ।। **तस्य** तं प्रति **शापः तपोहानिभिया मया न दीयते** ।।८६।।

**त्वया तच्छिक्षणं कार्यं क्व यास्ये तद्भयादहम् ।**
**हित्वा वृन्दावनं चात्रालङ्कृतं मम नन्दन ।।८७।।**

**कन्दाशनैः कृतानन्दैर्मुकुन्देनापि तद्वद ।**

(अन्वयः) हे नन्दन (पुत्र! लक्ष्मीपते) अत्र अलङ्कृतं च मम वृन्दावनं हित्वा तद् भयाद् अहं, कृतानन्दैः कन्दाशनैः मुकुन्देन अपि (सहितः) क्व यास्ये? (अतः) तत् शिक्षणं त्वया कार्यम् ।।

(व्या) **हे नन्दन! त्वया तच्छिक्षणं कार्यम्** । कथय । **क्व** वा । **ममालङ्कृतं वृन्दावनं हित्वा तद्भयादहं यास्ये** । **कृतानन्दैः** = मद्विषये कृतः आनन्दः यैः ते तादृशैः । **कन्दाशनैः** दूर्वासादि ऋषिभिः । **मुकुन्देनापि** सह कुत्र यास्ये **तद्वद** ।।८७।।

**यावद्वृन्दावनं चात्र मेदिन्यां मम नन्दन ।।८८।।**

**तावन्मत्सन्निधानं स्याद्धरण्यां धरणीसुर ।**
**तस्माद्धै दुर्जनैरुक्तनिन्दां कन्दाशनोऽप्यहम् ।।८९।।**

**न क्षमे नन्दनानन्दन्यासिनां मम नान्यथा ।**

**(अन्वयः) हे नन्दन! यावत् मम वृन्दावनं च अत्र मेदिन्यां (स्यात्), हे धरणीधर तावत् धरण्यां मम सन्निधानं स्यात् ।। तस्मात् हे नन्दन! आनन्दन्यासिनां मम दुर्जनैः उक्तनिन्दां कन्दाशनः अपि अहं न क्षमे ।। अन्यथा न ।।**

(व्या) 'स्वच्छन्दानां युष्मादृशां कुत्रापि गमनं सुकरमेव । तच्चिन्तया किं स्यात्? इत्यत आह – **यावदिति ।। यावच्च । अत्र** मेदिन्यां भूमौ **मम वृन्दावनं** वर्तते = तिष्ठति ।।८८।। **तावत् । हे धरणीसुर!** भूदेव अस्यां **धरण्याम्** अस्मिन् वृन्दावने **मत्सन्निधानं** स्यात् । अत्रेदं रहस्यं शृणु । मत्कृतसरसभारतीविलासे यच्च 'शरच्छते व्यतीते तु देवानामाज्ञया हरेः' इत्युक्तम् । तत्र भगवान् आनन्दतीर्थः देवानां मानेन शरच्छते व्यतीते स्वमूलरूपं गमिष्यति । तावत्कालपर्यन्तं ममापि सन्निधानमिति जानीहि (इल्लि हेळिरुव रहस्यक्के आधार बेकु. श्रीश्रीगळवरन्नु केळबेकु) । **तस्मात् कन्दाशनोऽप्यहं दुर्जनैरुक्तनिन्दां न क्षमे** । न सहे ।।८९।।न केवलं **मम** निन्दाम् । किन्तु **हे नन्दन! आनन्दन्यासिनाम्** आनन्दतीर्थादि सन्न्यासिनामपि एतद्वचः **मम अन्यथा न** ।।

**अहं द्युमणिवद्भानुमन्तं सद्गुणसन्ततम् ।।९०।।**

**ब्रह्मात्मकौस्तुभमणिमन्तं नौम्यगुणान्तकम् ।**

**(अन्वयः) अहं अगुणान्तकं ब्रह्मात्मकौस्तुभमणिमन्तं द्युमणिवद्भानुमन्तं सद्गुणसन्ततं नौमि ।।**

(व्या) ननु निन्दा सहनाभावे कोऽपि मनोविकारः श्रीमतां स्यात् । तेन च दुःखमेव स्यात् । कल्यावेशरहितानामेतन्न सम्भवति । 'भानुः करो मरीचिः स्त्री' इत्यमरः । ब्रह्मात्मकौस्तुभमणिं ब्रह्मात्मकः कौस्तुभमणिः यस्य सः तं । मतं() सर्वोत्तमत्वेन सर्वशास्त्रेषु ज्ञातम् । **सद्गुणसन्ततं** सद्गुणाः ज्ञानानन्दादयः तैः सम्यक् ततम् । व्याप्तम् । **अगुणान्तकम्** अगुणा गुणहीनाः लक्ष्मीनारायणादयः तेषाम् अन्तकम् । यमसदृशं **नौमि** = नमस्करोमि ।।

(व्या) ननु किं नामासौ इत्यत? आह –

**प्रमाणं करवाणीति दुःखार्णवहरं हरिम् ।।९१।।**

**महामणिधरं नौमि लक्ष्मीनारायणं प्रभुम् ।**

(अन्वयः) 'प्रमाणं करवाणि' इति दुःखार्णवहरं, महामणिधरं, प्रभुं, लक्ष्मी- नारायणं हरिं नौमि ॥

(व्या) लक्ष्मीनारायणमिति ॥ 'विप्रस्यैव कृतिः न गुरुराजस्य' इत्यत्र प्रमाणं करवाणि इति यत् लक्ष्मीनारायणोक्तिजन्यदुःखम्; तस्य अर्णवमपि हरतीति तादृशं हरिम् । प्रभुं = समर्थम् । महामणिधरम् । महामणिसदृशश्रीवत्सरूपलक्ष्मीधरम् । लक्ष्मीनारायणं नौमि = हे स्वामिन् सर्वं त्वत्कृतमिति पुनः पुनः प्रणमामि ॥

**तालोलेल्लेति चाश्लीलभाषामालां चकार ह ॥९२॥**

**कोलाहलसमूहैश्च मम हृच्छल्यमालिकाम् ।**
**चकार कारणाभावेऽप्याकारेण वृकोदरः ॥९३॥**

**बुद्ध्या दर्वीकरश्चायं वादे काकोदराधिपः ।**
**क्षमतेऽथापि मे स्वामी क्षमया सोऽर्णवो हरिः ॥९४॥**

(अन्वयः) आकारेण वृकोदरः, बुद्ध्या दर्वीकरः, वादे काकोदराधिपः अयं लक्ष्मीनारायणः कारणाभावे अपि कोलाहलसमूहैः मम हृच्छल्यमालिकाम् इव तालोल्लल्लेति च अश्लीलभाषामालां चकार ॥ अथाऽपि मे स्वामी क्षमया अर्णवः सः हरिः क्षमते ॥

(व्या) यश्च आकारेण वृकोदरः = भीमः स्थूलदेहः इत्यर्थः । बुद्ध्या दर्वीकरः = सर्पः क्रुद्धत्वादित्यर्थः । वादे च काकोदराधिपः = शेष इव महावादीत्यर्थः । अयं लक्ष्मीनारायणः । कारणाभावेऽपि = निष्कारणमित्यर्थः । कोलाहलसमूहैः = बहुशब्दसमूहैः । मम हृच्छल्य-मालिकामिव हृदः शल्यानां मालिकामिव । तालोल्लल्लेति च अश्लीलभाषामालाम् अश्लीला परुषा ग्राम्या वा । भाषामालां चकार ॥९१-९२-९३ १/२॥

ननु एतादृशस्य तम एव स्यादित्यतः । (इल्लि अवतारिके बेरेरीतियल्लिरबेकु. हेगेन्दरे ननु एतादृशं दुष्टं । तत्क्षणात् । भगवान् कुतः न भस्मीचकारेत्यत आह – हीगिरबेकु. उत्तर ऽ दुर्योधनादिगळु पाण्डवरन्नु हिंसे पडिसिदाग हेगे बहुकाल सहिसिदनो हागे सहिसिदनु एन्दु उत्तर. मध्वविजयदल्लू 'स व्यासरूपो भगवान् क्षमाब्धिः' एन्दिदे. अन्थ दुष्टरिगे मुन्दे तमस्सु आगिये आगुत्ते. आदरिन्द 'ननु एतादृशस्य तम एव स्यात्' एम्ब आशङ्केयु बरुवुदे इल्ल. तमस्सागुत्ते एम्ब निश्चयवे इदे.) (ननु एतादृशदुष्टं तत्क्षणात्

भगवान् कुतो न दहति कोपाग्निना इत्यत आह) सत्यम् । **अथापि मे स्वामी** श्रीहयवदनः **क्षमते** तदपराधमिति (क्षमते एम्ब पदक्के इल्लि सहते एन्दु मात्र अर्थ. मुन्दे शिक्षेयागलि, ईगलेबेड एन्दु सहिसुत्ताने एन्दर्थ. क्षमते एन्दरे अपराधक्के केट्ट फलकोडदे मन्निसिबिट्टु अवरु आ अपराधमाडदिद्दरे हेगो हागिरुत्ताने एन्दू अर्थविदे. अपराधद अपरिगणने माडुव क्षमा तोरिसबेकादरे पापियु पश्चात्ताप पूर्वकवाद प्रायश्चित्तमाडिकोळ्ळबेकु. पुनः पुनः प्रार्थिसबेकु. आद्दरिन्द इल्लि व्याख्यानकारर अर्थ स्वीकरिसबारदु.) शेषः । (उत्तरत्र दुःखं ददानीति तदानीं सहते ।) कुतः (सहते) इत्यत आह – **क्षमयेति** ।। **सः हरिः क्षमया अर्णवः** । (पूर्णः इत्यर्थः हरिः पूर्णसहनशक्तिमान् । प्राकृतक्रोधहीनश्च ।।) ९४।।

**क्षमां पद्भ्यां चकारेह क्षमया किं न साध्यते ।**
**क्षमया भीमसेनोऽपि काम्यकं वनमाविशत् ।।९५।।**

(क्षमां भक्त्या  एन्दु स्वापाठ. व्याख्यानदल्लि भक्त्या एन्दु हिडिदिद्दारे. 'पद्भ्यां' एन्दु वृं.पाठ)

**क्षमया सोमकसुता क्षमया यमपुत्रकः ।**
**क्षमया मघवत्सूनुः क्षमया यमजावुभौ ।।९६।।**

**रामोऽपि राजीवनेत्रो रावणान्तको हरिः ।**
**राज्ञोराज्ञां पुरस्कृत्य राज्ञां वनमथाऽविशत् ।।९७।।**

**क्षमया क्षेमको राजा क्षमायाः पालने क्षमः ।**
**बभूव नाक्षमः कोऽपि क्षमायाः पालने क्षमः ।।९८।।**

(अन्वयः) इह पद्भ्यां क्षमां चकार; क्षमया किं न साध्यते? भीमसेनः अपि क्षमया काम्यकं वनम् आविशत् । क्षमया सोमकसुता (द्रौपदी), क्षमया यमपुत्रकः (धर्मराजः) क्षमया मघवत्सूनुः, क्षमया उभौ यमजौ (नकुल- सहदेवौ); रावणान्तकः राजीवनेत्रः रामः अपि राज्ञोः (दशरथः) आज्ञां पुरस्कृत्य राज्ञा (पूर्वजानामिव) अथ वनम् आविशत् ।। क्षेमकः राजा क्षमायाः पालने क्षमः अपि क्षमया (वनमाविशत्) । कोऽपि (राजा) अक्षमः सन् क्षमायाः पालने क्षमः न बभूव ।।

**(व्या)** नन्वभक्तस्यापि क्षमया उद्धारः क्रियते वा हरिणा? तथा सति । अभक्तिरेव मोक्षप्रयोजिका स्यात्? इत्यत आह – **क्षमामिति** ।। तस्य भक्त्या इह अस्मिन् विषये । क्षमां

चकार । (इल्लि ननु एन्दु आरम्भिसि ई व्याख्यानदल्लि अभक्तनिगू क्षमेयिन्द मोक्षवागुवुदे एन्दु आशङ्के माडिकोण्डिरुवुदु प्रकरणादिविरुद्ध. आशङ्केगे इल्लि उत्तरवू इल्ल. इल्लिन प्रसक्ति एनेन्दरे चिन्तामणिपुत्रादिगळु सिक्कापट्टे बैय्युत्तारे. आ दुष्टरन्नु राजनिगे हेळि शिक्षे माडिसबहुदु. शक्ति नमगिद्दरे नावे दण्ड कोडबहुदु. हीगिरुवल्लि पापिगळु निष्कारणहिंसे माडिदरे नावु एके सहिसबेकु एम्ब प्रश्ने बरुत्ते. उत्तर इल्लिदे. ब्राह्मणनु, तत्रापि परमहंसनु स्वपुण्यवृद्धिगागि दुर्जनरु कोडुव हिंसेयन्नु सहिसबेकु. भगवत्सङ्कल्प तिळिदु विशेषवागि सहिसबेकु. अन्तह क्षमेयु एल्ला तपस्सुगळिगिन्तलू हेच्चु पुण्यफलप्रद एन्दु तोरिसलु क्षमाभिमानि पृथ्वीदेवियन्नु तन्न कालिनिन्दले श्रीहरियु सृष्टि माडिद्दाने. हागिद्दरे, शङ्के हेगिरबेकेन्दरे – (ननु दुर्जनैः अज्ञानिजनैश्च अपराधे कृते सति पुण्यहान्यभावेऽपि क्वचित् मानहानिः स्यात् । क्षेमहानिः धनहानिः आरोग्यहानिः स्यात् । तथा च सहनं दुःशकं भवतीत्यत आह । क्षमागुणस्य बहुपुण्यप्रापकत्वद्योतनाय श्रीहरिः क्षमादेवीं साक्षात् स्वपद्भ्यां ससर्ज । भीमसेनादयः क्षमागुणस्य माहात्म्यं सूचयितुं धनहान्यादिकं सोढ्वा वनं जग्मुः । इत्यादि उत्तममुनिदर्शनसद्भावात् हरिभक्तेन हरिप्रीत्यर्थं लौकिकसर्वदुःखं सहनीयमेव इति भावः ।।) क्षमैव सर्वसाधनमित्याह – **क्षमयेति** ।। **हे लक्ष्मीपते! क्षमया किं न साध्यते?** शृणु क्षमया च भीमसेनः काम्यकं वनं आविशत् ।।९५।। न चैकः । किन्तु **सोमकसुता** = द्रौपदी । **यमपुत्रको** धर्मः । **मघवत्सूनुः** अर्जुनः । **उभौ यमजौ** । सहोत्पन्नौ नकुलसहदेवौ । एते सर्वे **क्षमयैव** काम्यकं वनमाविशन् ।।९६।। लोकशिक्षार्थं **रावणान्तकरः राजीवनेत्रः रामोऽपि** । राज्ञाःराजा च राज्ञी च । तयोः **राज्ञोः** । **आज्ञां पुरस्कृत्य** । राज्ञां दण्डकादि पूर्वराज्ञां (पूर्वजानामिव) **वनम् आविशत्** ।।९७।।

**क्षेमकोऽपि** पाण्डववंशीयः । क्षमयैव **क्षमायाः** पृथ्व्याः **पालने क्षमः** समर्थः सन् । तपोर्थं वनमाविशत् । कोपि **राजा अक्षमः** सन् । **क्षमायाः पालने क्षमः** । समर्थः **न बभूव** ।।९८।।

**एवं क्षमासमायुक्ता मुनयो मनवोऽपि ये ।**
**मनने च समर्थास्ते माधवस्य महात्मनः ।।९९।।**

**तद्वत् क्षमापरश्चाहं रमापत्याश्रयोऽपि सन् ।**
**कुमार त्वमपि ह्यत्र क्षमावान् भव सर्वथा ।।१००।।**

**(अन्वयः) (हे लक्ष्मीपते!) एवं क्षमा समायुक्ताः ये मुनयः मनवः ते महात्मनः माधवस्य मनने समर्थाः (बभूवुः) । तद्वत् सन् (साधुः) अहम् अपि श्रीरमापत्याश्रयः क्षमापरः च (अभवम्) । हे कुमार (लक्ष्मीपते!) त्वमपि अत्र सर्वथा क्षमावान् हि**

भव ॥

(व्या) हे लक्ष्मीपते! **एवं क्षमा समायुक्ताः ये मुनयः** मरीच्यादयः । **मनवः** स्वायम्भवादयः (देवा वा) **महात्मनः माधवस्य** हरेः **मनने** विचारे **समर्था** बभूवुः । **तद्वत् सन्** साधुः **अहमपि रमापत्याश्रयः** (कल्यादिदैत्यरू, मणिमदादि भाष्यकाररू नास्तिक्यवाद जीवैक्यवाद मुन्ताद दुर्मतगळन्नु प्रचार माडुत्ता, दुराचारगळिन्द मेरेयुत्तिद्दरू श्रीहरि मुन्दे ज्ञानात्मकक्रोधदिन्द ईश्वरनागि अवरिगे तमस्सन्नु कोडुत्तानेये होरतु, संसारकालदल्लि अवरु अन्यायमाडुत्तिरुवागले अवरन्नु सुट्टु बिडुवुदिल्ल. अपराधगळन्नेल्ला सहिसुत्ताने. मन्निसुवुदिल्ल. एल्ला देवतेगळू ई श्रीहरिय गुणवन्नु अनुकरिसि दुर्जनरु निन्दिसिदरू सहिसिकोण्डु पुण्यवन्नु हेच्चिसिकोळ्ळुत्तारे. शापकोट्टु पुण्य कळेदुकोळ्ळुवुदिल्ल.) **रमापतिरेव आश्रयो यस्य सः तादृशः । क्षमापरो अभूवम् । हे कुमार त्वमपि अत्र विषये** (अस्मिन् साधनभूमौ न चिन्तामणिपुत्रलक्ष्मीनारायणविषये – अत्र विषये एन्दरे लक्ष्मीनारायणन विषयदल्लि एन्दु अर्थवल्ल. लक्ष्मीपतियु गुरुनिन्दे माडुव लक्ष्मीनारायणनन्नु प्रतिनिन्दे माडि दण्डिसुवुदु इत्यादि विहित रीतियल्लि तिरस्कार माडुवुदु न्यायवे. स्वयं अक्षत्रियनाद्दरिन्द देहदण्ड, गडीपारु इत्यादि शिक्षे माडबारदु. आद्दरिन्द अत्र – ई भरतखण्डदल्लि एन्दर्थ. अथवा ई विषयदल्लि एन्दरे गुरुगळु क्षमिसि बिट्टरल्ला अवनन्नु सुट्टुबिडलिल्लवल्ला एन्दु कोप होन्ददे गुरुगळ विषयदल्लि क्षमिसु एन्दर्थ.) **सर्वथा क्षमावान् भव** ॥१००॥ (उत्तमदृष्टान्तकोट्टु 'एवं क्षमा समायुक्ताः' एन्दु हेळिरुवुदरिन्द क्षमेयु एरडु विधवागिदे एन्दु सूचितवायितु. पुण्यप्रापकक्षमा, पापदायकक्षमा एन्दु एरडु विध. पुण्यप्रापकक्षमे गुरुराजरिन्द इल्लि उक्तवागिदे. उत्तमापराधसहन, तपःकालदल्लि अज्ञरू देवस्त्रीयरू दुर्जनरू सह माडुव उपद्रवगळ सहने इत्यादिगळु पुण्यप्रद. महाराजरु दुर्जनर चौर्यादिगळन्नु नोडुत्ता सहिसुवुदु कर्तव्यत्यागरूपवाद पापदायकक्षमे. 'क्षमा सर्वत्र धर्मो न पापहेतुश्च दुर्जने' इत्यादि निर्णय २२ अध्यायदल्लि श्लोक ६५रिन्द ११६रल्लि दुष्टनाशनवे कर्तव्यवेन्दू, क्षमेयू अधमर विषयदल्लि पापदायकवेन्दू आचार्यरे निर्णयिसिरुत्तारे. गुरुराजरु पूर्वोक्त श्लोकगळल्लि तपस्वियु कोपदिन्द शापकोट्टु कोपदिन्द दुष्टब्राह्मणनन्नु कोल्लिसि पुण्य हाळुमाडिकोळ्ळबारदेन्दु तोरिसिद्दारे. )

**तादृशक्षमया हीनः श्रीनिवासाभिधोऽपि सन् ।**
**मानं न याति तेनासौ मानवैः कामितं त्विह ॥१०१॥**

**अधुना विधिना सृष्टमधुना दुष्टबुद्धिना ।**
**अधना निधनाच्छिष्ट स्पष्टधा मधुसूदन ॥१०२॥**

**धावन्ते तद्वदेवायं द्विजवर्यो द्विजाधमः ।**
**सदृशैर्दितिजेन्द्रस्य बाध्यते बाध्यबुद्धिमान् ॥१०३॥**

(अन्वयः) तादृशक्षमया हीनः सन् असौ श्रीनिवासाभिधः अपि तेन (कारणेन) मानवैः इह कामितं मानं न याति ।। (तथा) अधुना विधिना (ब्रह्मणा) निधनाधिष्टत्वेन (निधनाच्छिष्ट?) अष्टधा (स्पष्टधा) अधनाः दुष्टबुदिधना मधुना धावन्ते, तद्वत् अयं द्विजवर्यः (अपि) दितिजेन्द्रस्य (मधोः) सदृशैः (गुणैः) द्विजाधमः (भूत्वा), हे मधुसूदन (लक्ष्मीपतिनामक) बाध्यबुद्धिमन् बाध्यते ।।

(व्या) तादृशक्षमया हीनः । श्रीनिवासाभिधोपि तेन कारणेन (सहनरहितत्वकारणेन) मानवैः इह कामितम् इच्छितं मानं न याति । न प्राप्स्यति ।।१०१।। तथा अधुना इदानीं विधिना ब्रह्मणा निधनाधिष्ठत्वाष्टधा निधनाधिष्ठत्वेनाष्टधा सृष्टाः । अधनाः() प्रजाः । दुष्टबुद्धिना मधुना तन्नाम दैत्येन पीडिताः यद्वत् धावन्ते ।।१०२।। तद्वत् अयं द्विजवर्योऽपि दितिजेन्द्रस्य मधोः सदृशैः गुणैः द्विजाधमो भूत्वा, हे मधुसूदन लक्ष्मीपतिनामक बाध्य-बुद्धिमान् दुर्गुणैः बाध्या बुद्धिः तयायुक्तः सन् । (अथवा भ्रान्तः सन्) सद्भिः बाध्यते । अतः क्षमैव सतां (तपस्विनां) सुखकारिणीति जानीहि ।।१०३।। (अधुना श्लोकक्के इन्नोन्दु समञ्जस व्याख्यान. अधुना विधिनामक चतुर्मुखेन सृष्ट मधुदैत्येन दुष्टबुद्धिना इति विशेषणम् । योग्याः अधुना भूत्वा निधनात् शिष्टास्तु अहताः सन्तः अथवा धनापहारेपि दारिद्र्याद् वा अनष्टप्राणाः सन्तः हे मधुसूदन हयग्रीव अयं द्विजवर्यः श्रीनिवासनामकः द्विजाधमः भूत्वा क्रोधकरणेन नीचो भूत्वा, राक्षसश्रेष्ठसदृशैः राजभटैः (पोलीसरिन्द) बाध्यते ताड्यते ।। बाध्य बुद्धिमान् नष्टप्रज्ञ इव(हुच्चनन्ते जिछि च चठिञ्चि) च भवति ।। श्रीनिवास पोलीस्नवरिन्द हिडियल्पट्टु हिंसिसल्पडुत्ताने एन्दु निदर्शन).

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्रपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा ।

**मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि एकोनविंशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**

## ।। अथ विंशाध्यायः ।।

### १. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (१–११)

(व्या) **श्रीगुरुभ्यो नमः** ।। ॐ ।। पूर्वाध्यायान्ते लक्ष्मीपतिं प्रति चिन्तामणिसुत लक्ष्मीनारायणाख्यादीनां स्वकृतिविषयकदौर्हृदं कथयित्वा, इदानीं हयग्रीवकर्मन्दिसम्बन्धिनोः लक्ष्मीपति (पूर्वाध्यायोक्तश्रीनिवास – ई पद व्याख्यानकाररदे. ई श्रीनिवास १९/१०१रल्लि हेळल्पट्टवनिरबहुदु. क्षमारहित कठिणपुरुष. १९/४३,३५रल्लि इन्नोब्ब श्रीनिवासन वर्णने बरुत्ते. अवनु ब्राह्मणनिन्दे माडि ब्रह्महत्यापापवन्नु संपादिसिदवनु. ब्रह्मराक्षसनागि बिड्डुगडे होन्दिदवनु. इब्बरू न्दे व्यक्तियो भिन्नरो निश्चयवागुवुदिल्ल. १०१ने श्लोकदवनू 'द्विजवर्यः द्विजाधमो भूत्वा' एन्दु हेळल्पट्टिद्दाने. ३५ मत्तु ४३ने श्लोकदवनू 'पुष्णाति वेदशास्त्राणि' एन्दरे शास्त्रज्ञनेन्दु वर्णिसल्पट्टिद्दाने. इवनु कमलनाभ, तम्मण्ण, श्रीनिवासरपैकि श्रीनिवासनल्ल) सदानन्दसञ्ज्ञितयोः वृत्तान्तमाह – **हयग्रीव इति** ।। **'हयग्रीव'** इत्यारभ्य **'प्रवीण स्वरभाषितम्'** इत्यन्तं प्रथमं लक्ष्मीपतिश्रोतृकप्रकरणम् ।।

**ॐ।। हयग्रीवयतीयौ द्वौ द्विजाग्रौ व्यग्रबुद्धिगौ ।**
**समग्रगुणिनौ चापि ग्रीवया चोग्रभाषिणौ ।।१।।**

**लक्ष्मीपतिसदानन्दसञ्ज्ञितौ प्राज्ञ किं वदे ।**
**साज्ञता च तयोः सम्यक् ज्ञाननाशाय वै भवेत् ।।२।।**

**तस्माद्विश्वास एवात्र कर्तव्यः सर्वथा नरैः ।**
**अविश्वासो न कर्तव्यः सर्वथा मद्धितेषुभिः ।।३।।**

(अन्वयः) – लक्ष्मीपतिसदानन्दसञ्ज्ञितौ द्वौ हयग्रीवयतीयौ समग्रगुणिनौ च अपि व्यग्रबुद्धिगौ ग्रीवया उग्रभाषिणौ च । हे प्राज्ञ! (लक्ष्मीपते) अहं किं वदे? तयोः सा अज्ञता च सम्यक् ज्ञाननाशाय भवेत् वै । तस्मात् मद्धितेषुभिः नरैः अत्र सर्वथा विश्वासः कर्तव्य एव । सर्वथा अविश्वासो न कर्तव्यः ।।

(व्या) हे लक्ष्मीपते! **हयग्रीवयतीयौ** = हयग्रीवयतिसम्बन्धिनौ । **द्वौ** द्विजाग्र्यौ लक्ष्मीपतिसदानन्दसञ्ज्ञितौ तौ **च समग्रगुणिनौ** अपि **व्यग्रबुद्धिगौ** = व्यग्रा संशययुक्ता च सा बुद्धिश्च, तस्यां गच्छत इति । तादृशौ । **ग्रीवया च उग्रभाषिणौ** = परुषभाषायुतौ ।।१।। हे **प्राज्ञ!** लक्ष्मीपते! अहं **किं वदे?** वदामि । भवतु तादृक्त्वेन । किं तयोरित्यत आह

– साज्ञेति ।। सा तयोः अज्ञता मदाख्यानविषये इत्यर्थः । तयोरेव ज्ञाननाशाय भवेत् ।।२।। तस्मात् । अत्र = मत्कृतौ नरैः विश्वास एव कर्तव्यः । मद्धितेषुभिः = मत् मत्तः हितं इच्छुभिः । सर्वथा अविश्वासः न कर्तव्यः । हे लक्ष्मीपते! तयोर्वद ।।३।।

**एतानि पञ्चपद्यानि सञ्चीकुरु सुलाञ्छन ।**
**काञ्चनानि तथैवेह प्रपञ्चीकुरु वञ्चके ।।४।।**

**नागाह्वपण्डितेह त्वं मा गां संहर लोभतः ।**
**त्यागान्विता सा गह्वरवाक् त्यागात्संहर्षणं कुरु ।।५।।**

**मासि मासि प्रतापं ते दास्यामीति त्वयोदितम् ।**
**सत्यं सत्यवतां श्रेष्ठ सत्सु त्वं कुरु सर्वथा ।।६।।**

(अन्वयः) – हे सुलाञ्छन! एतानि काञ्चनानि पञ्चपद्यानि सञ्चीकुरु । तथा एव वञ्चके इह प्रपञ्चीकुरु ।। हे नागाह्वपण्डित! इह लोभतः त्वं सा त्यागान्विता गह्वरवाक् गां मा संहर । (किन्तु) त्यागात् (मम) संहर्षणं कुरु ।। त्वया 'ते मासि मासि प्रतापं दास्यामि' इति उदितम् । हे सत्यवतां श्रेष्ठ! त्वं सर्वथा सत्सु सत्यं कुरु ।।

(व्या) अपि च एतानि = अग्रे वक्तव्यानि । पञ्चपद्यानि । 'नागाह्वपण्डित' इत्यारभ्य 'इति सत्यं कुरु प्रिये'त्यन्तानि । हे सुलाञ्छन! = मन्मृत्तिकाचिह्नयुक्त । लक्ष्मीपते! सञ्ची-कुरु सञ्चयीकृत्वा, इह आकरे एकत्र कृत्वा, लिखेत्यर्थः । तथैव काञ्चनानि = स्वर्णसदृशानि = उत्तमानीत्यर्थः । वञ्चके अनृतभाषिणि । प्रपञ्चीकुरु = कथयेत्यर्थः ।।४।। कोऽसौ अनृत- वादी इत्यतः शेषाद्रिपण्डित इत्याह – नागाह्वेति ।। हे नागाह्वपण्डित शेषाद्रिपण्डित! सा त्यागान्विता = विप्रायान्नं ददामीति त्यागान्विता, गह्वरवाक् = दाम्भिकवाक्, 'गह्वरस्तु गुहादम्भनिकुञ्जगहनेष्वपि' इति विश्वः । तां गां = वाणीम् । इह लोभतः लोभेन मा संहर = न व्यर्थीकुरु । किन्तु त्यागात् दानात् मम संहर्षणं सम्यक् हर्षणं आनन्दं कुरु ।।५।। त्वया ब्राह्मणाय हे विप्र! मासिमासि प्रतिमासं ते तुभ्यं प्रतापं मासाशनम् । दास्यामीति उदितम् । हे सत्यवतां श्रेष्ठ! तत् त्वं सत्सु सर्वथा सत्यं कुरु ।।६।।

**अन्यथाऽनृतवाक्येन नृसिंहस्याप्रियेण च ।**

**नृषु त्वं लघुतां यासि नृगवद्धीनजन्मगः ।।७।।**

**इत्थं तव हितायैव वचनं च मयोच्यते ।**
**कुचोद्यं मा कुरु त्वं विप्रस्य वचनं त्विति ।।८।।**

(अन्वयः) अन्यथा अनृतवाक्येन नृसिंहस्य अप्रियेण च त्वं नृषु नृगवत् हीनजन्मगः सन् लघुतां यासि । तव हिताय एव च इत्थं वचनं मया उच्यते । त्वं 'विप्रस्य तु वचनम्' इति कुचोद्यं मा कुरु ।।

**(व्या) अन्यथा** = अकरणे **नृसिंहस्य** राज्ञः (विष्णोश्च – नृसिंहदेवरिगे सुळ्ळु अप्रिय एन्दु ओन्दु अर्थ. नररन्नु आळुव राजनिगे सुळ्ळाडिदरे कोप बन्दु आतनु शिक्षे माडुत्ताने. आद्दरिन्द सुळ्ळाडबारदेन्दु इन्नोन्दर्थ. नृगचक्रवर्तिगे केट्टजन्म बन्दन्ते निनगू केट्ट जन्म बरुत्ते. सुळ्ळाडबेड एन्दु भाव) **अप्रियेण अनृतवाक्येन त्वं नृषु, नृगवत्** (नृगराजवत्) यथा एकस्मै गां दत्वा, तामेव पुनरन्यस्मै दत्तवान् तथेत्यर्थः । लघुत्वं प्राप्य, **हीनजन्मगः** सरटादि जन्मगः सन् । अधः **यासि** गच्छसि ।।७।। **इत्थं तव हितायैव मया वचनं च उच्यते** । एतत् **विप्रस्य वचनं** न गुरोरिति **कुचोद्यं** दुस्तर्कं **त्वं मा कुरु** ।।८।।

**एकवाक्यप्रतिष्ठापनाचार्याद्य त्वयोदितम् ।**
**दास्यामि तत्प्रतापं ते इति सत्यं कुरुप्रिय ।।९।।**

**द्विजस्य मा ददस्वेति नन्दनः किं त्वबोधयत् ।**
**तव नागाह्वयागास्त्वं मृषावचनभाषणम् ।।१०।।**

**प्राणस्यावधिपर्यन्तं ब्राह्मणस्य ददाम्यहम् ।**
**इति वाणीमब्रवीस्त्वं प्रवीण स्मर भाषितम् ।।११।।**

(अन्वयः) हे एकवाक्यप्रतिष्ठापनाचार्य! प्रिय! अद्य 'ते तत् प्रतापं दास्यामि' इति त्वया उदितं सत्यं कुरु ।। नन्दनः (शेषः त्वं) 'द्विजस्य मा ददस्व' इति अबोधयत् किम्? हे नागाह्वय! आगः तव मृषावचनभाषणम् । हे प्रवीण! 'ब्राह्मणस्य प्राणावधिपर्यन्तम् अहं ददामि' इति त्वं वाणीम् अब्रवीः । भाषितं स्मर ।।

**(व्या) हे एकवाक्यप्रतिष्ठापनाचार्य!** 'विद्वद्भिरेकवारमेव वक्तव्यम्' इति प्रतिष्ठापने,

आचार्य आचारयुत! अद्य ब्राह्मणं प्रति ते तुभ्यं तत् प्रतापं मासाशनं दास्यामीति त्वया उदितम् । हे प्रिय! तत् सत्यं कुरु । इति ।'हे लक्ष्मीपते! वञ्चके प्रपञ्चीकुरु' इति पूर्वेणान्वयः ।।९।। पुनरेवं वदस्वेत्याह – द्विजस्येति ।। किमिति । शृणु । हे नागाह्वय! शेषाद्रिपण्डित! द्विजस्य विप्रस्य मासान्नं मा ददस्वेति मम नन्दनः शेषः त्वां प्रति अबोधयत् किम् अकथयत् किम् ।।१०।।

'अहं प्राणस्यावधिपर्यन्तम् आजीवितं ब्राह्मणस्यान्नं ददामि' इति वाणीं प्रवीण-स्वरभाषितं = प्रवीणस्वरेण उच्चस्वरेण भाषितं यथा भवति तथा । त्वम् अब्रवीः । इदानीं मृषावचनभाषणम् अनृतभाषणरूपम् आगः अपराधः (आगाः प्राप्तोसि हन्नोन्दनेय श्लोकदल्लि आगः एम्बुदु नपुंसकलिङ्ग एकवचन प्रथमा विभक्ति. 'आगः न कर्तव्यः' एन्दु अध्याहारमाडिकोण्डु ई व्याख्यानवागिदे. आदरे आगाः एम्ब पाठविद्दरे अध्याहारवे बेकागिल्ल. त्वं मृषावचनभाषणं आगाः ऽ नीनु सुळ्ळन्नु आडिदवनादे एन्दु अर्थ. इण् गतौ लुङ मध्यमपुरुष एकवचन, आ उपसर्ग, त्वं अनृतं आगाः एन्दिट्टुकोण्डरे आ एम्ब उपसर्गवे बेकिल्ल. आद्दरिन्द अगाः अथवा आगाः एम्ब पदच्छेददल्लि अध्याहारविल्लदे अर्थवागुवुदरिन्द आ पाठवे साधुवागि तोरुत्ते. आकरग्रन्थ नोडबेकु.) त्वया न कर्तव्यमिति (व्य इति।)

।।लक्ष्मीपतिप्रकरणं सम्पूर्णम्।।

## २. शेषाद्रिपण्डितप्रकरणम्।। श्लोकाः (१२ऽ१५)

**त्वं मा भैस्तव सौभाग्यं वितरामि निरन्तरम् ।**
**निरामयं श्रीनिवासं शनिवारे प्रपूजयेः ।।१२।।**

**तस्माद्ददस्व विप्राय सुप्रसन्नो भवामि ते ।**
**मत्प्रसादाच्च ते श्रेयःप्राप्तिरेव भविष्यति ।।१३।।**

(अन्वयः) त्वं मा भैः, निरामयं श्रीनिवासं शनिवारे प्रपूजयतेः । तव निरन्तरं सौभाग्यं वितरामि ।। तस्मात् विप्राय ददस्व । ते सुप्रसन्नः भवामि । मत्प्रसादात् ते श्रेयःप्राप्तिः भविष्यति एव ।।

(व्या) त्वमिति ।। हे शेषाद्रिपण्डित! त्वं माभीः । मदन्तर्यामिणं निरामयं श्रीनिवासं वेङ्कटेशं शनिवारे प्रपूजयेत्, (प्रपूजयेः) । ततः तव निरन्तरं भाग्यम् ऐश्वर्यं वितरामि ददामि ।।१२।। तस्माद् विप्राय अन्नं ददत्स्व(ददस्व) । ते तव । सुप्रसन्नः भवामि । ते श्रेयः

प्राप्तिः मत्प्रसादाद् भविष्यति एव ।।१३।।

**अहं जीवयितुं विप्रं प्रविशाम्यत्र सर्वदा ।**
**त्वमामन्त्रय सत्रार्थमन्नार्थं कुत्र यास्यति ।।१४।।**

**हे पुत्र पुत्र पश्य त्वं मयि विश्वाससत्फलम् ।**
**विप्रे जीवावधिर्जाता जीवयामि पुनस्त्वहो ।।१५।।**

(अन्वयः) अत्र विप्रं जीवयितुम् अहं सर्वदा प्रविश्यामि । त्वं सत्रार्थं (तम्) आमन्त्रय । (सः) अन्नार्थं कुत्र यास्यति ।। हे पुत्र पुत्र! मयि विश्वासस्फलं पश्य । जीवावधिः तु विप्रे जाता, पुनः (तं) जीवयामि । अहो ।।

(व्या) ननु मरणोन्मुखस्य अन्नदानं कथं सम्भवेत्? इत्यत आह – **अहमिति ।। अत्र विप्रं जीवयितुम् अहं सर्वदा प्रविशामि** । तस्मात् **त्वं सत्रार्थं** यज्ञार्थं प्राणाग्निहोत्रसत्रार्थम् । तम् **आमन्त्रय** = आह्वय । त्वदाह्वानाभावे । सः **कुत्र अन्नार्थं यास्यति** गच्छति ।।१४।।

**हे पुत्र पुत्र** आदराद्विरुक्तिः । शेषाद्रिपण्डित! **पश्य त्वम्** । तस्य विप्रस्य मयि विश्वासतत्फलं (सत्फलं इति मूले विद्यते) विश्वासः तत्फलं च । किं तदित्यत आह – **विप्रे इति ।। विप्रे** च **जीवावधिः** = जीवितावकाशः **जातः** । पश्य । **पुनः** तं **जीवयामि** । **अहो** इत्यनेन मुख्यप्राण इव स्वस्यापि विस्मयकारकं सामर्थ्यं सूचयति ।।१५।। शेषाद्रि.प्र.सं.।।

३. हयग्रीवमुनिप्रकरणम्।। श्लोकाः (१६-३२)

(व्या) **'हे नन्दन'** इत्यारभ्य **'पौरुषादेवेह समन्वितम्'** इत्यन्तं तृतीयं हयग्रीव-कर्मन्दिश्रोतृकप्रकरणम् ।।

**हे नन्दनाहमानन्दपूर्णोऽस्मि तव दर्शनात् ।**
**त्वमप्यानन्दपूर्णोऽसि मद्वृन्दावनदर्शनात् ।।१६।।**

**आवयोरानन्दपूर्तावावामेव निदर्शनम् ।**
**वागीशवासुदेवौ द्वावन्योन्यं दर्शनाद्यथा ।।१७।।**

**नेतरौ तत्र दृष्टान्तावन्योन्यप्रीतिसंयुतौ ।**

**तथाऽत्रापि सुपुत्राद्य नेतरौ प्रीतिसंयुतौ ॥१८॥**

(अन्वयः) हे नन्दन! तव दर्शनात् अहम् आनन्दपूर्णः अस्मि । त्वम् अपि मद् वृन्दावनदर्शनात् आनन्दपूर्णोऽसि ॥ यथा वागीशतीर्थवासुदेवतीर्थौ अन्योन्य-दर्शनात् (अनन्दः जातः) आवयोः आनन्दपूतौ अवाम् एव निदर्शनम् । हे सुपुत्र! तत्र इतरौ दृष्टान्तौ न । यथा (तौ) अन्योन्यप्रीतिसंयुतौ तथा अत्रापि (आवाभ्यां विना) इतरौ प्रीतिसंयुतौ न ॥

(व्या) हे नन्दनेति ॥ हे नन्दन! तव दर्शनात् । अहमानन्दपूर्णोस्मि । त्वमपि मद्वृन्दावनदर्शनात् आनन्दपूर्णोसि ॥१६॥ आवयोः आनन्दपूर्तौ । तद्विषये । आवामेव निदर्शनम् । दृष्टान्तः – यथा वागीशतीर्थवासुदेवतीर्थौ द्वौ । अन्योन्यदर्शनात् । तथेत्यर्थः ॥१७॥ (अत्र भविष्योत्तरपुराणोक्तवेङ्कटेशकल्याणमहोत्सवे संवृत्त चतुर्मुखश्रीनिवासयोर्दर्शनं स्मर्तव्यम् । वागीशवासुदेवौ चतुर्मुखश्रीनिवासौ द्वौ । अन्योन्यदर्शनात् यथा तथेति व्याख्यानमनुसन्धेयम् । मूलदल्लि वागीशवासुदेवौ एन्दिदे. तीर्थौ एन्दिल्ल. वागीशनु चतुर्मुखनु. वासुदेवनु वेङ्कटेशनु. अवरिब्बर समागमवु श्रीनिवास कल्याण प्रकरणदल्लि भविष्योत्तरपुराणदल्लि हीगेये वर्णितवागिदे. इल्लि सामान्यार्थबोधिनीकाररु हेळुव ई वागीशतीर्थ वासुदेवतीर्थर समागमवु यावुदो एल्लि नडेयितो ननगे गोत्तिल्ल.)

हे सुपुत्र! तत्र इतरौ दृष्टान्तौ न । यथा तौ अन्योन्यप्रीतिसंयुतौ तथा अत्रापि आवाभ्यां विना इतरौ प्रीतिसंयुतौ न ॥१८॥

**तस्मात्तव मयि प्रीतिः ममापि त्वयि सर्वदा ।**
**प्रवर्धते सुत दिने दिने चाहं वदामि ते ॥१९॥**

**हे पुत्र ते समीपं तु मन्मनोरथसारथिः ।**
**ईश्वरं पृथुसङ्कल्परथमारोप्य यापितः ॥२०॥**

**स दृष्टः किं त्वया मार्गे स्पष्टं तं दृष्टवानसि ।**
**अन्यथा हृष्टरूपस्त्वं कथं शिष्टाऽगतो मठम् ॥२१॥**

(अन्वयः) तस्मात् मयि तव प्रीतिः, त्वयि मम प्रीतिः सर्वदा दिने दिने प्रवर्धते । ते अहं वदामि च ॥ हे पुत्र! मन्मनोरथसारथिः ईश्वरपृथुसङ्कल्परथम् आरोप्य ते समीपं यापितः तु । सः त्वया दृष्टः किम्? मार्गे तं स्पष्टं दृष्टवान् असि

। अन्यथा (यदि न दृष्टः इति चेत्) हे शिष्ट! कथं हृष्टरूपः (सन्) त्वं मठम् आगतः (असि) ।।

**(व्या) तस्मात् तव मयि प्रीतिः । ममापि सर्वदा त्वयि दिने दिने** (जन्मजन्मनि) **प्रवर्धते** । अतश्च **ते** तुभ्यम् **अहं वदामि** ।।१९।। किं तद्वचनम् इत्यत आह (मन्नन्दनेन! कर्मन्दीश्वरेणेति पूर्वोक्तं स्मारयन्निव वदति ।) **हे पुत्रेति ।। हे पुत्र** । हयग्रीवयते! **ईश्वर-पृथुसङ्कल्परथम्** । ईश्वरस्य श्रीहयवदनस्य पृथुः श्रेष्ठः सङ्कल्पः तद्रूपं रथम् **आरोप्य ते समीपं मन्मनोसारथिः** मम मनोरथरूपसारथिः । **यापितः** प्रेषितः ।।२०।।

**स दृष्टः । किं त्वया** तस्य स्मेरमुखं दृष्ट्वा, स्वयमेव स्वप्रश्नोत्तरं ददाति । **मार्गे** इति ।। अहो कर्मन्दिन्! **मार्गे** समाधौ । **तं** सारथिं **त्वं दृष्टवान् असि** । तत्कथमित्यत आह – **अन्यथेति ।।** अन्यथा न दृष्ट इति वदसि चेत् । न तत्सत्यम् । **दृष्ट** एव त्वया इति **स्पष्टं** वेद्मि । कथय । तदभावे । **त्वं** हे **शिष्ट!** कथं **मठमागतः** अतस्त्वं **दृष्टरूपोसि** (मूल वृंनळि हृष्टरूपः एन्दिदे. एन्दरे नन्न मानस इच्छे नीनु इल्लिगे बरलि एन्दित्तु. अदु निनगू ध्यानदिन्द तिळिदिरबेकु. हागे निनगे तिळियदिद्दरे नीनु नगुनगुत्ता सन्तोषपूर्वकवागि इल्लिगे हेगे बरुत्तिद्दि एन्दु व्याख्यान माडबहुदु. दृष्टरूपः एन्दिट्टुकोण्डरे पुनरुक्तियागुत्ते. 'स्पष्टं त्वं दृष्टवानसि' एन्दु पूर्वार्धदल्ले इदे.)। **दृष्टं** मन्मनोरथसारथेः रूपं येन सः । तादृशोसि । न संशयः । एतेन परस्परं महाज्ञानिनाविति सूचयति ।।२१।।

**इतःपरं कुरु सुत रथोत्सवमथो हरेः ।**
**तथोत्सवं सुतोषेण कुरु त्वं मन्मनोरथैः ।।२२।।**

**रथिकस्त्वं रथवरमारोह रविनन्दनः ।**
**यथाऽरीन् जयते तद्वदरिषड्वर्गकान् जहि ।।२३।।**

**प्रथमं जहि कामं त्वं विरथं कुरु कार्मुकम् ।**
**धृत्वा वैराग्यरूपं त्वं शरं मुञ्च रथीरितम् ।।२४।।**

(अन्वयः) हे सुतः इतःपरं त्वं हरेः रथोत्सवं कुरु । तथा सुतोषेण मन्मनोरथैः उत्सवं कुरु ।। रथिकः त्वं रथवरम् आरोह (यथा) रविनन्दनः (सुग्रीवः) अरीन् जयते तद्वत् अरिषड्वर्गान् जहि ।। त्वं प्रथमं कामं जहि, त्वं वैराग्यरूपं कार्मुकं धृत्वा (तं) विरथं कुरु । रथीरितं शरं मुञ्च ।।

(व्या) एवं च प्रेमोक्तिमुपसंहृत्य प्रकृतमनुवदति – **इतःपरमिति** ।। **हे सुत इतःपरं त्वं हरेः** त्रिविक्रमस्य **रथोत्सवमनः** (मूलदल्लि रथोत्सवमनः एम्ब पदविल्ल. व्याख्यानकाररु रथोत्सवमनः एन्दु प्रतीकग्रहणमाडिकोण्डु रथोत्सवे मनः कुरु एन्दु व्याख्यानमाडिद्दारे. स्वा.वृं. मूलगळल्लि रथोत्सवमथो हरेः एन्दिदे. रथोत्सवमनो हरेः एम्ब पाठ मूलविरुद्ध. ) रथोत्सवे मनः कुरु । **तथा च सुतोषेण मन्मनोरथैः** मन्मनोरथानुकूलसामग्रीभिरित्यर्थः । **उत्सवं कुरु** ।।२२।। उत्सवशब्दार्थमाह – **रथिकस्त्वमिति** ।। ननु रथोत्सवकरणे त्रिविक्रमस्यैव रथिकत्वम् । अहं कथं रथिको भवामि इत्यतः, सत्यम् । त्रिविक्रमस्यैव रथिकत्वमिति ।। तत्सेवारूपमङ्गळार्तिक्यादिकरणेन तदधीन-दासत्वेन (जीवस्यापि) रथिकत्वं तवापि सम्भवति । अतः प्रसिद्धरथे स्थित्वा । तदुत्सवं कुरु । अथवा अयमेव तव देहः श्रीहरेः रथः । तत्राप्येवं रथिकत्वं सम्पाद्य उत्सवं कुर्वित्याह – **रथिकेति** ।। (मुख्यरथिकः देहे हृदिस्थहरिः । अमुख्यरथिकः देहमानी जीवः । बाह्यरथे मुख्य- रथिकः हरिः । जीवस्तु पुरोहितवत् दासभूत अर्चकः । एवं चोभौ रथे तिष्ठतः ।) हे हयग्रीवकर्मन्दिन्! त्वं पूर्वोक्तप्रकारेण देहाख्यरथं **आरोह** । आरुह । पूर्वमेवारूढस्य (रूढत्वेपि) अनुसन्धानाभावात् आरुहेति कथनम् । उत्सवानुसन्धानार्थं च । तत्र दृष्टान्तमाह – **रविनन्दन इति** ।। **यथा रविनन्दनः** सुग्रीवः श्रीरामाज्ञया अयोध्यागमने पुष्पकविमानमारुह्य गतवान् । अरींश्च जितवान् । तथा हे भगवन्! त्वदाज्ञया अस्मिन् त्वदधीने देहरथे तवसेवां करोमीति तदाज्ञां स्वीकृत्य सुग्रीव इव षड्वर्गकामाद्यरीन् **जहि** ।।२३।।

तत्रादौ कामं जहीत्याह – **प्रथममिति** ।। 'काम एष क्रोध एष' इति गीतोक्तेः । प्रथमं **वैराग्यरूपं कार्मुकं** धनुः **धृत्वा** । तं कालनेमिं **विरथं कुरु** । अपिच **रथीरितं** रथिनः श्रीहरेः ईरितं प्रेरितं ज्ञानरूपं (गीताशास्त्रोपदिष्टज्ञानरूपं) **शरं मुञ्च** ।।२४।।

**एवं कामजयं गत्वा मदमत्सरमोहनान् ।**
**क्रोधलोभौ च वैराग्यकार्मुकाज्जहि तेऽहितान् ।।२५।।**

**षड्वर्गनिग्रहपरषट्पद्यानि शृणोति यः ।**
**षड्वर्गं जयते कामं षट्पदानां च वृत्तिमान् ।।२६।।**

(अन्वयः) एवं कामजयं कृत्वा (गत्वा), वैराग्यकार्मुकात् ते अहितान् मदमत्सरमोहनान् कामक्रौधौ च जहि ।। यः षड्वर्गनिग्रहपरषट्पदानि शृणोति (सः) षट्पदानां वृत्तिमान्

(मधुकरवृत्तिमान् भूत्वा) षड्वर्गं कामं जयते ।।

(व्या) एवं च । कामजयं कृत्वा (गत्वा?) (विरक्तिपूर्वकं गीतार्थज्ञानेन) मदमत्सर-मोहनान् । क्रोधलोभौ च । ते अहितान् । शत्रून् तदभिमानिदैत्यान् वैराग्यकार्मुकात् वैराग्यरूपधनुषा जहि । एवं मदनुग्रहेण ते नष्टा भवन्ति ।।२५।।

एवं त्वां प्रति उपदेशयुक्तानि ('त्वदुपदेशयुक्तानि' एन्दु इदिद्दनु सन्देहक्के अवकाश बरबारदेन्दु 'त्वां प्रति उपदेशयुक्तानि' एन्दु बरेदिरुत्तेने.) । षट्पद्यानि । अत्र एकपादस्यैव पद्यत्वं कल्पितमिति ज्ञातव्यम् । 'रथिकस्त्वम्' इत्यारभ्य 'जहि तेऽहिताः' इत्यन्तानि षट्पद्यानि । षड्वर्ग-निग्रहपराणि । यः शृणोति । सोऽपि षट्पदानां च मधुकराणां वृत्तिमान् सन् षड्वर्गं कामं जयते (वृन्दावनाचार्यरन्ते विरक्तपरमहंसरागि एन्दर्थ अथवा पुरन्दरदासरन्ते भिक्षावृत्ति होन्दिद ज्ञानिगळागि एन्दर्थ.) । किमु त्वम् इत्यर्थः ।।२६।।

**लेखको नास्ति कोऽपीह तवाऽलेखोऽपि नास्ति च ।**
**पाकशासनलोकं तु नीयते नाकिभिः कृतिः ।।२७।।**

**तत्रापि लौकिककृतौ लिखितं चित्रगुप्तकैः ।**
**सन्तप्तत्रपुपूर्णाऽस्यं कृत्रिमेति वदन्ति ये ।।२८।।**

(अन्वयः) इह कोऽपि लेखकः नास्ति । तव आलेखः अपि च नास्ति । कृतिः तु नाकिभिः पाकशासनलोकं नीयते ।। तत्र लौकिककृतौ अपि लिखितं (दृष्ट्वा) ये कृत्रिमः इति वदन्ति (ते) चित्रगुप्तकैः (यमदूतैः) सन्तप्तत्रपुपूर्णाऽस्यं ...

(व्या) अत्र एतल्लेखकः । कोऽपि नास्ति । तवापि आलेखः । एतत्पद्यलेखः । नास्ति । इयं कृतिस्तु नाकिभिः देवैः पाकशासनलोकं पाकशासनस्य इन्द्रस्य लोकं स्वर्गं प्रति नीयते किं करोषि ।।२७।। भवतु । किं किं लिखितं वर्तन्ते तत्र इत्यत आह तत्रापीति ।। तत्रापीति लौकिककृतौ लोकोपयुक्तकृतौ लिखितं दृष्ट्वा, चित्रगुप्तकैः चित्रगुप्ताधीनैः यमदूतैः काषायदण्डिनो मम भाषायां (काषायदण्डिनो मम भाषायां दोषापादके एम्ब पदगळु ३०ने श्लोकदल्लिवे.) मत्कृतिभाषायामित्यर्थः । दोषापादके अदुष्टायामपि 'इयं विप्रकृतिः । न वादि- राजगुरोः' इति । तथा सति तस्याः अशुद्धताकथं स्यात् । दृश्यते चाशुद्धम् । अतोऽयं विप्र एव किमप्यबद्धं

वक्ति । तत्सर्वमप्रमाणमिति दोषान् बलादापादयतीति । तादृशे नीचविषये घृष्टं किमित्यत आह – **सन्तप्तेति** ।। ये चेऽयं कृत्रिमेति वदन्ति तेषां **सन्तप्तत्रपुणा** (त्रपु त्रपुणे त्रपूणि एन्दु त्रपुशब्द नपुंसक तृ.ए.) पूर्णं आस्यम् ।।२८।।

**तप्तपाषाणतपनं तप्तमूषानिपातनम् ।**
**पुरीषापूरणं चास्ये महिषासनशासनात् ।।२९।।**

**काषायदण्डिनो भाषायां दोषापादके मम ।**
**(क्रियते मत्कृतौ येषां विश्वासो निरुपाधिकः ) ।**
**तेषां न सन्ति मार्ताण्डेर्भीषा शास्ति मृषात्मके ।।३०।।**

(अन्वयः) काषायदण्डिनः भाषायां मम मृषात्मके दोषापादके महिषासन- शासनात् तप्तपाषाणतपनं तप्तमूषानिपातनम् आस्ये च पुरीषापूरणं क्रियते ।। येषां मत्कृतौ विश्वासः निरुपाधिकः तेषां मार्ताण्डेर्भीषा शास्ति च न सन्ति ।।

(व्या) **तप्तपाषाणतपनम्** ।। तप्तेषु पाषाणेषु तपनम् । तप्तमूषायां **निपातनम्** । **आस्ये च पुरीषापूरणम्** । पुरीषस्य विष्ठायाः आपूरणम् । इत्यादि **महिषासनशासनात्** । महिषासनो यमः तस्य शासनात् क्रियते (क्रियते एम्ब क्रियापद अध्याहार माडिद्दु. हागेये मूवत्तनेय श्लोकदल्लि येषां च मत्कृतौ विश्वासः एम्ब पदगळू अध्याहृतवे) ।।२९।। (इप्पत्तोम्भत्तने श्लोकद पूर्वार्धवादमेले 'क्रियते । मत्कृतौ येषां विश्वासो निरुपाधिकः' एम्ब अर्थ बरुव ओन्दु पङ्क्तिये बिट्टुहोदन्ते मूलग्रन्थविरुत्ते. अध्याहार माडिकोण्डु अन्वय तिळियबेकु)

**येषां** च **मत्कृतौ विश्वासः** । **तेषां** च । माताण्डिभीषाः । यातनारूपाः । **न सन्ति** । न भवन्ति । **मृषात्मके** 'वृन्दावनाख्यानम् अप्रमाणं स्वप्नलब्धत्वात्, स्वप्नदृष्टनिधिवत्' इत्याद्यनुमानरूपमृषात्मके मिथ्यावादिनिविषये सः यमः स्वदूतान् **शास्ति** 'एनं शिक्षयन्तु' इति ।।३०।।

**तस्मादलमलङ्कृत्य प्रकृत्या त्वं जनाकृतिः ।**
**सुकृत्यात्मक सत्कृत्यं सुतं मत्सत्कृतिं वद ।।३१।।**

**पुरुषोत्तम पूर्वेषां कीर्तिं सम्पादय प्रिय ।**
**यतिवर्येषु त्वं पौरुषादेवेह समन्वितः ।।३२।।**

(अन्वयः) – तस्मात् अलम् अलङ्कृत्य सुकृत्यात्मक! सत्कृत्यं मत्सत्कृतिं सुतं वद । त्वं प्रकृत्या जनाकृतिः (असि) । हे पुरुषोत्तम! त्वं यतिवर्येषु पौरुषादेव समन्वितः (सन्) पूर्वेषां कीर्तिं सम्पादय ।।

(व्या) **तस्मात्** । हे हयग्रीवकर्मन्दिन्! **अलं** तद्वचनेन । त्वं तु मत्कृतिं व्याख्यानेन (प्रामाण्यसमर्थनेन वा) **अलङ्कृत्य, हे सुकृत्यात्मक!** सत्कर्मकारक, एतदेव **सत्कृत्यमिति** मत्वा, **सुतं** लक्ष्मीनारायणाख्यं प्रति **मत्सत्कृतिं** मम सत्कृतिं वद । **त्वं च प्रकृत्या** सत्स्वभावेन **जनाकृतिः** न जायते इति जनो भगवान् नारायणः तस्य आकृतिः प्रतिमा असि । त्वयि भगवत्सन्निधानं वर्तते इत्यर्थः ।।३१।। (जनानुरागपात्रभव्यव्यक्तिरिति वा) **हे पुरुषोत्तम!** पुरुषश्रेष्ठ! प्रिय । **त्वं यतिवर्येषु पौरुषादेव समन्वितः** सन् **पूर्वेषां कीर्तिं सम्पादय** । (नरसिंहनरश्रेष्ठ इत्युक्तज्ञानिश्लाघ्यश्च भव इत्यर्थः) ।।३२।। इति ह.मु.प्र.सं.

४. लक्ष्मीनारायणाख्यविप्रप्रकरणम्।। श्लोकाः (३३ऽ३९)

(व्या) **'अलक्ष्मीकस्य'** इत्यारभ्य **'पूजितस्त्वं न संशयः'** इत्यन्तं चतुर्थं लक्ष्मीनारायणाख्यविप्रश्रोतृकप्रकरणम् ।।

**अलक्ष्मीकस्य लक्ष्मीनारायणाख्या कुतः सुत ।**
**अमङ्गलस्य वारस्य यथा मङ्गलवारता ।।३३।।**

**वियुज्यते तथाऽत्रापि ह्ययुक्तं पुण्यनाम तत् ।**
**प्रयुज्यते मया शिक्षा नियुक्ता या मनीषिभिः ।।३४।।**

(अन्वयः) हे सुत! अलक्ष्मीकस्य (तव) लक्ष्मीनारायणाख्या कुतः? यथा अमङ्गलस्य वारस्य मङ्गलवारता वियुज्यते । तथा अत्रापि तत् पुण्यनाम वियुज्यते । मनीषिभिः या शिक्षा नियुक्ता (सा) मया प्रयुज्यते ।।

(व्या) **अलक्ष्मीकस्येति** ।। हे **सुत!** लक्ष्मीनारायण! **अलक्ष्मीकस्य** दरिद्रस्य तव **लक्ष्मीनारायणाख्या कुतः?** 'तन्नाम मम पितृभिर्दत्तं अतस्तदाख्या मम' इत्यत आह – **अमङ्गलस्येति ।। यथा अमङ्गलस्य** प्रयाणादिविषये इत्यर्थः । **वारस्य मङ्गलवारता वियुज्यते** । (वियुज्यते न युज्यते अयुक्ता इत्यर्थः । नञर्थः वीत्युपसर्गः विप्रियं अप्रियम् इत्यर्थः

।)॥३३॥ **तथा । अत्रापि तत्** लक्ष्मीनारायण इति **पुण्यनाम वियुज्यते । मनीषिभिः या** अनृतभाषिणः तप्तपाषाणादिशिक्षा **नियुक्ता** । शास्त्रमनुसृत्येत्यर्थः । सा **मया प्रपूज्यते** ॥३४॥ (प्रपूज्यते एन्दु व्याख्यानकारर पाठ. वृं.नल्लि प्रयुज्यते एन्दिदे. अर्थवेनू हेच्चु व्यत्यासविल्ल. प्रपूज्यते एन्दरे युक्ता इत्याद्रियते एन्दर्थ. प्रयुज्यते एन्दरू समञ्जसा इति निर्णीयते एन्दर्थ.)

**नरके नरसिंहेन हिरण्यकशिपोर्यथा ।**
**परकीयस्य पारक्यसुखहीनस्य पापिनः ॥३५॥**

**प्रमाणं करवाणीति वचनं पुत्रिणश्च ते ।**
**न युज्यते गुणैर्हीन शरणं व्रज मां मुनिम् ॥३६॥**

(अन्वयः) यथा नरसिंहेन पापिनः परकीयस्य पारक्यसुखहीनस्य हिरण्यकशिपोः नरके (तथा तवापि) । हे गुणैर्हीन! पुत्रिणश्च ते 'प्रमाणं करवाणि' इति न युज्यते । मुनिं मां शरणं व्रज ॥

**(व्या) यथा पारक्यसुखहीनस्य । परकीयस्य** शत्रोरित्यर्थः । **हिरण्यकशिपोः** (पापिनः जीवद्वयमध्ये मुक्त्ययोग्यस्य हिरण्यकशिपोः इति यावत्) **नरसिंहेन । नरके** तथात्रापि इत्यर्थः (नरसिंहेन यथा हिरण्यकशिपुनामक आवेशरूपेण विद्यमानदैत्यस्य नरकपतनं नियुक्तं अनुमोदितं च । तथा मयापि आख्याननिन्दकानां या शिक्षा यमेन प्रयुक्ता सा न्याय्या इत्यनुमता इति पूर्वेणान्वयः)। यद्वा **नरके** इति ॥ स्वभक्तप्रह्लादद्रोहित्वात् । नरसिंहेन हिरण्यकशिपो यथा तथात्रापीत्यर्थः ॥३५॥ **प्रमाणमिति ॥** 'विप्र एव स्वकृतं वक्ति । न गुरुराजः' इति तत् **न युज्यते ।** कुतः आख्यानस्य मत्कृतत्वात् । अतो मिथ्यावचनदोषपरिहारार्थं हे **गुणैर्हीन** (मुनिं) **मां शरणं व्रज** ॥३६॥ (पुत्रिणः पुत्रवतः तव प्रमाणं करवाणीति प्रतिज्ञा न युक्ता । मिथ्याप्रतिज्ञा पुत्रमरणप्रापिका इति भावः ।)

**सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।**
**तथ्यं तथ्यं पुनस्तथ्यं कथ्यते तव नान्यथा ॥३७॥**

**त्वदुक्तिः सर्वथा चात्र हृदयस्य ममान्तक ।**
**कितवाऽयुधसन्दोहसम्मिता नात्र संशयः ॥३८॥**

**सफला वागिति प्रोक्ता ह्यलं सन्त्यक्तवानसि ।**

**उपलत्वं न सन्देहो ह्यलसत्वाद् द्विजाधम ।।३९।।**

(अन्वयः) तव (कृति विषये) सत्यं सत्यं पुनः सत्यं तथ्यं तथ्यं पुनश्च तथ्यं (मया) कथ्यते । अन्यथा न ।। हे मम हृदयस्य अन्तक! अत्र त्वदुक्तिः सर्वथा आयुधसन्दोहसम्मिता (समाना स्यात्) । हे कितव! अत्र न संशयः ।। हे द्विजाधम! (मे) वाक् सफला इति प्रोक्ता त्वं सं (सम्यक्) त्यक्तवान् असि । हि । अलसत्वात् (तव) उपलत्वं (पाषाणत्वं) न सन्देहः हि ।।

(व्या) मयैव आख्यानं कृतमिति विषये **तव** त्वामुद्दिश्य **सत्यं सत्यं पुनः सत्यं तथ्यं तथ्यं पुनश्च तथ्यं** मया **कथ्यते नान्यथा** ।।३७।। हे **मम हृदयस्य अन्तक** । दुःखदत्वेन नाशक । लक्ष्मीनारायण त्वदुक्तिः सर्वथा । अत्र च मत्कृतिविषये । **हे कितव!** कपटिन्! **आयुधसन्दोहसम्मिता** = आयुधानां कुठारादीनां सन्दोहः समूहः । तस्य सम्मिता । समाना स्यात् । अत्र **संशयः न** ।।३८।। मम कृतिरूपा **वाक् सफला** फलसहिता **इति** प्रोक्ते, **हे द्विजाधम! अलं** सम्यक् तां **त्यक्तवानसि** । अतः तव **अलसत्वात् उपलत्व**मेव पाषाणत्वमेव युक्तम् । **न सन्देहः** ।।३९।। इति ल.ना. श्रो.प्र.सं. ।।

५. शेषाद्रिपण्डितप्रकरणम् ।। श्लोकाः (४०ऽ४३)

**पामाधे(पापादे)र्व्यापनार्थं तु धैर्याद्वा बुद्धिशौर्यतः ।**
**उर्व्यां त्वमवदः सर्वे वृथा गर्वेण गर्हिताः ।।४०।।**

**विद्वत्सु बुद्धिचातुर्ये त्वादृशो नास्ति नन्दन ।**
**वृन्दावनपतीनां तु मादृशो नास्त्यभीष्टदः ।।४१।।**

(अन्वयः) बुद्धिशौर्यतः वा धैर्यात् पामाधेर्व्यापनार्थं उर्व्यां सर्वे गर्वेण गर्हिताः (इति) त्वम् अवदः ।। हे नन्दन! बुद्धिचातुर्ये विद्वत्सु त्वादृशः नास्ति । वृन्दावनपतीनां (मध्ये) तु मादृशः अभीष्टदः नास्ति ।।

(व्या) हे शेषाद्रिपण्डित! त्वं 'मदितरे **सर्वे गर्वेण गर्हिताः**' निन्दिताः इति **अवदः** । उक्तवानसि । तत् । **पापादेः व्यापनार्थं** वा इति चेद्वदसि (एल्ला पण्डितरू दुरहङ्कारिगळु एन्दु निन्दिसि आत्मश्लाघने माडिकोण्डरे अवर पापदुःखगळु होगळिकोण्डवनिगू व्यापिसुत्ते. अदरिन्द पापवृद्धिये होरतु इन्नेनू प्रयोजनविल्ल. 'धैर्यतः' एन्दरे औद्धत्यदिन्द एन्दर्थ. शेषाद्रिपण्डित स्मार्तर गुंपिगे सेरिदवनु.

अवर मध्ये अवनु श्रेष्ठने. निशितप्रमाणगृहिगळाद विद्यावन्तराद विद्यावन्तराद द्वैतिगळ समाजदल्लि अवनिगे स्थानविल्ल) । तर्हि शृणु ।।४०।। त्वादृशः बुद्धिचातुर्ये विद्वत्सु कोपि नास्ति । हे नन्दन! वृन्दावनपतीनां वृन्दावनस्थानां सन्न्यासिनां तु मध्ये मादृशः अभीष्टदः नास्ति ।।४१।।

**अस्मिन्नर्थे च साक्षी यः सुक्षीणो ब्राह्मणो मया ।**
**पक्षीकृतः पुत्र किं वा वक्ष्यामि पुनरेव च ।।४२।।**

**उज्जीवितस्य मज्जात कुब्जापतिपरायण ।**
**त्वज्जातीनां समाजेन पूजितस्त्वं न संशयः ।।४३।।**

(अन्वयः) हे पुत्र! सुक्षीणः ब्राह्मणः मया पक्षीकृतः; उज्जीवितस्य च (सः) अस्मिन् अर्थे साक्षी एव च । पुनः च किं वा वक्ष्यामि? हे मज्जात! कुब्जापतिपरायण! त्वत् जातीनां समाजेन त्वं पूजितः । (अत्र) न संशयः ।।

(व्या) अस्मिन् अर्थे (पूर्वोक्तविषयदल्लि एन्दरे अभीष्टप्रदरल्लि नानु असदृशनु एन्दु तोरिसलु वृद्धब्राह्मणनन्नु नन्न कृपापात्रनन्नागि माडिकोण्डिद्देने. अवन अपमृत्युवन्नु तप्पिसि बदुकिसिद्देने. हीगे इतर सन्न्यासिगळु यारू २२०० श्लोकगळन्नु दड्ड ब्राह्मणन स्वप्नमूलक होरगे तन्दिल्ल एन्दु भाव.) च । हे पुत्र! यः सुक्षीणः ब्राह्मणः, सः मया पक्षीकृतः । पुनरेव च उज्जीवितः ।।४२।। हे कुब्जा-पतिपरायण! कुब्जापतिः कृष्णः । तत्परायण । हे मज्जात! किं वा पुनरेव च वक्ष्यामि । त्वज्जातीनां समाजेन त्वं पूजितोऽसि । अत्र संशयः न ।।४३।।

## ६. विप्रप्रकरणम् ।। श्लोकाः (४४-४८)

(व्या) 'नाध्यापयामि' इत्यारभ्य 'तव विप्र न संशयः' इत्यन्तं विप्रश्रोतृकं षष्ठं प्रकरणम् ।।

**नाध्यापयामि चाध्यायपर्यन्तं तव विप्रक ।**
**त्वमद्धा स्वाध्यायहीनस्तावदद्यप्रभृत्यतः ।।४४।।**

**नन्दनेन समिचीनं न दत्तं वस्त्रमप्युत ।**
**कन्दाशनेन्द्रभक्तस्य श्रीपतेः सर्वथाऽत्र तु ।।४५।।**

**कन्दाशनेन्द्रभक्तस्य तव विप्र सभाग्रतः ।**

**तस्मादलमलं कृत्या त्वां वृथा श्रमयाम्यहम् ।।४६।।**

(अन्वयः) हे विप्रक! त्वम् अद्धा स्वाध्यायहीनः (असि) अतः अद्यप्रभृति तव अध्यायपर्यन्तं न अध्यापयामि ।। हे विप्र! अत्र नन्दनेन श्रीपतेः कन्दाशनेन्द्र-भक्तस्य तव सभाग्रतः समीचीनं वस्त्रं सर्वथा तु न दत्तम् ।। तस्मात् अलमलं त्वां कृत्या वृथा अहं (न) श्रमयामि ।।

**(व्या) नाध्यापयामीति** ।। हे **विप्रक! अद्यप्रभृति अध्याय**समाप्तिपर्यन्तं **तव नाध्या-पयामि** = न कथयामि । **अतः** । **तं** । **तावत्** (तावत् पुनः ई अध्यायपरिसमाप्तिगागि श्लोकगळन्नु स्वप्नदल्लि काणिसिकोण्डु बोधिसुववरेगू एन्दर्थ) **अद्धा** = अञ्जसा । **स्वाध्यायहीनः** पाठहीनः भव ।।४४।। (सर्वथा) **श्रीपतेः** हयवदनस्य । **कन्दाशनेन्द्रभक्तस्य** मम च भक्तस्य । तव । **नन्दनेन** श्रीपतिना (मठीयअधिकारिणा) **समीचीनम्** उत्तमं **वस्त्रमपि** । **अत्र च न दत्तम्** **उत** । दत्तं न वा ।।४५।। **हे विप्र! कन्दाशनेन्द्रभक्तस्य** तव सभाग्रतः कृतिकथनेन न वृथा श्रमयामि (न वृथा श्रमयामि एन्दु तात्पर्य. मूलदल्लि 'नञ्' इल्ल.) । **तस्मात् अलं,** कालं हित्वा । अलं कालयापनेनालम् ।।४६।।

**हित्वा कलिमलं विप्र वद वृन्दावने कृतिम् ।**
**मन्मध्यस्थहयग्रीवो ग्रासं ते प्रति दास्यति ।।४७।।**

**वेदाग्र्यं भारतं चापि वद वृन्दावनाग्रतः ।**
**प्रेरयित्वा च मत्पुत्रं तव प्रिय न संशयः ।।४८।।**

(अन्वयः) हे विप्र! कलिमलं हित्वा वृन्दावने कृतिं वद । मन्मध्यस्थहयगीवः ते ग्रासं प्रति दास्यति ।। हे प्रिय! वृन्दावनाग्रतः वेदाग्र्यं भारतं च अपि वद । मत्पुत्रं च प्रेरयित्वा तव (प्रति दास्यति) । न संशयः ।।

**(व्या) हे विप्र! कलिमलं हित्वा** । वृन्दावनाग्रतः **कृतिं वद** । **ते** तुभ्यम् । **ग्रासं** । **मन्मध्यस्थहयग्रीवः** दास्यति ।।४७।। **वेदाग्र्यं** वेदः अग्र्यः श्रेष्ठः प्रमाणत्वेन यस्य तत् वेदाग्र्यम् । तादृशं **भारतं चापि** (वेदाग्र्यं एन्दरे वेदानुगृहीतप्रामाण्यकं भारतं एन्दु व्याख्यानमाडिदन्तायितु. आदरे गुरुराजरिन्द विवक्षितवाद अर्थान्तरवु 'वेदापेक्षया अर्थतः श्रेष्ठः' एन्दे.) (**'वेदादपि परं चक्रे**

**भारतं शास्त्रमुत्तमम्'** इति वचनात् वेदपाठापेक्षया अधिकपुण्यप्रदत्वेन, दशार्थयुक्तत्वेन, वेदादज्ञातहरिमहिमाप्रतिपादकत्वेन च वेदात् श्रेष्ठं भारतं) **वृन्दावनाग्रतः वद** । हे **प्रिय! मत्पुत्रं** श्रीपतिं **प्रेरयित्वा च तव** ग्रासं दास्यामि ।।४८।। विप्र.श्रो.प्र.सं।।

७. श्रीपतिप्रकरणम्।। सार्धश्लोकौ (४९ऽ५०१/२)

(व्या) **कारयित्वा भारतस्य'** इत्यारभ्य **'हा मृतोऽसि गते मयि'** इत्यन्तं श्रीपति-श्रोतृकं सप्तमं प्रकरणम् ।।

**कारयित्वा भारतस्य त्वया सेवामपि प्रिय ।**
**श्रीपते श्रेष्ठवित्तं तु न दत्तं पुत्र किं वदे ।।४९।।**

**जनानां कर्णजाड्यं सः हरते पाठतः कृतेः ।**
**यावत्तव शरीरे तु वसाम्यहमिह प्रिय ।।५०।।**

**तावज्जीवसि हे विप्र हा मृतोऽसि गते मयि ।।**

(अन्वयः) हे पुत्र! श्रीपते! त्वया भारतस्य सेवामपि कारयित्वा श्रेष्ठवित्तं तु न दत्तम् । हे प्रिय! किं वदे? सः कृतेः पाठतः जनानां कर्णजाड्यं हरते । हे प्रिय! इह यावत् तव शरीरे तु अहं वसामि तावत् (त्वं) जीवसि । हे विप्र! मयि गते मृतः असि ।।

(व्या) **हे प्रिय! श्रीपते! त्वया** विप्रद्वारा **भारतस्य** पठनेन मत्सेवां कारयित्वापि, हे **पुत्र!** तस्मै विप्राय **श्रेष्ठवित्तं** समीचीनवस्त्रादि **न दत्तम्** । **अहं किं वदे?** नोचितमिदम् ।।४९।। **सः** विप्रः । **कृतेः पाठतः जनानां कर्णजाड्यं हरते** । 'उच्चस्वरेण पठति' इत्यर्थः । तव ममावज्ञा न क्षेमकारिणी स्यात् । तव प्राणा अपि मदधीना इति स्वमाहात्म्यं कथयति – **यावदिति** ।। **हे प्रिय! यावत् तव** इह **शरीरे वसामि** ।।५०।। **हे विप्र! तावज्जीवसि** । **मयि गते** (हा मृतोऽसि) **हा** इति विषादे शोके वा । 'हा विषाद शुगार्तिषु' इत्यमरः ।।५०।। श्रीपति श्रो. सम्पूर्णम् ।।

८. दाम्बलग्रामस्थनारायणप्रकरणम् ।। सार्धश्लोकौ (५१ऽ५२१/२)

(व्या) 'हे दाम्बल पित्तमौळे' इत्यारभ्य 'मनःकामं प्रयाति च' इत्यन्तं दम्बळ-ग्रामस्थनारायणश्रोतृकं अष्टमं प्रकरणम् ।।

**हे दाम्बळ पित्तमौळे नारायण गुणाधम ।।५१।।**

**कलहं कर्तुमुद्युक्तस्त्वं धिग्बालं तवाधुना ।**

(अन्वयः) हे दाम्बळ! पित्तमौळे! गुणाधम! नारायण! अधुना त्वं कलहं कर्तुमुद्युक्तः; बालं तव धिक् ।।

(व्या) हे दाम्बळ! पित्तमौळे! गुणाधम नारायण! त्वं कलहं कर्तुम् उद्युक्तोऽसि । अतस्त्वां तव बालं पुत्रमपि धिक् ।

**कनकाकृष्णभट्टोऽयं कनकात्तमना अपि ।।५२।।**

**मनाङ्मज्ज्ञानसम्पत्या मनःकामं प्रयाति च ।**

(अन्वयः) अयं कनकाकृष्णभट्टः कनकात्तमना अपि च मनाक् मज्ज्ञानसम्पत्या मनःकामं प्रयाति ।।

(व्या) अधुना अयं कनकाकृष्णभट्टः कनकात्तमना = कनकलोभेन आत्तं स्वीकृतं मनः यस्य । तादृशोऽपि मनाक् = अल्पत्वेन मद्ज्ञानसम्पत्त्या = मम (मद्विषयक) किञ्चित्-ज्ञानेनेत्यर्थः । मनः कामं यथेच्छं प्रयाति = सञ्चरति ।।५२।।

९. विठ्ठलप्रकरणम्।। श्लोकाः (५३-५९ १/२)

(व्या) 'हे नन्दन' इत्यारभ्य 'दिवाप्यहो' इत्यन्तं विठ्ठलश्रोतृकं नवमं प्रकरणम् ।।

**हे नन्दन शृणु स्पष्टं शिष्टस्य वचनं मृषा ।।५३।।**

**नागाह्वपण्डितस्यासीत्तस्याभीष्टं कथं भवेत् ।**
**नानृतात्पातकं नास्ति कोऽनृतं वदते बुधः ।।५४।।**

**सोऽनृतात्मा नश्यतीति श्रीनरसिंहोऽभिजानते ।**
**तस्मान्नवक्तव्यमेतदनृतं त्वमृतार्थि(त्म)भिः ।।५५।।**

(अन्वयः) हे नन्दन स्पष्टं शृणु । शिष्टस्य अपि नागाह्वपण्डितस्य वचनं मृषा आसीत् । तस्य अभीष्टं तु कथं भवेत्? 'नानृतात् पातकं नास्ति' 'कोऽनृतं वदते बुधः' 'सोऽनृतात्मा नश्यति' इति श्रीनरसिंहः अभिजानते । तस्मात् अमृतात्मभिः एतत् अनृतं तु न वक्तव्यम् ॥

**(व्या) हे (नन्दन)** विट्ठलं **स्पष्टं शृणु । शिष्टस्यापि नागाह्वपण्डितस्य** = शेषाद्रि-पण्डितस्य । 'विप्रस्यैव कृतिः' इति मृषावचन**मासीत्** ॥५३॥ **तस्याभीष्टं कथं** भवेत् **अनृतात्** श्रेष्ठं **पातकं नास्ति । को बुधः अनृतं वदते?** वदति । ('नानृतात् पातकं' इत्येकं वाक्यं; 'नास्तिकोऽनृतं वदतेऽबुधः' इत्यपरं वाक्यम् । अनृतात् परम् अधिकं पापं नास्ति इत्यध्या-हारेण योजना । अबुधः नास्तिकः । बुधोऽपि नास्तिको भूत्वा इति वा । अनृतं वक्ति । इत्यर्थः) ॥५४॥ **सः अनृतात्मा नश्यति** = ज्ञानभ्रष्टो भवति **इति** श्रीनृसिंहो हरिः । अभिजानाति सम्यक् जानाति । तस्य सर्वज्ञत्वादित्यर्थः । **तस्मादेतदनृतं तु अमृतात्मभिः** जीवद्भिः **न वक्तव्यम्** ॥५५॥

**किम् ऋतात्मा वदत्येवं श्रीनृसिंहमतं गतः ।**
**अहं न निन्दयामि त्वां स्वभावः कथ्यते तव ॥५६॥**

**मया त्वया न कर्तव्यः कलहोऽत्र कलिप्रियः ।**
**स्वरूपस्यानपायित्वाद्वृथा किं कलहेन ते ॥५७॥**

**कलहे क्रियमाणेऽपि स्वरूपं गच्छते नु किम् ।**

(अन्वयः) – श्रीनृसिंहमतं गतः ऋतात्मा एवं वदति किम्? अहं त्वां न निन्दयामि, तव स्वभावः कथ्यते ॥ अत्र मया कलिप्रियः त्वया (सह) कलहः न कर्तव्यः । स्वरूपस्य अनपायित्वात् ते कलहेन किं (भवेत्) वृथा? (स वृथा एव) । कलहे क्रियमाणेऽपि स्वरूपं गच्छते नु किम्?

**(व्या) श्रीनृसिंहमतं गतः** = श्रीनृसिंहस्याभिप्रायं प्राप्तः । **ऋतात्मा** प्रह्लादः (प्रह्लादः ऋतात्मा – ई विषयदल्लि सुधन्वोपाख्यान नोडबेकु. अनु ३२ अध्याय; सभापर्व (९०ने अध्याय ६७रिन्द ८९ श्लो) उदयोगपर्व अध्याय ३५ श्लो.५ऽ११रल्लू इदे. केशिनीनामक कन्यार्थवागि विरोचनन सङ्गड सुधन्वा नामक आङ्गिरसब्राह्मणनिगे ब्राह्मण,क्षत्रियर मध्यदल्लि यारु श्रेष्ठ एम्ब विवाद बन्तु. प्रह्लाद सुधन्वने

गेद्दनु एन्दु हेळिदनु.) एवं मृषा वदति किम् त्वामहं न निन्दयामि । किन्तु तव स्वभावः कथ्यते ॥५६॥ अत्र कलिप्रियः कलहः मया त्वयापि च न कर्तव्यः । स्वरूपस्य अनपायित्वात् = नाशरहितत्वात्, ते कलहेन किं भवेत् सः वृथैव ॥५७॥ (व्या) क्रियमाणे कलहे! स्वरूपं गच्छते नु । 'नु पृच्छायां विकल्पे च' इत्यमरः । किम्?

**अन्यथा मत्कृतिरियं न विप्रकृतिरित्यथ ॥५८॥**

**प्रत्ययस्ते भवेदत्र भक्तिस्तस्माज्जनिष्यते ।**
**दिवा वा यदि वा रात्रौ निद्रायां भद्रमस्तु ते ॥५९॥**

**वक्ष्ये स्वप्नेऽथवाऽस्वप्नोऽप्यहं त्विह दिवाऽप्यहो ॥**

(अन्वयः) अन्यथा अत्र 'इयं मत्कृतिः न विप्रकृतिः' इति प्रत्ययः ते भवेत्; अथ तस्मात् भक्तिः जनिष्यते ॥ ते दिवा वा यदि वा रात्रौ निद्रायां भद्रमस्तु । अहम् इह तु स्वप्ने अथवा अस्वप्नः अपि दिवा वा वक्ष्ये । अहो ॥

(व्या) ननु मत्स्वरूपं (मत्स्वरूपं एम्बुदु 'विठ्ठलर शङ्के. मत्स्वरूपं = विठ्ठलस्य स्वरूपं सात्विकमेव इति चेदाह एन्दु अर्थ) सदेव नासदित्यत आह – अन्यथेति ॥ यदि तव स्वरूपं सत् स्यात् तर्हि 'इयं मत्कृतिः विप्रकृतिर्न इति' अथ त्वत्स्वरूपनिर्णयानन्तरं (स्वल्पाधिकार प्राप्त्यनन्तरमेव) ॥५८॥ अत्र ते प्रत्ययः = अनुभवः विश्वासो वा (विश्वासजनकज्ञानविशेषः), 'प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु' इति विश्वः, भवेत् । तस्माच्च भक्तिः जनिष्यते = जनिष्यति । ननु 'प्रत्ययो भक्तिश्च कदा भवेत्' इत्यत आह दिवेति ॥ दिवा रात्रौ वा तव निद्रायां सत्यां यदि स्वप्ने । अथवा अस्वप्ने जाग्रद्दशायां आकाशवाणीमिव वक्ष्ये । दिवापि । अहो आश्चर्यं कथयति । देवानाम् आकाशवाणी भवित्री प्रसिद्धैव । माभीः । ते भद्रमस्तु ॥ विठ्ठल.श्रो.सम्पूर्णम् ॥

१०. लक्ष्मीपतिप्रकरणम् ॥ श्लोकाः (६०-६८)

(व्या) 'गेहं नास्ति' इत्यारभ्य 'निशाम्याशु सुविस्मितः' इत्यन्तं लक्ष्मीपतिश्रोतृकं दशमं प्रकरणम् ॥

**गेहं नास्तीति ते चिन्ता माऽस्तु देहं(हे) वसाम्यहो ॥६०॥**

**सोऽहं महानुभावस्ते गेहदो मम देहदः ।**

(अन्वयः) हे लक्ष्मीपते! 'गेहं नास्ति' इति चिन्ता ते चिन्ता माऽस्तु । तव (देहं) देहे वसामि । अहो ।। सोऽहं महानुभावः । ते मम देहदः । गेहदः (अपि) ।।

(व्या) **हे लक्ष्मीपते!** 'मम गुरोः वादिराजतीर्थस्य सेवां (पूजां) कर्तुं मम **गेहं नास्ति** । कथं करोमि' इति **ते चिन्ता मास्तु** । ननु चिन्ताभावेन गृहप्राप्तिः कथं स्यात्? इत्यत आह – **देह इति** ।। तव **देहे वसामि** । 'तत्स्थमेव मां पूजय' इत्यर्थः । **अहो** इत्याश्चर्यम् ।।६०।। 'देहे वसामि' इत्यनेन त्वया न विस्मयः कर्तव्यः । मम तादृशसामर्थ्ययुक्तत्वादित्याह – **सोऽहमिति** ।। हे लक्ष्मीपते! **सोऽहं महानुभावः** = महामाहात्म्यवान् **ते** तुभ्यं । **मम देहदः** । अहमेव आत्मदेहेन त्वयि वर्ते । कथं **गेहदो** न स्याम् (इति कैमुत्ययुक्तिः) ।

**बलात्कारेण मत्पुत्रं वद लक्ष्मीपते कृतिम् ।।६१।।**

**कुलान्युद्धर पूर्वेषां दश पूर्वान् दशापरान् ।**

(अन्वयः) हे लक्ष्मीपते! मत्पुत्रं बलात्कारेण कृतिं वद । पूर्वान् दश अपरान् दश पूर्वेषां कुलानि उद्धर ।।

(व्या) अतः **हे लक्ष्मीपते! बलात्कारेण** मत्कृतिं **मत्पुत्रं** श्रीपतिं (मत्पुत्रं श्रीपतिं एन्दिदे. आदरे श्रीपतिये लक्ष्मीपति एन्दु हिन्दे सूचितवागिदे. श्रीपादानां प्रति() एन्दिरबेकु एन्निसुत्ते. एकेन्दरे वृन्दावनाचार्यरु लक्ष्मीपतियिन्द श्रवणमाडिद मेले कृतिज्ञान अवरिगे लक्ष्मीपतिगू हेळुवष्टु मत्तु प्रकरणविभागनिर्देशमाडुवष्टु विस्तारवायितु एन्दु हिन्दे सूचितवागिदे) प्रति **वद** ।। तेन पुण्येन च **पूर्वान् दश अपरान् दश पूर्वेषां कुलानि** उद्धर (लक्ष्मीपतिगे कृतिशोधनवन्नु सत्पात्ररिगे माडि माडि पुण्यवृद्धि आगुत्ते. कालविशेषदल्लि अपरोक्षज्ञानवे आगुत्ते एन्दु इल्लि सूचितवागिदे.)

**हे सुताध्यायकरणं कुतो न कृतवानसि ।।६२।।**

**बत स्वाध्यायतिथिषु त्वं कुरुष्व प्रियोऽसि चेत् ।**
**हिमकोकिल एवाहं वक्तव्यांशेऽपि वा कलौ ।।६३।।**

**युगे जलचरा यद्वच्चाश्वल्यनिरता नराः ।**

(अन्वयः) हे सुत! अध्यायकरणं कुतः न कृतवान् असि? बत । त्वं प्रियः असि

चेत् स्वाध्यायतिथिषु त्वं कुरुष्व । कलौ युगे यद्वत् जलचराः (तद्वत्) जनाः चाञ्चल्यनिरताः (सन्ति) । (अतः) वक्तव्यांशे अपि अहं हिमकोकिल एव ॥

(व्या) हे **सुत! अध्यायकरणं** द्विसहस्रपद्येषु पूर्वोक्तप्रकारेण अध्यायानां करणम् । **कुतः न कृतवानसि** ॥६२॥ **'बत'** इत्यनकम्पायाम् । अस्तु । **त्वं प्रियोसि चेत्**, स्वाध्यायपठनस्य प्रतिपदादिवर्जम् (द्वितीयादि) तिथिषु **कुरुष्व** । स्ववक्तृत्वनियममाह – **हिमकोकिल इति** ॥ हिमकोकिलः = हिमन्तर्तौ कदाचित् कोकिलः कूजति । तद्वत् **अहं** वच्मि ॥६३॥ तत्कारण-माह – **युगे इति** ॥ **यद्वत् जलचराः** तद्वत्कलौ **युगे** । **नराः चाञ्चल्यनिरताः** । अतः इत्यर्थः ॥६३॥

**स उच्चकाशे धवलोदरोदरो दाध्मायमानः (दध्मामि तान्) करकञ्जसम्पुटे ॥६४॥**

**उरुक्रमस्याधरशोणशोणिमा यथाब्जषण्डे कलहंस उत्स्वनः ॥६५॥**

**इति भागवतं पद्यं द्रष्टव्यं नन्दन त्वया ।**
**वन्दनं मम कर्तव्यं वृन्दावनकृतेरपि ॥६६॥**

**तादृशं शङ्खमादाय निःशङ्कोऽहं महामते ।**
**दध्मामि तान् प्रपुङ्खानि विस्मितश्चाङ्कजो मुनिः ॥६७॥**

(अन्वयः) हे नन्दन! 'यथा अब्जषण्डे कलहंस उत्स्वनः (तथा) उरुक्रमस्य करकञ्जसम्पुटे धवलोदरोदरः अधरशोणशोणिमा दाध्मायमानः उच्चकाशे' इति भागवतं पद्यं त्वया द्रष्टव्यम् । मम वृन्दावनकृतेः अपि वन्दनं (त्वया) कर्तव्यम् ॥ हे महामते! निश्शङ्कः अहं तादृशं शङ्खम् आदाय तान् प्रपुङ्खानि दध्मामि । अङ्कजः मुनिः विस्मितः अभूत् ॥

(व्या) ननु वक्तृत्वाभावकाले श्रीमद्भिः किं क्रियते इत्यत आह – **स इति** ॥ **भागवतं पद्यं त्वया द्रष्टव्यम्** । कः इत्यत आह – **स इति** ॥ **अब्जखण्डे** = पद्मखण्डे । **यथा कल-हंसः** = जलकुक्कुटः । **उत्स्वनः** उच्चः स्वनः यस्य सः । तादृशः सन् गायति । रवं कुरुते । स च यथा शोभते । तथा स पाञ्चजन्याख्यः **(धवलोदरोदरो)** धवलोदरः धवलः शुभ्रम् उदरं

मध्यभागो यस्य । तादृशः दरः शङ्खः । **उरुक्रमस्य** = त्रिविक्रमस्य नारायणस्य । **करकञ्ज-सम्पुटे** = करकञ्जरूपसंपुटे, **दाध्मायमानः** = वाद्यमानः । **अधरशोणशोणिमा** = अधरयोः शोणः रक्तत्वं । तेन शोणिमा रक्तप्रभायुक्तः । **उच्चकाशे** शोभितवान् प्रकाशते इति ।।६५।।

**मम वृन्दावनकृतेरपि वन्दनं त्वया कर्तव्यम्** ।।६६।। तेन कोऽर्थो मया चिन्तनीय इत्यत आह – **तादृशमिति** ।। हे **महामते! अहं निःशङ्कः** सन् **तादृशं** तत्समानं **शङ्खम् आदाय** गृहीत्वा मया दाध्मायि वादितः । तेन यथा रणाङ्गणे **प्रपुङ्खानि** बाणावयवाः कीर्यन्ते तथा **तान्** शब्दावयवान् शब्दपरमाणून् । क्रमेण निशाम्य दृष्ट्वा श्रुत्वा च । **अङ्कजः** ब्रह्मणः अङ्कजः नारदः **विस्मितोऽभूत्** ।।६७।।

**अशनि(श्वासनिः)श्वासहीनं मे भासमानास्यपङ्कजम् ।**
**हयास्यदासस्य सोऽयं निशाम्याशु सुविस्मितः ।।६८।।**

(अन्वयः) हयास्यदासस्य मे अयं अशनिश्वासहीनं भासमानाऽस्यपङ्कजं निशाम्य सः आशु सुविस्मितः (अभूत्) ।।

**(व्या)** अपि च **मे** श्वासः श्वासहीनं श्वासोच्छ्वासहीनम् । **(भासमानास्यपङ्कजं)** भासमानं च तत्, आस्य पङ्कजं = मुखकमलं । **निशाम्य** = दृष्ट्वा । **सुविस्मितोऽभूत्** । एवं श्रीहयवदनप्रीत्यर्थं शङ्खसेवां करोमि इत्यर्थः ।।ल.प.प्र.सं.।।

११. विप्रप्रकरणम् ।। श्लोकः (६९)

**(व्या)** **'अंहो मुग्वचनं'** इत्यारभ्य **'महिष्ठम्'** इत्यन्तं विप्रश्रोतृकं एकादशं प्रकरणम् ।।

**अंहोमुग्वचनं हित्वा गह्वरेति त्वयोच्यते ।**
**उपह्वरे वदस्व त्वं महिष्ठं (न सभासु च) ।।६९।।**

(अन्वयः) त्वया 'अंहो मुग्' (इति) वचनं हित्वा 'गह्वरे' इति उच्यते । महिष्ठं (अंहोमुगिति वचनं) त्वम् उपह्वरे वदस्व ।।

**(व्या)** हे विप्र! 'अंहोमुग्' इति मद्वचनं **हित्वा** पूर्वोक्तमित्यर्थः(१७।९६) **'गह्वर'इति त्वया उच्यते** । तदर्थस्तु दाम्भिकवचनमिति भवति । 'गुहा दम्भौ गह्वरे द्वे' इत्यमरः । मैवं वद । किन्तु तादृशं **महिष्ठम्** । अंहोमुगिति वचनं त्वम् **उपह्वरे** पाठकाले मदन्तिके वद

।।६९।। विप्रपकरणं सम्पूर्णम् ।।

१२. श्रीपतिप्रकरणम् ।। सभासुचेत्यारभ्य श्लोकौ (७०-७१)

(व्या) 'न सभासु च' इत्यारभ्य 'लोकान्ततोपि तम्' इत्यन्तं द्वादशं श्रीपतिश्रोतृक-प्रकरणम् ।।

**.................... न सभासु च ।।**

**त्यागान्विता वदस्व त्वं त्वद्वागद्य न शोभते ।**
**नागाह्वपण्डितं चात्र मद्वागाशु त्वयोच्यताम् ।।७०।।**

**निःशङ्क एव श्रीकान्त निरान्तङ्कं वचो मम ।**
**एकान्ते न मृषैकान्तं वद लोकान्ततोऽपि तम् ।।७१।।**

(अन्वयः) हे श्रीकान्त! (श्रीपते!) सभासु त्यागान्विता च त्वं न वदस्व; अद्य त्वत् वाक् न शोभते । अत्र त्वया मद्वाग् नागाह्वपण्डितम् आशु उच्यताम् ।। निरान्तङ्कं मम वचः निश्शङ्क एव (सन्) एकान्ते एकान्तं तं वद । न मृषा वद । लोकान्ततः अपि वद ।।

(व्या) **हे श्रीकान्त!** श्रीपते! त्वं 'ब्राह्मणाय अन्नं न ददामि' इति अन्नत्यागात्मिकां वाचं सभासु न वदस्व । तेन किमित्यत आह – **त्वदिति** ।। **अद्य** सा वागात्मिका **वाक् न शोभते** । 'भ्रष्टप्रतिज्ञत्वात्' इत्यर्थः । यदि त्वया न दीयते, तथापि **अत्र नागाह्वपण्डितं** शेषाद्रिपण्डितं प्रति **मद्वाक्** 'ब्राह्मणाय अन्नं देहि' इति **आशु** शीघ्रम् **उच्यताम्** ।।७०।।

मम निराशङ्कं परपीडारहितं **वचः निःशङ्क एव** सन् एकान्ते एकस्यैव शेषाद्रिपण्डितस्यैव अन्ते समीपे । **एकान्तं** धृढं यथा भवति तथा । 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च' इत्यमरः । वद । **न मृषा वद** । ततश्च **लोकान्ततो**ऽपि लोकसमक्षमित्यर्थः । **तं प्रति वद** ।।७१।। श्री.श्रो.प्र.सं.।।

१३. हयग्रीवकर्मन्दिप्रकरणम् ।। श्लोकार्धम्(७११/२)

(व्या) **'उपरागम्'** इत्यारभ्य 'पश्य' इत्यन्तं हयग्रीवकर्मन्दिश्रोतृकं त्रयोदशं प्रकरणम् ।

**उपरागं हयग्रीवकर्मन्दिन् प्राप्तमग्रतः ।।**
**पश्य ............**

(अन्वयः) हे हयग्रीवकर्मन्दिन् अग्रतः प्राप्तम् उपरागं पश्य ।।

(व्या) हे हयग्रीवकर्मन्दिन्! **अग्रतः प्राप्तम् उपरागं** ग्रहणं पश्य ।। ह.क.प्र.सं.

१४. सीतापति श्रो. प्रकरणम् ।। श्लोकाः (७२-९०)

(व्या) **'सुग्रीवमित्र'** इत्यारभ्य **'तवार्थैः पूरयिष्यति'** इत्यन्तं चतुर्दशं सीतापतिश्रोतृकं प्रकरणम् ।।

**.... सुग्रीवमित्राह्व दुर्दानं कुरुते ऋतः ।।७२।।**

**नागाह्वपण्डितो यद्वन्मा मृषा गां त्वमब्रवीः ।**
**कोऽमृषावचनं ब्रूते कोविदस्त्वां विनेह च ।।७३।।**

(अन्वयः) हे सुग्रीवमित्राह्व! (सीतापते!) यद्वत् नागाह्वपण्डितः (तद्वत्) त्वं मृषा गाम् अब्रवीः । इह अमृषावचनं च कोविदः त्वां विना कः ब्रूते?

(व्या) **हे सुग्रीवमित्राह्व** सुग्रीवमित्रं रामः तदाह्व, सीतापते इत्यर्थः । हे सीतापते! अग्रतः प्राप्तं उपरागं ग्रहणं **पश्य** । **ऋते** = सत्यवचने **रतः** सन् ब्राह्मणाय **दानं कुरु** ।।७२।। हे सीतापते! **यद्वत् नागाह्वपण्डितः** शेषाद्रिपण्डितः । तद्वत् **त्वं मृषा गां** मृषावाक्यं **नाब्रवीः** । **इह च** त्वां **विना कः कोविदः अमृषावचनं** सत्यवचनं **ब्रूते** ।।

**पूर्वं तु मातुलव्याजादहं सकलजीवराट् ।**
**भूतळे दत्तवानस्मि कालज्ञः सार्धनिष्ककम् ।।७४।।**

**अहं त्रिलोकपूजितः कृतान्तलोकनायकः ।**
**अहं कुलोद्धृतिं ततोऽकरं च सौरिलोकतः ।।७५।।**

(अन्वयः) पूर्वं सकलजीवराट् कालज्ञः अहं भूतळे मातुलव्याजात् सार्धनिष्ककं दत्तवानस्मि । अहं त्रिलोकपूजितः कृतान्तलोकनायकः । ततः अहं सौरिलोकतः कुलोद्धृतिं अकरम् च ।।

(व्या) मम भौममाहात्म्यं शृणु इत्याह – **पूर्वं त्विति** ।। 'वृन्दावनप्रवेशात् पूर्वम्' इत्यर्थः । **मातुलव्याजात्** मातुलनिमित्तेन । **अहं** सकलजीवराट् जीवोत्तमोपि 'प्राप्ते नरेषु जनने नरवत्प्रवृत्तिः' इत्याचार्योक्तेः । **भूतळे** स्थितः । **कालज्ञः** तत्कुलोद्धारकाले जानातीति तादृशः सन् तदर्थं सार्धनिष्कप्रमाणं द्रव्यं ब्राह्मणेभ्यो दत्तवान् । गुञ्जानां अशीतिः कर्षः । तेषां हेम्नः अष्टाधिकशतके निष्कः । स च अर्धसहितः चतुःपञ्चाशत् कर्षयुतः । मिळित्वा द्विषष्ठ्यधिक-शतकर्षकप्रमाणमित्यर्थः ।।७४।।(८० गुलगञ्जि तूकक्के १कर्ष. १०८कर्षगळादरे न्दु निष्क. अर्ध निष्कवेन्दरे ५४कर्ष. सार्धनिष्क एन्दरे १६२कर्षगळष्टु चिन्न.) ननु नरकस्थकुलस्योद्धारः महासामर्थ्याभावे न सिद्ध्यति । कथं सोऽभूत् इत्यत आह – **अहमिति** ।। हे सीतापते! **अहं त्रिलोकपूजितः** । अत एव कृतान्तलोकस्यापि नायकः स्वामी । ततश्च । **अहं सौरिलोकतः** सौरेर्यमस्य लोकतः **कुलोद्धृतिं** मातुलकुलोद्धृतिम् **अकरं** कृतवान् ।।

(आख्यानवु पूर्तिफल कोडबेकादरे 'कोपरहितश्चेत् सुपावनं' एन्दिदे. (१९।२९)

ॐ नमो गणपतये मन्त्र एष उदाहृतः ।
गणपतिर्विघ्नराजो लम्बतुण्डो गजाननः ।।१।।
द्वैमातुरश्च हेरम्ब एकदन्तो गणाधिपः ।
विनायकश्चारुकर्णः पशुपालो भवात्मजः ।।२।।
द्वादशैतानि नामानि प्रातरुत्थाय यः पठेत् ।
विघ्नं तस्य भवेद्वश्यं न च विनघो भवेत् क्वचित् ।।३।।
महाप्रेताः शमं यान्ति पीड्यते व्याधिभिर्न च ।
सर्वपापाद् विनिर्मुक्तो ह्यक्षयं स्वर्गमश्नुते ।।४।।

**वृन्दावनाचार्यतोर्वीं हरते योऽतिरौद्रतः ।**
**स मद्वृन्दावनद्रोही ह्यभद्रं च भवेद् ध्रुवम् ।।७६।।**

**हरे स्मरे ते चरणे हर मे संसृतिं ऋणे ।**
**वरं तव करेणार्य स्पृश मां करुणां कुरु ।।७७।।**

**इत्यहं प्रार्थयाम्युग्रं हयग्रीवं महाग्रहम् ।**
**निग्राह्य चेन्द्रियग्रामं शीघ्रं नासाग्रलोचनः ।।७८।।**

(अन्वयः) (हे सीतापते!) यः अतिरौद्रतः वृन्दावनाचार्यकोर्वीं हरते सः मद्वृन्दा-

**वनद्रोही, ध्रुवं अभद्रं च भवेत् हि ।। ''हे हरे ते चरणे स्मरे । मे ऋणे संसृतिं हर । हे आर्य! वरं तव करेण मां स्पृश । करुणां कुरु ।।'' इति उग्रं महाग्रहं हयग्रीवम् अहं इन्द्रियग्रामं निग्राह्य, नासाग्रलोचनः (सन्) शीघ्रं प्रार्थयामि ।**

(व्या) हे सीतापते! **अतिरौद्रकः** अतिनीचः । **यः** कोपि **वृन्दावनाचार्यकोर्वीं** वृन्दावनाचार्यस्य उर्वीं क्षेत्रं हरते **स मद्वृन्दावनद्रोही** । तेन च तस्य **अभद्रम्** अमङ्गलं भवति । एतत् **ध्रुवं** निश्चयः ।।७६।। अपि च तदर्थं हयवदनं स्मरामीत्याह – **हरे इति** ।। **हे हरे! ते चरणे स्मरे** = स्मरामि । **मे ऋणे** त्वदाज्ञाकरणरूपऋणे (मत्सेवकानां मुक्तियोग्यानां ज्ञानादि-दानरूपऋणे) तद्विषये । **संसृतिं हर** । परिपूर्णं कृत्वा **मामनुगृह्णीष्व** ।।७७।। (वरं प्रार्थयन्तं मां हे आर्य! तव करेण स्पृश । करुणां मयि कुरु) ।

**इति** ।। **अहं उग्रं** = दैत्यभयङ्करम् । **महाग्रहं** = महान् ग्रहः दैत्यैःसह रणोद्योगः यस्य सः तथोक्तम् । तम् –

**'ग्रहोनिग्रहनिर्बन्धग्रहणेषु रणोद्यमे ।**
**सूर्यादौ पूतनादौ च सैंहिकयोपरागयोः'**

इति विश्वः । एतादृशं हयग्रीवं प्रति । **नासाग्रलोचनः** सन् । **इन्द्रियग्रामम्** इन्द्रिय-समुदायं, 'शब्दादिपूर्वे वृन्देपि ग्रामः' इत्यमरः । **निग्राह्य** निगृहीत्वा । 'सम्प्रेक्ष्य नासिकाग्रं स्वम्' इति गीतोक्तेः । शीघ्रं यथा भवति तथा । हृदये **स्मरे** । इति पूर्वेणान्वयः ।।७८।।

**मम सद्भक्तिसम्भूतिं ये वदन्ति बुधोदिताम् ।**
**तेषां सत्सम्पदः स्युस्ता मूर्तिमत्योऽत्र याः सुत ।।७९।।**

**दीर्घग्रीवैर्भुक्तरम्भाफलैर्जिह्वा विदार्यते ।**
**तद्वद्भुक्तैर्मद्वनैश्च तज्जिह्वाऽपि विदार्यते ।।८०।।**

**(अन्वयः) ये बुधोदितां मम सद्भक्तिसम्भूतिं (ये) वदन्ति, हे सुत! (लक्ष्मीपते) अत्र याः मूर्तिमत्यः ताः सत्सम्पदः तेषां स्युः ।। (यथा) भुक्तरम्भाफलैः दीघ्रग्रीवैः जिह्वा विदार्यते, तद्वत् भुक्तैः मद्वनैः तत् जिह्वा अपि च विदार्यते ।।**

(व्या) ये चैवं **बुधोदिता** बुधैरनुमोदितां (बुधोदितां एम्बुदक्के बुधैरुक्तां उपदिष्टां एन्दु स्वरसवाद

अर्थ. मत्तु बुधोदितां एष्यत् ज्ञानिना विप्रोदितां एन्दु इल्लि अर्थ. विप्रोक्त ई कृति पठनमाडुववरिगे एन्दु तात्पर्य) **मम सद्भक्तिसम्भूतिम्** । सतः = हयग्रीवस्य । (सति हयग्रीवे) भक्तिसम्भूतिं = भक्तिकरणैश्वर्यं । **ये वदन्ति** । सर्वोत्तमत्वेनेत्यर्थः (सति हयग्रीवे भक्तिः सद्भक्तिः एन्दु गो पुस्तकदल्लिदे. हयग्रीवविषयकमद्भक्तिपरिपूर्तिं इतरजीवेभ्यो आधिक्येन यथा मय्यस्ति तथा ये जानन्ति । शिष्येभ्यः उपदिशन्ति तेषां सात्विक ऐश्वर्यं भविष्यति । सम्पदभिमानिदेवाः मम किङ्कराः तेषां उपकारकतया तिष्ठन्तीत्यर्थः ।) हे सुत सीतापते! **अत्र याः मूर्तिमत्यः सत्सम्पदः** । (सात्विकसम्पदभिमानिदेवाः) ताः **तेषां स्युः** । (उपकारका भवेयुः) ।।७९।।

'न च मद्वेषिभिः भुक्तं मद्धनं सुखाय । किन्तु परत्र च दुःखाय भवति' इत्याह – **दीर्घग्रीवैरिति ।। भुक्तरम्भाफलैः** = भुक्तानि रम्भाफलानि यै स्ते । तैः उष्ट्रैः । तेषां यद्वत् । **जिह्वा विदार्यते** = विदीर्णा भवति । **तद्वत् भुक्तैः मद्धनैः तज्जिह्वापि विदार्यते** । 'यमलोके' इत्यर्थः ।।८०।।

**यज्जिह्वा मत्कृतिं नैव वक्ष्यतीह परत्र च ।**
**भार्यामद्भक्तमुख्यस्य यान्तु दुष्कृतिमात्मनः ।।८१।।**

**कार्यात्प्राक् शिथिलां कृत्वा नार्याः कीर्तिमुपाददे ।**
**श्वित्रिणां मूत्रपानेन तत्पात्रेषु च मज्जते ।।८२।।**

(अन्वयः) यत् जिह्वा भार्यामद्भक्तमुख्यस्य मत्कृतिं इह परत्र च न वक्ष्यति आत्मनः दुष्कृतिं यान्तु ।। कार्यात् प्राक् शिथिलीकृत्य नार्याः कीर्तिम् उपाददे । श्वित्रिणां मूत्रपानेन तत् पात्रेषु च मज्जते ।।

(व्या) मत्कृतिपठनमकुर्वतां भवितव्यफलं शृण्वित्याह – **यज्जिह्वेति** ।। यस्य यस्य च जिह्वा । **भार्यामद्भक्तमुख्यस्य** (भार्यमद्भक्तमुख्यः विप्रः । तस्य कृतिः तेन स्वप्नानन्तरम् उक्तम् आख्यानम् । तं शिथिलां कृत्वा ऋजुगुरुप्रोक्तदिव्यग्रन्थत्वेन अविज्ञाय विचारमकृत्वा, 'कृष्णः मनुष्यः' इतिवत् भ्रान्तविप्रकृतअनुपादेयग्रन्थः इति निश्चित्य, स्वस्त्रीभोगे अतिसक्ताः सन्तः । विप्रसेवाब्राह्मणभोजनपश्चात्तापादिकं विना ये वर्तन्ते । तेषाम् 'अतिसक्तास्तपोहीनाः कथञ्चि-न्मृतिमाप्नुयुः' इत्युक्तरीत्या दुर्मरणानन्तरम् । नरके शिक्षा अष्टविधयातनाश्च सिद्धाः ।। इति तात्पर्यम् )। भार्यया सहितः । यो मद्भक्तमुख्यो ब्राह्मणः । तस्य मुखेन उदिताम् । मत्कृतिं न

वक्ष्यति ।।८१।।

यो यश्च । **कार्यात्** । अन्नदानरूपब्राह्मणकार्यात् । **प्राक्** पूर्वं ब्राह्मणकार्यमकृत्वेत्यर्थः । मत्कृतिं शिथिलीकृत्य (शिथिलां कृत्वा एन्दु प्रिंटिदे. वृं. इदे. आदरे श्रीदल्लू, स्वादल्लू स्वा.व्याख्यानदल्लू शिथिलीकृत्य एन्दिदे. ) । स्वस्य **नार्याः** स्त्रियः मनसः । **कीर्तिं** प्रसादम् । 'कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेपि च' इति हैमः । **उपाददे** = स्वीकृतवान् । ते ते सर्वे । **आत्मनः दुष्कृतिं** पापरूपदुर्गतिम् । यान्तु ।। अपि च एतादृशः मत्कृतिद्रोहिणः यमलोके अनेकप्रकारेण दुःखमुपभोक्ष्यन्तीत्याह – **श्वित्रिणामिति** ।। **श्वित्रिणां मूत्रपानेन** । **तत्पात्रेषु** मूत्रपात्रेषु । **मज्जते** मज्जति ।।८२।।

**सहस्रधा भवेच्छिन्ना सहस्रांशुसुतेन च ।**
**सहस्राक्षसभायां तु सहस्रारेण तप्यते ।।८३।।**

**सहस्रवारं विष्ठायां षष्टिवर्षसहस्रकम् ।**
**सहस्रचण्डालजानां सहस्राण्डानि भक्षताम् ।।८४।।**

**सह भाण्डे सुरापीनां पच्यते नात्र संशयः ।**
**जायते स्पष्टधा चैवं कष्टयोनिषु नान्यथा ।।८५।।**

(अन्वयः) सहस्रांशुसुतेन (जिह्वा च) सहस्रधा च्छिन्ना भवेत् । सहस्राक्षसभायां तु सहस्रारेण तप्यते ।। षष्टिवर्षसहस्रकं सहस्रवारं विष्ठायां (पतति) । (ततः) सहस्रचण्डालजातीनां (भूत्वा) सहस्रअण्डानि भक्ष्यते ।। सुरापीनां सह भाण्डे पच्यते । अत्र संशयः न । एवं च अष्टधा कष्टयोनिषु जायन्ते । अन्यथा न ।।

(व्या) **सहस्रांशुसुतेन** = सूर्यपुत्रेण यमेन तज्जिह्वा **सहस्रधा** भिन्ना **भवेत्** । यदि सः पुण्येन स्वर्गं गच्छति । तत्रापि सहस्राक्षसभायाम् इन्द्रसभायां **सहस्रारेण** = सहस्रदळवता सुदर्शनेन तप्यते । स्वर्गेपि सौख्यं तस्य न भवतीत्यर्थः ।।८३।। **षष्टिवर्षसहस्रकं** = तावत् पर्यन्तमित्यर्थः । **विष्ठायां** = तदाख्यकूपेष्वित्यर्थः । **सहस्रवारं** पतति । ततश्च नरकभोगानन्तरं सहस्रचण्डालजातीनां सहस्रसङ्ख्याकचण्डालजातीनां म्लेच्छहूणादिजातीनां मध्ये भूत्वा **सहस्राण्डानि** सहस्रसङ्ख्याककुक्कुटाण्डानि । तैः भक्ष्यते भक्ष्यन्ते ।।८४।। **सुरापीनां सह**

सुरापानवद्भिः सह सन्तप्तसुराभाण्डे पच्यन्ते (पच्यते एन्दु वृं. इदे. आदरे ई व्याख्यानदल्लि पच्यन्ते एन्दु हिडिदिद्दारे.) । **अत्र संशयः न** । एवं च अष्टधा (अष्टधाः) एवं च यज्जिह्वा कृतिं न पठति । कृतेः विप्रकृतत्वं कथयति । तस्य (समुदायैकवचनमेतत्) अष्टप्रकारकशिक्षा यमेन यमलोके वा क्रियते । श्वित्रिणां मूत्रपानम्, श्वित्रिणां मूत्रकूपेषु मज्जनम् । सहस्रधा जिह्वाछेदनम् । स्वर्गेपि सहस्रारवता सुदर्शनेन तापनम् । सहस्रवारं षष्ठिवर्षसहस्रके विष्ठाकूपे पुनः पुनः जननम् । चण्डालजन्मसु कुक्कुटाण्डादिदुर्मांसभक्षणं । यमलोके तप्तसुराभाण्डे सुरापान- वद्भिः सह पातनम् । एवम् अष्टधा कष्टमनुभूयभूलोके पापशेषेण कष्टप्रापकपापिजनयोनिषु जायन्ते) अष्टप्रकारकचण्डालादिकष्टयोनिषु जायते । **अन्यथा** नैतत् ।।८५।।

**तस्माच्च मत्कृतेः पाठं शिष्टाः कुर्वन्तु सर्वथा ।**
**इष्टं च तेषां भवति कष्टं नेह परत्र च ।।८६।।**

**ये मृषावादिनं मां तु जानन्ति मनुजाधमाः ।**
**कीनाशलोकितां यान्ति नानाशोकसमन्वितताम् ।।८७।।**

(अन्वयः) तस्मात् शिष्टाः मत्कृतेः पाठं च सर्वथा कुर्वन्तु । इह परत्र च तेषाम् इष्टं च भवति । कष्टं न (भवति) ।। ये मनुजाधमाः मां तु मृषावादिनं जानन्ति नानाशोकसमन्वितां (सन्तः) कीनाशलोकितां यान्ति ।।

(व्या) **तस्मादिति** ।। हे सीतापते! **तस्मात्** कारणात् **मत्कृतेः पाठं शिष्टाः कुर्वन्तु** । मद्वचः **अन्यथा न** कुर्वन्तु । तथा करणे । **तेषाम् इहपरत्र च इष्टं भवति । न च कष्टं भवति** ।।८६।। **ये** च **मनुजाधमाः** । **मां मृषावादिनं** = 'ब्राह्मणः यद्वदति तत्स्वाप्नमिति । तत्सत्यं तथापि अस्मादृशमन्दजनप्रतारणार्थमयुक्तमपि स्ववैभवं वक्ति । तत् मृषा । असत्यम्' इति मां मृषावादिनं **जानन्ति** । ते **नानाशोकसमन्वितां कीनाशलोकितां** = कीनाशस्य लोकः अस्ति एषां इति कीनाशलोकिनः, तद्भावः कीनाशलोकिता, तां यान्ति गच्छति ।।८७।।

**तस्मान्मयोक्तं यत्सर्वं तत्सत्यं नात्र संशयः ।**
**मत्सत्यवचनं श्रुत्वा सत्सु तद्वद नन्दन ।।८८।।**

**स्वाप्नश्लोकेऽपि यत्प्रोक्तं प्राप्नुवन् तच्च नान्यथा ।**

**आप्तवानपि जानाति तापने क्रूरतां दिवि ।।८९।।**

**दिवास्वप्नेरिताञ्छ्लोकान् भवाब्धेस्तारकान् सुतः ।**
**सुवाग्वैखर्यराशिर्मे तवार्थैः पूरयिष्यति ।।९०।।**

(अन्वयः) हे नन्दन! यत् सर्वं मयोक्तं तत् सत्यम् । अत्र संशयः न । तस्मात् मत्सत्यवचनं श्रुत्वा, तत् सत्सु वद ।। यत् (मया) स्वाप्नश्लोकेऽपि प्रोक्तं तत् च प्राप्नुवन् (मद्भक्ताः) न अन्यथा जानाति; (अभक्ताः) तापने (यमलोके) दिवि क्रूरताम् आप्तवान् ।। हे सुत!(?) दिवास्वप्नेरितान् श्लोकान् भवाब्धेः तारकान् (विद्धि) । मे सुवाग्वैखर्यराशिः तव अर्थैः (अभीष्टैः) पूरयिष्यति ।।

(व्या) **हे नन्दन!** सीतापते! **तस्मात मयोक्तं** तत् तत्सर्वं **सत्यम्** । **नात्र संशयः** । एतत् **मत्सत्यवचनं श्रुत्वा तत् सत्सु** शेषादिषु वद ।।८८।। ननु स्वप्नस्य सत्यत्वेऽपि तद्गतसर्पादिरसत्यत्वात् कथमेतत्सत्यत्वावलम्बि भवेदित्यत आह – **स्वाप्नश्लोकेपीति** ।। यत् मया स्वाप्नश्लोकेपि प्रोक्तं । तच्च । मद्भक्ताः प्राप्नुवन् । प्राप्नुवन्ति च ।

**(यद्वापि ब्राह्मणो ब्रूयात् देवतावृषभोपि वा ।**
**स्वप्नस्थमथवा राजा तत्तथैव भविष्यति ।**
**इत्याचक्षते स्वप्नविदो व्यासादयः ।** (३।२।१)

इति ब्रह्मसूत्रभाष्यप्रमाणरीत्या स्वाप्नशब्दविशेषाणां प्रामाण्यमस्त्येवेति भावः । गुरुराजस्य ब्राह्मणत्वाद्देवतात्वाच्च । इत्यनुसन्धेयम् ।।) ननु युष्मदुक्तं ज्ञानिप्रत्यक्षं चेत्सत्यमिति जानामीत्यत आह – **आत्मवानिति** ।। (मूल आप्तवान् इति एन्दिदे. ई व्याख्यानकाररु आत्मवानपि एम्ब पाठान्तर हिडिदिद्दारे. भी. नोडि पाठनिश्चयिसबेकु. आदरे आप्तवानपि = गुरुणा सम्यक् शिक्षितोऽपि. ज्ञानी अपि एन्दे अर्थ) हे सीतापते! **आत्मवानपि** ज्ञान्यपि । **तापने** तपनपुत्र यमलोके । पूर्वोक्तप्रकारेण । दिवि अपि (स्वर्गेपि सहस्रारतापनेन) **क्रूरतां** यमदूतदेवदूतक्रूरतां जानाति । (प्रामाणिकमिति साक्षात्करोति तस्मादेतत् प्रमेयम् अपरोक्षज्ञानिप्रत्यक्षसिद्धमेव) ।।८९।।

ननु 'रात्रिगतस्वप्नस्यैव फलम् । अन्यथा न' इति शिष्टाः वदन्ति । तत्कथं दिवा स्वप्नफलं सत्यं भविष्यति? इत्यत आह – **दिवेति** ।। **हे सुत!** (सुतः एन्दु मूलविदे. इल्लि सुत एन्दु व्याख्यान) **दिवा स्वप्नेरितान् श्लोकानपि भवाब्धेः तारकानिति** विद्धि । **मे सुवाग्वै-खर्यराशिः**

सु वाग्रूपवैखरी वागधिष्ठातृदेवता वचनात्मिका, तत्सम्बन्धी यो राशिः आख्यान- कृत्यात्मकः । स च **तव मनोरथम् अर्थैः** चतुर्विधपुरुषार्थैः पूरयिष्यति (देवतासम्बन्धिस्वप्नगळु हगलल्लि आदरू अवक्के सूचितफल आगिये आगुत्तदेन्दु भाव. 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः इति सूत्रे भाष्ये च स्वाप्नदेवता राजाद्युच्चरितशब्दानां एष्यत्सूचकत्वं भाविफलबोधकत्वं निर्णीतम् । तथा च फलोपलब्ध्या स्वाप्नशब्दयाथार्थ्यं ज्ञायते इति भावः । एवमेव गुरुराजैः स्वप्ने उपदिष्टवाक्यानां प्रामाण्यं फलोपलब्ध्यापि ज्ञायते एवेति तात्पर्यं ।। याव याव अधिकारिगे एनेनु फल आगुत्ते एन्दु गुरुराजरु स्वप्नदल्लि हेळिरुत्तारो आ फलवु आगिये इदे. दृष्टफलगळु प्रत्यक्ष नडेदिवे. अदृष्टफलगळू प्राप्तवागुत्तवेन्दु अनुमानागमसिद्ध. प्रमाणदल्लिरुव वृषभशब्दक्के वायुदेवरु, रुद्रदेवरु मत्तु एत्तु एम्ब मूरु अर्थगळू साधुवे. वादिराजरु भाविवायुदेवराद्दरिन्दलू अवर स्वाप्न उपदेशवु सुळ्ळागुवुदिल्ल.)।।९०।। सी.प.प्र.सं.।।

## १५. वासुदेवमुनिप्रकरणम् ।। श्लोकाः (९१-९५)

(व्या) **वेङ्कटेशो** इत्यारभ्य अध्यायान्तं वासुदेवमुनिश्रोतृकं पञ्चदशं प्रकरणम् ।।

ननु श्रीमद्भिः श्रीनिवासपूजनं कुर्यादिति प्रोक्तम् । 'सीतापतिद्वारेणे'त्यर्थः । अत्र वृन्दावने च । तद्रूपं नास्ति । अपि च मम श्रीबिन्दुमाधवदर्शनं कदा भूयादिति चिन्ता । कथं करोमीति वासुदेवमुनिशङ्काम् अपनुदन्नाह – **वेङ्कटेश इति** ।।

**वेङ्कटेशो मठेशस्य मम वृन्दावनं प्रति ।**
**त्रिकूटेशेन चाऽयातः काठकेशैः सहर्षिभिः ।।९१।।**

**तस्माच्च श्रीपतेः श्रीनिवासस्य मनसा कुरु ।**
**वासुदेवमुने श्रीमञ्छनिवारे सुपूजनम् ।।९२।।**

**मन्दवारेऽपि वाऽमन्द कुरु वृत्तिं च माधवीम् ।**
**वृन्दावनपतिं कन्दाशनवन्द्यं सुकीर्तयन् ।।९३।।**

(अन्वयः) मठेशस्य मम वृन्दावनं प्रति वेङ्कटेशो काठकेशैः सहर्षिभिः त्रिकूटेशेन च (सहितः) आयातः ।। हे वासुदेवमुने! तस्मात् श्रीपतेः श्रीनिवासस्य श्रीमच्छनिवारे मनसा सुपूजनं कुरु ।। वा मन्दवारे अपि हे अमन्द! कन्दाशन- वन्द्यं वृन्दावनपतिं सुकीर्तयन् माधवीं वृत्तिं च कुरु ।।

**(व्या) हे वासुदेवमुने! मठेशस्य मे वृन्दावनं प्रति,** सम्प्रति । श्रीवेङ्कटेशः! श्रीनिवासः! **त्रिकूटेशेन** (त्रिकूटेशेन गङ्गायमुना-सरस्वतीकूटवाद प्रयागनामक 'सितासिते सरिते' एम्ब श्रुतिप्रसिद्धक्षेत्रक्के ओडेयनाद प्रयागमाधवनिन्द कूडिकोण्डु एन्दू अर्थवागुत्ते. 'प्रयागमाधवो भूयात्' इत्यादि तीर्थप्रबन्धश्लोकवू अनुसन्धेयवे.) त्रिकूटपर्वताधिपेन (गजेन्द्रवरदहरिणा) **काठकेशैः महर्षिभिः** सह च । **आयातः** ।।९१।।

**हे श्रीमन्! तस्माच्च** त्वं **मनसा श्रीपतेः श्रीनिवासस्य** ध्यानं पूजनं च कुरु । तच्च **शनिवारे** एव **कुरु** ।।९२।। ननु 'शनिवारस्तु मन्दसञ्ज्ञः निषिद्धश्च, कथं तद्दिने ध्यानपूजनादिकं कार्यम्? इत्यतः । सः मन्दसञ्ज्ञोपि सकलमनुष्यकर्मणाम् अभिमानि पुष्करस्य गुरुत्वात् । हरिभक्तत्वाच्च (अवान्तरपृथ्वीमानित्वाच्च एन्दू सेरिसबेकु. नरसिंहदेवर पूजेगे वेङ्कटेशदेवर पूजेगे आञ्जनेयपूजादिगळिगू शनिवारवे विहितवागिदे. 'गङ्गा माहात्म्ये रक्षोभुवनप्रस्तावे ....

... नरसिंहं दृष्ट्वा ।

शनिरुवाच –

नृसिंह त्वं मयि कृपां कुरु देव दयानिधे ।

मद्वासरस्तवप्रीतिकरः स्याद्देवतापते ।।११।।'

एन्दु वर केळिद्दाने. 'तथैवास्तु' एन्दु देवरु हेळिद्दाने. हीगे वेङ्कटेशदेवर सेवेगू श्रावणशनिवार विहितवागिदे.) (नरसिंहदत्तवराच्च) तद्दिनं लोकदृष्ट्या निन्द्यम् । नरहरिभक्तदृष्ट्या । अतस्तद्दिने एव श्रीनिवासपूजनादिकं युक्तमित्याह – **मन्दवारेपीति** ।। हे **अमन्द! वासुदेवमुने! मन्द-वारेपि माधवीं** मधुकरीं **वृत्तिं कुरु** । कन्दाशनवन्द्यं = कन्दाशनेन मया वन्द्यं, **वृन्दावनपतिं** श्रीनिवासं सुकीर्तय ।।९३।।

**कन्दाशनस्य मे वृन्दावनं सम्प्रति नन्दन ।**
**मन्दाकिन्या समायातो मुकुन्दो बिन्दुनामकः ।।९४।।**

**यतोऽस्मद्वृन्दावनस्य दर्शने बिन्दुमाधवम् ।**
**दृष्ट्वा मुकुन्दं यत्पुण्यं श्रीनिवासं तदाप्नुयात् ।।९५।।**

(अन्वयः) हे नन्दन! कन्दाशनस्य मे वृन्दावनं सम्प्रति बिन्दुनामकः मुकुन्दः मन्दाकिन्याः समायातः ।। यतः अस्मद्वृन्दावनस्य दर्शने मुकुन्दं बिन्दुमाधवं (च

पश्यति) तदा श्रीनिवासं दृष्ट्वा यत्पुण्यं (तत्)आप्नुयात् ।।

(व्या) सम्प्रति बिन्दुनामकः काशीस्थो मुकुन्दोऽपि हे नन्दन! कन्दाशनस्य मे वृन्दावनं प्रति मन्दाकिन्याः गङ्गातटाकतः समायातः ।।९४।। यतः यस्मात् कारणात् । अस्मद्वृन्दावनदर्शने सति । बिन्दुमाधवं मुकुन्दं दृष्ट्वा । यत्पुण्यम् आप्नुयात् । तच्च । अत्रस्थं श्रीनिवासं दृष्ट्वा सम्पूज्य च पुण्यमाप्नुयात् । अतो अत्रस्थावेव बिन्दुमाधवश्रीनिवासौ सम्पूजय । व्यर्थं न श्रमस्त्वया कार्यः इत्यर्थः ।।९५।।वा.मु.प्र.सं.।।

।।ॐ इति श्रीब्राह्मणस्वाप्नवृन्दावनाख्यानव्याख्याने सामान्यार्थबोधिन्यां टीकायां विंशतितमो अध्यायः संपूर्णः ।। श्रीकृष्णार्पणमस्तु ।।

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादिराजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-
श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे
निदर्शनपर्वणि चतुर्दशाध्यायः समाप्तः

।। श्री कृष्णार्पणमस्तु ।।

## ।। अथ एकविंशोध्यायः ।।

१. विप्रप्रकरणम्।। श्लोकाः (१८५ १/२)

(व्या) श्रीगुरुभ्यो नमः ।। हरिः ॐ ।। श्री ॐ ।। पूर्वाध्यायान्ते वासुदेव मुनिं प्रति 'वृन्दावनगतश्रीनिवासं बिन्दुमाधवाभिन्नत्वेन पूजय । तेन सर्वार्थसिद्धिः स्यात्' इत्युक्तम् । अस्मिन्नध्याये विप्रादिकान् प्रति स्वमाहात्म्यं तत्तत्कर्तव्यं चोपदिशति भगवान् वादिराजमुनिः – **तव कायगतमित्यादिना ।।**

**'तव कायगतं वायुम्'** इत्यारभ्य **'स्वमाणवकपुण्यतः'** इत्यन्तं विप्रश्रोतृकं प्रथमं प्रकरणम् ।।

**ॐ ।।**

**तव कायगतं वायुमायुषो वृद्धिमिच्छतः ।**
**स्थापयामि यतोपायं श्रेयो मत्कृतमेव ते ।।**

**तव पत्न्याश्च हे विप्र यत्नेनैतत्कृतं त्वया ।**
**स्वप्नं दृष्ट्वा च त्वामूचे पुण्यमाप्नोषि तेन च ।।२।।**

**अतस्त्वं धर्मपत्नीं च नैव सन्तापय प्रिय ।**
**अनुवर्त्नीं सदा विप्र कुदारत्वं न हीदृशम् ।।३।।**

(अन्वयः) आयुषः वृद्धिम् इच्छतः तव कायगतं वायुम् स्थापयामि । ते श्रेयः मत्कृतमेव । उपायं यत (प्रयतस्व) ।। हे विप्र! तव पत्न्याश्च स्वाप्नं दृष्ट्वा त्वां च ऊचे । यत्नेन एतत् कृतम् । तेन च पुण्यम् आप्नोषि ।। हे प्रिय! विप्र! अतः त्वं धर्मपत्नीं च नैव सन्तापय । (तां) सदा अनुवर्त्नीं (पश्य) । ईदृशं (तु) कुदारत्वं न हि ।।

(व्या) **तव कायगतमिति ।।** हे विप्र! **आयुषः वृद्धिमिच्छतः । तव कायगतं वायुं स्थापयामि ।** ते जीवदानरूपं श्रेयः मत्कृतमेव । तस्य **उपायं** मदाराधनात्मकं उद्दिश्य **यत** प्रयतस्व ।।१।। **हे विप्र** तव **पत्न्याश्च** स्वप्ने एतन्मयोक्तं ततश्च सा **स्वप्नं दृष्ट्वा, त्वामूचे** । तदा **त्वया** प्रयत्नेन **एतत्** मदाराधनं **कृतम्** । **तेन च पुण्यम्** अपि प्राप्नोषि ।।२।।

अतः त्वं धर्मपत्नीं च नैव सन्तापय । हे प्रिय तां सदा त्वाम् अनुवर्त्नीं अनुवर्तिनीं विद्धि । एवं तवानुवर्तिन्याः सुदारत्वमेव (तया तव च सुदारत्वमेव) कुदारत्वं तु । ईदृशं न ।।३।।

**यादृशं परलोकस्य श्रीधरस्य विदूरताम् ।**
**करोति पुरुषस्येह तादृशं नास्ति त्वत्स्त्रियाम् ।।४।।**

**किं वाऽशक्तत्वतो विप्र त्वत्सेवां न करोति च ।**
**सूतिके वायुना ग्रस्ता हरत्यहरहः स ताम् ।।५।।**

**तस्याः प्राणभयं नास्ति स्वमाणवकपुण्यतः ।।**

(अन्वयः) – इह (यस्याः) तादृशं पुरुषस्य परलोकस्य श्रीधरस्य विदूरतां करोति तादृशं कर्म त्वत् स्त्रियां नास्ति ।। किं वा अशत्तवतः त्वत्सेवां न करोति, सूतिके वायुना ग्रस्ता, सः ताम् अहरहः हरति च ।। स्वमाणवकपुण्यतः तस्याः प्राणभयं नास्ति ।।

(व्या) तदेवोपपादयति – यादृशमिति ।। इह यस्याः यादृशं कर्म । पुरुषस्य = पत्युः सकाशात् । परलोकस्य विदूरताम् । श्रीधरस्य च नारायणस्य च विदूरतां करोति, तादृशं कर्म । त्वत्स्त्रियां त्वत्पत्न्यां नास्ति ।।४।।

ननु सत्यं तथापि सम्यक् न शुश्रूषां करोति । किं कार्यं मया इत्यत आह – किं वेति ।। अथ वा त्वत्सेवां यत् यस्मात् कारणात् । न करोति । तत्कारणं तस्याः अशक्तत्वमेव । हे विप्र! तस्मान्न करोति । 'ननु भोजनादिकं सर्वं करोत्येव । मत्सेवायां कथमशक्तता' इत्यत आह – सूतिके इति ।। सूतिके = प्रसवकाले । वायुना वातरोगेण ग्रस्ता सती । त्वत्सेवां न करोति । स वायुः ताम् अहरहः प्रत्यहं हरति = अशक्तां करोतीत्यर्थः ।।५।।

ननु वातरोग एव सर्वरोगेषु बलीयान् 'माधवनिदाने' च मधुकोशटीकायां रोगस्य असाध्यत्वोदाहरणप्रसङ्गे 'न दोषः प्रकृतिर्भवेत्' इत्युक्तम् । प्रकृतिः याया वातादिका प्रकृतिः । तज्जन्यो दोषः । न भवेत् । यदि भवेत् । तर्हि स रोगः । असाध्यत्वं प्राप्नोति । अतः मत्पत्न्याः का गतिः? इत्यत आह – तस्या इति ।। तस्याः स्वमाणवकपुण्यतः स्वस्य माणवको बालः । 'बालस्तु स्यान्माणवकः' इत्यमरः । तस्य पुण्यतः प्राणभयं नास्ति । अतो

माभीः ।।५ १/२।।

२. शेषप्रकरणम् ।। श्लोकः (६ १/२)

(व्या) 'ब्राह्मण त्वम्' इत्यारभ्य 'कलहं तु कलिप्रियम्' इत्यन्तं शेषश्रोतृकं द्वितीयं प्रकरणम् ।।

**ब्राह्मण त्वं तया काण निष्ठुरं न भणानिशम् ।।६।।**

**तस्माद्भयं त्यजस्वेह कलहं तु कलिप्रियम् ।**

(अन्वयः) हे ब्राह्मण! काण! इह अनिशं निष्ठुरं न भण, तथा कलिप्रियं कलहं भयं तस्मात् त्यजस्व ।।

(व्या) हे ब्राह्मण! शेष । काण । अनिशं निष्ठुरं 'ब्राह्मणः किमपि वक्ति' इति न भण = मा वद ।।६।। कलिप्रियं कलहं भयं भयरूपं तस्मात् त्यज । निष्ठुरवचनाभावे त्वामनुगृह्णामीत्यर्थः ।। शे.प्र.सं.

३. बहुभक्तश्रोतृकप्रकरणम् ।। श्लोकाः (७-११ १/२)

(व्या) 'हे विद्वांस' इत्यारभ्य 'अनुसन्दध्वमञ्जसा' इत्यन्तं बहुभक्तश्रोतृकं तृतीयं प्रकरणम् ।।

**हे विद्वांस इह ध्वान्तवन्तं पश्यध्वमञ्जसा ।।७।।**

**कदध्वानं स्ववध्वा च मणिमद्वदनोदितम् ।**
**वदतेऽयं द्विजो मध्वाचार्याध्वानं विहाय च ।।८।।**

**अविद्वान् साध्वसं याति तद्वत्कमलनाभकः ।**
**मदन्तर्यामिणं ब्रह्माणं सवायुं विहाय च ।।९।।**

**ब्राह्मणोऽयं मणिमतो मतमाश्रित्य वर्तते ।**

(अन्वयः) – हे विद्वांसः! इह अञ्जसा ध्वान्तवन्तं पश्यध्वम् । अयं द्विजः मध्वाचार्याध्वानं विहाय स्ववध्वा (च) सह, मणिमद्वदनोदितं कदध्वानं वदते । (सः) अविद्वान् साध्वसं याति । तद्वत् अयं कमलनाभकः ब्राह्मणः मदन्तर्यामिणं

**ब्रह्माणं सवायुं च विहाय मणिमतः मतम् आश्रित्य वर्तते ।।(साध्वसं याति)**

(व्या) **हे विद्वांस इति ।। हे विद्वांसः** पण्डिताः शेषादयः **इह अञ्जसा** सम्यक् **ध्वान्तवन्तम्** अज्ञानवन्तं **पश्यध्वम्** ।।७।। कोऽयमित्यत आह – **कदध्वानमिति ।। अयं द्विजः मध्वाचार्याध्वानं विहाय स्ववध्वा च** सह । **मणिमद्वदनोदितं** मणिमान् सङ्करदैत्यः, तस्य वदनेन उदितम् । प्रपञ्चमिथ्यात्वरूपं **कदध्वानं** दुर्मार्गम् । सम्यगिति **वदते** वदति ।।८।। यः कोपि मध्वशास्त्रम् **अविद्वान्** स तु **साध्वसं** भयरूपं नरकं **याति** । **तद्वत्** अयं कमलनाभाख्यो द्विजः । **मदन्तर्यामिणं** नारायणम् । **सवायुं ब्रह्माणं विहाय च** ।।९।।

**अयं ब्राह्मणः** कमल- नाभः । **मणिमतः मतम् आश्रित्य वर्तते** । मणिमतो मते तु न गुरुगौरवम् । अयं च मां वायुं ब्रह्माणं च विहाय वर्तते । कोऽर्थः जीवः यद्यत्कर्म करोति । तत्सर्वं मदन्तर्यामि श्रीमध्वान्तर्यामि श्रीहयवदनाय समर्पयेत् । तदेव मोक्षकरं । अन्यथा दोषः । स च नरकप्रापकः । अयं द्विजश्च तन्मतानुयायी । वैष्णवेषु जन्म प्राप्यापि दुर्मतमाश्रयते । पश्यध्वम् ।।९ १/२।।

**हयग्रीवाज्ञया वातविरिञ्चौ स्वे च वैभवम् ।।१०।।**

**विना वाणीपतित्वं मे दत्तवन्तौ च किं वदे ।**
**यत्र प्रतीतार्थबाधस्तत्रान्तर्यामिसङ्ग्रहः ।।११।।**

**कर्तव्य इति पूर्वोक्तमनुसन्धध्वमञ्जसा[१] ।।**

**(अन्वयः) वातविरिञ्चौ हयग्रीवाज्ञया वाणीपतित्वं विना स्वे वैभवं च मे दत्तवन्तौ, (अत्र) किं वदे? 'यत्र प्रतीतार्थबाधः तत्र अन्तर्यामिसङ्ग्रहः कर्तव्यः' इति पूर्वोक्तम् अञ्जसा अनुसन्धध्वम् ।।**

(व्या) ननु मुख्यप्राणान्तर्यामितयैव श्रीहरौ कर्मसमर्पणं मध्वमार्गः । कथमेषा युष्मदन्तर्यामिता (समीचीनकर्मसमर्पणमार्गः इति) सिद्धा । वयमपि कथं मन्यामहे एवमितीत्यत आह – **हयग्रीवेति ।।** हे विद्वांसः! शृणुत । **श्रीहयग्रीवाज्ञया वातविरिञ्चौ स्वं च** सर्वजीवान्तर्यामितया हंसमन्त्रजपादिना ब्रह्माण्डरक्षणं तच्च श्रीहरौ समर्पणम् इत्यादि **वैभवं** च

(१) (पूर्वोक्तं १२/५७रल्लि ११/६४रल्लू इदे.)

॥१०॥

**वाणीपतित्वं** वाणी सरस्वती भारती च, तयोः पतित्वं **विना मे दत्तवन्तौ** । इतोऽपि मम माहात्म्यं **किं वदे**? ननु प्रतीतार्थस्तु मुख्यप्राणान्तर्यामितयैव सर्वकर्मसमर्पणमिति सिद्धम् इत्यत आह – **यत्रेति** ॥ यत्र तस्य बाधः । **तत्र** मम अन्तर्यामितया सङ्ग्रहः । सम्यक् स्वीकारः कर्तव्यः ॥११॥ **इति अञ्जसा** = सम्यक् मया पूर्वोक्तं यूयम् अनुसन्दध्वम् ॥ बहु.भ. श्रो.सम्पूर्णम् ॥

### ४. शेषप्रकरणम् ॥ श्लोकः (१२-१८ १/२)

(व्या) **'तस्मान्मयोक्तं सकलम्'** इत्यारभ्य **'न भ्रातापितरावपि'** इत्यन्तं चतुर्थं शेषश्रोतृकं प्रकरणम् ॥

**तस्मान्मयोक्तं सकलं लौकिकं वाप्यलौकिकम् ॥१२॥**

**सत्यं सत्यवतां नाथ सुत तत्वमते कृतिन् ।**
**अयं कमलनाभश्च मयः सकलरूपकः ॥१३॥**

**स्मयकश्मलमाविष्टो विस्मयं न कुरु प्रिय ।**
**कलिः कमलनाभाख्यः पुनर्भूवलयेऽभवत् ॥१४॥**

(अन्वयः) हे सुत! सत्यवतां नाथ! तत्वमते कृतिन्! तस्मात् मया उक्तं लौकिकम् अलौकिकम् वा अपि सकलं सत्यम् ॥ अयं स्मयकश्मलमाविष्टः कमलनाभः च मयः सकलरूपकः, (अत्र) हे प्रिय! विस्मयं न कुरु ॥ कलिः कमलनाभाख्यः (सन्) पुनः भूवलये अभवत् ॥

(व्या) **तस्मादिति** ॥ हे **सत्यवतां नाथ**! मम **सुत शेष! तस्मात् मयोक्तं लौकिकं वा । अलौकिकं वा** ॥१२॥ तत् **सकलं सत्यम्** । **तत्वमते** मध्वमते च प्रामाणिकीमेतां **कृतिं** विद्धि ॥ **अयं कमलनाभश्च** मयासुरः **सकलिरूपकः** = कलिरूपेण सहितः तदा- विष्टः इत्यर्थः[१] ॥१३॥ (अथवा, अयं कमलनाभः । च तेन सहितः मयः मयासुरश्च भूमौ अवतीर्णः

(१) (ई हदिमूरनेय श्लोकद व्याख्यान मुन्दिन श्लोकव्याख्यानक्के विरुद्धवागिदे. कमलनाभनु मयासुर

। सः मयासुरः कलिरूपकः कलेः प्रतिमाभूतः कलिना आविष्टः इति यावत् ।।)

अतः **स्मयकश्मलं** स्मयेन मदेन सहितम् । कश्मलं मोहमाविष्टः । हे प्रिय! 'अयं कथमेवं वक्ति?' इति **विस्मयम्** आश्चर्यं **न कुरु** । द्वापरान्ते दुर्योधनरूपेणोत्पन्नः **कलिः** इदानीं **पुनः भूवलये कमलनाभाख्यः** कमलनाभनामा **अभवत्** ।।१४।।

**मिळितः स्वस्त्रियाऽलक्ष्म्या निर्माल्यं न मेऽगृहीत् ।**
**कलिर्मयश्च मणिमान् मिळित्वा त्रय एव ते ।।१५।।**

**कलहं कर्तुमुद्युक्ताः कुलायां सदनाभिगाः ।**

**(अन्वयः) (सः) स्वस्त्रिया अलक्ष्याः (सहितः सन्) मे निर्माल्यं न अगृहीत् ।। ते त्रयः कलिः मयः मणिमान् एव । कुलायां सदनाभिगाः (सन्तः) कलहं कर्तुं उद्युक्ताः (अभूवन्) ।।**

**(व्या)** स च । **स्वस्त्रिया अलक्ष्म्या** च सहितः । या च । मे । मत्प्रेषितश्रावणपूर्णिमा-प्रयुक्तकल्किनिर्माल्यं नागृहीत् । एवं च कलिः मयश्च मणिमांश्च शीरूरुपुत्तिगेअदमारु इति त्रिमठस्थाः भूत्वा, ते त्रयः ।।१५।। **कुलाय** स्वकुलधर्मरूपहरिगुरुद्वेषवृद्ध्यर्थं **मिळित्वा, सदनाभिगाः** = स्वस्वमठस्थाः सन्तः, **कलहं कर्तुं** = मदृजुत्वविषये इत्यर्थः । उद्युक्ताः अभूवन् । हे शेष! **मम सुनन्दनपुरः** = सुनन्दनस्य पुरः पुरतः **तन्निन्दावचनं श्रुत्वा,** तेषां निन्दावचनं श्रुत्वा । तत्र प्रायशः तन्निन्दावचनं = कमलनाभनिन्दावचनं श्रुत्वेत्यर्थः ।।१६।।

**तन्निन्दावचनं श्रुत्वा सुनन्दनपुरो मम ।।१६।।**

---

अवतार. कलियिन्द आविष्टनेन्दु इल्लिदे. हदिनाल्करल्लि कमलनाभने कलियु, अलक्ष्मियिन्दकूडिकोण्डु अवतरिसिदनेन्दिदे. आद्दरिन्द अयं कमलनाभः । च तेन सहितः मयः मयासुरश्च भूमौ अवतीर्णः । सः मयासुरः कलिरूपकः कलेः प्रतिमाभूतः कलिना आविष्टः इति यावत् ।। एन्दु अर्थमाडबेकु. कमलनाभनामकनागि कलियू, तम्मण्णनामकनागि मयासुरनू हुट्टिदरु. इब्बरू उडुपीप्रान्तदल्लि हुट्टिदरु. मणिमन्तनु इवरिब्बर सम्बन्धि श्रीनिवासनामकनागि हुट्टिदनु. कमलनाभनु सीरूरु मठक्के, तम्मण्णनु पुत्तिगे मठक्के, श्रीनिवासनु अदमारु मठक्के सेरि वैष्णवविरोधिगळादरु एन्दु प्रकरणार्थ. सकल एन्दु पाठवो, सकलि एन्दिरबेको भी नोडि पाठ निर्णयिसबेकु. 'अयं कमलनाभश्च मयः दुर्जनेषु प्रधानः सकलरूपकः सर्वदोषस्वरूपः' एन्दादरू योग्यार्थ तिळियबेकु. )

**नन्वन्धे पातयाम्युग्रे धुन्वंस्तं यमकिङ्करैः ।**
**तस्माच्छिखोपवीतार्हो नैव सोऽप्यतिगर्हितः ।।१७।।**

**बहिष्कुरुत तं विप्रमसहिष्णुं ममोच्छ्रयम् ।**

(अन्वयः) मम सुनन्दनपुरः तत् निन्दावचनं श्रुत्वा, तं यमकिङ्करैः धुन्वन् उग्रे अन्धे पातयामि ननु । तस्मात् सः शिखोपवीतार्हः न अपि (तु) अतिगर्हितः ।। मम उच्छ्रयम् असहिष्णुं तं विप्रं बहिष्कुरुत ।।

(व्या) **ननु** निश्चयेन (खल्वर्थो ननुः) मरणान्ते । तं । यमकिङ्करैः । **धुन्वन्** पीडयन् सन् वायुरिव गदाप्रहारेण **उग्रे अन्धे** तमसि **पातयामि** । तस्मात् सः अपि शिखोपवीतार्हः ब्राह्मणः । न सोऽपि यदि ब्राह्मणोऽपि अतिगर्हितः अतिनिन्दितः ।।१७।।

अतो हे विप्र शेष! यूयं सर्वे मिळित्वा, **तं बहिष्कुरुत**; प्रत्युत **ममोच्छ्रयं** ममोत्तमत्वम् **असहिष्णुं विप्रं** धिक्कुरुत ।। (विष्णुवैष्णवद्वेषितः तमोयोग्यतया नैव शिखोपवीतार्हः माधव इव नष्टब्राह्मण्यः । अतिगर्हितोपि मिथ्याज्ञानित्वात् अजामिळमाधवादीनाम् अपेक्षया निन्दायोग्यः । द्वेषपात्रः इति भावः ।।)

**हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।।१८।।**

**यथा स्त्रियः पतौ रुष्टे न भ्राता पितरावपि ।**

(अन्वयः) (यतः) हरौ रुष्टे त्राता गुरुः; गुरौ रुष्टे कश्चन न; यथा पतौ रुष्टे स्त्रियः भ्रातपितरौ त्राता न ।।

(व्या) **हरौ रुष्टे गुरुः** (रक्षकः) । **गुरौ रुष्टे न कश्चन त्राता**[१] ।।१८।। दृष्टान्तमाह – **यथेति** ।। यथा **पतौ रुष्टे स्त्रियः न भ्रातापितरावपि** न त्रातारः तथेत्यर्थः ।।शे.प्र.सं.।।

५. हयग्रीवमुनिप्रकरणम् ।। श्लोकाः (१९-३२)

**हयग्रीवनिरूपं त्वं शिरसा वह शीघ्रतः ।।१९।।**

---

(१) (विषयासक्तराद अजामिळादिगळु द्वेषपात्ररल्ल. नष्टब्राह्मण्यरे. ई कमलनाभनु वैष्णवगुरुद्वेषियादद्दरिन्द तमोयोग्यनागिरुवरिन्द ईतनु मुमुक्षुगळिन्द द्वेष्यने.)

**यद्वा विधिनिषेधाभ्यामुत्थितं तद्धितं तव ।**

(अन्वयः) त्वं हयग्रीवनिरूपं शीघ्रतः शिरसा वह यद्वा, विधिनिषेधाभ्याम् उत्थितं तत् तव हितं (कुरु) ।।

(व्या) हयग्रीवेति ।। हे हयग्रीवमुने! पूर्वं मयाकृतं तं निरूपं निरूपणम् = उपदेशमित्यर्थः, शिरसा वह ।।१९।। यद्वा, 'इदं कुरु । इदं मा कुरु' इति विधिनिषेधाभ्यां मदुक्ताभ्याम् । यत् उत्थितं निष्पन्नं तत् तव हितं कुरु । तच्च शीघ्रतः कुरु ।।

**वादिराजाख्यभट्टोऽयं सुतो मे पट्टवर्धनः ।।२०।।**

**स्वप्ने पटुतरो विप्रः श्रीपतिः कृतिपाठकः ।**
**व्यासराजस्तदनुजो जामाता तस्य गोपजः ।।२१।।**

**तदग्रजः [१]प्रजाकार्यरञ्जनाज्जनयन् धनम् ।**
**वासुदेवमुनिः शान्तः श्रान्तश्च मम पूजया ।।२२।।**

**कान्तं मां तातमायाति तत्र वैवस्वती[२] भवेत् ।**

(अन्वयः) अयं मे सुतः वादिराजाख्यो भट्टः (मे) पट्टवर्धनः । विप्रः च स्वप्ने पटुतरः । श्रीपतिः कृतिपाठकः । तदनुजः व्यासराजः । तस्य गोपजः जामाता । तदग्रजः प्रजारञ्जनात् धनं जनयन् (वर्तते) । शान्तः वासुदेवमुनिः मम पूजया श्रान्तः च । तातं कान्तं माम् (प्रति) आयाति, तत्र (तस्य) वैवस्वती भवेत् ।।

(व्या) अयं मे सुतः वादिराजाख्यो भट्टः । मे पट्टवर्धनः । विप्रश्च स्वप्ने पटुतरः = स्वप्नोक्तिकथने निपुणः । श्रीपतिश्च कृतिपाठकः । तदनुजः व्यासराजः । तस्य गोपजः गोपालभट्टाख्यो जामाता ।।२०।। तदग्रजश्च (प्रजाकार्यरञ्जनात्) प्रजाकार्ये मम

---

(१) (प्रजाकार्ये एन्दु स्वा मत्तु व्याख्यान. आदरे वृंनल्लि कार्य एन्दिदे. भी नोडबेकु.)

(२) ('तत्रैव वसतिर्भवेत्' एन्दु प्रिंटिदे. स्वा. वृं. सह इदे. आ पाठक्के अर्थ - अल्लि अवरिगे मृति उंटागुत्ते एन्दागुत्तदे. वासुदेव मुनियु स्वादिगे बरुत्तारे. अवरु अल्लि देहत्याग माडुत्तारे एन्दु अर्थमाडिदरे ई मुनि यारु याव स्वामिगळु एन्दु विचारिसबेकु. आदरे ई व्याख्यानदल्लि 'तत्रैव (तस्य) वसतिर्भवेत्' एन्दिदे. आद्दरिन्द भी नोडि पाठ निश्चयिसबेकु.)

शिष्यरूपप्रजाकार्ये रञ्जनात् धनं द्रव्यं मत्करात्मकं जनयन् वर्तते । वासुदेव मुनिश्च शान्तः । मम पूजया च श्रान्तः ।।२२।।

कान्तं सुन्दरं मां तातम् आयाति प्राप्नोति = 'लोकं प्राप्नोति' इत्यर्थः । तस्य वसतिर्भवेत् ।

**उपेन्द्रः सूरणश्चापि कृष्णः कानक एव च ।।२३।।**

**हिरण्यभट्टस्तत्रोक्तकर्मणि प्रथितः सुत ।**
**वाणिवाळोपपदवेङ्कटाद्रिस्तथैव[(१)] च ।।२४।।**

(व्या) उपेन्द्रभट्टः । सूरणः सूर्यनामा विप्रः । कनकाकृष्णभट्टः ।।२३।। तत्र च कर्मणि = कृतिख्यापनविषये हिरण्यभट्टः, मत्सुतः वाणिवालोपपदवेङ्कटाद्रिः, शेषाद्रिपण्डितश्च ।।२४।।

(अन्वयः) उपेन्द्रः सूरणः च अपि कनका कृष्णः, हे सुत! तत्र हिरण्यभट्टः उक्तकर्मणि प्रथितः । तथा वाणिवाळोपपदवैङ्कटाद्रिः एव च ।।

**एते चान्ये च बहवो बहुमानपुरस्सराः ।**
**कुहकाद्रहिताः सर्वे सर्वेश्वरमतानुगाः ।।२५।।**

**विश्वासिनो ह्यविश्वासं न कुर्वन्तीह सर्वथा ।**
**सुश्वासप्रेरको ह्येषां [(२)]वासुदेवोऽभिजायते ।।२६।।**

(अन्वयः) एते अन्ये च बहुमानपुरस्सराः कुहकाद्रहिताः सर्वे सर्वेश्वरमतानुगाः ।। इह विश्वासिनः सर्वथा अविश्वासं न कुर्वन्ति हि । एषां सुश्वासप्रेरको वासुदेवः अभिजायते हि ।।

(व्या) एते च अन्येच बहवः बहुमानपुरःसराः, बहुमानं पुरस्कृत्य सरन्तीति तादृशाः ।

---

(१) ('प्रथितः सुत' एन्दु वृं. आदरे सुतः एन्दु पाठान्तरविदे. 'भी' नोडबेकु. 'वाणिवाळोपपद' एम्बल्लि एळे अक्षरवागुत्ते. वाणीवालेत्युपपद एन्दो, मणिबालेत्युपपद एम्ब ग्रन्थान्तर सूचितवो आनुपूर्वियु सम्भावितवागिदे. इल्लू भी नोडि पाठ निश्चय माडबेकु.)

(२) (ह्येषां वासुदेवो एन्दु व्याख्यानगृहीतपाठ. त्वसुदेवो एन्दु वृं.पाठ भी द्रष्टव्या)

एते **सर्वे सर्वेश्वरमतानुगाः** सर्वेश्वरो व्यासः, श्रीमध्वो अहं च, एतेषां मतम्, अनुगच्छन्तीति तादृशाः । **कुहकात्** कपटात् रहिताश्च ।।२५।।

(पूर्वोक्ताः सर्वे) मयि विश्वासिनं **सर्वथा** मयि **अविश्वासं न कुर्वन्ति । एषां सुश्वासप्रेरकः वासुदेवः** श्रीहयवदनः । यद्वा पूर्वाश्रमी मध्वः **अभिजायते** = विजयते ।।२६।।

**कलिः कमलनाभश्च दाम्बळः पित्तमौलिकः ।**
**लक्ष्मीनारायणो डोळायितचित्तस्तु तम्मणः ।।२७।।**

**एते च प्रायशो ह्यत्र पुत्राविश्वासिनः सदा ।**
**मित्रजभृत्यबाध्याश्चामुत्र[१] सत्यं मयोदितम् ।।२८।।**

(अन्वयः) कलिः कमलनाभः दाम्बळः पित्तमौळिकः लक्ष्मीनारायणः च । डोळायितचित्तः तु तम्मणः । हे पुत्र! प्रायशः एते च अत्र सदा अविश्वासिनः हि, अमुत्र मित्रजभृत्यबाध्याः च, मया उदितं सत्यम् ।।

(व्या) (इदानीं) स्वस्मिन् मध्वमते च । अविश्वासिनां नामान्याह – **कलिरिति** ।। कलिरूपः **कमलनाभः** । **दाम्बळः** [२]दम्बळग्रामस्थो पित्तमौळिः **लक्ष्मीनारायणः** । **डोलायित-चित्तः** दोलावत् उभयस्पर्शिचित्तं यस्य तादृशः **तम्मण** विप्रः ।।२७।। **हे पुत्र अत्र** = मत्कृतिविषये प्रायशः **सदा अविश्वासिनः एते** सर्वे **अमुत्र** परलोके । **मित्रजाभृत्यबाध्याः** मित्रात् सूर्याज्जातो यमः, तस्य आसम्यक् भृत्यैः दूतैः बाध्याः । एतत् **मयोदितं सत्यम्** ।।२८।।

**हरिश्च दाम्बळः पुत्रव्यालोळितमनाऽप्यहो ।**
**कुलालचक्रवच्चात्र भ्रमते कल्यबुद्धिमान् ।।२९।।**

---

(१) (मित्रज एन्दु वृं. मित्रजा एन्दु स्वा.पाठ. व्याख्यानदल्लू दीर्घविदे.)
(२) दम्बलग्रामदवरिब्बरु पित्तमौळिगळे. नेश्यद अभ्यासवुळ्ळवरु. तन्देगे हरि एन्दु हेसरु. मगनिगे लक्ष्मीनारायण एन्दु हेसरु. इब्बरू दुष्टरे. अप्पनिगिन्त मग हेच्चु धूर्त. ई लक्ष्मीनारायण अयोग्य. इल्लि हेळिरुव हेसरुगळु लाक्षणिक. कमलनाभ एन्दरे श्रीनिवासादि अवन अनुयायिगळु. अलक्ष्मी मुन्तादवरेल्ला बन्दरु. हागे दाम्बल एन्दरे अवन सम्बन्धिगळू बन्दरु. हीगे अनेक अयोग्यरु हुट्टि ऋजुत्वद्वेषमाडि पापिगळागुत्तारेन्दर्थ.

(अन्वयः) दाम्बळः कल्यबुद्धिमान् हरिः च पुत्रव्याळोलितमनाः अपि, अत्र कुलालचक्रवत् भ्रमते । अहो ॥

(व्या) दम्बळग्रामस्थो हरिरपि पुत्रव्यालोळितमनाः पुत्रो लक्ष्मीनारायणः तेन व्यालोळितं चञ्चलीकृतं मनो यस्य, तादृशः । अयं च कुलालचक्रवत् अत्र मद्विषये भ्रमते (भ्रान्तियुक्तो वर्तते) । कुतः? कल्यबुद्धिमान् = कलिसम्बन्धिनी कल्या, साच बुद्धिरस्यास्ति इति, तादृशः इत्यर्थः । (सोऽपि मुक्तियोग्यः इति भावः) ॥२९॥

**अप्पणः[१] कृष्णभट्टोऽयमिदानीं पापमत्यजत् ।**
**कोपं च मम हे पुत्र शापं त्याजितवानहो ॥३०॥**

**श्रीनिवासाचार्यनामा मानवानां भयानकः ।**
**मम मानससम्प्रीतिं तनोतीह न संशयः ॥३१॥**

**विट्ठलाद्याऽस्मदीयाऽस्मन्मठसंन्यासिनश्च ये ।**
**वटबीजवदेवास्मदुटजानन्दवर्धकाः[२] ॥३२॥**

(अन्वयः) (हे पुत्र!) अयम् अप्पणकृष्णः इदानीं पापम् अत्यजत् । मम कोपं शापं च त्याजितवान् । अहो! ॥ श्रीनिवासाचार्यनामा मानवानां भयङ्करः, इह मम मानससम्प्रीतिं तनोति; न संशयः ॥ ये च अस्मदीयाः अस्मन् मठसन्न्यासिनः वटबीजवत् (मम) उटजानन्दवर्धकाः एव ॥

(व्या) हे पुत्र! अयम् अप्पणकृष्णः इदानीं पापं पश्चात्तापेनेत्यर्थः, अत्यजत् । मम विषये कोपं च । तस्याहं त्याजितवान्, शापं च । अहो इत्याश्चर्यम् ॥३०॥ श्रीनिवासाचार्यनामा ब्राह्मणस्तु मानवानां भयानकः । 'स्वविद्वत्तया' इत्यर्थः । सच इह भूलोके यद्वा मत्कृतिविषये मम मानससम्प्रीतिं तनोति विस्तारयति । अत्र संशयः न ॥३१॥ ये च अस्मदीयाः अस्मन्मठसन्न्यासिनः विट्ठलाद्याः वटबीजवत् । अस्मत् मम

---

(१) (अप्पण्णकृष्णभट्टोयं एन्दु स्वा. इदे. 'अप्पणः' एन्दु वृं.)

(२) (विट्ठलाद्यस्मदीया' एन्दु वृं. 'विट्ठलाद्यास्मदीया' एन्दु व्याख्यान परिगृहीत स्वा.पाठ. इदरल्लि कमलनाभादिगळु वृन्दावनाचार्यर कालदवरु. विट्ठलदाम्बलादिगळु इन्नू हिन्दिनवरु. आदरे ई ग्रन्थोक्तपात्ररु पुनः पुनः हुट्टि परिणामदल्लि हेगागुत्तारेम्बुदु ई श्लोकदल्लि सूचितवागिदे)

उटजानन्दवर्धकाः । उटजं मुनिगृहम्, तार्णं पर्णशालेत्यर्थः । तत्र स्थित्वा स्वतपस्यया मम आनन्दवर्धकाः ।।३२।। हयग्रीवमुनिश्रो.सं.।।

६. विप्रप्रकरणम्।। श्लोकाः (३३-३७)

(व्या) ''हे विप्र तव जामाता' इत्यारभ्य 'ह्यपितेषु वदस्व तान्' इत्यन्तं षष्ठं विप्रश्रोतृकप्रकरणम् ।।

**हे विप्र तव जामाता रामचन्द्रोऽपि बुद्धिमान् ।**
**विश्वासं कुरुते चात्र सोऽपि विश्वासिषूत्तमः ।।३३।।**

**एवं च त्रिविधा विप्राः प्रोक्ताः पुत्र मया तव ।**
**श्रुत्वा कृतार्थतां यासि किं भूयः श्रोतुमिच्छसि ।।३४।।**

(अन्वयः) हे विप्र! तव जामाता रामचन्द्रः अपि बुद्धिमान् (सन्) अत्र विश्वासं च कुरुते । सोऽपि विश्वासिषु उत्तमः (इति विद्धि) । हे पुत्र! एवं च त्रिविधाः विप्राः मया तव प्रोक्ताः । (एतत्) श्रुत्वा कृतार्थतां यासि । भूयः किं श्रोतुम् इच्छसि?

(व्या) हे विप्रेति ।। हे विप्र! तव जामाता रामचन्द्रोऽपि बुद्धिमान् सन् अत्र मद्विषये विश्वासं कुरुते । सोऽपि विश्वासिषु उत्तमः श्रेष्ठः इति विद्धि ।।३३।।

हे पुत्र एवं च सात्विकादिभेदेन त्रिविधा विप्राः मया तव प्रोक्ताः । ननु तच्छ्रवणे मम किं (प्रयोजनम्)? इत्यत आह – श्रुत्वेति ।। एतत् श्रुत्वा च दुःसङ्गं परित्यज्य सुसङ्गतिरूपां कृतार्थतां यासि = प्राप्स्यसि । भूयः किं श्रोतुमिच्छसि कथय ।।३४।।

**नित्यं निर्जलनिर्घातैर्दुर्जनाः भर्जितास्त्वहो ।**
**खर्जूरवच्चार्जुनस्य बाणनिर्घातमर्दिताः ।।३५।।**

(अन्वयः) दुर्जनाः नित्यं तु निर्जलनिर्घातैः खर्जूरवत् भर्जिताः (यद्वा) अर्जुनस्य बाणनिर्घातमर्दिताः (कुरवः इव) ।।

(व्या) दुष्टसङ्गात् स्वस्मिन् अविश्वासिनां गतिं, तन्निवृत्तिं कथयितव्यं चाह – नित्यम् इति ।। हे विप्र! ये च दुर्जनाः, दुःसङ्गयुक्ता जनाः, ते च नित्यं निर्जलनिर्घातैः अवर्षणसङ्कटैः भर्जिता इव पक्वखर्जूरस्यापि निर्घातेनैव भक्ष्यत्वे सिद्धेरित्यर्थः । यद्वा, अर्जुनस्य बाण-

निर्घातमर्दिताः कुरव इव ।।३५।।

**यथा तथैव सुत्राम्णा वृतवृत्रासुरार्थिना ।**
**अन्धेषु मार्ताण्डिकृतशिलाभारैः कुलान्विताः ।।३६।।**

**बाध्यन्ते श्राद्धदेवेन श्रद्धारहितबुद्धयः ।**
**वृद्ध त्वमद्धा क्रुद्धेषु ह्यपि तेषु वदस्व तान् ।।३७।।**

(अन्वयः) यथा वृतवृत्रासुरार्थिना सुत्राम्णा तथा एव (दुःखयुता भवन्ति) । कुलान्विताः श्रद्धारहितबुद्धयः अन्धेषु मार्ताण्डिकृतशिलाभारैः श्राद्धदेवेन बाध्यन्ते । हे वृद्ध! तेषु क्रुद्धेषु अपि तान् त्वम् अद्धा वदस्व हि ।।

(व्या) यथा च वृतवृत्रासुरार्थिना = वृतश्चासौ स्वीकृतश्चासौ । वृत्रासुरस्य अर्थः निवृत्तिः सा अस्यास्तीति तादृशेन । (वृत्रासुरं हन्तुमुद्युक्तेन) सुत्राम्णा = इन्द्रेण तत्पक्षीयाः (वृत्रासुरानुगाः) दैत्याः मर्दिताः । तथैव (दुर्जनाः) दुःखयुता भवन्ति । तामसास्तु कुलान्विताः स्ववंशान्विताः ।।३६।। मद्विषये श्रद्धारहिताः । अन्धेषु = अन्धकूपेषु मार्तण्डिकृतशिलाभारैः = 'मार्ताण्डो यमः, तत् सम्बन्धिनो मार्तण्डिनः, यमदूताः, तत्- कृतशिलाभारैः' इत्यर्थः । (श्राद्धदेवेन) बाध्यन्ते । हे वृद्ध! विप्र! तेषु क्रुद्धेषु सत्स्वपि, तान् प्रति एतत् पूर्वोक्तवचनम् अद्धा अञ्जसा वदस्व ।।३६ऽ३७।। विप्रश्रोतृकप्रकरणं सं.

७. बहुभक्तश्रोतृकप्रकरणम्।। श्लोकाः (३८-४०)

(व्या) 'तस्माद्विश्वासवन्तः' इत्यारभ्य 'हरिः सुस्थिर एव च' इत्यन्तं सप्तमं बहुभक्तश्रोतृकप्रकरणम् ।।

**तस्माद्विश्वासवन्तश्च भविष्यथ कृतौ मम ।**
**विश्वस्ताः प्रेत्य मर्त्या ये ह्यमर्त्यत्वं व्रजन्ति ते ।।३८।।**

**अहं मध्यन्दिनगतसूर्यवत्सुप्रभान्वितः ।**
**मद्वृन्दावनमध्यस्थो वासुदेवमुनेः प्रियात् ।।३९।।**

**पूजकस्य तपोयोगात् बिम्बेश भव दर्शनात् ।**
**महोपचारोपहारैर्हरिः सुस्थिर एव च ।।४०।।**

**(अन्वयः) तस्मात् मम कृतौ विश्वासवन्तः च भविष्यथ । ये विश्वस्ताः ते प्रेत्य अमर्त्यत्वं व्रजन्ति हि ।। अहं मध्यन्दिनसूर्यवत् सुप्रभान्वितः मद्वृन्दावनमध्यस्थः (भवामि) । वासुदेवमुनेः प्रियात् तपोयोगात् बिम्बेशस्य च अत्र दर्शनात् महोपचारोचारैः (अत्र वृन्दावने) श्रीहरिः सुस्थिर एव ।।**

**(व्या) हे भक्ताः । तस्माद्** यूयं **मम कृतौ विश्वासवन्तश्च भविष्यथ । ये** च **विश्वस्ताः मर्त्याः** ते **प्रेत्य अमर्त्यत्वम्** अमरत्वं **व्रजन्ति** ।।३८।।

एवं च विश्वासिनां फलं निगद्य, तद्दाढर्यार्थं स्ववृन्दावने श्रीहरेः स्वस्य च सन्निधान-माहात्म्यमाह – **अहमिति ।।** हे भक्ताः **अहं मध्यन्दिनसूर्यवत्,** दिनस्य मध्यं = मध्यन्दिनम्, तद्वत् **सुप्रभान्वितः । मद्वृन्दावनमध्यस्थः** भवामि । 'अर्चकस्य तपोबलात्' इत्युक्तिं स्मारयन्निवाह – **वासुदेवमुनेरिति ।। वासुदेवमुनेः प्रियात्** प्रीतिकारणात् ।।३९।।

**पूजकस्य तपोयोगात् । बिम्बेशस्य च** श्रीहयवदनस्य च अत्र **दर्शनात्** । (बिम्बेशं भवदर्शनात् = देहहृदयमध्ये सुखनिधि हयग्रीवस्य दर्शनात् । व्याप्तापरोक्षज्ञानसौख्यात् इति यावत्) वासुदेवमुनेः **महोपहारोपचारैः**[१]

२१-०४१-०५९ वेदनिधिप्रकरणम्

८. वेदनिधिप्रकरणम्।। श्लोकाः (४१ऽ५०)

(व्या) **'इति श्री'** इत्यारभ्य **'नैव सोऽपि'** इत्यन्तं वेदनिधिप्रकरणम् अष्टमम् ।।

**इति श्रीत्यादिकं चोक्त्वा समापय न मे कृतिम् ।**
**मत्सुतस्य च भागोऽयं समाप्तिः श्रीरमात्मिका ।।४१।।**

**अध्यायकरणार्थं च शरणागतवत्सल ।**
**द्विरध्यायः प्रणीतो मे वाणीं शृणु सुनन्दन ।।४२।।**

---

(१) (महोपचार उपहारैः इति पाठे षोडशोपचार पूजा, नन्तर सायं पञ्चखर्जूरनारिकेळादि उपहारैः) (उपहाररूप उपचारैः एन्दु ई व्याख्यानकारर योजना. अदक्किन्त महोपचारवेन्दरे भिक्षसम्बन्धि पञ्चामृत, उत्सव, षोडशोपचार, आनूपचारपूजागळु; उपहारवेन्दरे गृहस्थरु माडिसुव भिक्षाकालद समर्पणेगळु, हार, वस्त्र, मगुट, हण्णु कायि मुन्ताद फलाहारसामग्रिगळु, हरके होत्तिगेगळु इत्यादि हीगे अर्थमाडिदरे प्रतिपत्तिपौष्कल्यविदे.

(अन्वयः) हे वेदनिधे! हे शरणागतवत्सल! अध्यायकरणार्थं च इति श्री इत्यादिकं च उक्त्वा मे कृतिं न समापय । अयं भागः च मत्सुतस्य द्विरध्यायः प्रणीतः । हे सुनन्दन! समाप्तिः च श्रीरमात्मिका । मे वाणीं शृणु ।।

(व्या) **हे वेदनिधे! हे शरणागतवत्सल! अध्यायकरणार्थम्** अध्यायानां पूर्ति- करणार्थम् **'इति श्री' इत्यादिकं चोक्त्वा, मे कृतिं न समापय** । तथा सति विंशत्यध्याया एव भवन्ति । तत्पुरतश्च **द्विरध्यायः प्रणीतः** । द्वौ अध्यायौ ताभ्यां[१] प्रणीतः संस्कृतः । **मत्सुतस्य च** वेदवेद्यस्य च **अयं भागः** तन्माहात्म्यप्रतिपादनात्मकः । **हे सुनन्दन!** मत्कृतेरारम्भश्च श्रीहयवदनात्मकः **समाप्तिश्च** श्रीरमात्मिका इति **मे वाणीं** शृणुष्व । तद्वच्च कुरु ।।४२।।

**हे विप्र मम पुत्रस्य पिब पादोदकं सदा ।**
**क्षिप्रं नाशयते विप्र शीतोष्णज्वरपीडनम् ।।४३।।**

(अन्वयः) हे विप्र! सदा मम पुत्रस्य पादोदकं पिब । विप्र! शीतोष्णज्वरपीडनं क्षिप्रं नाशयते ।।

(व्या) ननु मम शीतोष्णज्वरपीडितत्वात् अशक्यमित्यत आह – **हे विप्रेति** ।। हे विप्र! वेदनिधे! **मम पुत्रस्य** (वेदवेद्यस्य) **पादोदकं** सर्वदा **पिब** । तेन च **ते शीतोष्णज्वरपीडनं** नाशय ।।४३।।

**ब्राह्मणे स्वप्नमद्राक्षीत् कर्णे यक्षी च कश्चन ।**
**लक्ष्मीपतिगृहे पक्षीकृतविप्रोऽतिपुण्यभाक् ।।४४।।**

**अन्यथा गुरुराजस्य कथं स्वप्नाधिकारिता ।**
**तस्माद्गुरुः शरीरेऽस्य वर्ततेऽमर्त्यविग्रहः ।।४५।।**

**इत्यवादीन्मदान्धानामन्धत्वं त्याजयन् बुध ।**
**तस्मादप्यधमा बुद्धिसन्धानरहिता द्विजाः ।।४६।।**

(अन्वयः) हे बुध! लक्ष्मीपतिगृहे यक्षी कश्चन ब्राह्मणे कर्णे स्वप्नम् अद्राक्षीत् ।

---

(१) (ताभ्यां श्रीवेदवेद्येन, महालक्ष्म्या च संस्कृतः; अ.२१रल्लि वेदवेद्यर सन्निधान; अ.२२रल्लि लक्ष्मीदेवियर सन्निधान एन्दर्थ.)

**अतिपुण्यभाक् पक्षीकृतविप्रः 'अन्यथा गुरुराजस्य स्वप्नाधिकारिता कथम्? तस्मात् अस्य शरीरे अमर्त्यविग्रहः गुरुः वर्तते' इति मधान्धानाम् अन्धत्वं त्याजयन् अवादीत् । बुद्धिसन्धानरहिता द्विजाः तस्मादपि अधमा (एव) ।।**

**(व्या) हे विप्र** वेदनिधे! **पक्षिनन्दन** = [१]पक्षिणां नन्दन हे भाविगरुड! कश्चित् अतिपुण्यभाक्, लक्ष्मीपतेः गृहे स्थितिदशायां, ब्राह्मणः (बुधः) एतद्विषये वेदवेद्यविषये मम स्वप्नम् **अद्राक्षीत्** = अनुभूतवान्, अवादीच्च सर्वसमक्षं 'हे ब्राह्मणाः शृणुत वेदवेद्यमाहात्म्यम् । अस्य पादोदकपानकरणे मम शीतोष्णज्वरः पलायितः । **अन्यथा गुरुराजस्य स्वप्नाधिकारिता** कथं स्यात् स्वाप्नश्लोकेपि यत्प्रोक्तमिति पूर्वोक्तत्वात् इत्यर्थः । स्वप्नः सत्य एव । **तस्मात् अस्य** वेदवेद्यस्य **शरीरे अमर्त्यविग्रहः** देवरूपो **गुरुः वर्तते'** इति । ये ये विद्यामदान्धाः तेषाम् **अन्धत्वं,** 'वेदवेद्यविषये' इत्यर्थः, त्याजयन् सन् **अवादीत्** इति पूर्वेणान्वयः ।।४५।।

**तस्मात्** तद्वचनादपि । **अधमाः द्विजाः** पूर्वोक्ताः **बुद्धिसन्धानरहिताः** = बुद्धेः ज्ञानस्य सन्धानम् अनुसन्धानम् तेन रहिताः अभूवन्[२] । (हे वेदनिधे!) त्वं च सात्विकोऽसि अतः

---

(१) (४४नेय श्लोकदल्लि यक्षी च कश्चन एन्दू, ४५नेय श्लोकदल्लि 'बुधः' एन्दू इरुवुदरिन्द इल्लि योजने हीगे. यक्षी यागशीलः बुधः पण्डितब्राह्मणनु वायु केरळि ज्वरग्रस्तनागि समाराधनेय कालदल्लि लक्ष्मीपतिय मनेगे बन्दिरुत्ताने. आगले स्वप्न होन्दि स्वप्नदल्लि वादिराजरन्नु कण्डु, गुरुवेदवेद्यर पादोदक कुडि; ज्वर होगुत्ते एन्दु श्रवणमाडि, स्वप्नदल्लि हागेये वेदवेद्यर पादोदक कुडिदु मैय्येल्ला बेवरि ज्वर निवारणेयागि स्वप्नदिन्द एच्चेत्तनु. अल्लिद्द ब्राह्मणरन्नु कुरितु हेळिदनु 'एलै ब्राह्मणरे! पक्षीकृत ब्राह्मणरु = वेदवेद्यरु अत्यन्त पुण्यशालिगळु. अन्यथा गुरुराजरु अवर विषयदल्लि ननगे ई रीति सत्यस्वप्न कोडुव अधिकारवन्नु हेगे तोरिसुत्तिद्दरु. आद्दरिन्द देवरूपराद वादिराजरु शिष्य वेदवेद्यर शरीरदल्लि सन्निधानविट्टु वेदवेद्यरल्लि महिमे उंटुमाडि, अदन्नु तावे स्वप्नदल्लि बोधिसि आ सत्यमहिमेयन्नु तोरिसुत्तिद्दारे. वेदवेद्यरु तुम्ब दोड्डवरु. अवर पादोदकदिन्द नन्न ज्वर होयितु' एन्दु. इदरिन्द मदान्धर अन्धत्ववन्नु आ ब्राह्मणनु आ सभेयल्लि बिडिसि बिट्टनु. वेदवेद्यर महिमे एल्लरिगू व्यक्तवायितु.)। (ब्राह्मणः एन्दु हिडिदु एतद्विषये एन्दु अध्याहार माडिकोण्डिद्दारे. ४४ने श्लोकद 'ब्राह्मणे' एम्बुदक्के वेदवेद्यविषये एन्दर्थवागुत्ते. बुदः यक्षी च कश्चन एन्दु कर्तृपद तिळियबेकु)

(२) (सभेयल्लिद्द पूर्वोक्तब्राह्मणरु हेगे मदवन्नु बिट्टरु एके बदलु माताडलिल्ल एन्दरे. अल्लिद्द ब्राह्मणरेल्लरू उपदेशमाडिद ब्राह्मणन देसेयिन्द अधमरु. योग्यरीतियल्लि सत्यस्वप्नवन्नु विवरिसिद ब्राह्मणनिगे बदलु हेळुवुदक्के बुद्धियल्लि एनू तोरलिल्ल. सरियागि वेदवेद्यर महिमे हेळिद्दाने एन्दु ओप्पिदरु एन्दु भाव. तस्मादपि

मदुक्तं कुरु ।।४६।।

**हे शव त्वमविश्वासं कुतोऽस्मासु गतोऽस्यहो ।**
**केशवस्तव विश्वासरहितस्य सुशासकः ।।४७।।**

(अन्वयः) हे शव! त्वम् अस्मासु कुतः अविश्वासं गतः असि; अहो । तव विश्वासरहितस्य सुशासकः केशवः (एव) ।।

(व्या) हे शव! त्वम् अस्मासु कुतः अविश्वासं गतोऽसि अहो! आश्चर्यः । ऋजुष्वपि अविश्वासकरणम् । तव विश्वासरहितस्य सुशासकः केशवो भगवानेव ।।४७।।

**शवेति वक्ष्यामि कुतः प्रवक्ष्ये तत्र कारणम् ।**
**शवेति सुखमुद्दिश्याप्याश्वसीर्मम शासनम् ।।४८।।**

**अथवा कुणपार्थो वा प्रणिपातप्रियं च माम् ।**
**शरणं व्रज ते क्षेमं कृणुयां मम विप्रवत् ।।४९।।**

(अन्वयः) (अहं त्वां) शव इति कुतः वक्ष्यामि? तत्र कारणं प्रवक्ष्ये । सुखमुद्दिश्य शवेति मम शासनम् अपि आश्वसीः ।। अथवा कुणपार्थः वा, प्रणिपातप्रियं मां शरणं व्रज । ते, मम विप्रवत्, क्षेमं च कृणुयाम् ।।

(व्या) 'शवशब्देन सम्बोधनस्य कारणं शृणु' इत्याह – शवेतीति ।। अहं त्वां शव इति कुतो वक्ष्यामि । तत्र कारणं सुखमुद्दिश्यैव[१] प्रवृत्तिमान् सुखार्थम् इत्यर्थे एव शवेति प्रयोगः कृतः । मम शासनम् आज्ञाम्

---

एन्दरे आ ब्राह्मणन देसेयिन्द एन्दु अर्थमाडिदरे, 'अल्लि नेरेदिद्द पण्डितरेल्ला उपदेश माडिद सोमयाजि बुधन देसेयिन्द कम्मि बुद्धियुळ्ळवरेन्दू अर्थवागुत्तदे. स्वप्न हेळिद ब्राह्मणनु सामान्यनल्ल. दोड्ड पण्डितने एन्दु भाव. बुधः एन्दिरुवुदरिन्द पण्डित. यक्षी एन्दिरुवुदरिन्द शिष्टयागकर्ता. सुळ्ळु हेळुववनल्ल. आद्दरिन्द एल्लरू नम्बि बायि मुच्चिकोण्डरु.)

(१) (शासनं एन्दरे अर्थानुशासनं. कोशकारनु हेगे अर्थनिरूपणेमाडुत्तानो हागे नानु शब्दक्के प्राचीनार्थ हेळिद्देने. नम्बु एन्दर्थ. शं = सुखमुद्दिश्य वाति गच्छति प्रवर्तते इति शवः एन्दु निरुक्ति तिळियबहुदु. शाय = शवः एन्दादरे वस् प्रत्यय तिळियबेकु. शवः एम्बुदु आग सकारान्त द्वितीया एकवचन आगुत्ते. भारततात्पर्यनिर्णय १/६७र व्याख्यान नोडबहुदु. शवः सुखं । द्वितीयाबलादेव उद्दिश्येति लभ्यते एन्दिदे.)

आश्वसीः विश्वस[१] । शं सुखं वहतीति शवः इति ।।४८।।

अथवा (शव) शब्दस्य कुणपार्थो वा स्यात् । 'कुणपः शवमस्त्रियाम्' इत्यमरः । तत्कथमिति शृणु । स्मशाने शेते इति शिवः() । तस्य प्रकर्षेण निपतितत्वात् इत्यर्थः । तस्मात् प्रणिपातप्रियं मां शरणं व्रज । मम प्रणिपातेन ते क्षेमं विप्रवत् पूर्वोक्तविप्रवत् कृणुयां करोमि ।।४९।।

**मया नन्दनमुद्दिश्य नाना विधतयोदितम् ।**
**त्वया प्रसन्नीक्रियते नैव सोऽपि (अन्नयाचनम्) ।।५०।।**

(अन्वयः) नन्दनम् उद्दिश्य मया नाना विधतया उदितम् । सः अपि त्वया न प्रसन्नीक्रियते एव ।।

(व्या) मयेति ।। हे विप्र (वेदनिधे) मया त्वां प्रति नानाविधतया उदितम् । सोऽपि त्वया अन्नदानेन नैव प्रसन्नीक्रियते ।।५०।। वेदनिधिप्रकरण सं. ।।

९. विप्रप्रकरणम्।। अन्नयाचनमित्यारभ्य श्लोकः (५१)

(व्या) 'अन्नयाचनम्' इत्यारभ्य 'प्रदास्यति' इत्यन्तम् एकपद्यं नवमं विप्रप्रकरणम् ।

**(............................ अन्नयाचनम् ।)**

**कुरु वृन्दावने सम्प्रत्येव ते चान्नदे शुभे ।**
**मन्नन्दनमुखेनैव तदन्नं ते प्रदास्यति ।।५१।।**

(अन्वयः) (हे विप्र!) ते च अन्नदे शुभे वृन्दावने सम्प्रति एव अन्नयाचनं कुरु । तत् मन्नन्दनमुखेन एव ते अन्नं प्रदास्यति ।।

(व्या) अन्नयाचनमिति ।। हे विप्र ते च अन्नदे शुभे वृन्दावने तत्पुरतः इत्यर्थः । अन्नयाचनं कुरु । तच्च वृन्दावनं मन्नन्दनमुखेन = वेदनिधिद्वारा अन्नं प्रदास्यति ।।

---

(१) ('सुखमुद्दिश्यैव' एन्दु मात्र व्याख्यानविदे. इल्लि अदर तात्पर्यवन्नु मनस्सिनल्लिट्टुकोण्डु 'सुखमुद्दिश्यैव प्रवृत्तिमान् इत्यर्थे एव' एन्दु सु. विवरिसिरुत्तारे. 'सत्य सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' एम्ब श्रुतियल्लि शवः एन्दरे सुखमुद्दिश्य एन्दु टीकाचार्यरु अर्थ माडिद्दारे.)

विप्रप्रकरणम् सम्पूर्णम् ।।

### १०. वेदनिधिप्रकरणम् ।। श्लोकाः (५२-५५)

**ममभोजनसन्तोषं सुजनाम्बुजभास्करम् ।**
**कुजनाम्बुजसङ्कोचद्विजराजं ममात्मजम् ।।५२।।**

**मदजाड्यरुजाहीनं द्विजाराध्यं भजाद्य तम् ।**
**वदन्तं द्विज ते कल्पभुजं मज्जनतां प्रति ।।५३।।**

**मम भोजनसन्तोषं ये वदन्ति द्विजोदितम् ।**
**तेषामन्नानि सम्पूर्णानीति सत्या फलश्रुतिः ।।५४।।**

(अन्वयः) हे द्विज! ममभोजनसन्तोषं सुजनाम्बुजभास्करं कुजनाम्बुज-सङ्कोचद्विजराजं मदजाड्यरुजाहीनं द्विजाराध्यं मज्जनतां प्रति ते कल्पभुजं वदन्तं तं ममात्मजम् अद्य भज ।। द्विजोदितं मम भोजनसन्तोषं ये वदन्ति, तेषां सम्पूर्णानि अन्नानि (भविष्यन्ति) इति फलश्रुतिः सत्या ।।

**(व्या) ममेति**[१] ।। हे द्विज वेदनिधे! **ममभोजनसन्तोषम्,** एकपदमेतत् । मम भोजनेन हस्तोदकदानरूपेण सन्तोषो यस्य तादृशम् । **सुजनाम्भुजभास्करम्** = सुजना एवाम्बुजानि तेषां भास्करं सूर्यसदृशम् । **कुजनाम्बुजसङ्कोचद्विजराजम्** = कुजना एवाम्बुजानि तेषां सङ्कोचे द्विजराजं चन्द्रसदृशम् । 'द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः' इत्यमरः ।।५२।।

**मदजाड्यरुजाहीनम् ।।** मदस्य विद्वन्मदस्य सकाशात् यत् बुद्धिजाड्यं तेन या रुजा रोगः तया हीनम् । 'निरभिमानिनम्' इत्यर्थः । **ममात्मजं** (= विप्रं) ।। हे द्विज! (वेदनिधे) येनकेनापि योग्येन अन्नदानादिना आराध्यं[२] (द्विजेन गरुडेनापि गुरुराजावेशरूपउपाधिवशात् आराधयितुं योग्यं) पूजनीयम् । ते **कल्पभुजम्** ।। तव भाविगरुडत्वेन कल्पभुजं कल्पभोगं **प्रति । मज्जनताम्** मम जनसमूहं उद्दिश्य **वदन्तं तं** विप्रम् **अद्य** अन्नदानेन **भज** ।।५३।। हे वेदनिधे! **'ममभोजनसन्तोषं'** इत्यादिपद्यद्वयं द्विजोदितं ये वदन्ति पठन्ति, **तेषां सम्पूर्णानि**

---

(१) (ई अन्नमन्त्रश्लोकगळु स्वल्प आनुपूर्वी व्यत्यासदिन्द अध्याय एळु ऽ श्लोकगळु ९६ऽ९९रल्लिवे)

(२) (आराध्यं एन्दिदे. द्विजाराध्यं एन्दिरबेकु. एकेन्दरे एरडु द्विजपदगळिवे. द्विजा)

अन्नानि भवन्ति । इति फलश्रुतिः सत्या ।।५४।।

**इति मन्त्रस्त्वया तत्र जप्तव्यः सततं त्विह ।**
**कुत्र यास्यति ते पुत्रः कळत्रैः सहसा सह ।।५५।।**

(अन्वयः) इति मन्त्रः त्वया तत्र इह सततं जप्तव्यः । ते पुत्रः कळत्रैः सह सहसा कुत्र यास्यति? (न कुत्रापि इत्यर्थः) ।।

(व्या) इतीति ।। हे वेदनिधे नेदं पद्यद्वयं केवलं श्लोकात्मकम् । किन्तु मन्त्रात्मकमिति विद्धि । इति मन्त्रः त्वया तत्र = रजतपीठ(पुरा)वस्थानावस्थायां, इह = सोदापुरेऽपि । सततं जप्तव्यः ।। हे पुत्र! ते सन्निधानं विहाय विप्रः[१] सहसा पुत्रकळत्रैः सह कुत्र यास्यति? 'न कुत्रापि । अतोऽन्नदानं तस्मै कुरु' इत्यर्थः ।।५५।। वेदनिधिप्रकरणं सं. ।।

(ई मूलक्के ई व्याख्यान विरुद्धवायितु. गरुडनु जन्मान्तरसाधनदिन्द हरिगे वाहननादनु. तेन पुण्येन आ पुण्यप्रभावातिशयदिन्द दानवान्तकनेत्राग्रे अनिशं सर्वत्र वसते एल्लेल्लि देवालयवो अल्लेल्ला एदुरि-गे गरुडकम्भदल्लि देवर कण्णेदुरिगिरुवन्ते स्थितनागुव अधिकारवन्नु पडेदिरुत्ताने. द्वादशस्तोत्र ७ने अध्याय ८ने श्लोक. 'नागारिरुग्रबलपौरुषआपविष्णोर्वाहत्वमुत्तमजवो यदपाङ्गलेशं आश्रित्य' – एन्दु विष्णुवाहत्ववे अवन मुख्याधिकारिवागिदे. नन्तर देवस्थानगळल्लि देवर एदुरिगे स्थिति. एष्टु सम्पादिसिदरू हुडुगरन्ते इन्नू पदवी कोरुववरन्ते सेवकरागिये इद्दारे एन्दु तोरिसलु साहित्यमुद्रेयिन्द लाक्षणिकप्रयोग माडिद्दारे.)

११. विप्रश्रोतृकप्रकरणम्।। श्लोकाः (५६-६१)

(व्या) 'इह' इत्यारभ्य 'आकरस्थं लेखनं च कारय प्राङ्ग्येरितम्' इत्यन्तं विप्र-श्रोतृकप्रकरणं एकादशम् ।।

**इहेति चोच्यते मया प्रियेति चोच्यते त्वया ।**
**मया त्वयाप्यहो विधिर्महोदधौ विधिष्यते[२] ।।५६।।**

---

(१) (ते विप्रः = तवाधीनविप्रः एन्दर्थ. अदरिन्द तव सन्निधानं विहाय एन्द आर्थिकवागि अध्याहार माडिद्दारे.) 'ते विप्रः = तव समीपस्थो विप्रः' इत्यर्थो वा ।

(२) (श्लोक ५६रल्लि वदिष्यति एन्दु व्याख्यानविदे. आदरे विधिष्यते एन्दे स्वा.वृं.गळल्लि मूलविदे. श्लोक ५७रल्लि 'प्रयास्यावः' एन्दु स्वा.व्याख्यानगळिवे. वृंनल्लि प्रपश्याम: एन्दिदे. मणिराजते एन्दु व्याख्यान. मणिराजिते एन्दु वृं. श्लोक ५८रल्लि 'शुभावाप्तिर्भासमानः' एम्ब पाठान्तर व्याख्यानदल्लिदे. वृं.

**स यथा वदति ह्यावां मा वाक् ते चान्यथा भवेत् ।**
**निर्णयं च प्रपश्यावस्त्वर्णवे मणिराजिते ।।५७।।**

(अन्वयः) 'इह' इति मया उच्यते च, 'प्रिय' इति त्वया उच्यते च । विधिः महोदधौ मया त्वया अपि विधिष्यते ।। आवां सः यथा वदति ते वाक् अन्यथा मा भवेत् । मणिराजिते अर्णवे निर्णयं च प्रपश्यावः ।।

(व्या) इहेति ।। हे विप्र! मया पूर्वोक्ते 'इति मन्त्रस्त्वया' (२१।५५) इति श्लोके 'सततं त्विह' इत्यत्र 'सततं प्रिय' इति त्वया उच्यते । नोचितमेतत् । हे विप्र! मया त्वयापि यदुच्यते तत् विधिः । महोदधौ समुद्रतटाके वदिष्यति । 'देवान् प्रति' इत्यर्थः ।।५६।। स यथा वदति । तथा आवां त्वं अहं च । हे मणिराज! ब्राह्मण! निर्णयं च । प्रयास्यावः मद्दत्तमणिना राजते शोभते इति मणिराजः । तस्य सम्बुद्धिः । प्रयास्यावः (प्रपश्यामः?) गच्छावः । ये गत्यर्थास्ते ज्ञानार्थाः । ज्ञास्याव इत्यर्थः । ते च वाक् अन्यथा मा भवतु ।।५७।।

**इति हास्यास्पदा ते च शेमुषीशासकोऽस्म्यहम् ।**

(अन्वयः) इति हास्यास्पदा ते शेमुषीशासकः च अहम् अस्मि ।

(व्या) इति एवं तव हास्यास्पदा = हास्याश्रया शेमुषी बुद्धिः 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । न स्यात् । तस्याश्च अहं शासकोऽस्मि ।।

**मासि मासि शुभावासि भासमानः शशी यथा ।।५८।।**

**परसौख्यं त्वन्मुखेन नरसौख्यं यथा च मे ।**
**सुरसौख्यं च मे सूर्यकरवच्च प्रकाशय ।।५९।।**

(अन्वयः) यथा मासि मासि भासमानः शशी शुभावासि (तथा) मे नरसौख्यं परसौख्यं सुरसौख्यं च यथा (भवति) त्वन्मुखेन च सूर्यकरवत् प्रकाशय ।।

(व्या) मासि मासि । 'पक्षा वै मासाः' इति श्रुतेः प्रतिशुक्लपक्षे सूर्यप्रकाशेन भासमानः

---

मत्तु रामतत्व. प्रिं.नल्लि शुभावासि भासमानः एन्दिदे. इवेल्ला वृं मूलके विरुद्ध. ई मूरु स्थळगळल्लू भी.नोडबेकु).

। लोकस्य शुभावाप्तिः शुभस्य आवाप्तिः प्राप्तिर्येन सः । तादृशः भवति[१] ।।५८।। तथा **यत् त्वन्मुखेन परसौख्यं** = परलोकसौख्यम् । **नरसौख्यम्** = ऐहिकसौख्यम् । अपि च । **मम सुरसौख्यम्** । सुरादिलोकेषु देवादिभिः प्राप्तसौख्यं कथितम् । तच्च **सूर्यकरवत् प्रकाशय** । 'योग्येषु' इत्यर्थः[२] ।।५९।।

**मम सद्भक्तिसम्भूतिं ये वदन्ति बुधोदिताम् ।**
**तेषां सत्सम्पदः स्युस्ताः पूर्तिमत्योऽत्र याः सुत ।।**

**इत्येकं श्लोकमुख्यं मे त्यक्तवानसि विप्रक ।**
**आकरस्थं लेखनं च कारय प्राङ्मयेरितम् ।।६१।।**

(अन्वयः) – हे विप्रक!

**'मम सद्भक्तिसम्भूतिं ये वदन्ति बुधोदिताम् ।**
**तेषां सत्सम्पदः स्युस्ताः पूर्तिमत्योऽत्र याः सुत ।।'**

इति एकं मे श्लोकमुख्यं प्राक् मयेरितं त्यक्तवान् असि । लेखनम् आकरस्थं च कारय ।।

**(व्या)** मयापि प्रकाशितमेव । किं पुनरुक्तेन? इत्यतः, न च प्रकाशितं त्वया मदुक्तश्लोक-विस्मरणात्, कोऽसौ श्लोकः? इत्यत आह – **मम सद्भक्तीति** (२०।७९) ।।६०।। पूर्वमेव उक्तोऽयं सार्थकतया, **'इत्येकं मे श्लोकमुख्यम्'** । मुख्यश्चासौ श्लोकश्चेति विशेष्यपूर्वपदकर्म-

---

(१) (श्लोक ५८रल्लि शुभावापि भासमानः शशी यथा एन्दु वृं.पाठक्के अर्थ – अपरोक्षज्ञानिगळिगे प्रारब्धविशेषदहनार्थवागि आवासस्थानवु सूर्यनु. शुभैः आवास्यते इति शुभावासी सूर्यः । शुभावासिना भासमानः शशी यथा । तथा ते शेमुषी मया शास्यते एन्दु योजने. नानु हेळिद्दक्के नीनु मरेतु विरुद्धबरेसुव गुणवन्ने तेगेदुबिड्डुत्तेने एन्दु साहित्यरीतियिन्द प्रियवचन)

(२) श्लोक ५९रल्लि विवक्षितवाद परसौख्य एन्दरे अवर ऋजुस्वरूप, ज्ञान, सुख, वाहन, आभरण, विमान, देवरु देवतेगळु श्वेतद्वीपदल्लि हेळिद मेले अवतार, दशावतार हरिदर्शन, सूर्यमण्डलस्थ हरिय सेवे, चन्द्रमण्डलस्थ वामनन सेवे, हंस धन्वन्तरि वेदव्यासर सेवे इत्यादि भाविसमीरत्वादिनिश्चय. अष्टबाहु नारायणदर्शन, शिंशुमारस्वामि दर्शन, हयग्रीवप्रसाद; सुरसौख्यवेन्दरे इन्द्रादिदिक्पालकरु करेदु पूजेमाडिद सौख्य. नक्षत्रमण्डलस्थ, स्वर्गलोकस्थजनरु माडिद पूजे इत्यादि. नरसौख्यवेन्दरे युक्तिमल्लिका रचिसि, मध्वाचार्यर कार्यपूर्तिमाडि, शिष्यरन्नु अनुग्रहिसि पूजिसल्पडुव सौख्य

धारयः । हे विप्र! प्राङ्ग्येरितं त्यक्तवानसि । तस्य लेखनम् आकरस्थं यथा भवेत् तथा वेदनिधिना कारय ।। विप्रश्रोतृकप्रकरणं सम्पूर्णम् ।।

### १२. वेदनिधिप्रकरणम्।। श्लोकाः (६२-६६)

(व्या) 'हे ब्राह्मणान्नमन्त्रम्' इत्यारभ्य 'एवमेव न संशयः' इत्यन्तं द्वादशं वेदनिधिश्रोतृकप्रकरणम् ।।

**हे ब्राह्मणान्नमन्त्रं त्वं जपन् सम्पश्य मां मुनिम् ।**
**शतानन्दमुनेस्तातो ब्राह्मणान्नं यथाऽऽतनोत् ।।**

**तथा तनोषि त्वमपि वृन्दावनपतिं जप ।**
**मन्त्रेणानेन विपेन्द्र शीघ्रं तेऽन्नं ददाम्यहम् ।।६३।।**

(अन्वयः) हे ब्राह्मण! अन्नमन्त्रं त्वं जपन् मां मुनिं सम्पश्य । यथा (पूर्वं) शतानन्द मुनेः तातः (गौतमः) ब्राह्मणान्नम् आतनोत्; तथा त्वम् अपि तनोषि । (अतः) वृन्दावनपतिं जप । हे विप्रेन्द्र! अनेन मन्त्रेण अहं ते (तुभ्यं) शीघ्रम् अन्नं ददामि ।।

(व्या) हे ब्राह्मणेति ।। वेदनिधे! अन्नमन्त्रं पूर्वोक्तं त्वं जप । तदृषिं मुनिं च मां सम्पश्य = सम्यक् पश्य । त्वं एतज्जपेन यथापूर्वं शतानन्दस्य तन्नामकर्षेः तातः गौतमर्षिः अवर्षणकाले ब्राह्मणान्नम्, ब्राह्मणेभ्यो अन्नं ब्राह्मणान्नम्, चतुर्थीतत्पुरुषः । आतनोत् = विस्तारयामास ।।६२।। तथा त्वमपि तनोषि, विस्तारयसि । अतो वृन्दावनपतिं श्रीहयवदनं मां च जप । हे विप्रेन्द्र! अनेन मन्त्रेण । अहं ते तुभ्यं शीघ्रं यथा स्यात् तथा अन्नं ददामि ।।६३।।

**पूर्वं त्वमन्नदानं च नाकरः परमे द्विजे ।**
**नादत्तमुपतिष्ठेच्च ब्रह्माद्यास्त्रिदशा अपि ।।६४।।**

**अतस्त्वं कार्पण्यभावं त्यज ब्राह्मणतर्पणम् ।**
**कुरु कृष्णार्पणं तच्च दर्पणे स्वमुखं यथा ।।६५।।**

**पश्यसि त्वं जन्मजन्मन्येवं सत्फलसञ्चयम् ।**

**मन्ममन्म वयं सर्वेऽप्येवमेव न संशयः ।।६६।।**

(अन्वयः) द्विजे अन्नदानं च न अकरः । अदत्तं च ब्रह्माद्याः त्रिदशाः अपि न उपतिष्ठेत् ।। अतः त्वं कार्पण्यभावं त्यज । ब्राह्मणतर्पणं च श्रीकृष्णार्पणं कुरु । तत् च यथा दर्पणे स्वमुखं (पुनः आदातुं न शक्नोति तथा) ।। त्वं जन्मजन्मनि सत्फलसश्चयं पश्यसि । वयं सर्वे अपि एवमेव मन्म मन्म न संशयः ।।

(व्या) जपाभावे अन्नाप्राप्तेः कारणमाह – **पूर्वमिति** ।। हे वेदनिधे! **त्वं पूर्वं परमे** विष्णुभक्ते **द्विजे अन्नदानं न अकरोः**; कोऽपि पूर्वादत्तं **नोपतिष्ठेत्** = नोपलभेत् । **ब्रह्माद्याः त्रिदशा** देवा **अपि** नोपतिष्ठेयुः । का कथा त्वादृशानाम्? ।।६४।। **अतस्त्वं कार्पण्यभावं** = कृपणत्वं **त्यज** । **ब्राह्मणतर्पणं** च ब्राह्मणभोजनं च **कृष्णार्पणं कुरु** । तत्प्रकारकं दृष्टान्तं कथयति – **तच्चेति** ।। **तच्च** ब्राह्मणभोजनात्मकं कर्म, **यथा दर्पणे** न्यस्तं **स्वमुखं** पुनरादातुं न शक्नोति तथेत्यर्थः ।।६५।। **पश्यसीति** ।। एवं करणे **त्वं** एवं **जन्मजन्मनि सत्फलसश्चयम्** अन्नादिमत्वरूपं **पश्यसि** । **वयं** ब्रह्माद्याः **सर्वेऽपि एवमेव** । **मन्ममन्म** मन्यामहे मन्यामहे । **नात्र संशयः** ।।६६।। वे.नि.श्रो. प्र. सं.।।

१३. बहुभक्तश्रोतृकप्रकरणम्।। श्लोकाः (६७-७२ १/२)

(व्या) **'मुनिं मन्नन्दनम्'** इत्यारभ्य **'तनुभृत् स्वयम्'** इत्यन्तं बहुभक्तश्रोतृकं त्रयोदशं प्रकरणम् ।।

**मुनिं मन्नन्दनं पुण्यात्मानं पश्यन्तु सज्जनाः ।**
**स्नाने च प्रणवध्याने व्याख्याने देवतार्चने ।।६७।।**

**पुनर्माध्याह्निके स्नाने भोजने ब्राह्मणैः सह ।**
**नित्यं स वर्तते विद्वान् वेदशास्त्रविनोदतः ।।६८।।**

**प्रीणयन् परमानन्दं संददन्मम(१) नाकिनः ।**
**नो वृथा क्षणमप्यस्य गतं तोकस्य सात्विकाः ।।६९।।**

(अन्वयः) हे सज्जनाः! पुण्यात्मानं मन्नन्दनं मुनिं (वेदवेद्यं) पश्यन्तु । स्नाने,

(१) (स ददन् एन्दु वृं.पा. सदनं एन्दु पाठान्तर स्वादल्लिदे. व्याख्यानानुसारि)

प्रणवध्याने, व्याख्याने देवतार्चने । पुनः माध्याह्निके स्नाने, ब्राह्मणैः सह भोजने च विद्वान् नित्यं क्रमेण । (हे सात्विकाः) सः नित्यं वेदशास्त्रविनोदतः नाकिनः मम परमानन्दं सन्ददन् वर्तते ।। अस्य तोकस्य क्षणम् अपि न वृथा गतम् ।।

(व्या) **'मत्सुतस्य च भागोयम्'** इति यत्पूर्वोक्तं तच्चैतदध्यायद्वयप्रतिपाद्यम् आख्यानान्तं वेदवेद्यमाहात्म्यं कथयन् श्रीवादिराजमहामुनिरुपक्रमते – **मुनिमिति** ।। **हे सज्जनाः!** यूयं सर्वे **पुण्यात्मानं मन्नन्दनं पश्यन्तु** । 'दर्शनादेव साधवः' इत्युक्तेः, वेदवेद्यस्य साधुशिखामणित्वात्' इत्यर्थः । ननु कमभिप्रायमाश्रित्य पश्यामः? इत्यत आह – **स्नाने इति** ।। **स्नाने** = स्नानकाले, प्रणवजपध्यानकाले, **व्याख्याने** = सुधादिपाठकाले, देवतार्चने ।।६७।। **पुनः माध्याह्निके स्नाने** । **ब्राह्मणैः सह भोजने** = भोजनकाले । **विद्वान्** वेदवेद्यः । **नित्यं** एवं क्रमेण **वेदशास्त्रविनोदतः** वेदाश्च शास्त्रं च तयोर्विनोदतः । हे सज्जनाः! शृणुत । वेदे वा शास्त्रे मध्वशास्त्रे वा श्रीहयवदन एव सर्वोत्तमः **स** एव सर्वदा युष्माभिर्भजनीयः इति मन्दहासपूर्वकं यः विनोदः = हरिभजनप्रेरणा । तेन **नाकिनः** देवलोकाधिपस्य **मम परमानन्दं** परमानन्दरूपं सदनं । (स ददन्' इति पाठान्तरे - 'परमानन्दं निरवधिकानन्दरूपं श्रीहयवदनं वेदशास्त्रविनोदतः प्रीणयन् सन् नाकिनः मम परमानन्दं ददन् सन् । सः वर्तते' इत्यन्वयः ।) सच्चासौ अनश्च । 'ॐ तत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः' इति गीतोक्तेः । अनः प्रेरकश्च । तं श्रीहयवदनं । प्रीणयन् सन् । वर्तते । **हे सात्विकाः! अस्य** मम तोकस्य । पुत्रस्य **क्षणमपि नो वृथागतम्** ।।६८-६९।।

**पश्यन्तु तपसोऽस्माकं साफल्यं च कलौयुगे ।**
**तस्मादयं च तोकोऽपि लोकोपकरकर्मवान् ।।७०।।**

**शोकोऽप्यमुत्र नास्त्येव कोपोऽपि समवर्तिनः ।**
**गुणान् द्विगुणितानस्मिन् पश्यन्तु गुणिनः सदा ।।७१।।**

(अन्वयः) अस्माकं तपसः साफल्यं कलौयुगे च पश्यन्तु । तस्मात् अयं तोकः अपि लोकोपकरकर्मवान् च । समवर्तिनः अमुत्र शोकः अपि (तथा) कोपः अपि नास्त्येव । अस्मिन् गुणिनः सदा गुणान् द्विगुणितान् पश्यन्तु ।।

(व्या) **पश्यन्तु** सर्वे । **अस्माकं तपसः** । **कलौ युगे साफल्यं तस्मात् अयं च तोकः**

अपि लोकोपकरकर्मवान् ।।७०।। एवं लोकोपकारकर्मवतोऽपि तस्य इह अमुत्रापि शोको नास्त्येव । ननु क्रोधस्य अपरिहार्यत्वात् । सास्तु । इत्यत आह – कोपोपीति ।। समवर्तिनः = सुखादिद्वन्द्वेषु समवर्तिनः कोपोऽपि नास्ति । असमवर्तिनां च कोपः सम्भवत्येव । अस्य च अमुत्रापि = देवादिलोकेष्वपि कोपादिदोषो नास्ति । अत एव ''समवर्ती'' इत्युच्यते । यमस्य समवर्तित्वं च । पुण्यवत्पापिजीवानधिकृत्यैवेति मन्तव्यम् । गुणिनश्च यूयम् अस्मिन् वेदवेद्ये गुणान् शमदमादीन् तपोबलात् द्विगुणितान् पश्यन्तु ।।७१।।

**गुणिनश्च प्रमोदन्ते गुणिष्विह न निर्गुणाः ।**
**तस्मान्मम समो मन्नन्दन एव दिने दिने ।।७२।।**

**कर्मन्दिनां सदाऽऽनन्दं तनोतु तनुभृत्स्वयम् ।।**

(अन्वयः) गुणिनः च गुणिषु एव प्रमोदन्ते, न निर्गुणाः । तस्मात् मन्नन्दनः दिने दिने मम समः एव । स्वयं तनुभृत् कर्मन्दिनां सदा आनन्दं तनोतु ।।

(व्या) युष्मादृशाः() गुणिनश्च गुणिष्वेव प्रमोदन्ते, न निर्गुणाः । तस्मात् मन्नन्दनः दिने दिने साधनसामग्र्या मत्सम एव । एवमभिप्रायमाश्रित्य मम इव मत्समत्वेन तस्याराधनं कार्यमित्यर्थः ।।७२।। सोऽपि स्वयं हर्याज्ञया तनुभृत् मनुष्यतनुभृत् कर्मन्दिनां मदादीनां सन्यासिनां स्वतपसा सदानन्दं तनोतु ।। बहुभक्तश्रो.प्र.सं.।।

१४. वादिराजभट्टप्रकरणम् ।। श्लोकाः (७३-७६ १/२)

(व्या) 'हे वादिराजभट्ट' इत्यारभ्य 'परार्धं लोकमेष्यति' इत्यन्तं चतुर्दशं वादि-राजभट्टश्रोतृकं प्रकरणम् ।।

**हे वादिराजभट्टार्यनामधार उदार ते ।।७३।।**

**सार्थकं कुरुषे जन्म पार्थवन्नात्र संशयः ।**
**वृन्दावनाचार्यनाम्नः पुत्रमित्रकळत्रकैः ।।७४।।**

**सह तस्य गृहं दत्वा बृहत्कीर्तिमुपाददीः ।**
**प्रतापं तस्य दत्वा चामित्रतापं करोष्यहो ।।७५।।**

(अन्वयः) हे वादिराजभट्टार्यनामधार! उदार! पार्थवत् ते जन्म सार्थकं कुरुषे । अत्र

न संशयः । पुत्रमित्रकळत्रकैः सह वृन्दावनाचार्यनाम्नः तस्य गृहं दत्वा बृहत् कीतिर्म उपाददीः । प्रतापं दत्वा तस्य अमित्रतापं च करोषि; अहो!

(व्या) हे वादिराजभट्टेति ।। हे वादिराजभट्ट! आर्य नामधार = सभ्यनामधर । हे उदार! त्वं ते तव ।।७३।। जन्म पार्थवत् सार्थकं कुरुषे । अत्र संशयः न । ननु किं मया कृतं येन च मे जन्म सार्थकं भवति? इत्यत आह – वृन्दावनाचार्येति ।। त्वं वृन्दावनाचार्यनाम्नः अस्य विप्रस्य पुत्रमित्रकळत्रैः सह स्थितस्य दरिद्रस्य गृहं दत्वा, बृहत्कीर्तिम् उपाददीः अङ्गीकृतवान् । तस्य च प्रतापं माशासनं (वर्षाशनं वा) दत्वा, अमित्रतापं तस्य तव वा अमित्राणां शत्रूणां तापं करोष्यहो ।।७५।।

**पत्रतापाख्यरुद्रोऽपि स्वप्रतापं जहाविह ।**
**लक्ष्मीपतिप्रतापार्थं दत्वा प्रारब्धमप्यहो ।।७६।।**

**स्वेन सार्धं च तद्भुक्त्वा परार्ध्यं लोकमेष्यति ।**

(अन्वयः) पत्रतापाख्यरुद्रः अपि इह लक्ष्मीपतिप्रतापार्थं स्वप्रतापं दत्वा प्रारब्धम् अपि जहौ । (सः) स्वेन (पुण्येन) सार्धं च परार्ध्यं तत् (पुण्यं) भुक्त्वा, लोकम् (योग्यलोकं) एष्यति ।।

(व्या) एतत्करणेनैव तव जन्मसार्थकमभूत् । इह मदन्तिके, वेदवेद्यस्य वा समीपे । पत्रतापाख्यरुद्रोऽपि मनुष्यत्वेन आगत्य, लक्ष्मीपतिप्रतापार्थं लक्ष्मीपतिविप्रस्य प्रतापार्थम् । कोऽर्थः? लक्ष्मीपतिश्च स्वप्रतापं ब्राह्मणाय (प्रतिपत्य) न दत्तवान्, तदर्थम् इत्यर्थः । स्वप्रतापम् इह जहौ अर्पितवान् । तेन च स्वस्य प्रारब्धमपि जहौ इत्यर्थः ।।७६।।

ननु तस्य पत्रतापाख्यरुद्रस्य प्रतापदानेन का गतिः? इत्यत आह – स्वेनेति ।। हे वादिराजभट्ट! शृणु । स च स्वेन पुण्येन सार्धं साकं परार्धं लक्ष्मीपतेरप्यर्धं तत्पुण्यं भुक्त्वा लोकं योग्यलोकम् एष्यति गच्छति ।। वादिराजभट्टप्रकरणं सं.

१५. विप्रप्रकरणम्।। श्लोकाः(७७-८४ १/२)

(व्या) 'निष्कद्वयं स दत्वा' इत्यारभ्य 'प्रार्थयंस्त्वं सदा द्विज' इत्यन्तं पञ्चादशं विप्र. श्लो.प्र.।।

**निष्कद्वयं स दत्वा तु शुष्कं तत्पापसञ्चयम् ।।७७।।**

**किंष्किन्धेश्वरवच्चक्रे पुल्कसां जन्मयापकम् ।**
**सोऽपि दासो मम व्यासः स्नेहपाशान्वितस्त्वयि ।।७८।।**

**हस्ते च श्रीपतेर्निष्कद्वयं प्रापयदाशु ते ।**
**तेन ते तात एवासौ माता ते तत्सती द्विजे ।।७९।।**

(अन्वयः) हे विप्र! स तु (लक्ष्मीपतिः) किष्किन्धेश्वरवत् निष्कद्वयं दत्वा, तत् पुल्कसां जन्मयापकं पापसञ्चयं शुष्कं चक्रे ।। सः अपि मम दासः । व्यासः त्वयि स्नेहपाशान्वितः । श्रीपतेः हास्ते च ते निष्कद्वयं प्रापयत् । तेन (अन्नदातृत्वात्) असौ (व्यासः) द्विजे ते तात एव । तत् सती च ते माता ।।

(व्या) **हे विप्र! स तु** लक्ष्मीपतिः[१] स्वप्रतापात् **निष्कद्वयं दत्वा । तत्** स्वकीयमित्यर्थः । **पुल्कसां** = पुल्कसानाम् । 'निषादश्वपचावन्तेवासि चाण्डालपुल्कसा' इत्यमरः । चाण्डालानां **जन्मयापकं** प्रापकं **पापसञ्चयम् । किष्किन्धेश्वरवत्** वालिवत्, वालीव 'यथा वाली रामपुरतः स्वदेहदानेन रुमासङ्गजन्यपापसञ्चयं **शुष्कं चक्रे** । तथा अयमपि' इत्यर्थः ।।

**सोऽपि** तथा (व्यासभक्त) व्यासोऽपि मम दासः । **त्वयि स्नेहपाशान्वितः** ।।७८।।

**श्रीपतेर्हस्ते च । ते** तुभ्यं त्वदर्थे इत्यर्थः । **निष्कद्वयम् आशु प्रापयत् । तेन** हे विप्र! तव(=निनगे) अन्नदातृत्वात् **असौ** व्यासः **ते तात एव** । तातसम एव । **तत्सती** च **ते माता** ।।७९।।

**तस्यानुजः पितृव्यस्ते गुरुर्मत्सुत एव च ।**
**इत्थं सदाऽनुसन्धानबन्धनान्वित एव सन् ।।८०।।**

**धन्वन्तरिं सदा ध्यायन् किं धनैर्बन्धनप्रदैः ।**

---

(१) (स तु पत्रतापनामकरुद्रः एन्दिरबेकु. ई हदिनैदनेय प्रकरणदल्लि ७८नेय श्लोकदल्लि व्यासः एन्दु हेळल्पट्टवने ७६नेय श्लोकोक्त लक्ष्मीपतियु एन्दू, श्रीपतियु लक्ष्मीपतिभिन्ननेन्दू उपपादने इदे. १५. विप्र.प्र.७६ऽ८५. 'सतु लक्ष्मीपतिः' एम्बुदु तप्पल्लवादरे व्यासभक्तबेरे लक्ष्मीपति बेरे एन्दागुत्ते.)

**वर्तस्व समुपास्वेह कार्तस्वरविभूषितम् ॥८१॥**

**पार्थः स्वरमणं कृष्णं यथा प्रार्थस्व मामपि ।**

(अन्वयः) तस्य अनुजः ते पितृव्यः, मत्सुतः गुरुः एव च । सदा इत्थम् अनुसन्धानबन्धनान्वितः एव सन्, धन्वन्तरिं सदा ध्यायन् वर्तस्व । बन्धनप्रदैः धनैः किम्? इह कार्तस्वरविभूषितं स्वरमणं कृष्णं यथा पार्थः (तथा) समुपास्व; माम् अपि प्रार्थस्व ॥

(व्या) तस्यानुजः शेषश्च ते पितृव्यः । मत्सुतः वेदवेद्यः ते गुरुरेव । हे द्विज! इत्थं सदा अनुसन्धानबन्धनान्वितः = अनुसन्धानरूपबन्धनेन अन्वितः सन् एव ॥८०॥ सदा धन्वन्तरिं हरिं ध्यायन् वर्तस्व तिष्ठ । बन्धनप्रदैः धनैः किं स्यात् इह कार्तस्वरविभूषितं स्वर्णालङ्कारभूषितं (श्रीकृष्णम्) ॥८१॥

यथा पार्थः अर्जुनः स्वरमणं स्वानन्ददं श्रीकृष्णं यथा तथा । तं कृष्णं मुनिं मां च । प्रार्थ्यस्व प्रार्थयस्व ॥

**नन्दनं यतिसन्दोहेनान्वितं तन्मते स्थितम् ॥८२॥**[१]

**सन्मतिं जन्मतः कान्तं शान्तं तं समुपास्व ह ।**

(अन्वयः) यतिसन्दोहेन अन्वितं, तन्मते स्थितं, जन्मतः सन्मतिं, कान्तं, शान्तं, तं नन्दनं समुपास्व ह ॥

(व्या) न चैवतालम् । किन्तु हे विप्र! नन्दनं वेदवेद्यमपीत्यर्थः । कीदृशम्? यतिसन्दोहेन = यतिसमूहेन । अन्वितं युक्तम् । तन्मते तेषां मते स्थितम् । तैः सह अविरुद्धत्वेन वर्तमानमित्यर्थः ॥८२॥

पुनः कीदृशम्? सन्मतिं सद्बुद्धिम् । जन्मतः निसर्गतश्च कान्तम् । द्वात्रिंशल्लक्षणोपेततया

---

(१) (प्रार्थ्यस्व ऽ एन्दु स्वा.व्याख्यानं च. आदरे प्रार्थस्व एन्दे वृं.प्रिं. भी नोडबेकु. प्रार्थयस्व एन्दे अर्थ. एरडू अलौकिकप्रयोगवे. प्रार्थस्व एम्बल्लि णिच्गे लोप. प्रार्थ्यस्व एम्बल्लि श्यन् माडि विकरणव्यत्यास तिळियबेकु)

सुन्दरम् ।[१] इह अमुत्र **चार्थदम्** = पुरुषार्थप्रदम् । **शास्त्रार्थज्ञं** = मध्व- शास्त्रार्थज्ञम् । मदाख्यानज्ञम्[२] । तत्वार्थः = मध्वसिद्धान्तः । तस्मिन् **कोविदं** = निपुणम् । **तं शान्तं समुपास्व** । **'ह'** इति पूजार्थमव्ययम् ।।८३।।

**इहामुत्रार्थदं शास्त्रार्थज्ञं तत्वार्थकोविदम् ।।८३।।**

**सुत्रामगुरुवत् प्राज्ञं प्रार्थय श्रीपतेः प्रियम् ।**
**औदार्यमाधुर्यवाक्ययुक्तं धैर्यान्वितं परैः ।।८४।।**

**विवादे कार्यमाणेऽपि गाम्भीर्येणार्यभाविनम् ।**
**चातुर्यतः पराक्रान्तं मातुर्यस्यास्तपोदयम् ।।८५**

**प्रातर्युगं तत्पदयोः प्रार्थयंस्त्वं सदा द्विज ।**

(अन्वयः) इहामुत्रार्थदं, शास्त्रार्थज्ञं, तत्वार्थकोविदं, सुत्रामगुरुवत् तत्वार्थकोविदं, श्रीपतेः प्रियं, प्राज्ञं प्रार्थय । औदार्यमाधुर्यवाक्ययुक्तं, परैः विवादे क्रियमाणेऽपि धैर्यान्वितं, गाम्भीर्येण आर्यभाविनं, यस्याः मातुः तपोदयम्, चातुर्यतः पराक्रान्तं, सदा प्रातः तत्पदयोः युगं प्रार्थयन् (सन्) त्वं (वर्तस्व) ।।

(व्या) (पुनः कीदृशम्) **सुत्रामगुरुवत्** = इन्द्रगुरुवत् = बृहस्पतिवत् । **प्राज्ञम्**। **श्रीपतेः प्रियं** । **प्रार्थय** । **औदार्यमाधुर्यवाक्यम्** = [३]औदार्येण माधुर्येण च युक्तं वाक्यं यस्य तम् । **परैः** शत्रुभिः ।।८४।।

---

(१) (सुन्दरकाण्ड एम्ब रामायणद प्रयोगक्कॆ इदे अर्थ. सुन्दरस्य द्वात्रिंशल्लक्षणोपेतत्वात् सुन्दरस्य वायोः हनुमतः काण्डं पराक्रमप्रतिपादकभागः' एन्दर्थ)

(२) (मदाख्यानज्ञं – वेदवेद्यर पट्टकालदल्लि आख्यानप्रकटवागिरलिल्ल. १६०० रिन्द सुमारु १६१५रवरॆगॆ अवर काल. वेदनिधिगळ कालदल्ले आख्यान प्रकाशवागिदे. आद्दरिन्द एष्यत् मदाख्यानज्ञं एन्दु अर्थ तिळियबेकु)

(३) (औदार्यमाधुर्यवाक्ययुक्तं एन्दु मूलदल्लिदे. औदार्यमाधुर्यविशिष्टवाक्यवक्तारं एन्दर्थ. प्रमाददिन्द युक्तं एम्ब मूलपद नोडदे बहुव्रीहि समास माडिद्दारे. अथवा स्नातानुलिप्तः एम्बन्ते औदार्यमाधुर्यवाक्यश्चासौ युक्तश्च एन्दु विग्रह माडि 'औदार्यमाधुर्यपूर्णानि वाक्यानि येन सः । स चासौ युक्तः भगवति मनोयोगयुक्तः तं' एन्दर्थ माडबहुदु.)

**विवादे क्रियमाणे** सत्यपि **धैर्यान्वितं गाम्भीर्येण** च **आर्यभाविनम्** । आर्यान् सम्भावितान् भावयतीति तादृशम् । **यस्याः मातुः** जनन्याः । **तपोदयं** तपसा उदयः जन्म यस्य तादृशं । **चातुर्यतश्च** । (**पराक्रान्तं** =) परे शत्रवः आक्रान्ता येन सः तम्, तादृशम् । तं समुपास्व ।।८५।।

**हे द्विज!** सदा प्रातः प्रातःकाले **तत्पदयो**र्युगं द्वन्द्वं त्वं **सदा** प्रार्थयस्व । प्रार्थनां कुरु ।। विप्र.प्र.सं.।।

१६. वेदवेद्यश्रोतृकप्रकरणम् ।। श्लोकाः (८६-९१ १/२)

(व्या) **'अपां फेनेन'** इत्यारभ्य **'धृतिं कुरु'** इत्यन्तं वेदवेद्यश्रोतृकं षोडशप्रकरणम् ।।

**अपां फेनेन नमुचेः शिरोदुश्च्यवनोऽहरत् ।।८६।।**

**यथा तपःप्रभावेन हन्म्यहं परवादिनः ।**
**तस्माद् दुर्वादिभिर्भीतिर्नास्ति नास्ति सभासु ते ।।८७।।**

**तज्जिह्वा सान्तरैर्बद्धा भविष्यति न संशयः ।**

(अन्वयः) यथा अपां फेनेन दुश्चवनः नमुचेः शिरः अहरत् (तद्वत्) अहं तपः प्रभावेन परवादिनः हन्मि ।। तस्मात् सभासु ते दुर्वादिभिः भीतिः नास्ति नास्ति । तत् जिह्वा सान्तरैः बद्धा भविष्यति (अत्र) न संशयः ।।

(व्या) **अपामिति** ।।[१] हे वेदवेद्य! **यथा दुश्च्यवनः** इन्द्रः । वज्रयुक्तेन **अपां फेनेन नमुचेः** तन्नामकदैत्यस्य **शिरः अहरत्** । तथा **अहं तपःप्रभावेन परवादिनः** = मायावादिनः (तव शत्रून्) **हन्मि**[२] ।**तस्मात् सभासु ते दुर्वादिभिः भीतिः नास्ति नास्ति** ।। ननु केवलं

---

(१) (इल्लि व्याख्यानमूल 'अपां फेनेन इत्यारभ्य अध्यायान्तं वेदवेद्यप्रकरणं' एन्दिदे. आदरे मुन्दे ९१ १/२ श्लोकद मेले बेरे अवान्तरप्रकरण बरुत्ते. आद्दरिन्द मध्ये निक्षिप्त अवान्तरप्रकरणविवक्षया 'धृतिं कुरु' इत्यन्तं वेदवेद्यप्रकरणवेन्दू, ९१ऽ९६रवरेगे बहुभक्तश्रोतृकप्रकरणवेन्दू, ९६रिन्द अध्यायान्तं वेदवेद्यप्रकरणवेन्दू विभागवु स्पष्टवागि नन्निन्द तोरिसल्पट्टिदे. इन्नेनू व्यत्यास माडिल्ल.)

(२) (निन्न मातु जलफेनविद्दन्ते. नानु अदरल्लि वज्रदन्ते नन्न तपस्सन्निट्टु दुर्वादिगळ मुखभङ्गवागुवन्ते माडुत्तेने. अन्यथा अवरु छल, जातिवाद, माटक मारणादि चळुवळिगळिन्द तम्म पराजयवन्नु मुच्चिकोण्डु

तपःप्रभावेन तद्धननं कथं स्यात् इत्यत आह – **तज्जिह्वेति** ।। सा **तज्जिह्वा** । तेषां जिह्वा । आन्तरैः आन्त्रैः **बद्धा भविष्यति । न संशयः ।**

**अतस्त्वं नन्दन ममानन्ददानन्दसन्मुनेः ।।८८।।**

**मतं मनसि सन्धाय तामसाञ्जहि वादिनः ।**

(अन्वयः) अतः त्वं मम आनन्ददानन्दसन्मुनेः मतं मनसि सन्धाय वादिनः तामसान् जहि ।।

(व्या) **अतः** हे **नन्दन मम आनन्ददानन्दसन्मुनेः** = आनन्दं ददातीति आनन्ददः, स चासौ आनन्दसन्मुनिश्च आनन्दतीर्थश्च स एव सन्मुनिः, तस्य सन्मुनेः ।।८८।।

**मतं मनसि सन्धाय** = मदुपदेशप्रकारेणानुसन्धाय । **तामसान् वादिनः जहि** (आनन्दतीर्थमतस्थ तव वाक्यम् अपां फेनसदृशम् । तस्मिन् मम तपः निक्षिप्य दुर्वादिगर्वं नाशयामीत्यर्थः)।।

**धनूरत्नं मनस्ते वै ह्यानन्दमुनिसन्मतम् ।।८९।।**

**नानायुधनिदानं ते रथिनः पृथुवादिनः ।**

(अन्वयः) ते मनः धनूरत्नं वै । पृथुवादिनः रथिनः ते आनन्दमुनिसन्मतं (तदेव) नानायुधनिदानं हि ।।

(व्या) ननु शत्रुपराजये किमप्यायुधं चेत् तज्जयो युक्तः । किं तत् इत्यत आह – **धनूरत्नमिति** ।। हे वेदवेद्य! **ते मन एव धनूरत्नम्** = धनुःश्रेष्ठम् । **पृथुवादिनः** रथिनः पृथुः = भगवान् तं सर्वोत्तमत्वेन वदतीति पृथुवादी तस्य रथिनः । **(नानायुधनिधानं)** तव आनन्द- मुनिसन्मतं तदेव नानायुधनिदानम् = नाना आयुधानि प्रास, भिन्दिपालादीनि, तेषां निदानम् आदिकारणं मुख्यायुधम् । (निक्षेपस्थानं, आकरस्थानं वा)[(१)] ।।८९।।

---

निनगे किरुकुळ कोडबहुदेम्ब भाव.)

(१) (रथिकन रथद समीपदल्लिरुव बण्डियल्लि हेच्चु आयुधगळन्निट्टिरुत्तारे. अन्थ आयुधगळ उग्राणद बण्डिगे निदानवेन्दु हेसरु. मुख्यायुधवल्ल. मध्वाचार्यर मतदल्लि दीक्षेयुळ्ळ वैष्णवसाधकने रथि. मुख्यरथि श्रीहरि. अवान्तररथियु वादियु. इल्लि वेदवेद्यरु. वेदवेद्यर मनस्से धनुस्सु. आनन्दतीर्थर मत्तु वादिराजर

**पक्षपातरथं मे त्वं क्षिप्रमारोह काङ्क्षितम् ।।९०।।**

**लक्ष्यं लक्षणसम्पन्न दुष्टपक्षाभिधं बुध ।**
**विद्धं कुरु प्रबुद्धेश वृद्धवाक्यं न धिक्कुरु ।।९१।।**

**बद्धं कुरु मनस्ते मत्पदपद्मे धृतिं कुरु ।**

(अन्वयः) हे लक्षणसम्पन्न! काङ्क्षितं मे पक्षपातरथं त्वं क्षिप्रम् आरोह, हे बुध! दुष्टपक्षाभिधं विद्धं कुरु । हे प्रबुद्धेश! वृद्धवाक्यं न धिक्कुरु । ते मनः मत्पदपद्मे बद्धं कुरु । धृतिं (च) कुरु ।।

**(व्या)** ननु युक्तमुक्तं रथः कः? इत्यत आह – **पक्षपातरथमिति ।।** हे वेदवेद्य! **काङ्क्षितम्** = इच्छितम् । **मे पक्षपातरथं** पक्षपात एव रथः तम् । (मदृजुत्वे दीक्षा । मुद्राएकादश्यादिवैष्णवदीक्षा । दुर्मतद्वेषपूर्वकसच्छास्त्रानुष्ठानदीक्षा इत्यादिकं पक्षपातः । मे इत्युक्त्या गुरुराजे भक्तिः । तदृजुत्वे, कृतिप्रामाण्ये,वृन्दावनमहिमादिषु विश्वासश्च पक्षपातपदेन ग्राह्यः । सा दीक्षा तप इत्युच्यते । पक्षपातपरिग्रहद्वारापरवादिनिग्रहऽ प्रयोजिका भवति) । तादृशं रथम् । **क्षिप्रं** = सत्वरम् । **आरोह** = आरोहणं कुरु । (यथा रथिकः सञ्चरति तथा दुर्वादिपुरतः द्वैतसर्वोत्तमत्ववादे वादिराजऋजुत्ववाक्यार्थे वा प्रवर्तस्व इत्यर्थः) ।।९०।।

लक्ष्यं किम्? इति चेत् **हे लक्षणसम्पन्न!** परवादिजयकरलक्षणान्वित! **बुध! दुष्टपक्षाभिधम्** एव **लक्ष्यं** = वेधस्थानम् । **हे प्रबुद्धेश!** = प्रकर्षेण बुद्धाः ज्ञानिनः देवाः अनिमिषत्वात् इत्यर्थः । तेषां ईश = रुद्राद्युत्तमेत्यर्थः । तत् **विद्धं कुरु** । **वृद्धवाक्यं** = वृद्धोहम्, तस्य मम वाक्यं **न धिक्कुरु** ।।९१।। **मत्पादपद्मे ते मनः बद्धं कुरु** । **धृतिं** च **कुरु** । माभीः ।।९१ १/२।। वेदवेद्यप्र.सं. ।।

---

ग्रन्थगळु बाणगळ बण्डि. ई ग्रन्थगळिन्द कण्ठपाठमाडिद केलवु वाक्यगळु चित्तस्थवागिवे. आ चित्तवे बत्तळिके. ग्रन्थगळिन्द उद्धारमाडि चित्तदिन्द स्मरिसिकोण्डु वाददल्लि उक्तवाद वाक्यगळे बाणगळु. एन्दरे आरिसितेगेद परपक्षनिरासक प्रमाणगळे बाणगळु. वैष्णवदीक्षायुक्तसाधन शरीरवे रथ. दुर्वादिये लक्ष्य. इन्थ वादजयवे सोमरस. अदन्नु अन्तर्यामि श्रीहरिगे अर्पिसबेकु अमुख्यरथि. हीगे वादयज्ञ, अहं ऋजुत्वं साधयामि एम्ब पक्षपातवे रथद आरोहानन्त चलने. एन्दरे द्वैतसाधने अथवा गुरुराजर ऋजुत्वसाधनेगे दीक्षेयु प्रवृत्तवागुवुदे रथद आरोहसञ्चारगळु)

## १७. बहुभक्तश्रोतृकप्रकरणम्।।

श्लोकाः (९२ऽ९६१/२)

(व्या) 'तिमिरं समरे' इत्यारभ्य 'निराकुर्वन्तु सर्वथा' इत्यन्तं बहुभक्तश्रोतृकं अवान्तरप्रकरणं सप्तदशम् [१] ।

**तिमिरं समरे रम्यं निमिरेव कुमारकम् ।।९२।।**

**अमरं त्वमराराध्यं सोमराट् परमोऽरमत् ।**
**अमुचन्नमुचिः काञ्चीं त्वञ्चन् किञ्चन सिञ्चनैः ।।९३।।**

**लाञ्छनाञ्छनसञ्छन्नं नाराचान्न शचीपतिम् ।**

(अन्वयः) असौ (यथा) सोमराट् परमः समरे (तारकामये) कुमारकम् अरम्यं तिमिरं निमिरेव अमरं तु अमराराध्यं अरमत् । ततः च इन्द्रः किञ्चन सिञ्चनैः कान्तिं तु अञ्चन् नमुचिः अमुचत् । (तथापि) लाञ्छलाञ्छनसञ्छन्नं शचीपतिं नाराचान् न (न मार च इत्यर्थः) ।।

(व्या) **तिमिरमिति** ।। हे सज्जनाः! **'तिमिरमि'**त्यारभ्य न **'शचीपति'**मित्यन्तं श्लोक-द्वयम् **एतद् द्विपद्यभावं च मे नन्दनात्** = वेदवेद्यस्य सकाशात् । **हे मन्दबुद्धयः निबोधन्तु** = जानन्तु । **न धुन्वन्तु** = न धिक्कुर्वन्तु । **भवतां** सर्वेषाम् अयं **मुनिः** । वेदवेद्य एव आधारः । **निधानम्** । ननु एतद् द्विपद्यभावं इत्यनेन को वा तद्भावः । कथं वा अस्माभिर्बोध्यः? इत्यतः वेदवेद्यहृदन्तर्गतमेव भावं । स्वयं बोधयन् कथयामीत्याह – **तिमिरमिति** ।। हे सज्जनाः । शृणुत । असौ वेदवेद्यः यथा **सोमराट्** सोमेन चन्द्रेण राजते इति सोमराट् । **परमः** महादेवः । **समरे** तारकामये । **कुमारकं** षण्मुखम् । **अरम्यं** दुःखप्रदम् । **तिमिरं** मोहं प्राप्तम् । वसिष्ठशापेन । **निमिरेव** निमिरिवेत्यर्थः । 'इवेत्थमर्थयोरेव' इत्यमरः ।।९२।। **अमरं** 'न म्रियते' इत्यमरः । एवम्भूतं कृत्वा, **अमराराध्यम्** = अमरैः देवैः आराध्यम् । इन्द्रं प्रति

---

(१) (एवं च ई अध्यायद १६नेय प्रकरणद अवान्तरभागगळागि हदिनेळु मत्तु हदिनेंटु एम्ब प्रकरणगळु परिगणिसल्पडबेकु. तथा च १६ प्रकरणगळे. सौकर्यक्कागि अवान्तर भागगळन्नु बेरे भागगळेन्दु गणने माडिदरे १४ प्रकरणगळागुत्तवे. १६,१७,१८ एम्ब मूरु प्रकरणगळल्लू वेदवेद्यर महिमेयु हेळल्पडुत्तदे.)

सेनापतित्वेन दत्वा । **अरमत्** = चिक्रीडे[१] । ततश्च इन्द्रः तं कुमारकं **किश्चन सिश्चनैः** । किश्चनं महाद्रव्यम् । (महारजनमिव रक्तवर्णयुक्तद्रव्यं) तस्य सिश्चनैः अभिषेकैः । सेनापत्ययुक्तैरित्यर्थः । तस्य **कान्तिं तु अश्चन्** पूजयन् नमुचिं प्रति वज्रम् **अमुचत्** ।।९३।।

न च नमुचिः **लाञ्छनाञ्छनसञ्छन्नम्** = लाञ्छनैः शङ्खचक्रादिभिः । अञ्छनम् अङ्कनम् । तेन सम्यक् छन्नं शचीपतिं महावैष्णवोयमिति मत्वा भयेन **नाराचान्** बाणान् न **अमुचत्** । (न) ममार चेत्यर्थः[२] ।।९४।।

---

(१) (स्कन्दोपाख्यान भारतवनपर्व २२७ऽ२३३ अध्यायगळल्लू अवन तारकासुरवधेयु, शल्यपर्व ४७ने अध्यायदल्लू हेळल्पट्टिदे. शल्यपर्व १४५ऽ४६रल्लि महादेवरू गौरीदेवियरू बन्दु अवनिगे देवसेनाधिपतित्व कोडिसि होद वृत्तान्तविदे. कथे एनेन्दरे, रुद्रशापदिन्द मूर्छितनागि सत्तन्ते इद्द कामनु उमामहेश्वरर पुनर्विवाहवाद मेले स्कन्दनागि षडाननानागि अवतरिसि तन्न ज्ञानप्रागल्भ्यवन्नु व्यक्त माडिदनु. आग रुद्रपार्वतियरु बन्दु अवनिगे सेनापतित्ववन्नु कोडिसलु इन्द्रनु अभिषेक माडि, तानु कापाडिकोण्डिद्द अवन हेण्डतिय अवतारविशेषवन्नु अवनिगे संयोगमाडि तारकामय युद्धक्के अवन नेतृत्वदल्लि सेनेयन्नु नियोगिसिदनु. आ युद्धदल्लि नमुचियु द्वन्द्वयुद्धदल्लि तन्नन्नु एदुरिसि बन्दु निन्तिद्द इन्द्रनन्नु कण्णेत्तिनोडलू असमर्थनादनु. वैष्णवतेजस्सिनिन्द इन्द्रनु शत्रुदुर्धर्षनादनु. आ युद्धदल्लि नमुचियु सत्तेहोदनु एन्दु ई व्याख्यानकाररु हेळिद्दारे. अदक्के मूल गोत्तिल्ल. सत्तिद्दरे पुनः शुक्राचार्यरिन्द सञ्जीवितनेन्दु कल्पिसबेकु)

(२) (ममार चेत्यर्थः एम्बुदक्के आधारविल्ल. नमुचियु दनुपुत्रनु. स्वर्भानु पुत्रि सुप्रभाळन्नु वरिसिदनु. अवनिगे मरणवु शल्यपर्व ४४रल्लि वर्णितवागिदे. फेनद मूलक मरण आगिदे. ई तारकामययुद्धदल्लि मरण हेळिल्ल. नमुचिर्वासवाद्भीतः सूर्यरश्मिं समाविशत् एन्दु ४४-३३रल्लिदे. ओडिहोगिद्दाने. बेरे कालदल्लि जलफेननिक्षिप्तवज्रदिन्द हतनागिद्दाने एन्दु तिळियबेकु. शान्तिपर्व २३३ अध्यायदल्लि अवनु इन्द्रन सङ्गड माताडि तन्न तत्व हेळिकोण्डिद्दाने. ई नमुचिभयक्के सदृशवाददु नेरूरिन आचार्यन कथा. करूरिनल्लि कछेरियल्लि आतगे केलसवित्तु. अधिकारिगे गोत्तागदन्ते धन कद्दनु. अवनन्नु हिडियलु ओब्ब इङ्गिष् अधिकारि गुमास्तनिन्द सहितवागि नेरूरिगे बन्दनु. रात्रे कळ्ळ आचार्यन एदुरिन मनेय जगुलि कोठडियल्लि मलगिद्दनु. बेळिग्गे एनू तिळियद ई कळ्ळ आचार्य मामूलिनन्ते देवरपूजे माडि प्रातःकाल ६घंटेगे मुगिसि सुधावन्नु ओदलु तन्न मनेय मुम्भागद जगलि मेले कूतनु. भव्यवाद आकृति. मुद्राधारण मैय्येल्ला काणिसुत्तित्तु. ‘श्रियः पत्ये’ एन्दु गट्टियागि ओदलु पोलीस् अधिकारि एदुर मने जगुलियल्लिद्दवनु होरगे बन्दु नोडि ‘गुमास्त इवनन्ने नानु हिडियबेकादु’ एन्दु नौकरनन्नु केळिदनु. अवनु हौदेन्दनु. अधिकारिगे डङ्गायितु. अवनु कळ्ळतन नम्बदे तन्न कैचील गुमास्तनोन्दिगे करूरिगे वापस्सागि अवनु कळ्ळनल्ल एन्दु मेलिनवरिगे तिळिसिबिट्टनु. वैष्णवलांछनगळ प्रभाव इन्थदु. ऽ करूरिगू नेरूरिगू ४मैलि.)

**एतद्द्विपद्यभावं मे नन्दनान्मन्दबुद्धयः ।।९४।।**

**निबोधन्तु न धुन्वन्तु निधानं भवतां मुनिः ।**

(अन्वयः) मे नन्दनात्(श्रीमद्वेदवेद्यस्य सकाशात्) एतत् द्विपद्यभावम् अमन्दबुद्धयः निबोधन्तु (जानन्तु) । अयं मुनिः (श्रीवेदवेद्यः एव) भवतां निधानं (आधारः) । (तं) न धुन्वन्तु ।।

**ज्ञानसागरमग्नोऽसौ संसाराग्निप्रदीपितान् ।।९५।।**

**तत्पूरैर्भग्नसन्तापानद्भिरग्निमिवाकरोत् ।**
**तस्मात् ज्ञाननिधिं प्राप्य सुखिनः सन्तु सज्जनाः ।।९६।।**

**विज्ञानकोशादज्ञानं निराकुर्वन्तु सर्वथा ।**

(अन्वयः) असौ ज्ञानसागरमग्नः (सन्) संसाराग्निप्रदीपितान्, अद्भिः तत्पूरैः अग्निमिव, अकरोत् । तस्मात् (अयं) ज्ञाननिधिं प्राप्य सज्जनाः सुखिनः सन्तु । सर्वथा विज्ञानकोशात् अज्ञानं निराकुर्वन्तु ।।

(व्या) तथा **ज्ञानसागरमग्नः** सन् युष्मान् **संसाराग्निप्रदीपिता तत्पूरैः** तरङ्गैः (ज्ञानसागर-तरङ्गैः) स्वयं भग्नसन्तापः[१] **अग्निं** शान्तम् **अकरोत्** = करोतीत्यर्थः । **तस्मात् हे सज्जनाः ज्ञाननिधिं** वेदवेद्यं **प्राप्य सुखिनः सन्तु** ।।९६।। **विज्ञानकोशात्** हृदयात् । **अज्ञानं सर्वथा निराकुर्वन्तु** ।।

१८. वेदवेद्यप्रकरणम्।। श्लोकाः (९७-१०५)

(व्या) **'श्लोकद्वयस्य शक्यार्थम्'** इत्यारभ्य अध्यायान्तं वेदवेद्यश्रोतृकअष्टादशं प्रकरणम् ।

---

(१) ('भग्नसन्तापयोऽद्भिः अथवा भग्नसन्ताप अद्भिः एन्दिट्टुकोण्डु ई सामान्यबोधिनीकाररु व्याख्यानमाडिद्दारे. आदरे 'भग्नसन्तापदद्भिः' एन्दु स्वा. प्रिंटिनल्लिदे. 'भग्नसन्तापः' एन्दु पाठविद्दरे बहुव्रीहि समासवे सरि. भग्नसन्तापात् एन्दिद्दरे भग्नश्चासौ सन्तापः तस्मात् । ध्वस्ततापात् = तापाभावात् । सुखेन । असौ सन्तप्तान् इतरान् शान्तान् करोति' एन्दु योजित अर्थ तिळियबेकु. 'सन्तापानद्भिः' एन्दिरुव विवक्षेयो एन्दू संशयबरुत्ते.)

**श्लोकद्वयस्य शक्यार्थं तोक त्वं चोक्तवानसि ।।९७।।**

**लोके यथा शक्रगुरुः त्वं कविर्वाक्पतिस्त्वहम् ।**
**किं ते दास्यामि मद्दास्यं पूर्वमेव त्वमाददीः ।।९८।।**

(अन्वयः) हे तोक! त्वं (लोके) श्लोकद्वयस्य शक्यार्थं च उक्तवानसि । यथा लोके शक्रगुरुः (तथा) त्वं कविः वाक्पतिः च । अहं ते किं दास्यामि? पूर्वम् एव मद्दास्यं त्वम् आददीः ।।

(व्या) हे वेदवेद्य! त्वं 'तिमिर' इत्यादि श्लोकद्वयस्य । हे तोक! पुत्र! [१]शक्त्या स्वशक्त्या च अर्थं च उक्तवानसि ।।९७।।

नैतदाश्चर्यम् । कुतः त्वं लोके, स्वर्गलोके यथा शक्रगुरुः बृहस्पतिः तथा त्वं कविः वाक्पतिश्च । ते तुभ्यं अहं किं दास्यामि त्वमेव पूर्वं मद्दास्यं आददीः = स्वीकृतवान् ।।९८।।

**तस्मान्मत्साम्यमेवेह चाऽदत्स्व सुत सात्विक ।**
**मत्साम्ये च त्वया प्राप्ते त्वत्समो नास्ति सत्सु च ।।९९।।**

**तत् सतां सम्मतं सत्यं कुत्सितानामसम्मतम् ।**
**जगत्सत्यं यथा तत्ववादिनां न मृषात्मनाम् ।।१००।।**

(अन्वयः) हे सुत सात्विक! तस्मात् इह मत्साम्यमेव आदत्स्व । त्वया मत्साम्ये प्राप्ते, सत्सु त्वत्समो नास्ति । तत् सतां सम्मतम्; कुत्सितानाम् असम्मत् (इदं) सत्यम् । यथा तत्ववादिनां जगत्सत्यम्, मृषात्मनां (तु) न (तथा) ।।

(व्या) तस्मात् = मद्दास्यकरणात् हे सात्विक सुत! इह च परत्र मत्साम्यमेव आदत्स्व = 'साधनसामग्र्या' इत्यर्थः । ततश्च त्वया मत्साम्ये प्राप्ते सत्सु त्वत्समो नास्ति ।।९९।। तत् = तव मत्साम्यं सतां रुद्रादीनां सम्मतं सत्यं च, यथा तत्ववादिनां =

---

(१) (शक्यार्थं एन्दु स्वा.वृं. मूलविदे. ई व्याख्यानकाररु शक्त्यार्थं एन्दु पाठवन्निट्टुकोण्डु व्याख्यानमाडिद्दारे. शक्यार्थं एम्ब पाठद प्रकार अर्थवेनेन्दरे ऽ 'पदशक्त्या लभ्यार्थं' एन्दु हेळबेकु. भी.नोडि पाठ निश्चयिसबेकु.)

माध्वानां **जगत्सत्यम्** । **मृषात्मनां** = मायावादिनां कुत्सितानां न तथेत्यर्थः ।।१००।।

**(१)असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ।।१०१।।**

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।।१०२।।**

**इति गीतोदितैः श्लोकैस्तोक वाक्कायकर्मभिः ।**
**लोकनाशकरूपाणां वराकत्वं निरूप्यते ।।१०३।।**

(अन्वयः) ते (मायावादिनः) जगत् असत्यम्, अप्रतिष्ठितम्, अनीश्वरम्, इति आहुः । अपरस्परसम्भूतं, किम्? अन्यत् कामहैतुकम् (इति आहुः) । एतां दृष्टिम् अवष्टभ्य अल्पबुद्धयः नष्टात्मानः अहिताः उग्रकर्माणः जगतः क्षयाय प्रभवन्ति ।। हे तोक! इति गीतोदितैः श्लोकैः वाक्कायकर्मभिः लोकनाशकरूपाणां वराकत्वं निरूप्यते ।।

(व्या) मायावादिनस्तु एवं वदन्तीत्याह – **असत्यमिति** ।। **ते** = मायावादिनः 'जगत् **असत्यम् अप्रतिष्ठम् अनीश्वरं** चाहुः । अपि च **अपरस्परसम्भूतम्** = चतुर्विंशतितत्वैः परस्पर- सम्भूतं नेत्याहुः । तर्हि **किम्?** इति प्रश्ने । **अन्यत् कामहैतुकम्** = इच्छैव हेतुः यस्य तादृशम् । अस्माकमिच्छैवात्र कारणं तदभावे असत्यमेव । (अविद्यापरिकल्पितत्वात् । त्रैकालिकनिषेधप्रतियोग्येव) इत्याहुः ।।१०१।। ननु एवं अप्रामाणिकोक्तीनां बाधो न वेत्यत आह **एतामिति** ।। ये च **जगतः अहिताः** = शत्रवः । एतां **दृष्टिं** मिथ्यात्मिकाम्

---

(१) अयम् गीतोद्धरणमिदं युक्तिमल्लिकायां विश्वसौरभेऽपि दृश्यते ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ।। ५४ ।।

एतां दृष्टिमवष्टभ्य नष्टात्मानोल्पबुद्धयः ।
प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिताः ।। ५५ ।।

इति गीतासु हरिणा जगन्मिथ्यात्ववादिनां ।
जगतः क्षयकृत्ता च जगतो।हितता तथा ।।५६।। – इति युक्तिमल्लिकायाम् विश्वसौरभे ।

अवष्टभ्यदृढीकृत्य, **नष्टात्मानः** = नष्टः तद्विरुद्धतया नाशितः आत्मा भगवान् यैस्ते, तादृशाः । अत एव **अल्पबुद्धयः । उग्रकर्माणः** = प्रत्यक्षपशुवधेन यज्ञं कुर्वाणाः, जगतः **क्षयाय प्रभवन्ति** । एतेषां बाहुल्यात् । जगन्नश्यतीत्यर्थः ।।१०२।।

**हे तोक!** इति गीतोदितैः श्लोकैः = **प्रमाणैरित्यर्थः** । तेषां [१]**लोकनाशकरूपाणां वाक्कायकर्मभिः** = वाक् कायश्च तयोः कर्मभिः । (जगन्नाशकानां नरककारणकर्तॄणां) शास्त्रे **वराकत्वं**, तमःप्रवेशेन दीनत्वं **निरूप्यते** । अयमेव तेषां महाबाधः ।।१०३।।

**तद्वत्तवोच्छ्रयं दृष्ट्वा ह्यसूयन्तेऽनसूयया ।**
**सह सर्वे महद्यान्ति ह्यभद्रं रौद्रमेव ते ।।१०४।।**

**तस्मात्त्वं मत्समो नित्यं कुत्सितानां भयानकः ।**
**वत्स त्वं सत्सु सम्पूज्यः शश्वदत्र परत्र च ।।१०५।।**

**(अन्वयः) तद्वत् अनसूयया दत्तया तव उच्छ्रयं दृष्ट्वा सर्वे असूयन्ते हि । ते (मायावादिभिः) सह रौद्रम् अभद्रं महद् यान्ति हि ।। तस्मात् हे वत्स! त्वं मत्समः (सन्) नित्यं कुत्सितानां भयानकः शश्वत् अत्र परत्र सत्सु सम्पूज्यः (भविष्यति) ।।**

**(व्या) तद्वदिति ।।** हे वेदवेद्य! मम (= मया) । **अनसूयया** (असूयां विना दत्तया) गव्याख्यऋजुगणोक्तिरूपया तव मत्साम्यरूपम् **उच्छ्रयं दृष्ट्वा**, ये **असूयन्ते** असूयां कुर्वन्ति । **'वादिराजोऽपि ऋजुर्न । तस्य शिष्योऽयं कथं ऋजुर्भवेत् इदमाख्यानं विप्रकृतमेव'** इत्यादिनेत्यर्थः । **ते सर्वे** वैष्णवकुलोत्पन्ना अपि । **सह** = मायावादिभिः सह । **रौद्रं** = भयङ्करम् **अभद्रं**, अमङ्गलं **महत्तमः यान्ति** ।।१०४।। **तस्मात्** वेदवेद्य! **त्वं नित्यं मत्समः, कुत्सितानां च**

---

(१) (मनोव्यापार हिन्दे हेळिदु जगत्तन्नु असत्यवेन्दु तिळियुवुदु इत्यादि. वाक्कायकर्मभिः लोकनाशकरूपाणां एन्दे अन्वय. ई व्याख्यानदल्लि व्यत्यासमाडि बरेदिरुवुदु भ्रान्तिकर. वाक्कायकर्मगळिन्द लोकनाशमाडुवुदेन्दरे वाक्कायकर्मगळिन्द जगत्तिन जनरिगे पापबरुवन्ते केट्ट कर्म माडिसुवुदु. यथा ऽ देवरेल्लि एन्दु हेळि नास्तिक्यबुद्धि हुट्टिसुवुदु. चण्डालर मने काफि कुडियुवुदु. मैलिगेयल्लि माडिदन्नु वैदिकरिगे कुडिसुवुदु. तावू वर्णाश्रमधर्म मीरि नडेयुवुदु. हीगे माडि तम्म अनुयायिगळन्नु पापिगळन्नागि, नरकयोग्यरन्नागि माडुत्तारे. तावू सत्तु नरकक्के बीळुत्तारे. कोडलि तेगेदुकोण्डु इवरु जगत्तन्नु नाशमाडुवुदिल्ल. मक्कळुगळिगू वर्णाश्रमधर्मनाश हेळिकोट्टु अवरन्नु नरकक्के तळ्ळुत्तारे.)

**भयानकः** । हे **वत्स! सत्सु** = अस्मासु, **अत्र परत्र** च **शश्वत्** = सर्वदा **सम्पूज्यः** भविष्यसि । 'मद्वत् सर्वदा जयसि' इत्यर्थः ॥१०५॥ वेदवेद्यप्रकरणं सम्पूर्णम् ॥

**एतत्सर्वं स्वाप्रपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्रपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वकं तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

**(व्या)** (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि-राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय) अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**

**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ॥**

**(अन्वयः) यत् (इदं श्रीमद्वृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्ति, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।**

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि चतुर्दशाध्यायः समाप्तः**

**॥ श्री कृष्णार्पणमस्तु ॥**

## ।। अथ द्वाविंशाध्यायः ।।

### १. श्रीपतिप्रकरणम् ।। श्लोकः (१)

(व्या) श्रीगुरुभ्यो नमः ।। हरिः ॐ ।। पूर्वाध्यायान्ते स्वप्रियसुतस्य वेदवेद्यस्य स्वसमत्वं प्रतिपाद्य, तद्विरोधिजनस्य दुर्गतिप्राप्तिं कथयित्वा, इदानीं श्रीपतिशेषाद्रिपण्डितवासुदेवमुनिभ्यः किञ्चित् तत्तत्कर्मकरणे उपदिश्य, मत्सुतस्य च भागोऽयमिति पूर्वोक्तिमनुसन्दधानः, वेदवेद्यं प्रति पुनरुपदिशति भगवान् वादिराजमुनिवर्यः । तत्रादौ एकश्लोकेन श्रीपतिं सम्बोध्य तत्कर्तव्यं कथयति – श्रीपते  इति ।।

**हरिः ॐ ।।**
**श्रीपते गृहकृत्यं ते बह्वस्ति हित्वा च तत् ।**
**नन्दनाग्रे वदस्व त्वं चरमां वा कृतिं प्रिय ।।१।।**

(अन्वयः) हे श्रीपते! ते गृहकृत्यं बहु अस्ति । (तथापि) तत् (सर्वं) हित्वा च हे प्रिय! त्वं (मम) नन्दनाग्रे चरमां कृतिं वा (=निश्चयेन) वदस्व ।।

(व्या) हे श्रीपते! ते गृहकृत्यं बहु अस्ति । ज्ञातं मया । तथापि तत् हित्वा, हे प्रिय! त्वं मम नन्दनाग्रे नन्दनो वेदवेद्यः तस्याग्रे इमां चरमां कृतिं वा निश्चयेन वदस्व ।।१।। श्रीपतिश्रोतृकप्रकरणं सं.

### २. शेषाद्रिपण्डितप्रकरणम्।। श्लोकः (२)

(व्या) द्वितीयश्लोकः शेषाद्रिपण्डितश्रोतृकद्वितीयं प्रकरणम् ।

**तद्वेङ्कटगिरेर्नामधारापूर्वं त्वयाऽऽर्जितम् ।**
**कर्म वृन्दावनाश्वत्थसेवापरशुना हन ।।२।।**

(अन्वयः) हे वेङ्कटगिरेर्नामधर! (त्वत्) अपूर्वं त्वया यत् कर्म अर्जितं वृन्दावनाश्वत्थसेवापरशुना हन ।।

(व्या) हे वेङ्कटगिरेर्नामधर![1] शेषाद्रिपण्डित! त्वत् = त्वत्तः । अपूर्वं न पूर्वम् = अपूर्णं

---

(१) (स्वादल्लि 'त्वद्वेङ्कटगिरेर्नामधर' एन्दिदे. वृंनल्लि 'तद्वेङ्कटगिरेर्नामधार' एन्दिदे. व्याख्यानदल्लि

कृतिख्यापनादिकं जातम् । 'पूर्वपूरणे इति धातुः' । तेन **त्वया** यत् **कर्म** पापात्मकमित्यर्थः । **अर्जितं** संपादितम् । तच्च **वृन्दावनाश्वत्थसेवापरशुना** । वृन्दावनं च अश्वत्थश्च तयोः सेवा, सैव परशुः कुठारः । तेन **हन** = नाशय । निष्पापो भवेत्यर्थः ।।२।। शेषाद्रिपं.प्र.सं. ।।

३. वासुदेवमुनिप्रकरणम्।। श्लोकाः (३ऽ५)

**(व्या) 'वासुदेव मुनेः'** इत्यारभ्य **'वाङ् न मे मृषा'** इत्यन्तं वासुदेवमुनिऽ श्रोतृकं तृतीयं प्रकरणं ।

**वासुदेवमुनेर्भानोर्यथा तामसनाशनम् ।**
**तथैनसो विनाशोऽभून्माधवान्नस्य भोजनात् ।।३।।**

(वासुदेवमुने! एन्दु सम्बुध्यन्तवागि व्याख्यानविदे. आदरे स्वा.वृं.गळल्लि मुनेः एन्दु सविसर्ग पाठविदे. भी नोडबेकु. 'तथैव स विनाशः' एन्दू पाठान्तरवु सवादल्लिदे. वृंनल्लि 'तथैनसो विनाशः' एन्दिदे. व्याख्यानकाररु 'स्वा'पाठ आदरमाडिरुव हागे काणुत्ते. इल्लू भी. नोडबेकु. वृं.पाठ चेन्नागिदे. 'भानोः यथा तामस(अन्धकार)नाशनं । तथा वासुदेवमुनेः । एनसः (पापस्य) विनाशः । मधुकरान्नभोजनात् अभूत्' एन्दु अन्वय तिळियबेकु.)

**पूर्वं कृष्णाकरस्पृष्टमन्नं काम्यवने मुने ।**
**भुक्त्वा च मुनयः सन्न पापास्त्वं माधवान्नतः ।।४।।**

**भुवि पूजाधिकारोऽभूत्तव जातैनसः क्षये ।**
**भवजार्तिश्च ते नस्याद्दिवि वा वाङ् न मे मृषा ।।५।।**

**(अन्वयः) हे वासुदेवमुने! भानोः य**था तामसनाशनं तथा एनसः विनाशः माधवान्नस्य भोजनात् अभूत् ।। हे मुने! (यथा) पूर्वं सन्**नपापाः मुनयः काम्यकवने कृष्णाकरस्पृष्टं (भुक्त्वा, तथा) । हे मुने! माधवान्नतः तव एनसः क्षये (जाते सति) भुवि पूजाधिकारः अभूत् । दिवि वा ते भवजार्तिः (संसारार्तिः) च न स्यात् । मे वाक् न मृषा (इति विद्धि) ।।**

---

त्वत् एन्दु हिडिदिद्दारे. नामधर एन्दु हिडिदिद्दारे. भी.नोडि पाठनिश्चय माडबेकु.)

**(व्या) हे वासुदेवमुने! भानोः** सूर्यसकाशात् **यथा तामसनाशनम्** अन्धकारनाशः, तथा सः **विनाशः** (एनसः विनाशः इति वक्तव्यं) पापस्य विनाशः अभूत् । कथम्? इत्यत मधुकरान्नस्य पवित्रत्वं वदन्नाह – **माधवान्नस्येति** ।। 'मधुकरवृत्तिजनितान्नतः' इत्यर्थः ।।३।।

दृष्टान्तं कथयति – **पूर्वमिति** ।। हे मुने! यथा पूर्वं **सन्नपापाः** । ('सन्नपापाः' एन्दरेने 'नष्टपापाः' एन्दर्थ. ई व्याख्यानकाररु 'सन्नपापाः' एन्दरे 'प्राप्तपापाः' एम्ब विरुद्धार्थमाडि श्लोकार्थसामञ्जस्यक्कागि 'तत्पापं नाशितवन्तः' एन्दु अध्याहार माडिकोण्डिद्दारे. मूलदल्लि अदक्के आधारविल्ल.) सन्नं प्राप्तं दुरन्नभक्षणादिना पापं यैः ते मुनयः, काम्यकवने **कृष्णाकरस्पृष्टं** = कृष्णायाः करेण स्पृष्टं अन्नं भुक्त्वा, तत्पापं नाशितवन्तः । **तथे**त्यर्थः । हे मुने! तस्मात् **माधवान्नतः** तव एनसः पापस्य क्षये जाते ।।४।।

**भुवि** तव **पूजाधिकारो** जातः । **तेन** मधुकरान्नेन अत्र **दिवि वा** । **भवजार्तिः** = संसारार्तिश्च न स्यात् । **मे वाक् न मृषे**ति विद्धि ।।५।। वासुदेव.मु.श्रो. प्र.सं.।।

### ४. वेदवेद्यप्रकरणम्।। श्लोकाः (६ऽ११)

(व्या) **'अमुचन्नमुचि'** इत्यारभ्य **'क्षुद्रास्ते वैरिणस्तथा'** इत्यन्तं वेदवेद्यश्रोतृकचतुर्थ प्रकरणम् ।

**अमुचन्नमुचिस्तिमिरं समरेत्यादिपद्यतः ।**
**पूर्वपद्यानुकूल्यादर्थं त्वं चोक्तवानसि ।।६।।**

**मत्तात्पर्यं त्वमेवेह जानासि श्रीनाथनामयुक् ।**
**को नाम तव सादृश्यं समर्थः प्राप्तुमञ्जसा ।।७।।**

**उपक्रमादिलिङ्गैश्च मत्तात्पर्यविनिर्णयम् ।**
**करोषि पूर्णसादृश्यं गतोऽसि मम सर्वथा ।।८।।**

(अन्वयः) 'अमुचन् नमुचिः' (२१/९३) 'तिमिरं समरे' (२१/९२) इत्यादि पद्यतः पूर्वपद्यार्थानुकूल्यात् त्वम् अर्थं च उक्तवान् असि ।। इह मत् तात्पर्यं श्रीनाथनामयुक् त्वम् एव जानासि । तव सादृश्यम् अञ्जसा प्राप्तुं को नाम समर्थः? उपक्रमादिलिङ्गैः मत् तात्पर्यविनिर्णयम् च करोषि । सर्वथा मम पूर्णसादृश्यं गतः

असि ।।

(व्या) हे वेदवेद्य! अमुचन् नमुचिरिति ।। तिमिरं समरे इति पूर्वाध्यायोक्तपद्यतः सकाशात् । पूर्वपद्यं 'ज्ञानसागरमग्नोसौ'( इति तदानुकूल्यात् । त्वं मद्भक्तान् प्रति 'तिमिरम्' इत्यादि पद्यस्य अर्थम् उक्तवानसि ।।६।।

मत्तात्पर्यं श्रीनाथनामयुक् श्रियः वेदाभिमानिनीत्वात् वेदेति । नाथो हयवदनः; श्रिया वेद्यत्वात् वेद्येति । एवं श्रीनाथनामयुक् (वेदवेद्य इति नामवान्) । त्वमेव । इह जानासि[१] । तव अञ्जसा सादृश्यं प्राप्तुं को नाम समर्थः स्यात् ।।७।। उपक्रमादिलिङ्गैः = लक्षणैश्च । मत्तात्पर्यविनिर्णयं करोषि । सर्वथा मम पूर्णसादृश्यं गतः प्राप्तः असि ।।८।।

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।९।।**

**इति षड्विधतात्पर्यलिङ्गान्निर्णय एव च ।**
**कर्णश्राव्यार्थसारं त्वं व्याकरोषि कुमारक ।।१०।।**

**तस्मान्मे पट्टभद्रेह सन्तु भद्राणि सर्वदा ।**
**अभद्राणि विनश्यन्तु क्षुद्रास्ते वैरिणस्तथा ।।११।।**

(अन्वयः) हे कुमारक! उपक्रमोपसंहारौ, अभ्यासः, अपूर्वता, फलं, अर्थवादः, अनुपपत्तिः तात्पर्यनिर्णये लिङ्गं च (आहत्य) षट् विधतात्पर्यलिङ्गात् एव निर्णीय कर्णश्राव्यार्थसारं त्वं व्याकरोषि ।। तस्मात् मे पट्टभद्रेह (अथवा तस्मात् इह मे पट्टभद्रः असि) सर्वदा भद्राणि सन्तु । तथा ते (तव) क्षुद्राः वैरिणः अभद्राणि (पश्यन्तु) विनश्यन्तु च ।।

---

(१) (त्वमेव जानासि एन्दिदे. ई पङ्क्तिय उत्तरभागदल्लि ९ अक्षरगळिवे. व्याख्यानदल्लि अदक्के कारण हेळिल्ल. अलौकिकप्रयोग वेदवेद्यर दीर्घज्ञानक्के सूचक. दीर्घज्ञान एन्दरे अनादि ऋजुयोगिज्ञान. अदक्के 'त्वमेव' एन्दिद्दारे. दिव्यज्ञानदिन्दले नन्न वाक्यतात्पर्यवन्नु अन्यर सहायविल्लदे तिळियुत्ति एन्दर्थ. मत्तु ८ने श्लोकदल्लि हेळुवन्ते मीमांसादिन्दलू वाक्यतात्पर्य तिळियुत्ति. आद्दरिन्द निनगे नन्न मत्तु मध्वाचार्यर पूर्णसादृश्य बन्तु एन्दु भाव. आदरे वेदवेद्यरु ई पद्यगळिगे यावाग अर्थ हेळिदरु ब्राह्मणस्वप्नदल्लिये दर्शनकोट्टाग वेदवेद्यरु हेळिदन्नु वादिराजरु बरेसिदरे विचारिसि निर्णयिसबेकु.)

(व्या) इति (उपक्रमोपसंहारौ इत्येकं । अभ्यासादि पञ्चकं आहत्य षट् लिङ्गानि । लिङ्गं इति समुदायैकवचनम् । वाक्यतात्पर्यनिर्णये उपयुक्तानि) उपक्रमादि षट् विधतात्पर्यलिङ्गानि [१]निर्णीय एव हे कुमारक! त्वं कर्णश्राव्यार्थसारं = कर्णाभ्यां श्राव्यं श्रवणीयम् । एतादृशम् अर्थसारं अर्थश्रेष्ठं व्याकरोषि ।।१०।।

तस्मात् हे पट्टभद्रेह[२] पट्टभद्रे ईहा इच्छा यस्य तादृश तव सर्वदा भद्राणि मङ्गलानि सन्तु । ते क्षुद्राः वैरिणः तथा अभद्राणि च प्रणश्यन्तु (प्रणश्यन्तु एन्दु स्वापाठ. विनश्यन्तु एन्दे वृ.पाठ) ।।११।। इति वेदवेद्यप्रक.सं.।।

५. श्रीपतिप्रकरणम्।। श्लोकाः (१२-१६)

(व्या) 'हे नन्दन' इत्यारभ्य 'प्रेरयिष्यति गाढशः' इत्यन्तं पञ्चमं श्रीपतिश्रोतृकं प्रकरणम् ।

**हे नन्दन द्विजोऽयं ते नन्दनस्पन्दनं विना ।**
**वृन्दावने च मन्दानां नन्दयिष्यति नन्दनैः ।।१२।।**

**तस्य किञ्चित् सहायं त्वं कुरु चान्नार्थमर्थतः ।**
**नान्नमन्त्रं कुरु व्यर्थं सार्थकं कुरु शीघ्रतः ।।१३।।**

(अन्वयः) हे नन्दन! अयं ते द्विजः नन्दनस्पन्दनं विना वृन्दावने च मन्दानां नन्दनैः (आनन्दनैः मम स्वाप्रपद्यैः) नन्दयिष्यति ।। तस्य अन्नार्थं किञ्चित् सहायं अर्थतः त्वं कुरु । अन्नमन्त्रं न व्यर्थं कुरु, शीघ्रतः सार्थकं च कुरु ।।

(व्या) हे नन्दन! श्रीपते! अयं ते द्विजः । नन्दनस्पन्दनं विना नन्दनस्य वेदवेद्यस्य स्पन्दनं कटाक्षं सूचनं विना वृन्दावने तत्पुरतः इत्यर्थः[३] मन्दानां गणम् । नन्दनैः =

(१) ('लिङ्गानि निर्णीय' एम्बुदु प्रामादिक. लिङ्गात् अथवा लिङ्गेभ्यः निर्णीय एन्दिरबेकु. निर्णीय एम्ब पद वृं.पाठक्के विरुद्ध) ।

(२) (पट्टभद्र इह' एन्दे स्वरसवागिदे. बहुव्रीहियिन्द स्वारस्यविल्ल. वेदवेद्यरु दुराशेयुळ्ळवरु एम्ब शङ्के बरुत्तदे.)

(३) (ई आख्यान वेदवेद्यर कालदल्लि रचितवाददल्ल. आद्दरिन्द ई व्याख्यानभाग बाधितवागिदे.

आनन्दनैः मम स्वाप्नश्लोकैः **नन्दयिष्यति** ।।१२।।

तस्य **अन्नार्थम् अर्थतः** द्रव्यतः । **त्वं किञ्चित् सहाय्यं कुरु** । तव अन्नवत्वं (अन्नमन्त्रं इति पाठे 'अन्नमन्त्रजपेन शीघ्रं अन्नं प्राप्य विप्रं भोजय' इत्यर्थः) **व्यर्थं न कुरु** । तस्य ('तत्' इति वक्तव्यं) **सार्थकं शीघ्रतः कुरु** ।।१३।। (तादृशपात्राय अविळम्बेन अन्नदानेन तव अन्नवत्वं सार्थकं कुरु इति भावः) ।।

**त्वं ददस्वेति वा मा वाऽहं ददाम्यन्यपूरुषैः ।**
**मन्दस्मित कुरुष्वेह वृन्दावनपतेर्वचः ।।१४।।**

**दरिद्रैरपि दास्यामि धनाढ्यैः किं वदे तव ।**
**दास्यामीति सुदामाग्र्य मद्दासाय महामते ।।१५।।**

**त्वमपीह धनाढ्योऽसि दृढबुद्धिं सदा कुरु ।**
**मृडोऽपि ते मनस्तत्वं प्रेरयिष्यति गाढशः ।।१६।।**

---

नन्दनस्पन्दन एन्दरे सुखदिन्द तोडेकुणिसुवुदु, हुब्बु हारिसुवुदु मुन्ताद दुरभ्यासविल्लदे श्लोकगळन्नु प्रचारक्के तन्दिद्दाने एन्दर्थ. अथवा नन्दनस्पन्दनं विना सौख्यद चेष्टेयोन्दू इल्लदे बहुलोकसौख्यकारकग्रन्थवन्नु प्रचारक्के तन्दिद्दाने एन्दर्थ. इन्थ ग्रन्थप्रचारकर्तनिगे ई ग्रन्थवु सौख्य कोडलिल्ल 'तत्रैव व्याप्तेः व्यभिचारः' एन्दु शङ्किस कूडदु.विप्रन आ जन्मद प्रारब्ध इन्द्रन एत्तिन जन्मदन्ते. 'कृच्छ्राय तपदसे चैव' एम्बन्ते तपोवृद्धिदायकप्रारब्ध. तपस्सिगे भङ्ग बारदन्ते अन्थ देशेयल्लियू गुरुराजरे अल्लल्लि ई ग्रन्थदल्लि हेळिद रीति यत्न माडि मनस्सिगे सुखशान्तिगळन्नु कोट्टु होट्टेगे अन्नवन्नू कोट्टिद्दारे. तपः पूर्ति आदमेले मुन्दिन जन्मदल्लि कूडिट्ट सुखगळन्नु कोट्टिद्दारे. आद्दरिन्द व्याप्तिगे भङ्गविल्ल. तपःकालदल्ले तपस्सिन फलवन्नु देवतेगळु कोडुत्तारे एम्ब नियमविल्ल. तपस्सु मुगिद मेले फल. अन्यथा ई ग्रन्थद अन्नमन्त्रवन्नु पठन माडुत्तिरुवागले अर्ध श्लोक ओदिदागले साविररूप्यद लाभ एकागलिल्ल इत्यदिरीतियागि प्रश्नाभासवन्नु माडबहुदु. सामान्यरिगे स्वल्पतपस्सादनन्तर, स्वल्पकाल पारायणानन्तर ई आख्यान फल कोडुत्ते. दोड्डवरिगे वर्षगळ काल आद मेले स्वफलवन्नु कोडलु आरम्भिसुत्ते. विप्रनिगन्तू 'निनगे ई जन्मदल्लि लौकिक फलविल्ल' एन्दु गुरुराजरे हेळिबिट्टिद्दारे. आदरू आतने इदक्के मुख्याधिकारि. गुरुगळ प्रीति मात्र प्राप्तवागिये इदे. इतर भक्तरेल्लरन्नू विप्रनन्नु सन्तोष पडिसि एन्दु आज्ञापिसिद्दारे. आद्दरिन्द 'कश्चित्कान्ता' वाक्यार्थमाडबारदु. देवरपूजेयिन्द फलवागुत्ते एन्दरे न्दुदिन मुक्कालु पूजे माडि इष्टु आयासवागिदेयल्ल. एल्लि फल एन्नबारदु. तपस्सिगे फलवुंटु. यावाग एन्दरे 'फलकाले प्राप्ते । प्रसन्ने सति देवे । स्वाधिकारानुसारतः तपसि पूर्णे सति' एन्दु सेरिसिकोण्डु अर्थ तिळियबेकु. हागादरू सूचनेगळिन्द ई मार्ग सरि एन्दु तपस्विगे गोत्तागबेकु. हागे गोत्तागुत्ते.)

(अन्वयः) त्वं ददस्व वा मा वा, अहम् अन्यपूरुषैः ददामि । हे मन्दस्मित! वृन्दावनपतेः वचः इह कुरुष्व ।। दरिद्रैः अपि दास्यामि, हे सुदामाग्र्य! महामते! मद्दासाय धनाढ्यैः दास्यामि इति तव किं वदे? इह त्वमपि धनाढ्यः असि, सदा दृढबुद्धिं कुरु । मृडः अपि ते मनस्तत्वं गाढशः प्रेरयिष्यति ।।

(व्या) नन्वहमपि दरिद्रः । कथं करोमि? इत्यत आह – त्वमिति ।। त्वं ददस्व वा, मा वा (इति ददस्व मदुक्तप्रकारेण अन्नादिकं ददस्व) । अहम् अन्यपूरुषैः ददामि दापयिष्यामि । हे मन्दस्मित! वृन्दावनपतेः मम वचः । इह कुरुष्व ।।१४।। दरिद्रैरपि दास्यामि दापयामि । धनाढ्यैः दापयामीति तव किं वदे? हे सुदामाग्र्य = श्रीकृष्णानुग्रहेण धनिक ! हे महामते! मद्दासाय = ब्राह्मणाय दास्यामि ।।१५।।

त्वमपि इह धनाढ्योऽसि । सदा दृढबुद्धिं कुरु । यदि न करोषि । तर्हि मृडोपि रुद्रोपि मदाज्ञया ते मनस्तत्वं गाढशः = दृढं यथा भवति तथा प्रेरयिष्यति । ततश्च त्वं विप्राय अन्नं ददासीत्यर्थः ।।१६।। श्रीप.श्रो.प्र.सं.।।

६. विप्रप्रकरणम्।। श्लोकाः (१७-२१)

(व्या) 'हे विप्र मत्प्रसादेन' इत्यारभ्य 'तिलमात्रं न दुष्कृतम्' इत्यन्तं षष्ठं विप्रश्रोतृकं प्रकरणम् ।

**हे विप्र मत्प्रसादेन त्वत्पितृणां त्रिविष्टपम् ।**
**त्रिमार्गगावगाहोऽतिपवित्राङ्गयुजामभूत् ।।१७।।**

**तथा हि लोके मर्त्यानां कुले जातस्य कस्यचित् ।**
**तत्वसम्प्रश्नकस्यर्षेः प्रसादे सति तत्कुलम् ।।१८।।**

**सर्वं त्रिविष्टपं चाऽप नष्टपापं त्रिसप्तके ।**
**धिक्कृत्य नारकं कष्टं शिष्टानुग्रहतः कृतिन् ।।१९।।**

(अन्वयः) त्रिमार्गगावगाहः अतिपवित्राङ्गयुजाम् त्वत् पितृणां मत्प्रसादेन त्रिविष्टपम् अभूत् ।। तथाहि लोके मर्त्यानां कुले जातस्य कस्यचित् तत्वसम्प्रश्नकस्य ऋषेः प्रसादे सति, तत्कुलं (हे) कृतिन्! शिष्टानुग्रहतः नारकं कष्टं धिक्कृत्य सर्वं त्रिसप्तके

कुलं त्रिविष्टपं च आप ॥

(व्या) हे विप्रेति ॥ हे विप्र! त्रिमार्गगावगाहातिपवित्राङ्गयुजाम् = त्रिमार्गायाः मन्दाकिन्याः अवगाहः स्नानं तेन अतिपवित्राणि अङ्गानि तानि युञ्जन्तीति तादृशानाम् । तत् पितॄणां त्रिविष्टपं स्वर्गः । वासयोग्यः (मत्प्रसादेन) अभूत् ॥१७॥ (गङ्गास्नानेन पवित्राङ्गयुक्तानां यः त्रिविष्टपं सम्भवति, तादृशं त्रिविष्टपं, हे विप्र मत्प्रसादेन त्वत्पितॄणां अभूत्') एम्बुदु वाक्यार्थ. ई व्याख्यानदल्लि स्वल्प अर्थव्यत्यासविदे. वासयोग्यः एम्ब पदद अध्याहारवू आगिदे.)

तत्कथमिति चेत्, तत्राह – तथाहीति ॥ तथाहि तदेव दृष्टान्तमुखेन उपपादयति – लोक इति ॥ हे विप्र! लोके मर्त्यानां कुले जातस्य कस्यचित् कुलं तत्वसंप्रश्नकस्य तत्वानां संप्रश्नकः प्रश्नकर्ता, तस्य ऋषेः नारदाद्यन्यतमस्येत्यर्थः । प्रसादे सति । तत् (कुलं) ॥१८॥

हे कृतिन् । शिष्टानुग्रहतः नारकं नरकसम्बन्धि कष्टं धिक्कृत्य । सर्वं सर्वकुलं त्रिसप्तकैः पुरुषैः सह च त्रिविष्टपं स्वर्गं आप प्राप ॥१९॥

**तद्वन्महानुभावस्य ममानुग्रहतस्त्वयि ।**
**विद्वंस्त्वत्कुलजाता ये योग्या यान्ति त्रिविष्टपम् ॥२०॥**

**अलं मधुकरान्नं ते छलं मा कुरु दारवत् ।**
**कुलं कृतं पवित्रं ते तिलमात्रं न दुष्कृतम् ॥२१॥**

(अन्वयः) तद्वत् हे विद्वन्! महानुभावस्य मम त्वयि अनुग्रहतः, त्वत्कुलजाता ये योग्याः (ते) त्रिविष्टपं यान्ति ॥ (हे विप्र!) ते मधुकरान्नम् अलम् । दारवत् छलं मा कुरु । ते कुलं (मया) पवित्रं कृतम् । तिलमात्रम् अपि दुष्कृतं न ॥

(व्या) हे विद्वन्! तद्वत् महानुभावस्य मम त्वयि अनुग्रहतः त्वत्कुलजाता ये योग्याः ते त्रिविष्टपं यान्ति ॥२०॥

ते मधुकरान्नम् अलं दारवत् स्त्रीवत् । छलं स्वमर्यादायाश्छलनम् । मा कुरु । ते कुलं पवित्रं मया कृतम् । त्वयि तिलमात्रम् अपि दुष्कृतं पापं न ॥२१॥ विप्र.प्र.सं.॥

७. हयग्रीवकर्मन्दिप्रकरणम्॥ श्लोकाः (२२-२४)

(व्या) **'भाषया भीषयस्येव'** इत्यारभ्य **'मत्पट्टोदयपर्वतात्'** इत्यन्तं हयग्रीवकर्मन्दि-श्रोतृकं सप्तमं प्रकरणम् ।

**भाषया भीषयस्येव दोषरूपिण एव तान् ।**
**काषायदण्डवेषाय चास्तु स्वस्त्यविषह्य ते ।।२२।।**

**दुर्वादीभमहासिंह तव युक्त्याख्यसन्नखैः ।**
**तद्दुर्मतमहाकुम्भदलनं कुरु शीघ्रतः ।।२३।।**

**वेदवेद्यद्युमणिना मणिमन्मतदुस्तमः ।**
**निरस्तं तूदितेनेह मत्पट्टोदयपर्वतात् ।।२४।।**

(अन्वयः) हे अविषह्य! (हे हयग्रीवकर्मन्दिन्!) तान् दोषरूपिण एव भाषया एव भीषयसि । काषायदण्डवेषाय ते (तुभ्यं) च स्वस्तिः अस्तु ।। हे दुर्वादीभ-महासिंह! तव युक्त्याख्यसन्नखैः शीघ्रतः तद्दुर्मतमहाकुम्भदलनं कुरु ।। (पश्य) इह मत्पट्टोदयपर्वतात् उदितेन वेदवेद्यद्युमणिना मणिमन्मतदुस्तमः निरस्तम् ।।

(व्या) हे हयग्रीवकर्मन्दिन्! **तान् दोषरूपिण एव** शेषाद्रिपण्डितादीन् भाषयैव भीषयसि, न मनसा । 'तेषां सात्विकत्वात्' इत्यर्थः । हे **अविषह्य** = मदवमानासहन = **काषायदण्डवेषाय** = सन्न्यासिने, ते = तुभ्यं **स्वस्त्यस्तु** = भद्रमस्तु ।।२२।।

**हे दुर्वादीभ- महासिंह** = दुर्वादिन एव इभाः गजाः । तेषां महासिंह इव स्थित । **तव युक्त्याख्यसन्नखैः** = श्रुत्याद्यनुकूलयुक्तयः । तदाख्यसन्नखैः **तद्दुर्मतमहाकुम्भदलनम्**(१) । तेषां दुर्वादिनां दुर्मताख्य- महाकुम्भान् = गण्डस्थलानि, तेषां दलनं = नाशनं **कुरु** । 'तदपि शीघ्रतः' इत्यर्थः ।।२३।।

'पश्य वेदवेद्यपराक्रमम्' इत्याह – **वेदवेद्येति ।। इह** लोके **मत्पट्टोदयपर्वतात्** मम पट्टः सिंहासनं तद्रूपः उदयपर्वतः, तस्मात् **उदितेन वेदवेद्यद्युमणिना** = वेदवेदाख्यसूर्येण

---

(१) (इल्लि तद्दुर्मतं एम्बल्लि विवक्षित दुर्मतवेन्दरे वादिराज स्वामिगळु कशेरु एम्ब श्रीकृष्णस्त्रीयर अवतार एम्ब दुर्वाद. अदन्नु ई ग्रन्थस्थ ऋजुत्वस्थापकवाक्यगळिन्दलू, श्रुतिपुराणवाक्यगळिन्दलू खण्डिसि नन्न ऋजुगणस्थत्ववन्नु सिद्धान्तमाडि तोरिसु एन्दु तात्पर्य)

'द्युमणिस्तरणिर्मित्रः' इत्यमरः । **मणिमन्मतदुस्तमः** = मणिमतं = सङ्करस्य मतं विश्वमिथ्यात्वमतम् । तदेव दुस्तमः = दुष्टान्धकारः । तत् **निरस्तं** = नाशितम् ॥२४॥ हय.क.श्रो.प्र.सं. ॥

## ८. वेदवेद्यप्रकरणम्॥ श्लोकौ (२५ऽ२६)

(व्या) 'हे वेदवेद्य' इत्यारभ्य 'यमात्' इत्यन्तं अष्टमं वेदवेद्यश्रोतृकं प्रकरणम् ।

**हे वेदवेद्य दुस्तर्कतमसोऽर्कप्रभायित ।**
**सत्तर्ककुमुदानां च कौमुदीश न ते समः ॥२५॥**

**पुरुषोऽस्तीह लोके च परुषोक्तिं वदेद्यदि ।**
**सर्षपात्सम्मितां वाऽपि कर्षणं यास्यते यमात् ॥२६॥**

(अन्वयः) हे वेदवेद्य! दुस्तर्कतमसः अर्कप्रभायित! सत्तर्ककुमुदानां कौमुदीश! ते समः पुरुषः इह लोके च न अस्ति । यदि सर्षपात् सम्मितां वा परुषोक्तिं अपि वदेत् (तर्हि सः) यमात् कर्षणं यास्यते ॥

(व्या) **हे वेदवेद्य! दुस्तर्कतमसः** = दुस्तर्कान्धकारस्य, **अर्कप्रभायित** = अर्कस्य सूर्यस्य प्रभायित = प्रभवदाचरित; 'आचारार्थे क्विप्' । **सत्तर्ककुमुदानां च** सत्तर्करूपकुमुदानां चन्द्रविकासिनां **कौमुदीश** = चन्द्रिकेश! **ते समः** इह = **लोके** । 'च'कारात् परलोकेष्वपि **पुरुषः न नास्ति** ॥२५॥

**यदि यः** कश्चित् । **सर्षपात्** सर्षपेन सिद्धार्थेन **सम्मितां** समानाम् अपि; 'अत्यल्पम्' इत्यर्थः । **परुषोक्तिं** = 'अहोऽयं अस्मादृशो मानवः । कथं श्रेष्ठः ऋजुः भवेत्? तद्गुरुर्वादिराजः स्वशिष्यस्नेहेन किमपि वक्ति' इति कठिणोक्तिं **वदेत्** । तर्हि सः **यमात् कर्षणं यास्यते** = प्राप्स्यतीत्यर्थः ॥२६॥ वेदवेद्य प्रकरणं सम्पूर्णम् ॥

## ९. वादिराजभट्टप्रकरणम्॥ श्लोकः (२७)

(व्या) **'वादिराजगुरुनामधर'** इत्यारभ्य एकः श्लोकः नवमं वादिराजभट्ट श्रोतृकं प्रकरणम् ।

**वादिराजगुरुनामधराहो मत्कृतिः परमतं निराकरोत् ।**
**त्वं कुरुष्व रतिमत्र वेदराट् प्रीयते परमपूरुष एव ।।२७।।**

(अन्वयः) हे वादिराजगुरुनामधर! मत्कृतिः परमतं निराकरोत् ! अहो! अत्र त्वं रतिं कुरुष्व । वेदराट् परमपूरुषः प्रियते एव ।।

(व्या) **हे वादिराजगुरुनामधर** । वादिराजभट्ट! **मत्कृतिः** = मदाख्यानग्रन्थः । **परमतं** = मायावाद्यादिमतं **निराकरोत्** । **अहो** इत्याश्चर्यम् । अतः **त्वम् अत्र** मत्कृतौ **रतिं कुरु** । किं तेन? इत्यत आह – **प्रीयते इति** ।। **परमपूरुषः** श्रीहयवदनः च आहमपि **प्रीयते एव** = प्रीतो भवत्येव । भवाम्येव ।।२७।। वादिराजभट्टप्रकरणं सं. ।।

१०. लक्ष्मीपतिश्रोतृकप्रकरणम्।।

श्लोकाः (२८-३९ १/२)

(व्या) **'हे शिष्टकार्यत्रयम्'** इत्यारभ्य **'त्वद्धिताय च'** इत्यन्तं दशमं लक्ष्मीपतिश्रोतृकं प्रकरणम् ।

**हे शिष्ट कार्यत्रयमास नष्टं निविष्टमेघैरिव भूतळेष्टम् ।**
**स्पष्टं मुनीनां परिहासगोष्ठ्यां तिष्ठत्यजस्रं सुत तद्यथेष्टम् ।।२८।।**

**त्वत्सहस्रसमा यावत्तावन्मम तु हास्यता ।**
**न स्यात्स्वस्यायुष्यवृद्धिमपेक्ष्याहं सदा वसे ।।२९।।**

('सुहास्यता' एन्दु स्वा.व्याख्यानं च. आदरे वृं.प्रिंटुगळल्लि 'तु हास्यता' एन्दे इदे.)

**तस्मात्कार्यत्रयं कृत्वा कृतकृत्यो भव प्रिय ।**
**त्रिभिः पुत्रस्य पुत्रत्वं स्मृत्युक्तं सार्थकं कुरु ।।३०।।**

(अन्वयः) हे शिष्ट कार्यत्रयं नष्टम् आस । (यथा) निविष्टमेघैः भूतलेष्टं (सौरं तेजः नष्टः भवति); हे सुत! मुनीनां तत् अजस्रं परिहासगोष्ठ्यां तिष्ठति । तत् यथा इष्टं (तथा) स्पष्टं (कुरु) । त्वत् यावत् सहस्रसमाः तावत् मम सुहास्यता न स्यात् । अहं स्वस्य अयुष्यवृद्धिम् अपेक्ष्य अहं सदा वसे ।। तस्मात् हे प्रिय! कार्यत्रयं कृत्वा

**कृतकृत्यः भव । 'त्रिभिः पुत्रस्य पुत्रत्वम्' (इति) स्मृत्युक्तं सार्थकं कुरु ॥**

**(व्या) हे शिष्टेति ॥ हे शिष्ट** लक्ष्मीपते! शिलालेखन आख्यानव्याख्यानादिरूपं **कार्यत्रयं नष्टम् आस** । 'त्वया न कृतम्' इत्यर्थः । यथा **निविष्टमेघैः भूतलेष्टं** सान्द्रमेघैः भूतलस्य इष्टं सौरं तेजः । (तथा नष्टं आस इत्यन्वयः) [१]तथा **हे सुत!** त्वया करणीयं **तत्कार्यत्रयम्** । **मुनीनां** ज्ञानिनां **परिहासगोष्ठ्यां** हास्यकथायाम् इत्यर्थः । अहो नाभूत् अद्यापीति रूपायाम् अजस्रं तिष्ठति । **यथा इष्टं** तथा कुरु । इदं वचनं मम स्पष्टं जानीहि ।।२८।।

**त्वत्** सकाशात् । **यावत् सहस्रसमाः** वर्षसहस्रं **मम सुहास्यता न स्यात्** तावत् अत्र **स्वस्य** निजभक्तजनस्य **आयुष्यवृद्धिमपेक्ष्य अहं सदा वसे** = वसामि । ततश्च गन्धमादनस्थ बदरिकाश्रमे श्रीमदानन्दतीर्थसमीपं गत्वा, तेन सह देवमानेन शरच्छतवर्षपर्यन्तं स्थित्वा, ततश्च मूलस्वरूपं तेनैव सह प्राप्स्यामि ।।२९।।

**तस्मात् हे प्रिय** पूर्वोक्तं **कार्यत्रयं कृत्वा कृतकृत्यो भव ।** अपि च 'पुदित्याहुः पूयशोणादिभाजाम्' इत्यादिना पुत्रस्य पुत्रत्वम् । (त्रिभिः पुत्रस्य पुत्रत्वं एम्बुदु स्मृतिवचन. जीवतो वाक्यकरणात्, प्रत्यब्दं श्राद्धतर्पणात्/ कर्मणात्, गयायां पिण्डदानेन त्रिभिः पुत्रस्य पुत्रत्वं एन्दु पुराणवचनविदे. नन्न कण्ठपाठ, आनुपूर्वी व्यत्यासविरबहुदु. प्रमेय सरियागिदे.) त्रिभिः कृत्यैः सार्थकं कुरु (त्रिभिः कृत्यैः - ई मूरु कार्य ३७-३८ने श्लोकगळल्लि इदे अध्यायदल्लि हेळल्पट्टिदे. ई प्रकरणवेल्ला वेदनिधिगळिगू अन्वयिसुव हागिदे. ७।८६-८७रल्लि वेदनिधिगळिगे हीगे ताने आज्ञेयागिदे. ३०-३७

---

(१) (आदिपददिन्द 'अध्यायपूर्तिकरण, विप्रापरित्याग, मानवादिसत्कार' ग्राह्य. ३७ने श्लोकदल्लि गुरुराजरे कार्यत्रयवन्नु विवरिसिद्दारे. वि.सू. ई लक्ष्मीपतिप्रकरणवु वेदनिधिगळिगू अन्वयिसुव हागिदे. गुंपुकूडिद मोडगळिन्द सूर्यन बेळकु हेगे नष्टप्रायवागि काणल्पडुवुदिल्लवो, हागे निन्न अज्ञानालस्यादिमोडदिन्द नन्न कार्यवेम्ब सूर्यप्रकाशवु होरगे काणदन्ते प्रतिबद्धवागिदे एन्दर्थ. इन्थ दोड्डवर केलस इन्नू आगिल्ल एन्दु मुनिगळ गोष्ठियल्लि परिहासविषयवागियू उळिदु होगिदे. इप्पत्तोम्भत्तनेय श्लोकदल्लि एरडर्थसूचने इदे. १) एल्लियवरेगे ई कार्यपूर्तियागदे उळिदे इरुत्ते - एन्दरे साविरवर्ष इन्नू हास्यास्पदवागुवन्ते कार्यत्रय उळिदिरुत्ते एन्दू ओन्दु योजने. नीनु/लक्ष्मीपतियु अष्टरल्लि मनस्सु माडि साधिसिदरे निन्न ज्ञानवृद्धि निन्नवरिगे ज्ञानवृद्धिमाडिकोण्डु सदा इरुत्तेने. आ कालद मेले बेरेयवरिन्द उद्दिष्टकार्य आगुत्ते एन्दु भाव. (२) नीनु कार्यत्रय माडदिद्दरे, नानु इल्लिरुव पूणसन्निधानद १०००वर्षगळल्लि नन्न कीर्ति जनरिगे सरियागि तिळियदे जनरु आडिकोळ्ळलु मत्तु नन्न ऋजुस्थत्वदल्लि शङ्किसलु अवकाशवागुत्ते. आद्दरिन्द ईगले कार्यत्रय माडि नन्न ऋजुत्वसौरालोकवन्नु विस्तारवागि काणुवन्ते माडु एन्दर्थ.)

श्लोकोक्तकार्य विचित्रवागिदे. ३७रल्लि 'अध्यायात्मकसत्पद्यान्यस्मिन् सत्कृतिः परा' एन्दिदे. 'सत्पद्यान्यश्मन्यस्मत्कृतिः परा' एन्दिरबहुदो एनो एन्दु संशयविदे. ७।८६-८७रल्लि संशयक्के पोषणविदे. 'शिलास्थां कुरु शीलाढ्य सालप्रांशोऽमलां कृतिं' एन्दु अल्लिदे. ई मूरुकार्यप्रेरणे अल्लू २०श्लोकगळल्लिदे. इल्लू १०श्लोकगळल्लिदे. 'अध्यायात्मकसत्पद्यानि कुरु – इदं प्रथमकार्यं । अश्मनि परा अस्मत्कृतिः परा कार्या – परा श्रेष्ठा अस्मत्कृतिः परा पूर्णा शिलालिखिता कार्या इति द्वितीयं कार्यं । अन्नमन्त्रेषु अवैयर्थ्यं कार्यं इति तृतीयं कार्यं । हीगे मूरु कार्यवष्टे. इदरल्लि प्रथमकार्यवु द्विरूपवागिदे. प्रति अध्यायदल्लू नूरु श्लोकगळु बन्दु माङ्गळिकवागि पठन फलवु बरुवन्ते २२अध्यायगळल्लि अध्ययनतिथिगळल्लि पूर्णवागि बरेदिडुवुदु. सत्पद्यानि कुरु' एन्दरे आ केलस गुरुराजरे माडिद्दारे. अध्यायात्मकानि तानि कुरु एन्दर्थ. विशेषणविधि. इदू सेरि २२अध्याय माडु एन्दु न्दु अर्थ. आ कार्य वेदनिधिगळे माडिद्दारे. आ कालदल्लि लक्ष्मीपति यावुदो हेसरिनिन्द मठदल्लिद्दु वेदनिधिगळिगे सहाय माडिरबहुदु. इन्नोन्दर्थवेनेन्दरे स्वयोग्यविवक्षितपद्यगळुळ्ळ अध्यायगळन्नु स्वगुरुगळिन्द तिळिदु अध्ययन माडु एन्दु 'अध्यायात्मकसत्पद्यानि कुरु' एम्बुदर अर्थ. वृन्दावनाचार्यरे लक्ष्मीपतिय गुरुगळु. अवर सन्निधानदल्लि श्रवण माडि, प्रकरणगळ भेदवन्नु तिळिदु ग्रन्थवन्नु अर्थसहित पारायणमाडि मनन माडु एन्दर्थ. इदु लक्ष्मीपतिगे आ जन्मदल्लि हेगे शक्य वृन्दावनाचार्यर कालदल्लि हुट्टिद जन्मदल्लू पूर्णवागि शक्यवागबहुदु. अथवा इल्ल एम्बन्ते इरुव कार्य.

एरडने कार्यवू एरडु रीतियागिदे. शिलादल्लि चीर्णदिन्द श्लोकगळन्नु केत्तिसुवुदु. मत्तु बादरायणमूर्तियन्नु वृन्दावनाचार्यरु उडुपिगे तन्दु पूजिसलु सहाय माडुवुदु. मत्तु ई कृतियु 'व्यासमुष्टियु उडुपिगे बन्दु वृन्दावनाचार्यर साधनेगे वरदानमाडि अवरन्नु उद्धारमार्ग तोरिसतक्कद्दु' एन्दु व्याख्यानमाडि कृतिगे शिला(व्यास)विषयकत्ववन्नु प्रतिपादिसुवुदु. हीगे एरडु मूरु रीति इदे. श्रीवेदनिधिगळु १४श्लोकगळन्नु चुनायिसि 'वादिराजाख्ययतिना ब्राह्मणस्वाप्रमूर्तिना' इत्यादि तम्म ४श्लोकगळन्नु सेरिसि, १८श्लोकगळ अणुवृन्दावनाख्यानमाडि १६श्लोकगळन्नु नागराक्षरदल्लि केत्तिसिदरू, समग्र २२०० श्लोकगळन्नु केत्तिसुवुदु. वृन्दावनाचार्यरिगे सहाय माडुवुदू, व्याख्यानमाडि ग्रन्थव्यासमुष्टिविषयकवेन्दु तोरिसुवुदू दिव्यज्ञानद कार्य. विळम्बेन आगतक्कद्दु.

इन्नु मूरनेय कार्यवू एरडु रीतियागिदे. १) अन्नमन्त्रजपिसि त्रिविक्रमन उत्सव; पुण्यदिनगळल्लि यथेष्ट अन्नसन्तर्पणे माडुवुदु. हागेये अन्नदान वृन्दावनसन्निधियल्लि माडुवुदु. २) श्रीहरिदर्शनमाडिसुव मन्त्ररूपवाद ई ग्रन्थक्के व्याख्यानमाडि, अधिकारि, विषय, प्रयोजन, सम्बन्धगळन्नु तोरिसि, प्रामाण्यसमर्थने माडि , पाठप्रवचनगळिन्द सार्थकपडिसि, अपरोक्षहोन्दि शिष्यराद अधिकारिगळिगू अपरोक्ष माडिसुवुदु. मूरू विळम्बदिन्द आगतक्कवु. 'गुरुराजरल्लि 'आर्यत्वनिश्चय; कृति गुरुराजकृतवेन्दु पूर्णनिश्चयवादरेने साध्य' एन्दू सूचिसिद्दारे.) ।।३०।।

**एतवानेव सत्पुत्रः पोतावश्यमिदं कुरु ।**
**मातापित्रोश्च शुश्रूषां श्रोता श्रुत्वा दिवं गतः ।।३१।।**

**कर्ता यातीति किमुत भर्तारं च सती यथा ।**
**स्मृत्वा याति परं लोकं कृत्वा सेवां कुरु प्रिय ।।३२।।**

(अन्वयः) हे पोत! सत्पुत्रः एतावान् एव । (तस्मात्) इदम् अवश्यं कुरु । मातापित्रोः च शुश्रूषां श्रुत्वा श्रोता च दिवं गतः । (अतः) कर्ता याति इति किमुत । यथा भर्तारं स्मृत्वा सती परं लोकं याति (अतः) हे प्रिय सेवां कुरु ।।

(व्या) एतावानेव = पित्राज्ञापरिपालनरूपगुणवानेव, सत्पुत्रः इत्युच्यते । हे पोत! इदं अवश्यं कुरु । हे प्रिय! मातापित्रोश्च शुश्रूषां तदात्मिकां कथां श्रुत्वा, केवलं श्रोताऽपि यः कश्चन दिवं गतः ।।३१।।

किमु कर्ता याति? इति यथा सती पतिव्रता भर्तारं (स्मृत्वा) संसेव्य, सहगमनेन वा याति तथेत्यर्थः । अन्या च या काचन पतिव्रता पातिव्रत्यकथां श्रुत्वा स्मृत्वा, कृत्वा च तथा (परं लोकं =) परलोकं भर्तृलोकं याति । 'अतो मत् सेवां कुरु' इत्यर्थः ।।३२।।

**तस्मान्मत्सेवया जीव सुत त्वं शरदां शतम् ।**
**करदानादपि प्रीतिर्मम नैतादृशी भवेत् ।।३३।।**

**तस्मात्त्वं सर्वकार्यं च हित्वा कार्यत्रयं कुरु ।**
**आर्यत्वं मयि चेदस्ति तर्हि कार्यमिदं त्रयम् ।।३४।।**

(अन्वयः)

तस्मात् हे सुत! मत्सेवया शरदां शतं जीव । एतादृशी प्रीतिः मम करदानात् अपि न भवेत् ।। तस्मात् त्वं सर्वकार्यं च हित्वा कार्यत्रयं कुरु ।। मयि अर्यत्वम् अस्ति चेत्, तर्हि इदं कार्यं त्रयं कुरु ।।

(व्या) तस्मात् हे सुत! मत्सेवया शरदां वर्षाणां शतं तत्पर्यन्त जीव । एतादृशी = पूर्वोक्तकार्यत्रयकरणात्मिका प्रीतिः, मम करदानादपि = मठीय मर्यादार्थं दीयमानकरदानादपि न भवेत् ।।३३।।

तस्मात् हे लक्ष्मीपते! त्वं च सर्वकार्यं हित्वा कार्यत्रयं कुरु । मयि आर्यत्वं = यथार्थवक्तृत्वं अस्ति इति चेत् मन्यसे । तर्हि इदं कार्यत्रयं कार्यं कुरु ।।३४।।

**इयं मम कृतिश्चेति न विप्रकृतिरित्यथ ।**
**विश्वासस्तव चेदस्ति तर्हीदं कुरु शीघ्रतः ।।३५।।**

**सुत सम्पूर्णकामस्य हयग्रीवाज्ञया मम ।**
**कामः कुत्रापि नास्त्येव पूर्णकामस्य का स्पृहा ।।३६।।**

(अन्वयः) अथ इयं मम कृतिः च विप्रकृतिः न इति तव विश्वासः अस्ति चेत्, तर्हि शीघ्रतः इदं कुरु ।। हे सुत! हयग्रीवाज्ञया सम्पूर्णकामस्य मम कामः कुत्रापि नास्ति एव । पूर्णकामस्य का स्पृहा?

(व्या) अथ = पक्षान्तरे । 'इयं विप्रकृतिः न, किन्तु मम कृतिः च' इति तव विश्वासः अस्ति चेत्, तर्हि इदं शीघ्रतः कुरु ('आर्यत्वं चेत्, मम कृतिः इति विश्वासः चेत्' एन्दु सुम्म सुम्मगे सूचनेयिल्ल. अन्थ शङ्के अनाद्यविद्येयिन्दलू, कमलनाभादिगळ सङ्गड मध्ये मध्ये ओडाटदिन्दलू, नमगे आङ्ग्ल मत्तु काङ्ग्रेस्सिनवर सहवासविद्दन्ते, आगिन कालद अन्यमथस्थदोड्डमनुष्यर सहवासदिन्दलू लक्ष्मीपत्यादिगळिगू, शेषरायनिगू इन्थ शङ्के बन्दे बरुत्ते एन्दु भाव) ।।३५।।

ननु पूर्णकामाः, पूर्णप्रज्ञसदृशाः यूयं कथम् 'इदं मम कार्यं कुरु कुरु' इति कामिजना इव प्रतिक्षणं वदथ इत्यत आह – सुतेति ।। हे सुत! हयग्रीवाज्ञया सम्पूर्णकामस्य मम() कुत्रापि कामः नास्ति (देवरिगू, लक्ष्मीदेवियरिगू, ऋजुगळिगू पूर्णकामत्वविदे. ऋजुगळु ज्ञानभक्तिवैराग्यगळन्नु कोडुत्तारे. इतर विषयवेल्ला परानुग्रहार्थवागि. आ भक्तपरानुग्रहवू हरिप्रीत्यर्थवागि. अवर उद्धारवन्ने स्वन्तकामदन्ते तिळियुत्तारे. कुत्रापि = लौकिकविषये) । (हरिप्रसादेन) पूर्णकामस्य मम कथं स्पृहा स्यात् इति विचारय ।।३६।।

**अथापि वक्ष्ये ते कामं मम काम्यमिदं त्रयम् ।**
**अध्यायात्मकसत्पद्यान्यस्मिन्नस्मत्कृतिः परा ।।३७।।**

(अस्मिन् अस्मत्कृतिः परा एन्दादरे ई अध्यायदल्लि नम्म ग्रन्थ, परा = समाप्ता, पूर्णा एन्दु अन्वय. मेले हेळिद पुटगळिन्द व्याख्यानविशेष तिळियबेकु)

**अन्नमन्त्रेष्ववैयर्थ्यमेतत्कार्यत्रयं मम ।**

(अन्वयः) अथापि कामं मम इदं त्रयं काम्यं ते (तुभ्यं) वक्ष्ये । अस्मिन् (वृन्दावने), अध्यायात्मकसत्पद्यानि अस्मत्कृतिः परा, अन्नमन्त्रेषु अवैयर्थ्यं मम

**एतत् कार्यत्रयं (उक्तम्) ।**

**(व्या)** ननु स्पृहाभावेऽपि एवमाज्ञाकरणं चित्रक(त)रमिव भाति । 'नाहं जाने श्रीमताभिप्रायम्' इत्यत आह – **अथापीति ।।** एवं सत्यपि, कामं स्वच्छन्दतया इदं **मम** त्रयं **काम्यं ते तुभ्यं वक्ष्ये ।** अस्मिन् व्याख्याने द्विशताधिक- द्विसहस्रपद्यानि । **अध्यायत्मकसत्पद्यानि** करणीयानि (७।८६) । द्वाविंशतिसङ्ख्यया इत्यर्थः । इयमेव **अस्मत्कृतिः, परा** = पूर्णा ।।३७।।

**अन्नमन्त्रेषु** पूर्वोक्तेषु (७।९६-९८, २१।५२-५४) **अवैयर्थ्यम् । एतत्** एतद्व्याख्यानं च । एतत् **त्रयं** । मम कार्यम् (द्वाविंशदध्यायात्मकत्वकरण; अन्नमन्त्रेषु अवैयर्थ्य(सार्थक्य)करण; आख्यानव्याख्यानकरण - हीगे मूरु ई व्याख्यानदल्लि विवक्षितवागिवे.)।।३८।।

**एतत्त्रयं यदि कृतं त्वया पुत्रेह कुत्रचित् ।।३८।।**

**मम मित्रस्त्वमेवेह सुत्राम्णश्चित्रविक्रमः ।**
**यथा तथा सुत त्वं मे वृथा मा कुरु मत्स्पृहाम् ।।३९।।**

**व्यथा न मे कृतार्थस्याप्यथापि त्वद्धिताय च ।**

(अन्वयः) हे पुत्र! यदि एतत् त्वया कुत्रचित् त्रयं कृतं (चेत्), इह (यथा) सुत्राम्णः चित्रविक्रमः (तथा) त्वमेव मम मित्रः (पुत्रः) ।। (अतः) मत्स्पृहां त्वं वृथा मा कुरु । कृतार्थस्य मे व्यथा न, अथापि त्वत् हिताय च (वृथा मा कुरु) ।

**(व्या) हे पुत्र! कुत्रचित्** अपि । त्वया **एतत् यदि कृतं,** तर्हि **इह** = भुवि, **त्वं** यथा **सुत्राम्णः** इन्द्रस्य **चित्रविक्रमः** अर्जुनः तथा **मम** पुत्रः । अतः **मे स्पृहां वृथा मा कुरु** ।।३९।। ('मित्र' इति पाठे । मित्रः इत्यलौकिकप्रयोगः । त्रिविक्रमः उपेन्द्ररूपी वामनः यथा इन्द्रस्य मित्रं । तथा त्वं मम मित्रं भवसीति अधिकदृष्टान्तः ।) यदि (न) करोषि, **कृतार्थस्य मे न व्यथा, अथापि त्वद्धिताय** एव वच्मि । 'भवतामेव कर्तव्यम्' इति पूर्वोक्तमनुसन्धत्स्व (१०।८५,९६) ।। इति लक्ष्मीपतिप्रकरणं सम्पूर्णम् ।।

### ११. हयग्रीवकर्मन्दिप्रकरणम् श्लोकाः (४०-७३)

**(व्या)** 'हे नन्दन कामधेनुवदेव त्वम्' इत्यारभ्य ('स करिष्यति मे सदा') 'प्रकुरु

प्रार्थये हरिम्' इत्यन्तं हयग्रीवकर्मन्दिश्रोतृकप्रकरणम् एकादशम् ।

**हे नन्दन कामधेनुवदेव त्वं धनैरपि ।।४०।।**

**वृन्दावनपतिध्यानाद्धन्यं ब्राह्मणमावह ।**

**एवं धृतायां ध्रुवमात्मनः कृतिं सन्ध्याय स्वाध्यायतिथीस्त्वमुश्चन् ।।४१।।**

**अध्यायकृत्यं कुर्वन्नध्यायकेषु भृत्यैर्युक्तं कुरु कृष्णार्पणं तत् ।।४२।।**

(अन्वयः) हे नन्दन! वृन्दावनपतिध्यानात् त्वं धनैरपि कामुधेनुवत् एव (असि) । धन्यं ब्राह्मणम् आवह ।। एवं ध्रुवं धृतायाम् आत्मनः कृतिं सन्ध्याय, स्वाध्यायतिथीः त्वम् अमुश्चन् अध्यायकेषु अध्यायकृत्यं कुर्वन् भृत्यैः युक्तं (सन्) कृष्णार्पणं कुरु ।।

(व्या) (ई ४०,४१,४२ने श्लोकगळ अर्थ नोडिदरे वेदनिधिगळिगे अन्वयिसुवन्ते तोरुत्ते. विप्रक्षणे, अध्यायकरण, शान्तिपाठ हेळि कृष्णार्पण माडोण इवेल्लवू वेदनिधिगळ कार्य. प्रकरणविभाग हेळिदवरु हयग्रीवकर्मन्दिप्रकरण एन्दु बरेसिद्दारेये प्रमादवेनादरू आगिदेये विमर्शेमाडबेकु. ७२नेय श्लोकद 'रूढमत्पद' एम्ब सम्बुद्धियन्तू वेदनिधिगळिगे समञ्जस) हे नन्दनेति ।। हे नन्दन! हयग्रीवकर्मन्दिन्! त्वं वृन्दावनपतिध्यानात् = वृन्दावनस्य पतिः श्रीहयवदनः, तद्भक्तोऽहं च । आवयोर्ध्यानात् । धनैरपि कामधेनुवत् असि । अतः मत्कृतिकथनेन धन्यं ब्राह्मणं विप्रम् आवह रक्षस्व ।।४०।। आत्मनः मम कृतिं च आवह धारय । एवं च ध्रुवं निश्चयेन त्वया धृतायां सत्यां सन्ध्याय सम्यग् विचार्य । स्वाध्यायतिथीः = स्वाध्यायदिनानि । अमुश्चन् सन् ।।४१।। अध्यायकेषु अध्यायकृत्यं = शतश्लोकात्मकत्वं कुर्वन् । युक्तं यथा भवति तथा भृत्यैः सह उत्तरशान्तिपूर्वकं तत् कृष्णार्पणं कुरु ।।४२।।

**लोकेऽप्यवैदिकसभे यास्यत्याभरणं धनम् ।**
**तत्सर्वमप्यहं वक्ष्येऽप्ययमेव ममोद्यमः ।।४३।।**

**भ्रान्त मा पृच्छ मां मायामयं जगदिदं त्वसत् ।**
**इति मायावादिनां तु मतमप्यनिशं मृषा ।।४४।।**

(अन्वयः) अवैदिकसभे लोके अपि धनम् आभरणं यास्यति । अहं तत्सर्वम् अपि

**वक्ष्ये । मम उद्यमः अयमेव ।। हे भ्रान्त! मां मा पृच्छ । 'इदं जगत् तु असत्' इति मायावादिनां मतं तु अनिशं मृषा (एव) ।।**

(व्या) **लोके इति ।। अवैदिकसभे** = अवैदिकानां मायावाद्यादीनां सभाः यस्मिन् । तादृशे । अस्मिन् **लोके, धनम् एव आभरणं** भूषणभूतं प्राप्नोति । एतादृशेऽपि लोके **तत्सर्वं** आख्यानोक्तं **सर्वं** प्रमेयं **अहं वक्ष्ये । अयमेव मम उद्यमः** = उद्योगः ।।४३।। **इति हे भ्रान्त! मां मा पृच्छ 'इदं जगत्** **मायामयम्** अत एव **असत्** **मिथ्या' इति मायावादिनां तु मतम्** । तदपि (तेषां सिद्धान्तोऽपि) जगन्मिथ्यात्वप्रतिपादनेन जगदन्तर्गततन्मतमपि **मृषा** एव इति **अनिशं** सर्वदा विद्धि (श्लोक ४३र उत्तरार्धदल्लि एरडु 'अपि'गळिवे. व्याख्यानदल्लि कृत्य हेळिल्ल. – लोके विद्यमानं तत्सर्वमपि अहं वक्ष्ये । भक्तानां क्षेमार्थं । अयमेव भक्तयोगक्षेमविमर्शं एव मम उद्यमः अपि । हर्याज्ञया इति भावः । स्वकीयरक्षणं परकीयभक्तसहायश्च अवतारप्रयोजनं ममेति भावः ।।४३।। तर्हि श्रीमद्भिरुक्तं सर्वं कुतः स्पष्टं नोपलभ्यते । भवद्भिरुक्तं सर्वं मिथ्या इति प्रतीयते इति चेदाह – भ्रान्तेति ।। मायावादे सर्वं मिथ्या । मतमपि मिथ्या । न तथा मध्वसिद्धान्ते । विश्वं सत्यम्, किन्तु सर्वं हर्यधीनम् । हरिणा अस्मदादिद्वारा त्वादृशाः शिष्याः रक्षिताः । तव मातापित्रोरसमर्थत्वेऽपि समर्थं गुरुं मां नियम्य, त्वद्रक्षणं मया हरिः कृतवान् । न किमपि मदुक्तं मृषा । अहं सर्वज्ञः ऋजुः अमोघभाषणः । तस्मान्मां शरणं प्राप्य तत्वज्ञानं पृच्छ । कथमाख्यानोक्तं भविष्यति? इति मा पृच्छ । तत्सर्वं मया अस्पष्टोक्तम् । भगवदधीनं तत्तत्काले भविष्यत्येव । न यदा कदाचित् यत्र कुत्र भवद्दृष्टि विक्षेपवेळायां त्वत्पुरत एव दृश्यते इति भावः ।।) ।।४४।।

**लाभालाभौ हर्यधीनौ लोभालोभौ च देहिनाम् ।**
**सुखदुःखे खगपतेरधीनौ खासदेहिनः ।।४५।।**

**मानामानौ जनानां च मोहामोहौ महात्मनः ।**
**जयाजयौ श्रियःकान्तान्मायामाये महामतेः ।।४६।।**

**इत्यादिद्वन्द्वजातानि मध्वसिद्धान्तवेदिनः ।**
**तस्मान्मा पृच्छ मां मातापितरौ के तु मानव ।।४७।।**

**पृच्छ सच्छास्त्रतत्वानि मयोक्तानि न वै मृषा ।**

**(अन्वयः) देहिनां लाभालाभौ लोभालोभौ च हर्यधीनौ । खासदेहिनः सुखदुःखे खगपतेरधीनौ । जनानां मानामानौ मोहामोहौ च, महात्मनः जयाजयौ (च) इत्यादिद्वन्द्वजातानि महामतेः श्रियःकान्तात् मध्वसिद्धान्तवेदिनः (अस्ति) । तस्मात् हे मानव! (तव) मातापितरौ तु के? इति मा पृच्छ । सच्छास्त्रतत्वानि पृच्छ । मया उक्तानि मृषा न, वै ।।**

(व्या) तर्हि सत्यं मतं कीदृशम्? इत्यत आह – **लाभालाभाविति ।। हे महामते ।** हयग्रीवकर्मन्दिन्! **देहिनां** लाभालाभौ **लोभालोभौ** च हर्यधीनौ । **श्वासदेहिनः** = श्वासो मुख्यप्राणः, तदधीनस्य देहिनः जीवस्य **सुखदुःखे खगपतेः** हरेः अधीने । **जनानां** मानामानौ **मोहामोहौ च** महात्मनो हरेरधीनौ । **जयाजयौ मायाअमाये** = ज्ञानाज्ञाने च । एतानि **द्वन्द्वजातानि श्रियःकान्तात्** श्रीनिवासादेव भवन्ति **इति मध्वसिद्धान्तवेदिनः** मम मतम् ।।४६।।

**तस्मात् हे मानव!** ज्ञानिन्! तव मातापितरौ, 'तु'ना गुरुरपि ग्राह्यः । मां विना **के?** केपि न स्युः । अतः भगवन्माहात्म्यं विना अन्यत् **मां मा पृच्छ** ।।४७।।

**सच्छास्त्रतत्वानि** = सच्छास्त्रं मध्वशास्त्रं, मत्कृतिश्च सच्छास्त्रं तयोः तत्वानि । **पृच्छ** । तस्य उत्तरत्वेन त्वया पृष्टेन **मया उक्तानि** वाक्यानि **मृषा न वै** (न बाधितानि किन्तु सिद्धिप्रदानि च) निश्चयः ।।४७।। (लौकिकविषयदल्लि प्रश्ने माडबेड. तत्वज्ञानक्कागि नन्नन्नु प्रश्निसु एन्दु प्रकरणद सारांश. ''ई आख्यानदल्ले अनेक भविष्यलौकिकविषय हेळिद्दीरि. आदरिन्द एल्लवन्नू तिळियुव आसेयागिदे. मुन्दिन जन्मदल्ले नन्न तन्दे, तायि, गुरु, बन्धु, शिष्य, पत्नियरु यारु एष्टु धन ननगिरुत्ते वृद्धिगे एनु माडबेकु सन्तत आरोग्यकर लेह्यद पट्टि हेळि'' इत्यादि रीति केळबेड. एके प्रश्ने केळबेड एन्दरे, अद्वैतरीत्या मिथ्या प्रपञ्च, मिथ्या सौख्य, अदक्केके प्रश्नेएन्नुत्तारे. एल्ला मिथ्या एन्दरे मतवे मिथ्या. हेळिदेल्ला सुळ्ळु एन्दागुत्ते. आदरिन्द आ रीति नानु उत्तर कोडोदिल्ल. द्वैतसिद्धान्तरीत्या नन्न उत्तर एनेन्दरे, ''ब्राह्मणो निर्वेदमायात् एन्दिदे. सत्य जगत्तिनल्लि यावुदू स्वतन्त्रवल्ल, एल्ला पराधीन, असमर्थ, असार, अनित्य, बन्धक, चञ्चल, परमात्मवशत्वेन तिळियदे अदर ज्ञानसंपादनेगे यत्निसुवुदे संसारक्के कारण. हरियन्नु तिळियदे एल्ला लौकिक तिळिदरू एनु प्रयोजनवागुवुदिल्ल. आ ज्ञानार्थकालक्षेप आयुर्नाशक. साधन एन्दरे हरि ज्ञानदिन्द. 'एक विज्ञानेन सर्वं विज्ञातं' एन्दिदे. हरि सर्व जडजीवरुगळ बिम्ब, स्वामि, प्रधान प्रियवस्तु. अवन ज्ञान मुख्यसंपादनीय. मोक्षवे मुख्यपुरुषार्थ. अदु अवनिन्दले बरुत्ते. नन्नन्थ गुरुगळिन्द तिळिदरेने अवनु सिक्कुवुदु. हरियु विशिष्ट, इष्ट, सर्वशास्त्रवेद्य. नन्नन्थ गुरुगळु सिक्काग अवन विषय केळु.

मुख्यामुख्ययोर्मध्ये मुख्ये कार्यसंप्रत्ययः' एम्ब न्यायविदे. 'तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे' 'हरिरेव गुरुः, हरिरेव जगत्पितृमातृगतिः' एन्दु इदे. नम्म सर्वसुखनिधि अवनु. अवन विषयक सिद्धिप्रदविद्ये नन्निन्द पडे. न मृषा. नानु हेळुवुदु सुळ्ळल्ल. मत्तु न मृषा = सिद्धिरहितवल्ल एन्दु एरडर्थ. विमुक्तनागि होगुत्ती एन्दु भाव.)

**त्वया पृष्टेन वक्ष्यामि हृष्टोऽहं सततं प्रिय ।।४८।।**

**स्पष्टं ते स्वेच्छया वक्ष्ये कष्टं तेऽद्य किमागतम् ।**
**लोकवार्तां न मां पृच्छ तोकबुद्धिमिमां त्यज ।।४९**

**।।**

**काकवल्लघुतां यासि नाकेशसुतवत्प्रिय ।**
**अतस्त्वप उपस्पृश्य कुपथस्थितपापिनाम् ।।५०।।**

**प्रसङ्गात् सुप्रसङ्गांस्तु प्रवक्ष्ये विप्रवर्य ते ।**

(अन्वयः) अद्य ते किं कष्टम् आगतम्? स्पष्टं (कुरु) । स्वेच्छया ते वक्ष्ये । लोकवार्तां मां न पृच्छ । इमां तोकबुद्धिं त्यज ।। हे प्रिय! नाकेशसुतवत् काकवत् लघुतां यासि । अतः कुपथस्थितपापिनां प्रसङ्गात् अप उपस्पृश्य तु, हे विप्रवर्य! ते सुप्रसङ्गांस्तु प्रवक्ष्ये ।

(व्या) हे प्रिय! अहं हृष्टः सन् सततं वक्ष्यामि । ('स्पष्टं वक्ष्ये' एन्दिदे. 'स्वेच्छया वक्ष्ये' एन्दू इदे. जगद्विषय हेळुवाग परोक्षतः अस्पष्टवागि हेळुत्तारे. हरितत्वविषयदल्लि इन्थ अधिकारिगे 'स्वेच्छया स्पष्टं वक्ष्ये' एन्दिद्दारे. हीगे व्यत्यासविदे. हागादरे तम्म सन्निधानदल्लि केवल शास्त्रविचारदल्लि मग्नानागिबिट्टरे ननगे भिक्षादिगळु हेगे दगबेकु खायिले कष्ट बन्दरे एनु माडबेकु एन्दरे इल्ले 'अद्य ते किं कष्टमागतं' एन्दु उत्तरविदे. सन्ततसच्छास्त्ररतनागि गुरुसन्निधियल्लिरुववनिगे गुरुकृपेयिन्द मत्तु वेदाभिमानिगळ कृपेयिन्द जीवनादिगळिगे कष्टवागुवुदिल्ल. नेल्लु यत्नदिन्द सिक्कुवाग हुल्लू अनायासेन सिक्कुवन्ते हरिविषयकमहाप्रयत्नशीलनिगे सच्छास्त्राभिमानिदेवतेगळु प्रसन्नरागि 'श्रीकरोऽयं ग्रन्थः' 'अनन्याश्चिन्तयन्तो' एम्बन्ते धनधान्यादिगळन्नु अयाचितवागि अथवा हेगो अल्पयत्नमाडिसि कोट्टुबिडुत्तारे. सात्विकसुखदिन्द जीवन आगुत्ते. गुर्वनुग्रहदिन्दलू पाप होगि, पुण्य देहदल्लि तुम्बि, आरोग्यादिगळु हेच्चि, अत्यल्पप्रयत्नदिन्द सुखजीवनोपायादिगळु दोरकुववु. इन्नु आरोग्यवू हरिकथाश्रवणदिन्द अनायासेन सिद्धिसुत्ते ।)

नन्दिग्रामं समासाद्य हरिं संस्मार्य तज्जनान् ।

नीरोगानकरोदार्यो रहो नाथमसेवित ।।

एन्दु मणिमञ्जरी इदे. तत्वविचाररतनिगे तडेयलिक्के अशक्यवाद दुःखवु बरुवुदिल्ल. साधने नाशमाडुव कष्टविल्ल एन्दर्थ. गुरुगळु सन्निहितरागिरुवाग अवर ध्यानद छायेयिन्द सिद्धाश्रमदल्लि हेगो हागे सन्ततसुखसौभाग्यगळु साधनकालदल्लू दगुत्तले इरुववु. अदक्के जनकनु हेळिदाने 'कोटिलाभादतुलो लाभो गते (त्व) मयि गमिष्यति'. शास्त्रवन्नु गुरुविनिन्द श्रवणमाडुवुदु अन्थ सर्वोत्तमपुण्यलाभदायक कार्य. आद्दरिन्द लौकिकमङ्गळगळू क्वचित् प्रयत्नविल्लदे (दुःखदन्ते) क्वचिदत्यल्प अनायास (आयास)साध्ययत्नदिन्द यथेष्टवागिये योग्य अधिकारिगे दगुववु. अदक्के गुरुराजरु हेळिदारे. 'ईग निनगेनु कष्ट' अर्थवेनेन्दरे, अवर शिष्यनिगे अवर अप्पणेयिल्लदे अवर सन्निधियल्लि याव देवतेयू दुष्कर्मफलवन्नु कूड कोडुवुदिल्ल. दुरन्नादिगळिन्द, भक्तिन्यूनतेयिन्द, दुःसङ्गक्के वशवागि दूरदल्लिद्दरेने संशयादिगळु, तेजोहानि, द्रव्यहानि, रोगप्राप्ति, सज्जनर द्रोह इवेल्ला काडुत्तवे. प्रायेण मुक्तियोग्यरिगे सत्कर्मगळे हेच्चिरुवुदरिन्द, हरिवायुगळु पुण्यफलगळन्नु बड्डि सेरिसि इद्दक्किन्त अधिकवागिये तत्वविचाररतनिगे दगिसुत्तारेन्दु सिद्धान्त तिळियबेकु.) अद्य ते किं कष्टम् आगतम् स्पष्टं कुरु । स्वेच्छया ते तुभ्यं वक्ष्ये । यदि पृच्छसि तर्हि लोकवार्तां प्रति मां न पृच्छ । इमां तोकबुद्धिं त्यज ।।४९।।

यदि न त्यजसि । (हे प्रिय) । नाकेशसुतवत् = काकरूपवत् लघुतां यासि । 'अयोग्यकथाप्रसङ्गस्तु दुष्टः । तत्परिहारार्थं जलस्पर्शमेव । आचमनादि कृत्वैव वक्ष्यामि' इत्याह – अतस्त्विति ।। अतः परं । कुपथ- स्थितपापिनां = कुपथः मायावाद्यादि मतम्, तस्मिन् आस्थिताश्च ते पापिनश्च ।।५०।।

तेषां प्रसङ्गात् यत्पापं तन्नाशार्थम् अप उपस्पृश्य । सुप्रसङ्गान् । हे विप्रवर्य! ते तुभ्यं (प्रवक्ष्ये) वक्ष्ये ।।५० १/२।।

**विप्रान्तःस्थितसन्तापस्तत्र न प्रज्वरार्तितः ।।५१।।**

**मत्प्रतापश्च तेजोरूपस्य त्वयि काशनात् ।**
**इतः परं तु किं वक्ष्ये वक्ष्ये परमपूरुषम् ।।५२।।**

(अन्वयः) (हे विप्रवर्य!) विप्रान्तःस्थितसन्तापः तत्र न प्रज्वरार्दितः (किन्तु) तेजोरूपस्य त्वयि मत्प्रतापाच्च काशनात् ।। इतःपरं तु किं वक्ष्ये? परमपूरुषं वक्ष्ये ।।

(व्या) विप्रान्तःस्थितसन्तापः विप्रस्य अस्य अन्तःस्थितः सन्तापः । न प्रज्वरार्जितः

= ज्वरेण आर्जितः सम्पादितः न भवति ।।५१।। (ननु भवत्प्रवचनोपदेशादीनां बहुफलप्रदत्वे कथमयं वृद्धविप्रः तव प्रियशिष्यः नित्योपदेशपात्रभूतः ज्वरग्रस्तो वर्तते इत्यत आह – विप्रेति ।। व्याख्यानं पूर्ववत् । 'न प्रज्वरार्दितः' इति वृं.पाठे, प्रज्वरार्दितत्वप्रयुक्तः सन्तापो न भवति इत्यर्थः) ।।५१।। **किन्तु त्वयि काशनात्** = प्रकाशनात् । **मत्प्रतापाच्च** = मम यः प्रतापः वर्षाशनम्, तस्मादेव तद्दानाभावादेव सन्ताप इति विद्धि ।।५१ १/२।। (किन्तु मत्प्रतापः मम पराक्रमः प्रकाशस्वरूपेण स्वप्नकाले तत्पुरतः अर्जुनपुरतः कृष्ण इव विजृम्भणम् । तेन च तेजोरूपस्य हरेः मम च तेजोरूपस्य त्वयि प्रकाशनात् । विप्रे अप्रकाशनाच्च इति यावत् । एवं कारणद्वयेन सन्तापः इत्यर्थः ।।) **इतःपरं तु किं वक्ष्ये?** वद । यदि पृच्छसि, तर्हि **परमपूरुषं** श्रीहयवदनमेव (पूर्वप्रसङ्गानुसारेण) वक्ष्ये ।।५२।।

**शक्ष्ये च वैष्णवद्रोहं न शक्ष्ये वान्यतः कृतम् ।**
**हरिर्वेत्ति गुरुर्वेत्ति हरो वेत्ति गिरेः सुता ।।५३।।**

**धरा वेत्यमराः सर्वे नरो वेत्ति न वाऽधुना ।**
**मनुष्यः पुष्यनक्षत्रे जातः कश्चन तुष्यति ।।५४।।**

**इषुयोगे प्रेष्यभावं स करिष्यति मे सदा ।**

(अन्वयः) वैष्णवद्रोहं च शक्ष्ये । अन्यतः कृतं न शक्ष्ये वा । हरिः वेत्ति, गुरुः वेत्ति, हरः वेत्ति, गिरेःसुता धरा सर्वे अमराः वेत्ति; अधुना नराः वेत्ति न वा, कश्चन पुष्यनक्षत्रे जातः मनुष्यः तुष्यति । (सः) इषुयोगे मे प्रेष्यभावं सदा करिष्यति ।।

**(व्या)** 'ननु मद्भक्ता अपि यदि मां द्रुह्यन्ति । तानपि शिक्षयामीति पूर्वमुक्तं श्रीमद्भिः । तेषां का गतिः?' इत्यत आह – **शक्ष्य इति ।। वैष्णवद्रोहं** = ये वैष्णवाः हरिगुरुभक्ताः प्रारब्धकर्मवशात् यदि मां द्रुह्यन्ति तेषां द्रोहं **शक्ष्ये** = सहामि (सहे) । **अन्यतः** च **कृतं न शक्ष्ये** ।।

'ननु श्रीमतां हृदयम् अस्मादृशैः कथं ज्ञायेत? इत्यत आह – **हरिरिति ।।** हे विप्रवर्य! मम हृदयं **हरिः, गुरुः** = श्रीमध्वाचार्यः, **हरः** = शङ्करः, **गिरेः** = हिमवतः **सुता** पार्वती च

।।५३।।

**धरादेवी । अमराश्च** विदन्ति । **वेत्ती**ति पुनः पुनः वचनं च दाढर्यार्थं । **अधुना** = मनुष्यलोकः न **वेत्ति** । मनुष्येष्वपि **कश्चन पुष्यनक्षत्रे जातः** । रघुप्रवीरतीर्थाः इति शिष्टाः । इमे च भीमनकट्टेमठस्था इति प्रसिद्धम् । मद्धृदयं ज्ञात्वा **तुष्यति ।** भविष्यवचनमेतत् ।।५४।। **स च इषुयोगे** = आश्विनमासस्य योगे = चातुर्मासस्य समाप्तिप्रसङ्गे इत्यर्थः । **मे प्रेष्यभावं** (शिष्यभावं) = शिष्यत्वभावनां । **सदा करिष्यति** ।।५४ १/२।।

(ऐवत्तैदने श्लोकदिन्द ६७रवरेगे ब्रह्मविद्या उपदेशमाडुत्तारेन्दु, फलिसबेकादरे अधिकारविरबेकु. ५३-५४ने श्लोकगळल्लि अधिकार हेळुत्तारे. गुरुराजरु ऋजुगळु, मुक्तियोग्यरल्लि कोपहीनरु, मुक्त्ययोग्यरल्लि स्वाभाविकद्वेषिगळु एन्दु निश्चय तिळियबेकु. वैष्णवरु ननगे द्रोहमाडलि, सहिसि, क्षमिसि, प्रायश्चित्तमाडिसि परिहरिसुत्तेने. आदरे अन्यतः = अन्य वैष्णवाय कृतं द्रोहं न शक्ष्ये एन्दे साहित्यरीतियिन्द अर्थ. गुरुराजर सेवे माडुववरु इतर वैष्णवरन्नु हिंसिसबारदु. विष्णुभक्तियुक्तवागि एन्थ द्रोह माडिदरू शुद्धिमाडुत्तेने. आदरे अन्यतः कृतं विष्णुद्वेषयुक्तवागि माडुव नवविध द्वेष; तारतम्यनाश, सोहं उपासनादि द्रोहवन्नु सहिसुवुदिल्ल. इन्थ ऋजु नानु एम्ब निश्चयविद्दरेने नन्न उपदेश फलिसुत्ते. नानु ऋजुस्थ एम्बल्लि साक्षि बेकल्ला एन्दरे हरि श्वेतद्वीपदल्लि अप्पणे माडिद्दाने. गुरुमध्वरु बल्लरु. ब्रह्मरायरु बल्लरु; हर पार्वती भूदेवि मुन्ताद सर्व अमररू बल्लरु. गन्धर्वाः पण्डितमानिनः एम्बल्लि (७।५१) 'गीर्वाणाः सर्व एव च' एन्दु हेळिद्दारे. अवरेल्लरू बल्लरू. अष्टदिक्पालकरु बल्लरु. कैलासदल्लि नर्तनवागिदे. आ हर बल्ल. पार्वती बल्लळु (३।३३-३६) मनुष्यलोकदल्लि ऋजुत्वनिश्चयवुळ्ळ अधिकारिगळु कम्मि. यावनादरू पुष्यादि शुभनक्षत्रदल्लि पूर्वपुण्यदिन्द विप्रपरमगुरु, विठ्ठलादिगळन्ते हुट्टिदरे इषु योगे प्राप्ते सति, भक्तियोगवु बरलागि आ गुरुराजर भक्तराद पुण्यवन्तराद मङ्गळात्मर सङ्ग सिक्कि, नन्न दासनागुत्ताने. आग अवनू 'हरिः सर्वोत्तमः' इत्यादि नन्न उपदेशक्के अधिकारियागुत्ताने. आ उपदेश 'अनेजदेकं' इत्यादि ईशावास्यद ब्रह्मस्वरूपद वर्णनेयन्ते सिद्धिप्रदवाददु. मध्वसिद्धान्तसारवे अदु. १०ने स्कन्ध भागवत, गीतागळ सङ्गविद्ये. बृहदारण्यक उपनिषत्तु, तैत्तिरीयादिगळु अदरल्लि अडकवागिवे. मन्त्र रूप श्लोकगळु, ऋजुत्वनिर्णय होन्दिद गुरुराजर दास्यभाववुळ्ळ शिष्यरु अधिकारिगळु. हीगे ई एरडुवरे श्लोकगळ अवतारिके तिळियबेकु.)

(अस्य श्लोकत्रयस्य एवं वक्ष्यमाणरीत्या अवतारिका ज्ञेया । 'हरिः सर्वोत्तमो नित्यं' इत्यादिना द्वादशश्लोकै सच्छास्त्रसारभूतं ब्रह्मस्वरूपवर्णनं करोति । सा ब्रह्मविद्या अधिकारि एव उपतिष्ठति । यथा 'अनेजदेकं' इत्यादिनोक्तं ईशावास्योपनिषन्मन्त्रं । तत्र यथा 'ईशावास्यमिदं सर्वं' इत्यादि श्लोकाभ्यां तद्विद्यायाः अधिकारो निरूपितः । एवं अत्रापि २ १/२ श्लोकैः अधिकारिणि अवश्यकगुरुणा निरूप्यन्ते । अत्र वक्ष्यमाणपरमपुरुषविद्यायाः निर्णीतवादिराज-

ऋजुत्वज्ञानी । तस्मिन् शरणागतः भक्तः शमदमादिसम्पन्नः यथा हयग्रीवमुनिः । यथा वा रघुप्रवीरतीर्थाः । यथा विप्रपरमगुरुर्वा । अधिकारी । केन लिङ्गेन 'वादिराजगुरुः ऋजुः' इत्यवसीयते इत्यत आह – **शक्ष्य इति ।। 'नियमेन मुक्तियोग्येषु कोपराहित्यं । नियमेन मुक्त्ययोग्येषु प्रीतिराहित्यं'** इति द्वे ऋजूनां लिङ्गे । 'यथा भीमसेने मय्यपि गुणद्वयं सदा अस्ति' इति वदति । शक्ष्ये वैष्णवद्रोहम् । अन्यतः अवैष्णवैः कृतं द्रोहं नैव शक्ष्ये ।।५२ १/२।। अत्र प्रमाणं किम् इत्युक्ते अस्याम् आख्यायिकायां उक्तरीत्या हरिविरिञ्चिहरादिज्ञानिप्रत्यक्षं प्रमाणं इति भावेन आह – **हरिर्वेत्तीति ।। हरिः** = दशावताररूपी धन्वन्तरिः, हंसः, हयग्रीवः, सत्य- लोकस्थः शिंशुमारः इति तत्र तत्र ग्रन्थे पूर्वं प्रदर्शितः । **गुरुः** = सत्यलोकस्थब्रह्मा, सोदर्यपदेन वर्णितः श्रीमन्मध्वाचार्यः । **हरः** = यो गुरुराजं आहूय पूजां कृतवान्, कैलासे नर्तनकाले स्थितवांश्च । पार्वति या पैलेन संवादानन्तरं गुरुराजवृन्दावनस्य दीपाराधनाय अनुमतिं ददौ ।।५३।। **धरा वेत्ति** या त्रिविक्रमप्रतिष्ठा-धवळगङ्गानिर्माण-अरसप्पनायकोद्धारादिगुरुराजकार्याणि ददर्श । **अमराः** सर्वे (६।५१) 'गीर्वाणाः सर्व एव च' इत्युक्तरीत्या अष्टदिक्पालरूपेण च देवसभायां च गुरुराजमपूजयन् । **नरो वेत्ति न वा** इत्यनेन व्यवस्थितविकल्पः 'मानुषं च स्वाध्यायप्रवचने च' इति देवधर्मत्वात् । मदनुग्रहीतवेदवेद्यवेदनिधिरादय एव जानन्ति । नान्ये । मद्वृन्दावनानन्तरं ये आख्याननिपुणाः वृन्दावनाचार्यादयः, वेदवेद्योपदिष्टा वा । ते एव जानन्ति, अन्ये न वा वै नैव जानन्ति । तर्हि भूलोके त्वदुपासकाः विरळाः किं इत्यत आह – **मनुष्यः पुष्यनक्षत्रे इति ।।** कश्चन = यथा विप्रपरमगुरुः, यथा वा विठ्ठलः, यथा रघुप्रवीरतीर्थाः, पुष्यनक्षत्रसञ्जाताः द्वेषादिरहिताः प्रायेण । अत एव इदमुपलक्षणम् । शुभनक्षत्रसञ्जाताः पूर्वपुण्यप्रचयवन्तः । **इषुयोगे** = आश्विनमासयोगे उपलक्षणया मद्भक्तयुक्तमङ्गळात्मनां संयोगे प्राप्ते सति । मयि दासाः भवन्ति । ते एव मदाख्यानग्रन्थस्य अधिकारिणः इति भावः । **प्रेष्यभावं स करिष्यति मे सदा** । मद्भक्तिं प्राप्य, यथा राजदूतः राजविजयवार्तां राजभक्तानां वदन्ति, तथा मदाख्यानं शुभजनेषु विस्तारयति । सः मद्भक्तः । स एव मुख्याधिकारी मम उपदेशस्य इति यावत् । ननु कोऽयं उपदेशः । तमेवाह – **हरिरिति ।।**)

**हरिः सर्वोत्तमो नित्यं गुरुद्वारा प्रसादकृत् ।।५५।।**

**शिरसा धार्यतेऽस्याऽज्ञा विरिञ्चहरपूर्वकैः ।**
**करोति सृष्टिं खलु लीलयैव हरत्यजस्रं सलिले स शेते।।**

**धरत्यमोघं खलु पालयंस्तत्सरत्यजस्रं खलु भक्तपालः ।।५७।।**

(अन्वयः) हरिः नित्यं सर्वोत्तमः गुरुद्वारा (नित्यं) प्रसादकृत् । विरिञ्चहरपूर्वकैः अस्याः अज्ञा शिरसा धार्यते । सः सृष्टिं लीलया एव करोति, हरति च; अजस्रं सलिले शेते । अमोघं धरति, तत् पालयन् (सन्) अजस्रं सरति खलु । (सः) भक्तपालः (खलु) ।।

(व्या) 'सुप्रसन्नांस्तु वक्ष्ये' (२२।५१) 'वक्ष्ये परमपूरुषं' (२२।५२) इति चोक्तम् । तत् स्मारयन्निव आह – **हरिरिति** ।। **'सर्वोत्तमो हरिः गुरुद्वारा प्रसादकृत्** । अतो मां भज' इत्यर्थः । (गुरुद्वारा' एम्ब ई प्रमेयक्के म.भा.ता.नि. ९।१०४ साधकवागिदे. 'गुर्वादेशानुसारेण मया आदिष्टा च सद्गतिः' एन्दु रामवाक्य ब्रह्मदेवरिगे नडेदिदे.) ।।५५।।

**अस्य** हरेः **आज्ञा विरिञ्चहरपूर्वकैः** = विरिञ्चश्च हरश्च विरिञ्चहरौ विरिञ्चहरौ पूर्वकौ मुख्यौ येषां तैः । **शिरसा धार्यते** (भीषास्माद् वातः पवते इत्यादिश्रुतेः) स एव तान् निमित्तीकृत्य, **लीलयैव सृष्टिं करोति, हरति च** । **अजस्रं** = नित्यम् । ततश्च **सलिले** = प्रळयकालीनरमारूपसलिले **शेते** ।।५६।।

**अमोघम्** अव्यर्थं यथा भवति तथा (प्रेर्यजीवानां स्वरूपयोग्यताव्यञ्जकतया तेषां अनादिकर्मानुसारेण प्रेरणया तैः चेष्टां कारयन्) **धरति** धारयति । तच्च सृष्टं जगत् **पालयन् सरति** । 'स्वभावस्तु प्रवर्तते' इति गीतोक्त्या स्वातन्त्र्येण **सरति** = चलति चालयति च । एवं सृष्ट्याद्यष्टकर्तृत्वस्य प्रयोजनमस्ति वा तस्येत्यत आह – **खल्विति** ।। 'उत्तरं दत्वा सान्त्वयामि' इत्यर्थे खलु इत्यव्ययः ।

**''खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने ।**
**वीप्सामाननिषेधेषु पूरणे पदवाक्ययोः ।।''**

इति मेदिनी । स च **भक्तपालः** । (दुर्जनानां तमःप्रापकत्वेऽपि योग्यसात्विकस्वभावाना-मेव स्वरूपाविर्भावं प्रापयित्वा, नित्यानन्दव्यञ्जकः) 'भक्तपालनमेव तत्स्वभावः' इत्यर्थः ।।५७।।

**ब्रह्मन् ब्रह्मणि सन्तिष्ठन् सृष्टिं चास्य करोत्यहो ।**
**दध्रे स रुद्रदेहस्थः कोपं तापहराय च ।।५८।।**

**जडाज्जडमिदं चक्रे दृढाद्दृढमसौ हरिः ।**
**निबिडान्निबिडं भस्म वडवाद्वडवाग्निना ।।५९।।**

**विष्णुर्जिष्णुः स्वयं चास्य करोति जगतां स्थितिम् ।**
**पूष्णोऽन्तस्थः स्वयं कृष्णः स्वतेजोभिः प्रकाशकः ।।६०।।**

(अन्वयः) हे ब्रह्मन्! (सः) ब्रह्मणि सन्तिष्ठन् अस्य सृष्टिं करोति । अहो । सः रुद्रदेहस्थः (सन्) तापहराय कोपं च दध्रे ।। असौ हरिः इदं जडं (ब्रह्माण्डं) जदात् चक्रे । दृढात् दृढम्, निबिडात् निबिडं (च), वडवात् वडवाग्निना भस्म चक्रे ।।

(व्या) ननु सृष्ट्यादिप्रकारः कः इत्यत आह – **ब्रह्मन्निति** ।। **हे ब्रह्मन्!** स च भगवान् **ब्रह्मणि** विरिञ्चौ **सन्तिष्ठन्**, **अस्य** जगतः **सृष्टिं करोति** । "**अहो**" इत्यनेन 'स्वात्मन्यपि तिष्ठन् करोति' इत्याश्चर्यं सूचयति । **स** एव **रुद्रदेहस्थः कोपं दध्रे** = धरतीत्यर्थः । **तापहराय** ('श्रमापनुतये' - म.भा.ता.नि. इत्युक्तरीत्या) = 'सत्सन्तापहरणाय संहरति' इत्यर्थः ।।५८।।

ननु 'पुरुष एवेदं सर्वं' इत्युक्त्या केचन "ब्रह्मणः परिणाम एव जगत्" इति वदन्ति । तन्न इत्याह – **जडादिति** ।। **इदं** = जडब्रह्माण्डं **जडात्** = अचेतनरूपप्रकृतेः सकाशात् चक्रे । तत्रापि **दृढात् दृढं निबिडाच्च निबिडं** निबिडात् नवावरणस्थ पृथिव्यादेः निबिडं ब्रह्माण्डस्थसमुद्रादिकमित्यर्थः । **'चक्रे'** इत्यन्वयः । **वडवात्** = ब्राह्मणस्त्रियाः । वडवाशब्दस्य स्त्रीत्वात् अत्र पुंलिङ्गत्वेन ग्रहणम् आर्षम् । **'वडवाद्विजयोषिति' इति मेदिनी** । जातेन । **वडवाग्निना** अस्य जगतः भस्म च चक्रे । करोति ।।५९।।

किं बहुना? **पूष्णः** = सूर्यस्य **अन्तःस्थः कृष्णः स्वयं स्वतेजः** स्वकीयं तेजः प्रति **अभि** सम्यक् **प्रकाशकः** । 'नारायणः सरसिजासनसन्निविष्टः' इत्युक्तेः ।। ('तमेव भान्तमनुभाति सर्वं । तस्य भासा सर्वमिदं विभाति' इति श्रुत्या 'स्वतेजोभिः प्रकाशकः' इत्यर्थः)

**एवं मोक्षं स्वपक्षस्य मुमुक्षोः कुक्षिगस्य च ।**
**स पक्षिवाहनः कर्तुं दक्षस्त्र्यक्षोऽपि न क्षमः ।।६१।।**

**तत्पादं क्षाळयित्वाऽऽदौ स्वपदं प्राप्तवान् विधिः ।**
**तत्तीर्थं शिरसा धृत्वा शूली कैलासमाप च ।।६२।।**

(अन्वयः) एवं स्वपक्षस्य मुमुक्षोः कुक्षिगस्य मुमुक्षोः मोक्षं कर्तुं सः पक्षिवाहनः दक्षः त्र्यक्षः अपि न क्षमः । आदौ विधिः तत्पादं क्षाळयित्वा स्वपदं प्राप्तवान् । शूली तत्तीर्थं शिरसा धृत्वा कैलासमाप च ।।

(व्या) हे हयग्रीवकर्मन्दिन्! **एवं च कुक्षिगस्य** = स्वपक्षस्य मुमुक्षोः = जीवसमुदायस्य **मोक्षं कर्तुं सः पक्षिवाहनः** = गरुडवाहनः **(दक्षः =)** क्षमः समर्थः । ननु 'एको रुद्रो न द्वितीयो अवतस्थे' इत्यादिना रुद्रस्यैव सर्वं सृष्ट्यादिकं नान्यस्य' इत्यतः; षण्मुखं प्रति – 'अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दनः' इति तद्वचनमेवाधिकृत्य रुद्रस्य मोक्षादिदत्वं न सम्भवति इत्याह – **त्र्यक्षोपीति ।। त्र्यक्षः** = शङ्करः अपि **न क्षमः** न समर्थः । **'अपि'**शब्देन ब्रह्मणोऽ- प्यसामर्थ्यं सूचयति ।।६१।।

तदेवोपपादयति – **तत्पादमिति ।। आदौ विधिः** = ब्रह्मा **तत्पादं क्षालयित्वा** तत्पूजया च **स्वपदं प्राप्तवान् ।** (इदं साहित्यमुद्रया उक्तमिति ज्ञातव्यम् । यथा रुग्मिणीशविजये १।१७ 'यदा स पद्मासनसंस्थितो अलं' इत्यादिना ब्रह्मादीनां पद्मासनादिनामप्राप्तिः कथिता । तथा । चतुर्मुखादीनां पूर्वकल्पीयसाधनेनैव तत्तत्पदप्राप्तिः । पादप्रक्षालनादिकं सेवकत्वज्ञापकम् । अग्रे अप्येवमेव ।।) ततश्च **(तत्तीर्थं)** तत्क्षालनोदकसहितं तत्पादजातगङ्गाख्यतीर्थं **शूली** शङ्करः **शिरसा धृत्वा कैलासं आप च** निश्चयः ।। (अतिशयोक्तिरलङ्कारः । वस्तुतस्तु आनन्दोन्नाहार्थं शिवादिदेवसमुदायः नित्यं सेवकरूपेण भयसहितभक्त्या वर्तते इति भावः)[१] ।।६२।।

**शेषस्तच्छयनं भूत्वा ह्यशेषां वहते भुवम् ।**
**स्वशेषपदवीं याति स रोषं च जहाविह ।।६३।।**

**वाहनो वैनतेयोऽभूत्तेन पुण्येन मानव ।**

---

(१) (ब्रह्म, रुद्र, शेष, गरुडादिगळु जन्मान्तरदल्लि अनन्तविधवाद तपस्सु माडि तम्म तम्म पदविगळन्नु ई जन्मदल्लि सम्पादिसि, पदवी बन्दमेलू सेवकभाववन्नु बिडदे, अधिकवाद, पूर्वापेक्षया उद्रिक्तवाद भक्तियिन्द पादप्रक्षालन, पादोदकधारणे, शयनवागोण, वाहनवागोण इत्यादि सेवागळन्नु आनन्दोन्नाहार्थवागि श्रीहरिय पूर्णप्रसादसंपादनार्थवागियू माडुत्तले इरुत्तारे एन्दु भाव.)

**दानवान्तकनेत्राग्रे सर्वत्र वसतेऽनिशम् ।।६४।।**

(अन्वयः) शेषः तु तच्छयं भूत्वा अशेषां भुवं हि वहते । स्वशेषपदवीं याति । इह रोषं च जहौ ।। हे मानव! वैनतेयः वाहनो अभूत् । तेन पुण्येन अनिशं दानवान्तकनेत्राग्रे सर्वत्र वसते ।।

(व्या) **शेषस्तु** । **तच्छयनं भूत्वा** । (तादृशसेवाप्रभावेण) **अशेषां भुवं हि वहते** । तेन च (इयं साहित्योक्तिः । वस्तुतस्तु जन्मान्तरीयबहुतपसा ।) **स्वशेषपदवीं** शेषत्वमित्यर्थः । **याति** प्राप्नेत्यर्थः । स च शेषः **इह** मद्बृन्दावनसमीपे **रोषं च जहौ** तत्याज ।।६३।। (एवमेव) येन च । तस्य **नेत्राग्रे** तत्पुरतः इत्यर्थः । **सर्वत्र अनिशं** वर्तते । **तेन पुण्येन हे मानव! वैनतेयः** = विनतापुत्रो गरुडः । **वाहनः** वहतीति वाहनः **अभूत्**[१] ।।६४।।

(दानवान्तक- नेत्राग्रे अनिशं सर्वत्र वसते = देवालये गरुडगम्भरूपेण वर्तते)

**कृष्णः कण्ठमणिं कृत्वा ब्रह्माणं च गुणार्णवः ।**
**तत्पदं पारमेष्ठ्यं च प्रददौ प्रभुरव्ययः ।।६५।।**

**एवं देवाधिदेवश्च देवानां स्वस्य सेवया ।**
**ददाति पदवीं योग्यां माधवः स दयानिधिः ।।६६।।**

**ममापि पादसेवया ददाति योग्यवैभवम् ।**
**रमापतिः श्रियान्वितो दयान्वितः पदे पदे ।।६७।।**

(अन्वयः) श्रीकृष्णः ब्रह्माणं कण्ठमणिं कृत्वा, प्रभुः अव्ययः गुणार्णवः तत्पदं च प्रददौ ।। एवं स्वस्य सेवया देवाधिदेवः दयानिधिः माधवः देवानां च योग्यां पदवीं ददाति ।। श्रियान्वितः दयान्वितः रमापतिः पादसेवया मम अपि पदे पदे (प्रतिक्षणं) योग्यवैभवं ददाति ।।

(व्या) **श्रीकृष्णः ब्रह्माणं कण्ठमणिं** कौस्तुभं **कृत्वा**, 'कौस्तुभस्य ब्रह्मात्मकत्वात्' इत्यर्थः । **गुणार्णवः** गुणपूर्णः **तत्पदं च** = तद्योग्यपदं **पारमेष्ठ्यं प्रभुः** = समर्थः, **अव्ययः** = नाशरहितः **प्रददौ** ।।६५।।

---

(१)

एवं च देवाधिदेवो नारायणः स्वस्य सेवया देवानां योग्यां पदवीं सः दयानिधिः माधवः ददाति ।।६६।।

हे ब्रह्मन् दयान्वितः श्रियान्वितश्च रमापतिः स्वस्य पदे पदे प्रतिक्षणं पादसेवया ममापि (योग्यवैभवं) योग्यपदवीं पारमेष्ठ्याख्यां (वायुपदवीं) ददाति । 'भाविकल्पे' इत्यर्थः ।।

**क्रियापदप्रयोगेऽपि न धातूनां विरोधिता ।**
**दैवे च छान्दसे वाक्ये न दोषायेति सन्मतम् ।।६८।।**

**तन्मतं मन्मतं चैकं विचिन्म तव सन्मतिम् ।**
**चिन्मात्रं तन्मते ब्रह्मास्मन्मते तदनन्तकम् ।।६९।।**

**मतद्वये कथं भाति तव तत्वं सुताहितम् ।**
**हितं वा वद तत्वेन हृदि गूहितमेव ते ।।७०।।**

(अन्वयः) दैवे च छान्दसे वाक्ये क्रियापदप्रयोगे धातूनां विरोधिता अपि न दोषाय इति (तु) सन्मतम् । तन्मतं मन्मतं च एकम् (एव) । तव सन्मतिं विचिन्म । तन्मते ब्रह्म चिन्मात्रम्; अस्मन्मते तत् अनन्तकम् ।। हे सुत! मतद्वये तत्वं तव कथं भाति? अहितं वा हितं तत्वेन वद । ते हृदि गूहितम् एव ।।

(व्या) 'दैवे छान्दसे च वाक्ये, क्रियापदप्रयोगेऽपि धातूनां विरोधिता न दोषायापि न' इति सन्मतम् । (हरिमतम् अथवा ज्ञानिनां मतं) ।।६८।। तन्मतं (पूर्वोक्तदैव, छान्दस, सतां मतं) मन्मतं चैकमेव ।। (एवं स्थितेः) तव सन्मतिं च विचिन्म = विचारयामः । (हे हयग्रीवयते! तव सत्तत्वनिर्णयं विचारयामः । तत्र प्रश्नं करोमीति यावत्) । तन्मते (बुद्धिस्थ अन्यमते) = मायावादिमते ब्रह्म चिन्मात्रं (निर्विशेषज्ञानरूपं); अस्मन्मते = मध्वमते तत् ब्रह्म अनन्तकम् = अनन्तानि कानि सुखानि यस्य तत् अनन्तकं (सविशेषा-नन्तसुखानुभवितृअनन्तशीर्षाद्यवयवोपेतम्) ।

'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।
मयूरेऽग्नौ च पुंसि स्यात् सुखशीर्षजलेषु कम्'

इति मेदिनी ।।६९।। **हे सुत! मतद्वये तत्वं तव कथं भाति? अहितं** मायावादितत्वं वा **हितं** मध्वतत्वं वा **तत्वेन** सत्येन **वद । ते हृदि तत्** तत्वं भगवत्तत्वं **गूहितमेव** = गुप्त- मेव ।।

(क्रियापदप्रयोगेपि क्रियापदप्रयोगविषये । वर्तमानकालिकरूपप्रयोगस्थळे लिट्प्रयोगः इत्यादिप्रयोगसद्भावेपि । गत्यर्थकधातोः ज्ञानार्थकतया प्रयोगः इत्यादिरूपेण अर्थव्यत्यासेन धातूनां प्रयोगेपि । तद्विषये विरोधिता व्याकरणविरोधः न दोषः । छान्दसे वेदे । दैवे च । देवताकर्तृकप्रबन्धेषु च तादृशप्रयोगानां भूषणत्वात् । अर्थविशेषसूचकत्वात् तेषाम् । क्रियावाचित्वमाख्यातुं एकैकोर्थः प्रदर्श्यते । प्रयोगतो अवगन्तव्याः 'अनेकार्था हि धातवः' इति च । 'बभूवेति सदेव सोम्येदमग्र आसीत्' इतिवदनानित्वार्थे; बृ.उ. । 'सुप् तिङन्त उपग्रहलिङ्गनराणां कालहलच् स्वरकर्तृयुजां च । व्यत्ययमिच्छतिशास्त्रकृदेषां सोपि च सिद्ध्यति बाहुलकेन' इति महाव्याकरणे । 'व्यत्ययो भेदस्वातन्त्र्यकरणेषु' मुन्ताद प्रमाणगळिवे.)

**ब्रूमो वयं तु भद्रं ते शृणु पुत्रान्यदुर्मतम् ।**
**व्यर्थं गतं बृहद्बीजबलीवर्दवदेव तत् ।।७१।।**

**अतो मया कृतो योगो रूढिर्वा रूढिमत्पदे ।**
**विद्धद्रूढ्यात्मके यद्वत्समहारूढमार्यज[१] ।।७२।।**

**तस्मात्कवेः प्रयोगे मे त्वप्रयोग इति प्रिय ।**
**मा प्रतीक्षां प्रभुत्वेन प्रकुरु प्रार्थये हरिम् ।।७३।।**

**(अन्वयः) वयं तु ब्रूमः । हे पुत्र! ते भद्रं (अस्तु) । श्रुणु । अन्य दुर्मतं तु बृहद्बीजबलीवर्दवत् एव व्यर्थं गतम् ।। हे आर्यज! अतः मया कृतः योगः रूढिर्वा विद्धद्रूढ्यात्मके रूढिमत्पदे यद्वत् (तद्वत्) समहारूढम् (विद्धि) ।। हे प्रिय! तस्मात् 'कवेः मे प्रयोगे अप्रयोगः' इति ईक्षां प्रति मा कुरु । प्रभुत्वेन प्रकुरु । हरिं प्रार्थये ।।**

---

(१) (रूढमत्पद' एन्दु वृं.पाठविदे. प्रिंट् हागे इदे. व्याख्यान ई पाठक्के साधकवागिल्ल. हयग्रीवकर्मन्दिगे रूढमत्पद एम्ब सम्बुद्धि हेगे अन्वयिसुत्ते. आकरवन्नु नोडि प्रकरण वेदनिधिगळदे विचारिसबेकु. स्वापाठ 'रूढिमत्पदे' एन्दिदे.)

(व्या) वयं तु = श्रीमदाचार्यादयः (ब्रूमः) हे पुत्र! ते भद्रमस्तु । शृणु । अन्यदुर्मतं तु बृहद्बीजबलीवर्दवदेव = बृहद्बीजः बृहत् बीजं वृषणात्मकं यस्य सचासौ बलीवर्दः, तद्वदेव । कोऽर्थः? 'अस्फुटितवृषभस्य कृषि कर्मणि निरुपयुक्तत्वात्' इत्यर्थः । व्यर्थं गतं (पुरुषार्थाप्रदं विरुद्धफलकं च) ।।७१।। अतः मया कृतः योगः रूढिर्वा विद्धद्रूढ्यात्मके 'रूढिमत्पदे' (रूढिसहितघटादिपदे) यद्वत् । हे आर्यज! समहारूढं = महारूढेन सहितं, विद्धि ।।७२।। ('रूढमत्पद' एम्ब पाठविद्दरू हे रूढमत्पद! हे आर्यज! वेदनिधे! मयाकृतः योगः रूढिर्वा । विद्धद्रूढ्यात्मके यद्वत् । सः महारूढं महायोगविद्धद्रूढ्या सहितं वैदिकपदं । ज्ञानिषु रूढियुक्तं सः महारूढं इति वेदः प्रमाणं इतिवत्) ।

अतः(तस्मात्) मे कवेः प्रयोगे तु अप्रयोगः इति । हे प्रिय! ईक्षां प्रति (प्रतीक्षां विरुद्धमतिं) मा कुरु । किन्तु प्रभुत्वेन = 'अयं गुरुः महाप्रभुः सर्वज्ञः' इति बुद्ध्या, प्रकुरु = प्रकर्षेण उत्तमत्वेन कुरु (प्र+ईक्षां = प्रेक्षां कुरु । न तु प्रति+ईक्षां), 'मत्कृतौ कृताः प्रयोगाः सर्वे सुप्रयोगा एव' इति जानीहि । तदर्थं हरिं प्रार्थये ।।७३।। ह.क.प्र.सं.।।

### १२. विप्रप्रकरणम्।। श्लोकौ (७४-७५)

(व्या) 'ब्रूमो वयम्' इत्यारभ्य 'कारय प्राङ्ग्येरितम्' इत्यन्तं विप्रश्रोतृकं द्वादशं प्रकरणम् ।।

**ब्रूमो वयं तु भद्रं ते शृणु पुत्रान्यदुर्मतम् ।**
**व्यर्थं गतं बृहद्बीजबलीवर्दवदेव तत् ।।७४।।**

**इत्येकं श्लोकमुख्यं मे त्यक्तवानसि विप्रक ।**
**आकरस्थं लेखनं च कारय प्राङ्ग्येरितम् ।।७५।।**

(अन्वयः) हे विप्रक! 'ब्रूमो वयं तु भद्रं ते शृणु पुत्रान्यदुर्मतम् । व्यर्थं गतं बृहद्बीजबलीवर्दवदेव तत्' इत्येकं श्लोकमुख्यं त्यक्तवान् असि । प्राक् मया ईरितं तत् आकरस्थं लेखनं च कारय ।।

(व्या) ब्रूमो वयमिति ।। हे विप्रक! 'ब्रूमो वयम्' इत्येकं श्लोकमुख्यं त्यक्तवान् असि । प्राङ्ग्येरितम् (२२।७१) तम् आकरस्थं यथा भवति तथा । वेदनिधिना कारय

।।७४-७५।। विप्रश्रोतृकप्रकरणं सम्पूर्णम् ।।

१३. लक्ष्मीपतिप्रकरणम्।। श्लोकाः (७६ऽ८५)

(व्या) **'बालिबाणीय'** इत्यारभ्य अध्यायान्तं लक्ष्मीपतिश्रोतृकं त्रयोदशं प्रकरणम् ।

**वाणिवालीयरामश्च मम लीलास्पदे द्विजे ।**
**कालाकालाऽगतां ज्ञात्वा गाळीं तां दाम्बळाधमात्[१] ।।**

**निवारयामास तदा प्रतिगाळीप्रदानतः ।**
**स वरं वरयामास मत्प्रसादेन पालितम् ।।७७।।**

**द्विजगाळीत्याजनेन भजतो भुजगेश्वरम् ।**
**सुजनस्यात्मजस्येह सौजन्यं जनयत्यहो ।।७८।।**

(अन्वयः) मम लीलास्पदे द्विजे दाम्बळाधमात् कालाकालाऽगतां गाळीं च ज्ञात्वा वाणिवालीयरामः तदा तां प्रतिगाळीप्रदानतः निवारयामास । मत् प्रसादेन पालितं वरं वरयामास ।। द्विजगाळीत्याजनेन भुजगेश्वरं मां भजतः सुजनस्य आत्मजस्य (तस्य) इह सौजन्यं जनयति । अहो (आश्चर्यम्) ।

(व्या) **बाणिबालीयेति** ।। हे लक्ष्मीपते! **मम लीलास्पदे** = लीलायाः माहात्म्यरूप-लीलायाः आस्पदे स्थानभूते अस्मिन् **द्विजे** बाणिबालीय इत्युपपद रामस्य[२] । (''दाम्बलाधमः

---

(१) (वाणिवालीय रामश्च' एन्दु प्रिं. ई व्याख्यानकाररु 'बाणि बालीय रामश्च' एन्दु पाठ इट्टुकोण्डु विरुद्धव्याख्यान माडिद्दारे. वालावालीयो रामश्च एन्दे वृ.पाठ) हागे कालाकालागतां एन्दु वृं. कालाकालगतां एन्दु स्वा. हीगे पाठविचार भी.नोडि निर्णयिसबेकु. इन्नु 'रामस्य' एम्ब पाठव्यत्यासदिन्द अर्थव्यत्यासवागिरुवुदु मुन्दे निरूपितवागिदे.)

(२) (रामस्य एम्ब पाठवु अर्थव्यत्यासक्के कारणवागिदे. गुरुराजरु दाम्बलाधमनिन्द मणिवालरामनु हेळुत्तिरुव निन्दोक्तिगळन्नु तिळिदुकोण्डु, आ रामनन्नु अवनिगे नरकवागुत्तेम्ब प्रतिनिन्दोक्तिगळिन्द भय पडिसिदरु. भीतनाद रामनु शरणागतनागि गुरुराजर आश्रितत्व, पालितत्व भिक्षेयन्नु बेडिदनेन्दु ई व्याख्यानदल्लि हेळल्पट्टिदे. गुरुराजरु दाम्बलस्थपापियिन्द हेगे मणिवालरामन निन्दोक्तियन्नु तिळिदरु अवन देसेयिन्द आ निन्दोक्तिगळन्नु तिळियलु एनु अगत्यवित्तु मत्तु मणिवालनन्नु प्रतिनिन्दोक्तिगळिन्द स्वप्रदल्लि भयपडिसिदरे प्रकारान्तरवे इत्यादि प्रश्नेगळिगे ई व्याख्यानदल्लि समाधानोक्तियिल्ल. गुरुराजर सर्वज्ञत्वदल्ले

काले अकाले च गुरुराजलीलास्पदं विप्रं गालीप्रदानेन तोषयामास । दिने दिने क्रियमाणं तं अन्यायनिन्दनकार्यं ज्ञात्वा, मणिवालरामः विप्रपक्षं परिगृह्य प्रतिगालीदानेन दाम्बलस्थलक्ष्मीनारायणं भृशं भर्त्स्यर्ययामास । भीतः लक्ष्मीनारायणः निन्दाकार्यं त्यक्त्वा, यत्र कुत्रापि गतवान् । तदनन्तरं स्वकृतसेवायै वंशोद्धारं आत्मरक्षणं च प्रार्थयन् मणिवालरामः वृन्दावनस्थगुरुं शरणं प्राप्तवान् । लेभे च तद्वरं इत्यर्थः) **कालाकालगतां** काले अकाले च आगतां प्राप्तां **गाळीं** 'स्वकृत्यैवायं वक्ति । न गुरुराजोक्तम्' इति गाळीम् । **दाम्बलाधमात्** दाम्बलग्रामस्थात् लक्ष्मीनारायणात् **ज्ञात्वा** ।।७८।। अहं **तदा** प्रतिगालीदानतः 'श्वपचैर्नीयते मार्गे' इत्यादिपूर्वोक्त रूप**प्रतिगालीप्रदानतः** निवारयामास । तदा **स च** रामनामा विप्रः **मत्प्रसादेन पालितं** 'पालयामि त्वाम्' इत्यादि वचनात्मकं (वचनोक्तं) **वरं मत्तः** वरयामास ।।७७।। ततश्च **द्विजगालीत्याजनेन** द्विजे या गाली, तस्याः **त्याजनेन भुजगेश्वरं मां भजतः सुजनस्य आत्मजस्य** तस्य **इह सौजन्यं जनयति । अहो** हरिमाहात्म्यम् ।। (ततश्च । एवं विप्ररक्षणेन च द्विजगालीत्याजनेन दाम्बलस्थलक्ष्मीनारायणप्रयुक्तगालीनां त्याजनेन मणिवाल- रामः भुजगेश्वरं मां भजतः सुजनस्य आत्मजस्य यत्सौजन्यं तादृशसौजन्यं जनयामास । अहो आश्चर्यं । अल्पसेवया महाफलप्राप्तिरस्य रामस्य ।।[१])

**वादिराज्याख्यभट्टाद्या मत्कृतेर्लेखनादपि ।**
**मन्नन्दनाग्रे वक्तृत्वादच्युतस्यार्कमण्डले ।।७९।।**

**ध्यानाद् यत्पुण्यमाप्नोषि तद्द्वयं न त्यज द्विज ।**
**पश्यामि त्वयि विश्वाससंस्थितिं च सुते यथा ।।८०।।**

(अन्वयः) **वादिराजभट्टाद्या मत्कृतेः लेखनात्, मम नन्दनाग्रे वक्तृत्वात् (च) अर्कमण्डले अच्युतस्य ध्यानात् यत्पुण्यम् आप्नोषि । हे द्विज! तद्द्वयं न त्यज ।**

---

शङ्के बरुत्ते. आदरिन्द मणिवालरामश्च एन्दु पाठवन्निट्टुकोळ्ळबेकु. अदु प्रिं. लि. वृं.गळल्लिदे. अदर प्रकार व्याख्यानवु हेगेन्दरे, )

(१) हीगे दाम्बलनेम्ब द्विजन निन्दोक्तिगळन्नु स्वकीयनिन्दोक्तिगळिन्द परिहारमाडि विप्रनन्नु रक्षिसिदुदरिन्द मणिवालरामनु गुरुराजरिगे प्रियनादनु. हेगे प्रियनादनेन्दरे शेषोत्तमराद अवरन्नु भजिसुव विधेयनाद पुत्रनु अवनिगिद्दरे हेगे प्रियनागुत्तिद्दनो हागे प्रियनागिबिट्टनु एन्दर्थ.

सुते यथा (तथा) विश्वाससंस्थितिं च त्वयि पश्यामि ।।

(व्या) हे लक्ष्मीपते! वादिराजाख्यभट्टाद्याः[१] मत्कृतेर्लेखनात् यत्पुण्यं सम्पादितवन्तः तच्च त्वं मम नन्दनाग्रे मम नन्दनो वेदवेद्यः तस्य अग्रे वक्तृत्वात् च ।।७९।। अर्कमण्डले अच्युतस्य ध्यानात् 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' इत्यादितः पुण्यम् आप्नोषि । अतो हे द्विज! तद्द्वयं न त्यज ।।७९।। यथा सुते वेदवेद्ये तथा त्वयि । मत्कृतिविषये विश्वाससंस्थितिं विश्वासस्य सम्यक् स्थितिं पश्यामि ।।८०।। (अथवा हे वादिराजाख्यभट्ट अद्य इदानीं मत्कृतेर्लेखनात् अपि, अपि च मन्नन्दनाग्रे वेदवेद्यसन्निधाने वृन्दावनाचार्यपुरतः स्वोत्तमानुग्रहार्थमपि समक्षमं । वक्तृत्वात् पारायणात् अच्युतस्य ध्यानात् । मननानन्तरं हरिध्यानात् यत्पुण्यं अर्कमण्डले ध्यानात् यत्पुण्यं । गायत्रीमन्त्रेण सूर्यान्तर्यामि हरिध्यानात् यत्पुण्यं तद् द्वयं पुण्यं त्वं आप्नोषि । हे द्विज! तद्द्वयं न त्यज । कृतिलेखनकार्यं पारायणकार्यं च न त्यज । त्वयि त्वद्धृदये । सुते यथा । यथा पुत्रे तथा । सुते विप्रे । वृन्दावनाचार्ये । विश्वाससंस्थितिं स्थिरविश्वासं स च भावीन्द्रः इति निश्चयं च अहं पश्यामि ।।७९ऽ८० ।। इति वादिराजभट्टवर्णनमेतत् ।।[२])

**अन्यथा त्वद्गृहं चापि कथं विप्रस्य दत्तवान् ।**
**त्वत्प्रीत्याऽपि प्रतापं च तस्मान्मत्प्रीतिमान् भव ।।८१।।**

**अहमध्यायपर्यन्तं मध्यन्दिनरवेरहः ।**
**गृध्रवच्चाग्रतस्तप्ये दुग्धवारिधिगं स्मरन् ।।८२।।**

(अन्वयः) अन्यथा त्वद्गृहम् च अपि विप्रस्य कथं दत्तवान्? प्रतापं च त्वत्प्रीत्या

(१) ('भट्टाद्य' एन्दु वृं. पाठ. सम्बुध्यन्त अन्वितवागिदे. भट्ट+आद्य एन्दु पदविभाग. मुन्दिन ऐदु अथवा मूरु श्लोकगळन्नु वादिराजभट्टप्रकरणवेन्दादरू तिळियबहुदु.)

(२) (श्लोक ७९ऽ८०; ८१ सह वादिराजभट्टरिगे हेच्चु सम्बन्धपट्टिरुवन्ते तोरुत्ते. लक्ष्मीपति भट्टरु आख्यान बरेयुत्तिद्दरु. आदरे वेदवेद्यरल्लिगे होगि पारायण माडुत्तिद्दरेन्दू, वृन्दावनाचार्यरिगे मने कोट्टरेन्दू हेळलु साधकगळिल्ल. वादिराजभट्टरिगे नम्बिके बन्दु कोनेगालदल्लि पदे पदे सोदेगे होगि तपस्सु माडुत्तिद्दरेन्दु तोरुत्ते. अवरु सोदेमठक्के यावुदो मनेयन्नु दान माडिरबहुदु. अवरिगे ब्रह्मलोकप्राप्ति हेळिरुवुदरिन्द अवरु विप्रनल्लि 'इन्द्रत्वनिश्चयवन्नु होन्दिद्दरेन्दु अनुमानसिद्ध. ई श्लोकगळन्नु अवर परवागि माडिदरे बाधकवेनू इल्ल. सम्बुध्यन्तवाद वृं. मूल साधकवागियू इदे. )

अपि (गृहीतवान्) । तस्मात् मत्प्रीतिमान् भव ।। अहम् अध्याय-(अध्यात्म)पर्यन्तम् अहम् अहः मध्यन्दिनरवेः अग्रतः दुग्धवारिधिगं स्मरन् (तस्याग्रतः) गृद्धवच्च तप्ये ।।

(व्या) तत्कथमिति चेत्, तत्राह – **अन्यथेति** ।। **अन्यथा** = विश्वासाभावे । **त्वं** (त्वं एन्दरे लक्ष्मीपतियाद नीनु एन्दु व्याख्यानकारर अर्थ. 'वादिराजभट्टनाद नीनु' एन्दु ७९नेय श्लोकद 'वादिराजाख्यभट्टाद्य' एम्ब पाठदिन्द सूचितवागुत्ते.) । **गृहं चापि विप्रस्य कथं दत्तवान्?** स च **त्वत्प्रीत्यापि प्रतापं** = वर्षाशनं कथं गृहीतवान्? अतः त्वं **मत्प्रीतिमान् भव** ।।८१।। (इति वरं दीयते इति ज्ञातव्यम्)

अहं च **मध्यन्दिनरवेः** । दिनस्य मध्यं मध्यन्दिनम्, तत्स्थस्य रवेः(१) ।। सूर्यस्य अध्यात्मपर्यन्तम्(२) अन्तर्यामितया स्थितं तत्पर्यन्तम् । यद्वा 'अध्यायपर्यन्तम्' इति पाठे पूर्वोक्ताध्याय(ग्रन्थोक्तप्रमेयाणां प्रत्यक्षसिद्धिपर्यन्तं = अधिकलाभस्य भक्तानां प्राप्तिपर्यन्तं) परि-पूर्तिपर्यन्तमित्यर्थः । **दुग्धवारिधिगं** श्रीनारायणं **स्मरन् अग्रतः** स्थित्वा **गृध्रवत्** गृध्रस्तु सूर्याग्रतः स्थातुं समर्थः इत्यर्थः । जटाय्वादिषु दृश्यमानत्वात् । (रहः अथवा अहः) **तप्ये** तपश्चरामि ।।८२।।

(श्वेतद्वीपस्थनारायणने 'वादिराजरागि हुट्टि, मध्वाचार्यर कार्यवन्नु पूर्तिमाडि, देवतेगळ रहस्यकार्यसाधने माडलु' लातव्यरिगे आज्ञापिसि; तानू हयग्रीवरूपदिन्द प्रतिमा अवतारमाडलु ओप्पिद्दाने. गृध्रवु दूरदेशवन्नु काणुत्ते. गुरुराजरु दूरकालवन्नु नोडुत्ता, आख्यानोक्तप्रमेयगळु दर्शनक्के बरुव मुन्दिन कालस्थपदार्थ,

---

(१) (रवेरहः एम्बल्लि रवेः अहः एन्दु पदविभागवो, रवेः रहः एन्दु पदविभागवो एम्बुदन्नु ई व्याख्यानदल्लि सूचिसिल्ल. मत्तु रहः अथवा अहः एम्ब पदवन्नु हिडिदिल्ल. अदक्के व्याख्यानवे इल्ल. रवेः अहः एन्दिट्टुकोण्डरे अहः हगलिनल्लि मध्याह्नपर्यन्त सूर्यमण्डलस्थ हरियन्नु ध्यानिसुत्तिरुत्तेने एन्दर्थ. 'कालाध्वनोरत्यन्तसंयोगे इति द्वितीया एकवचनं च' रवेः+रहः एन्दु इट्टुकोण्डरे रहः एम्बुदु अव्यय. एकान्तदल्लि रहस्यवागि इतररिगे काणिसदन्ते सूर्यस्थहरियन्नु ध्यानिसुत्ता इल्लि हेळिदेल्ला आगुववरेगू वासमाडिकोण्डु तपस्सु माडुत्तेने. गृध्रादिदृष्टान्त कोट्टिरुवुदरिन्द ई कार्यवु ननगे लीले. वेदप्रामाण्य रक्षणेगागि श्रीहरि नाना अवतारकार्यगळन्नु माडुवन्ते ई अध्यायपूर्ति हेळिद सर्वप्रमेयगळू हागेये नडेयुवुदक्कागि नानु सूर्यस्थहरियन्नु ध्यानिसुत्ता इल्ले इरुत्तेने, अदेनू ननगे कष्टविल्ल एन्दु भाव)

(२) (अध्यात्मपर्यन्तं एन्दरे अन्तरार्थवु. आध्यात्मिकार्थवु बाह्यप्रपञ्चदल्लि तत्तदधिकारिगळिगे अनुभवक्के बरुव पर्यन्तवू एन्दर्थ.)

जनरुगळन्नु नोडुत्ता तपस्सु माडुत्तारे एन्दर्थ)

**उपलक्षणमेतच्चाप्युपलक्षितमेव च ।**
**अनेन चोपलक्ष्यस्व ह्युपलस्थलगां कृतिम् ।।८३।।**

**यथा दधि च काकेभ्यो रक्ष्यतामिति वाक्यतः ।**
**दध्युपघातका ग्राह्या ह्याखुभुगादयस्तथा ।।८४।।**

(अन्वयः) एतत् उपलक्षणम् च उपलक्षितमेव । अनेन उपलस्थलगां कृतिं च उपलक्षस्व ।। यथा 'काकेभ्यो दधि रक्ष्यताम्' इति वाक्यतः दध्युपघातकाः आखुभुगादयः ग्राह्या तथा (विद्धि) ।।

(व्या) **एतदुपलक्षणमि**ति विद्धि । (अध्यायपूर्तिपर्यन्तमित्येतदुपलक्षणं इत्यर्थः) (इदु उपलक्षणवु एन्दरे इन्नू अधिककार्यवन्नु माडुत्तेनेन्दु ८३नेय श्लोक प्रवृत्तवागिदे. इल्लि सूक्ष्मप्रमेयवेनेन्दरे 'अहं अध्यायपर्यन्तं । अत्रोक्तसर्वमद्भक्तानां अधि+अय, अयनं तत्पर्यन्तं । वृन्दावनस्थ-अध्यक्षभूत-श्रीहयग्रीवसेवार्थं आगत्य, कृतिपठनसिद्धिप्राप्तिपर्यन्तम् । 'अध्यात्म-पर्यन्तम्' इति पाठे तेषां अधिकआत्मभूतचेतनभूतबिम्बरूपी हरिदर्शनपर्यन्तम् । तेषां कल्याणार्थं मध्याह्नकालीनसूर्यमण्डलस्थहरिं पश्यन् ध्यानं कुर्वन् रहः एकान्ते तपः करोमि । तदेव रहस्यम् । इदमुपलक्षणम् । तेषां तेषां भक्तानां अत्रानुक्तानामपि भक्तानां इतराभीष्टानि च ददामि । पूजार्थं प्रतिमादिकं दापयामि । गुरुयोजनां करोमि । श्रवणादिकं कारयामि । अन्तःकरणशुद्धिं दत्वा स्वकीयेषु स्थित्वा ध्यायामि । एवं संसारादुद्धरामि । एवं उपलस्थलगां कृतिं 'कृतिः मोक्षदायिनी भद्रशिलावत् आश्रयदायिनी' इति दर्शयामि । सूर्यमण्डलस्थवासुदेवं यथा ध्यायामि तत् उपलक्षणं इति वा । तथैव शिलास्थवृन्दावनाख्याने, कृतौ तद्व्याख्याने, बादरायणमूर्तिसमीपे (व्यासमुष्टौ) हयग्रीवादिमूर्तिसमीपे, कृतिपाठकभक्तसमीपे, नारायणं स्मरन् भक्तरक्षणं यथा स्यात् तथा तप्ये । सर्वमेतच्च अनायासेन करोमि ।।) उप समीपं, लक्षयति दर्शयतीति = उपलक्षणं । उपलक्षितमेव च । (अन्यदपि सङ्गृहीतं इत्यर्थः) । अनेन चोप- लक्षणेन **उपलस्थलगां कृतिं** च । कर्तुं योग्यामिति **उपलक्ष्यस्व** जानीहि ।।८३।।

तत्कथम्? इति चेत्, तत्राह – **यथेति ।। यथा 'काकेभ्यो दधि रक्ष्यतां' इति वाक्यतः आखुभुक्** । वि आदयः मार्जारः, विः पक्षी इत्यादयः । **दध्युपघातका ग्राह्याः** तथा

अध्यायपूर्तिकरणवाक्यतः उपलक्षणेन शिलालेखनादयोपि ग्राह्याः ।।८४।।

**तस्मान्मत्तपसा वाऽपि स्वस्य विश्वासतोऽपि वा ।**
**भविष्यति सुषेणाग्र्य मत्कार्यं शेषितं त्रयम् ।।८५।।**

(अन्वयः) तस्मात् हे सुषेणाग्र्य! शेषितं त्रयं मत्कार्यं मत्तपसा वा स्वस्य विश्वासतः अपि वा भविष्यति ।।

(व्या) उपसंहरति – तस्मादिति ।। हे लक्ष्मीपते! तस्मात् मत्तपसा वा अपि । स्वस्य स्वकीयस्य विश्वासतः अपि वा हे सुषेणाग्र्य! त्रयं मत्कार्यं त्वया शेषितम् अवशेषितं अभूत् । तत्कुर्वित्यर्थः ।।८५।। ल.प.प्र.सं.।। (तस्मात् एन्दरे अध्यायपर्यन्तं तप्ये इत्यस्य उपलक्षणत्वात् एन्दर्थ. तादृशतपोयुक्तमत्सन्निधानस्य शिलादिषु वृन्दावने च वेदवेद्यादिषु अस्यां कृतौ युक्तिमल्लिकादीतरग्रन्थेषु मठाधिपतिभूतनन्दनेषु जायमानभाविभक्तेष्वपि विद्यमानत्वात्, अमोघेण मत्सङ्कल्पेणैव अवशेषितं मत्कार्यत्रयं पुनः सङ्कल्पान्तरेण मत्सन्निधानप्रभावेण वा । मठीयस्वामिप्रभृतीनां भक्त्या वा मद्भक्तानां भक्त्युद्रेकेण वा भविष्यति । परिपूर्णं भविष्यति । ॐ तत्सत् ।। इति श्रीः ।। इति श्रीहनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक, वादिराज- गुर्वन्तर्गतश्रीलक्ष्मीहयग्रीवात्मककार्तीकदामोदरात्मकश्रीकृष्णः प्रीयतां । श्रीकृष्णार्पणमस्तु ।। ११।११।१९६७. प्लवङ्गसंवत्सर कार्तिकशुद्धदशमी स्थिरवारे समाप्तिमगमत्ऽ एन्दु श्रीहेच्.एस्.)

(विशेष – पूर्वोक्त कोने श्लोकद व्याख्यानवु मूलक्के विरुद्धवागि काणुत्ते. मूलदल्लि ‘शेषितं त्रयं मत्कार्यं । मत्तपसा वापि । स्वस्य मत्कल्पे मोक्षयोग्यानां समुदायस्य विश्वासतोपि वा भविष्यति’ एन्दु अन्वय स्पष्टवागिदे. यद्यपीदानीं भवता कार्यत्रयं न साकल्येन कृतं । तथापि मत्सङ्कल्पेनैव अवशेषितं तत्कार्यत्रयं कालान्तरे परिपूर्णं भविष्यति । (त्वं अवशेषितं कार्यत्रयं कुरु’ एम्ब विधि ई ८५ने श्लोकदल्लिल्ल. ‘मत्कार्यं भविष्यति’ एन्नुवुदक्कू, ‘मत्कार्यं कुरु’ एन्नुवुदक्कू व्यत्यासविदे. मूलदल्लि ‘तव विश्वासतः’ एन्दिल्ल. ‘कुरु’ एम्ब क्रियापदवू इल्ल.) किञ्च मम कार्यस्य परिसमाप्तौ कारणद्वयमस्ति । प्रथमं मत्तपः । अमोघमेतत् । द्वितीयं मद्ब्रह्मत्वकाले मया सह मोक्षयोग्यभक्तसमुदायस्य विश्वासः । (इतरे भक्ताः कार्यत्रयसमाप्तौ नाधिकृता भवन्तीति सूचितो भवति) । भक्तविश्वासश्च सुदृढः । यथा वृन्दावनाचार्याणां । रघुप्रवीरतीर्थानां वा । द्वयोः कारणयोर्मध्ये एकैकमेव कार्यसमाप्तौ अलं समर्थं । तथापि मिळितमेव ते कारणे कार्यं कुरुतः ।

तस्मात् ताभ्यां कारणाभ्यां मत्कार्यत्रयं निरवशेषेण परिसमाप्तिं गच्छतीति किमु वक्तव्यम् । तस्मात् पाककाले प्राप्ते सति । भाविजनानां अनुग्रहार्थं अवशेषितं मत्कार्यत्रयं सामस्त्येन कृतं भविष्यतीत्यर्थः । तादृशसङ्कल्पानुसारेण सर्वेषां भक्तजनानां अभीष्टानि च सिद्ध्यन्तीति भावः ।। इति सर्वं समञ्जसम् ।।८५।।)

**एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन ।**
**श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशीं यान्तु मां मानवेन्द्राः ।**

(अन्वयः) एतत्सर्वं (उक्तं वक्ष्यमाणं च) विप्रवर्यास्यजेन स्वाप्नपद्येन (रचितं श्रीमद्वृन्दावनाख्यानं) सर्वे (सज्जनाः भक्ताः) गर्वं हित्वा, श्रुत्वा, उर्व्यां (अवतीर्णान्) शर्वगुर्वादि(भागवते 'विद्याकामस्तु गिरिशम्' इत्यादि उक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादि)देवान् च (स्वदर्शनयोग्यदेशकाले) दृष्ट्वा (महात्म्यज्ञानपूर्वक तान् संसेव्य, अनुग्रहं सम्पाद्य, इन्द्रः) मानवेन्द्राः उर्वशीं (इव) मां (मम वृन्दावनं प्रति) यान्तु ।

(व्या) (अधिकारिणाम् इन्द्रत्वेन उत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव एतदाख्यान-उत्पन्नायाः सम्बुद्धियोषायाः भक्ततोषकत्वम् इति भावः)

**इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः ।**
**मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ।**

(अन्वयः) इदं वृन्दावनाख्यानं ये मनीषिणः (नित्यशः) पठन्ति, तेषां कन्दाशनाज्ञया (श्रीवराहस्वामिनः अनुग्रहेण यद्वा श्रीवेदव्यासस्वामिनः अनुग्रहेण) मुकुन्दावनं एव अस्तु (पाठकानां श्रीमुकुन्दात् अवनं = सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलम् अस्ति) ।

**इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् ।**
**समं सहस्रशीर्षस्य सूक्तस्य पुरुषात् कृतम् ।**

(अन्वयः) (सत्यलोके साक्षात् श्रीहयग्रीवरूपेण उपदिष्टसर्वश्रुत्यर्थं) हयशीर्षस्य पार्षदात् पुरुषात् (पुरुषपदवाच्यचतुर्मुखब्रह्मपदयोग्येन लातव्यऋजुपुङ्गवेन श्रीमद्वादि-राजगुरुणा पद्यरूपेण रचितं) इदं (श्रीमद्वृन्दावनाख्यानं) पुरुषात् कृतं (अपि) (अपौरुषेयं) सहस्रशीर्षस्य सूक्तस्य समं (इदं श्रीमद्वृन्दावनाख्यानं श्रीलक्ष्मीहयग्रीवाय)

अर्पितमेवास्तु ।

**यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगते तथा मयि ।**
**भवत्यहो सर्वशुभाप्तिसन्मतीर्ददात्यजस्रं सुत सत्यमेव तत् ।।**

**(अन्वयः) यत् (इदं श्रीमद्बृन्दावनाख्यानं) शृण्वतां (सुजनानां) उदारसद्गुणे हरौ तथा हरेर्लोकगते मयि (च) भक्तिः सर्वशुभाप्तिः, सन्मतीः (च) अजस्रं ददाति । अहो! (हे) सुत तत्! सत्यम् एव ।**

**(व्या)** एतच्छ्रवणफलमाह – **एतत्सर्वमिति । सर्वे** भक्ताः **गर्वं हित्वा एतत्सर्वम्=** उक्तं वक्ष्यमाणं च **विप्रवर्यास्यजेन स्वाप्नपद्येन श्रुत्वा, शर्वगुर्वादिदेवान्** भागवते 'विद्याकामस्तु गिरिशम्' इत्याद्युक्तरीत्या भक्ताभीष्टप्रदान् रुद्रादिदेवान् स्वदर्शनयोग्यदेशकाले उर्व्यामवतीर्णान् **दृष्ट्वा मानवेन्द्राः** उर्वशीमिव **मां यान्तु** । (ऊर्वशीं मां = उत्कृष्टरीत्या जगद्वशकरीं दिव्यज्ञानं मानवेन्द्रा भूत्वा यथा इन्द्रः उर्वशीं प्राप्तः तथा भक्तश्रेष्ठाः प्राप्नुवन्तु इति स्वारसिकार्थः) अधिकारिणामिन्द्रत्वेनोत्प्रेक्षा । उर्वश्याः इन्द्रतोषकत्वमिव । एतदाख्यानोत्पन्नायाः सद्बुद्धियोषायाः भक्ततोषकत्वमिति भावः । (पाठकानां **मुकुन्दात् अवनं** सर्वदा योगक्षेमनिर्वाहकत्वरूपं रक्षणं च फलमस्ति । **कन्दाशनाज्ञया** वराहस्वामिनः अनुग्रहेण, मध्ववेदव्यासादिऋष्याज्ञया वा । **मनीषिणः** इत्यनेन मध्वशास्त्रपण्डिताः **श्रद्धालवः** अधिकारिणः इत्युक्तं भवति । हयग्रीवप्रसादात् श्रवणादिसाधनं सुकरं भवति । इयं संहिता । **हयशीर्षस्य पार्षदात्** पुरुषात् पुरुषनामकब्रह्मपदवीयोग्यात् ऋजोः सकाशात् कृता । **सहस्रशीर्षस्य सूक्तस्य समं** । वेदसमानपुण्यजनकम् । तस्मै हयवदनाय अर्पितमस्तु । कथमनेन श्रवणादिमोक्षसाधनं भवतीत्यत आह – **यच्छृण्वतामिति । श्रवणं** कुर्वतां सर्वत्र बहुरूपयुक्तहरौ भक्तिर्भवति । हरिणा सह स्वबहुरूपैः सेवां कुर्वति गुरुराजे च योग्या भक्तिर्भवति । सा भक्तिः **सर्वशुभाप्तिसन्मतीः अजस्रं ददाति** । 'गुरुं संयोज्य श्रवणादिकं कारयित्वा गुरुराजानुग्रहेण हरिदर्शनं कारयति । तथा च माङ्गलिकम् अभीष्टं भविष्यत्येव । श्रीरस्तु ।

**इति श्रीमत्कविकुलतिलकवागीशतीर्थ श्रीमच्चरणकरकमलसञ्जात-**
**श्रीमद्वादिराजपूज्यचरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिकविभागे**
**निदर्शनपर्वणि द्वाविंशाध्यायः समाप्तः**

**।। श्री कृष्णार्पणमस्तु ।।**